विहाय, कर्मसमवायित्वेन ध्यातव्यविराट्स्वरूपरहस्याख्यानायैव पुनः अग्निरहस्ये अनूदिता । अग्नि-चयनस्य कर्मणो द्रष्टा ऋषिः शाण्डिल्य इति शातपथी प्रसिद्धिः । तस्यैव नाम्ना आत्मतत्त्वप्रति-पादिनी शाण्डिल्यविद्या चयनपुरुषचिन्तनपरैव । यतः, य आत्मा अत्यन्तसूक्ष्मोऽणुपरिमाणः परि-च्छिन्नपरिमाणादणीयान् ज्यायःपरिमाणाच्च ज्यायान् अनन्तपरिमाणो निरूपितश्छान्दोग्ये,[1] स एवा-ग्निरहस्ये हिरण्मयः पुरुष इत्येवं निर्दिश्यावधारितः । तात्पर्यं तु छान्दोग्येऽग्निरहस्ये च समानम् ।

ईशोपनिषदोऽपि अग्निरहस्येन सगतिः कियताचिद्दर्शनेनावगम्यते । ईशोपनिषदि विद्याकर्मणो-र्विकल्पसमुच्चयविषयिणी या चर्चा सा अग्निरहस्येऽप्यस्ति । यथा— '[2]अथ व्यावृत्त्य शरीरेणामृतोऽसत् । योऽमृतोऽसद्विद्यया वा कर्मणा वेति । यद्वै तदब्रुवन्, विद्यया वा कर्मणा वेति । एषा हैव सा विद्या यदग्निः । एतदु हैव तत्कर्म यदग्निः' इति । किंच '[3]यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ' इत्येतं सर्वभूतात्मभावमीक्षितवान् प्रजापतिः इत्याहाग्निरहस्यं यथा— '[4]स हेक्षांचक्रे । कथं न्वहमिमानि सर्वाणि भूतानि पुनरात्मन्नावपेय, पुनरात्मन्दधीय, कथं न्वहमेवैषा सर्वेषां भूतानां पुनरात्मा स्यामिति ' इति । तस्येयमपेक्षा कृतार्थाऽभूदित्येव श्रुतिः कथयत्यग्रे '[5]अथ सर्वाणि भूतानि पर्यैक्षत् । स त्रय्यामेव विद्यायां सर्वाणि भूतान्यपश्यत् । अत्र हि सर्वेषां छन्दसामात्मा, सर्वेषा स्तोमानाम्, सर्वेषां प्राणानाम्, सर्वेषां देवानाम् । एतद्वा अस्त्येत-द्धयमृतम् । यद्धयमृतं तद्धयस्ति ' इति । चयनकर्तुः यजमानस्यापि त्रयीविद्यात्मके सूर्यमण्डले सर्वभूतात्मभावप्राप्तिः ज्ञानकर्मसमुच्चयात् केवलात् ज्ञानाद्वोपासनामयात् श्रुतिरभिधायोपसहरति— '[6]तस्यैषा प्रतिष्ठा य एष तपति, एतस्माद्देवाधिचीयते, एतस्मिन्नधिचीयते, आत्मन एवैनं तन्नि-र्मिमीते, आत्मनः प्रजनयति । स यदैवविदस्माल्लोकात् प्रैति, अथैतमेवात्मानमभिसंभवति छन्दो मय स्तोममय प्राणमय देवतामयम्, स एतन्मय एव भूत्वोर्द्ध्व उत्क्रामति य एवं विद्वानेतत्कर्म कुरुते यो वैतदेवं वेद' इति । सूर्यमण्डलस्थपुरुषेणैकात्म्यदर्शनम् ईशोपनिषदपि अहंग्रहेणानुसधत्ते— '[7]योऽसावसौ पुरुषः सोऽहमस्मि ' इति । यदुक्तमुपरि ' य एव विद्वानेतत्कर्म कुरुते ' इति, तदेव ज्ञानकर्मसमुच्चयनम् ईशोपनिषद्यप्युच्यते '[8]विद्या चाविद्या च यस्तद्वेदोभय सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ' इति ।

चयनमहाव्रतादिपूपास्यमानः पुरुषो विश्वात्मको हिरण्मयपुरुषप्रतिमारूपेण चित्यामुपधायोपा-स्यते, तैत्तिरीयसहितादिषु चयनविधायिषु वेदभागेषु हिरण्मयपुरुषप्रतिमोपधानविधानात् । यथा— '[9]हिरण्मयं पुरुषमुपदधाति ' इति । हिरण्मयपुरुषप्रतिमोपधानं च पुष्करपर्णाश्रितरुक्मे कर्तव्यतया कथ्यते । तस्या प्रतिमायामादित्यमण्डलस्थ-श्चिदात्मा एव ध्येयत्वेनार्चनीयत्वेन चोपदिशन्ति चयनाम्नायाः । अत एव मण्डलब्राह्मणे अधियज्ञोपासनाप्रसङ्गे उच्यते '[10]अथाधियज्ञम् । यदेतन्मण्डलं तपत्यय स रुक्मः, अथ यदेतदर्चिर्दीप्यत इद तत्पुष्करपर्णम्, आपो ह्येताः;

चयने उपास्यमानस्य हिरण्मयपुरुषस्य उपनिषद्भिः सबन्धः

(१) छाउ. ३।१४।३ पृ. ८११. (२) शब्रा. १०।४।३।९. (३) ईउ. ६ पृ. १३१८. (४) शब्रा. १०।४।२।३. (५) शब्रा. १०।४।२।२१. (६) शब्रा. १०।४।२।३१. (७) ईउ. १६ पृ. १३२६. (८) ईउ. ११ पृ. १३२२. (९) तैसं. ५।२।७।२ (१०) शब्रा. १०।५।२।६ पृ. ११४.

आपः पुष्करपर्णम्, अथ य एष एतस्मिन्मण्डले पुरुषोऽयमेव स योऽयं हिरण्मयः पुरुषः, तदेतदेवैतत्त्रय संस्कृत्येहोपधत्ते' इति । तत्रैव तस्यैव मण्डलपुरुषस्य जीवात्मना ऐकात्म्यमभिधाय सर्वात्मत्वमप्युच्यते, यथा—'[1]य एष एतस्मिन् मण्डले पुरुषः, यश्चायं दक्षिणेऽक्षन् पुरुषस्तस्य हैतस्य हृदये पादावतिहतौ तौ हैतदाच्छिद्योत्क्रामति, स यदोत्क्रामति अथ हैतत्पुरुषो म्रियते ' '[2]स एष एकः सन् प्रजासु बहुधा व्याविष्टः' '[3]स एष एवंविद आत्मा भवति......सोऽमृतो भवति' इति । तथा तत्रैवास्य सर्वरूपत्वेनोपास्यत्व विदधाति— '[4]तं यथायथोपासते तदेव भवति...... तस्मादेतमेवंवित्सर्वैरेवैतैरुपासीत, सर्वं हैतद्भवति ' इति । एष एव हिरण्मयः पुरुषः परमपुरुषत्वेन ब्रह्मत्वेन परमात्मत्वेन चारण्यकेपूपनिषत्सु च गीयते । यथा—'[5]स य एषोऽन्तर्हृदय आकाशः, तस्मिन्नयं पुरुषो मनोमयः, अमृतो हिरण्मयः ' '[6]अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः....स एष सर्वेभ्यः पाप्मभ्य उदितः ' '[7]स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः ' '[8]प्रजापतिर्वा इदमग्र आसीत् । सोऽकामयत बहुः स्यां प्रजायेय भूमानं गच्छेयमिति । .....स हैवं षोडशधात्मान विकृत्य सार्धं समैत् । .......... स एवैष हिरण्मयः पुरुष उदतिष्ठत् प्रजाना जनिता' इति । तैत्तिरीयब्राह्मणं सावित्रचयने चित्याग्निमुपासमानस्य हिरण्मयहंसरूपताफलप्राप्तिमभिधायोपसंहरति—'[9]हंसो ह वै हिरण्मयो भूत्वा स्वर्गं लोकमेति, आदित्यस्य सायुज्यम्, य एवं वेद' इति । वैश्वसृजचयनमप्युपसंहृतमेतमेव पुरुष विनिर्दिश्य—'[10]विश्वसृजः प्रथमाः सत्रमासत, सहस्रसम प्रसुतेन यन्तः, ततो ह जज्ञे भुवनस्य गोपाः, हिरण्मयः शकुनिर्ब्रह्म नाम ' इति । एष एव मन्त्रः [11]ताण्ड्यमहाब्राह्मणेऽप्यनूदितः एतस्मिन्नेव प्रकरणे ।

सर्वदेवतामयं विश्वात्मकं सर्वकारण सर्वेश्वर पुरुषाख्यं तत्त्व परमात्मतया ब्रह्मतया वा सर्वासूपनिषत्सु प्रतिपाद्यते । शैववैष्णवादीना भारतीयानां धर्माणामधिष्ठानभूतः इतिहासपुराणैर्भक्तिविषयतया वर्ण्यमानः शिवविष्ण्वादिरूपो भगवान् पुरुष एव । वैदिकयज्ञेषु ऋग्वेदादिसूक्तैः स एवाराध्यते इत्यैतिहासिकसगतिर्निरूपयितुं शक्यते । भागवतधर्मस्य वैष्णवस्य शैवस्य वा पौराणिकस्य संबन्धः श्रौतयज्ञेन वैदिकदेवतया चोपपादयितुं पार्यते । यतः अग्निचयने पुरुषाराधनपरे '[12]शतरुद्रीय जुहोति' इत्यनेन विहितहोमेन रुद्रशिवस्तोष्यते । होमश्चायं हविर्द्रव्येण दहनात्मकेऽग्नौ न क्रियते किन्तु चित्यङ्गभूतायां चरमायामिष्टकाया द्रव्यप्रक्षेपरूप एव संपाद्यते । प्रजापतिपुरुषात्मकश्चित्याग्निरेव रुद्रस्वरूपत्वेनास्मिन् होमे ध्यातव्यो भवतीति चयनब्राह्मणात् '[13]रुद्रो वा एष यदग्निः ' इत्यस्मादवगम्यते । तत्रैव सर्पहोमोऽपि विहितः, वृषभनाम्नीष्टका प्रतिष्ठापयितव्यत्वेन कथिता च । एतानि लिङ्गान्यग्निचयनस्य रुद्रशिवाराधनमूलत्वमनुमापयन्ति । अत एव मैत्रायणीयसंहितायामुप-

चयने शैवभागवतधर्मस्य मूलम्

(१) शब्रा. १०।५।२।१२ पृ. ११६ (२) शब्रा. १०।५।२।१५ पृ. ११६. (३) शब्रा. १०।५।२।२३ पृ. ११८. (४) शब्रा. १०।५।२।२० पृ. ११७. (५) तैउ. १।६ पृ. ६९९. (६) छाउ. १।६।६,७ पृ. ७६०,६१. (७) बृउ ४।३।१२ पृ. १२०१. (८) तब्राउ. १।१५।१-३ पृ. १३४३,४४. (९) तैब्रा. ३।१०।९।११. (१०) तैब्रा. ३।१२।९।७ पृ. ४६३. (११) ताब्रा. २५।१८।५ पृ. ४६१. (१२) तैसं. ५।४।३।१. (१३) तैसं. ५।४।३।१.

क्रमोपसंहारयोः शैवपुराणप्रतिपादितरुद्रपूजापरिभाषानुसारिणो मन्त्राः पठ्यन्ते, तेनास्मदनुमानं दृढीभवति । आवाहनं ध्यानं नमस्करणं दर्शनमागमन विसर्जनमित्यादिपूजाङ्गभूता अर्थाः मैत्रायणीयसंहितायाः शतरुद्रियस्य 'नमस्ते[1] रुद्र मन्यवे' इत्यादिमन्त्रसमूहात्मकस्य आदावन्ते च श्रूयन्ते । ते—'देवानां[2] च ऋषीणां चासुराणा च पूर्वजम् । महादेव सहस्राक्ष शिवमावाहयाम्यहम् ॥ ' इत्यारभ्य तदनन्तरं पठिताः —— ' तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥' इत्यादयो गायत्रीछन्दोबद्धा एकादश मन्त्राः । ते च रुद्रगौरीस्कन्ददन्तिचतुर्मुखविष्णुभास्करचन्द्रवह्निध्यानवैनतेयाख्यानामेकादशरुद्ररूपाणा ध्यानपराः । तदनन्तरं च तैत्तिरीयसंहितादिषु पठितशतरुद्रीयसमानमन्त्रान् पठित्वा उपसंहारे उक्तम्—'गच्छ[3] त्व भगवान् पुनरागमनाय पुनर्दर्शनाय, सहदेव्याय सहवृषाय सहगणाय सहपार्षदाय यथाहुताय नमोनमाय नमःशिवाय नमस्ते अस्तु मा मा हिंसीः ॥ आवाहितमावाहित, नमस्कृत नमस्कृत, विसर्जित विसर्जित, पथ गच्छ पथं गच्छ, दिवं गच्छ दिवं गच्छ, स्वर्गच्छ स्वर्गच्छ, ज्योतिर्गच्छ ज्योतिर्गच्छ, नमस्ते अस्तु, मा मा हिंसीः ॥'इति । एतस्मादेतदप्यवगम्यते यत् शैवधर्मस्य कृष्णयजुर्वेदशाखासु पौराणिकस्वरूपेण प्रादुर्भावः प्रक्षेपो वा अवैदिकसंप्रदायसंसर्गकृतो वैदिकसप्रदायपरिवर्तनकृतो वा तैत्तिरीयसंहितोत्तरकाले श्रौतसूत्रप्रणयनकालात्पूर्वं समारब्ध इति । तैत्तिरीयारण्यकान्तिमो भागः ' नारायणोपनिषत् ' इति नाम्ना प्रकीर्तितो मैत्रायणीसंहितामनुकरोतीति विज्ञायते, 'तत्पुरुषाय विद्महे' इत्यादीनामुपरिष्टात् निर्दिष्टाना ध्यानगायत्रीमन्त्राणा पाठभेदेन तत्र[4]ाप्यनुवाददर्शनात् । किंच रुद्रशिवपूजायाः पौराणिक्याः प्रधान कर्म लिङ्गस्थापनमपि तत्र विहितमस्ति ' एतत्सोमस्य[5] सूर्यस्य सर्वलिङ्ग स्थापयति ' इत्यनेन । ऊर्ध्वलिङ्गहिरण्यलिङ्गसुवर्णलिङ्गदिव्यलिङ्गभवलिङ्गशर्वलिङ्गशिवलिङ्गज्वललिङ्गात्मलिङ्गपरमलिङ्गेत्यभिधानैः शिवस्तत्र नमस्कृतश्च । ' अम्बिकापतये[6] उमापतये पशुपतये नमो नमः ' ' पुरुषं[7] कृष्णपिङ्गल ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ' इत्येवं स्वरूपमुपवर्ण्य प्रणतश्च । एषा नारायणोपनिषच्च बौधायनेनापस्तम्बेन च प्रणीतात् कल्पसूत्रात्प्राक् प्रणीतेत्यनुमातु पार्यते, यतो बौधायनापस्तम्बगृह्यसूत्रयोः अस्याः संप्रत्युपलभ्यमानं पाठक्रममनुसृत्यैव मन्त्रा उदाहृताः ।

वेदर्षिः पुरुषतत्त्वद्रष्टा नारायणः भागवतधर्मस्यापि प्रणेता

अथ चेदमत्रावगन्तव्यम्— भागवतधर्मस्य साक्षात्प्रणेता ऋषिर्नारायणः, यन्नाम्ना नारायणीयो धर्म इत्येवं भागवतधर्म आख्यायते, सः पुरुषसूक्तस्य[8] उत्तरनारायणसूक्तस्य[9] पुरुषशरीररचनाकारणचिन्तापुरःसरं पुरुषतत्त्वप्रतिपादकस्य अथर्ववेदसूक्तस्य[10] पुरुषमेधस्य[11] च द्रष्टेति वैदिकी प्रसिद्धिः । सर्वात्मकस्य विश्वदेवतामयस्य देवस्य केवल पुरुषनाम्ना संकीर्तनम्, इन्द्रवरुणसवितृविश्वकर्मप्रजापत्यग्न्यादीनि पुरुषात्मकेश्वरस्वरूपाभिधायीनि विशेषनामानि विहाय, नारायण एव कृतवान् पुरुषसूक्ते 'सहस्रशीर्षा पुरुषः' इत्युपक्रम्य । कर्तुर्नाम कृतेरपि भवतीति

---

( १ ) मैसं. २।९।२ पृ. १३४. ( २ ) मैस. २।९।१ पृ. १३४. ( ३ ) मैसं. २।९।१० पृ. १५०. ( ४ ) नाउ. १।५-७ पृ. १६३१-३२. ( ५ ) नाउ. १६ पृ. १६४१. ( ६ ) नाउ. २२ पृ. १६४१. ( ७ ) नाउ. २३ पृ. १६४१. ( ८ ) ऋसं. १०।९० पृ. २३०-३४. ( ९ ) शुस. ३१।१७-२२ पृ २५३-५४. ( १० ) असं. १०।२ पृ. २४४-४६. ( ११ ) शब्रा. १३।६।१।१ पृ. ४७०.

पुरुषसूक्तस्य नारायणेति संज्ञा शतपथब्राह्मणकाले रूढाऽऽसीदिति तत[1] एवावगम्यते। स एव नारायणः सर्वभूतात्मभाव प्रपित्सुः पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यदित्येवं सम्यक् सगच्छते। यथा—'पुरुषो[2] ह नारायणोऽकामयत, अतितिष्ठेयं सर्वाणि भूतानि, अहमेवेदं सर्वं स्यामिति, स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्, तमाहरत्, तेनायजत, तेनेष्ट्वाऽत्यतिष्ठत् सर्वाणि भूतानि, इदं सर्वमभवत्, अतितिष्ठति सर्वाणि भूतानि, इदं सर्वं भवति, य एवं विद्वान् पुरुषमेधेन यजते, यो वैतदेव वेद' इति। अत्रैव पञ्चरात्रे क्रतौ ब्राह्मणक्षत्रियवैश्यशूद्रचण्डालादयः सप्तत्यधिकसंख्याकाः पुरुषा नियुज्यन्ते यज्ञमण्डपे। तांश्च नियुक्तान् पुरुषान् ब्रह्मा ऋत्विक् नारायणेन पुरुषसूक्तेन दक्षिणतः स्थित्वा अभिष्टौति, तेषा पुरुषाणां न संज्ञपनं हननरूपं तत्र भवति, निषिद्धत्वात्, किन्तु स्तवनमेव परमेश्वररूपेण। चण्डालादयोऽपि परमात्मरूपेण तत्र स्तोतव्या भवन्ति इत्येव विशेषो भागवतधर्मस्य पुरुषमेधो बीजमिति ख्यापयति। किंच पञ्चरात्रेति भागवतधर्मस्योपपदमनेनैवोपपद्यते, नान्यथा। पञ्चरात्रेत्युपपद भागवतधर्मस्य अद्ययावत् ऐतिहासिकैः कैश्चिदपि पण्डितैर्नोपपादितमासीत् कारणमवधार्य, तत् पुरुषमेधसगत्या सम्यगवकल्पते। सर्वस्वार्पणमपि भागवतधर्माङ्गभूतमेवमेवोपपद्यते। यथा तत्रैवोक्तम्– 'अथ[3] यदि ब्राह्मणो यजेत सर्ववेदसं दद्यात्' इति। सर्ववेदसं सर्वस्वमिति। पुरुषमेधसमाप्तौ सत्याम् अरण्याश्रमः पुरुषमेधाङ्गभूतस्तत्रैव विहितः। गृहेषु वा ग्रामे वासस्तदुत्तरं निरग्निकस्य सतो गृहस्थस्य विकल्परूपेण तत्र विहितः, उत्तरनारायणसूक्तेन अरण्योरग्निसमारोपणोत्तरम्। अत एव च कृष्णयजुर्वेदीयवैखानसशाखायाः श्रौतसूत्रे गृह्यसूत्रे च नारायणाख्यस्य विष्णोः समाराधनं नारायणबलिः केशवादिनामसंकीर्तनं चोपपद्यते। तत एव च दक्षिणापथे वैखानसशाखीयैः पूजाचार्यैः वैखानसागमानुसारेण रचितेषु देवमन्दिरेषु मूर्तिपूजासंप्रदायोत्पत्तिरुपपद्यते। इत्येवमादिक्रमेण विद्वद्भिः भागवतधर्मैतिहासिकपरपरा वेदेष्वन्वेषणीया।

देवतास्वरूपस्य विचारविकासक्रमः उपनिषद्विद्याया परिणत पञ्चविधश्रेणीभिः

ईक्षण ज्ञान संकल्पः निग्रहानुग्रहेच्छा प्रीतिः क्रोधः कुशलता रचनापाटवम् उद्दिधीर्षा शौर्यम् इत्यादयो मनुष्यान्तःकरणधर्माः शिरःपाणिपादचक्षुःश्रोत्रादयो मानुषशरीरधर्माश्च यदा स्वेष्टदेवताया निरतिशयसामर्थ्यशालिन्या चिन्त्यन्ते, तदा भक्तस्य चेतसि सा देवता पुरुषरूपेण प्रतिभाति। देवतायाः पुरुषरूपेण प्रतिभान ऋग्वेदसूक्तेषु प्रकटीभवतीत्येषा धर्मविकासस्य उच्चतरा श्रेणीति ऐतिहासिकतत्त्वज्ञा मन्यन्ते। ऋग्वेदसूक्तानि भौतिकीना निसर्गदेवताना प्रार्थनाशसीनीति यद्यपि सर्वसमतं तथापि निसर्गदेवतास्वेव भौतिकशक्तिविशेषात्मिकासु पुरुषगुणप्रतिपादन शतशस्तेषु सूक्तेषु क्रियते इत्येतदपि स्पष्टमेव। केवलनिसर्गशक्तिमर्यादामुल्लङ्घ्य कारुण्यशौर्यसर्वज्ञतादिधर्मानुरोधेन देवताप्रपत्तिरूपा तदेकशरण्यमनुभवन्ती भक्तिरेव एकान्तेन ऋग्वेदस्य विषय इत्येतद्वेदवादिभिः प्रतिपत्तव्यमेव। एषा भक्तिः रसोत्कर्षस्य परा काष्ठां प्राप्तवती सती देवतासु बहुत्वं भेदं चासहमाना अन्तरङ्गमेकत्व मार्गयमाणा च तत्तद्देवतायाः सर्वेश्वरत्वं वर्णयति। तत्तद्देवतायाः सर्वैश्वर्यं विश्वजननधारणा-

---

(१) शब्रा. १३।६।२।१२. (२) शब्रा. १३।६।१।१ पृ. ४७०. (३) शब्रा. १३।६।२।१९ पृ. ४७०.

दिसामर्थ्यरूपं वर्णयता सूक्ताना पठनेन परस्परविरोधसंदेहाकुलाः पाश्चात्त्यविद्वांसो बहवः प्रायतन्त विरोधपरिहारार्थम् । एवं हि खलु तेषा चेतसि शङ्का प्रादुरभूत् यत् कथ नु विभिन्नानां देवतानां प्रत्येकं सर्वेश्वरत्वम्, कथमेकस्या देवतायाः सर्वैश्वर्यं सर्वशक्तिमत्त्वं च अन्यस्या देवतायाः सर्वैश्वर्येण सर्वशक्तिमत्त्वेन च संगतं भवतीति । एतच्छङ्कोद्धाराय तैस्तैर्विभिन्ना उपपत्तयः समसूचिषत । विरोधपरिहारसरणीः यथायथ संसूचयन्तु नाम, कतिपयानां सूक्तानां तत्तद्देवतायाः सर्वेश्वरत्वतात्पर्ये तु न ते विवदन्ते । नापि वेदगतस्य देवताकल्प-नाविकासक्रमेतिहासस्य याथार्थ्ये शङ्कन्ते । ऋग्वेदाद्युपनिषत्पर्यन्तेषु वेदेषु देवताविचारविकासस्य श्रेणीनां ( १ ) बहुदेवताकत्वम् ( २ ) प्रातिस्विकं तत्तद्देवताया अवसरविशेषे सर्वेश्वरत्वम् (३) विश्वपुरुष इत्येवं वर्ण्यमाना परा देवता ( ४ ) प्रजापतिरेव सर्वा देवता: ( ५ ) एकं सत्, पुरुषः, प्राण:, आत्मा, ब्रह्म; इत्येवं पञ्च विभागा भवितुमर्हन्ति ।

एतान् विभागान् संक्षेपत एवं व्याचक्ष्महे— देवताना तत्तत्कार्यवैचित्र्याधीनः सृष्टिप्रपञ्च:, देवताश्च सापेक्षामरत्वभागिन्यो बह्व्य:, तासामपि बह्व्यो भौतिकीना नैसर्गिकीणा तेजआदिशक्तीना सोमादिभूतपदार्थविशेषाणा वा नामभिः स्वरूपैः कार्यैश्च प्रसिद्धाः, यथा—अग्निसोमसवितृपूषमित्रभगादित्यसूर्यवायुपर्जन्यचन्द्रमोमरुद्‌द्यावापृथिव्युषसः, काश्चिच्च अश्विवरुणेन्द्ररुद्रार्यमबृहस्पतिविष्णुविश्वकर्महिरण्यगर्भप्रजापत्यादयः साक्षात् भौतिकशक्तिरूपतया अप्रतीयमानाः । एताः खलु यास्कादिभि: पृथिव्यन्तरिक्षद्युस्थानेषु गणशो विभज्य दर्शिताः । एतमेव स्थानत्रयविभागप्रयुक्त देवताविभागमभ्युपगम्य पाश्चात्त्याः पण्डिता अपि देवतारूपाणि न्यरूपयन् । ब्लूमफील्ड–नामा वेदनिष्णातधिषण: अन्यैः प्रकारैर्विभज्य गणत्रयं दर्शितवान्, यथा—निसर्गशक्तिरूपेण विविक्तं प्रतीयमाना अग्न्यादित्यसोमाब्वायुद्यावापृथिव्युषश्च-न्द्रमआदय इत्येको गण:, निसर्गशक्तिरूपतां साक्षाद्विविक्ततयाऽदर्शयन्त्योऽपि अशतो निसर्गशक्ति-रूपतामनुमापयन्त्यो देवता इन्द्रवरुणविष्णुरुद्रादय इति द्वितीयो गण:, अर्यमत्वष्टृविश्वकर्मब्रह्मण-स्पत्यादय: स्वस्याः निसर्गशक्तिरूपतां नितरा निगूहन्त्यो देवता इति तृतीयो गणः । भट्टमोक्षमूलरस्तु स्पृश्यदृश्येषद्‌दृश्यादृश्यक्रमेण वैदिकदेवताना विचारविकासपरंपरा प्रदर्शयन् अनन्तशक्तिं परा देवतां क्रमशस्तारतम्येन ता व्यञ्जयन्तीति निर्णयमादृतवान् । इदमत्रावधेयम्—एतासु कामप्यवस्थामा-स्थायोपवर्णितासु देवतासु पुरुषधर्माणां निरतिशयकल्याणगुणाना च वर्णनं न काऽपि श्रुति-र्विस्मरतीति ।

बहुदेवताकत्वम्

तत्तद्देवतायाः स्वरूपविशेषमर्यादया कल्पनीयं कार्यविशेषमुल्लङ्घ्य सर्वशक्तिमत्त्व निरूपयन्ति काश्चित् ऋग्वेदस्य ऋचः सूक्तानि वा । परमेश्वरत्वेन एव वर्ण्यमानासु देवतासु अग्ने-र्वर्णनमाध्यात्मिकतत्त्वदर्शनगताना विविधाना सिद्धान्तानां बीजभाव भजते पूर्वरूपत्वं वा । आत्मनः अमृतत्वं प्रकाशरूपत्वं विविधतनुधारित्वम् अनेकज-न्मभाक्त्वम् अदृश्यसूक्ष्मरूपेण स्थूलेष्ववस्थानमित्यादयो धर्माः, ईश्वरस्य च सर्वशक्तिमत्त्वं लोकत्रयस्थितिः विश्वव्यापित्व सृष्टिकारणत्व सर्वज्ञत्व सर्वदेवनमस्यत्व सर्वदेवतामयत्वं भक्तानुग्रहकारित्वं पापनाशकत्वं स्वर्गप्रदत्वमित्यादयश्च धर्माः ऋग्वेदे वर्ण्यमानेऽग्नावपि प्रतिबिम्बिताः प्रतीयन्ते । विशेषतश्च जीवेश्वरयोर्बहुजन्मधारित्वमास्तिकदर्शनैः

अग्न्यादीना केषाञ्चित् देवाना परमेश्वरत्वम्

संप्रतिपन्नम् ऋग्वेदादिप्रतिपादितेऽग्निचरित्रे बहुषु मन्त्रेषु प्रतिपाद्यमानमुपलभ्यते । एकस्यैवेश्वरस्य विविधैर्विभूतिभिरनेकैरवतारैश्चाविष्करणं पुराणेतिहासेषु भगवद्गीतासु वा प्रतिपाद्यमानं ऋग्वेदे वर्ण्यमानादग्निचरित्रादिन्द्रचरित्राद्वा समुद्भूतमित्येवमनुमानं सम्यगुपपद्यत इति सुधीभिर्विचार्यम् ।

ऋग्वेदे अग्निर्वैश्वानर एव मर्त्येषु स्थितममरं ज्योतिरस्तीत्येवं निरूप्यते केषुचिन्मन्त्रेषु । यथा– '[1]अय होता प्रथमः पश्यतेममिदं ज्योतिरमृत मर्त्येषु ' इति । आत्मोपमां हृदयस्थितिमपि तस्य कथयन्ति– '[2]ध्रुवं ज्योतिर्निहित दृशये कं मनो जविष्ठ पतयत्स्वन्तः । विश्वे देवाः समनसः सकेता एक क्रतुमभि वि यन्ति साधु ॥ ' '[3]इदं ज्योतिर्हृदय आहितं यत् ' इत्यादिना । अत्र सर्वैर्देवैर्हृत्स्थितस्य ज्योतिषः वैश्वानरस्य उपास्यमानत्वमपि अभिधीयते, यथा– '[4]विश्वे देवा अनमस्यन् भियानास्त्वाम् ', '[5]त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन् ' इति । देवाना मर्त्यानां च भोक्तृत्वप्रयोजकोऽग्निः ख्यायते इति परमेश्वरधर्मोऽग्नौ प्रतीयते, यथा– '[6]त्वे अग्ने विश्वे अमृतासो अद्रुह आसा देवा हविरदन्त्याहुतम् । त्वया मर्तासः स्वदन्त आसुतिं त्व गर्भो वीरुधां जज्ञिषे शुचिः ॥ ' इति । आत्मवत् सर्वान्तरोऽग्निः इत्येवं दर्शयत्ययं ऋङ्मन्त्रः– '[7]गर्भो यो अपा गर्भो वनानां गर्भश्च स्थाता गर्भश्चरथाम् ' इति । तस्य बहुजन्मधारित्वं बहुशः कथ्यते, यथा– '[8]त्रीणि जाना परि भूषन्त्यस्य समुद्र एक दिव्येकमप्सु' इति । जाना जन्मानीत्यर्थः । '[9]त्रिरस्य ता परमा सन्ति सत्या स्पार्हा देवस्य जनिमान्यग्नेः । अनन्ते अन्तः परिवीत आगात् शुचिः शुक्रो अर्यो रोरुचानः ॥' इति । [10]अथर्ववेदे यजुर्वेदे च अग्नेः एतदनुसृत्यैव बहुभी रूपैः कृत्स्नजगदनुप्रविष्टत्वं सर्वतनुधारित्वं दातृप्रतिग्रहीत्रादिरूपत्वं विश्वभोक्तृत्वं च वर्ण्यमानमुपपद्यते । सर्वदेवमयत्वं वैश्वानरस्य '[11]त्वमग्न इन्द्रो वृषभः सतामसि ' इत्यादिषु दशसु मन्त्रेषु सविस्तरं निरूप्यमाणं अग्नेः सर्वशक्तित्वं ज्ञापयति । अग्नेः सर्वज्ञत्वस्य पौनःपुन्येन वर्णनं कृत्वा ऋग्वेदः सर्वदेवेभ्यः अग्नेरतिशयितत्वं द्योतयति, यथा– '[12]आ दैव्यानि व्रता चिकित्वाना मानुषस्य जनस्य जन्म ' '[13]देवाना जन्म मर्ताश्च विद्वान् ' '[14]अग्निष्टा विश्वा भुवनानि वेद महद्देवानामसुरत्वमेकम् ' '[15]स राजा विश्वा वेद जनिमा जातवेदाः देवानामुत यो मर्त्याना यजिष्ठः' इति, एता ऋचः देवमनुष्यादीना भूतजातस्य वा जन्मानि जानात्यग्निरित्येवं वर्णयन्ति । उपासकस्य ईश्वरेण अद्वैतभावप्रार्थना क्वचित् ऋग्वेदे प्रकटीभवति, यथा–'[16]यदग्ने मर्त्यस्त्व स्यामह मित्रमहो अमर्त्यः' इनि । मित्रमहः, यस्य महः दीप्तिः मित्रं स इत्यर्थः, अग्नेः अमर्त्यत्वात् स्वमर्त्यत्वप्रतीत्या भीतो भक्तः अमर्त्येनाग्निना मित्रदीप्तियुक्तेन ऐक्यं प्रार्थयतेऽत्र । अग्नेः शुचितमत्वं पापमोचकत्वं च परमेश्वरत्वव्यञ्जकम् ऋग्वेदे बहुवारं घोष्यते, यथा–'[17]अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः ' '[18]त्व देवाँ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा '

---

( १ ) ऋसं. ६।९।४ पृ. १५. ( २ ) ऋसं. ६।९।५ पृ १५. ( ३ ) ऋसं. ६।९।६ पृ. १५. ( ४ ) ऋसं. ६।९।७ पृ. १६. ( ५ ) ऋसं. ३।९।९ पृ ९. ( ६ ) ऋस. २।१।१४ पृ. ८. ( ७ ) ऋसं. १।७०।३. ( ८ ) ऋसं. १।९५।३. ( ९ ) ऋसं. ४।१।७. ( १० ) पृ. १९–२२. ( ११ ) ऋसं. २।१।३ पृ. ६. ( १२ ) ऋसं. १।७०।२ पृ १६. ( १३ ) ऋसं. १।७०।६ पृ १६. ( १४ ) ऋसं. ३।५५।१० पृ १६. ( १५ ) ऋसं. ६।१५।१३ पृ. १६. ( १६ ) ऋसं. ८।१९।२५ पृ. १७. ( १७ ) ऋसं ८।४४।२१ पृ. १७. ( १८ ) ऋसं. ७।१३।२.

इति । अभिशस्तिः महापातकाभिरोपणम् । देवा अपि पापान्मोचिता अग्निना इत्यर्थः । सर्वदेवजननी अदितिः सर्वपापबन्धननाशिनीत्येव '[1]अनागास्त्वं नो अदितिः कृणोतु' इत्यत्र ऋग्वेदसंकेतः प्रसिद्धः । अदितिरूपत्वं चाग्नेः सूचितमदितिविशेषणेन तत्रतत्र [2]ऋग्वेदे । रक्षोघ्नत्वं चाप्यग्नेर्विशिष्टो धर्म इत्येतदपि '[3]रक्षोहणं वाजिनम्' इति सूक्तं विशदयति । अग्निर्द्यावापृथिवीपुत्र इति यद्यपि जेगीयते तथापि स द्यावापृथिव्योः स्रष्टा इति ज्ञापयन्तीनामृचां बहुत्वमपि न तिरोहितमस्ति, इति स परमेश्वरविभूतिरिति ऋग्वेदात् सिद्धं भवति, यथा—'[4]एता ते अग्ने महतो महानि तव क्रत्वा रोदसी आततन्थ' '[5]व्यस्तभ्नाद्रोदसी मित्रो अद्भुतोऽन्तर्वावदकृणोज्ज्योतिषा तमः। वि चर्मणीव धिषणे अवर्तयद्वैश्वानरो विश्वमधत्त वृष्ण्यम् ॥' '[6]त्वं भासा रोदसी आततन्थ' इति ।

शरीरेषु औष्ण्यधर्मेणोपलभ्यमानो जीवात्मप्रतिरूपकः शरीरधारकः, सूर्यरूपेण द्युलोकाधिष्ठितः स्थावरजङ्गमस्य जन्मधारणपोषणादिक्रिययोपकारकः, पार्थिवेषु वृक्षपाषाणादिषु घर्षणादिक्रियया दृश्यमानः, मेघादिजलेषु विद्युद्रूपेणावभासमानः, सर्वासु मानुषीषु जीवनधारणक्रियासु पाकाद्यासु प्रत्यक्षं परोक्षं वोपजीव्यत्वेनोपयुज्यमानः, यज्ञान्तरङ्गसाधनरूपः ऐहिकामुष्मिकाभ्युदयं निःश्रेयसं च निर्वर्तयतो धर्मस्याधारभूतोऽग्निः सर्वजनस्य ऐन्द्रियसाक्षात्कारगोचरः परमेश्वर इति साधु निर्धारयितुमशक्नुवन् वैदिकाः कवयः । स विश्वस्य आयुरिति प्राण इत्यपि वा निर्धारितं वेदैः, यस्य हि प्राणिशरीरेभ्यो व्यपगमे ह्रासे वा मृत्युर्ग्रसते प्राणिनः । अत एव काठकसंहितायाम् '[7]वातः प्राणस्तदयमात्मा' इति सशात्रयेणाग्निः स्तुतः । स्वात्मनः वैश्वानरज्योतिरूपतायाः प्राप्तिं च सर्वेषां मनोरथानामधिगमार्थं प्रार्थयन्ते याजुषाः, यथा—'[8]वैश्वानरज्योतिर्भूयासम्, विभून् कामान् व्यश्नवै' इति । एतत्तस्य परमात्मत्वमपि लक्षयति । एवं '[9]विश्वकर्मा विश्वदेवो विश्वजिद् विश्वदर्शतः' इत्यादिर्बहुविधोऽन्यो मन्त्रसमूहोऽपि तस्य परमेश्वरत्वव्यञ्जको द्रष्टव्यः । अत एव यजमानेन प्रजापतिना सर्वैर्भूतैः[10] सृष्ट्या संवत्सरात्मककालेन च अग्नेस्तादात्म्यख्यापनार्थं विराट्पुरुषरूपत्वमग्निचयने प्रतिपाद्यते । एवंरीत्या अग्निचयनरूपायामाध्यात्मिक्यामौपनिषदतत्त्वदर्शनपर्यवसायिन्यामुपासनायां कथं परिणमते जीवात्मपरमात्मविराट्पुरुषकल्पनाबीजमग्निविचारः, इत्येतदैतिहासिकसंगतिविद्भिरुपपादनीयम् ।

ऋग्वेदे सर्वेभ्यो देवेभ्योऽधिकतरं स्तुतः परमेश्वरत्वव्यञ्जकगुणानां परमां सीमानमाप्तः पुरुषधर्मैः संपन्नः पुरुषोत्तमप्रतिबिम्बभूतो देव इन्द्रोऽस्ति । सर्वेभ्यो देवेभ्यो बलिष्ठत्वं सर्वाभिभावकत्वम् इन्द्रस्यानन्यसाधारणं लक्षणं छन्दांसि गायन्ति—'[11]न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः' इति । शवःशब्देन बलमुच्यते । अत एव भक्तानां विजिगीषूणां संग्रामे सहायभूत इति स सर्वदेववरिष्ठत्वेन स्तूयते—'[12]यस्मान्न ऋते विजयन्ते जनासो य युद्ध्यमाना अवसे हवन्ते' इति । तस्माच्च सर्वं भीत्या कम्पते इत्येवमृचस्तत्रतत्र वर्णयन्ति —'[13]त्वद्विश्वानि

(१) ऋसं. १।१६२।२२ (२) ऋसं १।९४।१५, ४।१।२०; ७।९।३, ८।१९।१४. (३) ऋसं. १०।८७।१. (४) ऋसं. ३।६।५ (५) ऋसं. ६।८।३. (६) ऋस ७।५।४. (७) तैसं ४।७।१३।?; कासं. १८।१५; मैसं. २।१२।३, शुस १८।५३–५५ पृ. २३. (८) कास. ७।१४ पृ. २५. (९) कासं. ३८।५ पृ. २५. (१०) कासं. ३६।१५ पृ. २५. (११) ऋसं. १।१००।१५ पृ. ४५. (१२) ऋसं. २।१२।९ पृ. ४७. (१३) ऋसं. ८।९७।१४ पृ ५८.

भुवनानि वज्रिन् द्यावा रेजेते पृथिवी च भीषा ’ इति । विश्वधारकत्वं सर्वदेवनियन्तृत्वं नानातनूभिः संचारित्वं च तस्य स्तुवन्ति –– ‘ [1]इन्द्रस्य कर्म सुकृता पुरूणि, व्रतानि देवा न मिनन्ति विश्वे । दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ॥ ’ ‘ [2]रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम् ॥ ’ इति । तस्य देवैर्भक्तैश्च सख्यं प्रार्थ्यते[3] । भक्तिप्रकर्षबोधनार्थं पिता माता सखेत्येवमादिविशेषणैस्तं संबोधयन्ति– ‘ [4]त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ ’ इति ।

किंच ईश्शब्दस्य बाहुल्येन प्रयोगः इन्द्रमभिप्रेत्य ऋक्संहितायां श्रूयते इतीश्वरशब्दस्य इन्द्र एव प्राधान्येन मूलमित्यनुमाने न कापि क्षतिरवभासते, यथा– ‘ [5]इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत् पर्वतानाम् । इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः ॥ ’ ‘ [6]विश्वस्यैक ईशिषे सास्युक्थ्यः ’ इति । ईशानशब्दो विशेषतः ऋग्वेदे इन्द्रविशेषणतया यथा बाहुल्येन प्रयुज्यते न तथा अन्यदेवविशेषणतया । ओजःशब्दः बलपर्यायः, ईशनकर्म च बलाधीनमित्यतो बहुषु स्थलेषु ऋग्वेदे ईशानशब्दे इन्द्रविशेषणतया प्रयुज्यमाने ‘ ओजसा ईशानः ’ इति ओजःशब्दसाहचर्यं श्रूयते, यथा– ‘ [7]सूर्यं कवे चक्रमीशानमोजसा ’ ‘ [8]ऋषिर्हि पूर्वजा अस्येक ईशान ओजसा । इन्द्र चोष्कूयसे वसु ॥ ’ ‘[9]इन्द्र प्रेहि पुरस्त्वं विश्वस्येशान ओजसा ’ ‘ [10]यां सप्तबुध्नमर्णवं जिह्मबारमपोर्णुत इन्द्र ईशान ओजसा ’ ‘ [11]इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् । वाचस्पतिर्मखस्यते विश्वस्येशान ओजसा ॥ ’ इति । द्युलोकस्य पृथिव्याश्च धारणं दृढीकरण स्थैर्यं च कर्म स्कम्भनशब्देन स्तम्भनापरपर्यायेण ऋग्वेदे देवताकर्मत्वेन देवतास्तुत्यर्थं निर्दिश्यते तत्रतत्र । आकाशस्थितानां सूर्यनक्षत्रादीनां द्यावापृथिव्योश्च धारणाख्यं कर्म विश्वकर्मणः प्राधान्येन ऋग्वेदस्य विचारविषयः । या काऽपि देवता अनेन कर्मणा महिमानमश्नुते इत्येवं ऋग्वेदसकेत इत्याभाति । एतत्कर्म इन्द्रस्य कर्मेति पुनःपुनः सकीर्तितं प्रतीयते । ईशानशब्दार्थकक्षायामयमर्थोऽपि बोध्यते इति तच्छब्दसदर्भेषु द्रष्टव्यमाम्नायवेदिभिः । ऋग्वेदे ईशानशब्दः इन्द्रे प्राधान्येन प्रयुक्त इन्द्रमतिक्रम्य यजुर्वेदकाले ब्राह्मणकाले च रुद्रमभिप्रेत्यप्रधानप्रयोगविषयोऽभूदित्येव प्रतीमः , यथा– ‘ [12]तासामीशानो भगवः ’ इति । [13]शाङ्खायनब्राह्मणे रुद्रस्य अष्टसु नामसु, [14]शतपथब्राह्मणे च रुद्रस्य नवसु नामसु ईशानेति नाम्नः पाठदर्शनात् । यद्यपि इन्द्रस्य अध्यात्मविद्ययोपनिषदुक्तया साक्षात् संबन्धः विचारविकासस्य ऐतिहासिकप्रणाल्या दर्शयितुं न शक्यते, तथापि परमपुरुषकल्पनायाः परमेश्वरेत्यर्थपरायाः विकसने इन्द्रकल्पनयाऽपि बहूपकृतमित्येवमनुमातुं शक्यते इत्येतत्प्रदर्शनार्थं संक्षेपत इन्द्रविचारोऽत्र कृतः ।

वस्तुतस्तु कियताचिदंशेनेन्द्रस्यात्मविद्ययोपनिषदुक्तया संबन्ध ऐतिहासिकः शक्यत उपपादयितुम् । तद्यथा—ईशोपनिषदाद्यमन्त्रे केवल ‘ईश्’पदेन निर्दिष्टः सर्वस्य जगतो व्यापक आत्मा

---

( १ ) ऋसं. ३।३२।८ पृ. ५२. ( २ ) ऋसं. ३।५३।८ पृ. ५२. ( ३ ) ऋसं. ८।९८।३ पृ. ५९. ( ४ ) ऋसं. ८।९८।११ पृ. ५९. ( ५ ) ऋसं. १०।८९।१० पृ. ६३. ( ६ ) ऋसं. २।१३।६ पृ. ५० ( ७ ) ऋसं १।१७५।४. ( ८ ) ऋसं. ८।६।४१ पृ. ५६. ( ९ ) ऋसं. ८।१७।९. ( १० ) ऋसं. ८।४०।५. ( ११ ) ऋसं ९।१०१।५. ( १२ ) तैसं. ४।५।१०।५ पृ. १४७. ( १३ ) शाब्रा. ६।८ पृ. १५१. ( १४ ) शाब्रा. ६।१।३।१७ पृ. २९६.

ऋग्वेदे वर्ण्यमानमिन्द्रं स्मारयतीत्यपि सुवचम् । तथा इन्द्रियाणामधिष्ठाता जीवो जाग्रद्दशायां चाक्षुषः पुरुष इति सञ्ज्ञितः, जाग्रद्दशाया चक्षुषः करणत्वेन प्राधान्यात् स चाक्षुषः पुरुष एवेन्द्रः इत्युक्त मण्डलब्राह्मणे— ' स एष एवेन्द्रः योऽय दक्षिणेऽक्षन् पुरुषः ' इति । तथा मध्यमः प्राग एवेन्द्रः इत्येवं निर्दिशन्ति— ' स योऽयं नध्ये प्राणः, एष एवेन्द्रः ' इति । तथा एतदेवानुसारेणैव कौषीतक्युपनिषदि प्रतर्दनं प्रति अध्यात्मविद्याचार्य इन्द्रः ' मामेव विजानीहि, एतदेवाहं मनुष्याय हिततम मन्ये ' इत्युपक्रम्य ' स होवाच प्राणोऽस्मि प्रज्ञात्मा, त मामायुरमृतमित्युपास्स्व, आयुः प्राणः प्राणो वा आयुः ' इति ज्ञेयार्थं निर्दिश्य, आत्मा एवेन्द्र. प्राणपर्यायः इति प्रत्यपादयत् । तथा एतदनुसंधायैव शरीरप्रविष्टमात्मानं निरुक्तिविशेषेण इन्द्रपदेन ऐतरेयोपनिषत् निरदर्शयत् — ' तमिदन्द्र सन्तमिन्द्र इत्याचक्षते परोक्षेण ' इति । तथा बृहदारण्यकेऽपि मधुब्राह्मणे सर्वेषु प्राणिशरीरेषु शयान पुरुषं परमात्मानं प्रकृत्य ' रूपरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥ ' इति ऋग्वेदमन्त्रमनूद्य ' अय वै हरयोऽय वै दश च सहस्राणि बहूनि चानन्तानि च, तदेतत् ब्रह्म,......अयमात्मा ब्रह्म सर्वानुभूः ' इत्येवमिन्द्रस्य ब्रह्मात्मत्वमुपसंहृतम् ।

ऋग्वेदपूर्वकाले इन्द्रादपि महिमवत्तरो वरुण आसीदित्येवमितिहासविदोऽनुमिमते । सद्य उपलभ्यमानायामृक्संहितायां तं वारुणमलौकिक महिमानमाशंसमानानि सूक्तानि अंशतोऽनुवर्तन्ते । ततो निश्चीयते, ऋग्वेदकाले युयुत्सुभिर्विजिगीषुभिरार्यैर्वरुणादपि इष्टकार्यसिद्ध्यर्थमिन्द्रदेवताया महिमवत्त्वमभिमततरत्वेनोररीकृतमिति । वरुणस्तु न युद्धदेवता, किन्तु विश्वव्यवस्थां विदधती, प्राड्विवाकवत् सुकृतदुष्कृत जनाना पश्यन्ती, सर्वेषा स्वस्वव्रतानि कर्तव्यापरपर्यायाणि नियमयन्ती, पापिनः पाशशतैः शासती, विश्वसाम्राज्यपदे निरन्तरमभिषिक्ता, भिषजा शतेन परिवृता, तांता देवता तत्तद्विश्वधारणकार्ये स्वभावानुरूपेण प्रवर्तयन्ती, ऋजुनीतिपालिका अनृतद्वेष्ट्री परा देवता वरुण इति एतानि सूक्तानि प्रज्ञापयन्ति । सम्राडितिविशेषण विशेषतो वरुणे एवोपस्पष्टमुपलभामहे । अनुरूपस्थानेषु वस्तूनां व्यवस्थापन वरुणस्य कार्यं ज्ञापयति श्रुतिः– ' वनेषु व्यन्तरिक्ष ततान वाजमर्वत्सु पय उस्रियासु । हृत्सु क्रतु वरुणो अप्स्वग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ ' इति । वनानामुपरि वृष्ट्यर्थमन्तरिक्ष वितन्वन् वरुणो जवकरं बलं वाजिषु, क्षीर गोषु, क्रतुं संकल्पशक्तिं हृदयेषु, वैद्युतमग्निं जलेषु, सूर्यमाकाशे, सोमं पर्वते इति यथायथमानुरूप्येण वस्तूनि स्थापितवान् इत्यभिप्रायोऽस्या ऋचः । ऋतावा ऋतस्य गोपा अनृतद्विट् इत्येव विशेषणानि वरुणे प्रयुक्तानि प्राधान्येन दृश्यन्ते ऋग्वेदे । सर्वेषा देवानामृताधीनत्वं द्योतयन्ति ऋग्वेदवचांसि । ऋताख्यं तत्त्वं विश्वजीवनभूतमिति वेदविदो मन्वते । ऋत नाम विश्वनियमः । तस्य पालनेन विश्व पालितं भवतीति वरुणः ऋतरक्षक इति वर्णयन्ति । व्रतशब्देनापि ऋतमेवाभिप्रयन्ति ऋचः । अतो वरुणस्य धृतव्रत इति विशेषणं सम्यगुपपद्यते । सूर्यचन्द्रनक्षत्राणा मार्गक्रमण प्रकाशनमुदयास्तादिकार्य च नियम-

---

( १ ) शब्रा. १०।५।१ पृ. ११५. ( २ ) शब्रा. ६।१।१।२ पृ. २९१, ३२८. ( ३ ) कौउ. ३।१ पृ. ६५७. ( ४ ) कौउ. ३।२ पृ. ६५८,५९ ( ५ ) ऐआ. २।४।३।१४. ( ६ ) ऋसं. ६।४७।१८ पृ. ५४, बृउ. २।५।१९ पृ. ११११. ( ७ ) ऋसं. ५।८५।२ पृ. ७७.

रूपम् ऋतमेव वरुणेनाज्ञप्तानि व्रतानीति बोधयन्ति ऋचः । यथा— ‘ उरुं[1] हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः । अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ ’ इति । जनानां सत्यानृतकर्मणां ज्ञाता सन्निकृष्टविप्रकृष्टानां भूतभवद्भविष्यतां स्थूलसूक्ष्माणामाविर्भूततिरोहितानां पदार्थानां कर्मणां च साक्षाद् द्रष्टा वरुण इत्येवमर्थः प्रसन्नगम्भीरया वाण्या ऋक्सूक्तैरुदीरित आस्ते । अथर्वसंहितायाः सूक्तद्वयमिममेवार्थं[2] पुष्णाति ।

यजुर्वेदस्य ब्राह्मणानां च काले एतद्वरुणसाम्राज्यमस्तमितामिव विस्मृतिग्रस्तमिव चाभूत्; इन्द्रादयो देवताश्च केवलं हविर्भागहारिण्यः स्वाहाकारानुरोधिन्यश्च स्मर्यन्ते । एते इन्द्रविष्णुवरुणमित्रद्यावापृथिवीसोमसवित्रादयो देवा ऋग्वेदे स्वस्वसूक्तसंदर्भे परमेश्वरविभूतित्वं धारयमाणा अपि यजुर्वेदानां ब्राह्मणानां च परिसरे यज्ञाङ्गत्वेन गौणं पदं भजन्ते । परन्तु पुरुषसूक्तेन प्रस्तुतः परमपुरुषः प्रजापतित्वपदवीं यजुर्वेदप्रदत्तां धारयन् महिम्नः परां काष्ठां प्राप्तवान् यजुर्वेदेषु ब्राह्मणेषु च । सद्यः ऋग्वेदशेषं विषयं परामृश्य, अचिरमेव परस्तादयं विषयः प्रतिपादयिष्यते ।

ज्योतिषां श्रेष्ठं देवानां मानुषाणां विश्वस्य च प्रत्यङ् स्थितं सर्वप्रकाशकं ज्योतिः सूर्यसवित्रादिपदैः प्रतिपाद्यमाना देवता ऋग्वेदे दृष्टा । परमेश्वरस्य ‘ज्योतिषां ज्योतिः’ इत्येव वर्णनम् आदित्यदेवतायाः स्वरूपविचारादेव प्रतिभातमित्यनुमाने न किमपि वैगुण्यं पश्यामः । किंच परमेश्वरस्य सर्वप्रेरकत्वकल्पनापि सवितृदेवताया एवोद्भूता इत्येवमवधारणमपि न कामपि क्षतिमनुबध्नाति । अग्निवदेव सूर्यसवित्रादिरूपादित्यदेवताया औपनिषदात्मतत्त्वपरिणतौ साक्षादुपकारकत्वमितिहासप्रणाल्या उपपद्यते । सवितुर्हि कर्मप्रवर्तकत्वमेव इतरदेवताभ्यो व्यावर्तको धर्म इति ज्ञापयन्ति ऋग्वेदवचांसि । अग्निरहस्ये मैण्डलब्राह्मणं,[3] तैत्तिरीयके सावित्र्याग्निचयनं,[4] ऐतरेयोपनिषदि ‘योऽहं[5] सोऽसौ, योऽसौ सोऽहम्’ इत्येषा देहे सूर्यमण्डले च वर्तमानस्य एकात्मन उपासना, छान्दोग्योपनिषदि ‘ असौ[6] वा आदित्यो देवमधु ’ इत्युपक्रान्ता आदित्यविषयिणी ब्रह्मोपासना इत्यादय आदित्यदेवताया उपनिषद्विद्यया साक्षात्सम्बन्धं ज्ञापयन्तीति ।

अग्नीन्द्रवरुणादिवदेव विष्णुरुद्रादीनामृक्प्रतिपादितं परमेश्वरत्वं परामर्शनीयं स्वयमेव विद्वद्भिः, अस्मिन्नेव भागे समुद्धृतानामनुद्धृतानां च ऋचां संमर्शनं कृत्वा । विस्तरभयान्नात्र तद्वितन्यते ।

अग्नीन्द्रवरुणादिविशेषनामरहितानामन्वर्थकविशेषणैर्विशेषतया बोधितानां त्वष्टृ[7]धातृ[8]विश्वकर्म[9]हिरण्यगर्भादीनां[10] ऋग्वेदे आविर्भावः, शुद्धायाः एकं परमेश्वरमवगाहमानायाः कल्पनायाः प्रत्यक्षमुदयं सूचयति । विशेषतश्च विश्वकर्मसूक्तद्वयं हिरण्यगर्भसूक्तं चैतानि एकमेव सर्वाधारमजं, विश्वं प्रविश्य विविधजन्मधारिणं, देवमामनन्ति प्रश्नपूर्वकं च तस्यैकत्वं दृढीकुर्वन्ति—‘द्यावाभूमी जनयन्देव एकः’ ‘ यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा । यो देवानां नामधा एक

---

( १ ) ऋसं. १।२४।८,१० पृ. ७४. ( २ ) असं. ४।१६, ५।११ पृ. ८४-८६ ( ३ ) शब्रा. १०।५।२ पृ. ११२. ( ४ ) तैब्रा. ३।१०. ( ५ ) ऐआ. २।२।४ पृ. ५५५. ( ६ ) छाउ. ३।१-११ पृ. ७९२-९९. ( ७ ) ऋसं. ६।४९।९ पृ. १८१. ( ८ ) ऋस. ( खिल ) २।१ पृ. १८२. ( ९ ) ऋसं. १०।८१,८२ पृ. १८३-८७. ( १० ) ऋसं.१०।१२१ पृ. १९४-९७.

एव ' ' अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ' ' न तं विदाथ य इमा जजान ' ' य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ ' ' यो देवेष्वधि देव एक आसीत् ' ' ततो देवानां समवर्ततासुरेकः ' इत्यादिभिः।

विश्वकर्मणो हिरण्यगर्भस्य वा प्रजापतेः परमेश्वरत्वं द्योतयन्त्यः पुरुषगुणाश्च निरतिशयान् ख्यापयन्त्यः ऋचः पुरुषसूक्ते निष्कर्षरूपं परमपुरुषविचारमवतारयन्ति। इन्द्रवरुणादिविशेषनामानि विहाय विशेषनामत्वे पर्यवसितानि विश्वकर्महिरण्यगर्भधातृस्रष्टृप्रजापत्यादिविशेषणानि च परित्यज्य सामान्येन पुरुष इति नाम्ना विश्वतत्त्वं निर्दिशन्ति ऋचः पुरुषसूक्ते। अत्र सर्वं विविधं कार्यजातं एकतत्त्वात्मकमिति व्यञ्जयितुं सर्वस्य पुरुषात्मकता उच्यते । परमार्थतत्त्वस्य विश्वात्मकत्वेऽपि विश्वातीतत्वमपि वर्तते, तत्सामञ्जस्येन प्रकटयितुं ' पादोऽस्य विश्वा भूतानि ' ' अत्यतिष्ठद्दशाङ्गुलम् ' ' उतामृतत्वस्येशानः ' इत्याद्यभिधीयते। कार्यकारणोभयरूपत्वं द्योतयितुं ' यद्भूतं यच्च भव्यं ' तत् पुरुष एव इत्युक्तम्। तस्याविर्भावतिरोधानधर्मकत्वं सूचयितुं यज्ञरूपत्वं जन्मविनाशौ च यज्ञहविष्ट्वं च निरूपितम्। तदिदं पुरुषसूक्तं विश्वपुरुषप्रकटनेन उपनिषदामवतारस्य भूमिकामारचयति एकस्याः परमदेवतायाः कार्यकारणरूपायाः विस्पष्टं स्वरूपं निरूप्य ।

पुरुषः विश्वस्य परमतत्त्वम्

वेदे पुरुषशब्दो मनुष्यवाचीति प्रसिद्धम्। लोकव्यवहारे मनुष्यजातौ संकेतितः स एव परतत्त्वबोधनार्थमादृतो नारायणेन ऋषिणा पुरुषसूक्ते। सांसारिकस्य पुरुषस्य मनुष्येत्यपरपर्यायस्य स्वरूपं रचनां नीचोच्चविविधदशाधारिभ्य इतरेभ्यः प्राणिभ्यः प्रकृष्टान् विलक्षणांश्चैतन्यगुणांश्च सूक्ष्मेक्षिकया समीक्ष्य तदौपम्येन तदीयानणूनपि कल्याणगुणान् विगलिताशेषदोषान् आनन्त्येन गुणितान् परिकल्प्य परं पुरुषं विश्वात्मानमकल्पयन् क्रान्तदर्शिनो वैदिकाः कवयः । अग्निसूर्यवाय्वप्पृथिव्यादिदेवतासमुदायसंवलितस्य समुदायरूपत्वेऽपि समुदायमवयवभावेन दधानस्य बृहतो विश्वस्य तात्त्विकं स्वरूपमाविष्कर्तुं पुरुषशब्दः संकेतितस्तस्मिन्। विश्वस्य मनुष्यप्राणिनश्च तुलनया ' अथाध्यात्मम् ' ' अथाधिदैवतम् ' इत्याकारकमभीक्ष्णं चिन्तनं कुर्वाणैः ऋषिभिरेव वैदिकमध्यात्मदर्शनं प्रथममुपक्रान्तम्। ते हि पिण्डब्रह्माण्डयोरत्यन्तसारूप्यं द्रष्टुं प्राभवन् तादृशीं तुलनामाश्रित्य। मनुष्ये हि विश्वशक्तीनां संगमनं, तासां प्रातिस्विककार्याणां विभागः, संकल्पकृतां व्यवस्थामनुरुद्ध्येव ऐकमत्येनेव अव्यभिचारेण कार्यसंकरं परस्परव्युत्क्रमं च परिहृत्य कृत्यानां निर्वहणं, एकस्मिन्नवयविनि अङ्गभावमङ्गीकृत्यावस्थानं, तत्त्वतः ऐकात्म्यं च अनुभूयन्ते। एतत्प्राणिविज्ञानप्रकाशितं पुरुषस्वरूपसंघटनम् अवयवित्वं वा विश्वतत्त्वदर्शने महान्तमनुग्रहं विदधाति। किंच बीजावस्थायां वर्तमानः पुरुषो हस्तपादाद्यवयवसंस्थाने स्थितानां चक्षुरादीन्द्रियाणां ज्ञानेच्छादिधर्माणां च भेदं तिरोधाय निर्विशेषमेकत्वं बिभर्ति। स एव बीजभावं परित्यज्य हस्तपादाद्यवयववान् चक्षुरादीन्द्रियाणि च व्याकुर्वन् अङ्गभेदयुक्तं स्वरूपमास्थायावतिष्ठते। एषा कार्यकारणभावप्रक्रिया प्राणिविज्ञानविदिता जगतः सर्जनप्रक्रियायाः स्वरूपं तत्त्वतः उपपादयितुं समीचीनमुपकरोति ।

मनुष्ये विश्वशक्तीना संगमनं कार्यविभाग च कथयति श्रुतिः, मृतस्य मनुष्यस्य ब्रह्माण्डे लयस्य प्रकार बोधयन्ती । तद्यथा — '[1] सूर्यं चक्षुर्गच्छतु, वातमात्मा, द्यां च गच्छ पृथिवीं च धर्मणा । अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥' इति । गतासुं पुरुषमुद्दिश्याह मन्त्रः— ' [2] वातात्ते प्राणमविद सूर्याच्चक्षुरहं तव ' इति । संज्ञप्यमान पशुमुद्दिश्योच्यते—'[3] वातं प्राणमन्ववसृजतात्, अन्तरिक्षमसुं, दिशः श्रोत्र, पृथिवीं शरीरमिति । एष्वेवैनं तल्लोकेष्वादधाति ' इति । मृतस्य पुरुषस्य प्रविलयं कथयति— '[4] यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति, वातं प्राणः, चक्षुरादित्य, मनश्चन्द्रं, दिशः श्रोत्र, पृथिवीं शरीरं, आकाशमात्मा, ओषधीर्लोमानि, वनस्पतीन् केशाः, अप्सु लोहितं च रेतश्च निधीयते क्वाय तदा पुरुषो भवतीति' इति । पुरुषरूपेण विश्वदेवतानामवस्थानमथर्ववेद उदीरयति शारीरसूक्ते पुरुषधर्माणां विस्तरेण परिगणनं कृत्वा, सक्षेपेण च तत्रैव स्वाभिप्राय उक्तः— '[5] गृहं कृत्वा मर्त्यं देवाः पुरुषमाविशन् ' '[6] या आपो याश्च देवता या विराड् ब्रह्मणा सह । शरीरं ब्रह्म प्राविशत्, शरीरेऽधि प्रजापतिः ॥ सूर्यश्चक्षुर्वातः प्राणं पुरुषस्य वि भेजिरे । अथास्येतरमात्मानं देवाः प्रायच्छन्नग्नये ॥ तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते । सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते ॥ ' इति । किंच तथैवोक्तम्— '[7] सूर्यो मे चक्षुर्वातः प्राणोऽन्तरिक्षमात्मा पृथिवी शरीरम् ' इति । एतदनुसृत्यैव शाङ्खायनारण्यके उच्यते —'[8] प्रजापतिर्वा इम पुरुषमुदञ्चत । तस्मिन्नेता देवता आवेशयत् । वाच्यग्निं, प्राणे वायु, अपाने वैद्युत, उदाने पर्जन्य, चक्षुष्यादित्य, मनसि चन्द्रमसं, श्रोत्रे दिशः, शरीरे पृथिवीं, रेतस्यपः, बल इन्द्रं, मन्यावीशानं, मूर्धन्याकाश, आत्मनि ब्रह्म' इति । एतद्धृदि निधायैव ऐतरेयोपनिषद्यपि उद्यते— '[9] अग्निर्वाग्भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्, दिशः श्रोत्र भूत्वा कर्णौ प्राविशन्, ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्, चन्द्रमा मनो भूत्वा हृदयं प्राविशत्, मृत्युरपानो भूत्वा नाभिं प्राविशत्, आपो रेतो भूत्वा शिश्न प्राविशन् ' इति ।

अग्न्यादित्यवाय्वब्रह्मादिमये महति जगति पञ्च प्राणिधर्माः प्रतीयन्ते, अतस्तदेतज्जगत् पुरुषरूपकेण परिकल्पित वेदद्रष्टृभिः । सततपरिवर्तनशालित्वं, अव्यक्तात् भेदशून्यात् बीजभावाद्विविधोच्चावचभेदवदाकारैः परिणमनं विनाशोत्पत्तिपरंपरया, विचित्रकार्याणि कुर्वतीनां शक्तीनामविसवादेन स्थितिः, तादृश्या स्थित्या तासां व्यञ्जिता एकता परमार्थतः, सरूपाणां विरूपाणां वा जननपरंपरा चेति ते पञ्च धर्माः । अभिन्ननिमित्तोपादानत्वसिद्धान्तश्च पुरुषरूपकेणैव सूच्यते । तथाहि, निमित्तं कर्ता, स स्वभिन्नमुपादानद्रव्यमुपादाय रथादीनि कार्याणि सृजतीति प्रसिद्धं लोके । एवं जगत्सर्जनमपि कुर्वन् कर्ता परमेश्वरः स्वभिन्न परमाण्वाद्युपादानं द्रव्यमधिष्ठाय जगदुत्पादयतीति केचित्तार्किकास्तर्कयन्ति, ते च ईश्वरस्य जगदुपादानकारणस्य च भेदं मन्वते । वेदस्तु उपादानकारणकर्त्रोर्भेदमसहमानः, पुरुषस्य जननकर्तृदृष्टान्तं हृदि निधाय, प्राणिना जन्यजनक-

(१) ऋसं. १०।१६।३ पृ. ३६०. (२) असं. ८।२।३ पृ. ३८१. (३) ऐब्रा. ६।६. (४) बृउ. ३।२।१३ पृ ११२५. (५) असं. ११।१०।१८ पृ. ३१०. (६) असं. ११।१०। ३०-३२ पृ ३१२,१३. (७) असं. ५।९।७ पृ. ३०७. (८) शाआ. ११।१ पृ. ३२२. (९) ऐआ. २।४।२।४ पृ. ५८३.

भावेन सदृशं विश्वसर्जनं कल्पयित्वा, भेदकल्पना परिहरति। दृष्ट हि प्राणिनः स्वात्मन एव स्वापत्यानि जनयन्तीति । तथा च कर्तारमन्यमनपेक्ष्य, उपादानकारणमेव कर्तृत्वशक्तिमत् कार्यरूपेण परिणमते, कार्यकारणयोश्च तात्त्विकमनन्यत्वमेव, इत्येव जनकपुरुषरूपकेणाऽऽविष्क्रियते । अत एव वेदः न केवल पुरुषरूपकं, किन्तु गोवृषभपक्ष्यादीनामपि रूपकाण्युदाहरति । गोरूपक सूचयन्नाह— ' तस्याः[1] समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः । ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥' ' यो[2] रोहितो वृषभस्तिग्मशृङ्गः पर्यग्नि परि सूर्यं बभूव । यो विष्टभ्नाति पृथिवीं दिवं च तस्माद् देवा अधि सृष्टीः सृजन्ते ॥' 'दिव्यः[3] स सुपर्णो गरुत्मान् ' ' सुपर्णं[4] विप्राः कवयो वचोभिरेकं सन्त बहुधा कल्पयन्ति ' इति ।

पुरुषरूपकं तु प्राणिरूपकेभ्यो वेदस्याभिमततरं विद्यते, यतः पुरुषः सर्वप्राणिभ्योऽतिरिच्यते गुणैरिति सप्रतिपन्नम् । यथा—' तस्य[5] य आत्मानमाविस्तरा वेद, अश्नुते हाविर्भूयः । ओषधिवनस्पतयो यच्च किंच प्राणभृत्, स आत्मानमाविस्तरा वेद । ओषधिवनस्पतिषु हि रसो दृश्यते, चित्त प्राणभृत्सु । प्राणभृत्सु त्वेवाविस्तरामात्मा । तेपु हि रसोऽपि दृश्यते । न चित्तमितरेषु । पुरुषे त्वेवाविस्तरामात्मा । स हि प्रज्ञानेन सपन्नतमः ' ' ताभ्यः[6] पुरुषमानयत् । ता अब्रुवन् सुकृतं बतेति । पुरुषो वाव सुकृतम् ' इति । तैत्तिरीयोपनिषदि च, आत्मतः सृष्टिक्रममारभ्य ' अन्नात्[7] पुरुषः' इति पुरुषान्ता सृष्टिः कथिता ।

तदेतत्पुरुषरूपकं विश्वतत्त्वे सगमयति ऋग्वेदः । विश्वस्य स्थूलसूक्ष्म कार्यकारणरूप कस्यामप्यवस्थाया स्थित स्वरूपं परमार्थतो न तत्त्वसमुदायः पदार्थसमुदायो वा किंतु एकात्मक रूपम् । ज्ञायमानः पदार्थसमुदायः एकस्य कस्याप्यवयविनः अङ्गसमुदाय इति मन्यते श्रुतिः । सोऽय एकात्मको विश्वपदार्थ इति समर्थयितु पुरुषरूपकमङ्गीकरोति । ऋषिर्नारायणः पुरुषसूक्ते सूक्ष्मं सूक्ष्मतरं स्थूलं स्थूलतर च पुरुष चतुर्विध निगूढभावशैल्या ज्ञापयति । सर्वातीतः परमपुरुषः 'एतावानस्य महिमाऽतो ज्यायाश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृत दिवि ॥ ' इत्यनेन ज्ञापितः । ' तस्माद्विराडजायत विराजो अधि पूरुषः । ' इत्यनेन परमपुरुषादाविर्भूतौ द्वौ पुरुषौ दर्शयति विराट्पुरुषं यज्ञपुरुषं चेति । एतयोः स्वरूपव्याख्यान तत्रैव व्युत्क्रमेण कथितं नानुक्रमेण । प्रथम सवत्सराख्य यज्ञात्मकं पुरुष वर्णयित्वा तस्माज्जात चातुर्वर्ण्यात्मकं पुरुषं निरूप्यानन्तर ' चन्द्रमा मनसो जातः ' इत्यादौ चन्द्रमःसूर्येन्द्राग्निवायूना अन्तरिक्षद्युभूमीना लोकाना दिशा चोत्पत्तिः विराट्पुरुषस्य मनश्चक्षुर्मुखप्राणनाभिशिरःपादश्रोत्रेभ्यः कथिता । ' यत्पुरुषेण हविषा ' इत्यादिषु सप्तसु मन्त्रेषु यज्ञाख्यात् संवत्सरपुरुषात् त्रय्याः छन्दसामश्वादिपशूना चातुर्वर्ण्यात्मकपुरुषस्य च जननं वर्णितम् । यज्ञपुरुषस्य सवत्सरात्मकत्व च ' वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ' इत्यस्मादनुमीयते । असावेव सवत्सरपुरुषः यज्ञपशुरिति ' देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ' इत्यनेन वर्णयित्वा सृष्टिक्रियात्मको देवैरनुष्ठितो यज्ञः इति निरूपितः । तथा च

---

( १ ) ऋसं. १।१६४।४२ पृ २२५. ( २ ) असं. १३।१।१५ पृ. १६९. ( ३ ) ऋसं. १।१६४।४६ पृ. २२७. ( ४ ) ऋसं १०।११४।५ पृ २३० ( ५ ) ऐआ. २।३।२ पृ. ५५९. ( ६ ) ऐआ. २।४।२।३ पृ. ५८२. ( ७ ) तैउ. २।१ पृ. ७०६.

आदिपुरुषः, विराट्पुरुषः, कालात्मा यज्ञपुरुषः, चातुर्वर्ण्यपुरुषश्चेति चत्वारः स्वशब्देन निरूपिताः। रूपकमूलं मनुष्य पुरुषपर्याय परोक्ष दर्शयति ' ततो विष्वङ् व्यक्रामत् साशनानशने अभि ' इत्यनेन साशनपदेन। स परः पुरुषः विष्वङ् देवमनुष्यतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान् इति सायणभाष्यात्।

ऐतरेयोपनिषदि पुरुषसूक्त मनसि निधायैव आदितत्त्वमात्मपदेन पुरुषपदस्थानीयेन निर्दिश्यते। ततो लोकसृष्टिमभिधाय अग्निवाय्वादित्यदिगादीना लोकपालसंज्ञितानामुत्पत्तेरुपपादनार्थमात्मकृता पुरुषसृष्टिः कथिता यदङ्गेभ्यः अग्निवाय्वादीना जन्म निरूपितम्। अन्ते च अग्निवाय्वादीना लोकपालाना विषयोपभोगस्य कृते तेषामायतनं मनुष्यस्तेनात्मना निर्मित इति तत्र प्रतिपादनम्। अत्र आग्निवाय्वादीना लोकपालाना यस्मात्पुरुषादुत्पत्तिः कथिता स एव पुरुषसूक्ते ' चन्द्रमा मनसो जातः ' इत्यादिना सूचित इति ऐतरेयोपनिषदः पुरुषसूक्तेन साम्यमूहनीयम्। अन्यच्च पुरुषसूक्तस्थः परमपुरुष एवात्र सृष्टेरादौ स्थितः ' आत्मा वा इदमेक एवाग्र आसीत् ' इत्यनेन आत्मपदेनाधीयते इत्यपि सुवचम्। अत एव परस्तात् ' [1]सर्वेषा भूतानामन्तरपुरुषः सम आत्मेति विद्यात् ' इत्युपदिश्यते।

विश्वपुरुष एव व्यक्ताव्यक्तभावाभ्या ज्ञापितः ऋग्वेदोत्तरकालिकेषु यजुर्वेदादिषु मन्त्रब्राह्मणेषु प्रजापतिरिति कीर्त्यते। सर्वाभ्यो देवताभ्यो वरिष्ठ श्रेष्ठ च पदमधितिष्ठन् प्रजापतिः सर्वात्मकत्वेन सर्वदेवतामयत्वेन देवासुरपितृत्वेन च तत्र प्रथते। तद्बीजं तु ऋग्वेद एव वपते यत् यजुर्वेदादिषु विस्तारमाप्नोति। यस्मात्, देवानां प्राणः देवेष्वधिदेव इत्येवमादिभिः तोष्टूय्यमान हिरण्यगर्भमेव हिरण्यगर्भसूक्ते अन्ते प्रजापते इति संबोध्य उपसहृतम्। तत्र च ' कस्मै देवाय हविषा विधेम' इति बहुवारं पठित्वा स विशेषनामरहितः अत एव अनिर्देश्य इति संसूच्यते। किंशब्देन तं प्रश्नविषय कृत्वा निर्णयस्याकृतत्वात्। एतदेव च द्योतकं ' [3]अनिरुक्तः प्रजापतिः' इति प्रजापतेरनिरुक्तता प्रति। हिरण्यगर्भसूक्तस्थस्य भूयः पठ्यमानस्य ' कस्मै देवाय हविषा विधेम ' इत्येतस्य चतुर्थचरणस्य भूयःसंस्कारवशात् प्रजापतिः, क इति संज्ञां प्राप्तवान्। ततश्च यजुर्वेदकाले क इति सज्ञयाऽपि बोधविषयोऽभवत्— ' [4]प्रजापतिर्वै कः ' ' [5]कोऽसि कतमोऽसि कस्मै त्वा काय त्वा सुश्लोक सुमङ्गल सत्यराजन् ' इत्यादिमन्त्रज्ञापनात्। ' [6]स प्रजापतिरब्रवीदथ कोऽहमिति।... ततो वै को नाम प्रजापतिरभवत् ' इति च। प्रजापतिस्वरूपं बहुभिः प्रकारैर्ज्ञापितं वेदविस्तरेष्विति सक्षेपेण तत्सार निष्कृष्य शतपथब्राह्मणे कथ्यते, यथा— ' [7]उभयम्वेतत् प्रजापतिः, निरुक्तश्चानिरुक्तश्च, परिमितश्चापरिमितश्च ' इति।

परमतत्त्वं पुरुषः प्रजापतिः

ऋग्वेदगतानि सूक्तानि यथा इन्द्राग्निसवित्रादिदेवान् पृथक्तया स्तुवन्ति न तथा प्रजापतिदेवताम्। हिरण्यगर्भसूक्तान्ते पठितो मन्त्र एव त्वस्यापवादः। हिरण्यगर्भसूक्त एव प्रजापति-

---

(१) ऐआ. ३।२।४ पृ ६१८. (२) ऋसं. १०।१२१ पृ १९४-९७. (३) कासं. १२।९, १४।१०; मैसं. ३।६।५; ऐब्रा. ६।२०, तैब्रा. १।३।८।५; शाब्रा. २३।२; ताब्रा. १८।६।८; शब्रा. १।१।१।१३. (४) तैसं. १।६।८।५. (५) शुसं. २०।४; तैब्रा. २।६।५।३ पृ. २०१. (६) ऐब्रा. १२।१०. (७) शब्रा. ६।५।३।७.

पदं विशेषनामतया एकदैवोपयुज्यमानं श्रूयते ऋग्वेदे, अन्यत्र तु सवित्रादीनामिद विशेषणमित्यवगन्तव्यम् ।

यजुर्वेदे सर्वेषु च ब्राह्मणग्रन्थेषु प्रजापतिः महिम्नः परां काष्ठामध्यगच्छत् । अयं विशेषश्च ऋग्वेदकालापेक्षया भिन्नं यजुर्वेदकाले देवताविचारमधिकृत्य जात महत्परिवर्तन ज्ञापयति । ऐतिहासिकसरण्या एताद्दशपरिवर्तनस्य कार्यकारणभावे चिन्त्यमाने च बुद्धिः सामाजिकस्थितिमूलमन्वेषयति । ततश्चानुमान निष्पद्यते यत् प्रजापतिपदार्थस्य सामाजिकसंदर्भगतस्य धार्मिकतत्त्वविचारसदर्भे प्रतिबिम्बनमभवदिति । दृष्टमिद हि लोके यत् विश्वतत्त्वं चिन्तयन्तो जनाः, सामाजिकानुभवसंस्कारप्रभावेण, समाजसारूप्यस्य आरोपेण, विश्वतत्त्वानि कल्पयन्तीति । यजुर्वेदकाले एताद्दग्विचारसाकर्येण समाजस्य विश्वनिसर्गस्य च मध्ये अत्यन्तवैलक्षण्यस्य विवेकमलभमानैः सामाजिकः प्रजापतिपदार्थः सृष्टितत्त्वोपपत्तये विश्वनिसर्गे सादृश्यलक्षणया कल्पितः । प्रजापतिपदेन अतिप्राचीनतमा सामाजिकव्यवस्था च एव व्यज्यते, यत् देवासुराणामुभयानामपि अविरोधं मन्वाना वैदिका जनाः यदा यस्यां च प्राथमिक्या राज्यसस्थाया गणसस्थाङ्गभूताया जीवनं यापयन्तः स्वास्थ्यं चिरजीविका च कामयमाना अतिष्ठन् तदा तेषा जनाना कामाना पूर्ति चिकीर्षन्, तस्या राज्यव्यवस्थाया मूर्धन्यपदमधिष्ठाय, नियन्ता पालको नेता च प्रजापतिरित्यभिख्या दधान आसीत् । एषा खलु प्राचीनतमवैदिकानां सामाजिकसस्था पितृप्रधाना आसीत् । निसर्गतः पुत्राणां जनक एव हि पालको नियन्ता च भवतीति । इदमपि नैसर्गिकं यत्, प्राथमिकजनेषु यो वीर्यवत्तमः स्थविरः स एव सर्वेषा महत्तममधिकारपदमदधादिति । यदा वैदिकसमाजेऽपि प्राचीनतमे एषैव पितृप्रधानपद्धतिः प्रवर्तमाना आसीत्तदा कुटुम्बस्य समाजस्य च धारकाणि कृत्यानि कल्पयन्, परंपरया श्रुतानि स्मरन् उपदिशश्च, पालकत्वेन अन्वर्थकं पितृपदमलङ्कुर्वन्, तासा प्रजाना पतिरासीत् । स प्रजापतिश्च न काचिदेकैव व्यक्तिरभवत्, किंतु सामाजिकव्यवस्थाङ्गभूत लोकसकेतानुसारि प्रजापतिसज्ञां भजमानं चिरकालप्रवृत्तम् अधिकारपदमासीदित्यनुमीयते । अत एव ब्राह्मणेषु पुराणेषु च अथर्व[1]मनु[2]भरत[3]जमदग्नि[4]कश्यपवसिष्ठा[5]दयो बहवः प्रजापतिनाम्ना वर्ण्यन्ते । प्रजापतिद्वारा वैदिकजनानां सर्वाणि धार्मिकलौकिककर्माणि नाभिस्थानीयं यज्ञं पुरस्कृत्य प्रावर्तन्त । अतो यज्ञस्य प्रवर्तयिता प्रजापतिरिति भूयोभूयः ऋग्वेदोत्तरवेदेषु उदीर्यते; यज्ञश्च सर्वेषां मानुषाणां कामानामसाधारण साधनमिति च प्रख्याप्यते । तद्यथा— '[6]प्रजापतिर्यज्ञानसृजत ' '[7]तेन प्रजापतिः परमा काष्ठामगच्छत् ' '[8]यो वै प्रजातेन यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते ' '[9]अन्नाद्यमात्मन् धत्ते ' '[10]आयुरेव आत्मन् धत्ते प्रति यज्ञेन तिष्ठति ' इति । प्रजान्नधनादीनां संपादकानि शत्रुनिबर्हणादीनां साधकानि सर्वप्रतिष्ठामूलानि कृत्यानि यज्ञाकाराणि प्रावर्तयत् प्रजापतिः, इत्येवं यज्ञफलशंसिनः प्रजापतिकर्मणां प्रशंसका अर्थवादा बहुलमुपलभ्यन्ते ।

---

(१) गोब्रा. १।१।४. (२) शब्रा. ६।६।१।१९. (३) शब्रा. ५।८।१।१४. (४) शब्रा. ५।८।१।१४. (५) शाब्रा. २५।२, २६।१५. (६) तैसं. १।६।९।१. (७) तैसं. १।६।९।२. (८) तैसं. १।६।९।३. (९) तैसं. १।६।११।६. (१०) तैसं. १।६।११।७.

यज्ञश्च न केवल सामाजिकजीवनसाधनानां सामर्थ्यप्रदत्वेन गृहीतो वैदिकैर्जनैः,अपि तु यज्ञः विश्वशक्तिरित्येव ते श्रद्धामदधन् । अतो यज्ञप्रवर्तकस्य प्रजापतेः सामाजिक सामर्थ्यमवधारयद्भिः श्रद्धानैर्वैदिकजनैः सृष्टिप्रक्रियाकल्पनावसरे विश्वकारणशक्तिरपि प्रजापतिरूपेणैव अकल्प्यत । एतदनुसारेणैव प्रजापतिः सर्वजनकः सर्वात्मकश्च निरूपितो वेदैः । पुरुषसूक्तमनुसदधद्भिर्यजुर्वेदैर्ब्राह्मणैश्च प्रजापतेर्विश्वपुरुषेण तादात्म्यमारोप्य सृष्टिप्रक्रिया निरूपिता * । समाजस्य विश्वस्य च घटनावैचित्र्यं विवेकेनाकलनकर विचारपाटवं च यदा बुद्धिमारोहत्तदा गौण्या वृत्त्या प्रजापतिपदार्थस्य व्युत्पादनमुपक्रान्तं वेदे '[1] रूपं वै प्रजापतिः, नाम वै प्रजापतिः' '[2] सत्य हि प्रजापतिः' '[3] आत्मा वै प्रजापतिः' '[4] ब्रह्म वै प्रजापतिः' इति । अन्ततश्च उपनिषत्सु प्रजापतिपदमुपेक्ष्यैव तत्त्वविचार प्रास्तुवन् इति क्रमेण विचारविकाससरणिरुपपद्यते ।

इदमत्रावधेयम्—यद्यपि पुरुषसूक्तस्थितः पुरुष एव प्रजापतिरिति पुरुषप्रजापत्योरैक्ये ऋग्वेदोत्तरवेदेषु बाहुल्येन सप्रतिपत्तिरस्ति तथापि क्वचित् वैमत्यमपि दृश्यते । शाङ्खायनब्राह्मणे महादेवो रुद्र एव प्रजापत्यपत्येभ्यः संभूतः 'सहस्राक्षः सहस्रपात्' इत्येवं रूपेण उत्थितः पुरुषः इति वर्ण्यते । [6]तैत्तिरीयारण्यकेऽपि च प्रजापतेः पूर्वं प्रादुर्भूतः कूर्मः विश्वसृक् 'सहस्रशीर्षा पुरुषः' इत्येवं निर्दिश्यते । रुद्रस्य परमपुरुषत्व च [7]श्वेताश्वतरोपनिषदि 'सहस्रशीर्षा पुरुषः' इत्यादिपुरुषसूक्तमन्त्रद्वयेन, 'वेदाहमेत पुरुष महान्तम्' इत्युत्तरनारायणमन्त्रेण तथा '[9] महान् प्रभुर्वै पुरुषः' इत्यनेन च सर्वथाऽङ्गीकृतम् । तदेव च नारायणाद्युपनिषत्सु वेदोत्तरकालीनपुराणादिवाङ्मये च दृढमूलतया निरूढमभवत् । वासुदेवे भगवति विष्णौ पुरुषोत्तमत्व नारायणद्वारा निरूढिमगमदिति वक्तु शक्यते, यतः शतपथब्राह्मणे '[10] पुरुषो ह नारायणोऽकामयत' '[11] पुरुष ह नारायणं प्रजापतिरुवाच' इति वाक्यद्वयेन नारायणस्य पुरुषत्व संकीर्तितम् । नारायण एव च

* शतपथब्राह्मणे प्रजापतेर्दृश्यप्रपञ्चकर्तुः आदिसलिलोद्भूतहिरण्मयादण्डात्सृष्टिरुक्ता ( ११।१।६।२ पृ. २९८ ) । तैत्तिरीयसंहितादिषु कथ्यते यत् विश्वजननीष्वप्सु वायुभूत प्रजापतिः लेलायमानः सृष्ट्यादावासीदिति ( तैसं. ५।६।४।२, ७।१।५।१ पृ २८१–८२; तैब्रा. १।१।३।५–७ पृ. २८६, २।२।९।१–१० पृ. २८९ ) । तैत्तिरीयसंहिताया बहुषु ब्राह्मणेषु च प्रजापतिः विराट्पुरुषत्वेन स्वाङ्गेभ्यो विश्व जनयतीति पुरुषसूक्तप्रोक्तसृष्टिप्रक्रियामनुकृत्य वर्ण्यते । स खलु प्रजापति ज्येष्ठ अग्न्यादिदेवताना भूरादिलोकाना गायत्र्यादिच्छन्दसा साम्नामजादिपशूना ब्राह्मणादिवर्णाना च सृष्टि स्वाङ्गेभ्य करोति इत्येवं संक्षेपेण विस्तरेण वा वर्ण्यते ( तैसं. ७।१।१।३-६; ऐब्रा. २५।७; ताब्रा. ६।१।६-१३, १६।१।१, २०।१४।२; जैब्रा.१।६८,६९,३५७, तैब्रा.२।२।९।१–१० पृ २८१–९०; ऐआ.२।१।७ पृ. ५३९–४० ) । ऋग्वेदे यत् सृष्टिकारणं तत्त्वं अद्वैतरूपेण प्रतिपादितं तदेव अद्वैतरूपेण ब्राह्मणग्रन्थेष्वपि प्रजापत्यात्मकं निरूप्यते । 'प्रजापतिर्वा इदमेक एवाग्र आस' (ऐब्रा १०।१) 'प्रजापतिर्वा इदमेक आसीत्' (ताब्रा. १६।१।१, २०।१४।२ पृ. २८५ ) 'प्रजापतिर्वा इदमग्र आसीदेक एव' ( शब्रा. ६।१।३।१ पृ. २९५ ) इत्यादीनि वाक्यान्यनुसंधेयान्यत्र ।

( १ ) तैब्रा. २।२।७।१ पृ. २८७ ( २ ) शब्रा. ४।२।१।२६. ( ३ ) शब्रा. ४।५।९।२. ( ४ ) शब्रा. १३।६।२।८. ( ५ ) शाब्रा. ६।१ पृ १५०. ( ६ ) तैआ १।२३।४ पृ ३०६. ( ७ ) श्वेउ. ३।१४,१५ पृ. १५९७, ९८. ( ८ ) श्वेउ. ३।८ पृ १५९४,९५. ( ९ ) श्वेउ ३।१२ पृ. १५९७. ( १० ) शब्रा १३।६।१।१ पृ. ४७०. ( ११ ) शब्रा. १२।३।४।१ पृ ४६९.

विष्णुरूप इति वेदोत्तरकालीनेषु निगमेषु अभ्युपगतमिति। पुरुषोत्तमशब्दस्य तु वैदिकं मूलमेवं लभ्यते—'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति।

पुरुषोत्तम एव सर्वधर्मप्रतिपन्नो भक्तिविषय

पुरुषरूपेणैव परतत्त्वे चिन्त्यमाने भवदोषं क्षालयन्ती चित्तकर्कशतामुपमृद्य मार्दवमादधाना रससारनिर्भरा संसारसंतापनिर्वापणसुधामयी भक्तिराविर्भवति चेतसि नान्यथा। पुरुषरूपेणैव च खलु भगवति मानससाक्षात्कारगोचरे चित्तसत्त्वोद्रेकेण लौकिकानन्दमघरीकुर्वती स्वर्गातिशायिनी अपवर्गस्य परा सीमा प्रापयन्ती प्रेमवृत्तिः हृदि पदं निदधाति नान्यथा। अत एव सर्वे लोकप्रसिद्धा जनैराहता धर्माः पुरुषोत्तमत्वेन प्रतिपन्ने विभावेव श्रद्धा विदधति पाप्मना परिभवाय मुक्तिवैभवाय च। ता ता देवता पुरुषरूपेण स्तुवत्सु ऋग्वेदमन्त्रेषूद्भूतं तदेतत्पुरुषतत्त्वं पुरुषसूक्ते विशेषनामशून्यमुपदिष्टमित्येष विशेषो विमर्शनीयः। एतस्मादेव वैदिकाद्बीजात् शैववैष्णवादिभागवतधर्मस्य अन्यदेवकल्पनाभिभावकः परमपुरुषविचारः प्राभवत्। उपनिषद्भिश्च पुरुषविचारो भक्त्यनुग्राहकः सन्नपि तत्त्वबोधोत्कर्षाय नालमिति मत्वा ऋग्वेदे एव प्रादुर्भूत परदेवतालक्षकं विशेषतयाऽनिर्देश्यस्यान्तिमतत्त्वस्य सूचकं मन्त्रसमूहमवलम्ब्य आध्यात्मिक दर्शनमुपक्रान्तम्।

उपनिषत्पूर्ववेदाना केवलसदात्मकाद्वयतत्त्वे पर्यवसानम्

ऋग्वेदे देवताबहुत्ववादस्य देवतैक्यपर्यवसायित्वं भिन्नदेवतानाम्नां परदेवतालक्षकत्वं च साक्षादेव प्रकटीकृतम्। तद्यथा—'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥' 'एक एवाग्निर्बहुधा समिद्धः, एकः सूर्यो विश्वमनु प्रभूतः। एकैवोषाः सर्वमिदं वि भाति, एकं वा इदं वि बभूव सर्वम् ॥' 'आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास ॥' 'अयं देवानामपसामपस्तमो यो जजान रोदसी विश्वशम्भुवा। वि यो ममे रजसी सुक्रतूयया अजरेभिः स्कम्भनेभिः समानृचे ॥' 'अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा। परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव॥' इति।

एते मन्त्रा विशेषनामरहितमेकं किमपि सर्वात्मकं तत्त्वं बोधयन्ति। एतम् अद्वैतपरमेश्वरपरं निष्कर्षं प्रत्यभिज्ञाय ऋग्वेदोत्तरकालिके अथर्ववेदे ब्रह्मसूक्तानि आम्नायन्ते। एतदवधार्यैव 'तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः। तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।...... एषो ह देवः......। स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ॥' इत्युक्तम्।

अद्वैतसद्रूपतया अद्वयपुरुषरूपेण च ऋग्वेदे संकीर्तितं यजुर्वेदसंहिताब्राह्मणेषु प्रजापतित्वेन वर्णितम् अथर्वसंहितायां निरस्तभेदब्रह्मतया विवक्षितं तत्त्वमुपनिषत्सु आत्मपदार्थ इति

---

(१) छान्द. ८।१२।३ पृ. ९७९. (२) ऋसं १।१६४।४६ पृ. २२७. (३) ऋसं. ८।५८।२ पृ. २७४. (४) ऋसं १०।१२९।२ पृ. २४१, २७६. (५) ऋसं. १।१६०।४ पृ. २०५. (६) ऋसं. १०।१२५।८ पृ. २३९. (७) शुसं. ३२।१-४ पृ. २५५-५६.

पुरुषपदस्य परमतत्त्वपरस्य सावयवमूर्तवाचकतापरिहारयत्न. वेदेषु

बोध्यते । पुरुषब्रह्मात्मपदाना त्रयाणामुपनिषत्सु अस्य तत्त्वस्य सपरिष्कार सोपस्कारं चोपबृहणाय प्रयोगः कृतः । तत्राय विशेषः, पुरुषपदस्य अभिधया वृत्त्या योऽर्थो बुध्यते त परित्यज्य सूक्ष्मार्थबोधार्थम् अर्थवादरूपा बहुविधा निरुक्तिरवलम्बिता । तदिदमुपक्रान्तमुपनिषत्पूर्वमन्त्रब्राह्मणेषु, सप्रतिपन्न चोपनिषत्सु । पुरुषपदेन हस्तपादाद्यवयववान् चक्षुरादीन्द्रियसंपन्नो बुद्ध्यादिधर्मयुक्तो मनुष्योऽभिधीयते । पुरुषशब्दस्य ता अवयविविशेषबोधकता परिहृत्य सूक्ष्मार्थ दर्शयितुमुपक्रान्तमथर्वसंहितायाम् –– '[1]सर्वा दिशः पुरुष आ बभूवाॅ ३ । पुर यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥ ' इति । अत्र पुरि शेते इति व्युत्पत्तिमादृत्य निरवयवं तत्त्वमित्यर्थ आसाद्यते । एतदेवानूदितं शतपथे गोपथे च यथा– '[2]इमे वै लोकाः पूः, अयमेव पुरुषो योऽयं ( वायुः ) पवते, सोऽस्यां पुरि ( त्रैलाक्ये ) शेते तस्मात्पुरुषः ' '[3]पुरिशयं सन्त प्राणं पुरुष इत्याचक्षते' इति। बृहदारण्यके तु पुरितिशब्देन मनुष्यादिसर्वप्राणिना शरीराणि गृहीत्वा तेषु निवसन् आत्मा पुरुषशब्देन बोध्यते। यथा–– '[4]पुरश्चक्रे द्विपदः, पुरश्चक्रे चतुष्पदः, पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति । स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः ' इति । तत्रैव अन्याऽपि निरुक्तिरस्य शब्दस्याभिधीयते, यथा– '[5]आत्मैवेदमग्र आसीत् पुरुषविधः । सः...... अहंनामाऽभवत् । ......स यत् पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात्पुरुषः ' इति। अत्र ' उष् दाहे ' इत्यस्माद्धातोर्व्युत्पादितोऽयं शब्दः । ततश्च, येन पूर्वमेव सर्वं पाप दग्ध स पुरुष इत्येवमर्थः पर्यवसितः । तैत्तिरीयारण्यके च आदिकारणस्य विराजः पुरुषशब्देन निर्देशार्थमन्यैव निरुक्तिरवलम्बिता। प्रजापतिं प्रति कूर्मरूपधारी जलसचारी परमात्माऽब्रवीत्––'[6]पूर्वमेवाहमिहासमिति। तत् पुरुषस्य पुरुषत्वम् । स सहस्रशीर्षा पुरुषः ' इति ।

पुरुषपदेन शरीरदोषसंपृक्तः शोकमोहतृष्णादिदोषोपहतो भोक्ताऽभिधीयते व्यवहारे । तदर्थशङ्काव्युदासार्थ व्युत्पत्त्यन्तरव्याजेन सङ्गरहितपुरुषकल्पनाऽध्यवसिता उपनिषत्सु । तद्यथा–– "[7]असङ्गो ह्ययं पुरुषः ' '[8]पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ' इति । निरवयवत्वमपि साक्षात् कथ्यते–"[9]दिव्यो ह्ययमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ ' इति। एवच्च पुरुषसूक्तस्थो विश्वशरीरी यजुर्वेदादिषु प्रजापतिरित्यभिख्या प्राप्तः चयनमहाव्रतादिषु विराड्रूपेण आराधितः पुरुषः प्राणपदेनात्मपदेन ब्रह्मपदेन च बोध्यते।

प्राणपदगतस्य प्रोपसर्गपूर्वकस्य अनधातोः श्वसनक्रियेत्यर्थो मुख्यो भवति । तेन च श्वसनक्रियाद्वारा सकलजीवसाधारणी जीवनक्रिया लक्षिता भवति । एता लक्षणामाश्रित्य सिद्धया रूढ्या

---

( १ ) अस. १०।२।२८ पृ. २४५. ( २ ) शब्रा. १३।६।२।१. ( ३ ) गोब्रा १।१।३९. ( ४ ) बृउ. २।५।१८ पृ. ११११. ( ५ ) बृउ. १।४।१ पृ. १०१६. ( ६ ) तैआ. १।२३।४ पृ. १५९, ३०६. ( ७ ) बृउ. ४।३।१५ पृ. १२०३. ( ८ ) काउ. ३।११ पृ. १४१४. ( ९ ) मुउ २।१।२ पृ. १४५४.

प्राण इति संज्ञा बीजतत्कार्योभयव्यापिन्याः स्थित्याः, कार्यकारणोभयस्वरूपेण वर्तमानस्य वस्तुनो वा, अञ्जसा बोधनार्थं प्रजापतिपुरुषादिपदापेक्षया इष्टतरेत्यङ्गीकृतं वेदेन। प्रजापतिपद पुरुषपद वा चक्षुरादीन्द्रियशालिन्यवयविनि वाचकतया युज्यते। चक्षुरादिरहितायां बीजावस्थायां कारणावस्थाया वा वर्तमाने वस्तुनि न ते पदे सामञ्जस्येनोपपद्येते। अतः प्राणपदस्य वस्तुतत्त्वदर्शनार्थमभिमततरत्वं ज्ञातव्यं बुधैः। प्राणपदस्य हि बीजतत्कार्यवाचकता कारणवाचकता वा वेदे प्रसिद्धा। यथा– ‘[1]प्राणो वै पिता, प्राणो मातरिश्वा, प्राणो रेतः’ इति। रेतोरूपप्राणस्य प्रजापतित्वं प्रजापतिमन्त्रेष्वपि ध्वन्यते, यथा– ‘[2]प्रजापतिश्चरति गर्भे अन्तरदृश्यमानो बहुधा वि जायते’ ‘[3]एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः’ इति। शतपथब्राह्मणे च प्राणप्रजापत्योरैक्यं कथ्यते–– ‘[4]प्रजापतिः प्राणः’ इति।

परमतत्त्वाभिधाने पुरुषपदापेक्षया प्राणपदमभिमततरम्, प्राणः स्वतन्त्रः विश्वक्रियाशक्तिरूपश्च

प्राणिसर्गभिन्ने अचेतनामित्यभ्युपगते जगत्यपि भूगादिलोकात्मके उत्पत्तिस्थितिनाशक्रमः कार्यकारणभावपर्यायरूपो दृश्यते। स चानन्याधीनः स्वान्तरङ्गशक्तिसाध्य इत्याकारिका वैदिकी प्राणतत्त्वगोचरा प्रतिभा [5]अथर्ववेदे तैत्तिरीयारण्यके[6] च सूक्तद्वयेन प्रकटीभवति। सा हि विश्वान्तरङ्गशक्तिः प्राणपदेनाभिलप्यते। तत्र ह्येवमुक्तम्— प्राण एव एको देवः सर्वेश्वरः, पर्जन्यान्नमातरिश्वविराट्प्रजापतिसूर्यचन्द्रमआदिदेवताः स एव; गर्भग्रहणधारणप्रजननानि ओषधिपशुमनुष्यादीना जन्मायुर्गमनस्थित्यासनप्राणनमोदनादिक्रियाश्च तस्यैव कार्याणि, पुनःपुनर्जायमानः सः सुप्तेष्वपि सर्वेषु जागरितस्तिष्ठति। नित्यपरिवर्तनस्वरूप कालचैतन्यं सः इत्येवमाविष्क्रियते मन्त्रविशेषेण तत्र, यथा– ‘अन्तर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायते पुनः। स भूतो भव्य भविष्यत्, पिता पुत्रं प्र विवेशा शचीभिः॥’ इति। तैत्तिरीयारण्यके च तस्य विशेष उक्तः–– प्राणः अमृतं मृत्युश्च, अतन्द्र एको देवः, भारहरो भर्ता भर्तव्यश्च, एकोऽपि बहुधा निविष्टः इति। प्रश्नोपनिषदि च द्वितीयप्रश्ने एष एवार्थः, अन्योपनिषत्सु कथितार्थ संगृह्यावधारितः।

मन्त्रब्राह्मणेषूपनिषत्सु च प्रयुज्यमानः प्राणशब्दो नानार्थकोऽस्ति, सदर्भविशेषानुसारेण चार्थविशेषः प्रत्येतव्यो भवति। अस्माभिस्ते नानार्थाः समाकलय्य सप्तसु विधासु विभज्य स्थाप्यन्ते सम्यगर्थावधारणाय प्राणतत्त्वव्युत्पत्तये च। (१) श्वसनक्रिया वायुग्रहणोत्सर्जनलक्षणा। (२) प्राणापानादिपञ्चवृत्तिः। इदमत्र चिन्तनीयं यत् प्राणापानादीना संख्याया श्रुतिविप्रतिपत्तिरस्ति, क्वचित् प्राणापानौ, क्वचित् प्राणापानसमानाः, इत्यादि गणनभेददर्शनात्। प्राणापानादिगणनं शरीरस्थानविशेषान् क्रियास्वरूपविशेषान् वा आभिप्रेत्य क्रियते इत्यपि विचार्यं भवति। (३) प्राणापानादिषु प्रथमः। (४) जीवात्मा यः स्वरूपाणि व्याकरोत् मनो वाक् घ्राण चक्षुः श्रोत्रमिति। ‘[7]पञ्चधा विहितो वा अयं शीर्षन् प्राणः, मनो वाक् प्राणश्चक्षुः श्रोत्रम्’ इति। मनोवाक्चक्षुरादिषु च प्राणशब्दः उपनिषत्सु भूय उपलभ्यते इत्यपि न विस्मर्तव्यम्। ज्ञानेन्द्रियाणा कर्मेन्द्रियाणा प्राणापानादिपञ्चवृत्त्यात्मकस्य चात्र संग्रहो भवितुमर्हति। सख्यानियमने तु नादरः कर्तव्यः। अस्मिन् संदर्भे

(१) ऐब्रा. १०।६. (२) असं. १०।८।१३ पृ. २४९. (३) शुसं ३२।४ पृ. २५६. (४) शब्रा. ७।५।१।२१. (५) असं. ११।६ पृ. ३२३–२७. (६) तैआ. ३।१४ पृ ३३२-३४. (७) शब्रा. ९।२।२।५ पृ. ३२९.

प्राणपदेन प्राणमपि वागादिगणनाया दर्शितम् । (५) वायुः श्वसनक्रियाया मुख्योऽनुग्राहकः क्वचिच्च प्राणपदवान् अन्यव्यावृत्त्या शस्यते । स एव च शरीरं प्रविश्य प्राणापानादिभेदेन व्यवतिष्ठते इत्युपदिश्यते *। (६) बाह्यः जीवनशक्तिदः पदार्थः । यथा सूर्यो वा अन्न वा आपो वा तत्रतत्र सदर्भविशेषे प्राणपदेन निर्दिश्यन्ते । (७) बाह्याध्यात्मिकस्थानद्वयोपाधिकं बीजतत्कार्योभयरूपं व्यक्ताव्यक्तोभयसाधारणं क्रियाशक्तिलक्षितं परमार्थवस्तु प्राणः । सोऽयमुपरिनिर्दिष्टाथर्वतैत्तिरीयारण्यकसूक्तद्वयेन गीतः। एतस्यैवोपनिषत्सु ब्रह्मात्मपदाभ्या निर्देशोऽस्ति । अत एव बहूनामुपनिषद्वाक्याना च प्राणपराणा परमात्मपरताऽध्यवसीयते । तस्मात् 'अत[1] एव प्राणः' 'प्राणस्तथानुगमात्' इत्यत्र वैयासिकं दर्शनं प्राणपदार्थं परमात्मानं निश्चिनोति ।

शतपथब्राह्मणे अक्षिपुरुषस्य मण्डलरूपेणैकात्म्यं निर्दिश्य स एव प्राण इत्युक्तम् । यथा — 'एष[2] उ एव प्राणः । एष हीमाः सर्वाः प्रजाः प्रणयति । तस्यैते प्राणाः स्वाः । स यदा स्वपिति, अथैनमेते प्राणाः स्वा अपियन्ति । तस्मात्स्वाप्यय: । .. .. स एष एकः सन् प्रजासु बहुधा व्याविष्टः' इति । प्राणपदेनात्र अमर्त्य आत्मा निर्दिष्टः, जीवात्मपरमात्मनोरभेदश्च 'एकः सन्' इत्यनेन विहितः ।

ऐतरेयारण्यके प्राण पुरुषं सर्वात्मकं प्रकृत्य स एव अन्न चान्नादश्चेति बाह्याध्यात्मविभागेन दर्शयित्वा तदेव प्राणाख्य ब्रह्म पुरुषप्रविष्टमिति सकीर्त्य स एव विश्वरूपः प्राणः शरीरधारणकरमुक्थमित्युपास्यः कथितः— 'प्राण[3] उक्थमित्येव विद्यात् । तं देवा अब्रुवन् । त्वमुक्थमसि । त्वमिदं सर्वमसि' इत्यादिना । स एव सर्वभूतप्रविष्ट इत्युच्यते— 'एवं[4] सर्वाणि भूतान्या पिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीति' इति । स एव मर्त्यशरीरस्थः अमर्त्यं इति वर्ण्यते — 'स[5] एषोऽसुः स एष प्राणः । स एष भूतिश्चाभूतिश्च ।... ... स एष मृत्युश्चैवामृत च । ... अमर्त्यो मर्त्येना सयोनिरिति । एतेन हीदं सर्वं सयोनि । मर्त्यानि हीमानि शरीराणि३ । अमृतैषा देवता' इति ।

कौषीतक्युपनिषदि तदिद प्राणतत्त्व प्राधान्येन प्रपञ्चितम् । ऐतरेयारण्यकगते आत्मषट्के प्राणपदं विहाय आत्मपदार्थश्चिन्तितः, न तथाऽत्र । प्रज्ञात्मा इति प्राणमेव एषोपनिषन्निर्दिशति ऐतरेयारण्यकोपदेशं प्राणविषयकमनुसंधाय—'अथ[6] खलु प्राण एव प्रज्ञात्मेद शरीरं परिगृह्योत्थापयति तस्मादेतदेवोक्थमुपासीत' इति । एष एव परमार्थ इत्यभिप्रायेणोपसंहरति च— 'तद्यथा[7] रथस्यारेषु नेमिरर्पितः, नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणे अर्पिताः । स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः । न साधुना कर्मणा

---

* 'अयं वै प्राणो योऽयं पवते । यो वै प्राणः स आयुः । सोऽयमेक इवैव पवते । सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा विहितः' (शब्रा. ५।२।४।१० पृ ३२८ ) । 'सोऽयं ( वायुः ) पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः प्राण उदानो व्यान इति' ( शब्रा ३।१।३।२० पृ. ३२८ ) ।

( १ ) ब्रसू. १।१।२३,२८. ( २ ) शब्रा १०।५।२।१४,१५ पृ. ११६. ( ३ ) ऐआ. २।१।४ पृ. ५३४. ( ४ ) ऐआ. २।१।६ पृ. ५३८. ( ५ ) ऐआ. २।१।८ पृ. ५४२. ( ६ ) कौउ. ३।३ पृ. ६६५. ( ७ ) कौउ. ३।८ पृ. ६७१, ७२.

भूयान् । नो एवासाधुना कनीयान् । ... ... एष सर्वेशः । स म आत्मेति विद्यात् ’ इति । अत्र हि प्रज्ञामात्राणां भूतमात्राणा चैक्य प्रज्ञात्मन्यमृते प्राणे सर्वनाभिस्थानीये विस्तरेण समर्थितम् । प्रज्ञामात्राश्च वाग्घ्राणचक्षुःश्रोत्रजिह्वाहस्तपादोपस्थशरीरमनांसि, भूतमात्राश्च नामगन्धरूपशब्दरसकर्मसुखदुःखानन्दरतिप्रजातीत्याधीविज्ञातव्यकामाः इति निरूपितमत्र । भूतमात्राभिः प्रज्ञामात्राः संगता अव्यभिचारेण, प्रज्ञामात्राश्च प्रज्ञया, इत्युपपाद्य तासा मात्राणामुभयविधानां प्राणे ऐक्यं निर्णीतम् ।

छान्दोग्योपनिषदि [1]संवर्गविद्यायां रैक्वजानश्रुतिसवादे अग्निसूर्यचन्द्रापा वाक्चक्षुःश्रोत्रमनसा चाप्ययस्थान सवर्गाख्यं तत्त्वं शरीर प्राणरूपेण बाह्ये च वायुरूपेण निर्दिष्टम् । स एष संवर्गः प्राणतत्त्वमेव द्योतयति । अस्यामुपनिषदि तलवकारब्राह्मणोपनिषदि च कापेयकाक्षसेन्योः कथायां भिक्षार्थमागतेन ब्रह्मचारिणा पृष्टः भुवनगोप्ता अग्न्यादित्यादीना ग्रसिता एको देवः क इति, ताभ्या च स प्राण इति निर्दिष्टः । यथा — ‘ [2]आत्मा देवानामुत मर्त्यांना हिरण्यदन्तोरपसो न सूनुः । महान्तमस्य महिमानमाहुरनद्यमानो यददन्तमत्ति ॥ इति । ......... बहुधा ह्येवैष निविष्टो यत्प्राणः ’ इति । इदं वाक्यं छान्दोग्योपनिषदि संवर्गविद्याया पाठभेदेन पठ्यते ।

[3]छान्दोग्योपनिषदि पुनः प्राणविषायिणी ज्येष्ठत्वश्रेष्ठत्वगुणगोचरा विद्या विहिता । सैव च [4]शाङ्खायनारण्यके [5]बृहदारण्यके च दृष्टा । वाक्चक्षुःश्रोत्रमनसा रेतसश्च प्राणाधीना शरीरे स्थितिरत्र समर्थिता, तस्य शरीरादुत्क्रान्तौ एतेषा चक्षुरादीना शरीरे जीवितुमशक्यत्वस्य प्रतिपादनेन । प्राणाधीनत्वात् चक्षुरादीना प्राणपदबोध्यताऽप्युपपादिता तत्र । किंचास्य श्वशकुनिकीटपतङ्गकृमिपर्यन्तेषु प्राणिष्ववस्थानम्, तैर्यदन्न भुज्यते तत्सर्वमस्यैवान्नम्, सर्वान्नानामयमेव च भोक्ता इत्युक्तम् । एवं सर्वप्राणिसाधारणः प्राण एक एवेत्यपि तत्त्व सर्वभूतस्थः प्राणोऽहमस्मि इत्युपासनार्थं कथितम् । यदि ईदृशप्राणविद्यावान् आपदि किमपि निषद्धमन्नं भुञ्जीत, तर्हि न पापेन युज्येतेत्येवं प्राणविद्याफलमन्ते दर्शितम् —‘ [6]न ह वा एवंविदि किञ्चनानन्नं भवतीति ’ ‘ [7]न ह वा अस्यानन्नं जग्ध भवति, नानन्न प्रतिगृहीतम् ’ इति ।

देवासुरसंग्रामाख्यानमुखेन विषयासङ्गानाभिभूतः प्राणो भवति इत्येवमभिप्रायो धर्माधर्मविवेकज्ञानाय प्रकटीक्रियते [8]छान्दोग्ये [9]बृहदारण्यके [10]तलवकारब्राह्मणोपनिषदि च । अत्रैवमपि विशेषः प्रकाशितो यत्, स्वाभाविकी चक्षुरादीन्द्रियेष्वनुबद्धा शोभनाशोभनस्वाद्वस्वादुसुरभ्यसुरभिरुचिरारुचिरादिभेदवासना आसङ्गलक्षणेन पाप्मना पुरुष दूषयति; एष पाप्मासङ्ग एव मृत्युः; आसङ्गदोषवर्जितश्च प्राणः सर्वेन्द्रियोपकारकः; तं प्रधाननियन्तृत्वेन स्वीकृत्य इन्द्रियाणि च विजित्य प्रवर्तमानः पुरुषो मृत्युमतिक्रान्तो भवतीति ।

तलवकारब्राह्मणोपनिषदि तु प्राणस्य स्वरूप विवृत्य विशेषो निरूपितः । तद्यथा—‘ [11]तद्ध सात्यकीर्ता आहुः । या वय देवतामुपास्महे, एकमेव वय तस्यै देवतायै रूपं गव्यादिशामः, एकं

---

(१) छाउ. ४।१–३ पृ. ८२२–३० (२) तब्राउ. ३।१।२ पृ. १३५५. (३) छाउ. ५।१,२ पृ. ८४९–५५. (४) शाआ ९ पृ. ३३१. (५) बृउ. ६।१ पृ. १२८५–९०. (६) छाउ. ५।२।१ पृ. ८५२. (७) बृउ. ६।१।१४ पृ. १२८९. (८) छाउ १।२ पृ. ७५१–५४. (९) बृउ. १।३ पृ. १००१–१४. (१०) तब्राउ. १।१८।५, २।१।१–२।४।२ पृ. १३४८-५३. (११) तब्राउ. ३।६।४ पृ. १३६४,६५.

वाहने, एकं हस्तिनि, एकं पुरुषे, एकं सर्वेषु भूतेषु । तस्या एवेद देवतायै सर्वं रूपमिति । तदेतदेकमेव रूपं प्राण एव । यावद्ध्येव प्राणेन प्राणिति तावद्रूपं भवति यद्रूपं भवति । तदथ यदा प्राण उत्क्रामति दार्वेवेव भूतोऽनर्थ्यः परिशिष्यते न किंचन रूपम् । तस्यान्तरात्मा तपः । तस्मात्तप्यमानस्योष्णतरः प्राणो भवति । तपसोऽन्तरात्माऽग्निः । स निरुक्तः । तस्मात्स दहति ' इति । एतत्तु अग्निरहस्ये वैश्वानरविद्यायां कथितस्य पुरुषेऽन्तः प्रतिष्ठितस्य वैश्वानराग्नेः सिद्धान्तेन संवादित्वं द्रढयति । तत्र ह्युक्तम्— '[1] स एषोऽग्निर्वैश्वानरो यत्पुरुषः । स यो हैतमेवमग्नि वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद । अप पुनर्मृत्युं जयति ' इति । अनन्तरं च तलवकारब्राह्मणोपनिषदि अधिदैवतं प्राणप्रतियोगी वायुः तस्यान्तरात्मा च विद्युदित्युक्तम् ।

पुरुषप्रविष्टस्य प्राणस्य जीवात्मनः स्थानद्वैविध्यमुच्यते सर्वाङ्गाणि शिरश्च विशेषेण । तथा चोक्तम्— '[2] प्राणो हि॰वा अङ्गाना रसः । तस्माद्यस्मात्कस्माच्चाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यति ' इति । एतदेवानूदितमन्यत्र — '[3] एतमु एवाङ्गिरसं मन्यन्ते, अङ्गाना यद्रसः ' इति । अस्य च शिरस्स्थानीयत्वमप्यभिधीयते । तच्चास्य प्रधानं स्थानं, तत्सृष्टचक्षुरादीना प्राधान्येन शरीरधारिणा तत्राश्रितत्वात् । एतदभिप्रेत्य श्रुतयः सवदन्ते— '[4] ऊर्ध्वं त्वेवोदसर्पत् । तच्छिरोऽश्रयत ।... ता एताः शीर्षन् श्रियः श्रिताः चक्षुः श्रोत्रं मनो वाक्प्राणः ' '[5] पञ्चधा विहितो वा अयं शीर्षन् प्राणः, मनो वाक् प्राणश्चक्षुः श्रोत्रम् ' '[6] तदाहुः प्रादेशमात्राद्वा इत एता एकं भवन्ति । अतो ह्ययं प्राणः स्वयं उपर्युपरिवर्तन इति ' '[7] यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ' इति । अत्र प्रादेशमात्रं स्थानं शिरो बोद्धव्यम् । '[8] तथा तु व एनान् ( वैश्वानरावयवान् ) वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति । स होवाच मूर्द्धानमुपदिशन्, एष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाच, एष वै सुततेजा वैश्वानर इति । नासिके उपदिशन्नुवाच, एष वै पृथग्वर्त्मा वैश्वानर इति । मुख्याकाशमुपदिशन्नुवाच, एष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाच, एष वै रयिर्वैश्वानर इति । छुबुकमुपदिशन्नुवाच, एष वै प्रतिष्ठा वैश्वानर इति । स एषोऽग्निर्वैश्वानरो यत्पुरुषः ' इत्यत्र प्रादेशमात्रपदेन मूर्द्धादिचुबुकान्तप्रतिष्ठः शिरःप्रदेशो निर्दिश्यते इति । अधिकं ब्रह्मसूत्रशांकरभाष्ये वैश्वानराधिकरणे[9] द्रष्टव्यम् ।

अथर्वाख्यस्य ब्रह्मणो हिरण्मयः कोशः ज्योतिषाऽऽवृतः स्वर्गः शिर इति अथर्ववेदे ब्रह्मसूक्ते वर्णितम् । तत्प्राणस्य स्थानमिति तत्रैवाभिहितम्— '[10] तद्वा अथर्वणः शिरो देवकोशः समुब्जितः । तत्प्राणो अभि रक्षति शिरो अन्नमथो मनः ॥ ' इति । मध्यस्थाने हृदये वा प्राणस्तिष्ठतीत्यपि क्वचिद्वर्ण्यते । यथा— '[11] स योऽयं मध्ये प्राणः एष एवेन्द्रः ' '[12] अथेममेव नाप्नोत् योऽयं मध्यमः प्राणः ' '[13] अयं वाव शिशुर्योऽयं मध्यमः प्राणः ' इति । एतन्मध्यमस्थानं शिरस्यभिप्रेयते

---

( १ ) शब्रा. १०।६।१।११ पृ. ४२. ( २ ) बृउ. १।३।१९ पृ. १०१०. ( ३ ) छाउ. १।२।१० पृ. ७५३. ( ४ ) ऐआ. २।१।४ पृ ५३३. ( ५ ) शब्रा. ९।२।२।५ पृ. ३२९. ( ६ ) तब्राउ. ३।६।५ पृ. १३६५. ( ७ ) छाउ. ५।१८।१ पृ. ८७६. ( ८ ) शब्रा. १०।६।१।१०,११ पृ. ४१,४२. ( ९ ) ब्रसू. १।२।२४-३२. ( १० ) असं. १०।२।२७ पृ. २४५. ( ११ ) शब्रा. ६।१।१।२ पृ. २९१. ( १२ ) बृउ. १।५।२१ पृ. १०६१. ( १३ ) बृउ. २।२।१ पृ. १०७९.

उरसि वा एतन्न निश्चेतु पार्यते । अथवा शरीरान्तःस्थितिशील इत्यर्थो मध्यम इत्यस्य भवितुमर्हति । क्वचिच्च प्राणस्य हृदय स्थानमुच्यते—‘ [1]प्राणो हृदये ’ इति । प्राणः जीवाख्यः सर्वप्राणिना शरीरे स्थितः सूक्ष्मः शरीरभिन्नः अतीन्द्रियः, शरीरमाविष्कृतं व्यक्तमिन्द्रियगम्यमित्यभिधीयते श्रुतौ—‘ [2]तिरे इव ह्यशरीरम् । अशरीरो हि प्राणः । अथ यदुच्चैस्तच्छरीरम् । तस्मात्तदाविः । आविर्हि शरीरम् ’ इति । अस्य शरीरे स्थितिः सामपदनिरुक्तिद्वारा सम्यक् बोध्यते — ‘ [3]एष उ एव साम...... यद्धेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्धेव साम ’ इति ।

बृहदारण्यके[4] तलवकारब्राह्मणोपनिषदि[5] च अधिदैवत अग्न्यादित्यचन्द्रमसा दिशा च वायुरुद्गमनलयस्थानम्, अध्यात्मं च मनश्चक्षुरादीन्द्रियाणा प्राणः उद्गमनलयस्थानमित्युक्त्वा अध्यात्ममधिदैवतं च वायुप्राणात्मिका एकैव देवता इत्यर्थ उक्तः । बृहदारण्यके प्राणविषये विशेष उक्तः; नामरूपकर्मात्मकं सर्व जगत् इति प्रतिपाद्य एतत्त्रयम् एकमेव आत्मा कर्मशक्तिरूप तत्त्वमित्युपसंहृतम्; आत्मा च प्राण इनि प्राणशब्देन तन्निर्दिष्टम् —‘ [6]आत्मो एकः सन्नेतत्त्रयम् । तदेतदमृत सत्येन छन्नम् । प्राणो वा अमृतम् । नामरूपे सत्यम् । ताभ्यामयं प्राणश्छन्नः ’ इति । आत्मा उ–आत्मैवेत्यर्थः ।

छान्दोग्योपनिषदि उत्तरोत्तरविशिष्टानि ब्रह्मत्वेनोपास्यानि तत्त्वानि नामवाङ्मनःसकल्पचित्तध्यानविज्ञानबलान्नाप्तेजआकाशस्मराशारूपाणि वर्णयित्वा अन्ते तेभ्यो भूयान् प्राण उक्तः । उपसहृतं च–‘ [7]यथा वा अरा नाभौ समर्पिताः, एवमस्मिन् प्राणे सर्वे समर्पितम् । प्राणः प्राणेन याति । प्राणः प्राणं ददाति । प्राणाय ददाति । प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ’ इति । इत्येव पितामात्रादीनां मन्बन्धे प्राप्तकर्माकर्मविवेकार्थ तेषां प्राणत्वं कर्तव्याकर्तव्यप्रयोजकं तत्त्वमिति समार्थितम् । पितृहत्यामातृहत्यादिदोषप्रयोजकत्वात् प्राणत्वधर्मस्य ।

बृहदारण्यके ब्रह्मवित्परिषदि कत्येव देवा याज्ञवल्क्येति विदग्धशाकल्येन भूयोभूयः देवसंख्यामधिकृत्य कृते प्रश्ने याज्ञवल्क्योऽन्ततः समादधाति एक एव देवः ‘ [8]प्राण इति । स ब्रह्म त्यदित्याचक्षते ’ इति । एतेन संगतमेव उषस्तिश्चाक्रायण आह– ‘ [9]सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसविशन्ति प्राणमभ्युज्जिहते ’ इति । अभिसविशन्ति प्रलय यान्ति, उज्जिहते उद्गच्छन्तीत्यर्थः । सर्वप्राणिसाधारणी प्राणनाम्नी शक्तिः स्थावरजङ्गमानामुत्पत्तिस्थितिलयकारणमित्यभिप्रायः ।

प्राणविद्यासु एष सिद्धान्तः प्रस्थापितः प्राधान्येन, यस्मिन्सति शरीरजीवनक्रियाः मनश्चक्षुरादीन्द्रियक्रियाणामन्तर्भावेण संभवन्ति यस्मिन्नसति च ताः क्रिया विरमन्ति स प्राण इति । अतः प्राणसंवादे वाक्चक्षुःश्रोत्रमनोरेतांसि प्राणं प्रत्याहुः– ‘ [10]मां भगव उत्क्रमीः । न वै शक्ष्यामस्त्वदृते जीवितुमिति ’ इति । तथाच अध्यात्मं द्वय निर्धारितं प्रवर्त्यं प्रवर्तकश्च । मनआदीनि प्रवर्त्यानि

---

( १ ) तैब्रा. ३।१०।८।५ पृ २६०. ( २ ) ऐआ. २।३।६ पृ. ५६९. ( ३ ) बृउ. १।३।२२ पृ. १०११. ( ४ ) बृउ. १।५।२१–२३ पृ. १०६१–६३. ( ५ ) तब्राउ. २।४।२ पृ. १३५३. ( ६ ) बृउ. १।६।३ पृ. १०६६. ( ७ ) छाउ. ७।१५।१ पृ. ९३७. ( ८ ) बृउ. ३।९।९ पृ. ११६९. ( ९ ) छाउ. १।११।५ पृ. ७७०. ( १० ) बृउ. ६।१।१३ पृ. १२८८.

परतन्त्राणि, प्राणः प्रवर्तकः स्वतन्त्रः । तदेव स्वतन्त्रं तत्त्वमधिदैवतमपि तत्रतत्र ज्ञापितम् । एष स्वतन्त्रः प्रवर्तकः यदधीना शरीरस्थितिः, स अमर्त्यः, शरीरं च मर्त्यम् इत्यपि ज्ञापितम् ।

. स्वतन्त्र सङ्गदोषवर्जितं परमार्थसत्यम् उपनिषदः आत्मपदेनोपदिशन्ति । उपनिषत्सु आत्मपदार्थः महिम्नः परा काष्ठामध्यगच्छत् । उपनिषत्पूर्ववैदिकाम्नाये आत्मपदार्थस्य न तादृशमहिमशालित्वं, तत्र हि प्रथम पुरुषपदार्थः परमार्थविद्यामूलभूतः प्रजापतीत्यपरपर्यायः महिमानमगमत् । ब्रह्मपदमपि ऋग्वेदमारभ्य क्रमेण पारमार्थिकं विचारं पुष्णत् दार्शनिकार्थप्रागल्भ्यमथर्ववेदे एव प्राप्नोत् । प्राणपदमपि अथर्ववेदमारभ्य ऋग्वेददृष्टबीजभावस्य विकास मुहुर्मुहुः कुर्वत् आरण्यकेषु महतीमाध्यात्मिकार्थसंपत्तिमपुष्णात् । आत्मपदं तु उपनिषत्स्वेव परमार्थविचारव्यञ्जकमूर्धन्यभावेन स्थितमित्यस्य पदस्य विशेषोऽवगन्तव्यः । यद्यपि अथर्ववेदे तैत्तिरीयब्राह्मणे शतपथब्राह्मणे च आत्मपदस्य पारमार्थिकमर्थमभिदधानानि वचनानि दृश्यन्ते—'[1]अकामो धीरो अमृतः स्वयंभू रसेन तृप्तो न कुतश्चनोनः । तमेव विद्वान्न बिभाय मृत्योरात्मान धीरमजरं युवानम् ॥' '[2]येन सूर्यस्तपति तेजसेद्धः । पिता पुत्रेण पितृमान् योनियोनौ । नावेदविन्मनुते त बृहन्तम् । सर्वानुभूमात्मानं संपराये ॥ एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् । तस्यैवात्मा पदवित्त विदित्वा । न कर्मणा लिप्यते पापकेन ॥' '[3]स आत्मानमुपासीत मनोमय प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसंकल्पं सत्यधृतिं सर्वगन्धं सर्वरस सर्वा अनु दिशः प्रभूतं सर्वमिदमभ्यात्तमवाक्कमनादरम्' इति । तथापि अथर्ववेदमन्त्रः ब्रह्मसूक्तान्ते पठितः उपनिषत्कालच्छायामावहति । तैत्तिरीयब्राह्मणगतं वचनं च वैश्वसृजचयने पठित ब्राह्मणकाल-समासिक्षणं लक्षयति, एतद्ब्राह्मणान्तिमभागेऽधीतत्वात् । अत एव तैत्तिरीयब्राह्मणगतैतत्प्रकरणानुवादकं वैश्वसृजसत्रं ताण्ड्यब्राह्मणान्ते पठितमुपलभ्यते । शतपथब्राह्मणस्थं वचनं चाग्निरहस्ये शाण्डिल्यविद्यारूपमिति न तस्योपनिषत्कालिकत्वे सदेहावसरोऽस्ति, अग्निरहस्यस्य उपनिषत्पक्षे समावेशनस्य सुकरत्वात् ।

आत्मपदपर्यन्तं वैदिकविचारसरणेः परिणतिकारणानि

प्राणपदापेक्षया आत्मपदेऽधिकः समादर उपनिषदा दृश्यते । तन्निमित्तं तु प्राणपदं प्राणनक्रियानुग्राहके वायुतत्त्वे बहुशः उपयुज्यमानं दृष्टम्; वायुश्च न नित्यं मूलतत्त्वमित्येव विचारं प्रति उपनिषद्विद्या प्राप्ता, वायोराकाशादुत्पत्तिरित्यभिहितत्वात् । '[4]आनीदवात स्वधया तदेकम्' इत्यत्र ऋग्वेदेऽपि प्रथमतत्त्वस्य वातेन विनाऽस्तित्वस्याम्नानाच्चेति । किंच, शरीरधारकजीवनशक्तिरूपः प्राणः कार्यात्मको न नित्य इत्येतत् छान्दोग्योपनिषद्यपि निर्दिष्टम् — '[5]आपोमयः प्राणो नपिबतो विच्छेत्स्यत इति' इति । अन्यच्च, आकाशान्तो भूतप्रपञ्चः ओषधिवनस्पतिप्राणिभिन्नाः पाषाणमण्यादयः पदार्थाश्च कारणशक्तिसपन्नाः न प्राणपदेनाञ्जसा व्यपदेष्टुं शक्याः, न वा तेषु अन्तर्हिता शक्तिः प्राण इति व्यपदेशनस्यार्हा इत्यापाततोऽपि पश्यन्त प्रति प्रतिभातीति । एतत्सर्वं मनसि निधाय आत्मपदमवलम्बितमित्यनुमातुं शक्यते ।

---

(१) असं. १०।८।४४ पृ. २५१. (२) तैब्रा. ३।१२।९।७ पृ. ४६३. (३) शब्रा. १०।६।३।२ पृ. २६१. (४) ऋसं. १०।१२९।२ पृ. २४०. (५) छाउ. ६।७।१ पृ. ९०२.

विश्वात्मके पारमार्थिकसत्ये आत्मपदप्रयोगः उपनिषत्स्वेव प्राधान्येनाधिगम्यते इत्युक्तम् । अत एवोपनिषदो मूलभूतमात्मदर्शनमिति प्रख्यायन्ते । एतदात्मदर्शनपर्यवसानं वेदानामैतिहासिकपरंपरायाः परिणतिरिति साधूपपादयितुं शक्यते । विश्वतत्त्वं हि पुरुषरूपं प्राणरूपं सदात्मकं वा अद्वय दृष्टं वेदैः । उपनिषत्पूर्ववाङ्मये चात्मपदं पुरुषे, प्राणे, अस्मदर्थे, स्वरूपे च प्रयुज्यमान दृष्टम् । एतादृशचतुर्विधप्रयोगस्यैकत्र संनिपातेन पिण्डीभूतोऽर्थः पारमार्थिके सत्ये आत्मपदाकाङ्क्षी संपन्न इत्येतत् सूक्ष्मदर्शिभिरूह्यम् । अत्र तु तस्य क्रमस्य दिङ् निर्दिश्यते । तथाहि— ' अथाध्यात्मम् ' इत्युपक्रम्योपदिश्यमाने उपासने आलम्बनरूपाः पदार्थाः सर्वे पुरुषघटका एव निर्दिश्यन्ते । यथा— ' अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म मांसं स्नावास्थि मज्जा ' इति। अत्र हि आत्मपदेन प्राणमनश्चक्षुरादिमान् त्वगाद्यवयवसयुक्तः पुरुषोऽभिधीयते । शतपथब्राह्मणेऽपि चित्याग्न्युपासनेषु बहुप्रकारेषु विधीयमानेषु आत्मनि तदुपासनाया ' आत्मा ह त्वेवैषोऽभिश्रितः ' इत्युपक्रान्ताया पुरुषव्यपदेशपूर्वकम् अस्थिमज्जप्राणशिरोलोमत्वङ्मांसेन्द्रियाणां निर्देशं कृत्वा पानाशनक्रिये अपि निर्दिष्टे । उदाहरणमात्रमिदमुद्धृतम् । अनयैव दिशा ' त्वङ्मांस स्नावास्थि मज्जा । एतमेव तत् पञ्चधा विहितमात्मान वरुणपाशान्मुञ्चति ' इत्यादीनि बहून्युदाहरणानि स्वयमेवोह्यानि, विस्तरभयान्नात्रोदाह्रियन्ते । इदमत्रावधेयम्—पुरुषोऽवयवी, इत्यर्थे रूढस्यात्मशब्दस्य मूर्तावयविमात्रेऽपि रूढिः प्रसृता, अतः आत्मन्वी, आत्मन्वत्, इत्यादौ ' मूर्तिमत् ' इत्यर्थः क्रियते । किंच आत्मशब्दो यथा पुरुषवाचको भवति, तथा पुरुषस्य मध्यभागस्यापि वाचको भवतीति बहुषूदाहरणेषु दृश्यते । ' मध्यतो ह्ययमात्मा ' ' आत्मनो ह्येवाध्यङ्गानि प्ररोहन्ति ' ' स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छ प्रतिष्ठा ' इत्यादिषु शिरःपाणिपादव्यतिरिक्तः कटिप्रदेशपर्यन्तः कण्ठतोऽधः स्थितः उरःप्रधानः शरीरप्रदेशः आत्मपदेनोच्यते, शिरःपाण्यादीनि चाङ्गपदेनोच्यन्ते । क्वचित् उरोमात्र हृदयं वा आत्मपदेन निर्दिश्यते ।

विश्वसत्यं पुरुषपदेन ऋग्वेदादिषु, प्रजापतिपदेन च यजुर्वेदादिषु, प्रतिपादितमिति, तदनुरुध्य तस्यैव आत्मपदेन निर्देशार्थमानुकूल्यं संपद्यते । पुरुषस्य सारभूतं तत्त्व प्राणः, तस्मिन् यथा तत्त्वाभिप्रायेण पुरुषपदं प्रयुज्यमानं दृष्ट तथा आत्मपदमपि दृश्यते । मनुष्यस्य स्वरूपं मर्त्यामर्त्यविभागयोर्विभज्य यदा निर्देष्टुमिष्टं भवति, यदा वा जीवनशक्तिं मनसि निधाय किमपि निर्देष्टुमिष्यते तदा आत्मपदमपि प्रयुज्यमानमुपलभ्यते । तद्यथा— ' को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति । भूम्या असुरसृगात्मा क्व स्वित् को विद्वांसमुप गात् प्रष्टुमेतत ॥ ' 'अनच्छये तुरगातु जीवमेजद् ध्रुवं मध्य आ पस्त्यानाम् । जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ' ' अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ' इति । अत्र ...अमर्त्यस्यास्थिरहितस्य मर्त्येन शरीरेण सह स्थितस्य वाचकतया आत्मजीवासुशब्दानां निर्देशो द्रष्टव्यः ।

---

( १ ) तैउ. १।७ पृ. ७०१. ( २ ) शब्रा. १०।५।४।१२ पृ. ३६. ( ३ ) तैब्रा. १।५।९।७. ( ४ ) शब्रा. ६।२।२।१३. ( ५ ) शब्रा. ८।७।२।१५. ( ६ ) तैउ. २।१ पृ. ७०६. ( ७ ) ऋसं. १।१६४।४, ३०, ३८ पृ. २०८, २१९, २२३.

आत्मपदेन वायुरूपं प्राणमभिप्रेत्योच्यते— '[1]सूर्यं चक्षुर्गच्छतु वातमात्मा ' इति । अत एव '[2]वातात्ते प्राणमविदं सूर्याच्चक्षुरहं तव ' इति संगच्छते । अत एव च वायोरात्मपदेन व्यपदेशः ऋग्वेदे बहुषु स्थलेषु क्रियमाण उपपद्यते । यथा— '[3]आत्मेव वातः स्वसराणि गच्छतम् ' यथा प्राणिनामात्मभूतः प्राणवायुः स्वसराणि स्वशरीराणि गच्छति, तद्वत् हे अश्विनौ गच्छतमित्यर्थः । '[4]आत्मा ते वातो रज आ नवीनोत् ' हे वरुण आत्मा प्राणिजातस्य प्राणरूपेण धारयिता वातः वायुः रजः उदकम् आ नवीनोत् समन्तात् प्रेरयति, वातेन हि वृष्टिर्जायते इत्यर्थः । '[5]स रेतोधा वृषभः शश्वतीना तस्मिन्नात्मा जगतस्तस्थुषश्च ' सः पर्जन्यः शश्वतीनां बह्वीनामोषधीना रेतोधाः रेतस उदकस्य धाता भवति, वृषभ इत्युपमा, तस्मिन् पर्जन्ये जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा प्राणः वायुः वर्तते इत्यर्थः । '[6]आत्मानं वस्यो अभि वातमर्चत ' आत्मान सर्वेषामात्मभूतं वातं वायु वस्यः प्रशस्यतरमन्नं प्राप्तुम् अभि अर्चत स्तुत्या पूजयत इत्यर्थः । '[7]आत्मा देवाना भुवनस्य गर्भो यथावशं चरति देव एषः । घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥ ' अत्र वातः देवानामात्मेति वर्णितः— इति । काठकसंहितायामपि '[8]वातः प्राणस्तदयमात्मा ' इत्यभिहितम् ।

अस्मदर्थे चात्मशब्दस्य प्रयोगः प्रसिद्धः । उदाहरण तु यथा—'[9]स एवास्माल्लोकात्प्रेत्य आत्मानं वेद, अयमहमस्मीति' '[10]ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेत्, अह ब्रह्मास्मीति' इति ।

स्वयमित्यर्थेऽपि आत्मशब्दः प्रसिद्धः । यथा—'[11]सोममिन्द्रः पिबतु वृत्रहा । बलं दधान आत्मनि, करिष्यन् वीर्यं महत् ॥' आत्मनि स्वस्मिन्नित्यर्थः । '[12]स ऐक्षत प्रजापतिः, इम वा आत्मनः प्रतिमामसृक्षि यत्संवत्सरमिति' आत्मनः प्रतिमां स्वस्य प्रतिमामित्यर्थः । '[13]अथाऽऽत्मन्नग्नी समारोह्य, उत्तरनारायणेनाऽऽदित्यमुपस्थाय, अनपेक्षमाणोऽरण्यमभिप्रेयात्' आत्मन् आत्मनि स्वस्मिन् इत्यर्थः —इति । आत्मपदस्य संक्षिप्तस्वरूप त्मन्शब्दः ऋग्वेदे भूयः प्रयुज्यते स्वयमित्यर्थे । यथा— 'विश्वं[14] त्मना बिभृतः' द्यावापृथिव्यौ सर्व स्वय धारयत इत्यर्थः । 'त्व[15] ह्यग्ने दिव्यस्य राजसि, त्वं पार्थिवस्य, पशुपा इव त्मना ' हे अग्ने दिव्यस्य पार्थिवस्य च जगतः पशुपालक इव स्वय प्रशासनं करोषीत्यर्थः— इति ।

यद्यपि पुरुषपदात् आत्मपदे वैचारिकं सङ्क्रमणं सुतरां भवितुमर्हतीत्यत्र न प्राज्ञाना चेतसि सदेहावसरो भवेत्, तथापि सुखावबोधार्थं कानिचिदुदाहरणानि प्रदर्शयामः । शतपथब्राह्मणे वैश्वानरविद्यायां वैश्वानरः पुरुषपदेन निर्दिश्यते—'[16]स एषोऽग्निर्वैश्वानरो यत्पुरुषः । स यो हैतमेवमग्निं वैश्वानरं पुरुषविध पुरुषेऽन्तः प्रतिष्ठितं वेद, अप पुनर्मृत्यु जयति ' इति । स एव वैश्वानरः

(१) ऋसं. १०।१६।३ पृ. ३६० (२) अमं ८।२।३ पृ. ३८१. (३) ऋसं. १।३४।७. (४) ऋसं. ७।८७।२ पृ. ८१. (५) ऋसं. ७।१०१।६. (६) ऋसं. १०।९२।१३. (७) ऋसं. १०।१६८।४ पृ १५१. (८) कासं. ७।१४ पृ. २५. (९) तैब्रा. ३।१०।११।१ पृ. २७. (१०) बृउ. १।४।१० पृ. १०२९. (११) ऋसं. ९।११३।१. (१२) शब्रा. ११।१।६।१३ (१३) शब्रा. १३।६।२।२० पृ. ४७०. (१४) ऋसं. १।१८५।१ पृ. १२१. (१५) ऋसं. १०।६।३।२ पृ ५६. (१६) शब्रा. १०।६।१।११ पृ. ४२.

छान्दोग्योपनिषदि वैश्वानरविद्याया आत्मपदेन निर्दिष्टः 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि' 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति । चित्याग्नेः छन्दोदेवतात्मक-विराट्पुरुषस्य शिरोग्रीवानूकपक्षोरुजानुपादेन्द्रियाद्यवयवयुक्तस्य वर्णनं कृत्वोक्तम्—'सैषाऽऽत्मवि-द्यैव । एतन्मयो हैवैता देवता एतमात्मानमभिसंभवति' इति । शतपथब्राह्मणे अग्निरहस्ये शाण्डिल्य-विद्याया हिरण्मय चयने उपास्य विश्वपुरुषं 'एवमयमन्तरात्मन् पुरुषो हिरण्मयः' इति निर्दिश्य 'स प्राणस्यात्मा, एष मे आत्मा, एतमित आत्मानं प्रेत्याभिसंभविष्यामीति' इत्यनेन आत्मपदे पुरुषविचारस्य सक्रमणं विस्पष्टं दृश्यते इति । पुरुषपदं मर्त्यात् सावयवात् शरीरात् व्यावर्त्य अमर्त्ये निरवयवे उपनिषत्पूर्ववेदभागेनैव यथा संक्रमितं तथा पूर्वमेव पुरुषतत्त्वव्याख्यानावसरेऽस्माभिः प्रपञ्चितम्, तदत्राप्यनुसंधातव्यम् । प्राणपदं अमर्त्यमत्यपरम्, तत्पर्यायतया आत्मशब्दः ऋग्वेदे एवाङ्गीकृत इत्यपि पूर्वं प्रत्यपादयाम, तत् तत एवावगन्तव्यम् ।

ऋग्वेदे अमर्त्यत्वेनावधारितप्राणपदार्थे अहमर्थपरस्य आत्मपदस्य संक्रमण सम्यगुपपद्यते । प्रतिक्षणविनाशिषु देहावयवेषु अनुस्यूतस्य प्रत्ययिनः अहंपदेन व्यवहरणात्, यथा योऽहं बाल्ये पितरावन्वभूवम्, सोऽहं स्थाविरे प्रणप्तॄननुभवामीति । अत्र अहमर्थो विनश्यच्छरीरप्रवाहेऽन्वीयमानं वस्त्वित्यवधार्यते । सोऽयं प्रतिक्षणक्षयिष्णुशरीरेऽनुवर्तमानः स्थिरः साक्षी आत्मपदेन निर्देष्टुं योग्यो भवति, आत्मपदस्य अस्मच्छब्दपर्यायत्वात् । विध्वंसिकार्यप्रवाहेऽन्वीयमानं वस्तु इत्यस्मिन्नर्थे पर्य-वस्यन् आत्मशब्दः प्राणशब्दापेक्षया तत्त्वदर्शनाय ईप्सिततमो भवति । यतः प्राणभृद्भिन्नामपि सृष्टिमन्तर्भाव्य विश्वोपपादकं तत्त्वं यत्र जिज्ञापयिषितमस्ति तत्रापि प्रयोगार्हं भवतीति । पुरुषपदं प्राणपदं च तत्रापि श्रुत्या प्रयुक्तमित्येतत्तदुपपादनावसरे पूर्वमेव प्रपञ्चितम् ।

'एकं वा इदं वि बभूव सर्वम्' 'आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास' इत्यादय ऋग्वेदमन्त्राः आद्यकारणस्य एकत्वं अद्वितीयत्वं च ज्ञापयन्ति । एतादृशाद्वयाद्य-कारणवादेन प्रभावितैव सर्वेषु वेदेषु सृष्ट्युपपत्तिरस्ति । आद्यकारण पुरुषो वा प्रजापतिर्वा ब्रह्म वा काप्यन्या देवता वा सद्वा असद्वा किमपि यत्रयत्र निर्दिश्यते तत्रतत्रास्यैवाद्वयकारणवादस्य प्रभावोऽ-स्ति । सन्ति कानिचिदस्यापवादकानि वचनानि, परंतु प्रकृता प्रतिपिपादयिषितामात्मपदप्रयोगमूलस्यो-पपत्तिं तानि न बाधन्ते । इदं ह्यत्राकूतम्—आत्मपदपर्यवसानार्थमनुकूला भूमिका सृष्टिकारणवादिनीषु प्राजापत्यादिपरासु श्रुतिषु भूयिष्ठतयोपलभ्यत इति ।

चतुर्विधेयं भूमिका संपद्यते । आद्यकारणस्य विश्वसर्जने स्वातन्त्र्यमीक्षणपूर्वककर्तृत्वं चेत्येका, स्वरूपात्स्वाङ्गेभ्यो वा जगत्कार्यविशेषाणा निर्माणं विश्वस्य विराट्पुरुषरूपत्वं चेति द्वितीया, उत्पादनक्रियागोचरचराचरम् आद्यकारणरूपमेवेत्येषा विवक्षेति तृतीया, आद्यकारणस्य ब्रह्मणः प्रजापतेरन्यस्य वा सृष्टेषु भूतेषु शरीरेषु वा प्रवेश इति चतुर्थी । द्वितीया भूमिका च पूर्वकृतात् पुरुषतत्त्वप्रतिपादनादवधार्या । प्रथमा तृतीया चतुर्थी चात्रोपन्यस्यते—'प्रजापते न त्वदे-तान्यन्यो विश्वा जातानि परि ता बभूव' 'प्रजापतिर्वा इदमेक एवाग्र आस । सोऽकामयत प्रजायेय

( १ ) छाउ. ५।११।६ पृ. ८७३. ( २ ) छाउ. ५।१८।१ पृ. ८७६. ( ३ ) शब्रा. १०।३।२।१३ पृ. ३०. ( ४ ) शब्रा. १०।६।३।२ पृ. २६१. ( ५ ) ऋसं. ८।५८।२ पृ. २७४. ( ६ ) ऋसं. १०।१२९।२ पृ. २४०. ( ७ ) ऋसं. १०।१२१।१० पृ. १९७. ( ८ ) ऐब्रा. १०।१.

भूयान् स्यामिति' '[1]प्रजापतिर्वा इदमेक आसीत् । तस्य वागेव स्वमासीत् । वाग्द्वितीया । स ऐक्षत । इमामेव वाच विसृजै । इयं वा इद सर्वं विभवन्त्येष्यतीति ' '[2]प्रजापतिर्वावेदमग्र आसीत् । ...... सोऽकामयत बहु स्यां प्रजायेय भूमान गच्छेयमिति ' '[3]प्रजापतिर्वावेदमग्र आसीत् । सोऽकामयत । अहमेवेदं सर्वं स्यामहमिदमभिभवेयमिति । ..... एष एवेद सर्वमित्युपासितव्यम् ' '[4]सोऽयं पुरुषः प्रजापतिरकामयत भूयान् स्याम्, प्रजायेयेति ' '[5]प्रजापतिर्वा इदमग्र आसीदेक एव । सोऽकामयत स्याम्, प्रजायेयेति' इत्येवमादिषु वाक्येषु अर्थचतुष्टय प्रतिपाद्यते । अत्र हि आद्यकारणस्य प्रजापतेः साक्षादध्याहारेण वा कर्तृवाचकेन अहपदेन निर्देशोऽस्ति । अहंपदार्थश्च विश्वसर्जनेऽनन्याधीनः स्वतन्त्रः कर्ता इति द्योत्यते । कर्तुरेव कार्यरूपेण बहुभवनं निर्दिश्य च तस्योपादानकारणता सूच्यते । इदपदार्थः दृश्यसृष्टिः, आद्यकारण प्रजापतिश्च, अनयोरेकता ' प्रजापतिर्वा इदमेक एव ' इत्यादिना वाक्यसंदर्भेणाहत्योच्यते तत्रतत्र । तेन कार्यकारणयोरनन्यत्वं द्योत्यते । तथाच अहंप्रत्ययगोचरश्चेतनः, अनन्याधीनः स्वतन्त्रः कर्ता, कर्तैवोपादानकारणम्, कार्यकारणयोरनन्यत्वं चेत्यर्थचतुष्टयं निष्पद्यते ।

वागाम्भृणीदृष्टे ' [6]अहं रुद्रेभिर्वसुभिश्चरामि ' इत्यादिसूक्ते अहंपदार्थस्य सृष्टिप्रवर्तकत्वं प्राणनदर्शनादिजीवक्रियाकर्तृत्वं चानयैव दिशोपपादनीयम् । तत्र ह्युक्तम्—' मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् । अमन्तवो मा त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ।। अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ।। अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ।। अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा । परो दिवा पर एना पृथिव्यैतावती महिना स बभूव ।। ' इति । एष एवार्थः ' [7]अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः' इत्यादिवामदेवसूक्ते ' [8]अहं ता विश्वा चकरं नकिर्मा ' इत्यादिमन्त्रेषु च प्रतिबिम्बतीति ध्येयम् ।

जलमूला असन्मूला ब्रह्ममूला वा सृष्टिरित्यर्थं बोधयन्त्यः श्रुतयोऽपि इममेवाभिप्रायं द्रढयन्ति । यथा—'[9]आपो वा इदमग्रे सलिलमासीत् ' '[10]आपो ह वा इदमग्रे सलिलमेवास । ता अकामयन्त । कथं नु प्रजायेमहीति ' '[11]इदं वा अग्रे नैव किंचनाऽऽसीत् । न द्यौरासीत् । न पृथिवी । नान्तरिक्षम् । तदसदेव सन्मनोऽकुरुत स्यामिति । तदतप्यत ' ' [12]ब्रह्म वा इदमग्र आसीत् ' इति ।

अस्मत्पदस्यात्मपदस्य च समानार्थता निश्चाययितु छान्दोग्योपनिषत् पारमार्थिकं भूमतत्त्वमुपदिश्य तस्य सर्वव्यापकता अहङ्कारादेशेनात्मपदादेशेन *चोभयथापि कथयति—'[13]अथातोऽहङ्कारादेश एव । अहमेवाधस्तात्, अहमुपरिष्टात्, अहं पश्चात्, अहं पुरस्तात्, अहं दक्षिणतः,

---

( १ ) ताब्रा. २०।१४।२ पृ. २८५. ( २ ) जैब्रा. १।६८ पृ. २८६. ( ३ ) जैब्रा. १।३१४ पृ. २०२. ( ४ ) शब्रा. ६।१।१।८ पृ. २९२. ( ५ ) शब्रा. ६।१।३।१ पृ. २९५. ( ६ ) ऋसं. १०।१२५।४–६, ८ पृ. २३८, ३९. ( ७ ) ऋसं. ४।२६।१ पृ. ६४. ( ८ ) ऋसं. ४।४२।६ पृ. ७६. ( ९ ) तैसं. ७।१।५।१ पृ. १५७, २८२, तैब्रा. १।१।३।५ पृ. २८६. ( १० ) शब्रा. ११।१।६।१ पृ. २९७. ( ११ ) तैब्रा. २।२।९।१ पृ. २८८. ( १२ ) शब्रा. ११।२।३।१ पृ. ३०१. ( १३ ) छाउ. ७।२५।१, २ पृ. ९४६, ४७.

अहमुत्तरतः, अहमेवेदं सर्वमिति। अथात आत्मादेश एव। आत्मैवाधस्तात्, आत्मोपरिष्टात्, आत्मा पश्चात्, आत्मा पुरस्तात्, आत्मा दक्षिणतः, आत्मोत्तरतः, आत्मैवेदं सर्वमिति ' इति।

आत्मपदस्य 'स्वरूपम्' इति मुख्योऽर्थः, तदर्थकतया प्रयोगः आद्यकारणमुद्दिश्य कृतः औपनिषदे आत्मपदार्थविचारे महान्तमुपकार करोति ऐतिहासिकप्रणाल्या। तत्रोदाहरणानि यद्यपि अल्पान्युपलभ्यन्ते तथापि ' अणुरपि विशेषोऽध्यवसायकरः ' इति न्यायेन आत्मविचारपर्यन्तपरिणतिप्रक्रमे तेषा बलीयस्त्वमङ्गीकर्तव्यमेव। तानि यथा—सृष्टिप्राक्काले सदसद्विलक्षणं किमप्यासीदित्येतत् नासदीयसूक्तमवलम्ब्योक्त्वा कथ्यते–' [1]तद्ध तन्मन एवास। ......नेव हि सन् मनो नेवासत्। तदिदं मनः सृष्टमाविरबुभूषत् निरुक्ततरं मूर्ततरम्। तदात्मानमन्वैच्छत् ' इति। अस्मिन् ब्राह्मणेऽस्मिन् प्रकरणे ' आत्मानमन्वैच्छत् ' इत्येतद्वाक्यमष्टवारं सदर्भाकाङ्क्षावशात् पठितम्। अग्निरहस्ये प्रजापतिना स्वनिर्देशः कृत आत्मपदेन, यथा— ' [2]स हेक्षा चक्रे। कथं न्वहमिमानि सर्वाणि भूतानि पुनरात्मन्नावपेय पुनरात्मन् दधीय ' इति। वाजसनेयिसंहितायां तैत्तिरीयारण्यके चाद्यकारण सर्वात्मकमुद्दिश्योच्यते—' [3]आत्मनाऽऽत्मानमभि सं विवेश ' इति। अत्र स्वसृष्टेषु भूतादिषु मूलकारणस्य प्रवेशः प्रतिपादितः आत्मपदेन स्वरूपवाचिना। स्वस्मिन् कार्यरूपे जगति स्वयं प्रविष्ट इति मन्त्राभिप्रायः। आत्मपदेनात्र मूलकारणं कार्यं च जगत् उभयमपि निर्दिष्टमस्ति। गोपथब्राह्मणे चैतादृशमेवात्मपद प्रयुज्य प्रजापतेः सृष्टिः प्रतिपाद्यते— ' [4]स आत्मन एव त्रीन् लोकान् निरमिमत पृथिवीमन्तरिक्षं दिवमिति ' इति।

अजममरमाद्यकारणं स्वसृष्टौ प्रविष्टमिति विचारो द्वारद्वयेन पारमार्थिकसत्यं आत्मपदास्पदमिति निश्चयाय प्रभवति। शरीररूपकार्ये अजः स्वयं प्रविष्ट इत्येकं द्वारम्; अहमिति निर्देश्यः शरीरी एव सृष्टिजनकोऽज इत्यपरं द्वारम्। एवं च स्वरूपवाचकताशक्त्या अहवाचकताशक्त्या च प्रवर्तमानमात्मपद प्रवेशश्रुतिभिः औपनिषदपारमार्थिकसत्यवाचकताशक्तिपर्यन्त प्रापितमित्यैतिहासिकपद्धत्यनुसार्यनुमान समुचितं घटते। प्रवेशश्रुतयश्च— ' [5]इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ' ' [6]स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ' ' [7]प्रभ्राजमानां हरिणीं यशसा सपरीवृताम्। पुर हिरण्मयीं ब्रह्माऽऽविवेशापराजिताम्॥ ' ' [8]एको ह देवो मनसि प्रविष्टः प्रथमो जातः स उ गर्भे अन्तः' '[9]प्रजापतिः प्रजा असृजत। ताः सृष्टाः समश्लिष्यन्। ता रूपेणानुप्राविशत्। तस्मादाहुः। रूपं वै प्रजापतिरिति। ता नाम्नाऽनुप्राविशत्। तस्मादाहुः। नाम वै प्रजापतिरिति ' ' [10]आत्मा ममेति ब्रह्माऽऽविवेश ' ' [11]अन्तः प्रविष्टः शास्ता जनानाम्। एकः सन् बहुधा विचारः। ......स मानसीन आत्मा जनानाम्। ......अन्तः प्रविष्टं कर्तारमेतम्। त्वष्टारं रूपाणि विकुर्वन्तं विपश्चिम्। अमृतस्य प्राणं ...... कवयो निचिक्युः ' ' [12]त्वमेकोऽसि

---

( १ ) शब्रा. १०।५।३।१–३ पृ. ३१८, १९. ( २ ) शब्रा. १०।४।२।३. ( ३ ) शुसं. ३२।११ पृ. २५७; तैआ. १।२३।९ पृ. ३०६. ( ४ ) गोब्रा. १।१।६ पृ. ३०४. ( ५ ) ऋसं. १।१६४।२१ पृ. २१४. ( ६ ) ऋसं. १०।८१।१ पृ. १८३. ( ७ ) असं. १०।२।३३ पृ. २४६. ( ८ ) असं. १०।८।२८ पृ. २५० ( ९ ) तैब्रा. २।२।७।१ पृ. २८७. ( १० ) शाआ. ११।२ पृ. ३२२. ( ११ ) तैआ. ३।११।१–३ पृ. २६६–६८. ( १२ ) तैआ. ३।१४।३ पृ. ३३३.

बहूननुप्रविष्टः ' '[1]स एतमेव सीमानं विदार्य, एतया द्वारा प्रापद्यत ' '[2]प्रजापतिं ब्रह्माऽसृजत । तमपश्यममुखमसृजत । तं ......ब्रह्माऽऽविशत् । पुरुष्यं तत् । प्राणो वै ब्रह्म......स उदतिष्ठत् प्रजानां जनयिता' '[3]स तपस्तप्त्वा इदं सर्वमसृजत यदिद किञ्च । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् निरुक्तं चानिरुक्त च ' '[4]सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ' '[5]पुरः पुरुष आविशदिति ' इति । अहमर्थपरः स्वरूपपरश्च आत्मशब्दः प्रवेशश्रुतिभिरन्वर्थकतया स्वाभिप्रेततत्त्वबोधनार्थं समीचीनतया आकाङ्क्ष्यते । तथाहि अहंपदेन मनुष्यो व्यवहारकाले यं व्यवहारसाक्षिणं निर्देष्टुमिच्छति तमेव श्रुतिः नामरूपव्याकरणार्थं शरीरादिसृष्टिप्रविष्टमाद्यं तत्त्वं प्रजापत्यादिसंज्ञाभिः उपनिषत्पूर्वकाले निरदिशदिति तत्र आद्यतत्त्वे आत्मपदम् अहमर्थतया स्वरूपार्थतया चोभयथा चरितार्थं भवतीति सुधियो विदांकुर्वन्तु ।

एता चरितार्थतां परमार्थसत्यज्ञापने सामर्थ्यविशेष चात्मपदस्य प्रतीत्य आत्मपदमाश्रितम् ऐतरेयोपनिषदि प्रथममेवात्मषट्के इति तत्त्वदर्शनेतिहाससरणिमाश्रित्य निश्चीयते । एषोपनिषद्धि सर्वोपनिषदा मध्ये प्रथमंमुदितेति वैदिकवाङ्मयस्य ऐतिहासिकपौर्वापर्यमङ्गीकुर्वाणैरैतिहासिकैः स्वीकरणीयमेव । अस्या चोपनिषदि मन्त्रब्राह्मणात्मकवेदेषु समुद्भूतस्तत्त्वविचारपरिणतिक्रमः पुरुषप्राणसंज्ञाद्वयमङ्गीकृत्य प्रागल्भ्यमुपगतस्तत्संज्ञाद्वयं पुनरुपेक्ष्य स्वरसविशेषं प्रत्यभिज्ञाय आत्मपदमङ्गीकृत्य तत्त्वदर्शनप्रौढिं दधानः प्रथममस्यामुपनिषदि आविर्भूत इत्यत एषोपनिषत् सर्वोपनिषदामुपक्रमस्थानीयेत्यभ्युपगन्तव्यम् ।

तत्तद्वस्तुस्वरूपपरमात्मपदं सर्वनामानुकारि तदादिपदवत् तत्तद्बुद्धिस्थस्यार्थस्य वाचकमितिकृत्वा वस्तुनः परमार्थस्वरूपबोधनार्थमङ्गीकृतमुपनिषत्सु । किञ्च प्रतिक्षणविनाशिशरीरसंतानेऽन्वीयमानस्य चेतनस्य स्वातन्त्र्यशालिनो वस्तुनः अस्मदर्थस्य वाचकमात्मपदमस्ति इतिकृत्वा प्रतिक्षणविध्वंसिकार्यकारणप्रवाहे जगति अन्वीयमानस्य चेतनशक्तिरूपस्य सर्वथा स्वतन्त्रस्य परमार्थवस्तुस्वरूपस्य विश्वान्वयित्वद्योतनार्थमपि आत्मपदं सामञ्जस्येन प्रयोगमर्हतीत्यत उपनिषत्स्वङ्गीकृतम् ।

परमार्थवस्तु, भूतप्रपञ्चः पुरुषान्तः, व्यवहारप्रसिद्ध आत्मा मनुष्याख्यो जीवः, मुक्तश्चेति सिद्धान्तचतुष्टयमात्मविषयकमुपनिषत्सु अधीयते । केवलात्मज्ञानविधानार्थमुपनिषदा प्रारम्भ इति

आत्मविषयकं सिद्धान्तचतुष्टयम्, तत्र परमार्थवस्तुसिद्धान्तः

आत्मपदार्थं प्रथम निरूप्य तत्प्रतिपत्तिसौकर्याय व्याकृतनामरूपभेदवन्तं प्रपञ्चमनेकशब्दप्रत्ययगोचरं व्यावहारिकात्मपदविषयं पुरुषं मोक्षं च क्रमेण परस्तान्निरूपयिष्यामः । ऐतरेयोपनिषदि प्राणाख्य ब्रह्म एव एको देवः, एतस्यैव सर्वे देवा विभूतयः, स एव ज्ञानकर्मसमुच्चयसाधनेन प्राप्तव्यो देवताप्ययलक्षणः पुरुषार्थश्चेति प्रतिपाद्य शुद्धात्मज्ञानविधानार्थं परब्रह्मविषयकं निरूपणमुपक्रान्तम् '[6]आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् ' इति । अत्र क्रमेण आत्मतश्चतुर्लोकानामबादीना विश्वपुरुषस्य देवताना च सृष्टिरभिहिता । कार्यकारणात्मकस्य व्यक्ताव्यक्तस्य सर्वस्य

---

( १ ) ऐआ. २।४।३।१२ पृ. ५८५. ( २ ) तब्राउ. ३।७।१।१-३ पृ. १३६६. ( ३ ) तैउ. २।६ पृ. ७२०. ( ४ ) छाउ. ६।३।३ पृ. ८९६. ( ५ ) बृउ. २।५।१८ पृ. ११११. ( ६ ) ऐआ. २।४।१।१ पृ. ५८०.

यथार्थं रूपं परमार्थवस्तु अत्र प्रतिपिपादयिषितं न सृष्टिप्रपञ्चः। सृष्टिप्रपञ्चव्याख्यानं च वस्तुस्वरूपबोधानुग्रहायैवोपन्यस्तम्। किंच नात्र जगतः सृष्टेः प्रागेव आत्मा एक आसीत् नेदानीं सृष्टिकाले इति सूचयितुमिष्टम्। किन्तु इदंपदेन दृश्यं कार्यजात निर्दिश्य तस्यात्मरूपताकथनेन सृष्टिप्राक्कालिकीं स्थिति निरस्तभेदां निदर्शनविधया उपन्यस्य च सृष्टिकालेऽपि स एक एवेत्येव सूचितम्। अनयैव विधया सर्वाणि आद्यकारणादद्वयात् सृष्टेरुद्भवस्य प्रतिपादकानि वचनानि व्याख्यातव्यानि। विश्वकारणत्वेनोपलक्षित आत्मरूपः परमार्थः सृष्टिरूपोऽप्यस्ति मनुष्यरूपश्च पुंबीजस्त्रीगर्भाद्यवस्थासु प्रतीयमानोऽपि च भवति। तादृशश्च स नोपास्यो नापि विज्ञेय इति सूचयन्ती श्रुतिः सर्वात्मभावफलावाप्तिं च द्योतयन्ती उपास्यमात्मानं स्थूणानिखननन्यायेन प्रश्नपूर्वकं ज्ञापयति संसारादाजीवभावात् आत्मपद व्याविवृत्सुः— '[1]कोऽयमात्मेति वयमुपास्महे। कतरः स आत्मा' इत्यादिना। पूर्वं हि आत्मपदेन सांसारिक्यो विविधाः पुरुषस्यावस्था दर्शिताः। अनेन प्रश्नेन ताः सर्वा व्यावर्त्यन्ते। यदेव सृष्टिमूलं परमार्थवस्तु तदेव आध्यात्मिकार्थपरेण प्रज्ञानपदेन प्रदर्श्य आत्मज्ञानमुपसंहृतम्। दर्शनश्रवणगन्धग्रहणवचनरसनमननक्रियाकर्तृ स्वतन्त्रं प्रज्ञानाख्यमाध्यात्मिकमपि महाभूतादिस्थावरजङ्गमात्मकसृष्टिप्रतिष्ठाभूतं प्रेरकत्वेनाभिमतमिति दर्शितम्। कौषीतक्युपनिषदि एष एव प्रज्ञात्मेति निर्दिष्टः, परंतु तस्य प्राणपदाभिधेयत्व न व्यावर्तितम्। अत्र तु केवल प्रज्ञानपदमात्रप्रयोगेण तादृशी व्यावृत्तिः सूचितेत्येतत् उपनिषद्विचारसोपानोन्नतिविशेषमवगमयति। प्राणाद्भेदस्य सूचितत्वेऽपि मनसोऽतीतत्वं नात्र बुद्धावारोहतीति मनसोऽतीतत्वस्य बोधिनीनामुपनिषदाम् ऐतरेयोपनिषदुत्तरकालिकत्व ज्ञापयति। अन्यच्च '[2]यदेतद् हृदयं मनश्चैतत्...... सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति' इत्येव मनसा प्रज्ञानस्य एकत्वसंदेहमप्युपजनयति।

अथ छान्दोग्योपनिषदि च मनसः प्राणाच्चान्यः मनःप्राणयोरन्तर्यामीति आत्मा साक्षात् शब्दैः प्रतिपादितः। प्रथमं शाण्डिल्यविद्यायां संक्षेपेणोपनिषत्सारसंग्रहभूतायां निर्दिष्टमात्मतत्त्वम्। शाण्डिल्यविद्या च शतपथब्राह्मणेऽस्यामुपनिषदि च तात्पर्येणैकैव। छान्दोग्ये '[3]मनोमयः प्राणशरीरः ......एष म आत्माऽन्तर्हृदये' इत्यनेन मनःप्राणाभ्यां भेद उक्तः। शतपथब्राह्मणे च '[4]स आत्मानमुपासीत मनोमयं प्राणशरीर...स प्राणस्यात्मा। एष म आत्मा' इति विस्पष्टमेव प्राणाद्भेदोऽभिहितः। किंच अणीयसोऽणीयस्त्वं ज्यायसो ज्यायस्त्वं च विशेषतो निर्दिश्य तत्तव्द्यक्तभावानुरूपता व्यञ्जिता। अन्यच्च, सत्यसंकल्पः सर्वकर्मा सर्वकाम इत्याद्युक्त्वा अप्रतिहतेच्छाशक्तिरूपत्व प्रतिपादितम्।

आत्मनः स्वरूपलक्षणं त्रिधा दर्शित छान्दोग्ये विस्तरेण। भारूपः परं ज्योतिरिति, एकमेवाद्वितीय सदिति, भूमेति च। तत्र भारूपः परं ज्योतिः—'[5]अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु, इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' इति। चक्षुषोऽनुग्राहकमुष्णस्पर्शवन्तं भौतिकं प्रकाशं परिवर्जयितुं षष्ठाध्याये तेजआदिसृष्टिर्यस्माद्भवति तत् सदाख्यं तत्त्वम् आत्मेत्यभिहितम्। भौतिकतेजस्तत्त्वस्य आत्मत्वशङ्का तु उपर्युद्धृताद्वाक्यात्

(१) ऐआ. २।६।१।१–४ पृ. ५९२–९५. (२) ऐआ. २।६।१।२ पृ. ५९३. (३) छाउ. ३।१४।२–४ पृ. ८०९–१२. (४) शब्रा. १०।६।३।२ पृ. २६१. (५) छाउ. ३।१३।७ पृ. ८०५.

तदनुवर्तमानात्संदर्भाच्च दृढीभवति, तद्व्यपनयनार्थं षष्ठाध्यायः पठ्यते। षष्ठाध्यायस्य सप्तमाध्यायस्य चायमपरो विशेषः—चिन्त्यमान विश्वतत्त्वं सदिति भूमेति च निर्दिश्यते व्याख्यायते च, तत्परस्ताच्च विधिविशेषणतया आत्मपदं प्रयुज्यते इति नानार्थकात्मपदप्रयोगजन्यस्तत्त्वस्वरूपसंदेहः सदादिपदप्राधान्येन परमार्थं व्युत्पाद्य निवार्यते। '[1]ऐतदात्म्यमिदं सर्वम्। तत्सत्यम्। स आत्मा। तत्त्वमसि' इत्यत्र ऐतदात्म्यमितिपदान्तर्भूतमात्मपदं स्वरूपार्थकम्। ' स आत्मा ' इत्यनेन चोक्तसंदेहव्यपोहार्थमौपनिषदार्थपर्यवसायी आत्मशब्दः कृतः। मनःप्राणतेजसामन्तरङ्गरूपमेतत्तत्त्वमित्येतत् विस्पष्टं प्रतिपाद्यते— ' [2]अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम् ' इति। कार्यसृष्टेः कारणसदात्मकतामवधार्य नामरूपात्मकभेदव्याकरणात्मकसृष्टिकालेऽपि अद्वयत्वं साधितमत्र मृत्कार्ष्णायसन्यग्रोधबीजलवणखण्डदृष्टान्तैः। काष्ठाद्युपादानस्य रथकाराधीनत्व यथा तथा आद्यकारणस्योपादानकारणत्वे सति प्राप्तमन्याधीनत्वं भूमतत्त्वविवरणे अन्यवस्त्वभावमुपन्यस्य तस्य स्वमहिमप्रतिष्ठितत्वकथनेन पूर्णं स्वातन्त्र्यमवधारितम्— ' [3]यो वै भूमा तदमृतम्। अथ यदल्पं तन्मर्त्यम्। स भगवः कस्मिन् प्रतिष्ठित इति। स्वे महिम्नि, यदि वा न महिम्नीति ' इति। भूमतत्त्वस्य आत्मशब्दाभिधेयताया उपपत्तिमेषोपनिषत् स्वयं दर्शयतीति ऐतिहासिकविचारविकाससरणिमनुसदधानाना चेतश्चित्रीयते। तथाहि— ' [4]तस्य ह वा एतस्यैव पश्यत एव मन्वानस्यैव विजानतः, आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो नामाऽऽत्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेद सर्वमिति ' इति। ज्ञातुरभिन्नं परमार्थवस्तु, आत्मपद च ज्ञातृवाचकम्, इत्यत आत्मपदेन परमार्थवस्तु निर्दिश्य तस्मात् विश्वप्रपञ्चोऽभिहितोऽत्र। किंच परमार्थवस्तु दृश्यवस्तुजातस्य स्वरूपम्, आत्मपदं चोपरिष्टान्निर्दिष्टरीत्या स्वरूपवाचकम्, इत्यत आत्मपदेन सर्ववस्तुस्वरूपो भूमपदार्थो निरूपितोऽत्र। भूमपदार्थः सर्वात्मक इत्येतच्च भूमलक्षणे व्यवस्थापितम्, यथा— ' [5]यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ' इति।

बृहदारण्यकोपनिषदि आत्मपदार्थः परमार्थवस्तु अध्यात्मदर्शनप्रागल्भ्यपरिणतेः परमावधिं प्राप। तत्र हि य एव ज्योतिःस्वरूपो ज्ञातुरभिन्नोऽद्वयः परमार्थः छान्दोग्ये कथितः स एव अनन्यप्रकाश्यः स्वयंज्योतिः इत्येवं विस्पष्टं प्रतिपादितः। परमार्थवस्तुनः खलु स्वतःसिद्धता शब्दतोऽस्यामेवोपनिषदि प्रथममुद्घोष्यते। परमार्थवस्तुस्वरूप आत्मा प्रज्ञानरूप इति ऐतरेये कथितम्, ज्ञातुरभिन्न इति छान्दोग्ये उक्तम्, अत्र च ततोऽपि तस्य विशेषः स्वतःसिद्धतारूप उच्यते। तद्यथा— ' [6]अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इति। आत्मैवास्य ज्योतिर्भवतीति ' ' [7]अत्रायं पुरुषः स्वयं ज्योतिर्भवति ' ' [8]यद्वै तन्न

(१) छाउ. ६।८।७ पृ. ९१३. (२) छाउ. ६।८।६ पृ. ९०९. (३) छाउ. ७।२४।१ पृ. ९४४. (४) छाउ. ७।२६।१ पृ. ९४९. (५) छाउ. ७।२४।१ पृ. ९४३. (६) बृउ. ४।३।६ पृ. ११९२. (७) बृउ. ४।३।९ पृ. ११९७; ४।३।१४ पृ. १२०२. (८) बृउ. ४।३।३० पृ. १२१४.

विजानाति विजानन् वै तन्न विजानाति । न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ' '[1]सलिल एको द्रष्टाऽद्वैतो भवति ' '[2]येनेदं सर्वं विजानाति तं केन विजानीयात्......विज्ञातारमरे केन विजानीयादिति । उक्तानुशासनासि मैत्रेयि । एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ' इति । अनन्यप्रकाश्यत्व विस्पष्ट यथाऽत्राभिहितं तथा साक्षादपरोक्षत्वमप्युच्यते , यथा— '[3]यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरः । न दृष्टेर्द्रष्टारं पश्येः । न श्रुतेः श्रोतारं शृणुयाः । न मतेर्मन्तारं मन्वीथाः । न विज्ञातेर्विज्ञातारं विजानीयाः । एष त आत्मा सर्वान्तरः । अतोऽन्यदार्तम् ' इति ।

अन्यश्च आत्मविषयकः सिद्धान्तः आत्मनो निरुपाधिकप्रेमास्पदताविषयकः अन्यासूपनिषत्सु अनधिगतः प्रतिपाद्यतेऽत्र—— '[4]प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मा ' इति । एष एव विचारः मैत्रेयीब्राह्मणे[5] ' आत्मनस्तु कामाय सर्वं प्रियं भवति ' इत्येव विस्तरेणोपपादितः । निरुपाधिकप्रेमास्पदत्वं च तस्य आनन्दस्वरूपत्वात् । '[6]एषोऽस्य परम आनन्दः । एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति सम्राजे जनकाय अभयप्राप्त्यर्थमुपदेशात् ।

स्वतःसिद्धद्रष्टृरूपता परमानन्दता च परमार्थवस्तुनः उपपाद्य सर्ववेदान्तनिष्कर्षरूपं कैवल्यमपि एषोपनिषद्विशेषतयाऽभिदधाति । '[7]स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असङ्गो न हि सज्यते । असितो न व्यथते । न रिष्यति ' इति । असङ्गत्वकथनेन भगवद्गीतोपबृंहितस्यानासक्तियोगस्य बीजमुपक्षिप्तमत्र । ' नेति नेति ' इत्यनेन गूढतया द्योतितोऽर्थः गार्गीयाज्ञवल्क्यसंवादे ब्रह्मवित्परिषदि विशदतया व्याख्यायते, यथा—— '[8]स होवाच । एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति, अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यम् । न तदश्नाति किंचन । न तदश्नाति कश्चन ' '[9]तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ, अश्रुतं श्रोतृ, अमतं मन्तृ, अविज्ञातं विज्ञातृ । नान्यदतोऽस्ति द्रष्टृ । नान्यदतोऽस्ति श्रोतृ । नान्यदतोऽस्ति मन्तृ । नान्यदतोऽस्ति विज्ञातृ । एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ' इति । केवलात्मपरस्यास्य प्रतिपादनस्य घटकम् ' अमात्रमनन्तरमबाह्यम् ' इत्येवं वाक्यांशमादायैव तुरीयात्मतत्त्वप्रतिपादनपरा माण्डूक्योपनिषत् प्रवृत्तेत्यनुमातुं शक्यते । आत्मनः स्वप्रकाशता केवलता च बृहदारण्यकं विस्पष्टतया प्रतिपादयतीति बृहदारण्यकस्य इतराभ्य उपनिषद्भ्यो विशेष इति ज्ञातव्यम् ।

तैत्तिरीयोपनिषत् परमार्थवस्तुन आनन्दरूपता विज्ञानगुणादपि अन्तरङ्गतया प्रतिपादयतीत्येष विशेषोऽवधारणीयो भवति । तद्यथा—— '[10]तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः ' इति ।

---

( १ ) बृउ. ४।३।३२ पृ. १२१५. ( २ ) बृउ. ४।५।१५ पृ. १२६४, ६५. ( ३ ) बृउ. ३।४।२ पृ. ११३३. ( ४ ) बृउ. १।४।८ पृ. १०२७. ( ५ ) बृउ. २।४ पृ. १०९०–११०३; ४।५ पृ. १२५९–६५ ( ६ ) बृउ. ४।३।३२ पृ १२१५. ( ७ ) बृउ. ३।९।२६ पृ. ११७६; ४।२।४ पृ. ११८९; ४।४।२२ पृ. १२४७, ४।५।१५ पृ. १२६४. ( ८ ) बृउ. ३।८।८ पृ. ११५९. ( ९ ) बृउ. ३।८।११ पृ. ११६५. ( १० ) तैउ. २।५ पृ. ७१८.

किंच तत्र, आत्मत आकाशादिपञ्चभूतसृष्टिं क्रमेणोक्त्वा, अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया आत्मानो वर्णिताः। अस्मिन् क्रमे उत्तरः पूर्वस्यान्तरङ्गभूतः, इत्येवमपि तत्र सुनिश्चितम्। एतादृशपञ्चविधात्मस्वरूपव्याख्यानमप्यपरोऽस्या उपनिषदो विशेषोऽवधारणीयः।

अपरं च, आत्मनोऽसत्स्वरूपता असतश्च सद्रूपेण परिणतिः कथिता यथा—'[1]असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मान स्वयमकुरुत' इति। एतद्विरोधेन छान्दोग्ये '[2]कथमसतः सज्जायेतेति। सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यभिहितम्। एष विरोधः परिहृतो बृहदारण्यकेऽव्याकृतशब्दप्रयोगेण, यथा—'[3]तद्धेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यामेव व्याक्रियत, असौनामाऽयमिदरूप इति' इति। परस्परविरुद्धधर्मसवलित च वस्तु जगदिदमित्येवं तैत्तिरीयके प्रतिपादितम्। तच्च आत्मन एव एकस्य सदसदात्मकतामनुरुद्धय सम्यक् घटते। तदिदमुच्यते—'[4]स तपस्तप्त्वा, इद सर्वमसृजत, यदिद किंच। तत्सृष्ट्वा, तदेवानुप्राविशत्। तदनुप्रविश्य, सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्त च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्य चानृतं च। सत्यमभवत् यदिदं किंच। तत्सत्यमित्याचक्षते' इति।

काठकोपनिषदि च भोक्तुर्भिन्नः सर्वस्मात् परो गूढ आत्मा वर्णितः। भोक्तुरन्यत्वप्रदर्शनमत्र विशेषः। भोक्ता चात्र इन्द्रियमनःसयुक्त आत्मा इति व्याख्यातः। स च यथाकर्म यथाश्रुतं ताता योनिं प्रपद्यते। तस्यैव अन्तरात्मा व्यापकोऽलिङ्गः परमात्मा कथितः। तस्य च इन्द्रियादिभ्यः सर्वेभ्यः परत्व द्विवार पठित पाठभेदेन। तद्यथा—'[5]इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न पर किंचित् सा काष्ठा सा परा गतिः॥' इति। अत्रोक्तम् अर्थपदार्थं विहाय बुद्धिपदार्थं सत्त्वपदेनाभिधाय च पुनश्चैतदेव कथितम्। यथा—'[6]इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्। सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्॥ अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यं ज्ञात्वा मुच्यते जन्तुरमृतत्व च गच्छति॥' इति। अन्यच्चात्मविषयकं निरूपणमत्र पूर्वोदाहृतोपनिषदोऽनुसरति। सर्वतः परत्व परमार्थवस्तुभूतस्यात्मन इत्येषोऽपि विशेषोऽत्रावगन्तव्यः।

श्वेताश्वतरोपनिषदि तु त्रयः पदार्था भोक्तृभोग्यनियन्तृरूपा अजत्वेन निर्दिष्टाः। भोक्तुरात्मनः अनीशत्वमज्ञत्व च कथितम्। परमात्मा च देवपदेन विशेषतो निर्दिष्टः। भोग्यार्थयुक्ता प्रकृतिश्च मायाशब्देनाभिहिता। अजत्रयकथनेन पूर्वनिर्दिष्टाभिरुपनिषद्भिर्विरुद्धो विशेषोऽवगम्यतेऽत्र। परंतु '[7]त्रयं यदा विन्दते ब्रह्ममेतत्' इति ब्रह्मपदेन त्रयाणामप्यजाना निर्देशात् पूर्वोक्तोपनिषत्सु समर्थितस्य ब्रह्माद्वैतस्य च्छायामंशतो नैषोपनिषत् जहातीत्येवं भासते।

मैत्रायण्युपनिषदि तु अद्वैतवाद्युपनिषदामनुवादं कृत्वा [8]त्रिगुणभुक् निर्गुणो भोक्ता चेतन आत्मा वर्णितः। जीवात्मा च बद्धो भूतात्मपदेन व्याहृतः। इदं तु चिन्त्यम्, य एष अन्नमयादिरूपः पञ्चविध आत्मा तैत्तिरीयोपनिषद्यभिहितस्तस्य कार्यरूपतामेषोपनिषत्सूचयति आनन्द-

(१) तैउ. २।७ पृ. ७२५. (२) छाउ. ६।२।२ पृ. ८९०. (३) बृउ. १।४।७ पृ. १०२२. (४) तैउ. २।६ पृ. ७२०. (५) काउ. ३।१०, ११ पृ. १४१४. (६) काउ. ६।७,८ पृ. १४३५, ३६. (७) श्वेउ. १।९ पृ. १५८०. (८) मैउ. ६।१० पृ. १६६०. (९) मैउ. ३।१–५ पृ. १६५५–५६.

मयपर्यन्तस्य । तद्यथा— ' अन्नमात्मेत्युपासीत । इत्येवं ह्याह । अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते । अथान्यत्राप्युक्तम् । विश्वभृद्वै नामैषा तनूर्भगवतो विष्णोर्यदिदमन्नम् । प्राणो वा अन्नस्य रसः । मनः प्राणस्य । विज्ञान मनसः । आनन्दं विज्ञानस्येति ' इति ।

आत्मपदाभिधेयं परमार्थवस्तु निरूप्य, एतत्सिद्धान्तमाश्रित्य अर्थात्प्राप्तस्य आकाशादिसृष्टिरपि आत्मैवेति सिद्धान्तस्य कानिचित् प्रमाणान्युदाह्रियन्तेऽत्र । महैतरेयोपनिषदि आकाशादिमहाभूतानि पञ्चविध आत्मेति समुपवर्ण्य तेषामन्नत्वमन्नादत्वं च निरूप्य ओषधिवनस्पतीना प्राणभृता पुरुषस्य च क्रमेणोत्तरोत्तरं समधिकाविष्कृतात्मरूपता समर्थिता । तद्यथा— ' पृथिवी वायुराकाश आपो ज्योतींषीत्येष वा आत्मा...तस्मिन् योऽन्नं चान्नादं च वेद, अहास्मिन्नन्नादो जायते । भवत्यस्यान्नम् । आपश्च पृथिवी चान्नम् । एतन्मयानि ह्यन्नानि भवन्ति । ज्योतिश्च वायुश्चान्नादम् । एताभ्यां हीद सर्वमन्नमत्ति । आवपनमाकाशः । ...ओषधिवनस्पतयोऽन्नम् । प्राणभृतोऽन्नादम् । ...तेषा य उभयतोदन्ताः......तेऽन्नादाः । अन्नमितरे पशवः । ...... पुरुषे त्वेवाविस्तरामात्मा । स हि प्रज्ञानेन संपन्नतमः ' इति । अत्रेदं तत्त्वम्— भोक्तृभोग्योभयभावेन स्थित आत्मा मनुष्यपर्यन्तं क्रमेण परिणतः । मनुष्यरूपं च परिणतेः परमा सीमा, आत्मन उच्चतम आविष्कार इत्यभिप्रेतमत्र । लोकपालदेवता अपि अग्न्यादयः पुरुषरूपेण परिणता एव भोक्तृभाव भजन्ते नान्यथेत्यपि आत्मषट्के प्रतिपादितम् । इतराभ्य उपनिषद्भ्य इदमेव वैशिष्ट्यमस्या उपनिषदः यत् पुरुषः आत्मनः प्रशस्ततमा पूर्णाऽऽविष्कृतिरित्येतत्सिद्धान्तप्रतिपादनम् ।

आकाशादिसृष्टि· आत्मा

बृहदारण्यकेऽपि पतिपत्नीरूपमिथुनान्ता सृष्टिः आत्मैवेति प्रतिपादितम् । तत्र हि 'आत्मैवेदमग्र आसीत् पुरुषविधः । सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् ' इत्युपक्रम्य मिथुनसृष्टिं प्रतिपाद्य अन्तेऽभिहितम्— ' सोऽवेत् , अहं वाव सृष्टिरस्मि, अह हीद सर्वमसृक्षीति, ततः सृष्टिरभवत् ' इत्युक्तम् । मैत्रेयीब्राह्मणेऽपि विहितम्— ' इदं ब्रह्मेद क्षत्रमिमे लोका इमे देवा इमानि भूतानीद सर्वं यदयमात्मा ' इति ।

लोके आत्मशब्दप्रवृत्तिर्मनुष्ये मुख्या, तदनुसारेण वेदेपूपनिषत्सु चापि आत्मशब्दो मनुष्ये प्रयुज्यते । लोकप्रसिद्धात्मचिन्तनमाश्रित्य च कृतो विचार औपनिषदात्मनिश्चये पर्यवसन्नः । तथाच बृहदारण्यके— ' अथो अयं वा आत्मा सर्वेषा भूताना लोकः । स यज्जुहोति यद्यजते तेन देवाना लोकः । अथ यदनुब्रूते तेन ऋषीणाम् । अथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणाम् । अथ यन्मनुष्यान् वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणाम् । अथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयास्या पिपीलिकाभ्य उपजीवन्ति तेन तेषा लोकः । यथा ह वै स्वाय लोकायारिष्टिमिच्छेत्, एवं हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति । तद्वा एतद्विदित मीमांसितम् ' इति । अत्र धर्माधर्मयोरधिकृतः शरीरेन्द्रिय-

लोके आत्मपदाभिधेयो मनुष्यः, परमात्मप्राप्तिश्च मुक्तिरूपा

(१) मैउ. ६।१२, १३ पृ. १६६०. (२) ऐआ. २।३।१, २ पृ. ५५७–५९. (३) बृउ. १।४।१–५ पृ. १०१६–२०. (४) बृउ. २।४।६ पृ. १०९५; ४।५।७ पृ. १२६१. (५) बृउ. १।४।१६ पृ. १०४१.

संघातादिविशिष्टो मनुष्यः आत्मशब्देनोच्यते । तदुत्तरं च पुनः स एव कर्माधिकृतः आत्मशब्देनैवानूद्यते, यथा–'आत्मैवेदमग्र आसीदेक एव । सोऽकामयत, जाया मे स्यात्, अथ प्रजायेय, अथ वित्तं मे स्यात्, अथ कर्म कुर्वीयेति ' इति । मनःप्राणचक्षुःश्रोत्रवागादिरूपः कृत्स्नः पुरुष आत्मा, इत्येवं निश्चिनोतीयमुपनिषत् । यथा–– ' अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति, वदन् वाक्, पश्यश्चक्षुः, शृण्वन् श्रोत्रम्, मन्वानो मनः । तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेद । अकृत्स्नो ह्येषोऽत एकैकेन भवति । आत्मेत्येवोपासीत । अत्र ह्येते सर्वे एकं भवन्ति ' इति । कृत्स्नकर्मसंपत्तिर्येन स आत्मा इत्यर्थोऽत्र पर्यवस्यति । छान्दोग्ये चक्षुर्घ्राणवाक्श्रोत्रमनोरूप आत्मा उक्तः । तत्र न्यूनोक्तिपूरणाय एतत्प्रतिपादनमिति मन्तव्यम् ।

ऐतरेयोपनिषदि आत्मशब्देन पुरुषापरपर्यायं मनुष्यं निर्दिश्य तस्यैव पुत्रः आत्मशब्देन निर्दिष्टः । मरणोत्तरं स्वर्गे जन्म दधानः जीवात्मा च आत्मशब्देनैवाभिहितः । एतादृशः अर्थत्रयगोचर आत्मशब्दप्रयोगः एकस्मिन्नेव सदर्भे कृत उपलभ्यते । तद्यथा, रेतो निर्दिश्योच्यते–'आत्मन्येवात्मानं बिभर्ति ' इति । आत्मनि स्वस्मिन्, आत्मानं रेतःस्वरूप पुत्रं दधातीत्यर्थः । मनुष्यस्य पुत्ररूपेणास्मिन् लोकेऽवस्थानं मरणोत्तरं भवति । तदर्थमुच्यते–– 'सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते ' इति । अस्मिन् लोके पुण्यकर्मनिष्पादनार्थं स्वात्मा पुत्ररूपः स्वप्रतिनिधिः स्थाप्यते इत्यर्थः । मरणोत्तरं पुनर्जन्म दधाना पुरुषान्तर्गता जीवशक्तिरात्मशब्देनैवात्राभिहिता–– ' अथास्यायमितर आत्मा...... प्रैति । स इतः प्रयन्नेव पुनर्जायते ' इति ।

अस्यैव परलोकगामिनः वामदेववदात्मोपासनेन अमृतत्वं सपादयतः स्वरूपं व्याचष्टे– ' येन वा पश्यति, येन वा शृणोति, येन वा गन्धानाजिघ्रति, येन वा वाचं व्याकरोति, येन वा स्वादु चास्वादु च विजानाति । यदेतद्धृदयं मनश्चैतत् ' इति । स एष प्रज्ञात्मेति तत्रैवान्तेऽभिहितः ।

छान्दोग्ये च एष एव अशरीर आत्मेति निरूपितः । यथा–– ' मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना । तदस्यामृतस्याशरीरस्याऽऽत्मनोऽधिष्ठानम् । आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ' इति । पूर्वं प्रतिपादितः आत्मपदार्थः परमार्थवस्तु अत्र निरूपितः प्रियाप्रियाभ्यामस्पृष्टोऽशरीरश्च एक एव । परमार्थस्वरूपेण स्वस्याभिनिष्पत्तिश्च सशरीरस्य मनुष्याख्यस्यात्मनः परमं प्रयोजनम् । पुण्यलोकप्राप्तिश्चावरं प्रयोजनम् । आश्रमकर्मणा च पुण्यलोकसंपत्तिर्ब्रह्मनिष्ठया च स्वरूपनिष्पत्तिरूपा अमृतत्वप्राप्तिः । तदेतत् क्वचित् समुच्चित्योच्यते, अन्यत्र च विभज्य । समुच्चित्योक्तिर्यथा–– ' त्रयो धर्मस्कन्धाः । यज्ञोऽध्ययन दानमिति प्रथमः । तप एव द्वितीयः । ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् । सर्वे एते पुण्यलोका भवन्ति । ब्रह्मसंस्थोऽमृतत्वमेति ' इति । ब्रह्मनिष्ठा च स्वरूपाभिनिष्पत्तिप्रयोजना । स्वरूपाभिनिष्पत्तिश्च–– ' एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमपुरुषः ' इति । गार्ह-

(१) बृउ. १।४।१७ पृ. १०४२. (२) बृउ १।४।७ पृ. १०२२. (३) छाउ. ८।१२।४, ५. (४) ऐआ. २।५।१।१ पृ. ५८९. (५) ऐआ. २।५।१।४ पृ. ५९०. (६) ऐआ. २।५।१।४ पृ. ५९०. (७) ऐआ. २।६।१।२ पृ. ५९३. (८) छाउ. ८।१२।१ पृ. ९७७. (९) छाउ. २।२३।१ पृ. ७८६. (१०) छाउ. ८।१२।३ पृ. ९७९.

स्थ्याश्रमकर्माणि कुर्वन्नेव ब्रह्मसंपन्नो भवतीति छान्दोग्ये उपसंहृतम् । यथा— 'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेण, अभिसमावृत्य, कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य, अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः । स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते । न च पुनरावर्तते न च पुनरावर्तते ' इति । ब्रह्मलोकश्चात्र न सापेक्षनित्यो विवक्षितो यः कर्मिणा श्रेष्ठ प्रयोजनम्, किंतु परमार्थवस्तु आत्मैव, अस्मिन्नेवाध्याये पूर्वमेतादृशब्रह्मलोकव्याख्यानात् । तद्यथा — 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय । नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम् । सर्वे पाप्मानोऽतो निवर्तन्ते । अपहतपाप्मा ह्येष ब्रह्मलोकः ' इति । यद्यप्यस्मिन् संदर्भे ' तद्य एवैत ब्रह्मलोक ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः ' इत्यनेन ब्रह्मचर्यमेव ईदृग् ब्रह्मलोकसाधनमिति निर्धारणात् गार्हस्थ्यनिवृत्तिर्नियमेनापेक्ष्यते इति वक्तव्यं भवति, तथापि तत्रैव परस्तात् यजनसत्रादीनामपि ब्रह्मचर्यपदार्थतया निर्दिष्टत्वात् गार्हस्थ्यव्यावृत्तिः प्राप्ताऽपि निवार्यते इत्यपि वक्तुं शक्यम् ।

बृहदारण्यके तु पारिव्राज्यम् एषणात्रयसंन्यासरूपं विहितं ब्रह्मात्मसंपत्तये । तद्यथा— ' स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु । य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते । ...... स न साधुना कर्मणा भूयान् । नो एवासाधुना कनीयान् । एष सर्वेश्वरः । ......तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन । एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजा न कामयन्ते । किं प्रजया करिष्यामो येषां नोऽयमात्माऽय लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति । या ह्येव पुत्रैषणा सा वित्तैषणा । या वित्तैषणा सा लोकैषणा । उभे ह्येते एषणे एव भवतः ' इत्यादिषु वाक्येषु पापपुण्यकरणसाधनमात्मज्ञान ससंन्यासं विधीयते । यद्यपि यज्ञादीन्यप्यत्रोपदिष्टानि तथापि निवृत्तैषणस्यैवाधिकार दर्शयत्येषा श्रुतिः ' तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति । सर्वमात्मान पश्यति । नैनं पाप्मा तरति । सर्वं पाप्मान तरति । नैनं पाप्मा तपति । सर्वं पाप्मान तपति । विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति । एष ब्रह्मलोकः सम्राट्' इति । पारिव्राज्यविधानं प्राचीनासूपनिषत्सु बृहदारण्यकस्यैव विशेष इत्येवमैतिहासिका मन्वते । नारायणजाबालादीना सन्यासविधायकोपनिषदा तदपेक्षया आधुनिकत्वाभ्युपगमात् ।

परमानन्दरूपमोक्षसंपत्तिश्च आत्मकामस्याकामहतस्य निष्पापस्य श्रोत्रियस्यैव भवतीति आश्रमकर्मणः साक्षान्मोक्षसंबन्धो भवति । तथा चोक्तम्—' यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथैष एव परम आनन्दः । एष ब्रह्मलोकः सम्राट् । इति होवाच याज्ञवल्क्यः ' इति ।

काठकोपनिषच्च दुश्चरितनिवृत्तिं शान्तिं समाधिं च विज्ञानसहितमात्मप्राप्तिसाधनं बृहदारण्यकवदेव कथयति । तत्र च साक्षात्कारसाधनन्यूनतापूर्तये परमात्मकृत वरणमधिकमपि साधनमु-

( १ ) छाउ. ८।१५।१ पृ. ९८४. ( २ ) छाउ. ८।४।१ पृ. ९६३. ( ३ ) छाउ. ८।४।३ पृ. ९६४. ( ४ ) बृउ. ४।४।२२ पृ. १२४६, ४७. ( ५ ) बृउ. ४।४।२३ पृ. १२५५. ( ६ ) बृउ. ४।३।३३ पृ. १२१६.

पदिशति '[1] नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ' इति । समाधिसाधनं च योगमपि विदधाति–'[2] यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमा गतिम् ॥ ता योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ' इति ।

श्वेताश्वतरोपनिषच्च पूर्वोक्तानि साधनानि योगविधियुक्तान्यनूद्य साख्ययोग भक्तिं देवप्रसादं च साधनत्वेन परिगणयति—'[3] तत्कारणं साख्ययोगाधिगम्य ज्ञात्वा देव मुच्यते सर्वपाशैः ' '[4] तपःप्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ' '[5] यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ' इति । तथाच छान्दोग्ये आश्रमकर्मसहितं बृहदारण्यके संन्यासयोगयुक्तं काठके समाधियोगविशिष्ट श्वेताश्वतरोपनिषदि च देवभक्तिप्रभावितमात्मदर्शन मोक्षाय भवतीति निश्चीयते ।

उपनिषच्छीलिनस्तु पाश्चात्यविद्वांसः एवमाक्षिपन्ति—उपनिषदः परमार्थसत्यपराः नात्मशुद्धिसाधन परमनीतीत्यपरपर्याय धर्म परमार्थप्रधानसाधनतया प्रतिपादयितुमीहन्ते इति । सत्यसाक्षात्कारविवक्षयैवोपनिषदा प्रवृत्तिरिति । उपनिषदो हि बौद्धिकविचारप्रधाना बुद्धिवृद्धिकारिण्यो न व्यपगतकल्मषं सर्वभूतसुहृद्भावं नीत्यन्तरङ्गभूत प्रधानतात्पर्येणोपदिशन्ति सत्यसाक्षात्कारं परमार्थं मन्वानाः । एष पाश्चात्यानामाक्षेपश्च एकमेव प्रमाणमधिष्ठाय समुद्भूतोऽस्ति कौषीतक्युपनिषद्गतम् । तद्यथा– '[6] स यो मा विजानीयात्, नास्य केन च कर्मणा लोको मीयते । न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया । नास्य पापं चन चक्रुषो मुखान्नील वेतीति ' इति । अत्र आत्मज्ञस्य पापाचरणेऽपि दोषाभाव उक्तः । अन्यत्र च पुण्यपापोभयतरणमात्मज्ञस्य कथितमिति । एष आक्षेपः उपनिषदुक्तबन्धमोक्षव्यवस्थाकारणविचारविरोधात् पूर्वोक्तप्रमाणैर्निरस्तो भवति । एष आक्षेपश्च क्वाचित्कमापवादिकमुदाहरणमनुरुध्य कृतः औचित्यं न लभते । औत्सर्गिकं विचारप्रवाहमनुसृत्यावधारितः सामान्यनिर्णय एव हि सिद्धान्तपदवीं भजते । किंच उपर्युद्धृतं कौषीतकिवचनं नात्मसाक्षात्कारसाधनचर्चाप्रवाहगतमस्ति, किंतु ज्ञानविध्यनुगते प्रशंसार्थवादे पतति । अन्यच्च, कामाभिभूतस्यैव चेतसः पापप्रवर्तकत्वम्, कामयमानस्य च कामहतस्य नास्ति विशुद्धात्मसाक्षात्कारस्याशेति उपनिषदा निष्कर्षो नापह्नोतु शक्यते इति दूरत एव पाश्चात्यविदुषामाक्षेपः प्रतिक्षिप्तो भवतीति ।

यदेव परमार्थसत्यमात्मपदेन प्रतिपिपादयिषितं तदेवोपनिषत्सु विश्वचैतन्यशक्तिपरेण ब्रह्मपदेनाप्यभिधीयते—'[7] प्रज्ञानं ब्रह्म ' '[8] स एतमेव पुरुषं ब्रह्म ततममपश्यत् ' '[9] एष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' '[10] तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् । अयमात्मा ब्रह्म सर्वानुभूः । इत्यनुशासनम् ' इत्यादिभिर्ब्रह्मात्मत्वप्रतिज्ञानात् ।

ब्रह्मशब्दस्य विश्वचैतन्यशक्तिबोधनपर्यन्तं विचारविकासक्रमः

---

( १ ) काउ. २।२३ पृ. १४०७, ८. ( २ ) काउ. ६।१०, ११ पृ. १४३६, ३७. ( ३ ) श्वेउ. ६।१३ पृ. १६२३. ( ४ ) श्वेउ. ६।२१ पृ. १६२६. ( ५ ) श्वेउ. ६।२३ पृ. १६२८. ( ६ ) कौउ. ३।१ पृ. ६५८. ( ७ ) ऐआ. २।६।१।३ पृ. ५९४. ( ८ ) ऐआ. २।४।३।१३ पृ. ५८६. ( ९ ) छाउ. ८।३।४ पृ. ९६१. ( १० ) बृउ. २।५।१९ पृ. ११११,१२.

ब्रह्मपदस्य च नपुंसकलिङ्गस्य विश्वचैतन्याद्वयशक्तिबोधकतापर्यन्तं परिणतिरुपनिषत्पूर्वाथर्वणसूक्तेषु तैत्तिरीयादिब्राह्मणेषु च निर्दिष्टोपलभ्यते । अद्वितीयविश्वशक्तिपराणि ब्रह्मसूक्तानि चत्वारि शौनकीयाथर्वसंहिताया पठ्यन्ते—[1]ब्रह्मपुराख्यशरीररचनान्वेषणपरम्, [2]विश्वशरीरिस्कम्भात्मकब्रह्मपरम्, [3]ज्येष्ठब्रह्मसूक्तम्, [4]पुरुषब्रह्मसूक्त चेति । तत्र हि प्रश्नपूर्वक ब्रह्मसिद्धान्तो व्यवस्थापित:–‘[5]केनेय भूमिर्विहिता केन द्यौरुत्तरा हिता । केनेदमूर्ध्वं तिर्यक्चान्तरिक्ष व्यचो हितम् ॥ ब्रह्मणा भूमिर्विहिता ब्रह्म द्यौरुत्तरा हिता । ब्रह्मेदमूर्ध्वं तिर्यक्चान्तरिक्षं व्यचो हितम् ॥’ इति। सर्वाधारं स्कम्भ वर्णयित्वा तस्मै विश्वरूपब्रह्मत्वेन नमस्करोति—‘[6]यस्य भूमि: प्रमाऽन्तरिक्षमुतोदरम् । दिवं यश्चक्रे मूर्धान तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥’ इत्यादि । ब्रह्मण आत्मस्थता च दर्शयति—‘[7]पुण्डरीक नवद्वार त्रिभिर्गुणेभिरावृतम् । तस्मिन् यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदु: ॥’ इति । विशेषतश्च पैप्पलादाथर्वसंहिताया पठितस्य [8]ब्रह्मसूक्तस्य ‘ब्रह्म दासा ब्रह्म दाशा ब्रह्मेमे कितवा उत । स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान् ॥’ इत्येतं मन्त्रमभिप्रेत्य ‘अंशो [9]नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके’ इत्येतद्ब्रह्मसूत्र बादरायणेन प्रणीतमिति तदीयशाकररामानुजीयभाष्याभ्या परिज्ञायते । तैत्तिरीयब्राह्मणमपि एतद्ब्रह्मसूक्तानुसारिणं ब्रह्मपदार्थं वर्णयति—‘[10]ब्रह्म विश्वमिद जगत्’ ‘ब्रह्मैव भूताना ज्येष्ठम्’ इत्येवंप्रकारेण । तत्रैव च ‘[11]किंस्विद्वनं क उ स वृक्ष आसीत्, यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तत्, यदध्यतिष्ठद्भुवनानि धारयन् ॥’ इति ऋग्वेदस्थास्यवामीयसूक्तोत्थापितं प्रश्नं पाठभेदेनोपन्यस्य ब्रह्मवादपरमुत्तरं प्रोक्तम्— ‘ब्रह्म वनं ब्रह्म स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वः ब्रह्माध्यतिष्ठद्भुवनानि धारयन् ॥’ इति । शतपथब्राह्मणेऽपि ‘[12]सत्यं ब्रह्मेत्युपासीत’ इत्येवमादिशाण्डिल्यविद्या प्रतिपादिता । सृष्टिरप्यस्मिन् ब्राह्मणे नपुसकलिङ्गब्रह्मपदाभिधेयात्तत्त्वात् प्रतिपादिता—‘[13]ब्रह्म वा इदमग्र आसीत् । तद्देवानसृजत’ इत्यादि । तत्रैव नामरूपात्मकत्वं ब्रह्मणः कथयित्वा देवानामम‍ृतत्वप्राप्तिः ब्रह्मनिमित्ता कथिता । गोपथब्राह्मणेऽपि एवमेव सृष्ट्यादिभूत ब्रह्म वर्णितम्— ‘ओ [14]ब्रह्म ह वा इदमग्र आसीत् स्वयं त्वेकमेव’ इति ।

नपुंसकलिङ्गं ब्रह्मपदं ऋग्वेदमारभ्य शतपथब्राह्मणपर्यन्तं विश्वचैतन्यशक्तिरूपेऽर्थे पुल्लिङ्गब्रह्मपदव्यवधानमन्तरेणैव परिणतमैतिहासिकपरंपरयेत्येव निश्चिनुमः । तथाहि—पवित्रसामर्थ्यशालि स्तोत्रमित्यर्थे ब्रह्मपदं प्रयुज्यमानमुपलभ्यते बहुवारम् । स्तोत्रेण हि स्तूयमानेन स्वर्गभागिनो देवाः मर्त्यलोके निवसन्तं यजमानं प्रति यज्ञे संनिहिता भवन्ति स्तोत्रबलप्रभाविताः । देवेभ्य उत्साहप्रदानेन स्तोत्र भक्तानुग्रहार्थं तान् प्रवर्तयति, युद्धे विजिगीषवे यजमानाय शौर्योत्तेजनेन साहाय्यकरणे देवान्

---

( १ ) असं. १०।२ पृ. २४४–४६. ( २ ) असं. १०।७ पृ. २४६–४८. ( ३ ) असं. १०।८ पृ. २४८–५१. ( ४ ) असं. ११।१० पृ. ३०७–१३. ( ५ ) असं. १०।२।२४, २५ पृ. २४५. ( ६ ) असं. १०।७।३२ पृ. २४८. ( ७ ) असं. १०।८।४३ पृ. २५१. ( ८ ) पैसं. ८।९ पृ. २५१, ५२. ( ९ ) ब्रसू. २।३।४३. ( १० ) तैब्रा. २।८।८।९ पृ. २५८, ५९. ( ११ ) तैब्रा. २।८।९।६ पृ. २५९. ( १२ ) शब्रा. १०।६।३ पृ. २६१. ( १३ ) शब्रा. ११।२।३।१–६ पृ. ३०१, २. ( १४ ) गोब्रा. १।१।१ पृ. ३०३.

स्तोत्रमेव प्रवर्तयति, शत्रून् रोगान् पापानि च परिभवत् स्तोत्रं भक्तं रक्षति, इत्येवंविधं ब्रह्मपदाभिधेयस्य स्तोत्रस्य सामर्थ्यं ऋग्वेदे पदेपदे वर्ण्यते ।

ब्रह्मपदं बृहिधातोर्व्युत्पन्नं वृद्धिकरशक्त्यर्थकं भवति। अस्मादेवार्थात् महिमेत्येष अर्थस्तस्य पर्यवसितः। देवमहिमपराणि स्तोत्राण्यपि परंपरया ब्रह्मपदभागीनि ऋग्वेदकाले जातानि। प्रतिपाद्यपरं पदं प्रतिपादकवाक्यपरमपि भवतीति प्रसिद्धं लोके। बृहिधातुना निष्पन्नमर्थमनुसधायैव ऋग्वेदे स्तोत्र ब्रह्मशब्दबोधितं देवाना वृद्धिकरं पोषकं च देवेभ्यः सामर्थ्यप्रदं च इत्येवं वर्णनं क्रियमाण सम्यगुपपादयितुं शक्यते । ऋषिर्हि गौतमः इन्द्रं सबोध्य वदति— '[1]ब्रह्मा चकार वर्धनम्' इति । ब्रह्मा स्तोता वर्धनं तव वृद्धिकरं स्तोत्रं चकार अनेन सूक्तेन कृतवानित्यर्थः। इन्द्राग्निसोमोषोवरुणमित्ररुद्राश्विब्रह्मणस्पत्यादीना ब्रह्माख्यं स्तोत्र वर्धनं भवति इत्येवं वर्णयन्त्यः [2]ऋचः स्वयमेव जिज्ञासुभिर्द्रष्टव्याः। इन्द्रस्य अश्वाश्च रथवहनकर्मणि स्तोत्रप्रेरिताः प्रवर्तन्ते इति '[3]ब्रह्मयुजः' इति विशेषणेन ते विशेष्यन्ते। इन्द्रो हि '[4]ब्रह्मजूतस्तन्वा वावृधानः' द्यावापृथिव्यौ व्याप्नोति। मन्त्रसामर्थ्यादेव स '[5]रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्व परि स्वाम्'। ब्रह्मणस्पतेः पराक्रमकारणं शौर्यं ब्रह्ममूलकमित्युच्यते—'[6]तद्देवाना देवतमाय कर्त्वमश्रथ्नन् दृळ्हाव्रदन्त वीळिता। उद्गा आजदभिनद् ब्रह्मणा वलमगूहत्तमो व्यचक्षयत् स्वः॥' देवाना इन्द्रादीनां मध्ये देवतमाय अतिशयेन दानादिगुणयुक्ताय, षष्ठ्यर्थे चतुर्थी, ईदृशस्य ब्रह्मणस्पतेः, तत् कर्त्वं कर्म, किम्, दृळ्हा दृढानि पर्वतादीनि, अश्रथ्नन् श्रथितानि विश्लिष्टान्यभवन्, तथा वीळिता वीळितानि दृढीकृतानि वृक्षादीनि, अव्रदन्त मृदून्यभवन्, गाः उदाजत् देवान् प्रति उदगमयत्, तथा ब्रह्मणा आत्मीयेन मन्त्रेण, वल असुरं, अभिनत् मन्त्रसामर्थ्येनाभैत्सीत्, तमः ध्वान्तं, अगूहत् अदृश्यमकरोत्, स्वः आदित्यं, व्यचक्षयत् अदर्शयत् इत्यर्थः—इति। एतैः प्रमाणैः ब्रह्मपदप्रतिपाद्य स्तोत्रं देवानामपि बलप्रदानेन पोषणेन च महिमकरमित्येषोऽभिप्रायः ऋग्वेदे ब्रह्मपदसंदर्भे भूय उपलभ्यते । ततश्च ऋग्वेदे देवेभ्योऽप्यधिकमहिमशालिनी स्तोत्रशक्तिः ब्रह्मपदेन बुध्यमाना औपनिषदब्रह्मपदार्थबीजभाव दधातीति निश्चयः कर्तुं शक्यते।

पवित्रशक्तिमत्स्तोत्रपरं ब्रह्मपदं वेदवाचकमपि ऋग्वेद एव अभवत्, वेदव्रतचारिणः प्रथमाश्रमिणः ब्रह्मचारिपदेन निर्देशात् '[7]ब्रह्मचारी चरति' इति। स्तोत्रपरस्य वेदपरत्वपर्यवसान तु स्तोत्राणा वेदत्वादुपपद्यते। ऋग्वेदगतं देवमहिमकारिस्तोत्रपरं ब्रह्मपदं मनसि निधाय ब्रह्मचारिसूक्तम् अथर्ववेदे पठितं ब्रह्मचारिणो विश्वधारणसामर्थ्यं विस्तरेण स्तौति। तत्र ह्युक्तम्—'[8]पृथक् सर्वे प्राजापत्याः प्राणानात्मसु बिभ्रति। तान् सर्वान् ब्रह्म रक्षति ब्रह्मचारिण्याभृतम्॥' इति। तत्रैव चाग्रे ब्रह्मचारी सर्वदेवाश्रय इति वर्ण्यते—'[9]ब्रह्मचारी ब्रह्म भ्राजद्बिभर्ति तस्मिन् देवा अधि विश्वे समोताः' इति। वेदात्मकस्य शब्दब्रह्मणः सर्वदेवाश्रयत्वं ऋग्वेदे वर्ण्यमानं दृश्यते—'[11]ऋचो

---

(१) ऋसं. १।८०।१. (२) ऋसं. १।९३।६; १।१२४।१३; २।१९।१; २।३९।८; ३।३२।२; ३।३४।१, ३।५१।१२; ५।७३।१०; ६।२०।३; ६।२३।५,६; १०।५।४. (३) ऋसं. १।८२।६; १।८४।३; ३।३५।४; ८।१।२४. (४) ऋसं. ३।३४।१. (५) ऋसं. ३।५३।८ पृ. ५२. (६) ऋसं. २।२४।३ पृ. १९१. (७) ऋसं. १०।१०९।५. (८) असं. ११।७ पृ. ४२१–२६. (९) असं. ११।७।२२ पृ. ४२५. (१०) असं. ११।७।२४ पृ. ४२५. (११) ऋसं. १।१६४।३९ पृ. २२३.

अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ' इति । अत्र ऋगक्षरमेव परम व्योम सर्वदेवानामधिष्ठानमित्यभिहितम् । ब्रह्मपदं वेदपरमिति ब्राह्मणेषु साक्षात् निर्दिश्यमानं पश्यामः, यथा—'ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः । सर्वा गतिर्याजुषी हैव शश्वत् । सर्वं तेजः सामरूप्यं ह शश्वत् । सर्वं हेदं ब्रह्मणा हैव सृष्टम् ॥' 'ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव विद्या ' 'अष्टाक्षरं वै ब्रह्म, ऋगित्येकमक्षरम्, यजुरिति द्वे, सामेति द्वे, अथ यदतोऽन्यद् ब्रह्मैव तत् ' इति । अत एव ब्रह्मयज्ञशब्देन वेदपठनं शतपथब्राह्मणे विहितमस्ति । वेदस्य च विश्वशक्तिरूपत्वमुपर्युद्धृततैत्तिरीय-ब्राह्मणेऽप्यवधृतमस्तीत्यनुसंधेयम् ।

देवधारकशक्तिमत् वेदशब्दात्मकं ब्रह्म सूक्ष्मकल्पनया विश्वचैतन्यशक्तिरूपेणावधृतमुपनिषत्पूर्ववेदेष्विति विचारपरिणतिक्रम उपपद्यते । अत एव ब्रह्मपराणि अथर्ववेदसूक्तानि औपनिषद-ब्रह्मविचारप्रस्तावनामारचयन्तीति संबन्धो निश्चयगोचरो भवति । परमार्थवस्तुबोधकात्मपदसमानार्थता तु ब्रह्मपदस्य उपनिषद्भिरेव विस्पष्टतयाऽङ्गीकृता । आत्मपदेन हि परमार्थवस्तुबोधनम् उपनिषद्भिरेव प्रथममुपक्रान्तमिति । विश्वचैतन्यशक्तिर्ब्रह्म परमार्थवस्तुरूप आत्मा इत्युभयपदयोः सगमनमेकार्थे उपनिषत्स्वेव संभवति । ततः पूर्वमात्मपदस्य क्वचिदेव परमार्थपरतया व्यवहरणात् ।

ब्रह्मात्मत्वनिश्चयनेन वेदान्तैर्देवदास्यान्मोचितः पुरुषः स्वातन्त्र्यस्य परमं महिमानं प्रापितः 'ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेत् । अहं ब्रह्मास्मीति ।......तदिदमप्येतर्हि य एवं वेद, अहं ब्रह्मास्मीति, स इदं सर्वं भवति । तस्य ह न देवाश्चन अभूत्या ईशते ' इति ।

एवं पुरुषप्राणात्मब्रह्मपदानामैतिहासिकप्रणाल्या प्रतिपाद्यार्थविकासक्रमोऽयमुपपादितो दार्शनिकतत्त्वेतिहासस्य भागभूतो विचारविकासाय भवेदिति निवेद्य विरम्यते ।

**लक्ष्मणशास्त्री जोशी**

(१) तैब्रा. ३।१२।९।१,२ पृ. ४९३. (२) शब्रा ६।१।१।१० पृ. २९३. (३) शब्रा. १०।२।४।६. (४) शब्रा. ११।५।७. (५) बृउ. १।४।१० पृ. १०२९, ३०.

# उपनिषत्काण्डस्य प्रथमभागस्य रचनास्वरूपं स्थलनिर्देशपाठभेदपद्धतिश्च

(१) प्रसिद्धेषु वेदान्तोपनिषत्सु यदध्यात्मदर्शनं यद्ब्रह्मदर्शनं यो वा तत्संगतो विषयविमर्शश्चाधिगम्यते तत्सदृशस्तन्मूलरूपस्तद्बीजभूतो वा तत्त्वप्रपञ्चः उपनिषत्पूर्वेषु कर्मविद्यात्वेनाभ्युपगतेष्वपि मन्त्रब्राह्मणेषु महता विस्तरेण समुपलभ्यते । तस्य चोपनिषत्पूर्ववैदिकतत्त्वदर्शनस्य सग्रहोऽद्यावधि न कैश्चिदपि साकल्येन कृतः । वयं प्र. .गे त सार्वभौम संग्रहं प्रदर्शयामः । अस्यैव संग्रहस्य 'मन्त्रब्राह्मणोपनिषत्' इति संज्ञाऽस्माभिः कृता । यत उपनिषद्रूपाणां मन्त्राणा ब्राह्मणानां च सर्वेषु वेदेषूपलभ्यमानानामयं संग्रहः ।

(२) मूलवचनसमनन्तरं व्याकरणं पदार्थवाक्यार्थव्यतिरिक्त विवरणं च वर्जयित्वा सायणमहीधरादीना टीकाना संग्रहः कृतः ।

(३) विषयनिर्देशः सूक्ष्माक्षरैः मूलवचनस्योपरितने प्रदेशे कृतः ।

(४) मन्त्रब्राह्मणोपनिषद्गतसहिताब्राह्मणारण्यकवचनाना संग्रहः ऋग्वेदयजुर्वेदसामवेदाथर्ववेदेतिप्रसिद्धक्रममनादृत्य ऐतिहासिकक्रममनुसृत्य कृतः ।

(५) मूलवचनं स्थूलाक्षरैः, भाष्य मध्यमाक्षरैः, स्थलनिर्देशपाठभेदादिकं, विशेषटिप्पणी, ग्रन्थनामानि च सूक्ष्माक्षरैः सूक्ष्मकालाक्षरैश्च मुद्रितानि ।

(६) मूलग्रन्थो व्याख्यानसहितो रेखया मर्यादितः । तदुत्तर विशेषटिप्पणी, तदुत्तर च स्थलनिर्देशाः पाठभेदाश्च द्रष्टव्याः ।

(७) स्थलनिर्देशाः पाठभेदाश्च यद्वचनान्यवलम्बन्ते तेषु एकादिसख्याङ्का मुद्रिताः । त एव सख्याङ्का अधस्तात्परामृष्टाः (    ) एतच्चिह्नेनावकृष्य । यथा– (१) ऋसं. १।५९।२. (पृ. २ स्तम्भः २ )

(८) संगृहीताना संहिताब्राह्मणारण्यकाना नामधेयानि प्रत्याहाररूपेण अक्षरगौरवभयान्निर्दिष्टानि । यथा— ऋग्वेदसंहिता = ऋसं., तैत्तिरीयसंहिता = तैसं.

(९) प्रथमं प्रत्याहाररूपग्रन्थसंज्ञास्तदुत्तरं स्थलनिर्देशाः पाठभेदाश्चेत्यनुक्रमः । अनेकस्थलनिर्देशा एकग्रन्थान्तर्गताः , एतद्विरामचिह्नेन विभेदिताः । ग्रन्थभेदे ; एतच्चिह्नेन व्यवस्था कृता । समाप्तौ अवसानचिह्नं मुद्रितम् । यथा– (२) ऋसं. ३।९।९, १०।५२।६, शुसं. ३३।७, तैब्रा. २।७।१२।२ त्री सह (त्रीषह) न्यसा (न्यषा). (पृ. ९ स्तम्भ. १)

(१०) कानिचिद्वचनानि ऋग्वेदादौ पूर्वग्रन्थ उपलभ्यमानान्यपि तैत्तिरीयसंहितादेरुत्तरग्रन्थादुद्धृतानि, उत्तरग्रन्थीयप्रसङ्गेनाकाङ्क्षितत्वात् । यथा— ' युजे वा ब्रह्म पूर्व्यं ' इत्यय मन्त्रः ऋग्वेदे उपलभ्यमानोऽपि तैत्तिरीयसहितायाः समुद्धृतः, सवितृदेवताकत्वात्तैत्तिरीयसहितायां, ऋग्वेदे तथात्वनिश्चायकप्रमाणाभावाच्च । परन्तु इदमत्रावबोद्धव्य, स्थलनिर्देशक्रमस्तत्रापि ऋग्वेदादिरूप एव कृतः ।

(११) पाठभेदाश्च मूलवचनानां न व्याख्यानानां सगृहीताः ।

(१२) यस्य मूलस्य पाठभेदस्तन्मूल (    ) कंसचिह्नाद्बहिः दत्त्वा कंसचिह्नोदरे पाठभेदो निर्दिष्टः । यथा– कासं. १६।२ नृणा नृपते (नृभ्यो नृमणो). (पृ ५ स्तम्भः १)

(१३) यस्मिन् ग्रन्थे केवलपूर्वार्धस्य उत्तरार्धस्यैव वा स्थलनिर्देशः कर्तव्यस्तत्र स्थलनिर्देशात्पर ' पू. ' 'उत्त.' इति निर्देशः कृतः । यथा— तैसं ५।६।१।१ तन्वोप (तनुवोप) पू, ५।६।१।१ घृत (मधु) उत्त. (पृ. १५६ स्तम्भ १)

(१४) यत्र पूर्वार्धः उत्तरार्धो वा अनेकपाठसंयुतस्तत्र ' पूर्वार्धे ' ' उत्तरार्धे ' इति वा निर्दिश्य

तदुत्तर कंसचिह्नोदरे संपूर्णः पूर्वार्धः उत्तरार्धो वा पाठभेदमयः पठितः । यथा— ताब्रा. १२।१३।३२ पूर्वार्धे ( यस्मादन्यो न परो अस्ति जातो य आबभूव भुवनानि विश्वाः ). (पृ. २०१ स्तम्भः २ ). तैब्रा. २।८।१४ उत्तरार्धे ( स नो ददातु द्रविणं सुवीर्यम् । रायस्पोषं विष्यतु नाभिमस्मे ). ( पृ. २०० स्तम्भः २ )

(१५) यत्र संपूर्णः श्लोकः परिच्छेदो वा पाठभेदमयस्तत्र श्लोकं परिच्छेद वा अनिर्दिश्यैव कंसचिह्नोदरे पाठभेदमयः सपूर्णः श्लोकः परिच्छेदो वा समुद्धृतः। यथा— तैसं. ३।१।११।४ ( असितवर्णा हरयः सुपर्णा मिहो वसाना दिवमुत्पतन्ति । त आववृत्रन्त्सदनानि कृत्वाऽऽदित्पृथिवी घृतैर्व्युद्यते ॥ ). ( पृ. २२७ स्तम्भः २ )

(१६) पूर्वोद्धृतग्रन्थन उत्तरोद्धृतग्रन्थस्य पाठभेदसाम्ये उत्तरग्रन्थोद्धारसमनन्तर ' अमुकवत् ' इति निर्दिष्टम् । अंशेन साम्य चेत् ' शेष अमुकवत् ' इति निर्दिष्टम् । यथा— शुसं १६।५ मैसंवत्. मैसं. २।९।२ ( २०, २१ ) मृडयाति ( मृडयातु ) शेषं कासंवत् ( पृ. १३५ स्तम्भः १, २ ).

(१७) यत्र अधिकांशरूपः पाठभेदो निर्देष्टुमिष्टस्तत्र अधिकचिह्नं + कृत्वा कंसचिह्नोदरे अधिकांशरूपः पाठभेदः प्रदर्शितः । यथा— शुसं ५।१'२ पासुरे+ ( स्वाहा ). ( पृ. ८७ स्तम्भः १ )

(१८) यदि मूलादर्शवचनापेक्षया कस्मिंश्चित्पाठे न्यूनता निर्देष्टुमिष्टा तदा यावान् न्यूनांशः स कंसोदरे निर्दिश्य तत्पश्चात् ० एतादृशं चिह्न कृतम् । तावानंशो नास्तीति तदर्थः । यथा— असं. १।६।२ ( आपश्च विश्वभेषजीः० ). ( पृ. १५५ स्तम्भ. २ )

(१९) एकग्रन्थस्था बहवः स्थलनिर्देशा यत्र, तत्र पाठभेदस्थले : एतच्चिह्नेन पूर्वस्थलनिर्देशविच्छेदो दर्शितः ।

(२०) एकस्मिन् परिच्छेदे यदा समानपदस्यावृत्तिः पाठभेदश्च प्रत्यावृत्ति अनुवर्तते तत्रैकवारं पाठभेदो दर्शितः ।

(२१) यत्र पारिच्छेदांशो विस्तृतः पाठभेदमयस्तत्र तदंशस्य आद्यन्तौ ...... एतादृशचिह्नगर्भौ दर्शितौ, न सपूर्णोऽश उद्धृतः । यथा --- यदो ...... यजत्र ( यत्पर्वतेष्वोषधीष्वप्सु ). ( पृ. ९ स्तम्भः २ )

(२२) प्रातिशाख्यभेदप्रयुक्ताः पाठभेदा नोद्धृताः। यथा—ईळे-ईडे, मीळ्हुषे–मीढुषे इ.

(२३) आदर्शवचनपाठापेक्षया भाष्यीयपाठोऽन्यश्चेत् स नोद्धृतः । एतादृशान्युदाहरणानि अथर्ववेदे अनेकवार समुपलभ्यन्ते।

(२४) यत्र अथर्ववेदसहितायाः वचनमुद्धृतमस्ति तत्र श्री. शंकर पाण्डुरङ्ग पण्डित इत्येतैः मुद्रितस्य ग्रन्थस्य स्थलं निर्दिष्टमस्ति ।

पं. सातवळेकरैः मुद्रितायाः काठकसंहितायाः मैत्रायणीयसंहितायाश्च स्थलनिर्देशोऽस्माभिः कृतः ।

# मन्त्रब्राह्मणोपनिषदि संगृहीतग्रन्थपरिचयः

| क्रमांकः | ग्रन्थः | संक्षेपः | ग्रन्थप्रकाशनादिस्थानम् |
|---|---|---|---|
| १ | ऋग्वेदसंहिता | ऋसं. | (1) Vaidik Samshodhan Mandal, Poona; (2) F. Max Muller ( 2nd edition); (3) Swadhyaya Mandal, Aundh. |
| २ | ऋग्वेदसंहिता-खिलानि | ऋसं. (खिल.) | Vaidik Samshodhan Mandal, Poona. |
| ३ | अथर्ववेदसंहिता ( शौनक ) | असं. | (1) Shankar Pandurang Pandit, Bombay; (2) Swadhyaya Mandal, Aundh. |
| ४ | पैप्पलादसंहिता ( अथर्ववेदीया ) | पैसं. | Dr. Raghuvira, M. A., Ph. D., Lahore. |
| ५ | सामवेदसंहिता | सासं. | Swadhyaya Mandal, Aundh. |
| ६ | तैत्तिरीयसंहिता | तैसं. | Anandashram, Poona. |
| ७ | काठकसंहिता | कासं. | (1) Dr Leopold Von Schroeder, Leipzig; (2) Swadhyaya Mandal, Aundh. |
| ८ | कपिष्ठलसंहिता | कसं. | Dr. Raghuvira, M. A., Ph. D., Lahore. |
| ९ | मैत्रायणीयसंहिता | मैसं. | (1) Dr. Leopold Von Schroeder, Leipzig; (2) Swadhyaya Mandal, Aundh. |
| १० | शुक्लयजुर्वेदमाध्यन्दिनसंहिता | शुसं. | (1) Nirnayasagar Press, Bombay; (2) Swadhyaya Mandal, Aundh. |
| ११ | शुक्लयजुर्वेदकाण्वसंहिता | शुसं.(काण्व.) | Swadhyaya Mandal, Aundh. |
| १२ | ऐतरेयब्राह्मणम् | ऐब्रा. | Anandashram, Poona. |
| १३ | शाङ्खायनब्राह्मणम् | शाब्रा. | " " |
| १४ | ताण्ड्यब्राह्मणम् | ताब्रा. | Asiatic Society of Bengal, Calcutta. |
| १५ | जैमिनीयब्राह्मणम् | जैब्रा. | Dr. Raghuvira, M. A., Ph D., Lahore. |
| १६ | तैत्तिरीयब्राह्मणम् | तैब्रा. | Anandashram, Poona. |
| १७ | कठब्राह्मणम् | कब्रा. | Meharchand Lachhmandas Sanskrit and Prakrit Series, Lahore. |
| १८ | शतपथब्राह्मणम् | शब्रा. | (1) Laxmi Venkateshwar Press, Bombay; (2) Dr. Albrecht Weber, Leipzig; (3) Vaidik Yantralaya, Ajmer. |

| क्रमांकः | ग्रन्थः | संक्षेपः | ग्रन्थप्रकाशनादिस्थानम् |
|---|---|---|---|
| १९ | षड्विंशब्राह्मणम् | षब्रा. | Jivananda Vidyasagar, Calcutta. |
| २० | सामविधानब्राह्मणम् | साब्रा. | Shri Mahendranath Sarkar, Calcutta. |
| २१ | गोपथब्राह्मणम् | गोब्रा | Jivananda Vidyasagar, Calcutta. |
| २२ | ऐतरेयारण्यकम् | ऐआ. | Anandashram, Poona. |
| २३ | शाङ्खायनारण्यकम् | शाआ. | ,, ,, |
| २४ | तैत्तिरीयारण्यकम् | तैआ | ,, ,, |
| २५ | ऋग्वेदसंहितासायणभाष्यम् | ऋसा. | (1) Vaidik Samshodhan Mandal, Poona, (2) F Max Muller ( 2nd edition ). |
| २६ | अथर्ववेदसंहितासायणभाष्यम् | असा. | Shankar Pandurang Pandit, Bombay. |
| २७ | तैत्तिरीयसंहितासायणभाष्यम् | तैसा | Anandashram, Poona. |
| २८ | शुक्लयजुर्वेदमाध्यन्दिनसंहिताउवटभाष्यम् | शुउ. | Nirnayasagar Press, Bombay. |
| २९ | शुक्लयजुर्वेदमाध्यन्दिनसंहितामहीधरभाष्यम् | शुम. | ,, ,, ,, |
| ३० | ऐतरेयब्राह्मणसायणभाष्यम् | ऐब्रासा. | Anandashram, Poona. |
| ३१ | ताण्ड्यब्राह्मणसायणभाष्यम् | तासा | Asiatic Society of Bengal, Calcutta. |
| ३२ | तैत्तिरीयब्राह्मणसायणभाष्यम् | तैब्रासा | Anandashram, Poona |
| ३३ | शतपथब्राह्मणसायणभाष्यम् | शब्रासा | Laxmi Venkateshwar Press, Bombay. |
| ३४ | सामविधानब्राह्मणसायणभाष्यम् | सासा. | Shri Mahendranath Sarkar, Calcutta. |
| ३५ | ऐतरेयारण्यकसायणभाष्यम् | ऐआसा. | Anandashram, Poona. |
| ३६ | तैत्तिरीयारण्यकसायणभाष्यम् | तैआसा. | ,, ,, |
| ३७ | श्रीसूक्तविद्यारण्यभाष्यम् | विद्याआ. | Vaidik Samshodhan Mandal, Poona. |

# मन्त्रब्राह्मणोपनिषदि संगृहीतग्रन्थानां
## स्थलनिर्देशपद्धतिः

१ ऋग्वेदसंहिता— मण्डलम् । सूक्तम् । मन्त्रः.

२ ऋग्वेदसंहिता-खिलानि-- अध्यायः । खिलम् । मन्त्रः.

३ अथर्ववेदसंहिता— काण्डम् । सूक्तम् । मन्त्र..

४ पैप्पलादसंहिता-- ,, ,, ,,

५ सामवेदसंहिता— आर्चिकम् । अध्याय । खण्डः.

६ तैत्तिरीयसंहिता-- काण्डम् । प्रपाठक. । अनुवाक । पञ्चाशिका.

७ काठकसंहिता— स्थानकम् । अनुवाकः. ( पं. सातवळेकरप्रयुक्तो मन्त्राङ्कः ).

८ कपिष्ठलसंहिता-- अध्याय. । खण्डः .

९ मैत्रायणीयसंहिता-- काण्डम् । प्रपाठक. । अनुवाकः. ( पं. सातवळेकरप्रयुक्तो मन्त्राङ्कः ).

१० शुक्लयजुर्वेदमाध्यन्दिनसंहिता-- अध्यायः । मन्त्र..

११ शुक्लयजुर्वेदकाण्वसंहिता-- ,, ,,

१२ ऐतरेयब्राह्मणम्— अध्यायः । खण्ड. । कण्डिका. अथवा, पञ्चिका । खण्ड.

१३ शाङ्खायनब्राह्मणम्— अध्यायः । खण्ड

१४ ताण्ड्यब्राह्मणम्-- अध्यायः । खण्डः । कण्डिका.

१५ जैमिनीयब्राह्मणम्-- काण्डम् । खण्ड.

१६ तैत्तिरीयब्राह्मणम्— काण्डम् । प्रपाठकः । अनुवाक । दशकः.

१७ कठब्राह्मणम्-- ब्राह्मणम्. ( पत्रम् )

१८ शतपथब्राह्मणम्-- काण्डम् । अध्याय. । ब्राह्मणम् । कण्डिका.

१९ षड्विंशब्राह्मणम्-- प्रपाठकः । खण्ड..

२० सामविधानब्राह्मणम्— प्रपाठक । खण्डः । कण्डिका.

२१ गोपथब्राह्मणम्—भाग । प्रपाठकः । खण्ड..

२२ ऐतरेयारण्यकम्-- आरण्यकम् । अध्यायः । खण्ड. । कण्डिका.

२३ शाङ्खायनारण्यकम्-- अध्याय । खण्ड.

२४ तैत्तिरीयारण्यकम्-- प्रपाठकः । अनुवाक । दशक..

# ग्रन्थनामसंक्षेपाः

| | |
|---|---|
| असं. | अथर्ववेदसंहिता |
| असा. | अथर्ववेदसंहितासायणभाष्यम् |
| ऋसं. | ऋग्वेदसंहिता |
| ऋसं. ( खिल. ) | ऋग्वेदसंहिता–खिलानि |
| ऋसा. | ऋग्वेदसंहितासायणभाष्यम् |
| ऐआ. | ऐतरेयारण्यकम् |
| ऐआसा. | ऐतरेयारण्यकसायणभाष्यम् |
| ऐब्रा. | ऐतरेयब्राह्मणम् |
| ऐब्रासा. | ऐतरेयब्राह्मणसायणभाष्यम् |
| कब्रा. | कठब्राह्मणम् |
| कसं. | कपिष्ठलसंहिता |
| कासं. | काठकसंहिता |
| गोब्रा. | गोपथब्राह्मणम् |
| जैब्रा. | जैमिनीयब्राह्मणम् |
| ताब्रा. | ताण्ड्यब्राह्मणम् |
| तासा. | ताण्ड्यब्राह्मणसायणभाष्यम् |
| तैआ. | तैत्तिरीयारण्यकम् |
| तैआसा. | तैत्तिरीयारण्यकसायणभाष्यम् |
| तैब्रा. | तैत्तिरीयब्राह्मणम् |
| तैब्रासा. | तैत्तिरीयब्राह्मणसायणभाष्यम् |
| तैसं. | तैत्तिरीयसंहिता |
| तैसा. | तैत्तिरीयसंहितासायणभाष्यम् |
| पैसं. | पैप्पलादसंहिता |
| मैसं. | मैत्रायणीयसंहिता |
| विद्याभा. | श्रीसूक्तविद्यारण्यभाष्यम् |
| शब्रा. | शतपथब्राह्मणम् |
| शब्रासा. | शतपथब्राह्मणसायणभाष्यम् |
| शाआ. | शाङ्खायनारण्यकम् |
| शाब्रा. | शाङ्खायनब्राह्मणम् |
| शुउ. | शुक्लयजुर्वेदमाध्यन्दिनसंहिताउवट-भाष्यम् |
| शुम. | शुक्लयजुर्वेदमाध्यन्दिनसंहितामहीधरभाष्यम् |
| शुसं. | शुक्लयजुर्वेदमाध्यन्दिनसंहिता |
| शुसं. (काण्व). | शुक्लयजुर्वेदमाध्यन्दिनकाण्वसंहिता |
| षब्रा. | षड्विंशब्राह्मणम् |
| साब्रा. | सामविधानब्राह्मणम् |
| सासं. | सामवेदसंहिता |
| सासा. | सामविधानब्राह्मणसायणभाष्यम् |

# शुद्धिपत्रम्

| पृष्ठ | स्तम्भः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २ | १ | ५ | रूपणा | रूपाणा |
| ५ | ,, | ,, | अग्न्याधीनम् | अग्न्यधीनम् |
| ८ | २ | ३ | श्चक्रिरे | श्चक्रिरे |
| १५ | १ | ३० | मिन्द्रियमनसयो | मिन्द्रियमनसो |
| १६ | ,, | २४ | मर्ताश्च | मर्ताँश्च |
| १७ | ,, | ३२ | प्रणियन्ति | प्रीणयन्ति |
| १९ | २ | ३५ | कामाहु | काममाहु |
| २१ | ,, | १६ | पुष्टिर्यो | पुष्टिर्यो |
| २५ | १ | २६ | पशुभिर्यच्छा | पशुभिः। यच्छा |
| ,, | ,, | २७ | यच्छ घर्म | यच्छ। घर्म |
| ,, | २ | ३ | पशुभिर्यत् | पशुभिः। यत् |
| २६ | ,, | ५ | रजसा | रजसो |
| ३१ | १ | ५ | देवाः, | देवाः |
| ३२ | २ | २६ | | |
| ३३ | १ | ३२ | | |
| ,, | २ | १२ | | |
| ,, | ,, | ३४ | स्पृणाम्। एनं | स्पृणामेनं |
| ३४ | १ | ३० | | |
| ३५ | २ | ६ | | |
| ३६ | १ | १६ | | |
| ,, | २ | ११ | | |
| ३८ | १ | ३६ | | |
| ३३ | ,, | ८ | सदूदो | सूददो |
| ,, | २ | २३ | त्रिणि | त्रीणि |
| ३५ | १ | ३३ | श्छदोभि | श्छन्दोभि |
| ,, | २ | १ | छन्द्स्व | छन्दःस्व |
| ३७ | १ | ,, | भूतानि। | भूतानि |
| ,, | ,, | २ | देवाः। | देवाः |
| ,, | ,, | ३६ | मातृण्णे। | मातृण्णे |
| ,, | ,, | ,, | रिक्षं च | रिक्षं च। |
| ३७ | २ | २ | देवताः। | देवता |
| ,, | ,, | ,, | ज्योतिर्द्वा | ज्योतिः। द्वा |
| ,, | ,, | ,, | तॅव्याः। | तॅव्या |
| ,, | ,, | ३ | सदः। | सदः |
| ,, | ,, | ,, | चूडाः। | चूडाः |
| ,, | ,, | ५ | पृश्निः। | पृश्निः |
| ,, | ,, | ,, | त्रिंशी | त्रिंशी। |
| ,, | ,, | ६ | स्पृणायै। | स्पृणायै |
| ,, | ,, | ७ | मध्ये | मध्ये। |
| ,, | ,, | ९ | कामो वा। | कामः। |
| ४१ | १ | ३ | वेदाप | वेद। अप |
| ,, | ,, | २३ | ,, | ,, |
| ४३ | ,, | २४ | उक्, | उक्। |
| ४५ | २ | २७ | वरिवः | वरीयः |
| ४९ | १ | ,, | विश्वसा | विश्वासा |
| ५३ | २ | ८ | स्तवं | स्तवत् |
| ,, | ,, | १० | निद्रः | निन्द्रः |
| ६४ | ,, | १५ | भूमि | भूमि |
| ६८ | १ | ७ | रेतः; | रेतः, |
| ७० | ,, | ९ | ज्ञायेते | ज्ञायते |
| ,, | ,, | १२ | यस्तथौ | यस्तस्थौ |
| ७१ | ,, | ३१ | स्वः स्वर्ग | स्वः सर्वे |
| ७५ | २ | ६ | अरमाद्व | अस्माद्व |
| ७८ | १ | ८ | वीष्ट | वष्टि |
| ८६ | २ | २४ | आकाशे | आकाशश |
| ९१ | १ | ११ | विद्मः | विद्म |
| ९९ | २ | १० | अफलानि | अन्नफलानि |
| १०३ | १ | २५ | नर्योर्हि | नर्योर्हि |
| १०४ | ,, | ३० | अरम्णात् | +अरमयत् |
| १०६ | २ | ३४ | अीस्त | अस्ति |

| पृष्ठं | स्तम्भः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १०८ | १ | ३६ | ब्रह्मव | ब्रह्मैव |
| ११२ | २ | ३२. | मडले | मण्डले |
| ११४ | १ | ३४ | पुरुषः। | पुरुषः |
| ,, | २ | १० | मिथुनेन। | मिथुनेन |
| ११५ | १ | ३४ | गच्छतः। | गच्छतः |
| ११६ | २ | ३ | यदेक एव। | अथ यदेक एव |
| ११८ | १ | ७ | पर्णम्। | पर्णं |
| ,, | ,, | १७ | त्मैति। | त्मैति |
| ,, | ,, | २२ | अध्यात्म | अध्यात्मं |
| १२६ | २ | २६ | ईशनात् | ईशानात् |
| १२८ | १ | १६ | धयिते | धीयते |
| १३५ | २ | १ | सवाधिक्य | सर्वाधिक्यं |
| १३६ | १ | २८ | नीलाग्रीवा | नीलग्रीवा |
| १३८ | २ | १९ | मुव्यते | मुच्यते |
| १४६ | ,, | ३४ | सन्ये | सेन्यं |
| १४९ | ,, | ३० | (तेऽनोऽवन्तु०) | (ते नोऽवन्तु०) |
| १५० | १ | २० | ध्वमिति | ध्वमिति। |
| १५३ | २ | १७ | जूश्च तस्माद्यजुः। प्राण एव य | जूश्च। तस्माद्यजुः प्राण एव। य |
| ,, | ,, | २३ | क्षितम्। अन्नं | क्षितमन्नं |
| १५४ | १ | ३६ | म्रायते | म्रास्यते |
| १५५ | २ | ३२ | २।२३।२१ | १।२३।२१ |
| १५६ | ,, | ७ | वायार्णा | वार्याणां |
| १६१ | १ | ३० | पृष्ठ | षष्ठ |
| १८९ | ,, | २७ | हिसका | हिंसका |
| १९२ | १ | १९ | नृन् | नॄन् |
| १९७ | २ | ९ | ब्रह्मणा | ब्रह्मणः |
| २०६ | १ | २६ | मातॄन् | मातॄः |
| ,, | ,, | ३४ | गोचरं | गोचरः |
| २१८ | २ | २ | वृंष्टे | वृष्टे |
| ,, | ,, | १२ | हिंड्कार | हिङ्कार |
| २१९ | ,, | २६ | जविस्य | जीवस्य |
| २२६ | १ | ४ | वीविधे | विविधे |
| २४६ | ,, | २० | अदित्य | आदित्य |
| २६४ | २ | ४ | तादीक्षि | तादिक्षि |
| २६९ | १ | १८ | लोकीन्व | लोकान्वि |
| २७० | ,, | ७ | सप्त होता | सप्तहोता |
| २७२ | ,, | ८ | वर्तनानो | वर्तमानो |
| २८३ | ,, | ७ | ज्योतिभ्यो | ज्योतिर्भ्यो |
| ३०३ | ,, | १ | रूपाभ्यां | रूपाभ्यां |
| ३१० | ,, | १९ | स्माणत्प्रा | स्मात्प्राण |
| ३१७ | २ | २६ | श्रृण्वन्ति | शृण्वन्ति |
| ३२० | १ | १३ | तद्यकिं | तद्यत्कि |
| ३२१ | २ | ८ | मसदेघ | मसदेघ |
| ३२२ | १ | १४ | चक्षुः- | चक्षु- |
| ३२४ | ,, | ८ | क्षणना | क्षणेना |
| ३५१ | २ | ,, | तजः | तेजः |
| ३५७ | ,, | ७ | स्थान | स्थान |
| ३५९ | १ | २५ | स्तौत्रैः | स्तोत्रैः |
| ,, | २ | ३३ | असं· १०। | ऋस. १०। |
| ३६५ | ,, | ७ | सूक्तन | सूक्तेन |
| ३६७ | १ | ३३ | असं १०। | ऋसं. १०। |
| ३६९ | २ | १ | दवता | देवता |
| ३७३ | ,, | १५ | दुरित | दुरितं |
| ,, | ,, | २६ | त्वं | त्वां |
| ३८१ | १ | १७ | मुच्यत्ते | मुच्यते |
| ,, | ,, | २२ | मुच्यत्ते | मुच्यते |
| ३८५ | २ | २४ | प्रारप्रा | पारप्रा |
| ३८७ | १ | १८ | राचरै | राचैर |
| ३९० | २ | १ | पितापहा | पितामहा |
| ४०४ | ,, | १ | तस्मिन्नत | तस्मिन्नेत |
| ४०६ | ,, | १३ | एवं | एव |
| ४०८ | १ | २८ | भत्वा | भूत्वा |
| ४१९ | ,, | २९ | त्सत्यं॰ | त्सत्य॰ |
| ४४४ | ,, | १२ | नोच्छिष्ट | नोच्छिष्टं |
| ,, | २ | २७ | इत्यथः | इत्यर्थः |
| ४५४ | ,, | ३२ | मेष्ठ | मेष्ठि |
| ४५८ | ,, | २७ | शब्दाम्यां | शब्दाभ्यां |

| पृष्ठं | स्तम्भः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४६३ | १ | २३ | लक्ष | सहस्र |
| ,, | २ | ४ | छितन्तः | छितवन्तः |
| ४७० | ,, | २ | पुरुमे | पुरुषमे |
| ४७२ | ,, | २० | अधमा | अर्धमा |
| ४७८ | १ | ३ | मरग्ने | मग्नेर |
| ४९८ | २ | २९ | वासा | वासो |
| ५०८ | ,, | ३० | माक्रन्द्रो | माक्रन्दो |
| ५१३ | १ | १४ | कण | कर्ण |

---

# मन्त्रब्राह्मणोपनिषद्विषयानुक्रमणिका

अग्निः— ( पृ. १–४३ )

पृ. १ देव एव ऋत्विक् पुरोहितश्च; २ वैश्वानरो जनाधारः सर्वाग्निमूलं च; द्यावापृथिव्योः पतिः; सर्ववसूनामाधारः; नृतमः=पुरुषोत्तमः; ३ देवानां युद्धेन साहाय्यकर्ता मनुष्यराजश्च; दस्युहन्ता अपां वर्षिता, ४ विश्वकृष्टिः = सर्वजनात्मकः; भुवनानां राजा विश्वचक्षुः; सर्वव्यापकः; तत्पूजा सत्यफला; ५ देवानां मित्रवरुणार्यम्णां स्ववृत्त अग्न्यधीनम्; सर्वत्र द्युजलवनादिष्वाविर्भवनशीलः; होत्रादिऋत्विजः गृहपतिश्च स एव; ६ इन्द्रो विष्णुर्ब्रह्मा ब्रह्मणस्पतिश्च सः; वरुणो मित्रोऽर्यमांशश्च सः; त्वष्टा सर्वजनबलं च सः; रुद्रो मरुत्संघः पूषा च सः; ७ सविता भगश्च सः; विश्वपतिर्ज्ञानदः सर्वोत्तमश्च सः; स पिता भ्राता पुत्रः सखा च; ऋभुः प्रशस्तान्नपतिः यज्ञशिक्षयिता च सः; ८ अदितिर्भारतीळा सरस्वती च सः; सर्वश्रीणामाश्रयः, सर्वदेवमुख सः; देवानां मर्त्यानां च भोक्तृत्वकृत्; सर्वदेवैः समबलोऽधिकश्च; ९ स्तोतॄणां दातॄणां च श्रेष्ठलोकदः; सर्वदेवपूज्यः; सर्वेषां साक्षी सर्वव्यापकज्योतिश्च; १० स्वात्मतया साक्षात्कृतपरमात्मरूपः, ११ मनुष्यैः सर्वदा स्तोतव्यः, मर्त्येष्वाविष्टो महो देवः; १२ सर्वदेवमयः; १३ विश्वसृक् विश्वज्योतिश्च; १४ तमोनाशकः; अमृतरक्षिता उभयलोकस्थितो यज्ञवित्; १५ अमृत ज्योतिर्मर्त्येषु स्थितं तन्वा वर्धमानं च; सर्वदेवाभिलक्ष्यमिन्द्रियमनसयोरन्तर्ज्योतिः वाङ्मनसयोरगोचरश्च सः; १६ सर्वदेवनमस्योऽप्रमेयश्च, सर्वज्ञः; पापिनां हन्ता; १७ उपासकस्य तद्भावाविषयोऽद्वैतरूपेण; देवभक्तसंबन्धः; १८ विभुः, सर्वान्तरः, विश्ववित्, अमृतश्च; १९ बहुरूपैः कृत्स्नं जगदनुप्रविष्टः; विश्वभक्षकः दातृप्रतिग्रहीत्रादिरूपः कामस्वरूपश्च; २० मनःसवेद्यः; हविर्भोक्ता; सर्वान्तःसंचारी; सर्वमर्त्यहृत्सु प्रविष्टोऽमृतः; २२ दिव्यः सुपर्णः स्वर्गदः चिद्रूपश्च; २३ सर्वव्यापी विश्वेषामायुः स्वर्गस्य पन्थाश्च सः; २४ सत्पतिः वाचो मध्यमारूढश्च; सर्वदेवानां महिमकृत्; त्रैलोक्ये तत्रतत्र तस्य शिवास्तन्वः, महिमा, अनन्तं ज्योतिश्च; २५ विश्वदृक् विश्वदेवः; अग्नियजमानयोरैक्यम्; विभुवैश्वानरज्योतिषाऽद्वैतभावप्रार्थना, २६ चित्यः सावित्राग्निः परमात्मरूपः, सर्वदेवतामयः, अमृतत्वहेतुः, उपास्यश्च; २९ चित्याग्निश्छन्दोदेवतात्मकविराट्पुरुषः; ३० चित्याग्निः एकाक्षरात्मकं विश्वात्मकं च ब्रह्म; ३१ चित्याग्निर्वागात्मा, आदित्यात्मा, आदित्यपुरुषरूपोऽमृतः; ३८ वैश्वानरोऽग्निर्विश्वात्मा; ४२ आत्मा एव अत्ता, स एव च अग्निरूपः, अर्करूपः, उक्थरूपश्च.

इन्द्रः— ( पृ. ४४–६७ )

४४ विश्वव्यापकः, अनुपमेयः, अनन्तः, सर्वनियन्ता, स्वर्गपतिः, विभुश्च; ४५ महतामपि भयङ्करः, बलिष्ठः, विश्वनियन्ता, दानवहन्ता, विश्वकृत्, श्रद्धागम्यः, सर्वानुशास्ता, भक्तानुग्राहकः, पापानां अभक्तानामभिभविता, योद्धॄणामीश्वरः, विश्वस्य प्रतिमानम्; ४९ सोमोत्पादननदीप्रवर्तनादिकर्ममहिम्ना प्रशस्यः; सर्वेषां पृथक्कर्मकर्तॄणां कारयिता, प्रजानां धनविभागनियामकः, अन्नभोक्तृत्वप्रयोजकश्चेति प्रशस्यः; भक्तानुग्राहकः, विश्वेश्वरः, पृथिवीनदीसूर्यवनस्पत्योषधिकर्मकार्यप्रवर्तकः, दानवहन्ता, धनजिच्चेति प्रशस्यः; ५१ निराधारे आकाशे विश्वधारकः गृहनिर्माणकर्मसदृशं विश्वं सृजति; ५२ स्वतेजसा विश्वव्यापकः, स्वमायया विश्वनियन्ता च; सर्वरूपधरः सर्वगश्च; ५३ गूढस्थानस्थितः; स्वातन्त्र्येण सर्वेशिता सर्वोग्रदमनश्च, ५४ भक्तसखोऽभक्तत्यागी च; सर्वरूपधरः; त्रैलोक्यव्यापकः; विश्वसृक्, विश्वनियन्ता, अपारमहिमा, सर्वेभ्यो लोकेभ्य ओजसा महांश्च; ५५ सूर्यात्मा पूर्वज ऋषिः; ५६ बलेन तेजसा च त्रैलोक्य-

व्यापकः, सूर्यधारणेन जगद्धारकः, नक्षत्रादिजगद्विष्टम्भकश्च, बलप्रज्ञानादिप्रख्यापनेन वाग्भिः स्तोतव्यः; ५७ द्युपृथिवीविष्णुमित्रवरुणाः तद्यशः कीर्तयन्ति, दातृतमः, असहाय एव असुरहन्ता, सर्वप्रशस्ताना सर्वप्रशस्ताना च एक एवाधिकरणम्; ५८ प्राणिनामन्तःस्थितः प्राणः सः; द्युभूमिसूर्यादिभ्यो लोकेभ्यो देवेभ्यो मर्त्येभ्यश्चातिशायी; बलवत्तमः; धर्मकर्ता, विपश्चित्, विश्वदेवः, ज्योतिषां ज्योतिः, अगूढः, स्वर्गपतिः, पितृरूपश्च; ५९ स स्तोतव्यः यदि सत्यः; स सर्वेश्वरत्वेन स्वसत्ता प्रमाणयति; ६० देवानां रक्षिता, स्वयमकर्ता, मायी च, ६१ अनन्तमहिमयुक्तः, अनेकशरीरधारी, धनपतिश्च, ज्योतीरसस्थापकः; ६२ सर्वस्याक्षस्थानीयः, ईशानः, योगक्षेमदः, चक्षुषश्चक्षुश्च, ६३ सर्वद्रष्टा, महतामपि महान्, सूर्याग्न्यात्मकश्च; ६४ सूर्यधारकः, सर्वविभूतिरूपः ईश्वरः, ६५ आजानसर्वज्ञः श्येनः; ६६ सर्वेश्वरः, सर्वात्मा, सर्वरूपः, मातृपितृस्वरूपः; ६७ अकर्ता, मायी.

**सोमः— ( पृ. ६८–७३ )**

६८ ज्योतिर्जनकः, अमृतलब्धा, द्यावापृथिव्यन्तरिक्षाणा स्थापकः, गवादिषु रसस्य स्थापकः, धारकः, पोषकः, विज्ञाता, प्रकाशकः, व्यापकः, अविनश्वरबलः, विश्वस्य राजा, ज्योतिषा ज्योतिः, द्यावापृथिव्यग्निसूर्येन्द्रविष्ण्वादीना देवाना स्वर्गस्य मतीना च जनिता, अमृत, प्रजानां दिव्य रेतः, इन्द्रादिदेवतर्पकः, अशस्तिहा, दुरितनाशकः, विभूतिमत्सत्त्वात्मा, इन्द्रस्य ओजः, सूर्यस्य ज्योतिश्च.

**सोमापूषणौ— ( पृ. ७३–७४ )**

७३ सोमापूषणौ विश्वजननौ अमृतस्थान च; सोमः विश्वस्य जनित[illegible] [illegible] द्रष्टा.

**वरुणः— ( पृ. ७४–८६ )**

७४ अमूलेऽन्तरिक्षे स्थितः, सूर्यपथकृत्, पापमोचकः, नक्षत्रचन्द्रमसा प्रकाशनगमनादिव्रतानामधिष्ठाता; ७५ पक्षिपद–नौ–मास–वायुमार्ग–देवाना वेदिता, प्रजासु स्थितः, सम्राट्, सुक्रतुः, धृतव्रतः, प्रज्ञावद्दृष्टाद्भुतकर्मा; दुरितमोचनः, ऋतस्य धर्ता, सर्वस्य एक एव ईश्वरः; ७६ राजा त्रसदस्युः परमेश्वरं वरुण इन्द्रं चात्मत्वेनानुभवति; ७७ सूर्यार्थमाकाशस्य विस्तारयिता, अन्तरिक्षबलपयःक्रतुवह्निसूर्यसोमाना यथास्थानेषु व्यवस्थापकः, सर्वस्य राजा, जलजनयिता, कवितमः, मायी, जगतः परिच्छेत्ता, ७८ गुरुमित्रभ्रात्रादिसबन्धिपापनिवारकः; मिथ्याभिशसनाज्ञानकृतदुरितमोचनः; ७९ द्यावापृथिव्योः स्तम्भनः, सूर्यस्य नक्षत्राणा च प्रेरकः, भूमेर्विस्तारयिता, अनेनसः भक्तस्य ऋषेः दिदृक्षायाः अन्तर्वर्ति[illegible] समर्पिपयिषायाः समीपजिगमिषायाश्च विषयः, आ[illegible]न्ददश्च; पैत्र्यात्स्वकृताच्च पापात् मोचयिता; ८० विविधपापकारणमीमांसा; अपापेन परिचरणीयः सः कवितरः, योगक्षेमोपद्रवशमनः, धनदश्च; स्वान्तर्हितसर्वलोकः, सूर्यपथकृत्, जलजनकः, रात्रिकर्ता, वाय्वात्मा, द्यावापृथिव्योः सर्वस्थानेषु प्रियस्थितिः, मेधावी, शिक्षकः, सुपारक्षत्रः, सतः स्वामी, पापिनोऽप्यनुकम्पकः; ८२ मनुष्याणां रक्षकः, मायया विश्वधारकः, मनुष्यैरनुष्ठीयमानव्रतपतिः, दिशा भुवनानां च धर्ता, स्वर्गस्य कर्ता, गुह्यनाम्ना वेदिता, सर्वकाव्यानां नाभिरिवाश्रयः, ८३ देवानुष्ठेयव्रतः, समुद्ररूपः, तेजसा मायानिवारकः, तेजसा त्रिलोकव्यापी, द्यावापृथिव्योः स्तम्भनः; ८४ द्युस्तम्भः, पृथिवीकर्ता, सर्वभुवनाधिष्ठाता, अमृतगोप्ता, ऋतोर्बलस्य च वर्धनः; सर्वेषाम[illegible]ष्ठाता, समीपसाक्षी, स्थिरचरज्ञाता, सर्वगूढागूढचेष्टितद्रष्टा, कृत्स्नजगद्व्यापकः, जलनिलीनः, अनन्तवक्त्रनिग्राहकपाशधरः; ८६ अनन्तमहिमोपेतः, कपटजनभयङ्करः, अप्रमेयव्रतधरः, अद्वितीयसर्वज्ञः.

**विष्णुः— ( पृ. ८६–९३ )**

८६ रक्षकः, एक एव त्रिभिः पदैः त्रिलोकव्यापी, अनभिभवनीयः, धर्माधारः, चिन्तनीयस्तोतव्यवीर्यकर्मनामजन्मरूपः, लोकत्रयस्य एक एव स्रष्टा धारकश्च, सूरीणा दर्शनस्तवनविषयपरमपदः, मधुपूर्णाक्षीयमाणत्रिपदः, मर्त्यदृश्यपदद्वयः, अप्रमेयतृतीयपदः, भक्तभोग्यमधुनिष्यन्दिपरमपदः, नित्यतरुणः, अतिवृद्धः, अहिंसकः, स्वद्रष्टा, चक्रप्रवर्तकः, आकाशशरीरः, अनन्तमहिमगूढानेकरूपः, सर्वहितबुद्धिदः, मनुष्येभ्यो वासार्थ पृथिवीप्रदः, ९३ देवैर्यजनशीलैर्मानवैश्च कर्तव्या विष्ण्वात्मबुद्धिः.

**सविता— ( पृ. ९३–१२० )**

९३ स्थिरचरात्मा; ९४ देवैरपि अबाध्यव्रतः; विश्वरूपः, प्रजानां जनकः, भुवनपतिः; स्थिरः, सर्वेषां धर्ता, संवत्सररूपः, प्रजाजनकः; ९५ विश्वदृक्; धिया प्रेरयिता ध्यानविषयः; सर्वव्यापी, सर्वस्येशानः, प्राज्ञः, द्रष्टा च; ९६ देवानाममृतत्वं तदनुज्ञातं, जीवितप्रकाशकः, पातकनाशनः, विश्वधारककर्मानुशासकः, ९७ मनसः धिया च विषयः, सर्वकर्मविषयकप्रज्ञावान्, सर्वरूपधरः, सर्वेषां कल्याणकरः, स्वर्गद्रष्टा, देवानामग्रयायी, महिम्ना सर्वव्यापकः, सर्वकर्मणामनुज्ञापकश्च; ९८ सर्वप्रेरकः, श्रेष्ठवरणीयविविधसर्वधारकधनप्रदाता, स्वराट्, सर्वपातकनाशनः, विश्वदेवः, सत्पतिः, भद्रानुज्ञापकः, सत्यप्रेरकः; ९९ सर्वदेवस्तोतव्यः, अबाध्यव्रतः, गर्भेऽपत्यकर्ता; १०० सर्वदेवस्वामी, सर्वरूपः, देवाना यज्ञरूपः, वैश्वानरोऽग्निः दिवि स्थितः सूर्व एव, स च शरीररक्षकः, त्रैलोक्यविस्तारयिता, स्थावरजङ्गमजनयिता, उभयलोकस्थो देवः, सर्वस्य प्रत्यक्स्थितः; १०४ पृथिव्याः दिवश्च धर्ता, अन्तरिक्षस्य दोग्धा, विश्वस्य देवानां सुपर्णस्य च जन्मस्थानम्, १०५ विपश्चितामन्तःकरणगोचरः, स्वर्गप्रदाया वाचो मन्ता; १०६ यत् गुहास्थितं विश्वात्मकं परम अमृतधाम, तस्य द्रष्टा वेत्ता वेनः गन्धर्वः देवाना नामधारकः पितामहश्च; १०८ सर्वदेवस्थान, ऋततन्तुरूपः, अग्निस्वरूपः; १०९ इन्द्रमहेन्द्रलोकप्रजापतिविष्णुरूपः यज्ञभुक् च; ११० बुद्धिमनसा प्रेरकः, बुद्धिसंकल्पशोधकः; ११२ सर्वदेवात्मा आदित्यपुरुषः ब्रह्म; सूर्यमण्डलस्थपुरुषस्य शारीरहृदयाकाशस्थाक्षिपुरुषस्य च एकता, अमृतस्थः स एव मृत्युः, स प्राणः, सर्वभूतेष्वेक एव सः, स एव नानोपासकैरुपास्यो नानारूपैः; ११८ सावित्र्युपनिषत्.

**द्यावापृथिव्यौ— ( पृ. १२१–१२५ )**

१२१ अज्ञेयजनने, गर्भवत्प्राणिजातधारिण्यौ, अपापस्वर्गदाक्षीयमाणधनदे, देवजनन्यौ, अमृतधारिण्यौ, पितरौ सर्वेषाम्; १२४ सविता एव द्यावापृथिव्योर्द्रष्टा, द्यावापृथिव्यौ ऋतस्य सदने स्थिते भूतानां देवानां चाधारः, द्यौः पिता सर्वस्य.

**रुद्रः— ( पृ. १२५–१५१ )**

१२५ भिषक्तमः, द्वेषपातकरोगाणामपहर्ता, श्रिया सर्वश्रेष्ठः, भुवनस्येशानः, सर्वस्य रक्षकः, सत्पतिः, ज्ञाता च, १२८ अग्निरूपः, अग्निजलौषध्यादिषु स्थितः, विश्वकर्ता, भवात्मकः, शर्वात्मकः, भूतपतिः, पशुपतिः, सर्वव्यापकः, सर्वत्र सर्वदा सर्वाङ्गेषु नमस्यः आस्तिक्यबुद्ध्या रक्षणार्थम्; १३३ यष्टव्यः, देवासुरर्षिपूर्वजः, महादेवः, शिवः, १३४ रुद्रगौरीस्कन्ददन्तिब्रह्मविष्णुभानुचन्द्रवह्निध्यानसृष्टिरूपा देवा ध्येयाः, रुद्रः नमस्येषुधनुर्बाहुमन्युः, शिवेषुधिधनुरिषुधरः, निष्पापशिवतनुः, जगते आरोग्यसौमनस्यप्रदः, प्रथमो दैव्यो भिषक्, अहियातुधानीहन्ता, ताम्रारुणबभ्रुरूपधरः, सुमङ्गलः, मीढ्वान्, सर्वासु दिक्षु सहस्ररूपैः स्थितः, गोपालादिजनैः सर्वभूतैश्च दृष्टः, १३७ विश्वरूपधरः, सर्वकर्तृकर्मादिकारकात्मकोऽखिलस्वस्वामिसबन्धिस्वरूपः, पशुपतिपथपत्यन्नपतिपुष्टपतिजगत्पतिदिक्पतीत्यादिभावेन स्थितः, सेनागणव्रातसभास्तेनरथाश्वादितदधिष्ठातृसेनान्यादिरूपधरः, ब्रह्मराजन्यविट्सूतरथकारनिषादादिजातितत्सकरमूर्तिधरः, आसीनशयानस्वपज्जाग्रत्तिष्ठद्धावदाद्यवस्थः, महत्क्षुल्लकादिविरुद्धधर्मोपेतः, जलवायुभूकार्येषु तदात्मकत्वेन प्रविष्टः, शकरः, भवः, शर्वः, सहस्राक्षः, शिपिविष्टः, मीढुष्टमः, सोमः, शभुः; १४५ स्वस्य स्त्रीयाना च रक्षणार्थं प्रार्थनीयः शिवतनुधरः; १४७ द्युभूमिदिगन्तरिक्षभूगर्भवृक्षान्नजलतीर्थपथादिष्वनन्तरूपैः स्थितो रक्षणार्थं प्रार्थनीयः; १५० सहस्राक्षः, सहस्रपात्, भवशर्वपशुपत्युग्रदेवमहादेवरुद्रेशानाशनीत्यष्टनामा, अबग्निवाय्वोषधिवनस्पत्यादित्यचन्द्रमोऽन्नेन्द्रेत्यष्टमूर्तिः.

**वायुः— ( पृ. १५१–१५५ )**

१५१ वायुः देवानामात्मा; वायुः ब्रह्म विद्युद्वृष्टिचद्रमआदित्याग्नीनामन्तर्धानोद्भवाधिष्ठानम्; १५२ सर्वस्य जनकः, यजुःशब्दलक्षितः, आनन्दरूपं ज्येष्ठ ब्रह्म च वायुः.

**आपः— ( पृ. १५५–१६१ )**

१५५ सर्वभेषजस्थानं, सर्वदुरितनिवारिकाः, स्थिरचरजनित्र्यः, मातृतमाः, धनस्य जनानां च ईशित्र्यः,

वरुणाग्निविश्वदेवाना स्थानं वैश्वानरस्य च, अग्नेः सवितुश्च जन्मस्थानं, त्रैलोक्यनिवासिन्यः; १५७ विश्वस्योपादानकारण, प्रजापतेर्जनितुर्वायुरूपस्य स्थानम्; १५८ सर्वेषा लोकाना प्रतिष्ठा; प्रजापतेराविर्भावस्थानम्; १५९ अप्स्वेव विराड्रूपपुरुषस्योत्थान, आदित्यादीना देवानामसुराणा सर्वस्य च उत्पत्तिः; १६० प्रजापतेः सृष्टभूतेष्वनुप्रवेशः.

## विराट्— (पृ. १६१–१६४)

१६१ सलिलस्थानभूता, द्विवत्सजननी, कामधेनुः, माया, ब्रह्मणः पिता, यज्ञाधारः, विश्वविमर्शयित्री, उषसः स्वरूपेण स्थिता अदितिः; १६३ विराजः गार्हपत्याहवनीयदक्षिणाग्निसभासमित्यामन्त्रणेषु आक्रमणानि, देवमनुष्याणामुपजीवनस्य ज्ञात्री दात्री च; वनस्पतिपितृदेवमनुष्याणां जीवनं सा, असुरपितृमनुष्यसप्तर्षिदेवगन्धर्वाप्सरसा इतरजनसर्पाणा च उपजीवनदोग्ध्री.

## अदितिः— (पृ. १६४–१६६)

१६४ सर्वं खलु इद अदितिः; १६५ सत्यस्य पालयित्री, अविनश्वरी, सुव्रताना माता, द्युपृथिवीरूपा, अन्तरिक्षधारिणी, विश्वेषामाधारः माता च; देवजननी.

## रोहितः— (पृ. १६६–१७५)

१६६ जलादुद्गच्छन्, विश्वजनिता, राष्ट्रस्य तत्प्रविश्य धारकः, जननीषु स्थितगर्भरूपः, परमेष्ठी, विश्वस्य धारकः, देवेभ्योऽमृतदः, विश्वव्यापकः, कविः, यज्ञस्य जनिता मुख च, समितिषु उच्चस्थानदः, सर्वलोकेष्वन्तः स्थितः, सूनृतस्य राष्ट्रे स्थापकः, अग्निसूर्यव्यापकः, द्यावापृथिव्योर्विष्टम्भकः, देवाना सृष्टिकर्मणि प्रयोजकः, ब्रह्मरूपः, बहुजन्मा, यशःस्वरूपः, इहामुत्र वा स्थित्वा सर्वद्रष्टा, विश्वव्यापिनी समुद्रोद्गमस्थानं गौः सः, अमृतः, अमर्त्यः, परमे व्योम्नि स्थितः, सर्वभूतचक्षुः सूर्यः, प्राणिजातजन्मकारणयज्ञस्य यजमानः ऋषिः; १७० देवानामधिपतिः, सूर्यात्मकः, विश्वव्यापकः, द्यावापृथिव्योर्जनकः, विष्णुः, कालप्रजापतिरूपविभूतिधरः; १७२ द्यावापृथिव्योर्जनकः, भवनरूपवस्त्रधरः, वायुसमुद्रोद्गमस्थानं, जीवनमरणकारणं, भूताधारः, द्युपृथिवीसमुद्रेभ्यः प्राणापानदः, विराट्परमेष्ठिप्रजापतिवैश्वानराणामाश्रयः, षड्वीणा पञ्चदिशां चतुरपा चाधारः, अन्नपतिर्ब्रह्मणस्पतिर्भुवनपतिश्च, त्रयोदशमासकर्ता, ऋतस्य सदन, कश्यपः, बृहद्रथन्तरयोः प्रेरकः, बृहद्रथन्तररूपपक्षधरः, वरुणाग्निमित्रसवित्रिन्द्ररूपविभूतिः, सर्वदेववहः स्वर्गगः अतिविस्तीर्णपक्षः हंसः, विश्वजनकाग्निस्वरूपः, आदित्यवहनकारण यज्ञरूप बहुप्रकारमेक ज्योतिः, अजरं भुवनाश्रयरूपचक्रं, मातरिश्वरूपविभूतिः, ऋततन्तुज्ञः, पृथिवीसमुद्रस्थापकः, अग्निः, आत्मदः, सर्वस्य ईशानः; १७४ सविता महेन्द्रो धाता विधाता वायुरर्यमा वरुणो रुद्रो महादेवोऽग्निः सूर्यो महायमश्च स एव, स एक एव सर्वदेवानामेकत्वकरः, सर्वप्रजाद्रष्टा; द्वितीयत्वादिदशमत्वान्तसर्वसङ्ख्यारहितः, एकोऽद्वितीयः सर्वदेवाद्वैतस्थान, तादृशतज्ज्ञानेन कीर्तियशोब्राह्मणवर्चसान्नादिफललाभः; मृत्युरूपः अमृतरूपः रक्षःस्वरूपः रुद्रः वषट्कारश्च, यातूना सचन्द्रमसा नक्षत्राणा च प्रशास्ता, सर्वदेवानामद्वैतस्थानस्यैकस्य तस्य ज्ञानेन ब्रह्मादिस्वधान्ताना फलाना लाभः; १७५ अहोरात्र्यन्तरिक्षवायुद्युदिग्भूम्यग्न्यब्वृग्यज्ञाना जनकः तज्जन्यश्च, अपरिमिततनुधरः, पापभद्रपुरुषाणां हन्ता; 'विभुः प्रभुः महः सहः' इत्यादिरूपेणोपास्यः अमरत्वमृत्युतोऽतिशायी इन्द्रः; उरुः पृथुः इत्यादिरूपेणोपास्यः.

## कालः— (पृ. १७५–१८१)

१७५ अजरः, विपश्चिद्भिरारुह्यमाणः, सहस्राक्षः, विश्वव्यापकः, प्रथमदेवः, सूर्यरूपकुम्भाधारः तद्रूपश्च, सर्वेषां पिता पुत्रश्च, परम तेजः; १७७ सर्वस्य जनकः सर्वाधारश्च; १७८ मनःप्राणनामतपोज्येष्ठब्रह्मणामाश्रयः, सर्वस्येश्वरः, प्रजापतेः पिता, ब्रह्मरूपः, परमेष्ठिन आधारः, सर्वस्य प्रेरको जनक आश्रयश्च, सर्वस्य कारणं, सर्वनियामकः, परमो देवः; १७९ सर्वप्रमाणविषयः सवत्सरात्मा कालः आदित्यमण्डलोपाधिकः; १८० सर्वेषामणुमहता कालाना सगमः सः, अणुमहद्भिरुपाधिभिर्युक्तः प्रत्यक्षः, केवलः सत्त्वोपाधिरहितः अदृश्यः; कालस्य सहस्रविधता पुरुषरूपता च, १८१ केवलः भुवनपूषपश्वादित्यरहितः, सवत्सररूपः प्रत्यक्षः प्रियतमः.

त्वष्टा— ( पृ. १८१–१८२ )

१८१ प्राणिना विभागेन जनिता; १८२ सर्वेषु जननस्थानेषु स्थित्वा प्राणिरूपाणा विधाता.

धाता— ( पृ. १८२–१८३ )

१८२ सर्वस्येशानः, विश्वजनकः.

विश्वकर्मा— ( पृ. १८३–१८८ )

१८३ सर्वभूताना हवनकर्ता ऋषिः, पिता, अनादिव्यापकः, सर्वेषु प्रविष्टः, करणाधिकरणादिकारकरहितः सन् विभुः एक एव देवो द्यावाभूम्योर्जनकः प्रेरकश्च, उत्तममध्यमावमरूपशाली, वाचस्पतिः, विश्वशम्भुः, साधुकर्मा; १८५ मनसा द्यावापृथिव्योर्जनकः, ज्योतीरूपः, परमो द्रष्टा, एकोऽद्वैतः, देवाना नामधाता, अस्मत्पिता, सर्वज्ञः, भूतैर्जिज्ञास्यः, ऋषिभिः स्तोतव्यः, भूतजातस्य जनकः, द्युभूमिदेवासुरेभ्यः परः, विश्वबीज, अजः, देवाना सगमः, विश्वस्य नाभिः आधारश्च, विश्वस्य जनकः, स्तोतृभिरज्ञेयः.

ब्रह्मणस्पतिः— ( पृ. १८८–१९३ )

१८८ गणपतिः, कवीना कविः, ब्रह्मणा ज्येष्ठराजः, ब्रह्मणा जनिता, ऋतात्मकरथस्थाधिष्ठाता, जनाना सुमतिभिस्त्राता, पथिकृत्, ब्रह्मद्विषां देवनिन्दकाना अदेवमनसा च निबर्हणः, दृष्टवीर्यः, ऋतप्रजातः, सामपराणा रक्षकः, सूक्तस्य यन्ता; १९१ देवाना देवतमः, वयुनाना कर्ता, ऋतज्यमन्त्रधनुर्धरः, विभुः, सर्वदेवप्रतिनिधिः, सर्वपरिभूः, १९३ भक्तसखः; ऋजुरक्षकः; देवपिता.

प्रजापतिः— ( पृ. १९३–२०५ )

१९३ द्यावापृथिव्योः कुशलो जनकः धीमान् प्रेरकश्च; द्यावापृथिव्योर्धारकः, सूर्यवाताग्नीना कर्मकर्ता, मित्रावरुणयोः स्थाने स्थितः; १९४ सृष्टेः पूर्वभावी, हविषा यजनीयो जिज्ञास्यो देवः, हिरण्यगर्भः, भूतपतिः, द्युपृथिव्याकाशस्वर्गाणामाधारः, आत्मदो बलदो देवाना शास्ता सर्वेषामुपास्यः, अमृतमृत्युच्छायः, जगतो राजा, ईशानः, हिमवन्नदीसमुद्रपतिः, दिग्बाहुः, रक्षकः, विश्वगर्भधारिणीभ्योऽग्निजननीभ्योऽद्भ्यः समुद्भूतः, देवानामसुः, देवानामेकेश्वरः, अपां द्रष्टा, द्युपृथिव्यपां जनकः सत्यधर्मा एक एव विश्वव्यापकः प्रजापतिः; १९७ प्रथमोद्भूत ब्रह्म, देवाना जन्मज्ञः, बन्धुः, ब्रह्मणा त्रय्याख्यब्रह्मोद्धर्ता, द्यावापृथिव्योराधारः; १९९ वीर्येषु ज्येष्ठ भुजनक निरतम ब्रह्म, भूतप्रथमजो ब्रह्मा, २०० सत्यानृतरूपयोर्व्याकर्ता; सर्वस्यैको व्यापकः, ऋतस्य प्रथमजः, बृहन्, पुराणः, देवाना पिता, विश्वपतिः; २०१ सर्वेषा कर्मसु प्रवर्तकः; सर्वेभ्यः परः, सर्वेषु प्रविष्टः, यजमानरूपः; २०२ आदित्यरूपः, अपरिमितः; अनन्तः, परिमण्डलस्वरूपः आदित्यपृथिव्यादीना परिमण्डलत्व यदनुकृतिः, सर्वात्मकः, सर्वदेवस्वरूपः, सर्वादिः, यज्ञात्मकः सर्वात्मकश्च; २०३ विश्वशरीरी, २०४ ब्रह्मजः, मनोमयः, विश्वशरीरी, विश्वस्रष्टा.

परमात्मा— ( पृ. २०५–२७३ )

२०५ द्यावापृथिव्योर्जनकः कर्मवता श्रेष्ठः, २०६ भ्रातृत्रयमध्ये दृष्टः विश्पतिः, सर्वभुवनाधिष्ठानभूतमजरं सवत्सरस्वरूपम्, २०८ शरीरधरः प्राणरूपोऽशरीर आत्मा, देवाना गूढानि स्थानानि; षण्णा लोकानां धारकस्य अजस्य एकविधरूप जिज्ञास्यम्; २०९ द्यावापृथिव्योः पुत्रस्य आदित्यस्य गूढ पदम्; २१० षण्णा लोकाना एको धारकः, विश्वाधिष्ठानं ऋतस्य संवत्सररूपमजर चक्र, स एव संवत्सरः पिता सूर्योपाधिः; २१२ विस्मयजननी काचिद्गौः ( उषाः आहुतिः रश्मिसमूहः द्यौर्वा ? ); २१३ चिन्तनीयः अग्न्यादित्यात्मा एकः पिता, मनसः कारणं चिन्त्यम्; भोक्ता द्रष्टा च एकाश्रितः; २१४ विश्वस्य स्वामी प्रज्ञावान् अमृतभाजामाश्रयोऽत्र पुरुषे प्रविष्टः, २१५ पितृज्ञानादेव स्वादुफलभोगः, छन्दसा साम्ना च रहस्यज्ञानेनामृतत्वप्राप्तिः, तद्रहस्यं च; २१७ सुदोग्ध्री गौः; २१९ अमर्त्यजीवस्य मर्त्यस्य च सयोगः; २२० भुवनेषु पुनः पुनरावर्तमान आदित्यः; जीवस्वरूपम्, २२१ यज्ञमहिमा, विपश्चितो मनसा विश्वस्य द्रष्टारः; २२२ आत्मा, मनसा द्रष्टा, गूढः, ऋतस्य प्रथमजेन संगतः; २२३ अमर्त्योऽप्रमयः प्रमेये मर्त्यदेहे सस्थितः, सर्वदेवाधिष्ठान यत् परम व्योम ऋक्प्रतिपाद्यमक्षरं ज्ञेय च, २२४ गौः कल्याणदा; २२५ परमे व्योम्नि स्थिता विश्वजीवनाक्षरमूलभूता विश्वसलिलसमुद्रजननी ब्रह्मरूपिणी वाक्, प्रथमे धर्माः, २२६ अग्निवाय्वादित्याः;

चतुष्पदा वाक्, २२७ एकं सत् सर्वदेवात्मकम्; ऋतस्य सदनम्; २२८ एक संवत्सरात्मक चक्रम्; सरस्वती; यज्ञरूपा: प्रथमे धर्मा:, २२९ एकमुदकमिहामुत्र च; सरस्वान् दिव्यः सुपर्ण:, २३० मृतस्योज्जीवनं देवसामर्थ्यम्; ऋषयो मन्त्रकर्तारो विश्व ऋचि कल्पयन्ति, तेषा ब्रह्मैव विश्वजीवनम्, आदित्यजननी, विश्वात्मिका विराट्; अपरिमितः पुरुषः सर्वातिशायी, सर्वात्मा, अमृतत्वस्वामी, अमृतत्रिपात्, एकांशेन जगद्रूपः, विराड्जनकः विराड्जन्यश्च हविः सर्वमेधस्य देवकृतस्य त्रयीकारणस्य, चातुर्वर्ण्यात्मकावयवसमन्नः, स्वाङ्गेभ्यः चन्द्रमस्सूर्येन्द्राग्निवाय्वन्तरिक्षद्युभूमिदिशा जनकः; २३४ धारकौ मातरिश्वना सहितौ घर्मौ सुपर्णौ, वस्तुतः एक एव सुपर्णः ऋषिभिः बहुधा कल्पितः यज्ञियः; २३६ ज्येष्ठ ' तत् ' इति निर्दिष्ट इन्द्रस्य जनकम्, २३७ अहमादिष्टा सर्वात्मरूपा वाक्, रुद्रवस्वादित्यविश्वदेवरूपेण संचरन्ती, मित्रवरुणेन्द्राग्न्यश्विसोमत्वष्टृपूषभगधारिणी, ईश्वरी, यजमानाद्यर्थद्रविणधर्त्री, यज्ञियाना प्रथमा, भूतजनेषु आत्मानं प्रवेशयन्ती, दर्शनश्रवणभुक्तिजीवनव्यापारप्रयोक्त्री, यदज्ञानादुपक्षयः अज्ञानिना, देवमनुष्यप्रियवाचा वक्त्री, ऋषित्वक्षत्रब्रह्ममेधाना विधात्री, रुद्रस्यापि प्रेरयित्री, द्यावापृथिव्योराविष्टा, द्युजननी, सर्वभूतस्थिता भूतजननी, द्यावापृथिव्योः परा; २३९ सदसत्पर, रजसो व्योम्नश्चातीतं, अम्भसा विरहितं, अनावरकमावरणीयाभावात्, अमृतमृत्युशून्यं अहोरात्रविवर्जितं परममेकमेव अवात चेतन, अलक्षण तमोरूपं गूढ, सलिलात्मकं विभु तपसा जन्मशील, कामात्मकसद्बीजधरं, विततरश्मिधराणां रेतोधराणा महता जन्मदं, ऐहिकभोगामुष्मिकप्रयाणकर, देवानामप्यर्वाचीनत्वाद्विज्ञेय विसृष्टिकारणं, परमव्योमाध्यक्षस्याप्रमेयसर्गस्थिति; २४३ अहमादिष्टः, जलसूर्यविश्वदेवकर्मणा सप्रदान, विश्व विवेककर्ता, सर्वकर्ता;२४४पुरुषशरीरावयवाना विचित्रसनिवेशस्य कर्ता, पुरुषस्य प्रियाप्रियानन्दार्तिमत्यमतिसत्यानृतादिवृत्तीना प्रेरकः, धमनीगतरसनामरूपकर्मप्राणायुर्बलज्ञनरेतोमेधायज्ञश्रद्धाऽमृतमृत्युमनसामाधाता, पुरुषभोग्यजलाहोरात्र्युषः सायंभवाना दाता, द्युभूमिपर्जन्यसोमेषु पुरुषकर्मसु च वर्तमानः जिज्ञास्यो देवः; २४५ श्रोत्रियपरमेष्ठ्यग्नीना पुरुषं प्रति प्रापक सवत्सरप्रमातृबुद्धिद पुरुषात्मकं द्युभूमिदिशातृ अन्तरिक्षस्वरूप सर्वतः स्थित ब्रह्मैव जिज्ञासाविषयः; मूर्धहृदयमयोजकः अथर्वाख्यःपवमानः शीर्ष्ण उपरि इन्द्रियप्रेरकः, आथर्वणस्य देवकोशस्य शिरसोऽन्नस्य मनसश्च रक्षिता प्राणः, अमृतावृतायाः पुरः अधिष्ठातृ विभुपुरुषात्मक दीर्घायुष्ट्वाव्यङ्गत्वादिफलकज्ञानविषयो ब्रह्म; अष्टचक्रनवद्वारदेवपुरि प्रतिष्ठिते हिरण्मयस्वर्गरूपे ज्योतिरावृते देवकोशे स्थित यक्षरूप ब्रह्मविद्गम्य ब्रह्म, २४६ तपसः ऋतस्य श्रद्धायाः सत्यस्य चाश्रयभूतानि, अग्नेर्मातरिश्वनश्चन्द्रमसश्चोद्भवस्थानानि, भूम्यन्तरिक्षद्युतदुत्तरभागाधारभूतानि च यस्याङ्गानि जिज्ञास्यानि सः, अग्नेर्मातरिश्वनः अपा च गमनस्यान्वेषा परिवर्तनाना च प्रेप्साविषयः; अहोरात्रार्धमासमासर्तुसवत्सराणा गतेः प्रेप्सागोचरः, प्रजापतेराश्रयः प्रजापतिना सृष्टेषु अधममध्यमपरमेषु विश्वरूपेषु प्रविष्टः, सहस्रधा भविष्णुः एकोऽशः अप्रविष्टश्च एकोऽशः यस्य जिज्ञास्यः सः, लोककोशब्रह्मजलसदसन्ति यदन्तःस्थितानि सः, तपोव्रतर्तश्रद्धाजलब्रह्मणामाधारः, भूम्यन्तरिक्षद्युसूर्याग्निवायुचन्द्रमसामधिष्ठान, त्रयस्त्रिंशद्देवाश्रिताङ्गः, ऋक्सामयजूंषि मही प्रथमजर्षयः एकर्षिश्च यत्रार्पिताः सः, अमृतस्य मृत्योश्चाश्रयः समुद्रनाडीयुक्तः प्रदिग्रूपप्रथमनाड्याश्रयः यज्ञाधारः पुरुषः, पुरुषाश्रितब्रह्मज्ञानाधीनपरमेष्ठिज्ञानाधीनप्रजापतिज्ञानाधीनज्येष्ठब्रह्मज्ञानाधीनज्ञानः, वैश्वानरशिराः अङ्गिरश्चक्षुः यातुरूपाङ्गः, ब्रह्ममुखः मधुकशाजिह्वः विराड्रूपोधाः, ऋग्यजुषा जन्माधारः सामलोमा अथर्वाङ्गिरोमुखः, जनोपास्यासत्सद्रूपशाखः, आदित्यरुद्रवसूना भूतभव्याना सर्वलोकाना च प्रतिष्ठा, त्रयस्त्रिंशद्देवरक्ष्यनिधेः जिज्ञास्यः पतिः, येषां प्रत्यक्षज्ञानेन ब्रह्मवित्त्व तैर्ब्रह्मविद्भिरुपास्यं ज्येष्ठ ब्रह्म, बृहद्याना जनकासत्स्वरूपाङ्गवान्, ब्रह्मविज्ज्ञेयत्रयस्त्रिंशद्देवानामाश्रयः पुराणाङ्गधरः स्कम्भः, सर्वव्यापकपरमहिरण्यगर्भीयहिरण्यस्य लोके प्रसिञ्चनकरः, लोकाना तपसः ऋतस्य चाधारः इन्द्रः, नाममात्रगम्यः पूर्वः सूर्यादुषसश्च प्रथमजः स्वराज्यगः भूतेभ्यः परः अजः, भूमिप्रम ( पादं )

अन्तरिक्षोदरं द्युमूर्धं सूर्यचन्द्रमश्चक्षुः अग्निरूपास्यं वातरूपप्राणापान अङ्गिरश्चक्षुः दिग्रूपप्रज्ञानकरण ज्येष्ठ ब्रह्म, द्यावापृथिव्यन्तरिक्षप्रदिशां धर्ता विश्वभुवनाविष्टः, तपोजात एव 'प्राप्तलोकस्वाम्यः, अविरतगमनैः वायु मनोजलैः प्राप्तव्यजिज्ञास्य सत्य, सलिलपृष्ठे स्थित तपःकर्तृ भुवनमध्ये वर्तमानं महद्यक्षं, परितो व्याप्तशाखः सर्वदेवाश्रयो वृक्षः, देवैर्बलिना सदा पूजितः विमिते स्थितोऽमितः प्रजापतिर्ज्योतिषामाश्रयः, अपहततमाः व्यावृत्तपाप्मा स्कम्भः ज्येष्ठ ब्रह्म, २४८ भूतभव्याधिष्ठाता स्वर्गस्य एक एव स्वामी ज्येष्ठो ब्रह्मा, द्यावापृथिव्योर्विष्टम्भकः सर्वप्राण्याश्रयः स्कम्भः, प्रजाश्रयः अर्कः रजसो विमानः बृहन् दिक्षु प्रविष्टः हरितः, संवत्सररूपः, अविष्कृतरूपोऽपि गूढः, प्राण्याश्रय महत्पद, भुवनजनकव्यक्तार्धं गूढार्धं च चक्र, अदृष्टगमनः दृष्टस्थितिः पञ्चवाही ( प्राणः ? ), सनिधपरस्वरूपः असनिधापरस्वरूपः, सप्तर्षिभिर्गुप्तः ऊर्ध्वबुध्नो विश्वरूपयशोनिधानभूतश्चमसः, यज्ञे सर्वत्रप्रयुक्ता ऋक् ( प्रणवः ), चराचरजीवन्नजीवद्भूतरूप विश्वरूप पृथ्वीधर एकात्मकं तत्त्वं, अनन्तान्तवद्विवेककर्ता भूतभव्यज्ञो नाकपालः, गर्भस्थोऽदृश्यः बहुधा जायमानः विश्वजनकार्धांशः जिज्ञास्यगूढार्धांशः प्रजापतिः, चक्षुषा सर्वैर्दृष्टोऽपि मनसाऽविज्ञातः उदकहरः ( सूर्यः ? ), सर्वराष्ट्रभृत्पूज्य पूर्णरूपेण सत् ऊनरूपेणासत् महद्यक्ष, सर्वातिशायि सूर्योदयास्तावधि ज्येष्ठ, सर्वभुवनद्रष्टा देवाश्रयः स्वर्गगः हरिर्हंसः,' सत्येन ब्रह्मणा प्राणेन च सहितः ज्येष्ठाश्रयः, अपाद्रूपेण सभूतः चतुष्पाद्भूतः भोग्यो भोक्ता च, असख्येयस्य स्वस्य आधारः सनातनो देवः, केशादपि सूक्ष्मेऽदृश्यस्थाने स्थिता कल्याणी अजरामरा मर्त्यगृहवर्तिनी प्रिया देवता, स्त्रीपुंकुमारजीर्णादिरूपैर्जातो विश्वरूपः, पितापुत्रज्येष्ठकनिष्ठरूपोऽपि मनसि प्रविष्ट एको देवः, कार्यकारणरूपत्वेऽपि पूर्णः, ऋतेन परिवृता सर्वजीवरूपेण पश्यन्ती देवी ( उषाः ), अजरामरा अविः, वाचा प्रेरकं विषयभूत च महद्ब्राह्मणं, देवमनुष्याश्रिते उदकपुष्पे मायया स्थित किमपि, सर्वदेवरूप प्रजासु ओत महत्सूत्रं, विश्वप्रलयस्थितः बृहन्, वसूना संगमनः सत्यधर्मा, त्रिगुणावृतनवद्वारपुण्डरीके स्थित महद्यक्ष, अकामो धीरः पूर्णः अमृतः स्वयम्भूः आत्मा यज्ज्ञानान्मृत्युभयमोक्षः; २५१ बृहतः देवस्य सोमस्य जनकः पुरुषः, वीर्येषु ज्येष्ठ, अग्रे दिवो वितानकृत्, भूताना प्रथमज, देवैरुपास्य, द्यावापृथिवीसप्तसिन्धुप्राणिजातहोतृयज्ञस्नुगृषभगोराजन्यसभासभ्यानुशासनराजन्यासनदासदाशकितवस्त्रीपुपर्वतवीरुधादिसर्वसद्रूपं, ऋषिब्रह्मराजन्यादीनां जनयितृ सर्वकारकरूप सर्वव्यापि ब्रह्म, २५२ सवितृबृहस्पतिचतुष्टोमरूप ब्रह्म; व्याहृतित्रयं ब्रह्म, लोकाश्रयः भूताधिपो महतो महान्; २५३ सूर्यसमं ज्योतिर्ब्रह्म; पञ्चसु अन्तःप्रविष्टः पञ्चव्यापकश्च पुरुषः; प्रजापतिपिता महत्यर्णवे स्थितः स्वयमूः; मर्त्यस्य देवत्वम्; २५४ तमसः परस्तात् स्थितः अमरत्वप्रदज्ञानविषयः महान् पुरुषः, बहुधा विजायमानः प्रजापतिः धीरदृष्टः, अजः श्रीलक्ष्मीपतिः सर्वलोकप्रदः नक्षत्ररूपशाली अश्विमुखः; २५५ अग्न्यादित्यवायुचन्द्रमःशुक्राप्प्रजापतिब्रह्मरूपः सर्वनिमेषजनकोऽग्राह्यो विद्युत्पुरुषः; प्रतिमारहितो महद्यशाः हिरण्यगर्भेत्यादिसूक्तप्रतिपाद्यः, सर्वादिः प्रजापतिः, प्रजापतिः, विभुः प्रजासु ओतप्रोतः; २५७ गूढत्रिपदोऽमृतविद्गन्धर्वः, यस्य ज्ञानेन ज्ञाता पितुरपि पिता भवति; भक्तबन्धुः सर्वधामज्ञः; यज्ञद्वारा जीवाधिगम्यो जीवान्तरात्मा विभुः; २५८ सभृतज्येष्ठवीर्यरूपं अग्रे द्युवितानकृत् ऋते प्रथमज कस्यापि स्पर्धाया अविषयः सुक्स्वरुयज्ञर्त्विग्रूपं ब्रह्म; प्रथमजं बुध्न्यविभक्तृ सदसद्योनिविवृतिकृत् विश्वरूपादित्यात्मक देवानां जगतः क्षत्रस्य च जनक ब्राह्मणरूपं ब्रह्म; २५९ यस्मिन्नन्तः सर्वे लोकाः सर्वे देवा विश्वं जगत् भूतानि च समाहितानि तत्कस्यापि स्पर्धाया अगोचरः ज्येष्ठं ब्रह्म आहुतिप्रकाशकम्; द्यावापृथिव्योरुपादानकारण गृहप्रयोजनकवनवृक्षोभयस्थानीयं भुवनधारकमधिष्ठातृ ब्रह्म; २६० अहंव्यपदेश्यजीवाश्रयभूताऽमृताश्रयः ब्रह्म; २६१ सत्यमित्युपास्यं आत्मस्वरूपं विभु सर्वोपेतं अन्तरात्मनि स्थितं भारूप ब्रह्म; २६२ तदिति निर्देश्यं सर्ववेदप्रतिपाद्यं महद्भूतं ब्रह्मज्ञरूपं ब्रह्म; विभु भूतकृतं स्त्रीपुनपुंसकस्थावरजङ्गमात्मक सर्वयजमानरूपमक्षरं अहंव्यपदेश्यम्; २६३ अनिन्द्रियोऽपि इन्द्रिय-

व्यापारकर्ता; २६४ ऊर्ध्वमूलावाक्शाखो वृक्षः; हसितरुदितादिक्रियायुक्तः मृतसजीवाद्यङ्गयुक्तः विदेहः सतृष्णोऽतृष्णोऽचेतनश्चेतनः; २६५ निरवयवोऽप्यवयवकर्मकर्ता, तत्त्वविदो व्रतम्; सर्वकामप्रापकं पितृयमवरुणाश्विमरुतामालम्बनं सनातनं ब्रह्म ध्यातृध्येयोभयरूपम्, प्राप्यः चतुर्जालो मृत्योरगोचरो देवानां अमृतस्य च स्थानं ब्रह्मकोशः, २६६ शिशुकुमाराख्यः सर्वदेवरूपावयवशाली भूतपतिः नमस्यः, जनानामिन्द्रस्य चात्मा मनसा चरन् जनानामन्तः प्रविष्टः शास्ता मानसीनः सर्वात्मा; २६७ ब्रह्मणा तपसा लब्धः, अग्नीन्द्रसवितृबृहस्पतित्वष्टृयज्ञात्मकः, अमृतप्राणः, विपश्चित्, अन्तः प्रविष्टः कर्ता; २६८ विश्ववारः, देवामृतं, प्रजायुः, वायोरात्मा, रश्मिः, ऋतस्य पदे स्थितः, कविगम्यः, २६९ अण्डकोशे स्थित्वा भुवनस्य धारयिता, मनसा चन्द्रमसि चरन्, इन्द्रस्यात्मा शतधा चरन्; २७० जगतः ईशानः, अन्तरादित्ये मनसा चरन्, देवहृदयरूपः इन्द्रः प्रजापतिः; २७३ तमसः पारे स्थितः आदित्यवर्णः नामरूपव्याकर्ता धीरः विदुषा शक्रेण धात्रा च प्रदिष्टः महान् पुरुषः, यज्ज्ञानादेवात्र अमृतत्वप्राप्तिः.

**सृष्टिः— ( पृ. २७४–३०६ )**

२७४ एकस्मादेव सर्वसृष्टिः, अदितेरुपस्थे दक्षस्य जन्मनि सति सदसतोः संभवः वृषभस्याग्नेश्च प्रथमजस्य; ब्रह्मणस्पतिः कर्मार इव देवाना जनकः, किंच असतः सत्, सतः आशाः जाताः, आशाभ्य उत्तानपदः; किंच उत्तानपदः भूर्जाता, भुवः आशाः; किंच अदितेर्दक्षः, दक्षाच्चादितिः, अदितेर्देवाः मर्त्यप्रजानां पतिः मार्तण्डश्च जाताः; २७६ सदसत्परममृतमृत्युरहितमद्वितीयमलक्षणमेक सलिलरूप प्रथम, तस्मात् तपःसहकृतात् विश्वमहिमा प्रादुर्भूतः, वस्तुतः सृष्टिस्थितिकारणमप्रज्ञातमेव, पुरुषकृतात् यज्ञात् ऋषीणा मनुष्याणा च सृष्टिः; २७९ अहमादिष्टः आत्मा एव प्रजाजनकः; धातुस्तपसः ऋतसत्य, तस्माद्रात्री समुद्रश्च, तस्मात्सवत्सरः जगतः ईशानः जातः, धातुः द्युपृथिव्यन्तरिक्षस्वर्गसूर्यचन्द्रमसा जन्म, जल ब्रह्म, तत्स्थानमन्तरिक्ष, द्यावापृथिव्योस्तदुत्पन्नम्; २८१ अब्रूपसलिले सृष्टिपूर्वकालिके स्थितो वातरूपः प्रजापतिः पृथिवीं सृष्टवान्; ज्येष्ठः प्रजापतिः ज्येष्ठयज्ञेनाग्निष्टोमेन देववेदचातुर्वर्ण्यपशून् सृष्टवान्; २८२ अब्रूपसलिले वातरूपः प्रजापतिः भुवः देवाना च स्रष्टा; वाग्रूपाभ्यो व्याहृतिभ्यः सर्वस्योत्पत्तिः; एकस्मात्प्रजापतेः त्रैलोक्यादिप्रणवान्तसृष्टिः; २८३ प्रजापतेः पुरुषरूपाद्देवचातुर्वर्ण्यवेदर्तूनां सृष्टिः; २८५ प्रजापतेर्ज्योतिः जात प्रथमम्; प्रजापतेर्वाचः सर्वस्यास्य सृष्टिः, २८६ प्रजापतेः पुरुषरूपात् देववेदचातुर्वर्ण्यपशूना सृष्टिः, प्रजापतेः त्रैलोक्यादिव्याहृत्यन्ता सृष्टि, प्रजापतेः पृथिव्या उत्पत्तिः; २८७ आदिभूतसलिले नक्षत्राणामाविर्भावः; प्रजापतेर्नामरूपयोः सृष्टिः तस्याः प्रयोजनं इन्द्रजन्म च; २८८ असतः तपःसंयुक्तादेव सृष्टिः; २८९ आदिसलिलस्थप्रथमजप्रजापतेः अहोरात्रान्ता सृष्टिः, २९० सृष्ट्यादौ प्रथमं असत्, असतः मनः, मनसः प्रजापतिः, प्रजापतेः प्रजाः; सृष्ट्यादौ असत् सप्तप्राणात्मक इन्द्राख्यमध्यमप्राणसहित, ततः सप्त पुरुषा जाताः, तत एकः पुरुषः प्रजापतिः चयनाग्निरूपः, ततः त्रयी ब्रह्म आपश्च, ततः अप्सु अण्ड, अण्डादग्निः अश्वः रासभश्च, तथा तस्मादेवाण्डात् पृथिवी अग्न्यात्मिका जलसहिता, तस्मिन्नेव जले फेनः, फेनादेव मृदादयो नव सृष्टयः; २९४ प्रजापतेः विविधान्यण्डानि जातानि, तेभ्यो वाय्वादित्यचन्द्रमसा अन्तरिक्षद्युद्दिगादीना चोत्पत्तिः, २९५ प्रजापतेः वाङ्मनसरूपमिथुनात्मकात् देवतासृष्टिः; प्रजापतेः भूतपतिः संवत्सरः जातः, तस्मात् अग्निः कुमारो रुद्राख्यः, तस्य शर्वादीनि अष्ट नामानि; २९७ प्रजापतेः प्राणेभ्यः पुरुषादिपशुसृष्टिः; सृष्ट्यादौ आपः, अद्भ्यो हिरण्मयमण्ड जातं, तस्मात् पुरुषः प्रजापतिः, तदीयवाचः भूमिरन्तरिक्षं द्यौश्च, तदुत्तरं स सहस्रायुः संपन्नः, ततो देवान् असुरांश्चात्मनः स सृष्टवान्, ततः अहोरात्रद्वन्द्वं सवत्सरं चात्मप्रतिमा, ततः अग्निं इन्द्र सोम प्राजापत्य परमेष्ठिनं च, ३०१ सृष्ट्यादौ ब्रह्म, ततो देवा जाताः, तेन प्रत्ययार्थं अमृतत्वार्थं च नामरूपे सृष्टे; ३०३ सृष्ट्यादौ ब्रह्म, ब्रह्मण आपः जाताः, अप्सु वायुरूपो भृगुः, स एवाऽथर्वाऽभवत्, प्रजापते-

रथर्वणः मन्त्रकर्तारो जाताः; ३०४ प्रजापतेः पुरुषरूपात्स्वाङ्गेभ्यः लोकत्रयसृष्टिः, ततो वेदा व्याहृतयश्च सृष्टाः; वरुणादङ्गिरा ऋषिः, ततः ऋषयः अङ्गिरसः, तेभ्यो वेदः आङ्गिरसः जातः; ३०५ वेदपञ्चकसृष्टिः, महाव्याहृतिसृष्टिः; प्रजापतेः पुरुषरूपात् चन्द्रमोनक्षत्रादीना एकविंशतिसंस्थयज्ञस्य च सृष्टिः, अप्सु प्रजापतेः कामात् सर्वसृष्टिः.

## शारीरम्— ( पृ. ३०७–३५२ )

३०७ साङ्गं शरीरम्; चक्षुःप्राणात्मशरीररूपो भोक्ता; प्राणापानचक्षुःश्रोत्राऽक्षितिक्षितिव्यानोदानवाङ्मनोरूपदेवाः मन्युसहकृताः संकल्पजन्याकूतिमाव हन्ति ब्रह्मरूपज्येष्ठवरं प्रति, ब्रह्म च तपःकर्मभ्यां सह कृतं तिष्ठति; ३०८ प्राणादिदेवजनकधात्रादयस्त्वनादिपरम्परया स्थिताः; ३०९ त्वष्टृसृष्टं मर्त्यं शरीरं देवगृह स्वप्नतन्द्राऽविद्यास्तेयदुष्कृतजरादीना पाप्मरूपदेवतानां सत्ययज्ञबलश्रद्धाविद्यादीना पुण्यदेवतानां च स्थानम्; ३१२ शरीररूपः पुरुषः देवयज्ञस्थान, यत्र यज्ञे अस्थीनि समिधः रेतः आज्य, यत्र च सूर्याय चक्षुः वाताय प्राणः अग्नये शेषं शारीरं प्रदीयते; ३१३ अस्मत्प्रत्ययगोचरः आत्मेन्द्रियप्राणसयुक्तः, ३१४ बल आत्मा वेदज्ञान वा पुरुषादपगच्छति पुनरागच्छति च, सर्वशरीरावयवानां तत्तच्छ्रेयोविशेषकरत्वेन प्रशम्तता; ३१५ शरीरावयवविशेषाणा श्रेयोविशेषकरत्वम्; शरीररक्षका इन्द्रियरूपाः सप्तर्षयः प्राणापानौ देवौ च, ३१६ प्राणानामात्मनश्च संधानकरमन्नम्; वाङ्मनसयोः सबन्धः; प्राणमनोवाक्चक्षुःश्रोत्राणा कार्याणि, ३१८ अन्नसहकृताः प्राणाः इन्द्रियाख्याः आत्मनोऽधिष्ठानम्; मनः सृष्ट्यादिभूतं, ततः वाक् जाता, ततः प्राणो जातः, प्राणात् चक्षुः, चक्षुषः श्रोत्र, श्रोत्रात् कर्म, कर्मणः अग्निः; ३२२ मनःप्राणचक्षुःश्रोत्रवाग्भिः प्राणाख्येन्द्रियैः सवलितः पुरुषः पशवश्च; प्रजापतिना सृष्टे पुरुषे स्थितेषु वाक्प्राणापानोदानचक्षुर्मनःश्रोत्रशरीररेतोबलमन्युमूर्धात्मसु अग्निवायुविद्युत्पर्जन्यादित्यचन्द्रमोदिक्पृथिवीजलेन्द्रेशानाकाशब्रह्मणां प्रवेशः; पुरुष एव देवानां पूः, अमृतब्रह्मस्थान, स्वर्गलोकाश्रयः.

## शारीरम्–प्राण.—

३२३ सर्वस्येशानः प्रतिष्ठा च, स्तनितादिवर्षणान्तव्यापारः पर्जन्यः, गर्भग्रहणप्रजननप्रयोजकः, सर्वपश्वोषध्यादीना जन्मायुःप्रमोदकरः, गमनस्थित्यासनप्राणनादिशरीरक्रियानिर्वर्तकः, रोगमृत्युदः , गर्भजीवनजन्मनोः कर्ता, सर्वप्रजाव्यापकः, अन्नरूपः, मातरिश्ववातस्वरूपः, सर्वोपास्यः, देवपूज्यः, विराट्प्रजापतिसूर्यचन्द्रमआत्मकः, सर्वेषु देवेषु प्रत्यक् स्थितः, पुनःपुनः जायमानः, सुप्तेष्वपि जागरितः, सत्यवादिने उत्तमलोकदः, तस्मै तद्वेदित्रे च सर्वे बलिमर्पयन्ति; ३२७ शरीररूपवस्त्रधरः; प्राणापानव्यानरूपः त्रिविधः; ऊर्ध्वमवाङ् प्राङ् च स्थितानां प्राणानां कार्याणि; प्राण एव प्रियतमः; ३२८ प्राणो विभू रक्षकश्च; प्राणः वायुरूपः एक एव त्रिविधः; एक एव प्राणः वायुरूपः दशधा शरीरे; सृष्ट्यादौ सप्त प्राणाः; त्रिविधाः अवाङ्स्थिताः प्राणाः; ३२९ आदित्येन समिद्धः उष्णः जीवल्लक्षणरूपः प्राणः; शीर्षस्थः पञ्चविधः प्राणः; अग्निरेव प्राणरूपः अध्यात्म, वायुरूपः अधिदैवतम्; ३३० उपाश्रायतनः प्राणः; ३३१ पञ्चविधाः प्राणाः; वाक्चक्षुःश्रोत्रमनःप्राणाना ज्येष्ठश्च श्रेष्ठश्च; ३३२ एको देवः, भर्ता, मृत्युः, अमृतरूपः, जीवनव्यापारकर्ता, मातरिश्वा, एक एव बहुषु प्रविष्टः, यज्ञस्वरूपः, सोमात्मकः, यज्ञपतिः, प्रजापतेर्भोगः, देहगुप्तः.

## शारीरम्–मनः—

३३४ सकल्पकरं, वेदाधारः, दूरगमं, ज्योतिषा ज्योतिः, कर्मकारण, प्रज्ञानचेतोधृतिरूप, त्रैकालिकवस्तुग्राहक, मनुष्यप्रवर्तकनियामक, अमृतम्; ३३७ सर्वेन्द्रियस्थानं सर्वव्यापक च; वाग्जनक मनः, वाचः स्वर एव सर्वदेवात्मक इन्द्रः, श्रेयोरूपकर्मप्रेरक देवेषु श्रेष्ठ भूतभव्यरक्षक च; मनः सर्वस्य वशि, स्वतन्त्रं, देवस्वरूपं, आकूतीना चेतसा च अधिपतिः, विपश्चिच्च; वाचः मन एव श्रेयः.

## शारीरम्–कामः—

३३८ सर्वकर्मकर्ता, दातृप्रतिग्रहीतृरूपः; ३३९ सपत्नहन्ता, धेनोर्विराजो वाचः पिता, अध्यक्षः, वाजी, यजनीयो ज्येष्ठो देवः, बहुलोकदः, प्रथमजः, देवपितृ-

मर्त्यैरप्राप्यः, सर्वदा महान्, द्यावापृथिवीदिगादिभ्यो ज्यायान्, बहुशिवतनुधरः, पापधीनाशकः; ३४० यजनीयः, मनसो रेतः, बृहन्, विभुः, सखा, स्वर्गजनकः, काम्यफलदः.

**शारीरम्–मन्युः—**

३४१ सग्रामेऽनुग्राहकः, बलजन्यः, बलवान्, इन्द्राग्निवरुणरूपः देवः, मानवप्रशस्तः, तपःसहायः शत्रूणामभिभावकः, तनुस्थो बलदः, विश्वधर्ता, मधुना यजनीयः उभयविधधनदः.

**शारीरम्–मेधा—**

३४४ गवाश्वादिधनदा, यजनीया, ब्रह्मयुक्ता, ब्राह्मणसेविता, ब्रह्मचारिप्रपीता, ऋभ्वसुरर्षिभिरुपासिता, सर्वदा आत्मनि स्थाप्या.

**शारीरम्–आकूतिः—**

३४५ सुभगा देवी, चित्तस्य माता, मनसि प्रविष्टा, आङ्गिरसबृहस्पतिप्रदेया.

**शारीरम्–वाक्—**

३४६ चतुष्पदा, गुहानिहितत्रिपदा, मानुषतुरीयपदा; राजमाना, देवाना मादयित्री, अज्ञातपरमस्वरूपा, देवी, देवपुत्री, पशुभिर्वाच्या, अन्नरसधेनुः; शिवाशिवरूपा, त्रिविधा अन्तःस्थिता, एका घोषस्था; ३४७ आत्मा सर्वथाऽभिव्यक्तः वाङ्मयः स एव सत्यमयः; देवी देवपुत्री, सर्वपशुवाच्या, अन्नरसधेनुः, परमव्योम्नि स्थिता, सलिलजननी, अपरिमिताक्षरा, विश्वोपजीव्याक्षरमूलम्; ३४८ यजनीया, विराट्, अनपायिनी, हव्यवाट्, बहुरूपप्रतिपादिनी; अनन्ता, देवगन्धर्वमनुष्यपशूनामुपजीव्या, विश्वाश्रयः, अक्षररूपा, ऋतस्य प्रथमजा, वेदमाता, अमृतनाभिः, मन्त्रकृद्भिस्तपसा प्राप्ता, सुकृतलोकदा; ३४९ मनीषिवेद्यचतुष्पदा, गुहाहितत्रिपदा, मनुष्यवाच्यतुरीयपदा; ३५० वाचः तुरीयं निरुक्तम्; प्रभूतफलदात्री स्वर्गकरी च, नमस्या, उदितानुदितोभयरूपा, देवाप्रिया, वैश्वदेवी, मधुमती च.

**जीवगतिः— ( पृ. ३५२–४१७ )**

३५२ दानेन स्वर्गस्य अमरत्वस्य देवसलोकतायाश्च प्राप्तिः दुरितनिवारणं ऐहिकेष्टलाभश्च; ३५३ शरीरधारी आत्मा जीवाख्यः अमर्त्यः मर्त्यसहभावी च; अमार्गगपतिद्वेषयुक्तस्त्रीसदृशपापकर्मकृद्भिर्नरकः सृष्टः, दुष्कृता पाकशसभद्रमार्गदूषकाणा हिंसकाना असद्वादिना च दुर्गतिनाशश्च; ३५४ मर्त्यानां विवस्वान् हन्ता; ३५५ एकविंश ब्रध्नस्य विष्टप स्वर्गाख्य सोमसाध्यम्; अयज्वनः पतनम्; सोमसाध्यः अमृतः स्वर्गः ज्योतिषावृतः राज्ञा वैवस्वतेनाधिष्ठितश्च; ३५६ लोकदः, मार्गमबाधमानः, संगमस्थानभूतः जनाना, प्रथमः पितृमार्गज्ञः, वैवस्वतो यमो राजा; देवपित्राश्रयः यम· वरुणाधिष्ठित इष्टापूर्तद्वारा मर्त्येन प्राप्यं पूर्वपितृवासभूतं परमव्योम्नि स्थित स्थान, यत्र नवशरीरलाभः यत्र च यमदूतश्वद्वयरक्षितमृतस्य गतिः; ३५८ मरणोत्तरजीविनो देवरूपा अन्यरूपा वा देवैः सह स्वर्गे अन्यत्र वा वासिनः देवैः सह स्वातन्त्र्येण वा यज्ञभाजः इहलोके जीविनां पितृयज्ञपराणा रक्षणाय समर्थाः इष्टफलप्रदाश्च; ३५९ अग्निः असुमार्गेण गच्छन्त आहुतिरूपं जीव सुकृता लोकं प्रति नयति, पितृभ्यो ददाति, स देववशो भवति, मर्त्यस्य चक्षुरादीना सूर्यवातद्युभूजलौषधीषु विलयः, ३६० चक्षुष्मान् शृण्वन् मृत्युदेवः; ३६१ वाजिनः स्वर्गमनम्; ३६२ म्रियमाणस्य मनः शरीरमुत्सृज्यान्यत्र गच्छति; ३६३ सोमस्यासुनीतेरितरेषा च देवानामनुग्रहात् पापनाशेन आयुः प्रवृद्धतरं नवीयः भवितुमर्हं, चक्षुःप्राणासुतनूनां पुनः प्राप्तिश्च भवितुमर्हा सति निर्ऋतेः दूरतरगमने; ३६५ पातकनाशद्वारा सुबन्धुमनसः जीवनहेतोस्तच्छरीर प्रति आगमनप्रार्थना; ३६६ द्युलोकरूपदिव्यनौकारोहणम्; देवपित्रधिष्ठितौ द्वौ मार्गौ मर्त्यानाम्; दक्षिणादिदातॄणामामुष्मिकाः लोकाः; ३६७ सोमघृतमधुयुक्ता आमुष्मिका लोकाः; तपस्विनां रणेषु तनुत्यजा विविधदानपराणा ऋतपराणां पितॄणा ऋषीणा चामुष्मिका लोकाः; ( पुण्यकृतां सुकृतिना अमृतस्थानस्वरूपम्–टिप्पण्याम् ); ३६८ अग्निना साधनेन देवत्व स्वर्गः देवैः सह वासश्च, पृथिव्यन्तरिक्षद्युलोकक्रमेण स्वर्ज्योतिःप्राप्तिः; ३६९ पक्षिरूपकेण सवयज्ञेन लभ्यः स्वर्गः अशरीरशुचिगम्यः देवयमगन्धर्वाध्यासितः बहुस्त्रीरथकमलह्रदपुष्करिणीकामधुग्धेनुमधुक्षीरदधिसुरादिसपन्नः; ३७१ बहवो देवयानाः; बहवो देवयानाः पितृयाणाश्च लोकाः

अनृणगम्याः; ३७२ वैश्वानरः अनृण मनुष्य सुकृतलोकस्य प्रापयिता; हिंसादिजनितपापनाशकोऽग्निः पृथिव्यन्तरिक्षद्यावश्च याजकं सुकृतलोकस्य पितृपुत्रसंपन्नस्य प्रापयितारः; ३७३ बहुबन्धनमुक्तिः सुकृतलोकप्राप्तिश्च;३७४ दानेन यज्ञेन वा संतानयुक्तानां बन्धुरहिताना वा स्वर्गप्राप्तिः; ३७५ इष्टापूर्तेन स्वर्गः; ३७६ पाकयज्ञदानादिभिः कस्यापि स्वर्गप्राप्तिः; मरणपूर्व मरणोत्तर मरणसमये च स्थितिः, निर्ऋतिमृत्युयमदूतादयः पाशशृङ्खलाद्यायुधधराः मरणकाले प्राणहराः, अय लोकः अभयस्थान, असुप्राणचक्षुर्मनआदीनां मरणकाले देहत्यागः मृत्युपरिहारविधिः, मृत्योः रक्षणकर्तारः; ३८५ अङ्गिरसा द्युलोकगमनम्; ३८६ मधुयुक्तास्वधालोकप्राप्तिः स्वधाकरस्य; मरणोत्तरं मनसैवात्रागमन, पितृभिर्यमेन च सह संगतिः, मृत्युर्यमस्य दूतः, तेन नीतस्य पितृस्थाने यमराज्ये वासः सर्वाङ्गपूर्णस्य, ३८७ मृतस्य अश्वावतीनदीतरणम्; यमः परः सर्वस्मात् तिष्ठति, स च मृतार्थस्थानदाता; ३८८ अनपत्याः द्वेषरहिताः स्वर्गगामिनः; त्रिविधा द्यौः; ३८९ विविधस्थानस्थिताः पितरः; यमसमितिं प्रति प्रेतस्य गतिः; देवमार्गगा गौः मृतं स्वर्गस्य प्रापयित्री; मरणोत्तरं सलिले गृहकर्ता पितृभिः सह वसानः तनुधारी जीवः;३९०मर्त्यानां प्रथममृतः स्वर्गतः वैवस्वतो यमो राजा, असुनीतिर्देवः पितृभ्यस्तनुदाता, यमः ऐहिकाभयामृतत्वदाता; ३९१ उत्तमायां दिवि ऋषयः, देवाः मृतार्थमध्वादिपूर्णकुम्भधराः, इतो दत्ततिलमिश्रधानाभुक् मृतः, शरीर दग्ध्वा मृत सुकृतलोकस्य प्रापयिता अग्निः; ३९२ अग्नयः सुकृतलोकप्रापकाः, यज्ञायुधानि लोकत्रयधारकाणि स्वर्गप्रापकाणि, त्रयः सुपर्णाः स्वर्गे, अङ्गिरोगतैर्देवयानैः अमृतसंपन्नस्वर्गगतिः; ३९७ प्रेताय दत्ताना धानातिलाना रूपान्तरेण, वत्सस्य च यमराज्ये भुक्तिः; वैश्वानरे हुतहविषः स्वधारूपेण परिणतिः पितृपितामहानामुपकाररूपा, मर्त्यस्यामृतत्वं, पितॄणा मासि पुनरागमनम्; ३९९ पृथिव्यन्तरिक्षद्युस्थिताः पितरः; अग्न्यादयो देवा ब्रह्मविल्लोकप्रापकाः; ४०० मधुघृतयुक्त देवस्थान स्वर्ग प्रति प्रापकोऽग्निः; स्वर्गलोकात्प्रत्यागच्छन्तो यजमानाः; मृतस्य पुनरुज्जीवनस्थान विदुषोऽप्यगम्यम्; त्रयः स्वर्गाः; ४०१ अग्निः परलोके जन्मदः, परलोके आत्मरक्षोपायः; प्राणः अमृतम्; देवलोकः पितृलोकश्च; सप्त देवलोकाः; स्वर्गः पुण्यलोकः, अनृतेन ततश्च्युतिः; ४०२ मृताना पुनरुज्जीवनम्; आहुतिरमृतत्वसाधनम्; ४०३ दुष्कृतं हित्वा सुकृतेन सहोत्क्रमणसाधनं विद्या; देवयोनिः मनुष्ययोनिश्च, देवलोकः मनुष्यलोकश्च; उत्क्रान्तस्य विदुषः आत्मद्वयं दायद्वय च; ४०४आहुतिपञ्चकक्रमेण अस्मिंल्लोके पुनर्जन्म; द्विविधा आमुष्मिकी गतिः सान्ताऽनन्ता च; ४०५ यजमानस्य जन्मद्वयम्; स्वर्गनरकाः; ४०६ सप्तमो ब्रह्मलोकः; उत्तरमार्गगा देवाः; सशरीरस्य स्वर्गगमन, सान्तः अनन्तश्च लोकः; ४०७ एकविंशः स्वर्गः आदित्यरूपः; देवयानपितृयाणौ; सप्त देवलोकाः; पुरुषस्य जन्मत्रयम्; ४०८ यज्ञरूपः मृत्युमुक्तः; आहुतिः स्वर्गसाधनम्; आहुतिपञ्चकक्रमेण अत्र लोके पुनर्जन्म; ४०९ कर्मणः परलोकसाधनत्वम्; ४१० मृत्युस्वरूप परलोकेषु पुण्यपापफलभोगश्च; ४११ चतुर्दिक्षु चतुर्विधा नरकाः; ४१२ देहस्य दुःखान्तता ज्ञानस्येष्टता च; मृत्युर्देवः इष्टदः यजनीयश्च; मृत्युः पुरुषरूपः, देवयानेतरमार्गस्वामी, मनुष्याणामेकराट्, ऋतस्य प्रथमजः; ४१३ वैश्वानरः प्रेतात्मा सुकृतलोकवहः; मृतमार्गरक्षकदेवताः; ४१४ मृतपुत्रः मृतपिता चाग्निर्वैश्वानरः; वरुणदूतः सुपर्णः; प्रेतशरीरदोषः शकुनिपिपीलिकादिस्पर्शजन्यो निवारणीयः; प्रेतस्य स्वर्गमनम्; ४१५ यजनीयो देवः, जगतः वशी, गानेन स्तोतव्यः, अश्वरथाधिष्ठाता, जगतः धर्ता, छन्दसां प्रतिष्ठा, सर्वप्रेताधिगम्यः, मरणोत्तर सत्यानृतविवेचकः राजा यमः; ४१७ सर्वमृतेभ्यः अवसानदाता; प्रेतस्य विविधानि गमनस्थानानि.

**धर्मतत्त्वम्—( पृ. ४१८—४९३ )**

ऋतम्— ४१८; सत्यम्— ४१८–४२०; धर्माचरणम्– ४२०; आनृण्यम् —४२०–४२१; ब्रह्मचर्यम्—४२१–४२६; श्रद्धा—४२६–४२७; तपः—४२७–४२८; यज्ञः—४२८ यज्ञीयपशोरश्वस्य देवप्रशस्तत्व देवरूपत्वं अमर्त्यत्व च;४३०अमृतनामाऽश्वो यज्ञीयपशुः विश्वात्मकः, सत्यस्य सत्य, प्रजापतिस्वरूपश्च; ४३१ सवे देयः स्तोतव्यो वा अनड्वान् विश्वधर्ता,

विश्वव्यापकः, इन्द्रस्वरूपः, प्रजापत्यात्मा, अक्षयफलदाता, स्वर्गदश्च; ४३४ अजः पञ्चौदनः यज्ञरूपः, विश्वात्मकः, ऋतसत्यश्रद्धाविराडङ्गः; सर्वे देया वशा गौः देवगन्धर्वमनुष्यादिभिरुपजीवनीया, सर्वदेवरूपा, विश्वात्मिका; ४३९ महामहिमः सर्वदेवमयः विराडात्मा सर्वात्मा ओदनः; ४४४ ब्रह्मौदनोच्छिष्टं सर्वजगत्कारणं ब्रह्माभिन्नम्; ४५० व्रात्यः प्रजापतिप्रेरकः, महादेवरूपेण परिणतः, ईशानः, एकव्रात्यः, इन्द्रधनुर्धरश्च; (कालात्मा) व्रात्यः संवत्सराधिष्ठाता, चतुर्दिक्चरः, सामभिः देवैः ऋषिभिश्चानुसृतः, पुंश्चलीमागधोपेतः, वस्त्रोष्णीषकेशप्रवर्तमाणिभूषितः, परिष्कन्दविपथवाहसारथिप्रतोदपुरःसरसहितः; ४५१ व्रात्यः देवैर्दत्ताया कालवेदरूपासन्द्या स्थितः, परिष्कन्दसंकल्पप्रहाय्योपसत्परिवृतः, षट्सु दिक्षु द्वादशमासरूपगोप्तृजहकृतः, बृहद्रथन्तरादिसामभिः भूम्यग्न्यादिदेवैश्चानुष्ठातृभिः सहितः, ४५२ सर्वाभिर्दिग्भिः कृताः व्रात्यस्यानुष्ठातारो भवशर्वपशुपत्युग्ररुद्रमहादेवेशानाः, व्रात्यः ध्रुवादिदिक्षु चरः, भूम्यग्निसूर्यचन्द्रनक्षत्रौषधिवनस्पतिसत्यवेदविद्यास्थानाग्नित्रयकालादिसर्वभूतसर्वदेवादिभिरनुगतः, ४५३ राजन्यजन्मदः सभासमित्यादिभिरनुसृतो व्रात्यः; व्रात्यस्यातिथेर्महिमा पूजाविधिस्तत्फलं च; ४५४ प्राच्यादिदिक्षु चरन् व्रात्यः तत्तद्दिगनुसारेण मारुतशर्वेन्द्रवरुणसोमविष्णुरुद्रयमबृहस्पतीशानप्रजापतिपरमेष्ठिस्वरूपभूतः; ४५५ विश्वात्मको व्रात्यः; ४५६ यज्ञः देवैरप्यनुष्ठितः प्रथमो धर्मः, देवानामधिपतिः, परमव्योमप्रापकः; ४५७ पुरुषहविर्यज्ञापेक्षया श्वगवादियज्ञापेक्षया वा विद्वद्यो मानसो वा यज्ञः श्रेयान्; ४५८ ऋत्विग्यज्ञतत्साधनादि सर्वं ब्रह्मरूपं, यज्ञतत्त्वं च ब्रह्म; आध्यात्मिको यज्ञः, ४५९ यजमानो राजा वा ब्रह्मसवितृमित्रेन्द्रवरुणरूपः; ऋत्विग्यजमानो वा आत्मा सर्वव्यापी, यज्ञ एव प्रजापतिः; पुरुष एव यज्ञः; ४६० विश्वसृजा आध्यात्मिकाधिदैवतशक्तिसंवलितो यज्ञः, यत्र ब्रह्म प्रादुर्भवति; ४६१ यज्ञेन हन्तव्या दोषाः; ४६२ विश्वसृजां यज्ञः आध्यात्मिकाधिदैवतशक्तिसंवलितः, यत्र ब्रह्म मोक्षकारणं साक्षात्क्रियते; ४६४ आध्यात्मिकमग्न्याधानं अमृतत्वसाधनम्; ४६५ प्रजापत्यात्मा यज्ञः; ४६६ देवयज्ञात् आत्मयजनं श्रेयः; आध्यात्मिकं प्राणाग्निहोत्रम्, ४६८ यज्ञपुरुषप्रजापतीनामैकात्म्यम्; ४६९ प्रजापतिना नारायणाय प्रोक्ता यज्ञाङ्गभूता सर्वात्मविद्या; ४७० पुरुषमेधः सर्वात्मभावसाधनम्; ४७१ सर्वमेधः सर्वात्मभावसाधनम्, सर्वेषां वेदानां साङ्गानां यज्ञपर्यवसायित्वम्, ४७२ आत्मनिष्क्रयणो यज्ञः आनन्त्यफलः; आध्यात्मिकमग्निहोत्रम्, **अतिथियज्ञः**— ४७३–४७४; **दानम्**— ४७४–४७९; **उपकारः**— ४७९; **सांमनस्यम्**— ४७९–४८२; **अधर्मस्वरूपम्** — ४८२–४८९, **विद्यामहिमा**—४८९–४९३.

**श्रेयः— ( पृ. ४९४–५२१ )**

४९४ भद्रं क्रतवः, देवानां सुमतिः रातिः सख्यं च, आयुः, मयः, भेषजं, रक्षणं, स्वस्ति, भद्रश्रवणदर्शने, स्थिराङ्गशरीराणि, शतायुः, ४९६ शान्तिः सुखं स्वस्ति स्थितिः प्रतिष्ठा च, ४९९ सर्वलक्षणोपेता लक्ष्मीः, सर्वप्रकारदुर्लक्ष्मीनिवारणं च; ५०१ मेधा, मधुमती वाणी, श्रुतं, व्रतं, सत्यमतिः, श्रद्धा, यश इत्यादयः; ५०२ देवानां बलरूपतनवः श्रुतं दैवं मनश्च; ५०३ अभयं, ग्रामार्थं ऊर्जं, राजक्रोधनिवारणं, अमित्रराहित्यं प्रार्थ्यमानम्; ५०४ अनेनस्त्वम्, ५०५ आनृण्यम्; समनसः प्रजाः; ५०६ दौष्वप्न्यदौर्जीवित्वदुर्वाचां निवारणम्; सज्ञानम्; सत्यं, बृहत्, ऋतं, उग्रं, दीक्षा, तपः, ब्रह्म, यज्ञः, अन्नं, द्रविणं, मधु, वर्चः, राष्ट्रस्य बलमोजश्च, पयः, वृद्धिः, शत्रुनाशः, चारुवाणी, त्विषिः, धनं, निधिः, हिरण्यं, शिवं, पिशाचरक्षसां हानिः, दीर्घायुः, भूतिः, क्षेमयुक्ता पृथिवी; ५१० मधुमती वाक्, भद्रश्रुतं, सौपर्णं चक्षुः अजस्रं ज्योतिः; सार्वभौमशान्तिः, शर्म, अभयं, शिवं च; ५१३ सर्वेन्द्रियशरीरस्वास्थ्यम्; शतवर्षपर्यन्तं दर्शनजीवनबोधवृद्धिपुष्टिप्रजननानि; आयुः, प्राणः, प्रजा, पशवः, कीर्तिः, द्रविणं ब्रह्मवर्चसं च; ५१४ आयुः, प्राणः, व्युष्टिः, रयिः, घोषः, पोषश्च; राष्ट्रे ब्रह्मवर्चसी ब्राह्मणः, शूरो राजन्यः, धेनुः, अनड्वान्, अश्वः, पुरन्धिः, सभेयो युवा, सुवृष्टिश्च; ५१५ सार्वभौमशान्तिः; सार्वभौममित्रदृष्टिः दीर्घजीवनं च; ५१६ आकूतिः, सत्यं, रूपं, रसः, यशः, श्रीश्च; मनसः

वाचश्च प्रसादः; अन्नम्; वर्चः, पयः, तपांसि, शिवं मनः, विज्ञानं, सत्यं, चारुतमा वाणी च; आयुः प्रजा श्रीश्च; ५१७ अमृतं दीर्घमायुश्च; ५१८ अन्न पान श्रीर्ज्योतिरमृतं च; ५१९ सेन्द्रियशरीरस्वास्थ्यं, महत्, भर्गः, भगश्च; सार्वभौमशान्तिः; ५२० श्रीः, ह्रीः, धृतिः, तपः, मेधा, प्रतिष्ठा, श्रद्धा, सत्य, धर्मः, आयुश्च; शुद्धिः वेदः ब्रह्म च. प्रणवः ( पृ. ५२१--५२४ ).



# धर्मकोशः

## उपनिषत्काण्डम्



### मन्त्रब्राह्मणोपनिषत्

( प्रसिद्धेषु वेदान्तोपनिषत्सु यदध्यात्मदर्शनं यद् ब्रह्मदर्शनं यो वा तत्संगतो विषयविमर्शश्चाधिगम्यते तत्सदृशस्तन्मूलरूपस्तद्बीजभूतो वा तत्त्वप्रपञ्च उपनिषत्पूर्वेषु मन्त्रब्राह्मणेषु कर्मविद्यात्वेनाभ्युपगतेष्वपि महता विस्तरेण समुपलभ्यते । तस्य चोपनिषत्पूर्ववैदिकतत्त्वदर्शनस्य संग्रहोऽद्यावधि न कैश्चिदपि साकल्येन कृत. । वयमत्र त सार्वभौमं संग्रहं प्रदर्शयाम । अस्यैव संग्रहस्य मन्त्रब्राह्मणोपनिषदिति संज्ञाऽस्माभि. कृता। यत उपनिषद्रूपाणा मन्त्राणा ब्राह्मणाना च सर्वेषु वेदेषूपलभ्यमानानामयं संग्रह । )

#### † परमात्मा अग्न्यादिदेवरूपः

#### अग्निः

देव एव ऋत्विक् पुरोहितश्च

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारं रत्नधातमम् *॥**

अग्निनामक देव ईळे स्तौमि । मन्त्रस्य होत्रा प्रयोज्यत्वादह होता स्तौमीति लभ्यते । कीदृशमग्निम् । यज्ञस्य पुरोहितम् । यथा राज्ञः पुरोहितस्तदभीष्ट सपादयति, तथा अग्निरपि यज्ञस्यापेक्षित होम सपादयति । यद्वा । यज्ञस्य सबन्धिनि पूर्वभागे आहवनीयरूपेणा-

† उपनिषद्भिन्ने मन्त्रात्मके ब्राह्मणात्मके वा वेदे बहुषु स्थलेषु अग्नीन्द्रवरुणरुद्रादित्यादयो देवा सर्वज्ञत्वसर्वकर्तृत्वसर्वान्तर्यामित्वसर्वदेवात्मकत्वादिभि परमात्मलक्षणैरुपेता वर्णिता· । तथा च यत्र यत्राग्न्यादीनां परमात्मलक्षणं स्पष्टं प्रतीयते ते ते वेदभागा अत्रोध्दृता ।

* सर्वोऽपि वेद. परमात्मपरतया बहुभि पूर्वसूरिभिर्व्याख्यातः। एष मन्त्रश्च परमात्मपरतया सुतरा व्याख्यातुं पार्यते इत्येतत्प्रदर्शयितुमत्र संगृहीत. । वस्तुतोऽस्मिन् मन्त्रे स्पष्टतया परमात्मलिङ्गं नोपलभ्यते । येषु तु स्पष्टं परमात्मलिङ्गं त एवात्र संगृह्यन्ते। परंतु ऋक्संहिताया अनेनैव मन्त्रेण प्रारम्भ·, अत एषोऽत्र पठितो· माङ्गल्यलक्षणमिति ।

ऋक्संहिताया अग्निरेव पुरोहित., ऋत्विक् , होता, ब्रह्मा चेतिप्रतिपादको मन्त्रसमूहो दरीदृश्यते । तथा अग्निः खलु अध्वर्युहोतृपोतृनेष्टृप्रशास्तृयजमानाना कर्मसु प्रवीणतमः इत्येतत्परोऽपि महान् मन्त्रसमूहोऽस्ति । यथा—१।१, १२, १३, २६; ३६, ४४; ४५, ५८, ६०; ६८, ७६, ९४; १२७; १४१; १४९. २।१, ५, ६, ९. ३।३, ७, १०; ११, १४, १९, २१, २७. ४।१; ९. ५।११; २६ ६।१४; १५; १६. ७।७, १०, ११; १६. ८।४४, ४९. ९।६६. १०।१, २, ६, ११, १२, २१ ५२, ९१; ९२, ११०; १५०.

( १ ) ऋसं. १।१।१, सासं. ६।३।४, तैसं. ४।३।१३।३; कासं. २।१४ (८८); मैसं. ४।१०।५ (१२०), गोब्रा. १।१।२९. ळळयोः ळ्हयोश्च नियत पाठभेदो न संगृहीतः ।

वस्थितम् । पुनः कीदृशम् । देवं दानादिगुणयुक्तम् । पुनः कीदृशम् । होतारं ऋत्विजम् । देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव । तथा च श्रूयते— 'अग्निर्वै देवानां होता ' ( ऐब्रा. १२।३।१ ) इति । पुनरपि कीदृशम् । रत्नधातमं यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा । अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति–' अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवत्यग्निमीळे' ( नि. ७।१४ ) इति । तामेतामृचं यास्क एवं व्याख्यातवान्–' अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञश्च देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभो रत्नधातमं रमणीयानां धनानां दातृतमम् ' ( नि. ७।१५ ) इति । ऋसा.

वैश्वानरो जनाधारः सर्वाग्निमूलं च

**वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयन्ते ।**
**वैश्वानर नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययन्थ ॥**

'वयाः शाखा वेतेर्वातायना भवन्ति' (नि. १।४) इति यास्कः । हे अग्ने ये अन्ये अग्नयः सन्ति सर्वेऽपि ते तव वया इत् शाखा एव । ततस्त्वत्तोऽन्ये न सन्तीति भावः । किंच त्वे त्वयि सति विश्वे सर्वे अमृताः अमरणधर्माणो देवाः मादयन्ते हृष्यन्ति । न हि त्वद्व्यतिरेकेण तैर्जीवितुं शक्यते । हे वैश्वानर विश्वेषां नराणां जाठररूपेण संबन्धिन्नग्ने क्षितीनां मनुष्याणां नाभिः संनद्धा असि अवस्थापको भवसि । अतस्त्वं उपमित् उपस्थापयिता सन् । यद्वा । उपमित् इत्येतत् दृष्टान्तविशेषणम् । जनान् ययन्थ अधारयः । तत्र दृष्टान्तः । उपमित् उपनिखाता स्थूणेव । वंशधारणार्थं निखातः स्तम्भः यथा गृहोपरिस्थं वंशं धारयति तद्वत् । ऋसा.

द्यावापृथिव्योः पतिः

**मूर्धा दिवो नाभिरग्निः पृथिव्या अथाभवदरती रोदस्योः ।**
**तं त्वा देवासोऽजनयन्त देवं वैश्वानर ज्योतिरिदार्याय ॥**

अयं अग्निः दिवः द्युलोकस्य मूर्धा शिरोवत्प्रधानभूतो भवति । पृथिव्याः भूमेश्च नाभिः संनाहकः रक्षक इत्यर्थः । अथ अनन्तरं रोदस्योः द्यावापृथिव्योः अयं अरतिः अधिपतिः अभवत् । हे वैश्वानर तं तादृशं देवं दानादिगुणयुक्तं त्वा त्वां देवासः सर्वे देवाः आर्याय विदुषे मनवे यजमानाय वा ज्योतिरित् ज्योतीरूपमेव अजनयन्त उदपादयन् । मूर्तमस्मिन्धीयते इति मूर्धा ( नि. ७।२७ ) । ऋसा.

सर्ववसूनामाधारः

**आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि ।**
**या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा ॥**

अग्ना वैश्वानरे अग्नौ वसूनि धनानि आ दधिरे आहितानि स्थापितानि बभूवुः । तत्र दृष्टान्तः । ध्रुवासः निश्चलाः रश्मयः किरणाः सूर्ये न यथा सूर्ये आधीयन्ते तद्वत् । अतस्त्वं पर्वतादिषु यानि धनानि विद्यन्ते तस्य धनजातस्य राजा असि अधिपतिर्भवसि । ऋसा.

नृतमः = पुरुषोत्तमः

**बृहतीइव सूनवे रोदसी गिरो होता मनुष्यो न दक्षः ।**
**स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय यह्वीः ॥**

रोदसी द्यावापृथिव्यौ सूनवे स्वपुत्राय वैश्वानराय बृहतीइव प्रभूते इवाभूताम् । वैश्वानरस्य द्यावापृथिव्योः पुत्रत्वं मन्त्रान्तरे स्पष्टमवगम्यते–'उभा पितरा महयन्न-

(१) ऋसं. १।५९।१.

(१) ऋसं. १।५९।२. (२) ऋसं. १।५९।३.
(३) ऋसं. १।५९।४.

यास्केन 'वैश्वानरः कस्मात्' (नि. ७।२१) इत्यादिना बहुधा प्रपञ्चितम्। अत्र यदनुक्तं तत्सर्वं तत्रैवानुसन्धेयम्। ऋभा.

विश्वकृष्टि = सर्वजनात्मकः

[1]वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा।
शातवनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान्॥

वैश्वानरः अग्निः महिम्ना महत्त्वेन विश्वकृष्टिः। कृष्टिः इति मनुष्यनाम। विश्वे सर्वे मनुष्या यस्य स्वभूताः स तथोक्तः। भरद्वाजेषु पुष्टिकरहविर्लक्षणान्नवत्सु यागेषु यद्वा एतत्सञ्ज्ञेषु ऋषिषु यजतः यष्टव्यः विभावा विशेषेण प्रकाशयिता सूनृतावान्। सूनृता प्रिया सत्या वाक् तद्युक्तः। एवंभूतः अग्निः शातवनेये, शतसङ्ख्याकान् क्रतून् वनति सम्भजते इति शतवनिः तस्य पुत्रः शातवनेयः। तस्मिन् पुरुणीथे बहूनां नेतरि एतत्सञ्ज्ञके राजनि च शतिनीभिः बहुभिः स्तुतिभिः जरते स्तूयते। ऋसा.

भुवनानां राजा विश्वचक्षुः

[2]वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण॥

वैश्वानरस्य विश्वेषां नराणां लोकान्तरनेतृत्वेन स्वामित्वेन वा सम्बन्धिनोऽग्नेः सुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ स्याम अनुग्राह्यत्वेन वर्तमाना भवेम। हि कं इत्येतत् हिशब्दार्थे। स हि वैश्वानरः अभिश्रीः अभिश्रयणीयः आभिमुख्येन सेवितव्यः सन् भुवनानां सर्वेषां भूतजातानां राजा स्वामी भवति। यः वैश्वानरः अग्निः इतः अस्मादरणिद्वयात् जातमात्रः एव इदं सर्वं जगत् वि चष्टे विशेषेण पश्यति प्रातरुद्यता सूर्येण च यतते मयतते सङ्गच्छते। 'उद्यन्तं वावादित्यमग्निरनुसमारोहति' (तैब्रा. २।१।२।१०) इति तैत्तिरीयकम्। यद्वा। पार्थिवस्याग्नेस्तेजांस्युद्गच्छन्ति सूर्यकिरणाश्चाधोमुखं प्रसरन्ति। तयोः सङ्गमनं दृष्ट्वा 'वैश्वानरो यतते सूर्येण' इति ऋषिर्ब्रूते। तथा च यास्कः—'अमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः ससङ्गं दृष्ट्वा एवमवक्ष्यत्' (नि. ७।२३) इति। एवंभूतस्य महानुभावस्य वैश्वानरस्य सुमतौ स्यामेति सम्बन्धः। ऋसा.

सर्वव्यापक

[1]पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम्॥

अयं वैश्वानरः अग्निः दिवि द्युलोके आदित्यात्मना पृष्टः संस्पृष्टः यद्वा निषिक्तो निहितो वर्तते। तथा पृथिव्यां भूमौ गार्हपत्यादिरूपेण पृष्टः संस्पृष्टो निहितो वा। तथा विश्वाः सर्वाः ओषधीः पृष्टः संस्पृष्टः सः अग्निः आ विवेश पाकार्थमन्तः प्रविष्टवान्। अन्तःप्रविष्टेन पार्थिवेनाग्निना हि सर्वा ओषधयः पच्यन्ते। सहसा परेषामसाधारणेन बलेन पृष्टः संस्पृष्टः वैश्वानरः नः अस्मान् दिवा अह्नि रिषः हिंसतः शत्रोः पातु रक्षतु। तथा सः वैश्वानरः नक्तं रात्रावप्यस्मान् हिंसकात् पातु। ऋसा.

तत्पूजा सत्यफला

[2]वैश्वानर तव तत्सत्यमस्त्वस्मान्रायो मघवानः सचन्ताम्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥

हे वैश्वानर तव तत् त्वदीयं तत् अस्माभिः क्रियमाणं कर्म सत्यमस्तु अवितथफलं भवतु। ततः अस्मान् मघवानः मघवन्तः धनवन्तः रायः धनवदतिप्रियाः पुत्राः सचन्तां सेवन्ताम्। एवं यदस्माभिः प्रार्थितं नः अस्मदीयं तत्

(१) ऋसं. १।५९।७.

(२) ऋसं. १।९८।१; तैसं. १।५।११।३ हि कं (हिकं), कासं. ४।१६ (१३७), ६।१० (३४), ७।१६ (९२), मैसं. ४।११।१ (२०), शुसं. २६।७, ऐब्रा. २१।५।१२; नि. ७।२२।१.

(१) ऋसं. १।९८।२, तैसं. १।५।११।१; कासं. ४।१६ (१३८), ४०।३ (१३), मैसं. २।१३।११ (८६); शुसं. १८।७३, ऐब्रा. ३२।८।१; तैब्रा. ३।११।६।४; शब्रा. ९।५।२।६. (२) ऋसं. १।९८।३.

मित्रः अहरभिमानी देवः वरुणः रात्र्यभिमानी अदितिः अदीना देवमाता सिन्धुः स्यन्दनशीलोदकाभिमानी देवः। उतशब्दः समुच्चये। एते सर्वे मित्रादयः ममहन्ता पूजयन्तां पालयन्तामित्यर्थः। ऋसा.

देवाना मित्रवरुणार्यम्णा स्ववृत्तं अग्न्याधीनम्

**त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः।**
**यत्सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः॥**

हे अग्ने त्वया खलु वरुणः रात्र्यभिमानी देवः धृतव्रतः स्वीकृतवर्षणादिकर्मा भवति। तथा मित्रः अहरभिमानी देवः शाशद्रे शातयति तमः। तथा अर्यमा उभयोर्मध्यवर्ती देवः सुदानवः शोभनदानो भवति। यद्वा। एते वरुणादयः सुदानवः शोभनदानाः स्वस्वकार्यकर्तारस्त्वया हि शाशद्रे तीक्ष्णीक्रियन्ते। हिशब्दो मन्त्रान्तरप्रसिद्धिद्योतनार्थः। 'त्वमग्ने वरुणो जायसे' (ऋस. ५।३।१) इति हि मन्त्रान्तरम्। वरुणादीनामग्न्यायत्तत्वे उपपत्तिमाह — यत् यस्मात् कारणात् हे अग्ने सीं सर्वतः क्रतुना कर्मणा विश्वथा विश्व इव विश्वात्मक इव विभुः मित्रार्यमात्मना सर्वव्यापी परिभूः स्वतेजसा सर्वतः परिभाविता सन् अनुक्रमेण अजायथाः जायसे प्रादुर्भवसि। तत्र दृष्टान्तः। अरान् रथस्य शङ्कून् नेमिः न बाह्यवलय इव। स यथा व्याप्य तिष्ठति तद्वदयमग्निर्वरुणादीन् व्याप्य तिष्ठति। ऋसा.

सर्वत्र द्युजलवनादिष्वाविर्भवनशील·

**त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि।**
**त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः॥**

हे अग्ने अग्रणीत्वादिगुणविशिष्ट हे नृणा नृपते। नृणा मनुष्याणा मध्ये ये नरा यष्टारः सन्ति तेपा विशेषेण पालयितः। यद्वा उभाभ्या पदाभ्या बहुत्व नित्यस्वामित्वं च प्रतिपाद्यते। सर्वेषामपि नराणा नित्यपालकेत्यर्थः। नृणामित्यस्य निघाताभावश्छान्दसः। तादृश हे देव त्वं द्युभिः यागदिवसैर्निमित्तभूतैः जायसे यागार्थं मथनेन उत्पद्यस इत्यर्थः। यद्वा। तादृशैर्दिवसैः महितो जायसे। तत्तद्यागदिवसेषु प्रसिद्धो भवसीत्यर्थः। तथा त्व आशुशुक्षणिः जायसे आ सर्वतो दीप्यमानो भवसि। यद्वा। आशु शीघ्र शुच् दीप्तः सन् यतः ससेव्यते इति। आशु शुच शोक सनोति ददाति शत्रुभ्यो दाहादिना इत्याशुशुक्षणिः। तादृशो भवसि। एवं सर्वत्र प्रतिविशेषण जायस इति योज्यम्। हे अग्ने त्व अद्भ्यः वृष्ट्युदकेभ्यः जायसे वैद्युतरूपेण वाडवरूपेण वा समुद्रोदकेभ्यः। अश्मनः मेघात् पाषाणाद्वा परि जायसे। 'यो अश्मनोरन्तरग्निं जजान' (ऋस. २।१२।३) इति हि मन्त्रान्तरम्। त्व वनेभ्यः वृक्षादिसमूहेभ्यो दावरूपेण। त्वं ओषधीभ्यः वैश्वानररूपेण। एवं महानुभावस्त्व मथनेनोत्पन्नः सन् सर्वात्मको भवसीत्यर्थः। शुचिः एव जायसे। यद्वा। शुचिः आदित्यरूपः जायस इत्यर्थः। अत्र 'त्वमग्ने द्युभिरहोभिः' (नि. ६।१) इत्यादि निरुक्तमनुसन्धेयम्। ऋसा.

होत्रादिऋत्विज· गृहपतिश्च स एव

**तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः।**
**तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे॥**

हे अग्ने होत्र होतुः कर्म शस्त्रयाज्यादिलक्षण यदस्ति तदपि तव एव त्वदर्थमित्यर्थः। तथा पोत्र पोतुः कर्म यदस्ति तदपि तव एव। तथा ऋत्विय प्राप्तकालमार्त्विज्य तवैव। नेष्ट्र नेष्टुः कर्म प्रस्थितयाज्यादिरूप तव। हे अग्ने त्व अग्नित् आग्नीध्रश्च त्वमेवासि। तथा ऋतायतः यज्ञमिच्छतः तव एव प्रशास्त्र यत्प्रशास्तुर्मैत्रावरुणस्य कर्म तत्। हे अग्ने त्व अध्वरीयसि अध्वर यज्ञ कामयसे। अध्वर्युर्भवसीत्यर्थः। तथाध्वर्युशब्दव्युत्पत्तेः। 'अध्वर्युरध्वरयुरध्वर कामयत इति वा' (नि. १।८) इति हि निरुक्तम्। तथा ब्रह्मा ब्राह्मणा-

(१) ऋसं. १।१४१।९.

(२) ऋसं. २।१।१; तैसं. ४।१।२।५; कासं. १६।२ (२०) नृणा नृपते (नृभ्यो नृमणो), मैसं. २।७।२ (२९); शुसं. ११।२७; शब्रा. २।१४, नि. ६।१।१, १३।१।३.

(१) ऋसं.२।१।२, १०।९१।१०.

च्छस्यपि असि । तथा नो दमे अस्मद्गृहे गृहपतिश्च असीति ।

ऋसा.

इन्द्रो विष्णुर्ब्रह्मा ब्रह्मणस्पतिश्च सः

**त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः ।**
**त्वं ब्रह्मा रयिविद्ब्रह्मणस्पते त्वं विधर्तः सचसे पुरन्ध्या ॥**

हे अग्ने त्व यतः सतां वृषभः वर्षिता असि अतः इन्द्रः असि । यद्वा । सता साधूना इन्द्रोऽसि । कामाना वर्षिताऽसि । त्व विष्णुः असि । यतः उरुगायः बहुभिर्गीयमानः नमस्यः नमस्कार्यश्च भवसि । हे ब्रह्मणस्पते परिवृढस्य कर्मणो मन्त्रस्य वा पालयितः त्व यतः रयिवित् गवादिधनस्य वेत्ता अतः ब्रह्मा असि । हे विधर्तः विविधकारक वैश्वानररूपाग्ने पुरन्ध्या बहुप्रकारया बुद्धया सचसे सह वर्तसे सर्वदा बुद्धया स्तूयस इत्यर्थः ।

ऋसा

वरुणो मित्रोऽर्यमांशश्च सः

**त्वमग्ने राजा वरुणो धृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः ।**
**त्वमर्यमा सत्पतिर्यस्य संभुजं त्वमंशो विदथे देव भाजयुः ॥**

हे अग्ने त्व यतः धृतव्रतः धारितकर्मासि अतः वरुणः राजा असि । यतः दस्मः शत्रूणामुपक्षपयिता ईड्यः स्तुत्यश्च अतः मित्रः एतन्नामको देवोऽसि । यतः सत्पतिः सतामभिमतप्रदानेन पालयिता अतः अर्यमा भवसि । दातृत्व च अर्यम्णो लिङ्गम् । 'अर्यमेति तमाहुर्यो ददाति' (तैब्रा. १।१।२।४) इति । यस्य अर्यम्णः दान सभुज सततभुजं व्यापकं भवति । यद्वा । यस्य धन सभुज सम्यक् भोगाय साधु ग्रहीतॄणाम् । तथा त्व अंशः सूर्यमूर्त्यन्तरभूतः एतन्नामको देवोऽसि । तादृग हे देव विदथे अस्मदीये यज्ञे भाजयुः फलाना भाजयिता प्रापयितासि ।

ऋसा.

(१) ऋसं २।१।३. (२) ऋसं. २।१।४

त्वष्टा सर्वजनबलं च सः

**त्वमग्ने त्वष्टा विधते सुवीर्यं तव ग्नावो मित्रमहः सजात्यम् ।**
**त्वमाशुहेमा ररिषे स्वश्व्यं त्वं नरां शर्धो असि पुरूवसुः ॥**

हे अग्ने त्वष्टा फलस्य साधु सपादयिता त्व विधते परिचरते जनाय सुवीर्य शोभनवीर्य धनम् । तद्धेतुर्भवसि। ग्नावः याः स्तुतिवाचः सन्ति ताः तव स्वभूताः । हे मित्रमहः हितकारितेजः सजात्य अस्माकं बान्धव भजस इत्यर्थः । हे अग्ने आशुहेमा आशु प्रेरयिता त्व स्वश्व्य शोभनाश्वसमूहोपेत फल ररिषे ददासि । हे अग्ने पुरूवसुः प्रभूतधनः त्व नरां नराणा शर्धः बलस्थानीयः असि । ऋसा.

रुद्रो मरुतश्च पूषा च सः

**त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे ।**
**त्वं वातैररुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नु त्मना ॥**

हे अग्ने त्व महो दिवः महतो द्युलोकात् । उपलक्षणमेतत् । लोकत्रयात् । असुरः शत्रूणा निरसिता रुद्रः असि । रुद् दुःख दुःखहेतुर्वा पापादिः । तस्य द्रावयिता एतन्नामको देवोऽसि । 'रुद्रो वा एष यदग्निः' (तैसं. ५।४।३।१) इत्यादिष्वग्नेः रुद्रशब्देन व्यवहारात । यद्वा । त्व रुद्रः। रौति मामनिष्ट्वा नरा दुःखे पतिष्यन्तीति (इति) रुद्रः। तादृशोऽसि। 'रुद्रो रौतीति सतः' (नि. १०।५) इति हि निरुक्तम् । तथा महो महतो द्युलोकस्य सबन्धी असुरोऽसि । असुर्बलम् । तस्य दाता आदित्यरूपश्च त्वमसि । अग्नेर्द्युलोकसबन्ध्यसुरत्व 'उत वा दिवो असुराय मन्म' (ऋस. ५।४१।३) इत्यादिषु । तथा त्व मारुत शर्धः मरुत्समूहरूप बलमसि। वायुरूपश्च त्वमसीत्यर्थः । एव अग्न्यादित्यवायुरूपस्त्वम्। पृक्षः अन्नस्य हविर्लक्षणस्य त्व ईशिषे ईश्वरो भवसि । यस्मादेव तस्मात् त्व वातैः वायुसदृशैः अरुणैः अरुण-

(१) ऋस २।१।५.
(२) ऋस. २।१।६, तैसं. १।३।१४।१, तैब्रा ३।११।२।१

वर्णैरश्वैः शगयः सुखस्य गृहरूप आवासभूतः सन् यासि प्राप्नोषि यागगृहम् । यद्वा । अरुणैर्गमनशीलैर्वातैर्वायुभिः नुन्नः सन् यासि वने । तथा त्व पूषा सर्वस्य पोषकः सन् नु क्षिप्रं त्मना आत्मना अनुग्रहरूपया स्वबुद्ध्यैव विधतः परिचरतो यजमानान् पासि ।

ऋसा.

सविता भगश्च स

[१]त्वमग्ने द्रविणोदा अरंकृते त्वं देव सविता रत्नधा असि ।
त्वं भगो नृपते वस्व ईशिषे त्वं पायुर्दमे यस्तेऽविधत् ॥

हे अग्ने त्व अरंकृते त्वामलङ्कुर्वते यजमानाय द्रविणोदाः हिरण्यस्य दाता असि । देवः द्योतमानः सविता सर्वस्य सत्कर्मसु प्रेरकः त्व रत्नधाः रमणीयाना धनाना मणिमुक्तादीना धारयिता असि । तथा हे नृपते नृणा पालकाग्ने त्व भगः भजनीयः सन् वस्वः वसुनः धनस्य ईशिषे समर्थो भवसि दातुम् । यः यजमानः दमे यज्ञगृहे ते त्वा अविधत परिचरति तस्य पायुः पालकः त्व असि ।

ऋसा.

विश्पतिर्ज्ञानद सर्वोत्तमश्च स

[२]त्वामग्ने दम आ विश्पतिं विशस्त्वां राजानं सुविदत्रमृञ्जते ।
त्वं विश्वानि स्वनीक पत्यसे त्वं सहस्राणि शता दश प्रति ॥

हे अग्ने विश्पति यजमानानां पालकं त्वा विशः यजमानाः दमे स्वकीये यज्ञगृहे आ आसादयन्ति । उपसर्गवशात् योग्यक्रियाध्याहारः । तथा कृत्वा राजान दीप्यमान सुविदत्र शोभनज्ञानं अस्मदनुकूलचेतस्क सुधन वा त्वा ऋञ्जते प्रसाधयन्ति । 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः । यत एव ततो हे स्वनीक शोभनज्वालारूपसेन त्वं विश्वानि सर्वाणि । हवींषीति शेषः । षष्ठ्यर्थे द्वितीया । विश्वेषा हविषां आज्यसोमपुरोडाशादीना पत्यसे ईश्वरो भवसि । ईश्वरनामैतत् । 'इरज्यति पत्यते' ( नि. २।२१।२ ) इति तन्नामसु पाठात् । यद्वा पतिभावमाचरसि । त्वं तु सहस्राणि शता शतानि दश एतत्सख्याकानि प्रति । एतत्सख्याकानामभिमतसाधनाना प्रतिनिधिरित्यर्थः । तैर्यत्फल भवति तत्त्वया लभ्यत इत्यर्थः ।

ऋसा.

स पिता भ्राता पुत्रः सखा च

[१]त्वामग्ने पितरमिष्टिभिर्नरस्त्वां भ्रात्राय शम्या तनूरुचम् ।
त्वं पुत्रो भवसि यस्तेऽविधत्त्वं सखा सुशेवः पास्याधृषः ॥

हे अग्ने पितर पालक त्वा नरः नेतारो यजमानाः इष्टिभिः एषणसाधनैर्यागैर्यजन्त इति शेषः । पितृवत्पालनाय यजन्त इत्यर्थः । तथा तनूरुच शरीराणा दीपक शरीरेषु दीप्यमान वैश्वानरात्मना त्वा भ्रात्राय भ्रातृत्वाय सोभ्रात्राय शम्या । कर्मनामैतत् । कर्मणा यजन्त इति शेषः । यद्वा । उभयत्र वक्ष्यमाणेन 'अविधत्' इत्यनेन सबन्धः । हे अग्ने यः नरः ते त्वा अविधत् परिचरति तस्य त्व पुत्रो भवसि पुत्रवत्पालयिता भवसि । तथा त्व सखा समानख्यानः सखिवद्धितकारी सुशेवः । शेवमिति सुखनाम । सुष्ठु सुखकारी सन् आधृषः आधर्षकात्मा पासि रक्षसि । पितृत्वकामाय पितृत्वेन भ्रातृत्वकामाय भ्रातृत्वेन पुत्रत्वकामाय पुत्रस्थानीयो भवसि । त्रिप्रकारेण रक्षसीत्यर्थः ।

ऋसा.

ऋभुः प्रशस्तान्नपति यज्ञशिक्षयिता च सः

[२]त्वमग्न ऋभुराके नमस्यस्त्वं वाजस्य क्षुमतो राय ईशिषे ।
त्वं वि भास्यनु दक्षि दावने त्वं विशिक्षुरसि यज्ञमातनिः ॥

हे अग्ने त्व ऋभुः । उरुभासमानो मेधावी वा । त्वं आके अन्तिके सनिधावेव नमस्यः नमस्कार्यः । स्तुत्य इत्यर्थः । इतरदेवतावत् मन्त्रप्रतिपाद्याकारेण स्तुत्यो न भवसि किंतु प्रत्यक्ष इत्यर्थः । तथा त्वं क्षुमतः शब्दवतः सर्वत्र श्रूयमाणस्य वाजस्य अन्नस्य रायः धनस्य च ईशिषे स्वामी भवसि । अतस्तद्देहीत्यर्थः । हे अग्ने त्व वि भासि विशेषेण दीप्यसे । तदर्थं अनुक्रमेणैव धक्षि दहसि काष्ठादीन् । किमर्थमेवम् । दावने छेदनायान्धकारस्य । यद्वा । हविषो दानवते

(१) ऋसं. २।१।७. (२) ऋसं. २।१।८.

(१) ऋसं. २।१।९. (२) ऋसं. २।१।१०.

यजमानाय वा । किंच त्वं यज्ञ विशिक्षुः विशेषेण शिक्षयिता साधयिता असि । तथा आननिः फलस्य सर्वतो विस्तारयिता । ऋसा.

अदितिर्भारतीळा सरस्वती च सः

त्वमग्ने अदितिर्देव दाशुषे त्वं होत्रा भारती वर्धसे गिरा ।
त्वमिळा शतहिमासि दक्षसे त्वं वृत्रहा वसुपते सरस्वती ॥

हे अग्ने देव त्वं दाशुषे हविर्दत्तवते यजमानाय अदितिः अखण्डयिता परिपालयितासि । यद्वा। अदीना भूमिरसि । किंच त्वं होत्रा होमनिष्पादिका भारती भरतस्य आदित्यस्य आदित्यसंबन्धिनी रश्मिरूपा सती गिरा स्तुत्या वर्धसे प्रवृद्धो भवसि । किंच त्वं शतहिमा। हिमशब्दः कालोपलक्षकः । अपरिमितकाला नित्या इळा भूमिः असि । तादृशी सती दक्षसे दानाय समर्था भवसि । तथा हे वसुपते धनपालक वृत्रहा पापादेर्हन्ता त्वं सरस्वती सरणवान् वायुः । तत्संबन्धिनी एतन्नियामिका माध्यमिकासि । आदित्याग्निवायूनां संबन्धिन्यो भारतीळासरस्वत्याख्या यास्तिस्रो देव्यः सन्ति ता अपि त्वमेवेत्यर्थः । ऋसा.

सर्वश्रीणामाश्रय

त्वमग्ने सुभृत उत्तमं वयस्तव स्पार्हे वर्ण आ संदृशि श्रियः ।
त्वं वाजः प्रतरणो बृहन्नसि त्वं रयिर्बहुलो विश्वतस्पृथुः ॥

हे अग्ने त्वं सुभृतः सुष्ठु पोषितः सन् उत्तमं निरतिशयं वयः अन्नमायुष्यं वा त्वमसि तत्संपादकोऽसीत्यर्थः। तथा तव स्पार्हे स्पृहणीये वर्णे लोहितशुक्लादिलक्षणे संदृशि सम्यग्दर्शनीये श्रियः ऐश्वर्याणि कान्तयो वा आ आश्रित्य वर्तन्ते । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। किंच त्वं वाजः अन्नम् । तत्साधकत्वात्ताच्छब्द्यम् । अन्नसाधक इत्यर्थः । प्रतरणः प्रतारयिता पापात् । अत एव बृहन् महान् असि । तथा त्वं रयिः धनरूपोऽसि । बहुलः सर्वविषयबाहुल्योपेतः विश्वतः पृथुः विस्तीर्णः प्रख्यात इत्यर्थः । ऋसा.

(१) ऋसं. २।१।११ (२) ऋसं. २।१।१२.

सर्वदेवमुखं स

[१]त्वामग्न आदित्यास आस्यं त्वां जिह्वां शुचयश्चक्रिरे कवे ।
त्वां रातिषाचो अध्वरेषु सश्चिरे त्वे देवा हविरदन्त्याहुतम् ॥

हे अग्ने त्वा आदित्यासः अदितेः पुत्रा इन्द्रादयः आस्यं स्वकीयं मुखं भक्षणपानादिसाधनं चक्रिरे इति वक्ष्यमाणेन संबन्धः । तथा हे कवे क्रान्तप्रज्ञ त्वा एव शुचयः शुद्धा दीप्ता वा देवाः जिह्वा स्वकीयजिह्वास्थानीयं आस्वादनसाधनं चक्रिरे । त्वन्मुखेनैव भक्षयन्ति त्वज्जिह्वयैव आस्वादयन्तीत्यर्थः । तथा त्वा एव रातिषाचः । रातिर्दानं दत्तं हविरादि धनं वा । तेन समवेता देवाः अध्वरेषु यज्ञेषु सश्चिरे सेवन्ते त्वामेव प्रतीक्षन्ते विना त्वया स्वेषां हविर्भक्षणायोगात् । एवं कृत्वा त्वे त्वयि देवाः सर्वे आहुतं सर्वतो दत्तं हविरदन्ति भक्षयन्ति । एवं सर्वदेवोपकारिणं महानुभावं स्तौमीत्यर्थः । ऋसा.

देवानां मर्त्यानां च भोक्तृत्वकृत्

[२]त्वे अग्ने विश्वे अमृतासो अद्रुह आसा देवा हविरदन्त्याहुतम् ।
त्वया मर्तासः स्वदन्त आसुतिं त्वं गर्भो वीरुधां जज्ञिषे शुचिः ॥

हे अग्ने त्वे त्वयि विश्वे सर्वे अमृतासः अमरणधर्माणः अद्रुहः अद्रोग्धारः देवाः आसा त्वदीयेन आस्येन आहुतं हविरदन्ति भक्षयन्ति । तथा मर्तासः मनुष्या अपि त्वया साधनभूतेन आसुतिं रसरूपमन्नादिकं स्वदन्ते आस्वादयन्ति । त्वं एव वीरुधां लतादीनां गर्भः गर्भस्थानीयः तेषां मध्येऽवस्थानात् । वसुः (?) सर्वेषां निवासभूतः सन् जज्ञिषे उत्पादयसि सस्याद्यन्नम् । ऋसा.

सर्वदेवैः समबलोऽधिकश्च

[३]त्वं तान्त्सं च प्रति चासि मज्मनाग्ने सुजात प्र च देव रिच्यसे ।
पृक्षो यदत्र महिना वि ते भुवदनु द्यावापृथिवी रोदसी उभे ॥

(१) ऋसं. २।१।१३; तैब्रा. २।७।१२।६.
(२) ऋसं. २।१।१४. (३) ऋसं. २।१।१५.

हे अग्ने त्वं मज्मना बलेन तान् प्रसिद्धान् देवान् सं च आसि सगच्छासि । तैः सहितोऽपि भवसि । तथा सामर्थ्येन प्रति चासि । प्रत्येकं तैर्विभिन्नः प्रतिनिधिर्वा भवसि । प्रतिस्वीकारसमये तैः सहितो भवसि वियुक्तश्च भवसीत्यर्थः । हे सुजात शोभनजनन । मन्त्रसहितमथनेन उत्पन्नत्वात् अग्नेः सुजन्मत्वम् । तादृश अग्ने हे देव प्र रिच्यसे च । तैर्बलेन चाधिको भवसि । आधिक्ये कारणमाह – यत् यस्मात् अत्र अस्मिन् यज्ञे पृक्षः सर्वमप्यन्नम् । व्यत्ययेन बहुवचनम् । ते तवैव वि भुवत् समर्थं भवति महिना माहात्म्येन । यतो महत्त्वमस्ति अत इत्यर्थः । कुत्रेति तदुच्यते । रोदसी सर्वनिरोदनस्वभावे उभे द्यावापृथिव्यौ अनु । ते प्रति । तयोर्मध्ये व्याप्तमित्यर्थः । त्वयि हुतमन्नं त्वन्महत्त्वेन लोकत्रये व्याप्तमित्यर्थः । ऋसा.

स्तोतॄणां दातॄणां च श्रेष्ठलोकदः

[1]ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः ।
अस्मांश्च तांश्च प्र हि नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ॥

अनया होता स्तुतिनिगमव्याजेन अभिमतमाशास्ते । हे अग्ने सूरयः मेधाविनः प्रेरयितारो वा यजमानाः स्तोतृभ्यः स्तुतिकर्तृभ्यः गोअग्रा गावोऽग्रगामिन्यो यस्याः तादृशीं गोप्रमुखां अश्वपेशसम् । पेश इति रूपनाम । अश्वेन निरूपणीयाम् । एतद्द्वयं प्राधान्याभिप्रायम् । गौश्च अश्वश्च अजाश्चेति दक्षिणापरिगणनेषु गवाश्वयोः प्राथम्यात् । तादृशीं रातिं उपसृजन्ति ददते । तान् यजमानान् अस्मांश्च ऋत्विजः वस्यः वसीयः श्रेष्ठं स्वर्गादिस्थानं आ सर्वतः प्र हि नेषि प्रकर्षेण नयसि खलु । नयेत्यर्थः । हि प्रसिद्धौ । वयं च सुवीराः शोभनपुत्रादिसहिताः विदथे यज्ञे बृहत् महन्मन्त्रजातं वदेम उच्चारयामः स्तुम इत्यर्थः । ऋसा.

सर्वदेवपूज्य

[2]त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ॥

त्रीणि शता त्रीणि शतानि त्री सहस्राणि त्रीणि सहस्राणि त्रिंशच्च नव च एकोनचत्वारिंशदधिकशतत्रयोपेतात्रिसहस्रसंख्याकाः देवाः इमं अग्निं असपर्यन् अपूजयन् । किंच ते देवाः घृतैः इममग्निं औक्षन् असिञ्चन् । तथा अस्मै अग्नये तदर्थं बर्हिः अस्तृणन् बर्हिरुपास्तरणं वेद्याच्छादनमकुर्वन् । आदित् अनन्तरमेव ते देवास्तस्मिन्बर्हिषि एनमग्निं होतारं कृत्वा न्यसादयन्त उपावेशयन् । देवैः पूज्यमिममग्निं सपर्यतेति पूर्वेणान्वयः । देवसंख्या च बृहदारण्यकेऽभिहिता – 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति । कतमे ते त्रयस्त्रिंशदिति, अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशौ' (बृउ. ३।९।२) इति । ऋसा.

[1]मित्रश्च तुभ्यं वरुणः सहस्वोऽग्ने विश्वे मरुतः सुम्नमर्चन् ।
यच्छोचिषा सहसस्पुत्र तिष्ठा अभि क्षितीः प्रथयन्त्सूर्यो नॄन् ॥

सहस्वः बलवन् हे अग्ने मित्रश्च वरुणः च मित्रावरुणौ विश्वे मरुतः सर्वे देवाश्च तुभ्यं त्वदर्थं सुम्नं स्तोत्रं अर्चन् वहन्ति । यद्वा सर्वे देवास्तुभ्यं त्वा सुम्नं सुखेनार्चन् पूजयन्ति । यत् यस्मात् कारणात् सहसस्पुत्र हे अग्ने सूर्यः सुष्ठु अर्यः स्वामी । यद्वा सर्वान्तर्यामितया सुष्ठु प्रेरकः । यद्वा सूर्यः शोभनवीर्यः । अभि क्षितीः । क्षितिशब्दो मनुष्यवाची 'विशः क्षितयः' (नि. २।३।६) इति तन्नामसु पाठात् । मनुष्यानभिलक्ष्य नॄन् मार्गप्रदर्शकत्वेन नेतॄन् आत्मनो रश्मीन् प्रथयन् सर्वतो विस्तारयंस्त्वं शोचिषा दीप्त्या समानः सन् तिष्ठाः तिष्ठसि । तस्मादेते देवाः पूजयन्तीति । ऋसा.

सर्वेषां साक्षी सर्वव्यापकज्योतिश्च

[2]अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र ।

(१) ऋसं. २।१।१६.
(२) ऋसं. ३।९।९, १०।५२।६, शुसं ३३।७, तैब्रा. २।७।१२।२ त्री सह (त्रीषह) न्यसा (न्यषा).

(१) ऋसं. ३।१४।४
(२) ऋसं ३।२२।२, तैसं. ४।२।४।२, कासं. १६।११ (१२८) यदो ...... यजत्र (यत्पर्वतेष्वोषधीष्वप्सु), शुसं. १२।४८, शब्रा. ७।१।१।२३.

**येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥**

यजत्र यजनीय हे अग्ने दिवि द्युलोके यत् वर्चः आदित्याख्य यज्ज्योतिस्तत् ते तवैव ज्योतिः । पृथिव्या आहवनीयादिरूपतया वर्तमान यत्तेजस्तत्त्वदीयमेव । प्रसिद्ध तेजोऽभिधाय गूढं ज्योतिरभिधत्ते—यदोपधीष्वप्सु इति । ओपधीषु अरणिप्रभृतिषु काष्ठेपु यत् तेजः । यद्वा ओपधीषु वनस्पत्यादिपु सोमाख्य यत्तेजः, अप्सु जलेपु यदौर्वाख्यं तेजस्तत्सर्व आ सर्वत्र वर्तमान तेजः तावकमेव । किच येन वायुरूपेण तेजसा अन्तरिक्ष आकाश उरु आततन्थ आतेनिथ विस्तीर्ण कृतवानसि । त्वेषः दीप्तिमान् अत एव भानुः भासमानः नृचक्षाः नृणा साक्षितया द्रष्टा अर्णवः समुद्रवन्महान् । सः तादृशस्त्वमन्तरिक्षमातेनिथेति पूर्वेणान्वयः[1] । उक्तार्थे वाजसनेयकम्—'अग्ने यत्ते दिवि वर्च इत्यादित्यो वा अस्य दिवि वर्चः पृथिव्यामित्ययमग्निः पृथिव्या यदोपधीष्वप्स्वा यजत्रेति य एवौपधिपु चाप्सु चाग्निस्तमेतदाह येनान्तरिक्षमुर्वाततन्थेति वायुः स त्वेपः स भानुरर्णवो नृचक्षा इति महान्त्स भानुरर्णवो नृचक्षा इत्येतत्' (शब्रा. ७।१।१।२३) इति । ऋसा.

स्वात्मतया साक्षात्कृतपरमात्मरूप

**अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।**
**अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥**

साक्षात्कृतपरतत्त्वरूपः अग्निर्द्वचेन स्वात्मनः सर्वात्मकत्वानुभवमाविष्करोति । हे कुशिकाः । भोक्तृभोग्यभावेन द्विविध हीदं सर्व जगत् । 'एतावद्वा इदमन्न चैवान्नादश्च सोम एवान्नमग्निरन्नादः' (बृउ. १।४।६) इति श्रुतेः । तत्र सकलभोक्तृवर्गरूपेणान्नादोऽग्निः । स च अग्निवाय्वादित्यभेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्षद्युलोकानधितिष्ठति । तदुक्तं वाजसनेयके — 'स त्रेधात्मान व्यभजत । आदित्यं तृतीय वायुं तृतीयम्' (बृउ. १।२।३) इति । तत्र सः अग्निः अह जन्मना एव जातवेदाः अस्मि । श्रवणमननादिसाधननिरपेक्षेण स्वभावत एव साक्षात्कृतपरतत्त्वस्वरूपोऽस्मि । घृत मे चक्षुः । यदेतत् विश्वस्य विभासकं मम स्वभावभूतप्रकाशात्मक चक्षुस्तद्घृतम् । इदानीमत्यन्त दीप्तम् । यदेतत् अमृतं कर्मफल दिव्यादिव्यविविधविषयोपभोगात्मक तत् मे मम आसन् आस्ये वर्तते । सकलभोक्तृवर्गात्मना स्वयमेवावस्थानात् । एव स्वात्मनः पृथिव्यधिष्ठातृरूपता अभिधाय वाय्वात्मनाऽन्तरिक्षाधिष्ठातृतामाह—अर्कः जगत्स्रष्टा प्राणः । 'सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम्' (बृउ. १।२।१) इति श्रुतेः । स प्राणोऽह त्रिधातुः । त्रेधात्मान विभज्य तत्र वाय्वात्मना रजसः अन्तरिक्षस्य विमानः विमाता अधिष्ठाता अस्मि । तथादित्यरूपेण द्युलोकाधिष्ठातृतामाह—अजस्रो घर्म इति । अजस्रोऽनुपक्षीणो घर्मः प्रकाशात्मा द्युलोकाधिष्ठाता आदित्योऽहमस्मि । एव भोक्तृरूपमात्मनोऽनुसधाय भोग्यरूपतामपि अनुसधत्ते । यत् हविः भोग्य प्रसिद्धमस्ति तदप्यहमेव अस्मि । यद्वा । अहमग्निरस्मि देवाना हविष्प्रापणात् अङ्गनादिगुणयुक्तोऽस्मि । किच जन्मना उत्पत्त्या जातवेदा जातप्रज्ञोऽस्मि । उत्पत्तिक्षणे एव सर्वज्ञोऽहमस्मि । अथवा जात सर्व स्वात्मरूपतया वेत्तीति जातवेदाः । सर्वात्मक इत्यर्थः । तत्कथमित्युच्यते । घृत मे चक्षुः । यदेतद्घृत प्रसिद्धमस्ति तन्मे चक्षुःस्थानीयम् । यथा लोके चक्षुर्भासक एव घृत मयि प्रक्षिप्त ज्वालामुत्पादयन्मम भासकम् । अमृत प्रभारूप यदमृतमविनाशि ज्योतिर्मे ममासन् आस्ये वर्तते । त्रिधातुः प्राणापानव्यानात्मना त्रिधा वर्तमानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽपि अहमेवास्मि । तथा च रजसोऽन्तरिक्षस्य विमानो विशेषेण माता परिच्छेत्ता वायुश्चाहमस्मि । किच अजस्रो घर्मो नैरन्तर्येण सतापकारी सूर्यश्चाहमस्मि । कि बहुना आज्यपुरोडाशादिरूप यदेतद्धविरस्ति तदुपलक्षित सर्वमप्यहमस्मि । 'सर्वं खल्विद ब्रह्म' (छाउ. ३।१४।१) इति श्रुतेः । नामशब्दः प्रसिद्धौ । तदनेनाग्नेः सर्वात्मकत्वप्रतिपादनेन परब्रह्मत्वमुक्तं भवति । ऋसा.

(१) ऋसं. ३।२६।७; सास. १।६।३ उत्तरार्धे (त्रिधातुरर्को रजसो विमानोऽजस्रं ज्योतिर्हविरस्मि सर्वम्), मैस. ४।१२।५ (१३२); शुसं. १८।६६; नि. १४।२.

[1]त्रिभिः पवित्रैरपुपोद्ध्यर्कं हृदा मतिं ज्योतिरनु प्रजानन् ।
वर्षिष्ठं रत्नमकृत स्वधाभिरादिद्द्यावापृथिवी पर्यपश्यत् ॥

सर्वात्मकः अग्निः हृदा अन्तःकरणवृत्त्या मति मननीयं ज्योतिः स्वप्रकाशरूप परब्रह्माख्य तेजः अनु प्रजानन् श्रवणमननादिक्रमेण प्रकर्षेण संशयविपर्यासभावनाबुद्धिनिरासेन स्वात्मरूपतया जानानः सन् पवित्रैः पावनैः त्रिभिः अग्निवायुसूर्यैः अर्क अर्चनीय स्वात्मान अपुपोद्धि तेभ्योऽपि निर्मलतया पावन परिच्छिन्द्धि खलु । यथा दशापवित्रेण सोम पावयति तद्वत् । एव जानानोऽग्निः वर्षिष्ठ स्वात्मानमुत्तम स्वधाभिः, स्वेन लोकान् दधातीति स्वधा तैरग्निवायुसूर्यैः रत्न रमणीय अकृत अकार्षीत् । आदित् अनन्तरमेवमात्मनि ज्ञाते सति द्यावापृथिवी तत्र परिकल्पिते द्यावापृथिव्यौ तदुपलक्षित सर्व जगत् पर्यपश्यत् । परितः सर्वतः स्वात्मतया अदर्शत् । 'आत्मनि विज्ञाते सर्वमिद विज्ञात भवति' इति श्रुतेः । ऋसा.

शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम् ।
मेळि मदन्त पित्रोरुपस्थे त रोदसी पिपृतं सत्यवाचम् ॥

यस्मादुपाध्यायाद्विश्वामित्रो वैश्वानराख्यं परं ब्रह्मा ज्ञासीत्तमिममुपाध्यायमनयर्चा स्तौति । हे रोदसी द्यावापृथिव्यौ शतधार अपरिमितजलधारायुक्तं अक्षीयमाण न कदापि विच्छिन्नप्रवाह, उत्सम् । लुप्तोपममेतत् । उत्समिव सततप्रवाहोपेत स्रोत इवाविच्छिन्नवाक्सरणीसमेत विपश्चित मेधाविन सकलशास्त्राभिज्ञ पितर शिष्याणा विद्योपदेशेन पालकं वक्त्वाना वक्तव्याना वेदवाक्याना मेळि मेलक नानाशाखागताना वाक्यानामेकस्मिन्नर्थे सकलय्य वक्तार पित्रोः द्यावापृथिव्योः उपस्थे समीपे मदन्त ज्ञानातिशयेन हृष्यन्त अत एव सत्यवाच अज्ञातार्थाभावात्परप्रतारणे च कारणाभावात् सत्यवादिनम् । तं इममुपाध्यायं पिपृत अपेक्षितफलप्रदानेन सपूर्ण कुरुतम् । यद्वा पालयतम् । ऋसा.

(१) ऋसं. ३।२६।८, ९.

मनुष्यै सर्वदा स्तोतव्यः

[1]अरण्योर्निहितो जातवेदा गर्भइव सुधितो गर्भिणीषु ।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥

जातवेदाः सर्वविषयज्ञानवानयमग्निः अरण्योर्निहितः देवैर्यज्ञार्थं नितरा स्थापितोऽस्ति । अत्र दृष्टान्तः । गर्भइव इति । यथा गर्भः गर्भिणीषु स्त्रीषु सुधितः सुष्ठु निहितो वर्तते तद्वत् । स तादृशः अग्निः हविष्मद्भिः सभृतहविष्कैरत एव जागृवद्भिः कर्मणि जागरूकैः मनुष्येभिः मनुष्यैरस्माभिः दिवेदिवे प्रत्यहमुत्पत्त्यर्थं ईड्यः स्तुतिरूपाभिर्गीर्भिः स्तोतव्यः । ऋसा.

मर्त्येष्वाविष्टो महो देव

[2]चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश ॥

यद्यपि सूक्तस्याग्निसूर्यादिपञ्चदेवताकत्वात् पञ्चधाय मन्त्रो व्याख्येयस्तथापि निरुक्ताद्युक्तनीत्या यज्ञात्मकाग्नेः सूर्यस्य च प्रकाशकत्वेन तत्परतया व्याख्यायते । अस्य यज्ञात्मकस्याग्नेः चत्वारि शृङ्गा चत्वारो वेदाः शृङ्गस्थानीयाः । यद्यपि आपस्तम्बेन 'यज्ञ व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते' (परिभा. १।३) इत्युक्त तथाप्याथर्वणस्य इतरानपेक्षयैव एकाग्निसाध्याना कृत्स्नकर्मणामभिधायकत्वात्तदपेक्षया चत्वारि शृङ्गेत्युक्तम् । त्रयो अस्य पादाः सवनानि त्रीण्यस्य पादाः । प्रवृत्तिसाधनत्वात्पादा इत्युच्यन्ते । द्वे शीर्षे ब्रह्मौदन , प्रवर्ग्यश्च । इष्टिसोमप्राधान्येनेदमुक्तम् । सप्त हस्तासः सप्त छन्दासि । हस्ताः अनुष्ठानस्य मुख्यसाधनम् । छन्दास्यपि देवताप्रीणनस्य मुख्यसाधनमिति हस्तव्यवहारः । त्रिधा बद्धः मन्त्रब्राह्मण-

(१) ऋसं. ३।२९।२, सासं. १।१।८ गर्भइव सुधितो गर्भिणीपु (गर्भ इवेत्सुभृतो गर्भिणीभि ); कौउ. २।४।८.

(२) ऋसं. ४।५८।३, कासं. ४०।७ (४४), मैसं १।६।२ (२८) त्रिधा (त्रेधा) मर्त्यां आ विवेश (मर्त्यं आततान), शुसं. १७।९१, गोब्रा. १।२।१६; तैआ. १०।१०।२; नि.१३।७।१.

कल्पैः त्रिप्रकार बद्धः। बन्धनमस्य तन्निष्पाद्यम्। वृषभः फलानां वर्षिता रोरवीति भृश शब्दायते। ऋग्यजुःसामोक्थैः शस्त्रयागस्तुतिरूपैर्होत्राद्युत्पादितैर्ध्वनिभिरसौ रौति। एव महो देवः मर्त्यान् आ विवेश। मर्त्यैर्यजमानैर्निष्पाद्यत्वात् प्रवेश उपचर्यते। अत्र यास्कः— 'चत्वारि शृङ्गेति वेदा वा एत उक्ताः' (नि. १३।७) इत्यादिना निरवोचत्। तदत्रानुसधेयम्। अथ सूर्यपक्षे व्याख्यायते—अस्यादित्यस्य चत्वारि शृङ्गाणि चतस्रो दिशः। एताः श्रयणार्थत्वात् शृङ्गाणीत्युपचर्यन्ते। त्रयो अस्य पादाः। त्रयो वेदाः पादस्थानीयाः भवन्ति गमनसाधनत्वात्। तथा हि 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' इत्युपक्रम्य 'वेदैरशून्यस्त्रिभिरेति सूर्यः' (तैब्रा. ३।१२। ९।१) इति हि वेदत्रयेण गतिराम्नाता। द्वे शीर्षे। अहश्च रात्रिश्चेति द्वे शिरसी। सप्त हस्तासो अस्य। सप्त रश्मयः षड् विलक्षणा ऋतवः एकः साधारण इति वा सप्त हस्ता भवन्ति। त्रिधा बद्धः त्रिषु स्थानेषु क्षित्यादिषु अग्न्याद्यात्मकत्वेन सबद्धः। ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिस्त्रेधा बद्धो वा। वृषभो वर्षिता रोरवीति शब्द करोति वृष्ट्यादिद्वारा। स महो महान् देवो मर्त्यान् आ विवेश तन्नियन्तृतया। 'सूर्य आत्मा जगतस्तस्थुषश्च' (ऋस. १।११५।१) इति हि श्रुतम्। एव त्वबादिपक्षेऽपि योज्यम्। शाब्दिकास्तु शब्दब्रह्मपरतया 'चत्वारि शृङ्गेति चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च' इत्यादिना व्याचक्षते। अपरे त्वपरथा। तत्सर्वमत्र द्रष्टव्यम्। ऋसा.

[चत्वारि शृङ्गा इति वेदा वा एतदुक्ताः। त्रयो अस्य पादा इति त्रीणि सवनानि। द्वे शीर्षे इति प्रायणीयोदयनीये। सप्त हस्तास इति सप्त छन्दांसि। तस्मात्सप्तार्चिषः सप्त समिधः सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त। त्रिधा बद्ध इति त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः। ऋषभो रौरवीति रौरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिरथर्वभिः। यदेनमृग्भिः शसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति अथर्वभिर्जपन्ति। महो देव इति महादेवो मर्त्यां आविवेश मनुष्याणा तस्योत्तरा भूयांसि निर्वचनाय॥

चत्वारि शृङ्गा चतुर्मुखाश्चतुर्वेदाश्चतुर्युगा अग्नयश्चत्वारोऽभवन्। स्वयं कैलासपर्वतो नाम एको भवति तदेकशृङ्ग द्विशृङ्ग दशशृङ्ग द्वादशशृङ्गं विंशशृङ्ग द्वाविंशशृङ्ग त्रिंशशृङ्ग द्वात्रिंशशृङ्ग शतशृङ्गं सहस्रशृङ्गं कोटिशृङ्ग अनन्तशृङ्ग मेरुशृङ्ग स्फाटिकशृङ्ग पितृशृङ्ग मनुष्यशृङ्ग द्वादशादित्याना पूर्वापार मुनयो वदन्ति। सर्वमायुः सर्वमेत्यायुः सर्वमेति य एव वेद॥

कब्रा. ३ (पृ. २५–२७)

चत्वारि शृङ्गेति वेदा वा एत उक्ताः। त्रयो अस्य पादा इति सवनान्येव। द्वे शीर्षे इति ब्रह्मौदनप्रवर्ग्यावेव। सप्त हस्तासो अस्येति छन्दांस्येव। त्रिधा बद्ध इति मन्त्रः कल्पो ब्राह्मणम्। वृषभो रोरवीत्येष ह वै वृषभ एष तद्रोरवीति यद्यज्ञेषु शस्त्राणि शसति ऋग्भिर्यजुर्भिः सामभिर्ब्रह्मभिरिति। महो देवो मर्त्या आविवेशेत्येष ह वै महान् देवो यद्यज्ञ एषु मर्त्या आविवेश। गोब्रा. १।२।१६]

सर्वदेवमय.

**त्वमग्ने वरुणो जायसे यत्त्व मित्रो भवसि यत्समिद्धः।**
**त्वे विश्वे सहसस्पुत्र देवास्त्वमिन्द्रो दाशुषे मर्त्याय॥**[1]

हे अग्ने त्वं वरुणः तमसा वारको रात्र्यभिमानी देवोऽपि त्वमेव यत् यदा जायसे। किंच त्व मित्रः अहरभिमानी देवः प्रमीतेस्त्राता यत् यदा समिद्धः। त्वमुत्पन्नमात्रः सन् तमो निवारयसि प्रवृद्धः सन् हितकारी भवसीत्यर्थः। त्वे त्वयि विश्वे सर्वेऽपि देवाः वर्तन्ते। त्वद्दत्तेन हविषा तेषा जीवनात्। 'ते देवा बिभ्यतोऽग्निं प्राविशन्' (तैस. ६।२।२।६) इति हि श्रुतेः। हे सहसस्पुत्र बलेन मथ्यमानत्वात्। किंच त्व इन्द्रः स्वामी दाशुषे हविर्दात्रे मर्त्याय यजमानाय। ऋसा.

**त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन्गुह्यं बिभर्षि।**
**अञ्जन्ति मित्रं सुधित न गोभिर्यद्दम्पती समनसा कृणोषि॥**[2]

हे अग्ने त्वमर्यमा भवसि। सर्वेषां नियमिताऽसि। यत् यदा कनीना कन्यकाना संबन्ध्यसि। किंच हे स्वधावन् हविर्लक्षणान्नवन् गुह्य गोपनीयं नाम

(१) ऋसं. ५।३।१; ऐब्रा. २९।१०।१४.
(२) ऋसं. ५।३।२–५.

बिभर्षि, वैश्वानर इति तन्नाम । सुधित सुष्ठु निहितं मित्र न मित्रमिव त्वां गोभिः । विकारे प्रकृतिशब्दः । गोविकारैः क्षीरादिभिः अञ्जन्ति । यत् यस्मात् दम्पती जायापती समनसा समानमनस्कौ कृणोषि करोषि । ऋसा.

**तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम् ।**
**पद यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम् ॥**

अनयाऽग्नेर्माध्यमिकी मूर्तिरुच्यते । हे अग्ने तव श्रिये श्रयणाय मरुतः अपः अन्तरिक्ष्याः मर्जयन्त मार्जयन्ति । हे रुद्र वृष्ट्या रुद्रवद्वर्धितरग्ने ते तव यत् जनिम जन्म वैद्युतलक्षण चारु चरणीय चित्र चायनीयं च । तत्कथमिति चेदुच्यते । विष्णोः व्यापनशीलस्य देवस्य उपम गुह्यं अगम्य यत् पद निधायि । अनेनान्तरिक्षमुक्तम् । 'उपमेयमिव विष्णोर्मध्यम पद तस्मान्नान्तरिक्ष पश्यन्ति' इति ब्राह्मणम् । तेन गोना उदकाना गुह्य नाम नामानि पासि रक्षसि । ऋसा.

**तव श्रिया सुदृशो देव देवाः पुरू दधाना अमृत सपन्त ।**
**होतारमग्निं मनुषो नि षेदुर्दशस्यन्त उशिजः शंसमायोः ॥**

हे देव अग्ने सुदृशः तव श्रिया समृद्धया देवाः इन्द्रादयः पुरु अत्यधिकं दधानाः त्वयि प्रीतिं धारयन्तः अमृत सपन्त स्पृशन्ति । होतार होमनिष्पादक अग्नि मनुषः मनुष्याः नि षेदुः परिचरन्ति ऋत्विजः । किं कुर्वन्तः । दशस्यन्तः हविर्वितरन्तः शसं फल उशिजः कामयमानस्य आयोः मनुष्यस्य यजमानस्यार्थम् । ऋसा.

**न त्वद्धोता पूर्वो अग्ने यजीयान्न काव्यैः परो अस्ति स्वधावः ।**
**विशश्च यस्या अतिथिर्भवासि स यज्ञेन वनवद्देव मर्तान् ॥**

हे अग्ने त्वत् त्वत्तोऽन्यः न अस्ति होता पूर्वः पूरकः पुराणो वा यजीयान् यष्टा वा । काव्यैः स्तोत्रैः स्तुत्यः परः परस्तात् परस्मिन्नपि काले न अस्ति । हे देव हे स्वधावः अन्नवन् यस्याः विशः प्रजाया ऋत्विग्रूपायाः अतिथिः भवासि अतिथिवत्पूज्यः भवसि । सः यज्ञेन मर्तान् अस्मद्द्वेष्टॄन् वनवत् वृश्चति हिनस्ति । यद्वा । मर्तान् परिचारकान् वनवत् सभजेत् । ऋसा.

विश्वसृक् विश्वज्योतिश्च

[1] **वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना ।**
**तस्येदु विश्वा भुवनाधि मूर्धनि वयाइव रुरुहुः सप्त विस्रुहः ॥**

वैश्वानरस्य विश्वनरहितस्याग्नेः चक्षसा तेजसा अमृतस्य उदकस्य केतुना प्रज्ञापकेन दिवः द्युलोकस्य सानूनि समुच्छ्रितस्थलानि नक्षत्ररूपाणि विमितानि निर्मितानि । यद्वा । दिवोऽन्तरिक्षस्य सानूनि समुच्छ्रितप्रदेशा मेघात्मका विमितानि निर्मिताः । धूमविकारत्वात्तेषाम् । तस्येदु तस्यैव वैश्वानरस्य मूर्धनि मूर्धस्थानीय उपरि वर्तमाने धूमे मेघात्मना परिणते विश्वा विश्वानि व्याप्तानि भुवना भुवनान्युदकानि अधि वसन्ति । यद्वा । वैश्वानरात्मकस्य परब्रह्मणो मूर्धन्युपरिप्रदेशे सर्वाणि भूतजातान्यधिवसन्ति । तथा वयाः शाखाः इव सप्त सर्पणशीलाः सप्तसख्याः वा विस्रुहः नद्यश्च गङ्गाद्याः रुरुहुः रोहन्ति । अस्मादेव वैश्वानरात् प्रादुर्भवन्ति । आहुतिद्वारा सकल जगदग्नेः सकाशादुत्पद्यत इत्यर्थः । ऋसा.

[2] **वि यो रजांस्यमिमीत सुक्रतुर्वैश्वानरो वि दिवो रोचना कविः ।**
**परि यो विश्वा भुवनानि पप्रथेऽदब्धो गोपा अमृतस्य रक्षिता ॥**

सुक्रतुः सुकर्मा वैश्वानरः विश्वेषा नराणा हितः यः अग्निः रजासि उदकानि लोकान् वा वि अमिमीत निर्मितवान् । तथा दिवः द्युलोकस्य सबन्धीनि रोचना रोचमानानि दीप्यमानानि नक्षत्रादीनि कविः क्रान्तदर्शी सन् योऽग्निः वि अमिमीत । यः च विश्वा सर्वाणि भुवनानि भूतजातानि व्याप्तान्युदकानि वा परि पप्रथे परितोऽप्रथयत् सोऽयं अदब्धः केनाप्यहिंसितः गोपाः सर्वस्य गोपायिता रक्षिता अमृतस्य अमरणहेतोरुदकस्य रक्षिता पालयिता सन् वर्तत इति शेषः । ऋसा.

(१) ऋसं. ६।७।६. (२) ऋसं. ६।७।७.

तमोनाशक

**अहश्च कृष्णमहरर्जुनं च विवर्तेते रजसी वेद्याभिः ।
वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥**

आहरति पुरुषोऽस्मिन् कर्माणीति अहः । कृष्णं कृष्णवर्णम् । एतत्सामानाधिकरण्यादहःशब्दो रात्रिवचनः । तमसा कृष्णवर्णा रात्रिः च अर्जुनं च सौरेण तेजसा शुक्लवर्णं अहः दिवसश्च रजसी स्वस्वभासा सर्वं जगद्रञ्जयन्तौ वेद्याभिः वेदितव्याभिरनुकूलतया ज्ञातव्याभिः स्वप्रवृत्तिभिः वि वर्तेते विविधं पर्यावर्तेते । यद्वा । रजसी द्यावापृथिव्यौ । उपलक्षणमेतत् । लोकत्रयं प्रत्यावर्तेते । एतच्च वैश्वानराग्नेराज्ञया इति शेषः । स हि देवतात्वेनात्र प्रतिपाद्यः । स च वैश्वानरः अग्निः जायमानो न राजा प्रादुर्भवन् प्रवर्धमानः राजेव ज्योतिषा तेजसा तमांसि अवातिरत् । अवतिरतिर्वधकर्मा । अवतिरति विनाशयति । ऋसा.

अमृतरक्षिता उभयलोकस्थितो यज्ञवित्

**नाहं तन्तुं न वि जानाम्योतुं न यं वयन्ति समरेऽतमानाः ।
कस्य स्वित्पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥**

वैश्वानरस्य महत्त्वमाख्यास्यन्नृषिस्तदर्थं यज्ञं वस्त्रात्मकतया रूपयन् तस्य दुर्ज्ञानत्वमनया प्रतिपादयतीति यज्ञवादिनो मन्यन्ते । तन्तुं तन्तवः पटस्य प्रागायतानि सूत्राणि । तानि च यज्ञात्मकस्य वस्त्रस्य गायत्र्यादीनि छन्दांसि स्तुतशस्त्राणि च । तानि अहं न वि जानामि । तथा ओतुं, ओतवस्तिरश्चीनानि सूत्राणि । तानि चात्र यजूंष्याध्वर्यवाणि कर्माणि च । तान्यहं न वि जानामि । अपि चैतदुभयसाध्यं तं पटं यज्ञलक्षणं न वि जानामि यं पटं यज्ञलक्षणं समरे संगमने देवयजने अतमानाः सततं चेष्टमाना ऋत्विजः वयन्ति तन्तूनोतूंश्च संतन्वन्ति । वस्त्ररूपेण निष्पादयन्ति इत्यर्थः । इह अस्मिन् लोके कस्य स्वित् । स्विदिति वितर्के । कस्य खलु पुत्रः मनुष्यः वक्त्वानि वक्तव्यानि तानीमानि परः परस्तादमुष्मिन् लोके वर्तमानो यः सूर्यस्तस्य पित्रा अवरेण अवस्तात् अस्मिन् लोके वर्तमानेन वैश्वानराग्निनानुशिष्टः सन् वदाति वदेत् । न कश्चिदपि प्रवदितुं शक्नोतीत्यर्थः । एतच्च संप्रदायविद्भिरुक्तं—'वैश्वानरस्य पुत्रोऽसौ परस्ताद्दिवि यः स्थितः । छन्दांस्यवरवस्त्रस्य स्तुतशस्त्राणि तन्तवः ॥ यजूंषि चेष्टाश्चौतुः स्यादस्त्र वातव्यमध्वरः । परः परः स्थितः सूर्यः पिताऽग्निः पार्थिवो मतः ॥' इति । रूपकतया जगत्स्रष्टुर्दुर्ज्ञानत्वमनया प्रतिपादयतीत्यात्मविदो मन्यन्ते । तन्तुं तन्तून् तन्तुस्थानानि सूक्ष्माणि वियदादीन्यपञ्चीकृतानि भूतानि न विजानामि । ओतुमोतून् पञ्चीकृतानि स्थूलान्योतुस्थानीयान्यपि वियदादीनि न विजानामि । न च तत्कार्यं पटस्थानीयं प्रपञ्चं विजानामि यं प्रपञ्चं समरे तन्तूनामोतूनां च संगमनेऽतमानाः सततं चेष्टमानाः संसारिणो वयन्ति उत्पादयन्ति । तेषां भोगार्थमीश्वरः सृजतीति कर्तृत्वमुपचर्यते । इह अस्मिन्विषये परः परस्तात् बुद्धेरविषये वर्तमानानि वक्त्वानि वक्तव्यानीमान्यवरेणार्वाचीनेन सृष्ट्युत्तरकालमुत्पन्नेन पित्रा स्वजनकेनानुशिष्टः सन् कस्य खलु पुत्रो वदाति वदेत् । स्वोत्पत्तेः प्राचीनवृत्तान्तमजानानः कश्चिदपि न वदेदित्यर्थः । ऋसा.

**स इत्तन्तुं स वि जानात्योतुं स वक्त्वान्यृतुथा वदाति ।
य ईं चिकेतदमृतस्य गोपा अवश्चरन्परो अन्येन पश्यन् ॥**

यद्यपि उक्तेन प्रकारेण दुर्ज्ञानानि तथाप्येतानि वैश्वानरोऽग्निः जानाति वदति चेत्यनया प्रतिपादयति । स इत् स एव वैश्वानरोऽग्निः तन्तुं तन्तुस्थानीयानि गायत्र्यादीनि छन्दांसि स्तुतशस्त्राणि वि जानाति, तथा सः एव ओतुं ओतुस्थानीयानि यजूंष्याध्वर्यवाणि च कर्माणि वि जानाति । ऋतुथा काले काले तत्तदनुष्ठानसमये वक्त्वानि वक्तव्यानि च तानि वदाति वदेत् । यः अयं वैश्वानरः अमृतस्य गोपाः उदकस्य गोपायिता रक्षिता अवः अवस्तात् भूलोके चरन् पार्थिवाग्निरूपेण संचरन् परः परस्ताद्दिवि अन्येन सूर्यात्मना पश्यन् सर्वं जगत्

(१) ऋसं. ६।९।१, ऐब्रा. २२।१०।५; शाब्रा. २३।८, नि २।२९।१. (२) ऋसं. ६।९।२.

(१) ऋसं. ६।९।३.

प्रकाशयन् ई इमानि परिदृश्यमानानि सर्वाणि भूतानि चिकेतत् जानाति स एवेति पूर्वत्र सबन्धः । यद्वा । स इत् स एव तन्तु ,तन्तुस्थानीयानि सूक्ष्मभूतानि वि जानाति नान्यः कश्चित् । तथैतुमोतुस्थानीयानि स्थूलभूतानि च स एव वि जानाति । स एव वक्त्वानि वक्तव्यान्युपदेष्टव्यानीमान्यृतुथा काले काले यदा यदा विद्यासप्रदायोच्छेदस्तदा तदा वदाति वदेत् । कोऽसौ, यो विजानीयाद्वदेच्चेत्यत आह । यो वैश्वानरो विश्वनरात्मकः परमात्माऽमृतस्यामृतत्वस्य विमोक्षणस्य गोपा रक्षिता अवः अवस्तात् ससारदशाया चरन् अन्तःकरणोपेतः जीवात्मभावेन संचरन् परः परस्ताद्विद्याया ऊर्ध्वं वर्तमानेनान्येनोक्तविलक्षणेन निरुपाधिकेन सच्चिदादिलक्षणेन रूपेण पश्यन् सर्वं जगत् प्रकाशयन् ईमिमानि चिकेतत् जानाति । तथा च परमात्मान प्रकृत्य श्रूयते— 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिद विभाति' (श्वेउ. ६।१४) इति । ऋसा.

अमृतं ज्योतिर्मर्त्येषु स्थितं तन्वा वर्धमानं च

**अयं होता प्रथमः पश्यतेममिद ज्योतिरमृत मर्त्येषु ।**
**अयं स जज्ञे ध्रुव आ निषत्तोऽमर्त्यस्तन्वा वर्धमानः ॥**

अय वैश्वानरोऽग्निः प्रथमः आद्यः होता । मानुषो हि होता द्वितीयः । हे मनुष्याः तं इम पश्यत भजतेत्यर्थः । मर्त्येषु मरणस्वभावेषु शरीरेषु अमृत मरणरहित इद वैश्वानराख्य ज्योतिः जाठररूपेण वर्तत इत्यर्थः । अपि च सः अयं अग्निः ध्रुवः निश्चलः आ समन्तात् निषत्तः निषण्णः सर्वव्यापी अत एव अमर्त्यः मरणरहितोऽपि तन्वा शरीरेण संबन्धात् जज्ञे जायते । वर्धमानः च भवतीति उपचर्यते । ऋसा.

सर्वदेवाभिलक्ष्यमिन्द्रियमनसयोरन्तर्ज्योतिः वाङ्मनसयोरगोचरश्च स

**ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः ।**
**विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यन्ति साधु ॥**

ध्रुव निश्चल मनः मनसः तस्मादपि जविष्ठ अतिशयेन वेगवत् ईदृश वैश्वानराख्य ज्योतिः पतयत्सु गच्छत्सु जङ्गमेषु प्राणिषु अन्तः मध्ये निहित प्रजापतिना स्थापितम् । किमर्थम् । दृशये कम् । दर्शनार्थम् । किच विश्वे सर्वे देवाः च समनसः समानमनस्काः सकेताः समानप्रज्ञाश्च सन्तः एक मुख्य गन्तार वा क्रतु कर्मणा कर्तार साधु सम्यक् अभि वि यन्ति आभिमुख्येन विविधं प्राप्नुवन्ति सेवन्त इत्यर्थः । यद्वा । पतयत्सु गच्छत्सु प्राणिष्वन्तर्मध्ये हृदये मनो जविष्ठ मनसोऽप्यतिशयेन वेगयुक्त ध्रुव निश्चल निर्विकल्पम् । तथा च वाजसनेयकम्—'अनेजदेकं मनसो जवीयः' (शुस. ४०।४) इति । ज्योतिः ब्रह्मचैतन्य निहितम् । न केनचित् स्थापितम् । 'यो वेद निहित गुहाया परमे व्योमन्' (तैआ. ८।१) इति हि श्रूयते । किमर्थम् । दृशये दर्शनार्थम् । ज्ञानेन हि सर्वं जानन्ति । अपि च दीव्यन्तीति देवा इन्द्रियाणि । विश्वे सर्वे देवाः सर्वाणीन्द्रियाणि चक्षुराद्याः समनसो मनसा सह वर्तमानाः सकेताः सतेजस्काः सन्त एकमद्वितीय क्रतु सृष्ट्यादीनां कर्मणा कर्तार विश्वनरात्मकं परमात्मानमभिलक्ष्य साधु सम्यक् वि यन्ति विविध गच्छन्ति । देवा एव वेममभि वि यन्ति । आभिमुख्येन विविधमुपयन्ति । उपासत इत्यर्थः । तथा च श्रूयते— 'तद्देवा ज्योतिषा ज्योतिरायुर्होपासतेऽमृतम्' (बृउ. ४।४।१६) इति । ऋसा.

**वि मे कर्णा पतयतो वि चक्षुर्वीद ज्योतिर्हृदय आहितं यत् ।**
**वि मे मनश्चरति दूरआधी. किं स्विद्वक्ष्यामि किमु नू मनिष्ये ॥**

वैश्वानरं श्रोतुकामस्य मे मम कर्णा कर्णौ वि पतयतः विविध गच्छतः । श्रोतव्यानां तदीयगुणाना बहुत्वात् । तथा वैश्वानर दिदृक्षमाणस्य मम चक्षुः इन्द्रियं वि पतयति विविध गच्छति । द्रष्टव्याना तदीयरूपाणां बहुत्वात् । तथा ज्योतिः प्रकाशकं हृदये हृदयपुण्डरीके आहित निहित यत् बुद्ध्याख्यं तत्त्व इदमपि वि पतयति विविध गच्छति वैश्वानरात्मान ज्ञातुम् । अपि च दूरआधीः । दूरे विप्रकृष्टे विषय आधीराध्यान यस्य

(१) ऋसं. ६।९।४. (२) ऋसं. ६।९।५.

(१) ऋसं. ६।९।६.

तादृशम् । छान्दसो लिङ्गव्यत्ययः । मे मदीय मनः च वि चरति विविध प्रवर्तते । एवमहमहमिकया सर्वेष्विन्द्रियेषु प्रवृत्तेषु कि स्वित् अह वैश्वानरस्य रूपमिति वक्ष्यामि । किमु नु किमु खलु सप्रति मनिष्ये मनसा प्रपत्स्ये । वैश्वानरस्य गुणानामनन्तत्वात् मन्दप्रज्ञेन मया ज्ञातु न शक्यत इत्यर्थः । ऋसा.

सर्वदेवनमस्योऽप्रमेयश्च

[1]विश्वे देवा अनमस्यन्भियानास्त्वामग्ने तमसि तस्थिवांसम् ।
वैश्वानरोऽवतूतये नोऽमर्त्योऽवतूतये नः ॥

हे वैश्वानर तमसि अन्धकारे तस्थिवास स्थितवन्त त्वां विश्वे सर्वे देवाः अनमस्यन् नमस्कुर्वन्ति । कुतो हेतोः । भियानाः अन्धकाराद् भीताः । तादृशः अमर्त्यः मरणरहितः वैश्वानरः अग्निः नः अस्मान् ऊतये ऊत्या रक्षणेन अवतु रक्षतु । पुनरुक्तिरादरार्था । ऋसा.

सर्वज्ञ

[2]आ दैव्यानि व्रता चिकित्वाना मानुषस्य जनस्य जन्म ॥

दैव्यानि देवेषु भवानि व्रता व्रतानि कर्माणि चिकित्वान् आ समन्तात् जानन् । तथा मानुषस्य जनस्य मनुष्यजातस्य जन्म उत्पत्तिरूपं कर्म चिकित्वान् (आ) आभिमुख्येन जानन् ।

ऋसा.

[3]एता चिकित्वो भूमा नि पाहि देवानां जन्म मर्ताश्च विद्वान् ॥

हे चिकित्वः । 'चिकित्वाश्चेतनावान्' (नि. २।११) इति यास्कः । हे चेतनावन् सर्वज्ञाग्ने त्वं देवाना इन्द्रादीना जन्म जन्मानि मर्तान् मनुष्यान् च विद्वान् जानन् एता एतानि भूम भूम्युपलक्षितानि भूतजातानि नि पाहि नितरा पालय । यतस्त्वं देवमनुष्यादीन् सर्वान् जानासि अत एवमुच्यसे इत्यर्थः । ऋसा.

[4]विष्णुर्गोपाः परमं पाति पाथः प्रिया धामान्यमृता दधानः ।
अग्निष्टा विश्वा भुवनानि वेद महद्देवानामसुरत्वमेकम् ॥

विष्णुः व्याप्तः गोपाः सर्वस्य गोपायिता प्रिया प्रियतमानि अमृता क्षयरहितानि धामानि तेजांसि दधानः सोऽग्निः परम पाथः स्थान पाति रक्षति । यद्वा । धामानि लोकधारकाणि अमृता उदकानि दधानः सन् परम पाथः उदकस्य स्थानमन्तरिक्ष पाति । सः अग्निः ता तानि विश्वा सर्वाणि भुवनानि भूतजातानि वेद जानाति । ऋसा.

[1]स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते ।
विद्वाँ आरोधनं दिवः ॥

सः अग्निः होता देवानामाह्वाता भवति । सेदु स एवाग्निः दूत्य देवाना दूतकर्म चिकित्वान् जानन् दिवः स्वर्गस्य आरोधन आरोहण आरोहणार्हं देवाना स्थानं च विद्वान् जानन् अन्तः द्यावापृथिव्योर्मध्ये ईयते गच्छति । ऋसा.

[2]अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः ।
देवानामुत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावा ॥

होता देवानामाह्वाता राजा राजमानः सः अग्निः गृहपतिः गृहाणा पतिरधिपतिर्भवति । तथा विश्वा विश्वानि सर्वाणि जनिम जन्मानि जन्मवन्ति भूतजातानि जातवेदाः जातप्रज्ञः सन् वेद वेत्ति जानाति । यः अग्निः देवाना इन्द्रादीना उत अपि च मर्त्याना मनुष्याणा च मध्ये यजिष्ठः अतिशयेन यष्टा भवति । ऋतावा, ऋत सत्य यज्ञो वा, तद्वान् सः अग्निः प्र यजता प्रकर्षेण देवान् यजतु । ऋसा.

पापिना हन्ता

[3]न्यक्रतून् ग्रथिनो मृध्रवाचः पणीँरश्रद्धाँ अवृधाँ अयज्ञान् ।
प्रप्र तान्दस्यूँरग्निर्विवाय पूर्वश्चकारापराँ अयज्यून् ॥

(१) ऋसं. ६।९।७. (२) ऋसं. १।७०।२.
(३) ऋसं. १।७०।६. (४) ऋसं. ३।५५।१०.

(१) ऋसं. ४।८।४; कासं १२।१५ (५३)
(२) ऋसं. ६।१५।१३, मैसं. ४।१३।१० (७७), ऐब्रा .१७।१४, ८, २२।३।१४; शाब्रा. २३।३, तैब्रा. ३।५।१२।१. (३) ऋसं. ७।६।३.

अक्रतून् अयज्ञान् ग्रथिनः जल्पकान् मृध्रवाचः हिंसितवचस्कान् पणीन् पणिनामकान् वार्धुषिकान् अश्रद्धान् यज्ञादिषु श्रद्धारहितान् अवृधान् स्तुतिभिरग्निमवर्धयतः अयज्ञान् यज्ञहीनान् तान् दस्यून् वृथा कालस्य नेतॄन् अग्निः प्रप्र अत्यन्त नि विवाय नितरा गमयेत्। तदेवाह। अग्निः पूर्वः मुख्यः सन् अयज्यून् अयजमानान् अपरान् जघन्यान् चकार। ऋसा.

उपासकस्य तद्भावविषयोऽद्वैतरूपेण

**यॅदग्ने मर्त्यस्त्वं स्यामहं मित्रमहो अमर्त्यः।**
**सहसः सूनवाहुत ॥**

हे सहसः सूनो बलस्य पुत्र आहुत घृतैरभिहुत हे मित्रमहः अनुकूलदीप्तिमन् अग्ने मर्त्यः मरणधर्मा अह यत् यदि त्व स्या त्वदुपासनया त्वद्रूपमापन्नो भवेयम्। 'ये यथायथोपासते ते तदेव भवन्ति' इति श्रुतेः। तर्ह्यह अमर्त्यः मरणरहितो देव एव भवेयमिति। ऋसा.

देवभक्तसंबन्ध·

**नॅ त्वा रासीयाभिशस्तये वसो न पापत्वाय सन्त्य।**
**न मे स्तोतामतीवा न दुर्हितः स्यादग्ने न पापया॥**

हे वसो वासकाग्ने त्वा त्वा अभिशस्तये आभिशसनाय मिथ्यापवादाय हिंसायै वा न रासीय नाक्रोशयेयम्। हे सन्त्य सभजनीयाग्ने पापत्वाय त्वा न रासीय। मे मदीयः स्तोता चानभिमतवचनेन त्वा न आक्रोशयतु। अत एव अमतीवा, अमातिरशोभना बुद्धिः, तद्वान्। अपि च दुर्हितः शत्रुः हे अग्ने अस्माकं न स्यात् न भवतु। अत एव पापया अशोभनया बुद्ध्या सः न बाधताम्। ऋसा.

**त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः।**
**त्वां वर्धन्तु नो गिरः॥**

हे अग्ने त्वां मनीषिणः मनस ईश्वराः स्तोतारः स्तुतिभिः स्तुवन्तीति शेषः। किंच त्वा एव चित्तिभि; कर्मभिः हिन्वन्ति प्रीणयान्ति। नः अस्माक गिरः स्तुतयः त्वां एव वर्धन्तु वर्धयन्तु। ऋसा.

(१) ऋसं. ८।१९।२५.
(२) ऋसं. ८।१९।२६.
(३) ऋसं. ८।४४।१९; कासं. ४०।१४ (१३३.).

**ॲदब्धस्य स्वधावतो दूतस्य रेभतः सदा**
**अग्नेः सख्यं वृणीमहे ॥**

हे अग्ने अदब्धस्य केनाप्यहिंसितस्य स्वधावतः बलवतः दूतस्य देवानां रेभतः देवान् स्तुवतः तव सख्य सदा वय वृणीमहे। ऋसा.

**अॅग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः।**
**शुची रोचत आहुतः॥**

शुचिव्रततमः अतिशयेन शुद्धकर्मा शुचिः शुद्ध एव विप्रः मेधावी शुचिः शुद्धः सन्नेव कविः क्रान्तकर्मा शुचिः एव आहुतः अग्निः रोचते प्रकाशते। ऋसा.

**उॅत त्वा धीतयो मम गिरो वर्धन्तु विश्वहा।**
**अग्ने सख्यस्य बोधि नः॥**

उत अपि च हे अग्ने त्वा त्वा मम धीतयः कर्माणि गिरः स्तुतयश्च विश्वहा सर्वदा वर्धन्तु वर्धयन्तु। नः अस्माकं सख्यस्य सख्य सखिकर्म स्तुत्यादिकं बोधि बुध्यस्व। ऋसा.

**यॅदग्ने स्यामहं त्व त्व वा घा स्या अहम्।**
**स्युष्टे सत्या इहाशिषः॥**

हे अग्ने यत् यदि अहं त्व बहुधनः स्या भवेय त्वं वा घ त्व वा खलु अहं दरिद्रः स्तोता स्याः भवेः ततस्तव आशिषः आशासनानि इह अस्मद्विषये सत्याः सत्यानि स्युः भवेयुः। ऋसा.

**वॅसुर्वसुपतिर्हि कमस्यग्ने विभावसुः।**
**स्याम ते सुमतावपि॥**

हे अग्ने त्व विभावसुः दीप्तिधनः वसुपतिः धनपतिः वसुः वासयिता च असि भवसि हि यस्मादतो वय अपि ते तव सुमतौ अनुग्रहबुद्धौ स्याम भवेम। ऋसा.

(१) ऋस. ८।४४।२०, कासं. ४०।१४ (१३४).
(२) ऋसं. ८।४४।२१; तैसं. १।३।१४।८, १।५।५।३, कासं. ४०।१४ (१३५) शुचि कवि. (शुचिष्कविः); मैसं. १।५।१ (१३) रोचत (रोचता), ऐब्रा. ३।२।७।३; शब्रा. १२।४।४।५.
(३) ऋसं. ८।४४।२२.
(४) ऋसं. ८।४४।२३.
(५) ऋसं. ८।४४।२४, तैसं. १।४।४६।२.

[1]अग्ने धृतव्रताय ते समुद्रायेव सिन्धवः ।
गिरो वाश्रास ईरते ॥

हे अग्ने धृतव्रताय धृतकर्मणे ते तुभ्यं वाश्रासः वाशनशीलाः गिरः मम स्तुतयः सिन्धवः नद्यः समुद्रायेव यथा समुद्राय तथा ईरते प्रवर्तन्ते । ऋसा.

[2]युवानं विश्पतिं कविं विश्वादं पुरुवेपसम् ।
अग्निं शुम्भामि मन्मभिः ॥

युवानं नित्यतरुणं विश्पतिं विशां पतिं कविं क्रान्तकर्माणं विश्वादं सर्वस्य हविषोऽत्तारं पुरुवेपसं बहुकर्माणम् । 'वेशः वेपः' इति कर्मनामसु पाठात् । अग्निं मन्मभिः मननीयैः स्तोत्रैः शुम्भामि शोभयामि । ऋसा.

विभु, सर्वान्तर, विश्ववित्, अमृतश्च

[3]सं जागृवद्भिर्जरमाण इध्यते दमे दमूना इषयन्निळस्पदे ।
विश्वस्य होता हविषो वरेण्यो विभुर्विभावा सुषखा सखीयते ॥

हे अग्ने जागृवद्भिः जागरणशीलैः स्तोतृभिः जरमाणः स्तूयमानः दमूनाः दममना दानमना दान्तमना वा इळः इळायाः पदे स्थाने उत्तरवेद्या इषयन् अन्नमिच्छन् विश्वस्य सर्वस्य हविषः होता वरेण्यः वरणीयः विभुः व्याप्तः विभावा दीप्तिमान् सुषखा शोभनसखा भवान् सखीयते सखित्वमिच्छते यजमानाय स इध्यते सम्यग्दीप्यते । ऋसा.

[4]स दर्शतश्रीरतिथिर्गृहेगृहे वनेवने शिश्रिये तक्ववीरिव ।
जनंजनं जन्यो नाति मन्यते विश आ क्षेति विश्यो विशंविशम् ॥

दर्शतश्रीः दर्शनीयविभूतिः अतिथिः अतिथिभूतः सः अग्निः गृहेगृहे यजमानानां गृहेषु वनेवने सर्वेषु वनेषु च शिश्रिये श्रयति । किंच जन्यः जनहितः सोऽग्निः जनंजनं सर्वं जनं तक्ववीरिव गच्छन्निव नाति मन्यते न विसृज्य गच्छतीत्यर्थः । तदेव दर्शयति । विश्यः विड्भ्यो हितः सोऽग्निः विशो मनुष्यान् आ क्षेति अभिगच्छति । किंच विशंविशं सर्वा विशः प्रजाः अधितिष्ठतीति शेषः । ऋसा.

[1]सुदक्षो दक्षैः क्रतुनासि सुक्रतुरग्ने कविः काव्येनासि विश्ववित् ।
वसुर्वसूनां क्षयसि त्वमेक इद् द्यावा च यानि पृथिवी च पुष्यतः ॥

हे अग्ने त्वं दक्षैः बलैः सुदक्षः सुबलः असि भवसि । किंच क्रतुना कर्मणा सुक्रतुः शोभनकर्माऽसि । किंच काव्येन मेधाविकर्मणा कविः मेधावी असि । किंच विश्ववित् सर्वज्ञोऽसि । किंच वसूनां धनानां वसुः वासयिताऽसि । किंच हे अग्ने त्वमेक इत् एक एव क्षयसि निवससि । किंच द्यावा च पृथिवी च द्यावाभूमी यानि वसूनि पुष्यतः संवर्धयतः तेषां दिव्यानां पार्थिवानां च धनानामीशिषे इत्यर्थः । ऋसा.

[2]यस्तुभ्यमग्ने अमृताय मर्त्यः समिधा दाशदुत वा हविष्कृति ।
तस्य होता भवसि यासि दूत्यमुप ब्रूषे यजस्यध्वरीयसि ॥

हे अग्ने अमृताय मरणधर्मरहिताय तुभ्यं यः मर्त्यः मनुष्यः समिधा समिधम् । द्वितीयायाः 'सुपां सुलुक्०' इत्याकारः । दाशत् ददाति प्रयच्छति उत वा अपि वा हविष्कृति, हविषा कृत् करणं यस्मिन् स हविष्कृत् । तस्मिन्यज्ञे हवींषि ददातीति शेषः । तस्य मनुष्यस्य होता देवानामाह्वाता भवसि । किंच त्वं दूत्यं देवान् प्रति दूतकर्म कर्तुं यासि गच्छसि । किंच त्वं ब्रह्मा भूत्वास्मिन् कर्मणि युष्मभ्यमिमानि हवींषि यजमानेन प्रहितानीति उप ब्रूषे उपक्रम्य ब्रवीषि । किंच त्वं यजसि यजमानो भूत्वा देवेभ्यो हवींषि ददासि । किंच त्वं तथा पूर्वोक्तप्रकारेण अध्वरीयसि अध्वर्युरिवाचरसि । अथवाऽन्यं यज्ञं कर्तुमिच्छसि । ऋसा.

(१) ऋसं. ८।४४।२५.
(२) ऋसं. ८।४४।२६. (३) ऋसं. १०।९१।१.
(४) ऋसं. १०।९१।२.

(१) ऋसं. १०।९१।३.
(२) ऋसं. १०।९१।११.

बहुरूपै कृत्स्नं जगदनुप्रविष्ट.

**[1]ये अग्नयो अप्स्वन्तर्ये वृत्रे ये पुरुषे ये अश्मसु। य आविवेशोषधीर्यो वनस्पतींस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥**

अप्सु उदकेषु अन्तः मध्ये ये अग्नयः वाडवाद्याः सन्ति ये वा अग्नयो वृत्रे आवरणस्वभावे मेघे वैद्युतादिरूपेण विद्यन्ते। 'तत् को वृत्रः? मेघ इति नैरुक्ताः' (नि. २।१६) इति यास्कवचनात् वृत्रशब्दो मेघवाची। यद्वा वृत्रे वृत्रासुरशरीरे अन्तरवस्थिता ये अग्नयः सन्ति तथा पुरुषे मानुषशरीरे अशितपीतपरिणामहेतुत्वेन ये अग्नयो वैश्वानरात्मना वर्तन्ते ये वा अग्नयः अश्मसु सूर्यकान्तादिशिलासु अन्तर्वर्तन्ते तथा योऽग्निः ओषधीः व्रीहियवादिरूपाः फलपरिपाकार्थं आविवेश यश्च वनस्पतीन् वृक्षान् आविवेश तेभ्यः सर्वजगदनुग्राहकेभ्यः अग्निभ्यः एतत् प्रदीयमान हविः हुतं अस्तु दत्तं भवतु। एक एवाग्निः स्वविभूतिरूपैरन्यैरग्निभिः कृत्स्न जगत् अनुप्रविश्य पोषयतीति तस्य बहुत्वेन स्तुतिः। असा.

**[2]यः सोमे अन्तर्यो गोष्वन्तर्य आविष्टो वयःसु यो मृगेषु।**
**य आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥**

सोमे लतारूपे अमृतमयरसपरिपाकाय योऽग्निः अन्तराविष्टः प्रविष्टः यश्च गोषु। उपलक्षण एतत्। गोमहिषादिषु ग्राम्यपशुषु योऽग्निः अन्तः प्रविष्टः पक्व पयः करोति। तथा वयःसुः पक्षिषु यः अग्निः अनुप्रविष्टः तथा यो मृगेषु हरिणादिषु अनुप्रविष्टः। किं बहुना। योऽग्निः द्विपदः पादद्वयोपेतान् मनुष्यादीन् योऽग्निः चतुष्पदः पादचतुष्टयोपेतान् अन्यानपि प्राणिनः जाठरात्मना आविवेश। उक्त हि भगवता—'अहं वैश्वानरो भूत्वा प्राणिना देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥' इति (भ. गी. १५।१४)। तेभ्य इत्यादि पूर्ववत्। असा.

**[1]यं इन्द्रेण सरथं याति देवो वैश्वानर उत विश्वदाव्यः।**
**यं जोहवीमि पृतनासु सासहिं तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥**

यो देवः दानादिगुणयुक्तोऽग्निः इन्द्रेण सरथ समानरथ एक रथ आरुह्य याति गच्छति। अनयोः समानरथत्वं च 'य इन्द्राग्नी चित्रतमो रथो वाम्' (ऋस. १।१०८।१) इति मन्त्रान्तरे स्पष्ट अवगतम्। यश्चाग्निः वैश्वानरः विश्वनरहितः उत अपि च विश्वदाव्यः विश्वदावसबन्धी विश्वस्य दाहको दावाग्निः तथा पृतनासु सङ्ग्रामेषु सासहि अत्यर्थं अभिभवितार य आथर्वणप्रसिद्ध साङ्ग्रामिक अग्नि जोहवीमि जयार्थं चोदितैर्हविर्भिः पुनःपुनर्जुहोमि। यद्वा युद्धसाहाय्यार्थं पुनःपुनराह्वयामि। तेभ्य इत्यादि गतम्। असा.

विश्वभक्षक दातृप्रतिग्रहीत्रादिरूप. कामस्वरूपश्च

**[2]यो देवो विश्वाद् यमु काममाहुर्य• दातारं प्रतिगृह्णन्तमाहुः।**
**यो धीरः शक्रः परिभूरदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥**

यो देवः दानादिगुणयुक्तः अग्निः विश्वात् विश्व सर्व अत्ति भक्षयतीति विश्वात्। य उ। उशब्दः अवधारणे। यमेवाग्नि काम कामयितार काम्यमानफलात्मक वा आहुः कथयन्ति तथा य अग्नि दातारं

(१) असं ३।२१।१, कासं. ४०।३ (१२) (यो अप्स्वन्तरग्निर्यो वृत्रे य. पुरुषे यो अश्मनि। य आविवेश भुवनानि विश्वा तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥); मैसं. २।१३।१३ (१०) पूर्वार्धे (यो अप्स्वन्तराग्निर्यो वृत्रे यः पुरुषे यो अश्मनि।) ओषधी (औषधी), गोब्रा २।२।१२.

(२) असं. ३।२१।२, कासं. ४०।३ (१४) गोष्वन्तर्य आविष्टो वय.सु (गोष्वन्तर्वयःसि य आविवेश), मैसं. २।१३।१३ (११) कासंवत्.

(१) असं ३।२१।३; कासं. ४०।३ (१७पू, १६ उत्त.) पूर्वार्धे (येनेन्द्रस्य रथं संबभूवुर्वैश्वानर उत विश्वदाव्यः।), मैसं. २।१३।१३ (१२ पू, १३ उत्त) पूर्वार्धे (येनेन्द्रस्य रथं संबभूवुर्यो वैश्वानर उत विश्वदाव्यै।).

(२) असं ३।२१।४; कासं. ४०।३ (१६ पू, १७ उत्त) पूर्वार्धे (हुतादमग्नि यमु काममाहुर्यं दातारं प्रतिग्रहीतारमाहुः।) यो धीर• (धीरो य), मैसं. २।१३।१३ (१३ पू, १२ उत्त) पूर्वार्धे (विश्वादमग्निं यमु कामाहुर्यं दातारं प्रतिग्रहीतारमाहु।) यो धीरः (धीरो य.).

इष्टफलस्य प्रदातारं प्रतिगृह्णन्त प्रतिग्रहीतारं च आहुः कथयन्ति यश्चाग्निः धीरः धीमान् शक्रः सर्वकार्येषु शक्तः। परिभूः शत्रूणां परिभविता अदाभ्यः केनचिदपि अहिंस्यः। तेभ्य इत्यादि गतम्। असा.

मन.संवेद्य

[1]यं त्वा होतारं मनसाभि संविदुस्त्रयोदश भौवनाः पञ्च मानवाः।
वर्चोधसे यशसे सूनृतावते तेभ्यो अग्निभ्यो हुतमस्त्वेतत्॥

हे अग्ने यं त्वा त्वा होतारं देवानां आह्वातारं मनसा बुद्ध्या अभि संविदुः आभिमुख्येन संविदन्ति सम्यग् जानन्ति। के पुनस्ते इत्याह। त्रयोदश, त्रयश्च दश च त्रयोदश। त्रयोदशसंख्याका भौवनाः। भवन्ति सत्ता लभन्ते अस्मिन् भूतजातानीति भुवनः संवत्सरः। तत्संबन्धिनश्चैत्राद्या मासा भौवनाः। ते हि संसर्पांहस्पत्याख्येन अधिमासेन सह त्रयोदश भवन्ति। 'अस्ति त्रयोदशो मास इत्याहुः' (तैस. ६।५।३।४) इति हि ब्राह्मणम्। तथा मानवाः मनुना सृष्ट्यादौ कल्पिता वसन्ताद्याः पञ्चर्तवः। हेमन्तशिशिरयोः समासाभिप्रायमेतत्। यद्वा। 'विश्वकर्मन् भौवन मा दिदासिथ' (ऐब्रा. ३९। ७।१०), 'विश्वकर्मा भौवनः स्वात्मनि सर्वाणि भूतानि जुहवांचकार' (नि. १०।२६) इत्यादिश्रुत्यन्तरप्रसिद्धा भुवनाख्यस्य महर्षेः पुत्रा विश्वकर्मप्रभृतयस्त्रयोदशसंख्याकाः। पञ्च मानवाः निषादपञ्चमाश्चत्वारो वर्णाः। गन्धर्वाप्सरसो देवा असुरा रक्षांसि इत्येके। एवमात्मकाः सर्वे त्वां अभि संविदुरिति संबन्धः। तस्मै वर्चोधसे वर्चः तेजः दधाति धारयति प्रयच्छतीति वा वर्चोधाः। यशसे यशस्विने। यद्वा व्याप्नुवते। सूनृतावते, प्रियसत्यात्मिका वाक् सूनृता, तद्वते एवंभूताय तुभ्यं तेभ्यः प्रागुक्तेभ्यः त्वद्विभूतिरूपेभ्यः अग्निभ्यश्च। गतमन्यत्। असा.

हविर्भोक्ता

[2]उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे।
वैश्वानरज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत्॥

उक्षान्नाय। उक्षाणः सेचनसमर्था वृषभाः। ते हविरात्मना अन्नं यस्य स तथोक्तः, तस्मै। वशान्नाय, वशा वन्ध्या गावः, ता अन्नं यस्य तस्मै। सोमपृष्ठाय हूयमानः सोमः पृष्ठे उपरिभागे यस्य स सोमपृष्ठः तस्मै। वेधसे आहुतिद्वारेण सर्वस्य जगतो विधात्रे। स्मर्यते हि— 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥' (मस्मृ. ३।७६) इति। तेभ्यो वैश्वानरज्येष्ठेभ्यः। एकः उक्षान्नः, अपरो वशान्नः, अन्यः सोमपृष्ठः, ते सर्वे वैश्वानरज्येष्ठाः। विश्वनरहितो जाठररूपेणावस्थितोऽग्निः ज्येष्ठः अग्रजो येषाम्। स खलु जीवदवस्थायामपि उक्षादिशरीरं अनुप्रविश्य भुङ्क्ते। सज्ञपनोत्तरकालं अन्येषामग्नीनां भोग इति ज्यायस्त्वकनीयस्त्वभावः। तेभ्य इत्यादि गतम्। असा.

सर्वान्त.संचारी

[1]दिवं पृथिवीमन्वन्तरिक्षं ये विद्युतमनुसंचरन्ति।
ये दिक्ष्वन्तर्ये वाते अन्तस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत्॥

दिवं द्युलोकं पृथिवीं भूलोकं अन्तरिक्षं अन्तरा क्षान्तं द्यावापृथिव्योर्मध्यवर्तिनं लोकं च अनुप्रविश्य ये अग्नयः संचरन्ति। ये च विद्युतं मेघस्थितां तडितं विद्योतमानं ज्योतिश्चक्रं वा अनुप्रविश्य संचरन्ति। ये चाग्नयः लोकत्रयव्यापिकासु दिक्षु अन्तः मध्ये वर्तन्ते। ये च वाते वायौ सर्वजगदाधारभूते सूत्रात्मनि अन्तः संचरन्ति। तेभ्य इत्यादि गतम्। असा.

सर्वमर्त्यहृत्सु प्रविष्टोऽमृतः

[2]यो नो अग्निः पितरो हृत्स्वन्तराविवेशामृतो मर्त्येषु।
मय्यहं तं परि गृह्णामि देवं मा सो अस्मान् द्विक्षत मा वयं तम्॥

(१) अस. ३।२१।५.

(२) असं. ३।२१।६; कासं. ४०।५ (२४). मैसं. २।१३। १३ (९४, ९५) वेधसे+ (स्तोमैर्विधेमाग्नये), गोब्रा. २।२।२०.

(१) असं. ३।२१।७.

(२) असं १२।२।३३; तैसं. ५।७।९।१ (यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्यां आविवेश। तमात्मन्परिगृह्णीमहे वयं मा सो अस्माँ अवहाय परा गात्॥); कासं. ७।१२ (५०) (यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो

हे पितरः पालका अस्मच्छरीरगता भूतेन्द्रियविशेषा अमर्त्यो मरणरहितो योऽग्निः हृत्स्वन्तः हृदयाद्यवयवेषु मध्ये मर्त्यान् मरणयोग्यान् अस्मान् आविवेश सर्वतः प्रविष्टः त अग्नि वय आत्मन् परिगृह्णीमहे स्वशरीर एव स्थिरं धारयामः । सोऽग्निरस्मानवहाय परित्यज्य मा परागात् अन्यत्र मा गच्छतु । तैसा. ५।७।९।१

[१]दिवस्पृथिव्याः पर्यन्तरिक्षाद् वनस्पतिभ्यो अध्योषधीभ्यः ।
यत्रयत्र विभृतो जातवेदास्तत स्तुतो जुषमाणो न एहि ॥

द्युलोकादीनि अग्नेरुत्पत्तिस्थानानि । दिवः द्युलोकात् पृथिव्याः भूमेः । अन्तरिक्षात् अन्तरा क्षान्तात् मध्यमलोकात् । वनस्पतिभ्यः पुष्पैर्विना फलद्भ्यो वृक्षेभ्यः, ओषधीभ्यः, ओषः पाको धीयत आसु इति ओषध्यः फलपाकान्ताः ताभ्यश्च । द्युलोकादिभ्य उत्पन्नो जातवेदाः जातानि वेत्ति जातैर्विद्यते ज्ञायते इति वा जातवेदाः, यत्रयत्र यस्मिन्यस्मिन् स्थाने विभृतः विशेषेण पूर्णो वर्तते । यद्वा विभृतो विहृतो विभक्तो वर्तते ततस्ततः तेभ्यः सर्वेभ्यः स्थानेभ्यः नः अस्मान् जुषमाणः । अन्तर्भावितण्यर्थः । जोषयमाणः प्रीणयन् । अस्मत्प्रीणनाद्धेतोः एहि आगच्छ । असा.

[२]यस्ते अप्सु महिमा यो वनेषु य ओषधीषु पशुष्वप्स्वन्तः ।
अग्ने सर्वास्तन्वः सं रभस्व ताभिर्न एहि द्रविणोदा अजस्रः ॥

हे अग्ने ते तव यो महिमा अप्सु उदकेषु वर्तते । अग्नेरुदकप्रवेशः श्रूयते ' सोऽपः प्राविशत् ' ( तैस. २।६।६।१ ) इति । दाशतय्यामपि मन्त्रवर्णः ' ऐच्छाम त्वा बहुधा जातवेदः प्रविष्टमग्ने अप्स्वोषधीषु ' ( ऋसं. १०।५१।३ ) इति । यश्च वनेषु वर्तते दावाग्निरूपेण । यश्च ओषधीषु महिमा फलपाकनिमित्तभूतः । यश्च पशुषु पशूपलक्षितेषु सर्वप्राणिषु, वैश्वानरात्मना वर्तते । अप्सु अन्तरिक्षस्थेषु उदकेषु, मेघेष्वित्यर्थः । तेषु अन्तः मध्ये वैद्युतात्मना यो महिमा वर्तते, हे अग्ने सर्वाः अन्नादिस्थानविशेषनिष्ठमहिमरूपाः तन्वः शरीराणि सं रभस्व संकलय । तत्रतत्र विभक्तास्तनूरेकत्र समेलयेत्यर्थः । किमर्थं संकलन तदाह—ताभिरिति । ताभिः सर्वाभिस्तनूभिः सह नः अस्मान् अजस्रः । लिङ्गव्यत्ययः । अजस्र अनवरतं द्रविणोदाः धनस्य दाता सन् एहि आगच्छ । असा.

[१]यस्ते देवेषु महिमा स्वर्गो या ते तनूः पितृष्वाविवेश ।
पुष्टिर्या ते मनुष्येषु पप्रथेऽग्ने तया रयिमस्मासु धेहि ॥

हे अग्ने ते तव स्वर्गच्छतीति स्वर्गः । दिवः प्रापणार्थे स्वर्लोक गन्ता यो महिमा देवेषु । विषयसप्तमी । देवविषये वर्तते । यजमानैर्दत्त हविः देवान् प्रापयितुं इहलोकसचारी यो माहात्म्यगुणो वर्तते । या च ते त्वदीया तनूः पितृषु आविवेश पितृषु आविश्य स्वधाकारेण प्रत्त कव्यसज्ञक हविः पितॄन् प्रापयितुं पितृलोकसचारिणी वर्तते । या च ते त्वदीया पुष्टिः मनुष्येषु मनुष्योपलक्षितेषु सर्वेषु चराचरात्मकप्राणिषु पप्रथे प्रथिता अशितपीतादिपाककरणात् मनुष्यादिषु या त्वत्कर्तृका पुष्टिर्वर्तते तया । ताभिस्तनूभिः सह अस्मासु रयिं धनं धेहि प्रयच्छ । असा.

[२]श्रुत्कर्णाय कवये वेद्याय वचोभिर्वाकैरुप यामि रातिम् ।
यतो भयमभयं तन्नो अस्त्वव देवानां यज हेडो अग्ने ॥

मर्त्यो आविवेश । तमात्मनि परिगृह्णीमहे वयं भैषो अस्मानवहाय परागान्मा वयमेतमवहाय परागाम ॥ ), मैसं. १।६।१ ( १० ) ( यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्यं आविवेश । तमात्मनि परिगृह्णीमसीह नेदेषो अस्मानवहाय परायत् ॥ ).

(१) असं. १९।३।१; कासं. ७।१३ (७६) (यत्र यत्र बिभ्रतो जातवेदा अग्ने ततो द्रविणोदा न एहि ) उत्त.

(२) असं. १९।३।२; कासं. ७।१३ (७६) पशुष्वप्स्वन्तः ( पशुष्वाविवेश ) पू.

(१) असं. १९।३।३, तैब्रा. १।२।१।२१( यस्ते देवेषु महिमा सुवर्गः यस्त आत्मा पशुषु प्रविष्टः । पुष्टिर्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि ॥ ).

(२) असं. १९।३।४, कासं. ७।१२ (४१) (प्र वेधसे कवये वेद्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो

हे अग्ने श्रुत्कर्णाय अस्मदीयस्तुतिश्रवणसमर्थकर्णयुक्ताय। कवये, कविः क्रान्तदर्शी। अतीन्द्रियार्थदर्शिने वेद्याय सर्वैर्ज्ञातव्याय वेदार्हाय वा। एवगुणविशिष्ट त्वा [रातिं] आभिलषितफलदानं उपयामि। याञ्चाकर्मैतत्, उपयाचामीत्यर्थः। कैः साधनैर्याचन तदाह—वचोभिः मन्त्ररूपैर्वाक्यैः। वाकैः। एकदेशेन व्यपदेशः। अनुवाकैः मन्त्रसघात्मकैः। वाकैः वक्तव्यैः सूक्तैर्वा। कीदृशी रातिः, तत्स्वरूपं दर्शयति। यतः यस्माद् भय भीतिर्भवति तत्। तस्मादभयं भयराहित्य नः अस्माक अस्तु भवतु। अथवा तत् यतो भय तत् सर्व भयकारण अभय भयानिमित्तं न भवतु इत्यर्थः। भयहेतौ विद्यमाने कस्माद् अभयप्रार्थन तत्राह—अवेति। हे अग्ने देवाना दीव्यता हेडः। क्रोधनामैतत्। क्रोधं, अव यज तिरस्कुरु। ये ये अस्मभ्य क्रुध्यन्ति तेषा क्रोध निवारय इत्यर्थः। असा.

दिव्यः सुपर्ण स्वर्गद चिद्रूपश्च

**अग्निं युनज्मि शवसा घृतेन दिव्यँ सुपर्णं वयसा बृहन्तम्।**
**तेन वयं पतेम ब्रध्नस्य विष्टपँ सुवो रुहाणा अधि नाक उत्तमे॥**

अग्नि चितमेत वह्नि शवसा बलेन घृतेन घृतादिद्रव्ययुक्तेन कर्मणा युनज्मि रथेनाश्वमिवाह योजयामि। कीदृशमग्निं, दिव्यं द्योतनात्मक सुपर्ण पक्ष्याकारं वयसा बृहन्त चिरकालभाविनम्। तेन अग्निना वय यजमाना ब्रध्नस्य आदित्यस्य विष्टपं तापरहितं स्थान पतेम प्राप्नुयाम। कीदृशा वय, उत्तमे नाके अत्युत्कृष्टे स्वर्गलोके सुवोऽधिरुहाणाः सुखप्रापकप्रदेशमधिरोढुकामाः। तैसा.

**इमौ ते पक्षावजरौ पतत्रिणो याभ्याँ रक्षाँस्यपहँस्यग्ने।**
**ताभ्यां पतेम सुकृतामु लोकं यत्रर्षयः प्रथमजा ये पुराणाः॥**

पतत्रिणः पक्ष्याकारस्य ते तव अग्नेरिमौ पक्षावजरो कदाचिदपि जीर्णौ न भवतः। हे अग्ने याभ्या पक्षाभ्या त्व रक्षासि अपहसि मारयसि ताभ्या वय सुकृतामु पुण्यकृतामेव पुरुषाणां योग्य लोक पतेम प्राप्नुयाम। ये पुराणा अनादिसिद्धा ऋषयो महर्षयः सन्ति ये च प्रथमजाः सृष्ट्यादावेवोत्पन्नाः तादृशा यत्र लोके निवसन्ति त लोक पतेम। तैसा.

**चिदसि समुद्रयोनिरिन्दुर्दक्षः श्येन ऋतावा।**
**हिरण्यपक्षः शकुनो भुरण्युर्महान्त्सधस्थे ध्रुव आ निषत्तः॥**

हे अग्ने त्व चिदादिविशेषणैर्विशेषितोऽसि। चित् जगतश्चेतयिता यजमानैश्चितो वा। समुद्रयोनिः, यथा समुद्रः सर्वेषा जलग्रहाणा स्थानं तथा त्व सर्वेषां क्रतूना स्थानम्। इन्दुः परमैश्वर्ययुक्तः। दक्षः कर्मनिष्पादनकुशलः। श्येनः पक्षिविशेषाकारः। ऋतावा सत्यवान्। हिरण्यपक्षः सुवर्णमयाभ्यां पक्षाभ्यामुपेतः। शकुनः कामनादिभेदेन कङ्कादिपक्ष्याकारः। भुरण्युः सर्व भर्तुं क्षमः। महान् बह्वीभिरिष्टकाभिश्चितत्वात्प्रौढः। सधस्थे आदित्येन सहैकत्र स्थितियोग्ये मण्डले ध्रुवः स्थिरः आनिषत्तः समन्तत उपविष्टः। तैसा.

---

अस्त्वव देवानां यजेहीळ्यानि॥); तैब्रा १।२।१।१९ (प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे। यतो भयमभयं तन्नो अस्तु अव देवान्यजे हेड्यान्॥).

(१) तैसं. ४।७।१३।१, कासं. १८।१५ (७६) सुवो (स्वो), मैसं. २।१२।३ (९) वयसा (वयसं) सुवो (स्वो), शुसं. १८।५१ उत्तरार्धे (तेन वयं गमेम ब्रध्नस्य विष्टपॅ स्वो रुहाणा अधि नाकमुत्तमम्।); शब्रा. ९।४।४।३ शुसंवत्.

(१) तैसं. ४।७।१३।१; कास. १८।१५ (७७) पक्षावजरौ (पक्षा अजरौ) उत्तरार्धे (ताभ्या वयं पतेम सुकृतामु लोकं यत्रर्षयो जग्मु प्रथमा. पुराणा॥), मैसं. २।१२।३ (१०) पक्षावजरौ पतत्रिणो (पक्षा अजरौ पतत्रिणौ) (ताभ्याँ वयं पतेम सुकृतामु लोकें यत्रा ऋषयो जग्मु प्रथमा ये पुराणा.॥), शुसं. १८।५२ पतत्रिणो (पतत्रिणौ) यत्रर्षय. प्रथमजा ये पुराणा:. (यत्र ऋषयो जग्मु. प्रथमजा. पुराणाः), शब्रा. ९।४।४।४ शुसवत्.

(२) तैसं. ४।७।१३।१, कासं. १८।१५ (७८) (चिदसि समुद्रयोनि ०); मैसं. २।१२।३ (११) कासंवत् ४।९।११ (१८५); शुसं. १८।५३ कासंवत्; तैब्रा. ३।१०।४।२–३, शब्रा. ९।४।४।५, तैआ. ४।११।६, ५।९।९.

सर्वव्यापी विश्वेषामायु स्वर्गस्य पन्थाश्च स ।

नमस्ते अस्तु मा मा हिꣳसीर्विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः ।
समुद्रे ते हृदयमन्तरायुर्द्यावापृथिवी भुवनेष्वर्पिते ॥
उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्टयाऽवत । दिवो मूर्धाऽसि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुः शर्म सप्रथा नमस्पथे ॥

हे अग्ने ते नमोऽस्तु, त्व कर्मणि त्वद्यागकारिणं मा मां मा हिंसीः मा विनाशय । त्वं विश्वस्य सर्वस्य जगतः मूर्धन् शिरोवदुत्तमे चितिप्रदेशे श्रितः आश्रितः सन् अधितिष्ठसि अधिको भूत्वा वर्तसे । ते हृदयं त्वदीयं चित्त समुद्रे वर्तते । यद्वृष्टिद्वारेण समुद्रसमान जल सपादयिष्यामीत्येव सर्वदा तवानुग्रहः । तथा अन्तरायुः त्वदीयचित्तस्य मध्ये सर्वेषा प्राणिनामायुस्तिष्ठति चिर जीवन्त्वेते प्राणिन इति यदा स्मरसि तदानीं तेपामायुर्भवत्येव । किंच भुवनेपु सर्वेपु लोकेपु निमित्तभूतेपु द्यावापृथिवी अर्पिते उपरि द्यौरधो भूमिश्च त्वया स्थापिते । एतयोर्मध्ये सर्वे लोकास्तिष्ठन्त्वित्येव तवानुग्रहः ।

अत्र पूजार्थमेकस्मिन्नेवाग्नौ बहुत्वमारोप्य निर्दिश्यते । हे अग्नयो यूय उद्नो दत्त उदकानि प्रयच्छत । उदकदाने क उपाय इति तदुच्यते—उदधिं भिन्त, उदकं धीयतेऽस्मिन्नित्युदधिर्मेघस्तं विदारयत । केभ्यो निमित्तेभ्यः, दिवोऽन्तरिक्षात्पृथिव्याः, लोकत्रय निमित्तीकृत्येत्यर्थः । ततो मेघविदारणादूर्ध्वं पर्जन्यादागतया वृष्टया नोऽस्मान् अवत रक्षत । पुनरप्येकत्वेनैव संबोध्योच्यते—हे अग्ने त्वं दिवो मूर्धाऽसि द्युलोकस्य मूर्धस्थानीय आदित्यरूपोऽसि । पृथिव्या नाभिरसि नाभिवन्मध्यदेशे वर्तसे । अपामोषधीना च ऊर्क् रसः असि, त्वया हि पाके क्रियमाणे सति तत्र रसो जायते । तथा विश्वायुरसि सर्वस्य जगत आयुष्प्रदोऽसि । शर्म शरणभूतोऽसि । सप्रथाः सविस्तारोऽसि । पथे पुण्यलोकमार्गरूपाय तुभ्यं नमोऽस्तु । तैसा.

[2]येनर्षयस्तपसा सत्रमासतेन्धाना अग्निँ सुवराभरन्तः ।
तस्मिन्नहं नि दधे नाके अग्निमेतं यमाहुर्मनवः स्तीर्णबर्हिषम् ॥

येन स्वर्गेण निमित्तभूतेन पूर्वे महर्षयः तपसा सतापयुक्तेनाग्निना सत्रमासत अनुष्ठितवन्तः । कीदृशा महर्षयः, अग्निमिन्धानाः प्रज्वलयन्तः सुवराभरन्तः स्वर्गमाहर्तुं समुद्यताः । अहमपि तस्मिन् नाके निमित्तभूते सति एत अग्नि निदधे स्थापयामि । य अग्नि मनवः पूर्वे मनुष्याः स्तीर्णबर्हिष प्रसारितयज्ञ आहुः तमग्निं निदधे इत्यन्वयः । तैसा.

[3]तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥

---

(१) तैसं. ४।७।१३।२, कासं. १८।१५ ( ७८–८० ) ( नमस्ते अस्तु मा मा हिंसी. ॥ दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुश्शर्म सप्रथा नमस्पथे विश्वस्य मूर्धन्नधितिष्ठसि श्रितः ॥ समुद्रे ते हृदयमन्तरायुरुद्नो देह्युदधि भिन्धि । दिव पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो मा वृष्ट्याव ॥ ), मैसं. २।१२।३ ( ११–१३ ) ( नमस्ते अस्तु मा मा हिꣳसी ॥ दिवो मूर्धासि नाभि पृथिव्या ऊर्गपामोषधीनाम् । विश्वायु शर्म सप्रथा नमस्पथे विश्वस्य मूर्धन्नधितिष्ठसि श्रित. ॥ समुद्रे ते हृदयमन्तरायुरपो दत्तोदधि भिन्त । दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत ॥ ); शुसं. १८।५३–५५ ( नमस्ते अस्तु ... .. दिवो मूर्धासि... .. ...समुद्रे ते हृदयमप्स्वायुरपो दत्तोदधि भिन्त । दिवस्पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्याव ॥ ); तैब्रा. ३।७।६।३, शब्रा ९।४।४।५, तैआ. ४।१९।१७.

(१) तैसं. ४।७।१३।२, कासं. १८।१८ ( १०४ ) सुवराभरन्त. ( स्वराभरन्तः ) अग्निमेतं ( अग्निं ): मैस. २।१२।४ ( १६ ) ( येना ऋषयस्तपसा सत्रमासतेन्धाना अग्निꣳ स्वराभरन्त. । यमाहुर्मनव. स्तीर्णबर्हिषं तस्मिन्नहं निदधे नाके अग्निम् ॥ ), शुसं. १५।४९ ( येन ऋषयस्तपसा सत्रमायन्निन्धाना अग्निꣳ स्वराभरन्त. । तस्मिन्नहं निदधे नाके अग्नि यमाहुर्मनवस्तीर्णबर्हिषम् ॥ ), शब्रा. ८।६।३।१८ शुसंवत्.

(२) तैसं. ४।७।१३।३, कासं. १८।१८ ( १०५ ); मैस. २।१२।४ ( १७ ) गृह्णाना. ( गृभ्णानाः ), शुसं. १५।५० मैसंवत्; शब्रा. ८।६।३।१९ मैसंवत्.

हे देवा ऋत्विजः सर्वे वय पत्न्यादिभिः सर्वैर्मनुष्यैः उत वा हिरण्यैः हिरण्यादिभिः सर्वैः साधनद्रव्यैश्च सहिताः त अग्निं अनुगच्छेम अनुगताः सन्तः फल प्राप्स्याम इत्याशयः। स एव स्पष्टीक्रियते—दिवः पृष्ठे स्वर्गस्योपरि नाक दुःखरहितं स्थान गृह्णानाः ग्रहीतुकामा वयमित्यर्थः। कीदृशे दिवः पृष्ठे, सुकृतस्य लोके सम्यगनुष्ठितस्य कर्मणः फलभूते, तृतीये पृथिवीमारभ्य गणनाया त्रिसख्यापूरके, अधिरोचने अधिकत्वेन दीप्यमाने। तैसा.

सत्पतिः वाचो मध्यमारूढश्च

[१]आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुते ये पृतन्यवः॥

अयमग्निः वाचो मध्यमारुहत् स्तोत्ररूपाया वाचः प्रतिपाद्यमर्थमारूढः स्तोत्रगतसर्वगुणयुक्त इत्यर्थः। कीदृशोऽग्निः, भुरण्युः जगद्धरणशीलः। सत्पतिः सता पालकः। चेकितानः अभिज्ञानवान्। स च पृथिव्याः पृष्ठे भूमेरुपरि निहितः स्थापितः दविद्युतत् अतिशयेन द्योतते। ये तु विरोधिनः पृतन्यवः अस्माभिः सह कलह कर्तुमिच्छन्ति तानधस्पद कृणुते अस्माकं पादस्याधस्तादवस्थितान् करोति। तैसा.

सर्वदेवाना महिमकृत्

[२]येन देवा ज्योतिषोर्ध्वा. उदायन्येनाऽऽदित्या वसवो येन रुद्राः।
येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानः स्वस्ति॥

देवाः सर्वे येन ज्योतिषाऽग्निनोर्ध्वा उपरितनलोकवर्तिनः उदायन्नुत्कर्षं प्राप्ताः। तथा आदित्या वसवश्च येनोदायन् रुद्राश्च येनाग्निनोदायन्, अङ्गिरसो महर्षयो येनाग्निना महिमानमानशुः स्वकीय सामर्थ्यं प्राप्तास्तेनाग्निना यजमानोऽय स्वस्ति क्षेममेतु प्राप्नोतु। तैसा.

त्रैलोक्ये तत्रतत्र तस्य शिवास्तन्व, महिमा, अनन्तं ज्योतिश्च

[३]यास्ते शिवास्तन्वो जातवेदो या अन्तरिक्षे दिवि या पृथिव्याम्।
ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने॥

[२]सं त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण सं पार्थिवेन। वैश्वानर्या समिधा दीदिही न ऊर्जस्वत्या वर्चस्वत्या भास्वत्या रश्मिवत्या ज्योतिष्मत्या॥

[३]यस्ते अप्सु महिमा यो वनेषु य ओषधीषु पशुष्वाविवेश।
यत्र यत्र बिभ्रतो जातवेदा अग्ने ततो द्रविणोदा न एहि॥

[४]मनुष्वत् त्वा निधीमहि मनुष्वत् समिधीमहि।
अग्ने मनुष्वदङ्गिरो देवान् देवयते यज॥

हे अग्ने त्वा मनुष्वन्निधीमहि यथा कथञ्चिन्मनुष्य बन्धु सखायं वा कश्चिद्विस्रम्भेण स्थापयामः तथा त्वामपि अस्मिन्कर्मणि विस्रम्भेण स्थापयामः। तथा मनुष्वत् कस्मिश्चित् मनुष्य इव त्वयि विस्रब्धाः सन्तस्त्वा समिधीमहि सम्यक्प्रज्वालयामः। हे आङ्गिरः अङ्गसौष्ठवयुक्ताग्ने मनुष्वत् मनुष्यर्त्विगिव देवायते देवान् आत्मन इच्छते यजमानाय देवान् यज पूजय। तैब्रासा.

[५]सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि।
सप्त होत्रा अनुविद्वान् सप्तयोनीरापृणस्वा घृतेन॥

(१) तैसं. ४।७।१३।३, कासं. १८।१८ (१०६) कृणुते (कृणुता), मैसं. २।१२।४ (१८) कासंवत्, शुसं. १५।५१ कासंवत्, शब्रा. ८।६।३।२० कासंवत्.

(२) तैसं. ५।७।२।२, कासं. २२।१० (२८), ३८।१३ (१५२), मैसं. २।७।१२ (१५२) स्तेनैतु यजमान (स्तेन यन्तु यजमानाः).

(१) कासं ७।१३ (७४). (२) कास. ७।१३ (७५).

(३) असं. १९।३।१–२ (यत्रयत्र विभृतो जातवेदास्तत स्तुतो जुषमाणो न एहि। यस्ते अप्सु महिमा यो वनेषु य ओषधीषु पशुष्वप्स्वन्तः॥), कासं ७।१३(७६).

(४) ऋसं. ५।२१।१; कासं. २।९ (५०), ७।१३ (७७), ३९।१३ (८८); तैब्रा. ३।११।६।३ देवयते (देवायते).

(५) तैसं. १।५।३।२, १।५।४।३, ४।६।५।५ तृतीयपादे (सप्त होत्राः सप्तधा त्वा यजन्ति), कासं. ७।१४

हे अग्ने तव समिधः सप्तसङ्ख्याकाः। अश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः। ज्वालारूपा जिह्वाः सप्त। तथा चाथर्वणिका आमनन्ति— 'काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्त जिह्वाः ॥' (मुउ. १।२।४) इति। ऋषयो मन्त्राः। ते च यथोक्तसमित्सपादनार्थाः सप्तसङ्ख्याकाः। प्रियाणि धाम स्थानानि। आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजाहिताग्नीध्रीयाख्यानि सोमयागे वह्निधारकाणि सप्तसङ्ख्याकानि। होत्रा होतृप्रमुखा वषट्कर्तारः। होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽच्छावाक आग्नीध्रश्चेति सप्तसङ्ख्याकाः। तादृशः सप्तसमिदादियुक्तः त्वं अनुविद्वान् आहवनीयादीनि स्थानानि अनुक्रमेण जानन् सप्त योनीः आहवनीयादीनि स्थानानि, घृतेन सर्वतः पूरय। तैब्राभा.

यां ते अग्ने पवमाना तनूः पृथिवीमन्वाविवेश। याऽग्नौ या रथन्तरे या गायत्रे छन्दसि या त्रिवृति स्तोमे याऽन्ने तां त एतदवरुन्धे तस्यै स्वाहा॥ या तेअग्ने पावका तनूरन्तरिक्षमन्वाविवेश। या वाते या वामदेव्ये या त्रैष्टुभे छन्दसि या पञ्चदशे स्तोमे या पशुषु तां त एतदवरुन्धे तस्यै स्वाहा॥ या ते अग्ने शुचिस्तनूर्दिवमन्वाविवेश। या सूर्ये या बृहति या जागते छन्दसि या सप्तदशे स्तोमे याऽप्सु तां त एतदवरुन्धे तस्यै स्वाहा॥

वातः प्राणस्तदयमात्मा। पुरीपमसि। संप्रियः पशुभिर्यच्छा तोकाय तनयाय शं योः। प्रजां मे यच्छ घर्मश्शिरस्तदयमग्निः। पुरीपमसि। संप्रियः पशुभिः स्वदितं नः। पितुं पच पशून् मे यच्छ। अर्कश्चक्षुस्तदसौ सूर्यः। पुरीपमसि। संप्रियः पशुभिर्यत् ते शुक्र शुक्रं धाम शुक्रा तनूः शुक्रं ज्योतिरजस्रम्। यत् तेऽनाधृष्ट नामानाधृष्यं तेन त्वादधे। वर्चो मे यच्छ। येऽग्नयो दिवो येऽन्तरिक्षाद्ये पृथिव्याः समाजग्मुरिषमूर्जं वसानाः। तेऽस्मा अग्नये द्रविणानि दत्त्वा तृप्ताः प्रीताः पुनरस्तं परेत॥

विश्वदृक् विश्वदेव

[1]विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शतः।
ते त्वा घृतस्य धारया श्रैष्ठ्याय समसूपत॥

अग्नियजमानयोरैक्यम्

[2]त्रिवृत् ते अग्ने शिरस्तन्मे अग्ने शिरः। पञ्चदशौ ते अग्ने बाहू तौ मे अग्ने बाहू। सप्तदशस्ते अग्न आत्मा स मे अग्न आत्मा। एकविँशौ ते अग्न ऊरू तौ मे अग्न ऊरू। त्रिणवौ ते अग्ने अष्ठीवन्तौ तौ मे अग्ने अष्ठीवन्तौ। त्रयस्त्रिँशं ते अग्ने प्रतिष्ठानं तन्मे अग्ने प्रतिष्ठानम्। त्रिवृत् ते अग्ने शिरस्तेन माभिपाहि। पञ्चदशौ ते अग्ने बाहू ताभ्यां माभिपाहि। सप्तदशस्ते अग्न आत्मा तेन माभिपाहि। एकविँशौ ते अग्न ऊरू ताभ्यां माभिपाहि। त्रिणवौ ते अग्ने अष्ठीवन्तौ ताभ्यां माभिपाहि। त्रयस्त्रिँशं ते अग्ने प्रतिष्ठानं तेन माभिपाहि॥

विभुवैश्वानरज्योतिषाऽद्वैतभावप्रार्थना

[3]समाववर्ति पृथिवी समुषाः समु सूर्यः। समु विश्वमिदं जगत्। वैश्वानरज्योतिर्भूयासं [4]विभून् कामान् व्यश्नवै॥

(१) समाववर्ति गायत्री। यस्मात्समावर्तते नश्वरत्वादियं पृथिवी। यस्माच्च समावर्तते उषाः। यस्माच्च

---

(७८), ८।३ (७), १८।४ (४४), ३४।१९ (३२); मैसं. १।६।२ (३०), १।६।७ (४३), २।१०।६ (६७) उत्तरार्धे (सप्त ऋत्विज सप्तधा त्वा यजन्ति सप्त होत्रा ऋतुथा नु विद्वान्त्सप्त योनीरापृणस्व घृतेन स्वाहा), शुसं. १७।७९ उत्तरार्धे (सप्त होत्रा सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा), तैब्रा. ३।११।५।१, ३।११।९।९ योनीॅरा (योनीरा), शब्रा. ९।२।३।४४ शुसंवत्.

(१) कासं. ७।१४ (७८, ७९).

(१) कासं. ३६।१५ (४०).

(२) कासं. ३९।२ (२२).

(३) कासं. ३८।५ (६९) (समु.. .....जगत्०) विभून कामान् (विभुं कामं); मैसं. ३।११।१० (११२) (समावृतत् पृथिवी समुषाः समु सूर्यः। वैश्वानरज्योतिर्भूयासँ विभु कामँ व्यशीय॥): शुसं. २०।२३; तैब्रा. २।६।६।५ विभून् कामान् (विभुं कामं).

समावर्तते एव सूर्यः । यस्माच्च समावर्तते एव विश्वम् । इद जगत् जङ्गमादि । अतो वैश्वानरस्य ज्योतिः भूयासम् । 'वैश्वानरः पर ब्रह्म' इत्याहुरौपनिषदिकाः । विभून् कामान् व्यश्नवै प्राप्नुयाम् । शुउ.

(२) समाववर्ति आग्नेयी गायत्री । वैश्वानरज्योतिरिति यजुः आग्नेयम् । पृथिवी समाववर्ति सम्यगावर्तते नश्यतीत्यर्थः । उषाः दिवसोऽपि समाववर्ति । सूर्यः समाववर्ति । उ एवार्थे । विश्वमिद जगत् समाववर्ति । अतोऽह वैश्वानरज्योतिः भूयासम् । विश्वेभ्यो नरेभ्यो हितो वैश्वानरः परमात्मा तद्रूपं ज्योतिर्ब्रह्मैव भूयासम् । विभून् महतोऽपि कामान् मनोरथान् व्यश्नवै प्राप्नुयाम् । शुम.

चित्य सावित्राग्नि परमात्मरूप., सर्वदेवतामय, अमृतत्वहेतु, उपास्यश्च

**अंत्यꣳहो हारुणिः । ब्रह्मचारिणे प्रश्नान्प्रोच्य प्रजिघाय । परेहि । प्लक्षं दय्यांपातिं पृच्छ । वेत्थ सावित्रा३न्न वेत्था३ इति । तमागत्य पप्रच्छ । आचार्यो मा प्राहैषीत् । वेत्थ सावित्रा३न्न वेत्था३ इति । स होवाच वेदेति ॥**

तदेव सावित्राग्निविषयं चयन परिसमाप्य तद्विषया विद्या वक्तुमाख्यायिकामाह । अंहः, पाप्मानमतिक्रम्य वर्तत इत्यत्यहः । एतन्नामको मुनिः अरुणस्य पुत्रः । स च स्वशिष्याय कस्मैचिद्ब्रह्मचारिणे प्रष्टव्यानर्थानुक्त्वा तं ब्रह्मचारिणमन्यस्य मुनेः समीपे प्रेषयामास । भो ब्रह्मचारिन्, द्यांपातनामकस्य मुनेः पुत्रं दय्यापातिं प्लक्षनामक मुनिं गत्वा सावित्राग्नि वेत्थ न वेत्थेत्येवं प्रश्नं कुर्विति । स च ब्रह्मचारी त प्लक्षं गत्वा स्वकीयस्याचार्यस्य आज्ञा कथयित्वा तथैव सावित्रं जानासि न वेत्येवं पप्रच्छ । स च प्लक्षो वेदेत्युत्तरमुक्तवान् । तैब्रासा.

**स कस्मिन्प्रतिष्ठित इति । परोरजसीति । कस्तद्यत्परोरजा इति । एष वाव स परोरजा इति होवाच । य एष तपति । एषोऽर्वाग्रजा इति । स कस्मिन्त्वेष इति । सत्य इति । किं तत्सत्यमिति । तप इति । कस्मिन्नु तप इति । बल इति । किं तद्बलमिति । प्राण इति । मा स्म प्राणमतिपृच्छ इति माऽऽचार्योऽब्रवीदिति होवाच ब्रह्मचारी ॥**

अथ ब्रह्मचारिप्रश्नाना प्लक्षस्योत्तराणा च परम्परां दर्शयति । हे मुने यदि सावित्रमग्नि वेत्सि तर्हि सोऽग्निः कस्मिन्नाश्रये प्रतिष्ठित इति ब्रह्मचारिणः प्रश्नः । रजसा रजोगुणयुक्तात् जन्ममरणप्रवाहरूपात्ससारात् परस्ताद्यो वर्तते सोऽय परोरजाः, तस्मिन् अय सावित्रोऽग्निः प्रतिष्ठित इति प्रश्नस्योत्तर यत्त्वयोक्त तद्विस्पष्टं वक्तव्यम् । कोऽय परोरजा इति प्रश्नः । य एष मण्डलात्मा दृश्यते स एष एव परोरजा इत्युत्तरम् । मासचक्षुषा दृश्यमान एष मण्डलात्मा ससारमध्यवर्तित्वादर्वाग्रजा एव न तु परोरजा इति, अतो नैतद्युक्तमुत्तरम् । किंतु, एष सोऽग्निः कस्मिन्ससारातीत आश्रये प्रतिष्ठितः स वक्तव्य इति प्रश्नः । यत्सत्य पारमार्थिक वस्तु तस्मिन्प्रतिष्ठित इत्युत्तरम् । तच्च सत्य वस्तु किमिति प्रश्नः । केन साधनेन लभ्यत इत्यभिप्रायः । तपसा लभ्यत इत्यभिप्रेत्य तप एव सत्यमित्युत्तरमुक्तम् । तच्च साधनरूप तपः कस्मिन्प्रतिष्ठितमिति प्रश्नः । सति शरीरबले तपसोऽनुष्ठातु शक्यत्वाद्बले तपः प्रतिष्ठितमित्युत्तरम् । बलकारणवस्तुनो विवक्षितत्वात्कि तद्बलमिति प्रश्नः । प्राणस्य बलकारणत्वमभिप्रेत्य प्राणो बलमित्युत्तरमुक्तम् । अनया प्रश्नोत्तरपरम्परया सावित्रस्याग्नेः प्रतिष्ठारूप यत्सत्य वस्तु तत् प्राणदेवतारूपेण शरीरे प्रतिष्ठितम् । तत्तथैव ध्यातव्यमिति निर्णयः सपन्नः । प्राणादूर्ध्वं वस्त्वन्तरप्रश्नो न कर्तव्य इत्येतादृशीमाचार्याज्ञां ब्रह्मचार्युक्तवान् । तैब्रासा.

**स होवाच प्लक्षो दय्यांपातिः । यद्वै ब्रह्मचारिन् प्राणमत्यप्रक्ष्यः । मूर्धा ते व्यपतिष्यत् । अहमुत आचार्याच्छ्रेयान्भविष्यामि । यो मा सावित्रे समवादिष्टेति । तस्मात्सावित्रे न संवदेत ॥**

अथ प्रसङ्गात् सावित्राग्निदेवताविषये मात्सर्यपूर्वक संवाद निषेधति । स प्लक्षो ब्रह्मचारिण प्रत्येवमुक्तवान् । हे ब्रह्मचारिन् त्वदीयेनाचार्येण तुभ्यमत्यन्त हितमेवोक्तम् । यदि त्व प्राणदेवता सर्वोत्तमामतिक्रम्य तदाश्रयत्वेनान्यां देवता पृच्छेस्तदा तव मूर्धा विपतेत् । अतो नास्त्येव प्राणादुत्तमा देवता । किंच यस्त्वदीय आचार्यो मां

(१) तैब्रा. ३।१०।९।३-६.

प्रति सावित्राग्निदेवताविषये मात्सर्येण संवाद कृतवान् । तस्मात्तव सबन्धिन आचार्यादहमेवातिशयेन प्रशस्तो भविष्यामि । यस्मादस्मिन्नुपाख्याने प्लक्ष एवमुवाच तस्माद्रहस्ये सावित्रविज्ञाने कश्चिदपि मात्सर्येण सवाद न कुर्यात् । किन्त्वाचार्योपदिष्टेनैव मार्गेण ध्यायेत् । अय न्यायः सर्वेष्वप्युपदेशगम्येषु रहस्येषु समानः ।

तैब्रासा.

**तदेतदृचाऽभ्युक्तम् । ऋचो अक्षरे परमे व्योमन् । यस्मिन्देवा अधि विश्वे निषेदुः । यस्त न वेद किमृचा करिष्यति । य इत्तद्विदुस्त इमे समासत इति ॥**

सावित्रवेदनमृगुदाहरणेन प्रशसति । तदेतत्सावित्राग्निमाहात्म्य कयाचिदृचा विस्पष्टमुक्तम् । विविध रक्षक व्योम । यद्वा निर्लेपत्वेन सर्वगतत्वेन चाकाशसदृशत्वात् व्योम जगत्कारण वस्तु । तच्च भूताकाशवज्जडत्वाभावाच्चेतनत्वेन परममुत्कृष्ट, तदेव सावित्रस्याग्नेर्वास्तव रूप, तच्चाक्षरं विनाशरहित तस्मिन्वस्तुनि ऋचः ऋगुपलक्षिताः सर्वे वेदोक्ता मन्त्रा आश्रिताः। आश्रितत्व च द्विविधम्—तत्रोत्पन्नत्व तत्प्रतिपादने पर्यवसान च । 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे' ( ऋस. १०।९०।९ ) इति श्रुत्या सर्वैर्हूयमानाद्यज्ञहेतोः परमेश्वरादृगादीनामुत्पत्तिराम्नाता । 'सर्वे वेदा यत्पदमामनन्ति' ( काउ. २।१५ ) इति श्रुत्या तत्प्रतिपादनपर्यवसानमुक्तम् । तस्मादृगादयः तस्मिन्नक्षरेऽवस्थिताः। किंच न केवल मन्त्राणा तत्रावस्थान, किंतु मन्त्रप्रतिपाद्याः सर्वे देवा अपि जगत्कारणे अधिनिषेदुरवस्थिताः । यस्मिन् सावित्राग्नितत्त्वे परवस्तुनि सर्वे समाश्रिताः तं सावित्राग्निं यो न वेद असौ अविद्वान् पठ्यमानयाऽपि ऋचा किं नाम प्रयोजन करिष्यति, सर्वोऽपि वेदस्तद्वेदनायैव प्रवृत्तः । विद्यते ज्ञायते अनेनेति वेदत्वनिरुक्तिः । वेदनाभावे सत्यात्यन्तिकपुरुषार्थाभावात् तत्पाठो नात्यन्तं सप्रयोजनः । य एव पुरुषार्थिनः तत्सावित्राग्नितत्त्व विदुस्ते सर्वेऽपीमे अस्माभिर्दृश्यमाना देवभागादिमुनयः समासते सम्यञ्चः कृतकृत्या उपविशन्तीति ।

तैब्रासा.

( १ ) तैब्रा. ३।१०।९।१४, १५.

**न ह वा एतस्यर्चा न यजुषा न साम्नाऽर्थोऽस्ति । यः सावित्रं वेद ॥**

इत्थमृचा सावित्रवेदनमाहात्म्यं प्रकटीकृतम् । तस्या उदाहृताया ऋचस्तात्पर्य सक्षेपेण दर्शयति । ऋगादीना त्रयाणा वेदानामुक्तरीत्या परतत्त्ववेदनपर्यवसायित्वाद्विदिते तत्त्वे तत्पाठेन तदर्थानुष्ठानेन वा न किंचित्प्रयोजनमस्ति । न हि नद्यामुत्तीर्णाया नावा प्रयोजन पश्यामः ।

तैब्रासा.

**तदेतत्परि यद्देवचक्रम् । आर्द्रं पिन्वमानꣳ स्वर्गे लोक एति । विजहद्विश्वा भूतानि संपश्यत् ॥**

वेदनीय स्वरूप निष्कृष्य दर्शयति । तदेतदादित्यमण्डलरूप देवचक्र देवतारूप चक्र सत्स्वर्गलोक एति सचरति । कीदृश, परि यदहोरात्रनिष्पादनाय परितो भ्रमणयुक्तम् । आर्द्रं 'आदित्याज्जायते वृष्टिः' इति न्यायेन वृष्टिहेतुत्वात् द्रवीभूतम् । अत एव पिन्वमान सर्वेषा प्रीणयितृ विश्वा भूतानि स्थावरजङ्गमरूपान् सर्वान्प्राणिनो विजहत् परित्यजत् वर्तते, तदीयगुणदोषैः न लिप्यत इत्यर्थः । सपश्यत् साक्षित्वेन सर्वान् प्राणिनः अवलोकयद्वर्तते ।

तैब्रासा.

**कश्चिद्ध वा अस्माल्लोकात्प्रेत्य । आत्मानं वेद । अयमहमस्मीति । कश्चित्स्वं लोकं न प्रतिप्रजानाति ॥**

दशमे सावित्राग्न्यवयवाना नामवेदनमुक्तम् । एकादशे अन्वयव्यतिरेकाभ्या विद्या प्रशस्यते । तत्रादौ अन्वयव्यतिरेकोपयुक्त पुरुषद्वयमुपन्यस्यति । लोके विवेकी विवेकरहितश्चेति द्वौ पुरुषौ । तत्र कश्चिद्विवेकी पुमानस्माल्लोकात् प्रत्यक्षतो दृश्यमानात् देहादिसघातात्प्रेत्य विवेकेन स्वय पृथग्भूत्वा आत्मानं स्वस्वरूपं वेद । केन प्रकारेण वेदेति तदुच्यते—अयं सावित्रोऽग्निरादित्यरूपः सर्वात्मकः सोऽहमस्मीति वेत्ति । अन्यस्तु कश्चिदविवेकी स्व लोकं देहेन्द्रियादिव्यतिरिक्तं विवेकदृष्ट्या आलोकयितु शक्य स्वमात्मानं न वेद ।

तैब्रासा.

**अग्निमुग्धो हैव धूमतान्तः । स्वं लोकं न प्रतिप्रजानाति । अथ यो हैवैतमग्निꣳ सावित्रं वेद । स एवास्माल्लोकात्प्रेत्य । आत्मानं वेद । अयमहमस्मीति । स स्वं लोकं प्रतिप्रजानाति ॥**

( १ ) तैब्रा. ३।१०।११।१–७.

तावुभौ पुरुषौ पुनर्विविच्य दर्शयति। यः पुमानग्निमुग्धो विद्यारहितः केवल एवाग्निः क्रतुनिष्पत्तिद्वारा पुरुषार्थं प्रयच्छतीत्येव मूढो धूमतान्तः पुनः पुनः कर्मस्वेव प्रवृत्तो धूमोपलक्षितकर्मव्यापारेण ग्लानि प्राप्तो भवति। स पुमान् वर्णाश्रमाधारमानुषदेहरहित देवतारूप स्वमात्मान न जानाति। अथ तस्माद्विलक्षणो यः पुमानेत ध्यातव्य सावित्रमग्नि वेद स एव पुमान् अस्माद्वर्णाश्रमाधारत्वेनावलोक्यमानाद्देहात् विवेकेन पृथग्भूत्वा स्वात्मानमय सावित्रोऽग्निरहमस्मीत्येव वेद। स एव स्व लोक विवेकिभिरवलोकयितु योग्य निजस्वरूप प्रति विविच्य सम्यग्जानाति। तैब्रासा.

**एष उ चैवैनं तत्सावित्रः। स्वर्गं लोकमभिवहति ॥**

उभयोर्मध्ये विवेकिन एव पुरुषार्थ दर्शयति। तत् तदा देहपातादूर्ध्वमेष एवोपासितः सावित्रोऽग्निः एनमुपासकं आदित्यसायुज्यरूप स्वर्गलोकं प्रापयति। तैब्रासा.

**अहोरात्रैर्वा इदꣳ सयुग्भिः क्रियते। इतिरात्रायादीक्षिषत। इतिरात्राय व्रतमुपागुरिति। तानिहानेवविदुषः। अमुष्मिँल्लोके शेवधिं धयन्ति। धीतꣳ हैव स शेवधिमनु परैति ॥**

अथ विद्याराहितस्य समृद्धफलाभावलक्षण व्यतिरेक दर्शयति—सयुग्भिर्यजमानेन सहावस्थितैरहोरात्रदेवैरेवेद कर्म क्रियते। न ह्यहोरात्राभिमानिनो देवान्वञ्चयित्वा किंचिदपि कर्म कर्तु शक्यम्। अहोरात्रव्यतिरिक्तस्य कालविशेषस्याभावात्। इतिरात्रायेत्येतादृशी विद्यासंयुक्ता रात्रिर्यस्मिन्कर्मणि तदर्थमेते यजमाना अदीक्षिषत नियम स्वीकृतवन्तः। इतिरात्रायेत्येतादृशी विद्यारहिता रात्रिर्यस्मिन् कर्मणि तदर्थमेते यजमाना व्रतमुपागुर्नियमविशेष प्राप्ता इत्येवं ये यजमाना विद्यासयुक्ता ये च विद्याराहितास्तान्सर्वानहोरात्रदेवता जानन्तीति शेषः। एतेषु द्विविधेषु मध्ये यः पुमानेवं पूर्वोक्तरूपं सावित्रमग्नि न वेत्ति तस्यानेवविदुषो यजमानस्य शेवधि निधिसमान फल स्वर्गलोके धयन्त्यहोरात्रदेवताः प्रथम तत्सारं पिबन्ति। स विद्यारहितो यजमानो धीतमहोरात्रैः पीतं शेवधि कर्मफलमनु पश्चान्निष्पीडितरसेक्षुवन्निःसार परैति प्राप्नोति। तैब्रासा.

**अथ यो हैवैतमग्निꣳ सावित्रं वेद। तस्य हैवाहोरात्राणि। अमुष्मिँल्लोके शेवधि न धयन्ति। अधीतꣳ हैव स शेवधिमनु परैति ॥**

विद्यारहितस्य सपूर्णफलाभाव व्यतिरेकमुक्त्वा विद्यासयुक्तस्य तत्सद्भावरूपमन्वय दर्शयति। विद्याहीनात् वैलक्षण्यार्थोऽथशब्दः। यः पुमानेत सावित्रमग्नि यथोक्तप्रकारेण वेद तस्यैव शेवधि निधिसमान फलमहोरात्रदेवताः स्वर्गलोके न धयन्ति स्वय न पिबन्ति। कितु तस्यैव सर्व प्रयच्छन्ति। अधीत तैर्देवैरपीत शेवधि निधिसदृश सपूर्ण कर्मफल स विद्वाननुक्रमेण प्राप्नोति। तैब्रासा.

**भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तꣳ ह जीर्णिꣳ स्थविरꣳ शयानम्। इन्द्र उपव्रज्योवाच। भरद्वाज। यत्ते चतुर्थमायुर्दद्याम्। किमेनेन कुर्या इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच। तꣳ ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयांचकार। तेषाꣳ हैकैकस्मान्मुष्टिमाददे। स होवाच। भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एहीमं विद्धि। अयं वै सर्वविद्येति। तस्मै हैतमग्निꣳ सावित्रमुवाच। तꣳ स विदित्वा। अमृतो भूत्वा। स्वर्गं लोकमियाय। आदित्यस्य सायुज्यम् ॥**

इत्थमन्वयव्यतिरेकाभ्यां विदुषः फलबाहुल्य दर्शितम्। अथ ता विद्या प्रशसितुमुपाख्यान दर्शयति। पुरा कदाचिद्भरद्वाजाख्यो महर्षिः सर्वेषा वेदानामध्ययने कृतप्रयत्न इन्द्र प्रसाद्य तत्प्रसादाच्छतसवत्सरपरिमितानि त्रीण्यायूषि लब्ध्वा तैरायुर्भिर्ब्रह्मचर्यमुवास वेदाध्ययनमुद्दिश्य गुरुकुले वास कृतवान्। शतत्रयस्यान्ते जीर्णशरीरं वृद्धमशक्तत्वेन शयान त भरद्वाज प्रतीन्द्र उपेत्योवाच। यच्चतुर्थमायुस्तुभ्य दद्यां एतेनायुषा किं कुर्याः क पुरुषार्थं साधयसीति। स च वेदाध्ययनमेव करिष्यामीत्युवाच। ततः सर्ववेदाध्ययनकृतयत्न त भरद्वाजमुद्दिश्य सर्वाध्ययनस्याशक्यत्व बोधयितुमृग्यजुःसामवेदाना त्रयाणां स्वकीययोगसामर्थ्येन पर्वताकारत्वं संपाद्य गिरित्रयरूपान्पूर्वमविज्ञातानेव वेदानस्मै दर्शयामास।

ततस्तेषां पर्वताना मध्य एकैकस्मात्पर्वतान्मुष्टिना पांसूनाददे। आदायैवमुवाच—हे भरद्वाज, एते त्रयः पर्वता वेदा एव। तत्रैकैकः पांसुरेको वेदः तस्मादनन्ता वेदास्तेषां मध्ये त्व एतैस्त्रिभिरायुर्भिरेतन्मुष्टित्रयपरिमित वेदजातं गुरूपदेशमन्वधीतवानसि। अथानन्तर तव इतरद्वेदजातमनधीतमेव। तस्मात्सर्ववेदाध्ययनमशक्यमेव। यदि सर्वाध्ययनफलमपेक्षित तर्हि आगच्छ इम सावित्रमग्निं विद्धि ध्यानेन साक्षात्कुरु। अयमेव सावित्रोऽग्निः सर्ववेदविषया विद्येत्येवं बोधयित्वा तस्मै भरद्वाजायैत सावित्रमग्निं पूर्वोक्तप्रकारेणोवाच। ततः स भरद्वाजः त सावित्रमग्नि ध्यानेन स्वात्मतया साक्षात्कृत्य तदग्निरूपः स्वयममृतो देवो भूत्वा वर्तमानदेहादूर्ध्व स्वर्गं प्राप्य तत्रादित्यसायुज्यं प्राप्तवान्। तैब्रासा.

**अमृतो हैव भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। य एवं वेद। एषो एव त्रयी विद्या। यावन्तꣳह वै त्रय्या विद्यया लोकं जयति। तावन्त लोकं जयति। य एवं वेद॥**

इत्थमुपाख्यानेन विद्यामहिमान दर्शयित्वा भरद्वाजवदन्यस्यापि वेदितुस्तत्फल दर्शयति—अमृतो हैवेति। इतोऽधिकस्य फलस्य शङ्का वेदत्रयेऽपि वारयितुमाह—एषो एवेति। येय सावित्राग्निविद्या, एषैव वेदत्रयीविद्यासमाना। वेदत्रयोक्तसर्वकर्मानुष्ठानेन यावत्फल तावदनेन सावित्रज्ञानेनैव प्राप्यते। न ह्यादित्योपाधिकहिरण्यगर्भप्राप्तेरधिकं फल कर्मकाण्डे किंचित्संभवति।

तैब्रासा.

**अग्नेर्वा एतानि नामधेयानि। अग्नेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। वायोर्वा एतानि नामधेयानि। वायोरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। इन्द्रस्य वा एतानि नामधेयानि। इन्द्रस्यैव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। बृहस्पतेर्वा एतानि नामधेयानि। बृहस्पतेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। प्रजापतेर्वा एतानि नामधेयानि। प्रजापतेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। ब्रह्मणो वा एतानि नामधेयानि। ब्रह्मण एव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद॥**

अथ सावित्रस्याग्नेः सर्वदेवतात्मकत्वेन सर्वदेवप्राप्तिलक्षण फल प्रत्येकमुदाहृत्य प्रदर्शयति। य एतेऽग्निवाय्विन्द्रबृहस्पतिप्रजापतिब्रह्माणो देवाः। प्रजापतिः सत्यलोकवासी चतुर्मुखः। ब्रह्माण्डदेहाभिमानी विराट्पुरुषो ब्रह्मा। सावित्राग्नेः सर्वदेवतात्मकत्वात्तेषामग्न्यादीना देवाना मध्ये यो यो देवः स्वस्यापेक्षितस्तस्य तस्यैव देवस्यैतानि सज्ञानादीनि नामधेयानि। अतस्तत्तद्देवतानामत्वेन ध्याने सति तत्तद्देवतासायुज्यप्राप्तिर्भवति। तस्माद्वेदत्रये यत्फल तत्सर्वमत्र लभ्यत इत्युपपन्नम्।

तैब्रासा.

**स वा एषोऽग्निरपक्षपुच्छो वायुरेव। तस्याग्निर्मुखम्। असावादित्यः शिरः। स यदेते देवते अन्तरेण। तत्सर्वꣳ सीव्यति। तस्मात्सावित्रः॥**

अथ सावित्रनामव्युत्पादनेन प्रशसति—योऽयमग्निर्भूमौ चीयते तस्येष्टकानिर्मित पक्षपुच्छादिक विद्यते। यस्तु मनसैव ज्ञायमानोऽग्निः स तु वायुस्वरूप एव, न तस्य पक्षपुच्छादिकमस्ति। किन्तु तस्य वायुरूपस्य प्रसिद्धोऽग्निर्मुखत्वेन ध्येयः। असावादित्यः शिरोरूपेण ध्येयः। यदन्यदेवताजातमस्ति तत्सर्व एते देवते अन्तरेणैतयोरग्न्यादित्ययोर्मध्ये स वायुः सीव्यति सूच्या वस्त्रमिव संयोजयित्वा विच्छिन्नमेकीकरोति। यस्मात्सीव्यति तस्मादयं वायुरूपोऽग्निः सावित्र इत्युच्यते। तदेव सावित्राग्निविद्या समापिता। तैब्रासा.

चित्याग्निश्छन्दोदेवतात्मकविराट्पुरुषः

**[1]तदाहुः। किं छन्दः का देवताऽग्नेः शिर इति। गायत्री छन्दोऽग्निर्देवता शिरः॥ १॥**

एव चित्याग्नेश्चक्षुरादिसप्तावयवाना छन्दोमयत्वमुक्तम्। अथ शिरोग्रीवादीना छन्दोमयत्व वेदवादिप्रश्नोत्तराभ्या निरूपयति—तदाहुः किं छन्दः का देवताऽग्नेः शिर इतीति। अग्नेः चित्यस्य शिर इति यदास्ति तस्य किं छन्दः का देवतेति प्रश्नः। उत्तरम्—गायत्री छन्दोऽग्निर्देवता 'अग्निर्मूर्धा दिवः ककुत्' (शुस. १५।२०) इत्यस्य छन्दस्येष्टकोपधानमन्त्रस्य गायत्रत्वादाग्नेयत्वाच्च (शब्रा. ७।४।१।४१) शिरसस्तदुभयात्मकत्वम्। अन्यत्र

(१) शब्रा १०।३।२।१–१३.

'गायत्रं हि शिरः' ( शब्रा. ८।६।२।६ ) इति श्रूयते। एवं ग्रीवानूकपक्षादिषु तत्तच्छन्दोमयत्वं तत्तद्देवतामयत्वं च यथायोग्यं मन्तव्यम्। 　　　　शब्रासा.

**किं छन्दः का देवता ग्रीवा इति। उष्णिक्छन्दः सविता देवता ग्रीवाः॥**

**किं छन्दः का देवताऽनूकमिति। बृहती छन्दो बृहस्पतिर्देवताऽनूकम्॥**

**किं छन्दः का देवता पक्षाविति। बृहद्रथन्तरे छन्दो द्यावापृथिवी देवते पक्षौ॥**

**किं छन्दः का देवता मध्यमिति। त्रिष्टुप्छन्द इन्द्रो देवता मध्यम्॥**

**किं छन्दः का देवता श्रोणी इति। जगती छन्द आदित्यो देवता श्रोणी॥**

**किं छन्दः का देवता यस्मादिदं प्राणाद्रेतः सिच्यत इति। अतिच्छन्दाश्छन्दः प्रजापतिर्देवता॥ २-७॥**

अनूकशब्दस्य पक्षयोर्मध्यदेहस्य संधिः पुच्छमध्ययोश्च संधिरित्यर्थः। 　　　　शब्रासा.

**किं छन्दः का देवता योऽयमवाङ् प्राण इति। यज्ञायज्ञियं छन्दो वैश्वानरो देवता॥**

**किं छन्दः का देवतोरू इति। अनुष्टुप् छन्दो विश्वे देवा देवतोरू॥ ८-९॥**

यज्ञायज्ञियमिति। 'यज्ञायज्ञा वो अग्नये' ( शुसं. २७।४२ ) इत्यत्रोत्पन्नं यज्ञायज्ञियं तदेव छन्दः, बृहतीत्यर्थः। 　　　　शब्रासा.

**किं छन्दः का देवताऽष्ठीवन्ताविति। पङ्क्तिश्छन्दो मरुतो देवताऽष्ठीवन्तौ॥ १०॥**

अष्ठीवन्तौ जानुप्रदेशावित्यर्थः। 　　　　शब्रासा.

**किं छन्दः का देवता प्रतिष्ठे इति। द्विपदाच्छन्दो विष्णुर्देवता प्रतिष्ठे॥ ११॥**

प्रतिष्ठे पादौ। 　　　　शब्रासा.

**किं छन्दः का देवता प्राणा इति। विच्छन्दाश्छन्दो वायुर्देवता प्राणाः॥ १२॥**

विच्छन्दा इति। विविधच्छन्दस्का ऋक् विच्छन्दाः, तादृक् छन्दः। 　　　　शब्रासा.

**किं छन्दः का देवतोनातिरिक्तानीति। न्यूनाक्षरा छन्द आपो देवतोनातिरिक्तानि। सैषाऽऽत्मविद्यैव। एतन्मयो हैवैता देवता एतमात्मानमभिसंभवति। न हात्रान्या लोक्यताया आशीरस्ति॥ १३॥**

ऊनातिरिक्तानीति। उक्तेभ्योऽङ्गेभ्योऽन्यानि न्यूनाधिकपरिमाणान्यङ्गानि च किंछन्दस्कानि किंदेवत्यानि इति प्रश्नः। उत्तरम्—न्यूनाक्षरा छन्दः आपो देवतेति। 'आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः' इति श्रुतेः (नाउ. २९) अपां सर्वात्मत्वात् न्यूनातिरिक्तान्यङ्गान्यब्देवत्यानीत्यर्थः। यदुक्तम्—अग्नेः शिरोग्रीवादिपरिकल्पनेन छन्दोदेवतास्वरूपत्वं तदेतत्पुण्यलोकसाधनमात्मविद्यैवेति प्रशंसति—सैषाऽऽत्मविद्यैवेति। आत्मन उदीरितच्छन्दोदेवतासमष्टिरूपविराडात्मकस्य सम्बन्धिनः स्वस्य विद्या। य एवंविधमग्निं चिन्वीत, वेद वा, स एतन्मयः। अत्रोक्ताग्निसवित्रादिदेवतास्वरूपः सः एतमात्मानं एवंविधच्छन्दोदेवतारूपावयवयुक्तं शरीरं अभिलक्ष्य संभवति उत्पद्यते। अग्निचितो वेदितुश्च सर्वदेवतास्वरूपप्राप्तिरित्युक्तं भवति। न हात्रेति। अत्र अग्नौ लोक्यतायै पुण्यलोकावाप्तये अन्या उक्तव्यतिरिक्ता आशीः प्रार्थना नास्तीत्यर्थः। 　　　　शब्रासा.

चित्याग्निः एकाक्षरात्मकं विश्वात्मकं च ब्रह्म

**अथ यश्चितेऽग्निर्निधीयते तदेकं रूपमुभौ भवतः। तस्मात्तावेतेनैव रूपेणेमाः प्रजाः प्रजनयतः। सैषैकैवेष्टकाऽग्निरेव। तामेष सर्वोऽग्निरभिसंपद्यते। सैवेष्टकासंपत्। तदेतदेकमेवाक्षरं वौगिति। तदेष सर्वोऽग्निरभिसंपद्यते। सैवाक्षरसंपत्॥ ८॥**[1]

एवं विभिन्नयो रुक्मपुरुषयोरिष्टकापुरीषचित्योरिन्द्राग्नित्वमुक्तम्। तयोरिदानीमैक्यमाह—अथ यश्चितेऽग्निर्निधीयत इति। उभौ इन्द्राग्नी एकं रूपं आहवनीयात्मकमभवताम्। कथमेकरूपत्वमिति? तदिष्टकासंपत्त्या अक्षरसंपत्त्या चोपपादयति—सैषैकैवेष्टकाऽग्निरेवेति। यदग्निद्वन्द्वमुक्तं सा एकेष्टका अग्निरूपा एष सर्वोऽग्निः तामिष्टकामभिलक्ष्य संपद्यते, इष्टकारूपेणैकेन संपन्न इति एक इति गण्यते, सा इयमिष्टकासंपत्। एकमेवाक्षरं वौगिति। इत्यस्यार्थः— आहवनीयनिधानमन्त्रगतवौषडवयववौगि-

---

(१) शब्रा. १०।४।१।८,९.

त्यात्मकैकाक्षरेण सर्वोऽग्निः सम्पद्यत इत्यक्षरैकत्वादेकत्वम्। सैवेयमक्षरसंपत्। शब्रासा.

**तद्धैतत्पश्यन्नृषिरभ्यनूवाद। भूतं भविष्यत्प्रस्तौमि महद्ब्रह्मैकमक्षरं बहु ब्रह्मैकमक्षरमिति। एतद्ध्येवाक्षरं सर्वे देवाः, सर्वाणि भूतान्यभिसंपद्यन्ते। तदेतद्ब्रह्म च क्षत्रं च। अग्निरेव ब्रह्म इन्द्रः क्षत्रम्। इन्द्राग्नी वै विश्वे देवाः। विड्वि विश्वे देवाः। तदेतद्ब्रह्म क्षत्रं विट्॥ ९॥**

अक्षरस्यैकत्वं मन्त्रसंवादेन द्रढयति—तद्धैतत्पश्यन्नृषिरभ्यनूवादेति। एतमर्थं पश्यन्नृषिर्मन्त्रं उक्तवान्। भूतं भविष्यत् मिलित भूतभविष्यत्कालवर्ति, महत् महत्त्वातीतस्य विश्रान्तिभूमिः 'ज्यायानेभ्यो लोकेभ्यः' इति श्रुतेः। अथवा ब्रह्म कीदृगम्? सकलजगदात्मना महत् अतिप्रभूत एकं अद्वितीय, एकत्वसंख्या द्वित्वादिसंख्यानिरासार्था। न तु तत्रैकत्वसंख्याविधानार्था। अन्यथा 'अस्थूलमनण्वह्रस्वं ब्रह्म' (बृउ. ३।८।८) इति निर्गुणश्रुतिव्याकोपः स्यात्, इति ब्रह्मविदां मतम्। अक्षरं अविनश्वरं सर्वगत वा ब्रह्म सच्चिदानन्दैकरस प्रस्तौमि। बहु ब्रह्मैकमक्षरमित्येतदुक्तस्य विवरणम्—एतद्ध्येवाक्षरमिति। अयमर्थः—सर्वे देवाः सर्वाणि भूतानि चैतद्ब्रह्मलक्षणमेकमक्षरमभिसंपद्यन्ते। सर्वेषां कारणरूपाक्षरात्मनैकत्वं सपन्नमित्यर्थः। उक्तमग्नेरिन्द्राग्न्यात्मकत्वमुपजीव्य वर्णत्रयात्मना स्तौति—तदेनद् ब्रह्म च क्षत्र चेति। इन्द्राग्न्योरवयवशो ब्रह्मक्षत्ररूपत्वात्तदुभयरूपस्याग्नेस्तत्तादात्म्यं तयोर्विश्वदेवात्मकत्वाच्च विड्रूपता। इन्द्राग्न्योर्विश्वदेवात्मकत्वमेवम्—इन्द्रः सर्वदेवाना परमः, अग्निरवमः। तयोराद्यन्तवर्तिनोर्ग्रहणेन सर्वे देवाः संगृहीता इति तयोस्तदात्मकत्वम्। विश्वदेवानां विट्त्वं इन्द्रप्रजात्वात्। अतस्तदेकमग्न्यात्मकमक्षरं ब्रह्मक्षत्रवैश्यरूपमित्यर्थः। शब्रासा.

चित्याग्निर्वागात्मा, आदित्यात्मा, आदित्यपुरुषरूपोऽमृत

**तस्य वा, एतस्याग्नेर्वागेवोपनिषत्। वाचा हि चीयते ऋचा यजुषा साम्नेति नु दैव्या। अथ यन्मानुष्या वाचा हेति इदं कुरुतेति इदं कुरुतेति। तदु ह तया चीयते॥ १॥**

(१) शब्रा. १०।५।१।१-५.

पूर्वं 'आदित्योऽग्निरित्यु हैक आहुः' (शब्रा. १०।४।५।१) इत्युक्तं, तत्र त्रयीमयादित्येऽग्न्युपासनास्मिन् ब्राह्मणे वक्ष्यते। अथ तस्याग्नेस्त्रयीमयत्वं दर्शयति—तस्य वा एतस्याग्नेरिति। वागेवोपनिषद् रहस्य स्वरूपम्। यतोऽग्निः ऋग्यजुःसामरूपया दैव्या वाचा चीयते, मानुष्या मनुष्यसम्बन्धिन्या वाचा अपि चीयते। तामेवाभिनयेनाह—इतीद कुरुतेति इतीद कुरुतेति। शब्रासा.

**सा वा एषा वाक् त्रेधा विहिता ऋचः यजूंषि सामानि। तेनाग्निस्त्रेधा विहितः। एतेन हि त्रयेण चीयते। अथ हैव त्रेधा विहितः। इत्थं ह त्वेवापि त्रेधा विहितः। यदस्मिंस्त्रेधा विहिता इष्टका उपधीयन्ते पुन्नाम्न्यः स्त्रीनाम्न्यः नपुंसकनाम्न्यः। त्रेधा विहितान्यु एवेमानि पुरुषस्याङ्गानि पुन्नामानि स्त्रीनामानि नपुंसकनामानि॥ २॥**

वाचस्त्रैविध्यादग्निरपि तया चितस्त्रिविध इत्याह—सा वा एषा वाक् त्रेधा विहितेति। तेनाग्निस्त्रेधा विहितः अग्निवायुसूर्यात्मनेत्यर्थः। अथ हैव त्रेधा विहित इत्यनेन वेदत्रयद्वाराऽग्नेरुक्तत्रैविध्योपसंहारः। इत्थ ह त्वेवापि त्रेधा विहित इत्यनेन वक्ष्यमाणत्रैविध्यप्रतिज्ञा। यत् यस्मात् अस्मिन् अग्नौ त्रेधा विहिता इष्टका उपधीयन्ते। पुन्नाम्न्यः पुंलिङ्गशब्दाभिधेयाः स्तोमाख्याः। 'स्तोमानुपदधाति' (शब्रा. ८।४।१।४-६) इति श्रुतेः। स्त्रीनाम्न्यः स्त्रीलिङ्गशब्दाभिधेयाः अषाढाच्छन्दस्याविकर्णाद्याः। नपुंसकनाम्न्यः नपुंसकशब्दाभिधेयाः पशुशीर्षाख्याः पञ्च। 'पशुशीर्षाण्युपदधाति' (शब्रा. ७।५।२।१) इति श्रुतेः। यथा चित्याग्नेरवयवभूता इष्टका लिङ्गत्रयशब्दाभिहिताः एवं पुरुषस्याङ्गानि लिङ्गत्रययुक्तशब्दाभिधेयानि। यथा कर्णः, पाणिः, पादः इति पुंल्लिङ्गशब्दाः। नासिका, जङ्घा इति स्त्रीलिङ्गशब्दाः। लोचन, चक्षुः, शिरः इति नपुंसकलिङ्गशब्दाः। शब्रासा.

**सोऽयमात्मा त्रेधा विहित एव। सोऽनेन त्रेधा विहितेनात्मनैतं त्रेधा विहितं दैवममृतमाप्नोति। ता उ सर्वा इष्टका इत्येवाचक्षते नेष्टक इति नेष्टकमिति। वाचो रूपेण। वाग्घ्येवैतत्सर्वं यत् स्त्री पुमान् नपुंसकम्। वाचा ह्येवैतत्सर्वमाप्तम्। तस्मादेना**

**अङ्गिरस्वद् ध्रुवा सीद (शुसं. १२।५३) इत्येव सर्वाः सादयति । नाङ्गिरस्वद् ध्रुवः सीदेति । नाङ्गिरस्वद्ध्रुवं सीदेति । वाचं ह्येवैतां संस्कुरुते ॥३॥**

सोऽयमात्मा पुरुपस्त्रेधा विहितः लिङ्गत्रयशब्दाभिहिताङ्गयुक्तः । अनेन त्रेधा विहितेनात्मना त्रिविधेष्टकाचितेन त्रेधा विहित अग्निवायुसूर्यात्मना त्रिविध दैवममृतमादित्यमाप्नोति । तद्यदीष्टकाना स्त्रीपुन्नपुसकलिङ्गशब्दाभिधेयत्व तर्हि तथैव कथमिष्टकाशब्दस्य लिङ्गत्रयव्यवहारो नास्तीत्याशङ्कय वाग्रूपत्वेन परिहरति—ता उ सर्वा इष्टका इत्येवाचक्षत इति । स्त्रीलिङ्गशब्देनैव व्यवह्रियन्ते न तु पुन्नपुसकलिङ्गाभ्यामिति । तदनुवदति—नेष्टक इति, नेष्टकमिति । किमर्थमेव, वाचो रूपेण, वाचः स्त्रीलिङ्गत्व स्फुटम् । सादनमन्त्रेऽपि स्त्रीलिङ्गत्वमेवेत्याह—तस्मादेना अङ्गिरस्वद् ध्रुवा सीदेति । पुनपुंसकालिङ्गता ध्रुवपदेन सयोज्य प्रदर्शयति निराकरणाय—नाङ्गिरस्वद् ध्रुवः सीदेति । नाङ्गिरस्वद् ध्रुव सीदेति । ध्रुव इति पुँल्लिङ्गत्व ध्रुवमिति नपुंसकत्वम् । इत्येवमग्नेर्वाग्रूपत्वमुक्तम् ।

शब्रासा.

**सा या सा वाक् असौ स आदित्यः । स एप मृत्युः । तद् यत्किंचार्वाचीनमादित्यात् सर्वं तन्मृत्युनाऽऽप्तम् । स यो हैनमतोऽर्वाचीनं चिनुते मृत्युना हैनं स आप्तं चिनुते । मृत्यवे ह स आत्मानमपि दधाति । अथ य एनमत ऊर्ध्वं चिनुते स पुनर्मृत्युमपजयति । विद्यया ह वा अस्यैषोऽत ऊर्ध्वं चितो भवति ॥ ४ ॥**

वाच आदित्यरूपत्वं चाह—सा या सा वागसौ स आदित्य इति । यत्किञ्चादित्यादर्वाचीन अधस्तनं भूतजातं तत्सर्वं मृत्युनाऽऽप्तम् । न हि सूर्यप्रकाशानाक्रान्त वस्त्वस्ति । अतः सूर्यादर्वाचीन चिनुते । मृत्युनाऽऽक्रान्तमेव विचिन्वन् यजमानः स्वात्मानमपि मृत्यवे अर्पितवान् भवति । यत एवम्, अतः सूर्यादूर्ध्वं चयने मृत्युकर्तृकाक्रमणस्याभावात् पुनर्मृत्युजयः फल भवति । तत्कथ सूर्यादूर्ध्वं चयनमसंभवपरिहृतत्वादित्याशङ्क्य तत्राप्युपाय दर्शयति—विद्यया ह वा इति । यद्यपि वस्तुस्थित्या आदित्यस्योपरि चयनाभावस्तथापि ज्ञानेनोर्ध्वचयन सपादयितु शक्यते । अतस्तथोपासनाया पुनर्मृत्युजयः फल भवतीत्यर्थः । शब्रासा.

**सा वा एपा वाक् त्रेधा विहिता ऋचः यजूंषि सामानि । मण्डलमेवर्चः अर्चिः सामानि पुरुपो यजूंपि । अथैतदमृत यदेतदर्चिर्दीप्यते । इद तत्पुष्करपर्णं तद् यत्पुष्करपर्णमुपधायाग्निं चिनोति । एतस्मिन्नेवैतदमृत ऋङ्मयं यजुर्मयं साममयमात्मानं संस्कुरुते । सोऽमृतो भवति ॥ ५ ॥**

यदुक्त विद्यया अस्यादित्यस्योर्ध्वमभिश्रितो भवतीति तद्विशदयति—सा वा एषा वाक् त्रेधा विहितेति । सूर्यमण्डले तावत्त्रीणि विद्यन्ते ज्योतिर्मयमण्डल, अर्चीषि, तदन्तर्वर्ती पुरुपः इति । चयनेऽपि वेदत्रयमस्ति । तत्र मण्डलमेव ऋग्रूपत्वेनोपासनीय, अर्चिः एव सामरूपत्वेन, अन्तर्वर्ती अग्निपुरुप एव यजूरूपत्वेन । अर्चिर्दीप्यते इति यत् तद् एतदमृत, तत्पुष्करपर्णं यतः (यत्[१]) 'अपा पृष्ठमसि' (शुस. १३।२) इति मन्त्रेण प्रथम पुष्करपर्णमुपधाय तस्योपर्यग्नेश्चयनम् । अतस्तदात्मकेऽमृतेऽर्चिर्मये आदित्येऽयमुपासिता स्वीयमात्मानं वेदत्रयरूपं चित्याग्निरूप सस्कुर्वन् अमृतः मृत्युबाधारहितः सूर्यात्मको भवतीत्यर्थः । शब्रासा.

**अयं वाव लोक एपोऽग्निश्चितः । तस्याप एव परिश्रितः । मनुष्या यजुष्मत्य इष्टकाः । पशवः सूददोहाः । ओपधयश्च वनस्पतयश्च पुरीषम् । आहुतयः समिधः । अग्निर्लोकम्पृणा । तद्वा एतत्सर्वमग्निमेवाभिसंपद्यते । तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसंपद्यते ॥ १ ॥**

उत्तरब्राह्मणे भूम्यादिलोकत्रयादित्यनक्षत्रच्छन्दःसवत्सरात्मानः चित्याग्निरूपत्वेनोपासनीया उच्यन्ते । अत एव लोकादेः परिश्रिद्यजुष्मतीपशुपुरीषसमिदादिसामान्यधर्मवर्णनम् । अत्र केवल विद्याविधित्वे शब्दस्य तात्पर्य लक्ष्यते, न शुद्धकर्माङ्गविधित्वे । तथाहि अस्मिन्नेव ब्राह्मणे 'विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दाक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥'( शब्रा. १०।

(१) शब्रा. १०।५।४।१–१९

५।४।१६) इत्यनेन श्लोकेन केवलकर्मनिन्दापुरःसरं विद्याप्रशंसा—अय वाव लोक एषोऽग्निश्चित इति। अय भूलोक एव एषः चितः अग्निः ध्येयः। अग्निसामान्यधर्मानाह—तस्याप एवेत्यादिना। तस्य भूलोकस्याग्नेः आप एव परिश्रितः समुद्रोदकान्येव परिश्रिद्रूपाणीति ध्येयानि, भूमौ वर्तमानमनुष्या यजुष्मत्य इष्टकाः, पशवः सूददोहाः अमृतदोहाः अन्नमित्यर्थः। यद्वा 'ता अस्य सदूदोहसः' (शुस. १२।५५) इत्यनेन यदधिवचन तत्पशव इत्यर्थः। ओषधयः वनस्पतयः एव पुरीषम्। आहुतिः समित्त्रयरूपा। एतस्य (स्याः) पुरीषाहुतेः समित्त्रयरूपत्वमुत्तरत्र स्पष्टीकरिष्यते। 'अथ यद्दिक्षु च रश्मिषु चान्न तत्पुरीष ता आहुतयस्ताः समिधः' (शब्रा. १०।५।४।४) इति। वाह्यः अग्निः ज्वलन एव लोकम्पृणा इष्टकाः । यस्माद्वाह्योऽग्निर्लोकम्पृणेष्टकारूपः तस्मात् एतत्सर्वं परिश्रिद्यजुष्मत्यादिरूपोदकमनुष्यादिक अग्निमेवाभिसंपद्यते, अग्निना सर्वे सपन्नाः स्वस्वव्यापारदक्षा भवन्ति। यथा चित्याग्निर्लोकम्पृणेष्टकाभिः सपूर्णः। अयमर्थः—भूलोकस्य चित्याग्नित्वपरिज्ञाने समुद्रोदकमनुष्यपश्वोषधिवनस्पतिपुरीषाहुतिज्वलनाः परिश्रिद्यजुष्मतीसूददोहाः पुरीषाहुतिसमिल्लोकम्पृणारूपाः परिज्ञेया इति। वेदितुः फलमाह—स यो हैतदेवं वेदेति। एवं भूलोकं चित्याग्निरूपं वेद, स लोकम्पृणाभूतं एन लोकाधिष्ठिताग्मग्निमेव सपद्यते तदात्मको भवतीत्यर्थः। शब्रासा.

**अन्तरिक्षं ह त्वेवैषोऽग्निश्चितः। तस्य द्यावापृथिव्योरेव संधिः परिश्रितः। परेण ह्यन्तरिक्षं द्यावापृथिवी संधत्तः। ताः परिश्रितः। वयांसि यजुष्मत्य इष्टकाः। वर्षं सूददोहाः। मरीचयः पुरीषम्। आहुतयः समिधः। वायुर्लोकम्पृणा। तद्वा एतत्सर्वं वायुमेवाभिसंपद्यते। तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते। स यो हैतदेवं वेद। लोकम्पृणाम्। एनं भूतमेतत्सर्वमभिसंपद्यते॥ २॥**

एवमुत्तरे 'अन्तरिक्षं ह त्वेवैषोऽग्निश्चितः' इत्यादयः 'सर्वाणि ह त्वेव भूतानि सर्वे देवा एषोऽग्निश्चितः' इत्यन्ता अष्टौ पर्याया व्याख्येयाः। यत्र यत्र विशेषः स उच्यते। अन्तरिक्षपर्याये द्यावापृथिव्योः संधिः परिश्रितः इत्युक्तं विशदयति—परेण ह्यन्तरिक्षमिति। अन्तरिक्षं परेण परस्तात् अन्त इत्यर्थः। यद् द्यावापृथिवी सयुक्तौ भवतः। स सधिः परिश्रिद्रूपो ध्येयः। अत्र वायुप्राप्तिः फलम्। शब्रासा.

**द्यौर्ह त्वेवैषोऽग्निश्चितः। तस्याप एव परिश्रितः। यथा ह वा इदं कोशः समुब्जितः एवमिमे लोका अप्स्वन्तः। तद् या इमॉल्लोकान् परेणापः ताः परिश्रितः। देवा यजुष्मत्य इष्टकाः। यदेवैतस्मिँल्लोकेऽन्नं तत्सूददोहाः। नक्षत्राणि पुरीषम्। आहुतयः समिधः। आदित्यो लोकम्पृणा। तद्वा एतत्सर्वमादित्यमेवाभिसंपद्यते। तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते। स यो हैतदेवं वेद। लोकम्पृणाम्। एनं भूतमेतत्सर्वमभिसंपद्यते॥ ३॥**

द्युलोकपर्याये तस्या आप एव परिश्रितः इत्युक्तं, तत्समर्थयते—यथा ह वा इदं कोशः समुब्जित इति। भूलोकपर्याये समुद्रोदकान्येव परिश्रितः, अत्र तथा न सन्तीति तत्समर्थनोक्तिः। यथा इद इदानीम्, कोशः पेटिका, समुब्जितः सपिहितो वर्तते, एवमिमे त्रयो लोकाः अप्स्वन्तः कोशरूपत्वेन वर्तन्ते। तस्मात् इमान् त्रीन् लोकान् परेण तेषां परस्ताद्या आपः परिवेष्ट्य वर्तन्ते ताः परिश्रितः। अत्रादित्यप्राप्तिः फलमुक्तम्। शब्रासा.

**आदित्यो ह त्वेवैषोऽग्निश्चितः। तस्य दिश एव परिश्रितः। ताः षष्टिश्च त्रिणि च शतानि भवन्ति। षष्टिश्च ह वै त्रीणि च शतान्यादित्यं दिशः समन्तं परियन्ति। रश्मयो यजुष्मत्य इष्टकाः। ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति। षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयः। तद् यत्परिश्रित्सु यजुष्मतीः प्रत्यर्पयति रश्मींस्तद्दिक्षु प्रत्यर्पयति। अथ यदन्तरा दिशश्च रश्मींश्च तत्सूददोहाः। अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषम्। ता आहुतयः। ताः समिधः। अथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणा। तद्वा एतत्सर्वं दिश इति चैव रश्मय इति चाख्यायते। तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते। स यो हैतदेवं वेद। लोकम्पृणाम्। एनं भूतमेतत्सर्वमभिसंपद्यते॥ ४॥**

आदित्यपर्याये षष्ट्युत्तरत्रिशतसख्याका आदित्यमण्डलस्य समन्तात्परिगता दिशः परिश्रिदात्मिकाः। तत्रत्या एव तावत्सख्याकाः रश्मयः किरणा एव यजुष्मत्य इष्टकाः। सवत्सरस्य षष्ट्यधिकत्रिशतदिनानि विद्यन्ते। अत्रादित्यस्यैकैकदिने एकैका दिक् एकैकश्च रश्मिरित्युक्त भवति। अत्र परिश्रित्सु यजुष्मतीना विधान विदिक्षु रश्मिप्रत्यर्पणम्'। अथ यद्दिक्षु च रश्मिपु चान्नमिति। दिशा रश्मीना लोकत्वादत्रान्नसभावनाऽस्ति। अत्र दिशा रश्मीना यन्मध्यवर्तनं तत्सूददोहस्थानीयमित्यर्थः। लोकम्पृणेष्टकास्थानीय सपादयति—अथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणेति। यद्दिश इति रश्मय इत्याख्यान वचनमेव लोकम्पृणात्मकमित्यर्थः। आदित्यमग्निरूपत्वेनोपासकस्य दिग्रश्मितादात्म्य फलमित्याह—स यो हैतदेवमिति। शब्रासा.

**नक्षत्राणि ह त्वेवैपोऽग्निश्चितः। तानि वा एतानि सप्तविंशतिर्नक्षत्राणि। सप्तविंशतिः सप्तविंशतिर्होपनक्षत्राणि एकैकं नक्षत्रमनूपतिष्ठन्ते। तानि सप्त च शतानि विंशतिश्चाधि षट्त्रिंशत्। ततो यानि सप्त च शतानि विंशतिश्च इष्टका एव ताः। षष्टिश्च त्रीणि च शतानि परिश्रितः। षष्टिश्च त्रीणि च शतानि यजुष्मत्यः। अथ यान्यधि षट्त्रिंशत् स त्रयोदशो मासः। स आत्मा। त्रिंशदात्मा। प्रतिष्ठा द्वे। प्राणा द्वे। शिर एव षट्त्रिंश्यौ। तद् यत्ते द्वे भवतः। व्यक्षरं हि शिरः। अथ यदन्तरा नक्षत्रे तत्सूददोहाः। अथ यन्नक्षत्रेष्वन्नं तत्पुरीषम्। ता आहुतयः। ताः समिधः। अथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा। तद्वा एतत्सर्वं नक्षत्राणीत्येवाख्यायते। तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते। स यो हैतदेवं वेद। लोकम्पृणाम्। एनं भूतमेतत्सर्वमभिसंपद्यते ॥५॥**

नक्षत्राणामग्नित्वेनोपासन कर्तव्यमित्यस्मिन्पर्याये सप्तविंशतेर्नक्षत्राणा मध्ये एकैकस्य मुख्यनक्षत्रस्य सप्तविंशतिः सप्तविंशतिरुपनक्षत्राणि विद्यन्ते। तत्र सर्वाणि सप्तविंशतिनक्षत्राणि उपनक्षत्राणि च संभूय विंशत्यधिकानि सप्तशतानि षट्त्रिंशदधिकानि च सभवन्ति, तत्र विंशत्यधिकसप्तशतसख्याकानां नक्षत्राणा मध्ये षष्ट्यधिकत्रिशतसख्याकानि परिश्रितः। तावन्ति नक्षत्राणि यजुष्मत्यः। यान्यधिकानि षट्त्रिंशत्सख्याकानि विद्यन्ते तेषां विभाग विवक्षुः सामान्येन तेषा त्रयोदशमासरूपतामाह—स त्रयोदशो मास इति। विंशत्यधिकसप्तशतसख्याकेष्टकारूपनक्षत्रवचनेन तावत्सख्याहोरात्रसवत्सरात्मकोऽग्निरुक्त इति मत्वा, अधिकाना षट्त्रिंशन्नक्षत्राणा त्रयोदशमासरूपत्वमुच्यते। सवत्सरेण विना मासासभवात्। तत्र त्रिंशन्नक्षत्राण्यात्मा मध्यदेहः। द्वे नक्षत्रे प्रतिष्ठा पादरूपेण, पादयोर्द्वित्व स्फुटम्। द्वे नक्षत्रे प्राणाः। चक्षुरादिप्राणाना द्वन्द्वशोऽवस्थानादेवमुक्तम्। द्वे नक्षत्रे शिरोरूपम्। षट्त्रिंश्याविति स्त्रीलिङ्गवचनमिष्टकाभिप्रायेण। शिरसो नक्षत्रद्वयात्मकत्वमक्षरसख्यया प्रतिपादयति—तद्यत्ते द्वे भवतो द्व्यक्षर हि शिर इति। यदन्तरा नक्षत्रे तत्सूददोहा इति। द्वयोर्द्वयोर्नक्षत्रयोर्मध्ये सूददोहोरूपेण ध्येयम्। नक्षत्राणीति यदाख्यान वचन तल्लोकम्पृणास्वरूपेण ध्येयम्। यस्मान्नक्षत्राख्यान लोकम्पृणारूप ततो मुख्यनक्षत्राण्युपनक्षत्राणि च सर्वाणि नक्षत्राणीत्येव आख्यायन्ते। नक्षत्रसपत्तिः फलमस्य ध्यानस्योक्तम्। शब्रासा.

**ता वा एता एकविंशतिर्बृहत्यः। एकविंशो वै स्वर्गो लोकः। बृहती स्वर्गो लोकः। तदेष स्वर्गं लोकमभिसंपद्यते। एकविंशं च स्तोमम्। बृहतीं च छन्दः ॥ ६ ॥**

नक्षत्रोपनक्षत्रसंपन्ना संख्या बृहत्यात्मना स्तौति—ता वा एता एकविंशतिर्बृहत्य इत्यादि। विंशत्यधिकसप्तशतनक्षत्रैर्विंशतिर्बृहत्यः, अधिकया षट्त्रिंशतैकेति एकविंशतिर्बृहत्यः। एकविंशो वै स्वर्गो लोकः। स्वर्गस्त्वादित्य इति गम्यते, सुखरूपो वा लोकः स्वर्गः एकविंशतिसख्यापूरकः। तथा च तैत्तिरीयके स्वर्गस्य चैकविंशत्व तस्यादित्यस्वरूपत्वमाम्नायते—'एकविंशो वा इतः स्वर्गो लोकः स्वर्ग लोकमाप्नोति असौ वा आदित्य एकविंशः' इति 'बृहती स्वर्गो लोकः' इति। तैत्तिरीयक एवादित्यस्य छन्दोमयत्वप्रस्तावे 'बृहत्येवादित्योऽभवत्' इति श्रुतम्। स्वर्गो लोको बृहत्यात्मक इत्यर्थः। अथ नक्षत्रसख्यां बृहत्यात्मनोपासितुः स्वर्गलोकादिफलमित्याह—तदेष स्वर्ग लोकमभिसपद्यत एकविंश च स्तोमं बृहतीं

च छन्द इति । एकविंशतिस्तोत्रियात्मकः स्तोम एकविंश उच्यते । शब्रासा.

**छन्दांसि ह त्वेवैषोऽग्निश्चितः । तानि वा एतानि सप्त छन्दांसि । चतुरुत्तराणि त्रिचानि । तेषां सप्त च शतानि विंशतिश्चाक्षराण्यधि षट्त्रिंशत् । ततो यानि सप्त च शतानि विंशतिश्च इष्टका एव ताः । षष्टिश्च त्रीणि च शतानि परिश्रितः । षष्टिश्च त्रीणि च शतानि यजुष्मत्यः । अथ यान्यधि षट्त्रिंशत् स त्रयोदशो मासः । स आत्मा । त्रिंशदात्मा । प्रतिष्ठा द्वे । प्राणा द्वे । शिर एव षट्त्रिंश्यौ । तद् यत्ते द्वे भवतः । द्व्यक्षरं हि शिरः ॥ ७ ॥**

छन्दसामग्निरूपेण ध्यान विधत्ते--छन्दांसि ह त्वेवैषोऽग्निश्चित इति । 'तानि वा एतानि सप्त च्छन्दांसि' इत्यादेरयमर्थः--तत्र येषा छन्दसामग्नित्वमुक्त, तानि गायत्र्यादीनि सप्त च्छन्दांसि । तदुत्तरोत्तर चतुरक्षराधिकानि त्रिचानि प्रत्येक ऋक्त्रयात्मकानि, विवक्षितसख्यासिद्धये त्रिचानीत्युक्तम् । तसख्यामाह--तेषा सप्त च शतानीति । तेषा प्रत्येकमृक्त्रयात्मना सप्ताना छन्दसा संभूयाक्षरपरिगणने सति विंशत्याधिकानि सप्तशतानि षट्त्रिंशदधिकानि चाक्षराणि भवन्ति । तत्र यानि विंशत्याधिकानि सप्तशताक्षराणि तेष्विष्टकारूपेषु षष्ट्युत्तरत्रिशताक्षराणि परिश्रितः, तावन्ति यजुष्मत्यः । अथाधिकाना षट्त्रिंशदक्षराणामधिकमासात्मकाना विभागमाह-त्रिंशदात्मेति । आत्मा मध्यमभागः त्रिंशदक्षरात्मकः, प्रतिष्ठा पादो द्व्यक्षरात्मकः, प्राणाः चक्षुरादयो द्व्यक्षरात्मकाः, शिरो द्व्यक्षरात्मकम् । शब्रासा.

**तस्यै वा एतस्यै षट्त्रिंशदक्षरायै बृहत्यै यानि दश प्रथमान्यक्षराणि सा दशाक्षरैकपदा । अथ यानि विंशतिः सा विंशत्यक्षरा द्विपदा । अथ यानि त्रिंशत् सा त्रिंशदक्षरा विराट् । अथ यानि त्रयस्त्रिंशत् सा त्रयस्त्रिंशदक्षरा । अथ यानि चतुस्त्रिंशत् सा चतुस्त्रिंशदक्षरा स्वराट् । अथ यत्सर्वैश्छन्दोभिरयमग्निश्चितः तदतिच्छन्दाः । ता उ सर्वा इष्टका एव । इष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्री । तेनैष गायत्रोऽग्निः । मृदापः इति त्रीण्यक्षराणि । त्रिपदा गायत्री । तेनो एवैष गायत्रः । अथ यदन्तरा छन्दसी तत्सूददोहाः । अथ यच्छन्दःस्वन्नं तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यच्छन्दांसीत्याख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वं छन्दांसीत्येवाख्यायते । तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेव वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसंपद्यते ॥ ८ ॥**

एवमधिकाना षट्त्रिंशदक्षराणा विभागमुक्त्वा तावद्भिरक्षरैर्बृहती संपाद्य ता नानाच्छन्दोमयत्वेन संपादयति--तस्यै वा एतस्यै षट्त्रिंशदक्षरायै बृहत्या इति । तत्र षट्त्रिंशदक्षराया बृहत्या यानि प्रथमानि आदिमानि दशाक्षराणि तैर्दशाक्षरा एकपदा विराट् सपन्ना । अत्र विराजः पादत्रय व्युदसितु एकपदा इत्युक्तम् । तथा यानि बृहत्याः प्रथमानि विंशतिरक्षराणि तैर्विंशत्यक्षरा द्विपदा विराट् सपन्ना । अथ यानि बृहत्यास्त्रिंशदक्षराणि तैस्त्रिंशदक्षरा विराट् संपन्ना । एवं त्रयस्त्रिंशताक्षरैस्तावदक्षरा विराट् । अथ चतुस्त्रिंशदक्षरैस्तावदक्षरा च स्वराण्नाम छन्दः सपन्नम् । एवमेव सा बृहत्येव नानाच्छन्दोरूपेण स्तुता । अग्नेरतिच्छन्दोरूपत्वमाह-- अथ यत्सर्वैरिति । यस्मात् अयमग्निः सर्वैर्गायत्र्यादिभिः छन्दोभिः चितः छन्दस्योपधानसमये तस्मादयमतिच्छन्दा इत्युच्यते चित्याग्निरतिच्छन्दा इति यत् तेन सर्वा इष्टका अतिच्छन्दोमय्य इत्युक्तम् । इष्टकेति नाम्न्यपि छन्दः सपादयति--इष्टकेति त्रीण्यक्षराणि, त्रिपदा गायत्रीति । सख्यासाम्यात् । अत इष्टका गायत्र्यश्च तिसृस्तच्चितोऽग्निरपि गायत्र इत्युच्यते । इष्टकाकरणाना मृदपामपि सख्यासाम्यात् गायत्रीच्छन्दस्त्व तद्द्वाराऽग्नेर्गायत्रीत्व संपादयति--मृदाप इति त्रीण्यक्षराणीति । अथ च्छन्दोमयाग्नेः पूर्ववत्सूददोहपुरीषादिक संपादयति--अथ यदन्तरा च्छन्दसी इति । यदुभयोः छन्दसोर्मध्यमेव मध्यवर्ति वा वस्तु तत्सूददोहस्थानीय, छन्दांसीत्याख्यानमेव लोकम्पृणेष्टकास्थानीयम् । शब्रासा.

**ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसंपद्यते । एकविंशं च स्तोमम् । बृहतीं च छन्दः ॥ ९ ॥**

'ता वा एता एकविंशतिर्बृहत्यः' इत्यादिकं पूर्ववद्व्याख्येयम् । शब्रासा.

संवत्सरो ह त्वेवैषोऽग्निश्चितः । तस्य रात्रय एव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य रात्रयः । अहानि यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहानि । अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति । यः स त्रयोदशो मास आत्मा । अर्धमासाश्च ते मासाश्च । चतुर्विंशतिरर्धमासाः द्वादश मासाः । अथ यदन्तराऽहोरात्रे तत्सूददोहाः । अथ यदहोरात्रेष्वन्नं तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यदहोरात्राणीत्याख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वमहोरात्राणीत्येवाख्यायते । तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसंपद्यते ॥१०॥

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसंपद्यते । एकविंशं च स्तोमम् । बृहतीं च छन्दः ॥ ११ ॥

संवत्सरस्याग्न्यात्मना ध्याने षष्ट्यधिकत्रिशतसंख्याका रात्रय एव परिश्रितः स्मृताः । तावत्संख्यान्यहानि यजुष्मत्यः । यजुष्मत्यश्च पुरीषेण सह चतुरूनचतुःशतसंख्याका इति चतुर्थाध्याये उक्तम् (शब्रा १०।४।१।१४–१९) । तत्र षष्ट्यधिकत्रिशतसंख्या अहोरूपा ध्येयाः । अधिका याः षट्त्रिंशत्संख्याकाः सन्ति स संवत्सरावयवत्रयोदशमासः स एवार्धमासमासात्मक आत्मा । तच्चतुर्विंशतिरर्धमासरूपाः द्वादशमासरूपाः अहोरात्राणीत्याख्यायन्ते. तत्सर्वं लोकम्पृणेष्टकारूपम् । शब्रासा.

आत्मा ह त्वेवैषोऽग्निश्चितः । तस्यास्थीन्येव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि । मज्जानो यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानः । अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति । यः स त्रयोदशो मास आत्मा । प्राणः सः । तस्य त्रिंशदात्मन्विधाः । प्रतिष्ठायां द्वे । प्राणेषु द्वे । शीर्षन् द्वे । तद् यत्ते द्वे भवतः । द्विकपालं हि शिरः । अथ येनेमानि पर्वाणि संततानि तत्सूददोहाः । अथैतत्त्रयं येनायमात्मा प्रच्छन्नः लोम त्वङ् मांसमिति तत्पुरीषम् । यत्पिबति ता आहुतयः । यदश्नाति ताः समिधः । अथ यदात्मेत्याख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वमात्मेत्येवाख्यायते । तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसंपद्यते ॥ १२ ॥

अथोपासकेन स्वशरीरमेवाग्निरूपत्वेनोपासनीयमिति विधत्ते--आत्मा ह त्वेवैषोऽग्निश्चित इति । स्वशरीररूपाग्नेः षष्ट्यधिकत्रिशतसंख्याकान्यस्थीनि परिश्रिद्रूपेणोपासनीयानि । तावत्संख्याका मज्जानो यजुष्मतीरूपाः । अथ याः षट्त्रिंशदधिकाः यजुष्मत्योऽतियन्ति तासां विभागमाह-- स त्रयोदशो मास आत्मा प्राणः स तस्य त्रिंशदात्मन्विधा इति । तस्य शरीराग्नेः आत्मन् आत्मनि त्रिंशद्विधा यजुष्मत्यो ध्येयाः । प्रतिष्ठायां पादयोः द्वे इष्टकाद्वयम् । प्राणेषु चक्षुःश्रोत्रादिषु इष्टकाद्वयम् । शीर्षन् शिरसि इष्टकाद्वयम् । पूर्वत्र पर्यायेषु त्रिंशदात्मा प्रतिष्ठा द्वे प्राणाः द्वे शिर एव षट्त्रिंश्याविति आत्मप्रतिष्ठाप्राणशिरोरूपेणाधिकाः षट्त्रिंशदुपासनीया इत्युक्तम् । अत्र शरीरे प्राणपादचक्षुरादिशिरसां सद्भावात्तत्रतत्रेष्टका ध्येयाः इति विशेषः । सततानि पर्वाण्येव सूददोहाः । लोमत्वङ्मांसैरात्मा प्रच्छन्न इति तत्त्रयमेवात्र पुरीषत्वेन ध्येयम् । यत्पिबति ता एव आहुतयः । यदश्नाति भक्ष्यादि ता एव समिधो ध्येयाः । यदात्मेत्याख्यानं तल्लोकम्पृणेष्टकारूपम् । शब्रासा.

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसंपद्यते । एकविंशं च स्तोमम् । बृहतीं च छन्दः ॥ १३ ॥

बृहतीसंपादनादिकं पूर्ववद्बोद्धव्यम् । शब्रासा.

**सर्वाणि ह त्वेव भूतानि । सर्वे देवा एषोऽग्निश्चितः । आपो वै सर्वे देवाः । सर्वाणि भूतानि । ता हैता आप एवैषोऽग्निश्चितः । तस्य नाव्या एव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्याः समन्तं परियन्ति । नाव्या उ एव यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्ति । अथ यदन्तरा नाव्ये तत्सूददोहाः । अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति । यः स त्रयोदशो मासः आत्माऽयमेव स योऽयं हिरण्मयः पुरुषः ॥ १४ ॥**

अथाप्स्वग्नित्वेनोपासनं विधित्सुरपां सर्वदेवभूतात्मकत्वमाह—सर्वाणि ह त्वेव भूतानि सर्वे देवा एषोऽग्निश्चितः इति । सर्वाणि भूतानि सर्वे देवाः अग्नित्वेन ध्येया इत्यर्थः । आप एव सर्वभूतदेवात्मिकाः 'आपो वा इदं सर्वं विश्वाभूतान्यापः प्राणा वा आपः पशव आपः' इति 'सत्यमापः सर्वा देवता आपः' इति च तैत्तिरीयश्रुतेः । तत्र अब्रूपाग्नेरादित्यमण्डलपरिसरवर्तिन्यो नाव्याः नावा तार्याः षष्ट्यधिकत्रिशतसंख्याका नाव्या एव परिश्रितः । तावत्संख्याका एव नाव्या यजुष्मत्य इष्टकाः । सूर्यमण्डलसमीपे नानासंख्याका नद्यः सन्ति इत्याद्युक्तं तैत्तिरीयके—'शतं सहस्राणि प्रयुतानि नाव्यानामयं यः श्वेतो रश्मिः' इति । नाव्ये अन्तरा यत् उभयोर्नाव्ययोर्मध्ये यदस्ति तत्सूददोहत्वेन ध्येयम् । अधिकानां षट्त्रिंशत्संख्यानामिष्टकानां विशेषेण विभागं विवक्षुरादौ सामान्येनानूद्याग्रे तमाह—अथ या अमूः षट्त्रिंशदिष्टका इति । या अधिका इष्टकास्ताः अथोक्तेषु पर्यायेषु संवत्सररूपाग्न्यवयवत्रयोदशमासात्मिकाः आत्मा, अग्न्यात्मना ध्येयानामपामात्मेत्यर्थः । आत्मस्वरूपमाह—अयमेव स इति । योऽयमात्मेत्यर्थः । अयमेव हिरण्मयः पुरुषः अधिदैवं मण्डलान्तर्वर्ती पुरुषोऽधियज्ञं प्रथमचितावुपहितपुरुषोऽग्निरूपाणामपामात्मेत्यर्थः । शब्रासा.

**तस्यैते प्रतिष्ठे रुक्मश्च पुष्करपर्णं च । आपश्चादित्यमण्डलं च । स्रुचौ बाहू ताविन्द्राग्नी । द्वे स्वयमातृण्णे । इयं चान्तरिक्षं च तिस्रो विश्वज्योतिषः एता देवताः । अग्निर्वायुरादित्य एता ह्येव देवताः । विश्व ज्योतिर्द्वादशर्तव्याः । स संवत्सरः स आत्मा । पञ्च नाकसदः । पञ्च पञ्चचूडाः । स यज्ञः । ते देवाः । अथ यद्विकर्णी च स्वयमातृण्णा चाश्मा पृश्निः । यश्चितेऽग्निर्निधीयते सा पञ्चत्रिंशी लोकम्पृणायै । यजुः षट्त्रिंशी । सोऽस्यैष सर्वस्यान्तमेवात्मा । स एष सर्वासामपां मध्ये स एव सर्वैः कामैः संपन्नः । आपो वै सर्वे कामाः । स एषोऽकामः सर्वकामो वा । न ह्येतं कस्य चन कामः ॥ १५ ॥**

अथोक्तेषु पर्यायेष्वत्र या अमूः षट्त्रिंशदित्युक्तं तद्विभागमाह—तस्यैते प्रतिष्ठे इति । योऽयं हिरण्मयः पुरुष आत्मेत्युक्तः तस्याधियज्ञं रुक्मपुष्करपर्णाख्ये अधिदैवमब्रादित्यमण्डलात्मके द्वे इष्टके प्रतिष्ठे पादौ पादरूपेण ध्येये । बाहुरूपेण ध्येये द्वे स्रुचौ । भूम्यन्तरिक्षात्मके द्वे स्वयमातृण्णे इष्टके । अग्निवाय्वादित्यात्मना ध्येयास्तिस्रो विश्वज्योतिषः । द्वादशसमसंख्या ऋतव्येष्टकाः संवत्सररूपात्मत्वेन ध्येयाः । यज्ञात्मना देवात्मना च स्तुताः पञ्च नाकसदः पञ्च पञ्चचूडाः अष्टमकाण्डे । ( नाकसदः पञ्चचूडाः स त्रिवृत्पञ्चदशाज्यप्रउगादिना रथन्तरादिसाम्ना वसुरुद्रादित्यादिरूपेण च यज्ञदेवतात्मना स्तुतः । (शब्रा. ८।६।१।१–१२) इति ।) अतोऽत्र 'स यज्ञस्ते देवाः' इत्युक्तम् । एवं प्रतिष्ठारूपरुक्मपुष्करपर्णादयः पञ्चचूडान्ता एकत्रिंशज्जाताः । विकर्णी स्वयमातृण्णा चेति द्वे, आग्नीध्रीये उपहितः अश्मा पृश्निः एका, एवं चतुस्त्रिंशज्जाताः, चित्याग्नौ निहितः आहवनीयोऽग्निः पञ्चत्रिंशी, लोकम्पृणोपधानयजुष्मत्यः षट्त्रिंशी, उपधेयानां लोकम्पृणानां बहुसहस्रसमितत्वात्ताः परित्यज्य 'लोकम्पृण छिद्रम्पृण' ( शुस. १२।५४ ) इति तदुपधानमन्त्र एक इति स एव षट्त्रिंशीष्टकेति परिगृह्यते । एवं षट्त्रिंशदिष्टकामयो- हिरण्मयः पुरुष आत्मा सर्वभूतदेवात्मनामपामग्न्यात्मना ध्येयानां मध्ये वर्तत इत्याह—सोऽस्यैष सर्वस्येति । सः एषः सर्वैः कामैः संपन्न इत्यादिना सर्वात्मनामपां मध्यवर्ती आत्मा सर्वकामसंपन्नः स्वयं अकामः इत्युक्तम् । एतदेव विशदयति—न ह्येतं कस्य चनेति । शब्रासा.

**तदेष श्लोको भवति । विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥ इति । न हैव त लोकं दक्षिणाभिः न तपसा अनेवंविदश्नुते । एवंविदां हैव स लोकः ॥ १६ ॥**

तादृग्रूप आत्मा सर्वैर्ज्ञानेन लभ्यो न कर्मशतैरिति मन्त्रसंवादेन प्रतिपादयति—तदेष श्लोको भवति, विद्यया तदारोहन्तीति । मन्त्रस्यायमर्थः—यत्र स्वरूपे कामाः सर्वे परागताः निवृत्ताः, स्वयमकाममित्यर्थः । तदात्मस्वरूप विद्यया ज्ञानेन आरोहन्ति आप्नुवन्ति । अविद्वासः पुरुपाः तत् स्वरूप दक्षिणा, तृतीयाया लुक्, दक्षिणाभिः न यन्ति न गच्छन्ति । तथा तपस्विनः अपि अविद्वासश्चेन्न गच्छन्ति । मन्त्रस्य तात्पर्यमाह—न हैव त लोकमित्यादिना—एवंविदा हैव स लोक इत्यन्तेन । शब्रासा.

**अभ्रं पुरीपम् । चन्द्रमा आहुतयः । नक्षत्राणि समिधः । यच्चन्द्रमा नक्षत्रे वसति । आहुतिस्तत्समिधि वसति । एतदु वा आहुतेरन्नम् । एषा प्रतिष्ठा । तस्मादाहुतिर्न क्षीयते । एतत् हि अस्या अन्नम् । एपा प्रतिष्ठा । अथ यद्देवा इत्याख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वं देवा इत्येवाख्यायते ॥ १७ ॥**

अन्नृपाग्नेः पुरीषाहुतिसमिल्लोकम्पृणाः सपादयति—अभ्र पुरीपमिति । यच्चन्द्रमा नक्षत्र इति । चन्द्रमसो नक्षत्रेऽवस्थानमेव समित्तदाहुतिरूपेण ध्येयमित्यर्थः । एतदेव नक्षत्रेऽवस्थानमाहुतेरन्न प्रतिष्ठा । तस्मादाहुतिर्न क्षीयते । नक्षत्रशब्दस्याप्येव व्युत्पत्तिरिति नैरुक्ता आहुः । लोकम्पृणा इष्टका ये नाम देवा इत्याख्यातम् । 'सर्वाणि ह त्वेव भूतानि सर्वे देवा एपोऽग्निश्रितः' (शब्रा. १०।५। ४।१४ ) इत्यस्य पर्यायस्यादावुक्तम् । अतो देवाः इत्याख्यात लोकम्पृणेष्टकाः अतः सर्वपरिश्रिद्यजुष्मत्यादिक देवा इत्युच्यत इत्यर्थः । शब्रासा.

**तदेतदृचाभ्युक्तम् । विश्वे देवा अनु तत्ते यजुर्गुः इति । सर्वाणि ह्यत्र भूतानि सर्वे देवा यजुरेव भवन्ति । तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसपद्यते ॥ १८ ॥**

उक्त देवात्मत्व मन्त्रसंवादेनोपपादयति--तदेतदृचाभ्युक्त विश्वे देवा इति । अयमर्थः--ते प्रसिद्धा उक्ताः विश्वे सर्वे देवाः, तदुपलक्षण, सर्वाणि भूतानि तद्यजुर्मन्त्रस्वरूप अनु गुः अनुगच्छन्ति इति । मन्त्रस्य तात्पर्यमाह-- सर्वाणि ह्यत्रेति । अधिदैवाध्यात्मादिभेदेन यद्यजुरात्मक ब्रह्म प्रागुक्त, अतस्तदात्मकाः सर्वे देवा भवन्तीत्यर्थः । उपासकस्य फलमाह—स यो हैतदेवमिति । एव सर्वभूतदेवरूपा अपोऽग्न्यात्मना विद्यात् । स लोकम्पृणात्मकोऽग्निरेवाभिसपद्यते । शब्रासा.

**ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसंपद्यते । एकविंशं च स्तोमम् । बृहतीं च छन्दः ॥ १९ ॥**

'ता वा एता एकविंशतिर्बृहत्यः' इत्यादि पूर्ववद्व्याख्येयम् । अत्र नानारूपपरिश्रिद्यजुष्मतीना विंशत्यधिकसतशतसख्याना रुक्मपुष्करपर्णादीना लोकम्पृणामन्त्रान्तगणाना षट्त्रिंशत्सख्याना च बृहतीसपादनं विशेषः । शब्रासा.

वैश्वानरोऽग्निर्विश्वात्मा

**अथ हैतेऽरुणे औपवेशौ समाजग्मुः । सत्ययज्ञः पौलुषिः, महाशालो जाबालः, बुडिल आश्वतराश्विः, इन्द्रद्युम्नो भाल्लवेयः, जनः शार्कराक्ष्यः । ते ह वैश्वानरे समासत । तेषां ह वैश्वानरे न समियाय ॥ १ ॥**

षष्ठाध्याये प्रथमे ब्राह्मणे वैश्वानरविद्या, द्वितीयब्राह्मणे पुरुषस्याग्निविधार्कविधोक्थविधत्वनिरूपण, तृतीये शाण्डिल्यविद्या, चतुर्थे उषा वा अश्वस्येत्यस्मिन्ब्राह्मणे उषाश्वोपासना, पञ्चमेऽर्काश्वमेधाग्न्युक्थोपासना विद्यासंप्रदायप्रवर्तकमुनिवंशकथनमिति प्रतिपाद्यसंग्रहः । वैश्वानरविद्यायां 'अथ हैतेऽरुण' इत्याख्यायिका सुखावबोधार्था विद्यासंप्रदायप्रदर्शनार्था च । अथ अनन्तर एते वक्ष्यमाणाः सत्ययज्ञादयः पञ्च ऋषयः । औपवेशौ उपवेशपुत्रे अरुणे नामतः, समाजग्मुः । वैश्वानरविद्यामध्येतुमरुणसकाशं गतवन्त इत्यर्थः । सत्ययज्ञो नामतः यः पौलुषिः पुलुषपुत्रः, महाशालो

(१) शब्रा. १० । ६ । १ । १– ११.

नामतः यो जबालापुत्रः, बुडिलो नामतः अश्वतरस्यापत्यमाश्वतराश्विः, इन्द्रद्युम्नः नामतः भाल्लवेरपत्य भाल्लवेयः, जनो नामतः शार्कराक्षस्यापत्यं शार्कराक्ष्यः । एते पञ्चापि वैश्वानरे समासत वैश्वानरस्वरूपपरिज्ञानाय अरुणसमीपे स्थिताः । अथ सोऽरुणः तेषा सत्ययज्ञादीना पञ्चाना वैश्वानर बोधयितु न समियाय सगतः शक्तो नाभवत् । शब्रासा.

**ते होचुः । अश्वपतिर्वा अयं कैकेयः संप्रति वैश्वानरं वेद । तं गच्छामेति । ते हाश्वपतिं कैकेयमाजग्मु । तेभ्यो ह पृथगावसथान् पृथगपचितीः पृथक्साहस्रान्त्सोमान्प्रोवाच । ते ह प्रातरसंविदाना एव समित्पाणयः प्रतिचक्रमिरे । उप त्वायामेति ॥२॥**

ते होचुरिति । तदा अरुणः, इतरे सत्ययज्ञादयः पञ्च (च) परस्परमूचुः, केकयदेशाधिपतिरश्वपतिर्नामतः, संप्रति इदानी वैश्वानरं वेद जानाति, तं गच्छामेति विचार्य अश्वपतिं समाजग्मुः । स राजा एतेपा महर्षीणा पृथगावसथान् गृहान् पृथक् पृथक् अपचितीः पूजाश्च कृत्वा एते प्रतिग्रहार्थमागता इति बुद्ध्वा तेपा पृथक्साहस्रान् सोमान् प्रोवाच । सहस्रदक्षिणाकेषु सोमयज्ञेषु युष्मान् ऋत्विजो वृत्वा तत्रैकैकस्य ऋषेः सहस्र ददामीत्यर्थः । एवमश्वपतिनोक्ते मुनयः स्वागमनप्रयोजनमनुक्त्वा परेद्युः शिष्यलक्षणयुता उपसेदुरित्याह—प्रातरसंविदाना इति । असंविदानाः सकेतमकुर्वाणा राज्ञे स्वाशयमनाविष्कुर्वन्त एव प्रातः समित्पाणयः सन्तः हे राजन् त्वामुपयाम उपासीदामेति वदन्तः प्रतिचक्रमिरे तं प्रति आजग्मुः इत्यन्वयः । अत्र समित्पाणित्व शिष्यलक्षणमित्यन्यत्राम्नायते—'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' ( मुउ. १।२।१२ ) इति । जातितो हीन राजान विद्यार्थिनो विनयेनोपजग्मुः, तथा अन्यैर्विद्यार्थिभिर्भवितव्यमिति कथित भवति । शब्रासा.

**स होवाच । यन्नु भगवन्तोऽनूचाना अनूचानपुत्राः किमिदमिति । ते होचुः । वैश्वानरं ह भगवान्संप्रति वेद । तं नो ब्रूहीति । स होवाच । संप्रति खलु न्वा अहं वैश्वानरं वेद । अभ्याधत्त समिधः । उपेताः स्थेति ॥ ३ ॥**

पूर्वमसभव मत्वा इदानी महर्षीणां समित्पाणित्वेनोपसदन राजा पृच्छति—स होवाच यन्नु भगवन्त इति । यद्यस्मात्पूय हे भगवन्तो महर्षयः अनूचानाः साङ्गवेदाध्यायिनोऽनुवक्तारः अनूचानपुत्राः सनत्कुमारपुत्राः भवन्तः सन्तः किमिदमनुचितमित्युक्तवाचेति सबन्धः । जातितो हीनोऽहं, यूय तु महानुभावाः, तदेवमुपसदन किमर्थमित्युक्तवानित्यर्थः । अथ ते नः विद्यार्थित्वेनागमनमिति स्वाभाविकमाविष्कुर्वन्ति—ते होचुर्वैश्वानरमिति। भगवान् वेदार्थसपन्नो भवान् सप्रति इदानीं वैश्वानरं वेद जानाति त वैश्वानर नः अस्मभ्य ब्रूहि उपदिशेति । वैश्वानरपदेन परमेश्वर इति एतद्ब्राह्मणावमानाधिकरणेन प्रतिपादितव्यमिति । स राजा उवाच—संप्रति खलु न्वा अहं वैश्वानर वेदेति । सप्रति इदानीं वैश्वानर वेद जानामि । खलु न्वै । खलु न्वा इति निपातसमुदाय एकार्थवाची । नु वै इति पदद्वयम् । नुशब्दस्य उकार वैशब्दे परतः याजुषा लुम्पन्ति । यूयं समिधोऽभ्याधत्त अग्नौ । उपेताः स्थ उपसन्ना भवथेति राजोवाच । शब्रासा.

**स होवाचारुणमौपवेशिम् । गौतम, कं त्व वैश्वानरं वेत्थेति । पृथिवीमेव राजन्निति होवाच । ओमिति होवाच । एष वै प्रतिष्ठा वैश्वानरः । एतं हि वै त्व प्रतिष्ठां वैश्वानरं वेत्थ । तस्मात्त्वं प्रतिष्ठितः प्रजया पशुभिरसि । यो वा एतं प्रतिष्ठां वैश्वानरं वेद अप पुनर्मृत्युं जयति । सर्वमायुरेति । पादौ त्वा एतौ वैश्वानरस्य । पादौ ते अम्लास्यतां यदि ह नागमिष्य इति । पादौ ते विदितावभविष्यतां यदि ह नागमिष्य इति वा ॥ ४ ॥**

एवमन्येनापि विद्यादानेच्छा ग्राह्या च श्रद्धानतयेति शिष्यकार्यं स्वीकार्य, स कथमुवाचेत्याह—स होवाचारुणमौपवेशिमिति । राजा प्रथममुपवेशपुत्रमरुणमुवाच । गौतमेति अरुणस्य सबुद्धिः । कं त्वं वैश्वानर वेत्थेति स्वाभिमतं वैश्वानरस्वरूपमुपदेष्टु राज्ञोऽवगमार्थः प्रश्नः । पृथिवीमेव त वैश्वानरं वेद्मि राजन्निति अरुण उवाच । ओ इत्यङ्गीकारः । एष पृथिवीरूपो वैश्वानरः प्रतिष्ठा । यस्मात्त्वं वैश्वानरैकदेशं प्रतिष्ठारूपं वैश्वानर वेत्थ तस्मात्त्वं प्रजया पशुभिः प्रतिष्ठितोऽसि । एवंरूपं वैश्वानरमुपा-

क्षीनस्य फलमाह—यो वा एत प्रतिष्ठामिति । यः कश्चिदेत यथोक्तमेत वैश्वानरं वेद स पुनर्मृत्यु जयति, सर्वमायुः अमृतत्वमेति । एप प्रतिष्ठारूपः वैश्वानरस्यावयविनः परमेश्वरस्य पादावेव न समस्तो वैश्वानरः । त्वा इति निपातद्वयम् । तु वै इति पदद्वयम् । तुशब्दस्य उकारं वैशब्दे परतो याजुषा लुम्पन्ति । अतः समस्तबुद्धया वैश्वानरस्य ज्ञानात् पादौ ते तव विपरीतग्राहिणोऽम्लास्यतां म्लानौ गमनासमर्थावभविष्यतां यदि मा नागमिष्यः । इत्थ दोषपर्यवमानमुक्तम् । एकदेशज्ञानमेव दोष इत्याह—पादौ ते विदिताविति । वैश्वानरस्य पादमात्र त्वया विदित, न तु कृत्स्नो वैश्वानरः, अतः साध्वकार्षीर्यन्मामागतोऽसीत्यभिप्रायः । वाशब्दो विकल्पार्थः ।

शब्रासा.

**अथ होवाच सत्ययज्ञं पौलुषिम् । प्राचीनयोग्य, कं त्व वैश्वानरं वेत्थेति । अप एव राजन्निति होवाच । ओमिति होवाच । एष वै रयिर्वैश्वानरः । एतं हि वै त्वं रयिं वैश्वानरं वेत्थ । तस्मात्त्वं रयिमान्पुष्टिमानसि । यो वा एतं रयिं वैश्वानरं वेद अप पुनर्मृत्युं जयति । सर्वमायुरेति । बस्तिस्त्वा एष वैश्वानरस्य । बस्तिस्त्वाऽहास्यद् यदि ह नागमिष्य इति । बस्तिस्ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा॥५॥**

एवमुत्तरं पञ्च पर्यायाः सामान्येन व्याख्येयाः । विशेषस्तु कथ्यते । प्राचीनयोग्येति सत्ययज्ञस्य सबोधनम् । अप एव अब्रूपं वैश्वानर जानामि राजन्निति सत्ययज्ञस्योत्तरम् । एष वै रयिर्वैश्वानर इति । एप अबात्मको वैश्वानरः रयिः धनरूपः । यस्माद्धनरूप वेत्थ तस्माद्धनवान् पुष्टिमानसि । बस्तिस्त्वा एष वैश्वानरस्येति । एप रयिरूपोऽबात्मको वैश्वानरः वैश्वानरस्यावयविन ईश्वरस्य बस्तिर्मूत्राशय एव न समस्त इत्यर्थः । बस्तिस्त्वा एप इत्यत्र त्वा इति निपातद्वयम् । बस्तिस्त्वाऽहास्यद्यदीति । युष्मच्छब्दाद्द्वितीयैकवचनादेशस्त्वाशब्दः । त्वां भवन्तमेकदेशोपासकं सत्ययज्ञ बस्तिरहास्यत् त्यक्तमभविष्यत् ।    शब्रासा.

**अथ होवाच महाशालं जाबालम् । औपमन्यव कं त्व वैश्वानरं वेत्थेति । आकाशमेव राजन्निति होवाच । ओमिति होवाच । एष वै बहुलो वैश्वानरः । एतं हि वै त्व बहुलं वैश्वानरं वेत्थ । तस्मात्त्वं बहुः प्रजया पशुभिरसि । यो वा एतं बहुलं वैश्वानरं वेद । अप पुनर्मृत्यु जयति । सर्वमायुरेति । आत्मा त्वा एष वैश्वानरस्य । आत्मा त्वाऽहास्यत् यदि ह नागमिष्य इति । आत्मा ते विदितोऽभविष्यत् यदि ह नागमिष्य इति वा ॥ ६ ॥**

औपमन्यव इति महाशालस्य सबोधनम् । आकाशात्मक वैश्वानरं वेद राजन्निति महाशालवचनम् । एप वै बहुलो वैश्वानर इति । बहुत्वमाकाशस्य सर्वगतत्वात् । बहुगुणोपासनाभ्यः त्वं प्रजया पशुभिर्बहुर्भवसि । आत्मा त्वा एप इति । एप आकाशो वैश्वानरस्यात्मा मध्यशरीरं न कृत्स्नः । त्वा एप इत्यत्र तु वै इति निपातद्वयम् । आत्मा त्वाऽहास्यद्यदीति युष्मदेकवचनादेशः । एवमुत्तरत्र ।    शब्रासा.

**अथ होवाच बुडिलमाश्वतराश्विम् । वैयाघ्रपद्य, कं त्वं वैश्वानरं वेत्थेति । वायुमेव राजन्निति होवाच । ओमिति होवाच । एष वै पृथग्वर्त्मा वैश्वानरः । एतं हि वै त्वं पृथग्वर्त्मानं वैश्वानरं वेत्थ । तस्मात्त्वां पृथग्रथश्रेणयोऽनुयान्ति । यो वा एतं पृथग्वर्त्मानं वैश्वानरं वेद । अप पुनर्मृत्युं जयति । सर्वमायुरेति । प्राणस्त्वा एप वैश्वानरस्य । प्राणस्त्वाऽहास्यद् यदि ह नागमिष्य इति । प्राणस्ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा ॥७॥**

वैयाघ्रपद्येति बुडिलसबुद्धिः । वायुरूप वैश्वानरं वेद्मीति बुडिलस्योत्तरम् । एप वै पृथग्वर्त्मा वैश्वानर इति । नाना वर्त्म मार्गो यस्य वायोः आवहोद्वहादिभेदेन वर्तमानस्य सोऽय पृथग्वर्त्मा, तदात्मनो वैश्वानरस्य ज्ञानात् पृथङ् नानाविधाः रथश्रेणयः रथपङ्क्तयः त्वा अनुयान्ति अनुगच्छन्ति । प्राणस्त्वा एप इति । पृथग्वर्त्मा आत्मा इति वैश्वानरस्य प्राणवायुरेव न समस्तो वैश्वानरः । प्राणस्त्वाऽहास्यत् उदक्रमिष्यत् ।    शब्रासा.

**अथ होवाचेन्द्रद्युम्नं भाल्लवेयम् । वैयाघ्रपद्य, कं त्वं वैश्वानरं वेत्थेति । आदित्यमेव राजन्निति होवाच । ओमिति होवाच । एप वै सुततेजा वैश्वानरः । एतं हि वै त्वं सुततेजसं वैश्वानरं वेत्थ । तस्मा-**

**त्तवैष सुतोऽद्यमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति। यो वा एतं सुततेजसं वैश्वानरं वेदाप पुनर्मृत्युं जयति। सर्वमायुरेति। चक्षुस्त्वा एतद्वैश्वानरस्य। चक्षुस्त्वाऽहास्यद् यदि नागमिष्य इति। चक्षुस्ते विदितमभविष्यद् यदि ह नागमिष्य इति वा॥ ८॥**

वैयाघ्रपद्य इति इन्द्रद्युम्नसंबुद्धिः। आदित्यमेव वैश्वानरं वेद्मीति इन्द्रद्युम्नोत्तरम्। एष वै सुततेजा इति। सुतमभिषुत सोमरूपं तेजो यस्य सोऽयं, तदात्मनो वैश्वानरस्य परिज्ञानात्तव गृहेषु सुतोऽभिषुतः सोमरसः, अद्यमानः एतद्रूपलक्षणं पुरोडाशादि, पच्यमानः अक्षीयमाणः सर्वदा विनाशरहितस्तिष्ठति। चक्षुस्त्वा एतत् इति। एष सुततेजोरूपादित्यात्मको वैश्वानरः अवयविनो वैश्वानरस्य परमेश्वरस्य चक्षुरेव न समस्तः। तस्मादेकदेशोपासकत्वाच्चक्षुस्त्यक्तमभविष्यद्यदि नागमिष्यः। चक्षुर्मात्रमेव विदितं ज्ञातम्। यदि नागमिष्यः इति समानम्। शब्रासा.

**अथ होवाच जनं शार्कराक्ष्यम्। सायवस, कं त्वं वैश्वानरं वेत्थेति। दिवमेव राजन्निति होवाच। ओमिति होवाच। एष वा अतिष्ठा वैश्वानरः। एतं हि वै त्वमतिष्ठां वैश्वानरं वेत्थ। तस्मात्त्वं समानानतितिष्ठसि। यो वा एतमतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति। सर्वमायुरेति। मूर्द्धा त्वा एष वैश्वानरस्य। मूर्द्धा त्वाऽहास्यद् यदि ह नागमिष्य इति। मूर्द्धा ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा॥ ९॥**

सायवस इति जनसंबुद्धिः। शार्कराक्ष्य इति ऋषिः तस्य गोत्रम्। दिवमेव द्युलोकात्मकमेव वैश्वानरं वेद्मीति जनस्योत्तरम्। एष वा अतिष्ठा इति। अतीत्य सर्वमतिक्रम्य तिष्ठतीत्यतिष्ठा। अतिष्ठागुणको वैश्वानर इत्यर्थः। यस्मात् त्वमतिष्ठागुणपरिज्ञानी तस्मात् समानान् अन्यान् अतितिष्ठसि अतिक्रम्य वर्तसे। मूर्धा त्वा एष इति। एषः अतिष्ठागुणको द्युलोकः तु वै वैश्वानरः अवयविनो वैश्वानरस्य परमेश्वरस्य मूर्द्धेव न समस्तः। अतः समस्तमूर्द्धवैश्वानरस्यापरिज्ञानान्मूर्द्धविपरीतग्राहिण मूर्द्धा अहास्यत् त्यक्तोऽभविष्यत् यदि मां नागमिष्यः। अथवा ते तव मूर्द्धैव विदितो ज्ञातोऽभविष्यत् यदि मा नागतोऽभविष्यः, साध्वकार्षीर्यन्मामागतोऽसीत्यभिप्रायः। शब्रासा.

**तान्होवाच। एते वै यूय पृथग्वैश्वानरान् विद्वांसः पृथगन्नमघस्त। प्रादेशमात्रमिव ह वै देवाः सुविदिताः अभिसंपन्नाः। तथा तु व एनान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति॥ १०॥**

एवमरुणसत्ययज्ञादीनामृषीणां वैश्वानरस्य तदेकदेशमात्रपरिज्ञानं न युक्त (इति) पादादिमूर्द्धान्तावयवसंपूर्णं वैश्वानरं पुरुषमुपदिष्टवानित्याह—तान्होवाच। एते वै यूय इत्यादिब्राह्मणशेषेण। तानुक्तवैश्वानरदर्शनवत उवाच। एते यूय पृथक् पृथगेकदेशरूपान् वैश्वानरान् विद्वासः पृथगन्नं भुक्तवन्तः स्थ, अत उक्तावयवसंपूर्णं कृत्स्नं वैश्वानरं जानीतेति तात्पर्यम्। यच्चैव यथोक्तावयवैः पृथिवीपादादिभिः द्युमूर्द्धान्तावयवैर्विशिष्टमेकं वस्तु तत्प्रादेशमात्रं प्रादेशप्रमाणमिव देवाः सुविदिताः सम्यक् ज्ञानवन्तोऽभिसंपन्नाः, प्राप्तफला बभूवुरित्यर्थः। यथा एतदेकं पादादिविशिष्टं वस्तु प्रादेशमात्रमेवाभिसंपादयिष्यामि, तथा, तुशब्द एवकारार्थे। तथैव तद्वदेव वः युष्मभ्यमेनान् वैश्वानरावयवान् वक्ष्यामि। अत्र मूर्द्धादिचुबुकान्तप्रतिष्ठः इति प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरवयवैरध्यात्मं मीयत इति प्रादेशमात्रपरिकल्पनम्। आचार्यैस्तु (ब्रसू. १।२।२९, ३०, ३१ इत्यत्र). शाखान्तरानुसारेण प्रादेशमात्रस्य बहुधा प्रवचनं कृतम्। प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयत इति प्रादेशमात्रः, मुखादिषु करणदेशेषु कर्तृत्वेन मीयत इति प्रादेशमात्रः, द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः। प्रकर्षेण शास्त्रेणादिश्यन्त इति प्रदेशाः द्युलोकादय एव, तावत्परिमाणो वा प्रादेशमात्रः, मूर्द्धादिचुबुकान्तप्रतिष्ठ इति वा प्रादेशमात्रः इति। शब्रासा.

**स होवाच मूर्द्धानमुपदिशन् एष वा अतिष्ठा वैश्वानर इति। चक्षुषी उपदिशन्नुवाच एष वै सुततेजा वैश्वानर इति। नासिके उपदिशन्नुवाच एष वै पृथग्वर्त्मा वैश्वानर इति। मुख्यमाकाशमु-**

**पदिशन्नुवाच एष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाच एष वै रयिर्वैश्वानर इति । छुबुकमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर इति । स एषोऽग्निर्वैश्वानरो यत्पुरुषः । स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद । अप पुनर्मृत्युं जयति । सर्वमायुरेति । न ह अस्य ब्रुवाणं चन वैश्वानरो हिनस्ति ॥ ११ ॥**

अथ राजा पूर्वोक्तान् अतिष्ठावैश्वानरादीन् वैश्वानरावयवान् मूर्धादिचुबुकान्तावयवेन प्रदर्शितवानिति श्रुतिराह–स होवाच मूर्द्धानमुपदिशन्निति । मूर्धानमुपदिशन् राजा एष अतिष्ठा वैश्वानरः इत्युक्तवान् । मूर्द्धा अवयवोऽतिष्ठागुणः वैश्वानरात्मक इत्यर्थः । चक्षुर्द्वय सुततेजा वैश्वानरः । नासिकारन्ध्रद्वय पृथग्वर्त्मा वैश्वानरः । मुख्य मुखे भवमाकाश उपदिशन् बहुलगुणो वैश्वानर इत्युक्तवान् । मुख्याः मुखे भवा अप उदकान्युपदिशन् रयिगुणो वैश्वानर इत्युक्तवान् । चुबुकमवयवमुपदिशन्नेष प्रतिष्ठात्मको वैश्वानर इत्युक्तवान् । चुबुकमिति अधर मुखफलकमित्युच्यते । स एषोऽग्निर्वैश्वानरो यत्पुरुषः मूर्द्धादिचुबुकान्ते प्रादेशमात्रस्थले पुरुषावयवानां शिरःप्रभृतीना पादान्ताना परिकल्पनात् । एषोऽतिष्ठादिगुणवैश्वानरसमष्टिरूप एको वैश्वानरोऽग्निरित्युच्यत इति । विश्वान्नरान्पुण्यपापरूपा गतिं नयतीति विश्वानरः, सर्वात्मा एक एव ईश्वरः । विश्वानर एव वैश्वानर इति । आचार्यैस्तु वैश्वानरस्य एवमर्थ उक्तः । ‘विश्वश्चायं नरश्च, विश्वेषा वा अयं नरः, विश्वे वा नरा अस्य, इति विश्वानरः परमात्मा सर्वात्मत्वात् । विश्वानर एव वा वैश्वानरः । तद्धितोऽनन्यार्थः । राक्षसवायसादिवत् ।’(ब्रशंकर. १।२।२८) इति । यद्वा विश्वैर्वा नरैः प्रत्यगात्मा यो विभज्य नीयते इति स वैश्वानरः इति । यथोक्तं वैश्वानराग्निं विदुषः फलमाह–स यो हैतमेवमग्निमिति । पुरुषविध पुरुषावयवयुक्तम् । पुरुषेऽन्तः प्रतिष्ठित मूर्द्धादिचुबुकान्तप्रादेशमात्रमित्यर्थः । तादृशं वैश्वानरमग्नि यो वेद स पुनर्मृत्यु जयति । सर्वमायुः अमृतत्वमेति । अस्य वैश्वानराग्नेः । व्यत्ययेन कर्मणि षष्ठी । ब्रुवाण उपदेष्टारमपि वैश्वानरो न हिनस्ति । वैश्वानरपदेन परमात्मा विवक्ष्यते (विभज्यते ?) इति ‘वैश्वानरः साधारणशब्दविशेषात्’ (ब्रसू. १।२।२४) इत्यस्मिन्नधिकरणे आचार्यैः समर्थितम् । एतदर्थस्तत्त्वविद्भिः श्लोकाभ्यां सगृहीतः– ‘वैश्वानरः को नु भूतदेवजीवेश्वरेषु कः । वैश्वानरात्मशब्दाभ्यामीशादन्येषु कश्चन ॥ द्युमूर्द्धत्वादिना ब्रह्मशब्दाच्चेश्वर इष्यते । वैश्वानरात्मशब्दौ तावीश्वरस्यापि वाचकौ ॥’ (वै. न्या. १।२।७) इति । [अधिकरणरचना तु अग्रे छाउ. ५।१८।१ इत्यत्र द्रष्टव्या ] शब्रासा.

आत्मा एव अत्ता । स एव च अग्निरूप, अर्करूप, उक्थरूपश्च ।

**[1]द्वयं वा इदम् । अत्ता चैवाद्यं च । तद् यदोभयं समागच्छति अत्तैवाख्यायते नाद्यम् ॥ १ ॥**

द्वितीये पुरुषस्यैवाग्निविधत्वमर्कविधत्वमुक्थविधत्वमुच्यते–द्वय वा इदमिति । इद जगत् अत्ता चैवाद्य च, इति द्वय द्व्यात्मकम् । योऽत्ता भोक्ता, आद्य भोग्य, तदुभय यदा समागच्छति युक्तमेकीभूत भवति तदा द्वय अत्तैवेत्याख्यायते, आद्यमिति नाख्यायते । शब्रासा.

**स वै यः सोऽत्ता अग्निरेव सः । तस्मिन् यत्किञ्च अभ्यादधति आहितय एवास्य ताः । आहितयो ह वै ता आहुतय इत्याचक्षते परोक्षम् । परोक्षकामा हि देवाः ॥ २ ॥**

योऽत्तेत्युक्तः सोऽग्निरेव । तस्मिन्नत्तृरूपेऽग्नौ यत् किञ्च वस्त्वभ्यादधति प्रक्षिपन्ति, अस्याग्नेस्ताः प्रक्षिप्ता आहितय इत्युच्यन्ते । आधानादाहितयः । आहितीनामेवाहुतित्वम् । शब्रासा.

**आदित्यो वा अत्ता । तस्य चन्द्रमा एवाहितयः । चन्द्रमसं ह्यादित्य आदधति । इत्यधिदेवतम् ॥ ३ ॥**

अत्रोक्तयोः अत्त्राहुत्योरधिदैवमध्यात्मं चार्थमाह– आदित्यो वा अत्तेति । योऽयमत्ताऽग्निः स आदित्यः । तस्याहितयः चन्द्रमाः । ‘चन्द्रमसं ह्यादित्य आदधति’ इत्यनेन चन्द्रमस आदित्य आधानादाहितित्व प्रतिपादितम् । शब्रासा.

**अथाध्यात्मम् । प्राणो वा अत्ता । तस्यान्नमेवाहितयः । अन्नं हि प्राण आदधति । इति नु अग्नेः ॥ ४ ॥**

(१) शब्रा. १०।६।२।१-११.

अध्यात्म प्राण एवात्ता। तस्य आद्यं अन्नमेवाहितयः। प्राणे अन्नस्याधानादाहितित्व व्यक्तम्। इति न्वग्नेः इति। इति नु अत्ता आद्य एवमुभय भागद्वयमग्नेरेव समाख्या। स चात्ताऽग्निरिति। तस्याग्नेस्तत्र च निहिताना वस्तूनामधिदैवाध्यात्मपरत्वेनार्थद्वयव्याख्यानादग्नेर्विधोक्तेति शेषः। अग्निशब्दोपजीवनादग्निविधः पुरुष इत्युक्त भवतीति तात्पर्यम्। शब्रासा.

**अथार्कस्य। अग्निर्वा अर्कः। तस्याहुतय एव कम्। आहुतयो ह्यग्नये कम्॥ ५॥**

अर्कशब्दोपजीवनेन पूर्ववदग्न्याहुत्योरर्थद्वयं दर्शयितु प्रतिजानीते--अथार्कस्येति। विधोच्यते इति शेषः। अग्निर्हि अर्कः इत्युच्यते। तस्याहुतय एव क इति कंपदेनोन्यते। हि यस्मात् अग्नये आहुतयः क सुखहेतवोऽतोऽर्कशब्देनाग्न्याहुतिद्वय विवक्ष्यत इत्यर्थः। शब्रासा.

**आदित्यो वा अर्कः। तस्य चन्द्रमा एव कम्। चन्द्रमा ह्यादित्याय कम्। इत्यधिदेवतम्॥ ६॥**

**अथाध्यात्मम्। प्राणो वा अर्कः। तस्यान्नमेव कम्। अन्नं हि प्राणाय कम्। इति नु एवार्कस्य॥ ७॥**

एतयोरर्कवाच्ययोरग्न्याहुत्योरधिदैवाध्यात्मपरत्वेनार्थमाह--आदित्यो वा अर्क इति, अथाध्यात्ममिति। इति न्वेवार्कस्य इति पूर्ववद्व्याख्येयम्। शब्रासा.

**अथोक्थस्य। अग्निर्वा उक्, तस्याहुतय एव थम्। आहुतिभिर्ह्यग्निरुत्तिष्ठति॥ ८॥**

उक्थशब्दोपजीवनेन पूर्ववदग्न्याहुत्योरर्थद्वय वक्तु प्रतिजानीते--अथोक्थस्येति। उक्शब्दवाच्यः अग्निः, थंशब्दवाच्या आहुतयः। हि यस्मात् आहुतिभिः अग्निरुत्तिष्ठति। उत्तिष्ठत्यनेनाग्निरिति उक्थशब्दनिष्पत्त्या अग्न्याहुत्योरुक्थशब्दवाच्यत्वम्। छान्दसो वर्णोपजनो (वर्णो यजनो?) द्रष्टव्यः। शब्रासा.

**आदित्यो वा उक्। तस्य चन्द्रमा एव थम्। चन्द्रमसा हि आदित्य उत्तिष्ठति। इत्यधिदेवतम्॥ ९॥**

**अथाध्यात्मम्। प्राणो वा उक्। तस्यान्नमेव थम्। अन्नेन हि प्राण उत्तिष्ठति। इति नु एवोक्थस्य। स एपोऽग्निविधः अर्कविधः उक्थविधः यन् पुरुषः; स यो हैतमेवमग्निविधमर्कविधमुक्थविधं पुरुषमुपास्ते। विदुषो हैवास्यैवं भ्रातृव्यो म्लायति॥ १०॥**

तयोरुक्थवाच्ययोरग्न्याहुत्योरधिदैवाध्यात्मपरत्वेनार्थमाह--आदित्यो वा उगिति, अथाध्यात्ममिति। इति न्वेवोक्थस्येति पूर्ववत्। एवमग्न्यादिशब्दार्थवचने यदुक्त तद्दर्शयति--स एषोऽग्निविध इति। यत् पुरुषः स इति। तस्योक्तरीत्याऽग्निविधादिसपत्तिः। यथोक्त पुरुष विदुषः फलमाह--स यो हैतमेवमिति। भ्रातृव्यः सपत्नः म्लायति नश्यति। शब्रासा.

**प्राणेन वा अग्निर्दीप्यते, अग्निना वायुः, वायुनाऽऽदित्यः, आदित्येन चन्द्रमाः, चन्द्रमसा नक्षत्राणि, नक्षत्रैर्विद्युत्। एतावती वै दीप्तिः। अस्मिंश्च लोकेऽमुष्मिंश्च। सर्वां हैतां दीप्तिं दीप्यते। अस्मिंश्च लोकेऽमुष्मिंश्च। य एवं वेद॥ ११॥**

प्राणाग्न्यादित्यचन्द्रमःप्रसङ्गाज्ज्योतीरूपोपासनं फल चाह--प्राणेन वा अग्निर्दीप्यत इति। योऽयमग्निरत्ता इत्युक्तः स ह प्राणेन दीप्यते। प्राणवायोरभावेऽल्पत्वे (वा) अग्नेर्दीपन नास्ति। अग्निना वायुर्दीप्यते। वायुनाऽऽदित्यावष्टम्भात् भानोर्दीपनम्। आदित्येन चन्द्रमसः प्रकाशो ज्योतिःशास्त्रे प्रसिद्धः। रात्रौ नक्षत्राणि चन्द्रमसा प्रकाशन्ते। दिवा हि महत्तरेण सूर्यप्रकाशेन तिरोभूतत्वान्न तदा प्रकाशः। नक्षत्रैर्विद्युत्प्रकाश्यते एतावती हि लोकद्वये दीप्तिः। भूलोके हि प्राणाग्निवायवः, इतरे इतरस्मिन्निति। यः पुरुषः एतावती लोकद्वयगतां दीप्तिं वेद जानाति उपास्ते तस्य सर्वतेजोरूपत्व फलमित्यर्थः। शब्रासा. *

---

*अग्नेः परमात्मत्वव्यञ्जकविशेषणानि अस्मिन् प्रकरणेऽसंगृहीतवचनान्तरेष्वपि समुपलभ्यन्ते। यथा--

**अमर्त्यः**--ऋसं १।४४, ५८; ७०, ३।२, १०, ११, २४, २७, ४।१, ८, ५, १४, १८, ६।३, ९, १२, १६; ७।१, १५; ८।११, १९, १०२, १०।२१, ७९, ८७, १०८, १२२, १४०. असं. ७।८४. शुसं. २१।१५; २८।३, १७.

**अमृतः**--ऋसं. १।१३, २६, ४४, ५८, ६८, ७७; २।१०; ३।१, ३, १४, २०, २९; ४।२, ३, ५, ११;

## इन्द्रः

विश्वव्यापकः, अनुपमेय., अनन्त , सर्वनियन्ता,
स्वर्गपति , विभुश्च

[1]त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः ।
विश्वमाप्रा अन्तरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान् ॥

हे इन्द्र त्व पृथिव्याः प्रथिताया विस्तीर्णाया भूमेः प्रतिमान भुवः प्रतिनिधिर्भवसि । यथा भूर्लोको महानचिन्त्यशक्तिः एवं त्वमपीत्यर्थः। तथा ऋष्ववीरस्य । वीरयन्ति विक्रान्ता भवन्तीति वीरा देवाः। ऋष्वा दर्शनीया वीरा यस्य स तथोक्तः । तस्य बृहतः बृंहितस्य प्रवृद्धस्य स्वर्गलोकस्य पतिर्भूः पालयिताऽसि । तथा अन्तरिक्ष अन्तरा क्षान्त द्यावापृथिव्योर्मध्ये वर्तमानमाकाशं विश्व सर्वमपि महित्वा महत्त्वेन सत्य आप्राः निश्चयेन आ समन्तादपूरयः । अतः त्वावान् त्वत्सदृशः अन्यः कश्चित् नकिः अस्ति नास्तीति यदेतत् तत् अद्धा सत्यमेव । ऋसा.

[2]न यस्य द्यावापृथिवी अनु व्यचो न सिन्धवो रजसो अन्तमानशुः ।
नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक् ॥

यस्य इन्द्रस्य व्यचः व्यापनं द्यावापृथिवी द्यावापृथिव्यौ न अनु आनशाते प्राप्तुमसमर्थे बभूवतुः। तथा रजसः अन्तरिक्षलोकस्योपरि सिन्धवः स्यन्दनशीला आपो यस्य इन्द्रस्य तेजसः अन्त अवसान न आनशुः न प्रापुः । उत अपि च सोमपानेन मदे हर्षे सति स्ववृष्टिं स्वीकृतवृष्टिं वृत्रादिं युध्यतः युध्यमानस्य अस्य इन्द्रस्य बलस्य अन्तं वृत्रादयः न प्रापुः। अतो हे इन्द्र एकः त्वं अन्यत् स्वव्यतिरिक्त विश्व सर्वं भूतजातं आनुषक् आनुषक्त चकृषे । सकलमपि भूतजात त्वदधीनमभूदिति भावः । ऋसा.

आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि ।
न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥

इन्द्रः स्वतेजसा पार्थिव पृथिव्याः सबन्धि वस्तुजात रजः अन्तरिक्षलोक च आ पप्रौ आपूरयति। तथा दिवि द्युलोके रोचना रोचमानानि दीप्तानि नक्षत्राणि बद्बधे बबन्ध स्थापितवान्। अतो हे इन्द्र त्वावान् त्वत्सदृशः कश्चन न जातः नोत्पन्नोऽस्ति । न च जनिष्यते उत्पत्स्यमानोऽपि नास्ति । तादृशस्त्वं विश्वं सर्व रक्षितव्यं जगत् अति ववक्षिथ अतिशयेन वोढु-

५।१८, ६।४, ५, ७, १५, ४८; ७।४, १६, ८।२३, ७१, ७४, १०।४५, ७०, ९१ असं. १२।२.

अमृतस्य केतु -- ऋसं ६।७.
अमृतस्य नाभि --ऋसं. ३।१७
अमृतस्य रक्षिता--ऋसं ६।७, ९.
अमृतानां प्रथमः-- ऋसं. १।२४.
प्रजापतिः--ऋसं. ९।५.
परमे पदे तस्थिवान्--ऋसं १।७२.
देवानां देवः--ऋसं. १।३१, ६८, ९४. शुसं. २०।४१.
देवानां पिता--ऋसं. १।६९.
जनयन् भुवना--ऋसं. ७।५.
जनिता रोदस्योः--ऋसं. १।९६; ३।६; ६।८.
धर्ता सर्वस्य--ऋसं. १।६७; ६।८.
जनक सर्वस्य--ऋसं. ६।८; १०।८, ८८, १५६.
विपश्चितामसुरः--ऋसं. ३।३.
विश्वकर्मा--असं. २।३४, ३५.
विश्वकृत्--असं. ६।४७.
विश्व.--ऋसं. १।१२८; १०।८७. शुसं. २८।२९.
विश्वरूपः--ऋसं. १।१३.
विश्ववारः--ऋसं. ३।१७; ७।५,७, १६; १०।१५०. असं. ५।२. शुसं. २७।१३.
विश्ववित्--ऋसं. ३।१९, २९; ५।४, १०।९१.
विश्वशम्भू --असं. ६।४७.
विश्वदेव.--ऋस. १।१४२.
विश्वदेव्य--ऋसं १।१४८.
अध्यक्षः धर्मणाम्--ऋसं. ८।४३.
अदितिः--ऋसं. १।९४; २।१; ४।१; ७।९; ८।१९; १०।११.
पिता, माता, भ्राता, पुत्र., बन्धुः, सखा च जनानाम्--ऋसं. १।२६, ३१, ७५, १६१; २।१, ५।४, ६।१; ८।४३, ६४; १०।७.

(१) ऋसं. १।५२।१३.

(१) ऋसं. १।५२।१४. (२) ऋसं. १।८१।५.

मिच्छसि । सर्वस्य जगतो निर्वाहको भवसीत्यर्थः । ऋसा.

**[1]यस्याजस्रं शवसा मानमुक्थं परिभुजद्रोदसी विश्वतः सीम् ।**
**स पारिषत्क्रतुभिर्मन्दसानो मरुत्वान्नो भवत्विन्द्र ऊती ॥**

यस्य इन्द्रस्य उक्थ प्रशस्य शवसा मान बलेन सर्वस्य परिच्छेदक सर्वेषां बलस्योपमानभूत वा रोदसी द्यावापृथिव्यौ विश्वतः सीं सर्वतः अजस्रं अनवरत परिभुजत् परितः सर्वतो भुनक्ति पालयति । स इन्द्रः क्रतुभिः अस्माभिः कृतैर्यागैः मन्दसानः मोदमानः सन् पारिषत् अस्मान् दुरितात् पारयतु । ऋसा.

**[2]न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः ।**
**स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती ॥**

देवता देवस्य दानादिगुणयुक्तस्य यस्य इन्द्रस्य शवसः बलस्य अन्तं अवसान देवाः वस्वाद्या देवगणाः न आपुः न आनशिरे तथा मर्ताः मनुष्याः आपश्चन आपोऽपि न प्रापुः । स तादृशः इन्द्रः त्वक्षसा शत्रूणा तनूकर्त्रा आत्मीयेन बलेन क्ष्मः पृथिव्याः दिवश्च स्वर्गस्य च प्ररिक्वा प्रकर्षेण रेचको भवति । लोकद्वयाद-प्यस्य बलमतिरिच्यते इत्यर्थः । मरुद्भिर्युक्तः स इन्द्रः नः अस्माकं ऊती ऊतये रक्षणाय भवतु । ऋसा.

**महतामपि भयङ्कर , बलिष्ठः, विश्वनियन्ता, दानवहन्ता, विश्वकृत्, श्रद्धागम्यः, सर्वानुशास्ता, भक्तानुग्राहक., पापाना अभक्तानामभिभविता, योध्दॄणामीश्वरः, विश्वस्य प्रतिमानम्**

**[3]यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् ।**
**यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥**

गृत्समदो ब्रूते । जनासः जना हे असुराः यो जात एव जायमान एव सन् प्रथमः देवाना प्रधानभूतः मनस्वान् मनस्विनामग्रगण्यः देवः द्योतमानः सन् क्रतुना वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा देवान् सर्वान् यागदेवान् पर्यभूषत् रक्षकत्वेन पर्यग्रहीत् । यद्वा सर्वानन्यान् देवान् पर्यभूषत् पर्यभवत् अत्यक्रामत् । यस्य इन्द्रस्य शुष्मात् शारीरात् बलात् रोदसी द्यावापृथिव्यौ अभ्यसेतां अबिभीताम् । भ्यस भये । 'भ्यस भयवेपन-योः' ( नि. ३।२१ ) इति नैरुक्ताः । अभ्यसेताम-वेपेता वा । तथा च मन्त्रान्तरम्–' इमे चित्तव मन्यवे वेपेते भियसा मही ' ( ऋस. १।८०।११ ) इति । नृम्णस्य सेनालक्षणस्य बलस्य मह्ना महत्त्वेन युक्तः सः इन्द्रः नाहमिति । अत्र निरुक्त–'यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा यस्य बलात् द्यावापृथिव्यावप्यबिभीता नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसयुक्ता' ( नि. १०।१० ) इति । ऋसा.

**[1]यः पृथिवीं व्यथमानामदृंहद्यः पर्वतान् प्रकुपिताँ अरम्णात् ।**
**यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात्स जनास इन्द्रः ॥**

हे जनाः यः इन्द्रः व्यथमाना चलन्ती पृथिवी अदृंहत् शर्करादिभिर्दृढामकरोत् । यः च प्रकुपितान् इतस्ततश्चलितान् पक्षयुक्तान् पर्वतान् अरम्णात् नियमितवान् स्वे स्वे स्थाने स्थापितवान् । यः च वरिवः उरुतम अन्तरिक्षं विममे निर्ममे विस्तीर्णं चकारेत्यर्थः । यः च द्या दिवं अस्तभ्नात् तस्तम्भ निरुद्धामकरोत् । सः एव इन्द्रः नाहमिति । ऋसा.

**[2]यो हत्वाहिमरिणात्सप्त सिन्धून्यो गा उदाजदपधा वलस्य ।**
**यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः ॥**

---

( १ ) ऋसं. १।१००।१४. (२) ऋसं. १।१००।१५.

( ३ ) ऋसं. २।१२।१; असं. २०।३४।१; तैसं. १।७।१३।२, कासं. ८।१६ ( ४५ ); मैसं. ४।१२।३ (७८) जनास ( जनासा ); ऐब्रा. २१।२।१; शाब्रा. २१।४, २२।४, ऐआ. १।५।२।५, ५।३।१।२.

( १ ) ऋसं. २।१२।२; असं. २०।३४।२.

( २ ) ऋसं. २।१२।३, असं. २०।३४।३; मैसं. ४।१४।५ जनास ( जनासा )

यः अहिं मेघं हत्वा मेघहननं कृत्वा सप्त सर्पणशीलाः सिन्धून् स्यन्दनशीला अपः अरिणात् प्रैरयत् । यद्वा सप्त गङ्गायमुनाद्या मुख्या नदीररिणात् । यः च वलस्य वलनामकस्यासुरस्य अपधा तत्कर्तृकान्निरोधान्निरुद्धाः गाः उदाजत् निरगमयत् । यः च अश्मनोः, अश्नुते व्याप्नोत्यन्तरिक्षमित्यश्मा मेघः । अत्यन्तमृदुरूपयोर्मेघयोः अन्तः मध्ये वैद्युत अग्नि जजान उत्पादयामास । यश्च समत्सु समक्षयन्ति योध्दॄणामायूंषीति समदः सग्रामाः । तेषु सवृक् भवति । सः इन्द्रः नाहमिति । ऋसा-

[१]येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः ।
श्वघ्नीव यो जिगीवां लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥

येन इन्द्रेण इमा इमानि विश्वा च्यवना नश्वराणि भुवनानि कृतानि स्थिरीकृतानि । यः च दास वर्ण शूद्रादिकम् । यद्वा दासमुपक्षपयितारम् । अधरं निकृष्टमसुरं गुहा गुहायां गूढस्थाने नरके वा अकः अकार्षीत् । लक्ष लक्ष्यं जिगीवान् जितवान् । यः अर्यः अरेः शत्रोः सबन्धीनि पुष्टानि समृद्धानि आदत् आदत्ते । तत्र दृष्टान्तः । श्वघ्नीव । श्वभिर्मृगान् हन्तीति श्वघ्नी व्याधः । यथा व्याधो जिघृक्षितं मृगं परिगृह्णाति तद्वत् । ऋसा.

[२]यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम् ।
सो अर्यः पुष्टीर्विजइवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः ॥

अपश्यन्तो जनाः घोरं शत्रूणां घातकं यं पृच्छन्ति स्म कुह सेति । स इन्द्रः कुत्र वर्तते इति । न क्वचिदसौ तिष्ठतीति मन्यमाना जनाः एनं इन्द्रं आहुः एषः इन्द्रः न अस्तीति । तथा च मन्त्रः—‘नेन्द्रो अस्तीति नेम उ त्व आह’ (ऋस. ८।१००।३) इति । ई इति पूरणः । सः इन्द्रः विजइव । इवशब्द एवार्थे । उद्वेजक एव सन् अर्यः अरेः सबन्धीनि पुष्टीः पोषकाणि गवाश्वादीनि धनानि आ मिनाति सर्वतो हिनस्ति । तस्मात् श्रदस्मै इन्द्राय धत्त । स इन्द्रोऽस्तीति विश्वासमत्र कुरुत । यद्यप्यसौ विशेषतोऽस्माभिर्न दृश्यते तथापि अस्तीति विश्वास कुरुत । एव निर्धारणीयमहिमेति सः इन्द्रः नाहमिति । ऋसा.

[१]यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः ।
युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः ॥

यो रध्रस्य समृद्धस्य चोदिता धनाना प्रेरयिता भवति । यः च कृशस्य च दरिद्रस्य च यः च नाधमानस्य याचमानस्य कीरेः स्तोतुः ब्रह्मणः ब्राह्मणस्य च धनाना प्रेरयिता । यः च सुशिप्रः शोभनहनुः सुशीर्षको वा सन् युक्तग्राव्णः अभिषवार्थमुद्यतग्राव्णः सुतसोमस्य अभिषुतसोमस्य यजमानस्य अविता रक्षिता भवति सः एव इन्द्रः नाहमिति । ऋसा.

[२]यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः ।
यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः ॥

यस्य सर्वान्तर्यामितया वर्तमानस्य प्रदिशि प्रदेशनेऽनुशासने अश्वासः अश्वा वर्तन्ते । यस्य अनुशासने गावः । यस्य अनुशासने ग्रामाः । ग्रसन्तेऽत्रेति ग्रामा जनपदाः । यस्य आज्ञाया विश्वे सर्वे रथासः रथा वर्तन्ते । यः च वृत्र हत्वा सूर्य जजान जनयामास । यः च उषसम् । तथा मन्त्रः—‘जजान सूर्यमुषसं सुदंसाः’ (ऋस. ३।३२।८) इति । यः च मेघभेदनद्वारा अपा नेता प्रेरकः, सः इन्द्रः इत्यादि प्रसिद्धम् । ऋसा.

[३]यं क्रन्दसी संयती विह्वयेते परेऽवर उभया अमित्राः ।
समान चिद्रथमातस्थिवांसा नाना हवेते स जनास इन्द्रः ॥

(१) ऋसं. २।१२।४; असं. २०।३४।४.
(२) ऋसं. २।१२।५; असं. २०।३४।५.

(१) ऋस. २।१२।६, अस. २०।३४।६.
(२) ऋसं. २।१२।७; असं. २०।३४।७.
(३) ऋसं. २।१२।८, असं. २०।३४।८.

यं क्रन्दसी रोदसी शब्दं कुर्वाणे मानुषी दैवी च द्वे सेने वा संयती परस्परं सगच्छन्त्यौ यमिन्द्र विह्वयेते स्वरक्षार्थं विविधमाह्वयतः। परे उत्कृष्टाः अवरे अधमाश्च उभयाः उभयविधाः अमित्राः शत्रवः यमाह्वयन्ति। समानं इन्द्ररथसदृश रथ आतस्थिवासा आस्थितौ द्वौ रथिनौ तमेवेन्द्र नाना पृथक् पृथक् हवेते आह्वयेते। यद्वा समानमेकरथमारूढाविन्द्राग्नी हवेते यज्ञार्थं यजमानैः पृथगाहूयेते तयोरन्यतरः सः इन्द्रः नाहमिति। ऋसा.

[1]यस्मान्न ऋते विजयन्ते जनासो य युध्यमाना अवसे हवन्ते।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत्स जनास इन्द्रः॥

यस्मात् ऋते जनासः जनाः न विजयन्ते विजय न प्राप्नुवन्ति। अतः युध्यमानाः युद्ध कुर्वाणा जनाः अवसे स्वरक्षणाय य इन्द्रं हवन्ते आह्वयन्ति। यः च विश्वस्य सर्वस्य जगतः प्रतिमान प्रतिनिधिः बभूव। यः च अच्युतच्युत् अच्युताना क्षयरहिताना पर्वतादीना च्यावयिता, सः इन्द्रः इत्यादि प्रसिद्धम्। ऋसा.

[2]यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान।
यः शर्धते नानुददाति शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः॥

यः महि महत् एनः पाप दधानान् शश्वतः बहून् अमन्यमानान् आत्मानमजानत इन्द्रमपूजयतो वा जनान् शर्वा, शृणाति शत्रूननेनेति शरुर्वज्रः, तेनायुधेन जघान। यः च शर्धते उत्साह कुर्वते अनात्मज्ञाय जनाय शृध्या उत्साहनीय कर्म नानुददाति न प्रयच्छति। यः च दस्योः उपक्षपयितुः शत्रोः हन्ता घातकः, सः इन्द्रः इत्यादि पूर्ववत्। ऋसा.

[3]यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः॥

यः पर्वतेषु क्षियन्त इन्द्रभिया बहून् संवत्सरान् प्रच्छन्नो भूत्वा पर्वतगुहासु निवसन्त शम्बर एतन्नामक मायाविनमसुर चत्वारिंश्या शरदि चत्वारिंशे सवत्सरे अन्वविन्दत् अन्विष्य अलभत। लब्ध्वा च यः ओजायमानं बलमाचरन्त अहिं आहन्तार दानु दानव शयानं शम्बरमसुरं जघान हतवान्। सः इन्द्रः नाहमिति। ऋसा.

[1]यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून्।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः॥

यः सप्तरश्मिः सप्तसंख्याकाः पर्जन्याः रश्मयो यस्य। ते च रश्मयः 'वराहवः स्वतपसः। विद्युन्महसो धूपयः। श्वापयो गृहमेधाश्चेत्येते। ये चेमेऽशिमिविद्विषः। पर्जन्याः सप्त पृथिवीमभिवर्षन्ति वृष्टिभिः' (तैआ. १।९।४५) इति तैत्तिरीयारण्यके ह्याम्नाताः। वृषभः वर्षकः तुविष्मान् वृद्धिमान् बलवान् वा सप्त सर्पणस्वभावान् सिन्धून् अपः सर्तवे सरणाय अवासृजत् अवसृष्टवान्। यद्वा गङ्गाद्याः सप्त मुख्या नदीरसृजत्। यः च वज्रबाहुः सन् द्यां दिव आरोहन्त रौहिण असुरं अस्फुरत् जघान। ऋसा.

[2]द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः॥

अस्मै इन्द्राय द्यावा पृथिवी। इतरेतरापेक्षया द्विवचन 'प्र मित्रयोर्वरुणयोः' (ऋस. ७।६६।१) इतिवत्। नमेते स्वयमेव प्रह्वीभवतः। चित् अपि च अस्य इन्द्रस्य शुष्मात् बलात् पर्वताः भयन्ते बिभ्यति। यः सोमपाः सोमस्य पाता निचितः सर्वैः। यद्वा अन्येभ्योऽपि देवेभ्यो दृढाङ्गः। वज्रबाहुः वज्रसदृशबाहुः। यः च वज्रहस्तः वज्रयुक्तः, सः इन्द्रः इत्यादि प्रसिद्धम्। ऋसा.

(१) ऋस. २।१२।९; असं. २०।३४।९.
(२) ऋसं. २।१२।१०; असं. २०।३४।१०.
(३) ऋसं. २।१२।११, असं. २०।३४।११.

(१) ऋसं. २।१२।१२; असं. २०।३४।१३, जैउब्रा. १।२९।७, ८.
(२) ऋसं. २।१२।१३, असं. २०।३४।१४.

[१]यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती।
यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः॥

यः सुन्वन्त सोमाभिषव कुर्वन्त यजमान अवति रक्षति। यः च पुरोडाशादीनि हवींषि पचन्तं यः च ऊती ऊतये स्वरक्षायै शस्त्राणि शसन्त यः च शशमान अवति स्तोत्र कुर्वाण रक्षति। ब्रह्म परिवृढं स्तोत्र यस्य वर्धन वृद्धिकर भवति। तथा यस्य सोमः वृद्धिहेतुर्भवति। यस्य च इद अस्मदीय राधः पुरोडाशादिलक्षणमन्न वृद्धिकरं भवति। स इन्द्रः इत्यादि प्रसिद्धम्। ऋसा.

[२]यः सुन्वते पचते दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्यः।
वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम॥

इदानीमृषिः साक्षात्कृतमिन्द्र प्रति ब्रूते। हे इन्द्र यः दुध्रः दुर्धरः सन् सुन्वते सोमाभिषव कुर्वते पुरोडाशादिहवींषि पचते यजमानाय वाजं अन्नं बल वा आ दर्दर्षि भृशं प्रापयसि सः तादृशस्त्व सत्यः यथार्थभूतः असि न पुनर्नास्तीति बुद्धियोग्योऽसि। किल इति प्रसिद्धौ। ते तव प्रियासः सुवीरासः कल्याणपुत्रपौत्राः सन्तः वय विश्वह सर्वेष्वहःसु विदथ स्तोत्र आ वदेम ब्रूयाम। ऋसा.

[३]यः शम्बरं पर्यतरत् कसीभिर्योऽचारुकास्नापिबत् सुतस्य।
अन्तर्गिरौ यजमानं बहु जनं यस्मिन्नामूर्छत् स जनास इन्द्रः॥

यः इन्द्रः कशीभिः दीप्तैर्वज्राद्यायुधैः स्वतेजोभिर्वा शम्बर असुर पर्यतरत् पर्यतारयत्। गिरिनदीसमुद्रादिकान् सर्वानपि अत्यक्रामयदित्यर्थः। स्वय वा तं असुर पर्यतरत्। पर्यभवदित्यर्थः। यश्च अचारुकास्ना अरमणीयेन आस्येन सुत अभिषुत सोम अपालामुखादिस्थित अपिबत् पानमकार्षीत्। 'इम जम्भसुत पिब धानावन्त करम्भिणम्' (ऋस. ८।९१।२) इति हि मन्त्रवर्णः। यस्मिन्निन्द्रे हन्तव्ये सति अन्तर्गिरौ पर्वतस्य मध्ये शुद्धे देवयजनप्रदेशे यजमान सोमयाग कुर्वाण गृत्समद बहुं जन अध्वर्युप्रभृतिं सदःस्थित जनसघात चामूर्छत् आवव्रे। चुमुरिधुनिप्रभृतिकोऽसुरसघात इति शेषः। स जनास इन्द्र इति पूर्ववत्। असा.

जातो व्यख्यत्पित्रोरुपस्थे भुवो न वेद जनितुः परस्य।
स्तविष्यमाणो नो यो अस्मद्व्रता देवानां स जनास इन्द्रः॥

य इन्द्रो जातः प्रादुर्भूतमात्र एव सन् पित्रोः द्यावापृथिव्योः उपस्थे उत्सङ्गे तयोर्मध्ये व्यख्यत् विख्यातवान् प्रकाशितोऽभूत्। यश्च इन्द्रः भुवः (भुव) मातृभूतां न वेद न जानाति। तथा परस्य उत्कृष्टस्य जनितुः उत्पादयितुः पर उत्पादक पितृस्थानीय द्युलोकमपि न वेद न जानाति। तयोर्वस्तुतः स्वजनन प्रति अकारणत्वादित्यभिप्रायः। यद्वा भुवो जनितुः भूम्या उत्पादकस्य परस्य अन्यस्य स्वरूप भुवो जनितार परं अन्य इति वा व्याख्येयम्। न वेद न जानाति। स्वातिरिक्तेणेति शेषः। स्वस्यैव सर्वकारणत्वादित्यभिप्रायः। किंच अस्मत् अस्मत्तः अस्माभिः कविष्यमाणः स्तविष्यमाणः स्तूयमानश्च सन्। नशब्दः चार्थे। देवानां व्रता व्रतानि कर्माणि देवार्थान् आ। आ पूरयति। स इन्द्र इति। असा.

यः सोमकामो हर्यश्वः सूरिर्यस्माद्रेजन्ते भुवनानि विश्वा।
यो जघान शम्बरं यश्च शुष्णं य एकवीरः स जनास इन्द्रः॥

य इन्द्रः सोमकामः सोमं काम्यमानः सन् हर्यश्वसूरिः हर्याख्यानां अश्वाना सुष्ठु ईरयिता प्रेरयिता भवति। यागप्रदेशस्यागमनायेति शेषः। अथ वा यः सोमकामः यश्च हर्यश्वः सूरिर्विद्वांश्च। किंच यस्मादिन्द्रात् विश्वा विश्वानि भुवना भुवनानि भूतजातानि रेजन्ते बिभ्यति। य इन्द्रः शम्बर असुर जघान यश्च शुष्ण

(१) ऋसं. २।१२।१४, असं. २०।३४।१५.

(२) ऋसं. २।१२।१५, असं. २०।३४।१८.

(३) असं. २०।३४।१२, १६, १७. एता ऋचः ऋग्वेदसंहिताया न सन्ति।

असुर जघान घातयामास । यश्च एवविधेषु असाधारणेषु व्यापारेषु एकवीरः असाधारणः शूरो भवति । स जनास इन्द्र इति उक्तार्थः । असा.

सोमोत्पादननदीप्रवर्तनादिकर्ममहिम्ना प्रशस्य

**(१)ऋतुर्जनित्री तस्या अपस्परि मक्षू जात आविशद्यासु वर्धते ।**
**तदाहना अभवत्पिप्युषी पयोऽंशोः पीयूषं प्रथमं तदुक्थ्यम् ॥**

ऋतुर्वर्षाख्यः कालः जनित्री सोमस्य जनयित्री जननी भवति । तस्याः परि तस्या जनन्याः सकाशात् जातः सोमः अपः उदकानि मक्षु शीघ्रं आविशत् । यासु अप्सु सोमः वर्धते ता आविशदित्यन्वयः । तस्मादप्सु प्रविष्टत्वात् सोमः आहनाः आहन्तव्योऽभिपोतव्यो भवति । आहनाः इति सकारान्तमिद पदम् । तथा च मन्त्रवर्णः—'ये ते मदा आहनसो विहायसः' (ऋसं. ९।७५।५) इति । या च अंशुरूपा सोमलता पयः सारभूत पिप्युषी वर्धयन्ती अभवत् । अंशोः तस्याः सोमलतायाः पीयूष रसभूतं पयः उक्थ्य प्रशस्य हविरिन्द्रस्य भवति ।

ऋसा.

**(२)सध्रीमा यन्ति परि बिभ्रतीः पयो विश्वप्स्न्याय प्र भरन्त भोजनम् ।**
**समानो अध्वा प्रवतामनुष्यदे यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥**

सध्री सध्रीचीनाः पयः उदकं परि परितः बिभ्रतीः बिभ्राणाः ई एता नद्यः आ यन्ति सर्वतो गच्छन्ति । ता नद्यः विश्वप्स्न्याय विश्वसामपा आश्रयभूताय समुद्राय भोजनम् । भुज्यते इति भोजन पयः । प्र भरन्त प्रकर्षेण संपादयन्ति । कुत एतत् तदाह—प्रवता प्रवणवता निम्नगाना पयसा अनुष्यदे अनुष्यन्दनीयः अध्वा मार्गः समानः एको हि । यस्ता तानि सोमोत्पादननदीप्रवर्तनादीनि कर्माणि प्रथम पूर्वं अकृणोः अकरोः । सः तादृङ्महिमोपेतस्त्व उक्थ्यः असि सर्वैः प्रशस्यो भवसि । ऋसा.

सर्वेषा पृथक्कर्मकर्तॄणां कारयिता, प्रजानां धनविभागनियामकः, अन्नभोक्तृत्वप्रयोजकश्चेति प्रशस्यः

**(१)अन्वेको वदति यद्ददाति तद्रूपा मिनन्तदपा एक ईयते ।**
**विश्वा एकस्य विनुदस्तितिक्षते यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥**

यजमानः यत् हविः देवेभ्यः ददाति तत् एकः होता अनु वदति । याज्यापुरोनुवाक्याभ्या देवताः स्मारयति । एकः अध्वर्युः रूपा पश्वादीना रूपाणि मिनन् हिंसन् तदपाः तत् विशसनाख्य अपः कर्म यस्य तादृशः सन् ईयते देवयजने सर्वत्र गच्छति । एकस्य अध्वर्योः विश्वाः विनुदः सर्वाणि तत्कर्तृकाणि विक्षेपणरूपाणि कर्मवैगुण्यानि तितिक्षते । तद्योग्यप्रायश्चित्तकरणेन ब्रह्मा सहते । तानि हविःप्रदानादीनि कर्माणि यः त्वं अकृणोः अकारयः सः त्व उक्थ्यः असि । ऋसा.

**(२)प्रजाभ्यः पुष्टिं विभजन्त आसते रयिमिव पृष्ठं प्रभवन्तमायते ।**
**असिन्वन्दंष्ट्रैः पितुरत्ति भोजनं यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥**

हे इन्द्र पुष्टिं त्वया दत्त पोषकं धन स्वकीयाभ्यः प्रजाभ्यः विभजन्तः अस्यैतावदस्यैतावदिति विभाग कुर्वन्तो गृहमेधिनः आसते स्वस्वगृहेषु निवसन्ति । तत्र दृष्टान्तः । आयते गृह प्रत्यागच्छतेऽतिथये पृष्ठं धारकं प्रभवन्त बहुभरणसमर्थं रयि धनं यथा विभज्य प्रयच्छन्ति तद्वत् । असिन्वन् सेतुबन्धादिक कर्म कुर्वन् लोकः पितुः पालयित्र्या दिवः सकाशादागतं भोजन उदक तत्कार्या ओषधीः दंष्ट्रैः दन्तैः अत्ति भक्षयति । यद्वा असिन्वन् अव्याप्रियमाणोऽग्निः पितुः पालकस्य यजमानस्य सबन्धि भोजन हविर्लक्षणमन्न दंष्ट्रैर्दन्तरूपैर्ज्वालैरत्ति । यस्ताकृणोः इत्यादि सिद्धम् । ऋसा.

भक्तानुग्राहकः, विश्वेश्वरः, पृथिवीनदीसूर्यवनस्पत्योषधिकर्मकार्यप्रवर्तकः, दानवहन्ता, धनजिच्चेति प्रशस्यः

**(३)अधाकृणोः पृथिवीं संदृशे दिवे यो धौतीनामहिहन्नारिणक्पथः ।**

(१) ऋसं. २।१३।१; गोब्रा. २।४।१७.
(२) ऋसं. २।१३।२.

(१) ऋसं. २।१३।३. (२) ऋसं. २।१३।४.
(३) ऋसं. २।१३।५.

**तं त्वा स्तोमेभिरुदभिर्न वाजिनं देवं देवा**
**अजनन्त्सास्युक्थ्यः ॥**

हे इन्द्र अध अपि च त्वं दिवे द्योतमानाय सूर्याय पृथिवी चलिता सतीं दृढीकृत्य सदृशे सदर्शनीया अकृणोः अकरोः । यः च त्व धौतीना चलन्तीना नदीना पथः मार्गान् अरिणक् व्यरेचयः । गन्तु योग्यानकरोरित्यर्थः । अहिहन् अहेर्वृत्रस्य मेघस्य वा हन्तर्हे इन्द्र देवाः स्तोतारः त तादृशं देव त्वा स्तोमेभिः स्तोत्रैः अजनन् अवर्धयन् । तत्र दृष्टान्तः । उदभिर्न वाजिनम् । यथा वाजिनमश्वमुदाभिरुदकैर्वर्धयन्ति तद्वत् । शेषं सिद्धम् ।

ऋसा.

[1]**यो भोजनं च दयसे च वर्धनमार्द्रादा शुष्कं**
**मधुमद्दुदोहिथ ।**
**स शेवधिं नि दधिषे विवस्वति विश्वस्यैक**
**ईशिषे सास्युक्थ्यः ॥**

हे इन्द्र यः त्वं भोजनम् । भुज्यते इति भोजनमन्नादि । च दयसे यजमानेभ्यः प्रयच्छसि । किंच वर्धनं वृद्धिकरं धनं बलं वा दयसे । तथा आर्द्रात् काण्डात् शुष्कं अनार्द्र व्रीह्यादिक मधुमत् मधुररसोपेत दुदोहिथ दुग्धवानसि । सः तादृशस्त्वं विवस्वति ते परिचरणं कुर्वाणे यजमाने शेवधिं धनसदनं नि दधिषे निदधासि । किंबहुना । विश्वस्य सर्वस्य जगतः एकः अद्वितीय एव सन् ईशिषे स्वामी भवसि । सः इत्यादि सिद्धम् ।

ऋसा.

[2]**यः पुष्पिणीश्च प्रस्वश्च धर्मणाधि दाने व्यवनी-**
**रधारयः ।**
**यश्चासमा अजनो दिद्युतो दिव उरुरूर्वा अभितः**
**सास्युक्थ्यः ॥**

हे इन्द्र यः त्वं पुष्पिणीः पुष्पवतीः च प्रस्वः प्रसूताः प्रसूयमाना वा अवनीः अवित्रीरोषधीः दाने अधि । उपलूयन्ते सस्यान्यत्रेति दानं क्षेत्रम् । तस्मिन् क्षेत्रे धर्मणा सकललक्षणेन कर्मणा वि अधारयः न्यदधाः । यः च त्वं दिवः द्योतमानस्य सूर्यस्य असमाः विषमा नानाप्रकाराः दिद्युतः दीप्तीः अजनः अजनयः । यद्वा दिवो नक्षत्राणि । यः च उरुः महास्त्व अभितः सर्वतः ऊर्वान् महतः प्राणिनिकायान् पर्वतान् वा अजनयः । शिष्ट स्पष्टम् ।

ऋसा.

[1]**यो नार्मरं सहवसुं निहन्तवे पृक्षाय च दास-**
**वेशाय चावहः ।**
**ऊर्जयन्त्या अपरिविष्टमास्यमुतैवाद्य पुरुकृत्सा-**
**स्युक्थ्यः ॥**

पुरुकृत् पुरूणा कर्मणा कर्तः हे इन्द्र यः त्व नार्मरम् । नॄन् मनुष्यान्मारयतीति नृमरः कश्चिदसुरः । तस्यापत्यं नार्मरः तम् । सहवसुम् । वसुना सह वर्तत इति सहवसुः । असुरनामैतत् । एतन्नामकमसुर निहन्तवे निहन्तु ऊर्जयन्त्याः बलवत्या वज्रधारायाः अपरिविष्ट मलादिभिरव्याप्त आस्य अद्य एव अवहः तमसुरं प्रापयः । यद्वा ऊर्जयन्त्याः पिशाचिकाया आस्य प्रापयः । किमर्थम् । पृक्षाय तव हविर्लक्षणान्नलाभाय । दासवेशाय दासाना दस्यूना वेशाय विनाशाय च । यद्वा अस्माकमन्नलाभाय दस्युविनाशाय च ।

ऋसा.

[2]**शतं वा यस्य दश साकमाद्य एकस्य श्रुष्टौ यद्ध**
**चोदमाविथ ।**
**अरज्जौ दस्यून्त्समुनब्दभीतये सुप्राव्यो अभवः**
**सास्युक्थ्यः ॥**

हे इन्द्र एकस्य एकाकिनः श्रेष्ठस्य वा यस्य ते श्रुष्टौ सुखनिमित्ते तदर्थं शत दश दश शतानि हरयो वाहनार्थ भवन्ति । तथा च मन्त्रवर्णः—'इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश' ( ऋसं. ६।४७।१८ ) इति । अपि च यश्च आ अद्यः सर्वेषा सर्वत उपजीव्यः । 'न तस्येशे य नाद्याद्यद्वैनं नाद्युः' इति हि श्रुतिः । यद्ध यश्च त्व चोदं स्तोत्राणां प्रेरकं यजमानं आविथ रक्षितवानसि । किंच यस्त्वं अरज्जौ रज्जुवर्जिते बन्धनागारे दस्यून् उपक्षपयितॄन् दभीतये । दभीतिर्नाम कश्चिदृषिः । तदर्थं समुनप् हिंसितवानसि । किंच सुप्राव्यः सुखेन सर्वैरुपसर्पणीयः अभवः । शिष्ट सिध्दम् ।

ऋसा.

[3]**विश्वेदनु रोधना अस्य पौंस्यं ददुरस्मै दधिरे**
**कृत्नवे धनम् ।**

(१) ऋसं. २।१३।६. (२) ऋसं. २।१३।७.

(१) ऋसं. २।१३।८. (२) ऋसं. २।१३।९.
(३) ऋसं. २।१३।१०.

षळस्तभ्ना विष्टिरः पञ्च संदृशः परि परो अभवः सास्युक्थ्यः ॥

विश्वेत् सर्वा एव रोधनाः रोधकाः नद्यः अस्य इन्द्रस्य पौंस्यम्। पुंसो भावः पौंस्यम्। वीर्यमिति यावत्। अनु लक्ष्यीकृत्य वर्तन्ते। अस्मै इन्द्राय वसु हविर्लक्षणमन्नं यजमानाः प्रयच्छन्ति। किं च कृत्नवे कर्मणां कर्त्रे इन्द्राय धनं दधिरे सर्वे जना धारयन्ति। तथा च मन्त्रः—'इन्द्राय द्याव ओषधीरुतापो रयिं रक्षन्ति जीरयो वनानि' (ऋसं. ३.५१.५) इति। विष्टिरः विस्तीर्णाः षट् षट्संख्याका उर्वीः। तथा च—'द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च' इत्येताः। ताः अस्तभ्नाः निश्चलीकृतवानसि। संदृशः सम्यक् पश्यन्तीति संदृशो जनाः। पञ्च संदृशः पञ्च जनान् परि सर्वतः परः पारयिता पालयिता वा अभवः भवसि। गतमन्यत्। ऋसा.

सुप्रवाचनं तव वीर वीर्यं यदेकेन क्रतुना विन्दसे वसु।

जातूष्ठिरस्य प्र वयः सहस्वतो या चकर्थ सेन्द्र विश्वास्युक्थ्यः ॥

वीर बलवन् हे इन्द्र तव वीर्यं सामर्थ्यं सुप्रवाचनं सुष्ठु प्रवचनीयं सर्वैः श्लाघनीयमित्यर्थः। किं तत्। एकेन क्रतुना कर्मणा वसु विन्दसे सम्पूर्णं धनं लभसे। यद्वा त्वदीयं धनं स्तोतॄन् प्रापयसीति यत् तत्प्रशस्यमित्यर्थः। सहस्वतः बलवतः जातूष्ठिरस्य। एतन्नामकः कश्चित्। तस्य वयः अन्नं प्र अदः। यद्वा जातूष्ठिरस्य जातु कदाचित् सर्वदा स्थिरस्य सहस्वतः बलवतो यज्ञादेः कर्मणः सम्बन्धि वयः हविर्लक्षणमन्नं प्र विन्दसे इति समन्वयः। या यानीमान्यन्यानि विश्वा सर्वाणि कर्माणि चकर्थ कृतवानसि। सः तादृशस्त्वं उक्थ्यः सर्वैः प्रशंसनीयो भवसि। ऋसा.

अरमयः सरपसस्तराय कं तुर्वीतये च वय्याय च स्रुतिम्।

नीचा सन्तमुदनयः परावृजं प्रान्धं श्रोणं श्रवयन्त्सास्युक्थ्यः ॥

हे इन्द्र सरपसः। सरणमपः कर्म यासां ताः सरपसः। ता अपः कं सुखेन तराय तरणाय अरमयः अक्रीडयः। किं च तुर्वीतये तुर्वीतिनाम्ने कस्मैचिद्राजर्षये, तस्मै वय्याय च। वय्यो नाम कश्चित् तस्मै। तान्या स्रुतिं सरणं प्रकृतवानसि। तौ हि जलपूर्णां महानदीं तारयितुमसमर्थौ अभूताम्। तौ च नद्या तारितौ। परावृजं परित्यज्य पापानि वृणक्ति वर्जयतीति परावृक् कश्चिदृषिः। तमपि नम्रं तथा नीचा नीचं सन्तं उदनयः ऊर्ध्वं नीतवानसि। किं च अन्धं सन्तं श्रोणं पङ्गुं सन्तं चक्षुर्दानाद्गमनसाधनाच्चोदनयः। किं कुर्वन्। प्रकर्षेण श्रवयन्। आत्मनः कीर्तिमन्तं कुर्वन्। उदनयः इति समन्वयः। सः इत्यादि सिद्धम्। ऋसा.

अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यम्।

इन्द्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥

वसो सर्वस्य वासक वसुमन् वा हे इन्द्र स्तोतृभ्यः अस्मभ्यं तत् राधः धनं दानाय। उपलक्षणमेतत्। भोगाय च समर्थयस्व देहि। अस्मान् समर्थयेत्यर्थः। ते तव तत् बहु प्रभूतं वसव्यं तादृशं प्रभूतं धनमस्ति खलु। चित्रं चायनीयं यद् धनं अनु द्यून् अन्वहं श्रवस्याः भोग्य इच्छेः। सुवीराः कल्याणपुत्रपौत्राः सन्तो वयं विदथे अस्मिन्यज्ञे बृहत् प्रभूतं स्तुत्यादिकं वाक्यं वदेम। ऋसा.

निराधारे आकाशे विश्वधारक गृहनिर्माणकर्मसदृश विश्वं सृजति

अवंशे द्यामस्तभायद्बृहन्तमा रोदसी अपृणदन्तरिक्षम्।

स धारयत्पृथिवीं पप्रथच्च सोमस्य ता मद इन्द्रश्चकार ॥

अवशे आकाशे द्यां द्योतमानं सूर्यं द्युलोकं वा अस्तभायत् इन्द्रोऽस्तभ्नात्। अनवलम्बनस्य तस्यावस्थापनमकरोदित्यर्थः। बृहन्तं महत् अन्तरिक्षं रोदसी द्यावापृथिव्यौ च अपृणत् स्वतेजसा पूरितवान्। किंच सः इन्द्रः पृथिवीं विस्तीर्णां भूमिं धारयत् अधारयत्। तथा

(१) ऋसं. २।१३।११. (२) ऋसं. २।१३।१२.

(१) ऋसं. २।१३।१३.
(२) ऋसं. २।१५।२.

पप्रथच्च एना भूमिमप्रथयत् । सोमस्य मदे हर्षे सजाते सति तानीमानि कर्माणि इन्द्रश्चकार । ऋसा.

**सद्मेव प्राचो वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम् ।**
**वृथाऽसृजत्पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार ॥**

सद्मेव यथा यज्ञगृहान् मानैः षट्त्रिंशत्प्रक्रमप्राचीत्येवंरूपैः परिमाणैः प्राक्प्रवणान् कुर्वन्ति तद्वत्सिन्धून् लोकान् वाऽनृजूत्वा मानैः परिमाणैः प्राचः प्राङ्मुखान् वि मिमाय इन्द्रो विशेषेण निर्मितवान् । तथा नदीनां खानि निर्गमनद्वाराणि वज्रेण च अतृणत् अखनत् । तथा च मन्त्रः—'इन्द्रो अस्माँ अरदद्वज्रबाहुः' ( ऋस. ३।३३।६ ) इति । तथा दीर्घयाथैः बहुकाल गन्तव्यैः पथिभिः मार्गैः वृथा असृजत् अनायासेन ताः नदीः सृष्टवान् । सोमस्य इति सिद्धार्थ इति । ऋसा.

स्वतेजसा विश्वव्यापकः, स्वमायया विश्वनियन्ता च

**अधा यो विश्वा भुवनाभि मज्मनेशानकृत्प्रवया अभ्यवर्धत ।**
**आद्रोदसी ज्योतिषा वह्निरातनोत्सीव्यन्तमांसि दुधिता समव्ययत् ॥**

अध अपि च प्रवयाः प्रवृद्धान्नः पुरातनो वा यः इन्द्रः विश्वा भुवना सर्वान् लोकान् मज्मना बलेनाभिभूय ईशानकृत् आत्मानं सर्वस्याधिपतिं कुर्वन् । यद्वा अग्न्यादीन् देवान् तत्तल्लोकाधिपतीन् कुर्वन् अभ्यवर्धत सर्वतः प्रवृद्धोऽभवत् । आत् अनन्तर वह्निः जगतां वोढा स इन्द्रः ज्योतिषा स्वीयेन तेजसा रोदसी द्यावापृथिव्यौ आतनोत् व्याप्नोत् । किंच तमांसि तमोरूपाणि रक्षांसि दुधिता दुःस्थितानि दुर्गतानि सीव्यन् विस्तारयन् समव्ययत् आवृणोत् । जगद्व्याप्य वर्तत इत्यर्थः । ऋसा.

**स प्राचीनान्पर्वतान्दृंहदोजसाधराचीनमकृणोदपामपः ।**
**अधारयत्पृथिवीं विश्वधायसमस्तभ्नान्मायया द्यामवस्रसः ॥**

सः इन्द्रः प्राचीनान् इतस्ततः प्रकर्षेणाञ्चतो गच्छतः सपक्षान् पर्वतान् ओजसा बलेन दृहत् पक्षच्छेदं कृत्वा भूमौ दृढीचकार । अचलानकरोदित्यर्थः । अपां मेघस्थितानामुदकानां अपः स्यन्दनलक्षण कर्म अधराचीनम् । अधः प्रदेशमञ्चति गच्छतीत्यधराचीनम् । तादृश अकृणोत् । मेघभेदन कृत्वाऽपो भूमावपातयदित्यर्थः । किंच विश्वधायसं विश्वस्य धात्री पृथिवीं बलेन अधारयत् । मायया प्रज्ञयोपायेन द्यां द्युलोकं अवस्रसः अवपतनात् अस्तभ्नात् । ऋसा.

**इन्द्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनन्ति विश्वे ।**
**दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ॥**

विश्वे सर्वे देवाः इन्द्रस्य तव कर्म कर्माणि सुकृता सुकृतानि सुष्ठु निर्मितानि पृथिव्यादीनि पुरूणि बहूनि व्रतानि यज्ञादीनि च न मिनन्ति । एतानि सर्वाणि तव कर्माणि न हिंसन्ति । किं त्वाद्रियन्ते । किंच यः अयमिन्द्रः पृथिवीं भूलोकं द्यां द्युलोकं उत अपि च इमां इममन्तरिक्षलोकं च एतांस्त्रीन् लोकान् दाधार । सुदंसाः सुकर्मा शोभनकर्मा सन्निन्द्रः सूर्यं लोकप्रकाशकमादित्यं उषसं अग्निहोत्रादिकर्मनिर्वाहकमुषःकाल जजान उत्पादयामास । ऋसा.

सर्वरूपधरः सर्वगश्च

**रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम् ।**
**त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा ॥**

मघवा धनवानिन्द्रः रूपंरूपं यद्यद्रूपं कामयते तत्तद्रूपं बोभवीति भृश प्राप्नोति । तत्तद्रूपात्मको भवति । तत्र कारणमुच्यते । मायाः अनेकरूपग्रहणसामर्थ्योपेताः कृण्वानः कुर्वाणः स्वां तन्वं स्वकीयां तनूं, परि पञ्चम्यर्थे, स्वस्माच्छरीरान्नानाविधानि शरीराणि निर्मिमीते । यद्वा स्वां तनूं नानाविधरूपोपेतां करोति । तथा च मन्त्रवर्णः—' इन्द्रो मायाभिः पुरुरूपः ' ( ऋसं. ६।४७।

(१) ऋसं. २।१५।३. (२) ऋसं. २।१७।४. (३) ऋसं. २।१७।५.

(१) ऋसं. ३।३२।८. (२) ऋसं. ३।५३।८; जैउब्रा. १।४४।६, ७.

१८ ) इति । यत् यस्मात् स्वैर्मन्त्रैः स्वकीयैः स्तुतिलक्षणैर्वाक्यैराहूतः अनृतुपाः । न केवलमृतुष्वेव पिबति किंतु अनृतुष्वपि । बहुशः सोम पिबन्नित्यर्थः । ऋतावा सत्यवान् तादृश इन्द्रः दिवः स्वर्गलोकात् परि मुहूर्त एकस्मिन्नेव मुहूर्ते नानादेशवर्तिषु यज्ञेषु तत्रापि त्रिः त्रिषु सवनेषु आगात् आगच्छति । ऋसा.

गूढस्थानस्थित

**क्वं स्य वीरः को अपश्यदिन्द्रं सुखरथमीयमानं हरिभ्याम् ।**
**यो राया वज्री सुतसोममिच्छन्तदोको गन्ता पुरुहूत ऊती ॥**

वज्री वज्रवान् पुरुहूतः बहुभिराहूतः यः इन्द्रः राया देयेन धनेन सह सुतसोममिच्छन् अभिषुतसोम यजमानमन्विच्छन् ऊती ऊत्यै रक्षायै तत् तस्य यजमानस्य ओकः गृह गन्ता प्राप्तो भवति, वीरः विक्रान्तः स्यः स इन्द्रः क्व कुत्र विद्यते । सुखरथं शोभनाक्षद्वारः रथो यस्य स सुखरथः । सुष्ठु खनति लिखति भूमिमिति वा सुख, तादृग्रथम् । 'सुहित खेभ्यः ख पुनः खनतेः' (नि. ३।१३) इति यास्कः । हरिभ्यां स्ववाहनाभ्यां अश्वाभ्यां ईयमान गच्छन्तं इन्द्रं कोऽपश्यत् कश्च ददृशे । ऋसा.

**अवाचचक्षं पदमस्य सस्वरुग्रं निधातुरन्वायमिच्छन् ।**
**अपृच्छमन्याँ उत ते म आहुरिन्द्रं नरो बुबुधाना अशेम ॥**

अस्य इन्द्रस्य पद स्थान अवाचचक्षं अहमवाद्राक्षम् । कीदृशम् । सस्वः अन्तर्हितं उग्र उद्गूर्णम् । किंच इच्छन् इन्द्रमन्विच्छन्नहं निधातुः स्व स्थापयितुः अस्य इन्द्रस्य पद अन्वाय अन्वगमम् । अन्यान् उत अन्यान् विदुषोऽपि मार्गे इन्द्रं अपृच्छ पृष्टवानस्मि । पृष्टाः ते मे मह्यं इन्द्रं आहुः । किमाहुरित्युच्यते । नरः यज्ञानां नेतारः बुबुधानाः बुभुत्समाना वयं अशेम इन्द्र प्राप्तवन्तः स्मः । यद्यपीन्द्रो विद्यते तथापि दुर्लभश्चेदनुपगन्तव्यः इति बुभुत्समानः स्वभावमपृच्छत्, पृष्टैश्च सुलभः इत्युक्त इन्द्रप्राप्त्यर्थं सूक्तशेषमपश्यदित्यर्थः । ऋसा.

स्वातन्त्र्येण सर्वेशिता सर्वोग्रदमनश्च

**कं ईं स्तवत्कः पृणात्को यजाते यदुग्रमिन्मघवा विश्वहावेत् ।**
**पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः ॥**

कः स्तोता ईं एनमिन्द्र स्तवं स्तुयात् । स्तोतुं शक्नुयात् । कः वा पृणात् एनं प्रीणयेत् । कः च यजाते एनं हविर्भिर्यजेत । यत् यस्मात् अय मघवा धनवानिद्रः उग्रमित् उद्गूर्णमेव विश्वहा सर्वदा अवेत् आत्मान वेत्ति जानाति सर्वदा उग्र एव भवति तस्मात् कारणात् न कोऽप्येन स्तोतु प्रीणयितु यष्टु वा शक्नोतीति भावः । इतोऽपि स्तुत्यादेरविषय इत्याह—यस्मादयमिन्द्रः शचीभिः आत्मीयाभिः प्रज्ञाभिः पूर्व प्रथमभाविन सन्त स्तोतारं अपर पश्चाद्भाविन च अन्यमन्य परस्परव्यतिहारेण कृणोति करोति । यः प्रथमभावी मुख्यः स्तोता त जघन्यं करोति, यश्च जघन्यः स्तोता त मुख्य करोति । तत्र दृष्टान्तः । प्रहरन् पादाविव । यथा पादौ प्रहरन् मार्गे प्रक्षिपन् पुरुषः पूर्व पादमपर करोत्यपर च पूर्व तद्वत् । अतोऽपि कारणात् इन्द्रः स्तुत्यादेरविषय इति भावः । एतदादिकेन पञ्चर्चेन इन्द्रस्य अतिस्वातन्त्र्यं प्रतिपाद्यते । ऋसा.

**शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।**
**एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥**

अयमिन्द्रः वीरः वीर्यवानिति शृण्वे श्रूयते । किं कुर्वन् । उग्रमुग्र उद्गूर्णमुद्गूर्ण बलिन शत्रु प्रति दमायन् । दमः दमनम् । बाधनमिच्छन् । अन्यमन्यं प्रथम नेतव्यमन्यं पश्चान्नेतव्य चान्यं पूर्वमपर परस्परव्यतिहारेण स्तोतॄन् अतिनेनीयमानः अत्यन्तं पुनः पुनर्नयन् । अपि च एधमानद्विट् एधमानानां वर्धमानानामसुन्वता द्वेष्टा उभयस्य दिव्यस्य पार्थिवस्य च धनस्य राजा ईश्वरोऽयं

(१) ऋसं. ५।३०।१, शाब्रा २१।३, २४।५, २६।१२.
(२) ऋसं. ५।३०।२.

(१) ऋसं. ६।४७।१५.
(२) ऋसं. ६।४७।१६.

इन्द्रः विशः निवेशयितॄन् स्वस्य परिचारकान् मनुष्यान् चोष्कूयते रक्षणार्थं पुनः पुनराह्वयति। ऋसा.

भक्तसखोऽभक्तत्यागी च

**परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति।**
**अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्तर्तरीति॥**

अयमिन्द्रः पूर्वेषां पूर्वभाविनां प्रशस्तानां कर्मणां कुर्वतां पुरुषाणां सख्या सखित्वानि परा वृणक्ति वर्जयति। अपि च वितर्तुराणः तान् हिंसन् अपरेभिः अपरैः अमुख्यैरप्रशस्तैरपि कर्मानुष्ठातृभिः एति सख्यं प्राप्नोति। तथा अनानुभूतीः अपरिचरणाः प्रजाः अवधून्वानः परित्यजन् पूर्वीः बह्वीः शरदः संवत्सरान् अयं इन्द्रः तर्तरीति भृशमतिक्रामति। स्तोतृभिः सह सख्यं कुर्वन् चिरकालं वसतीत्यर्थः। ऋसा.

सर्वरूपधरः

**रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय।**
**इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश॥**

अयमिन्द्रः प्रतिरूपः रूपाणां प्रतिनिधिः सन् रूपरूपं तत्तदग्न्यादिदेवतास्वरूपं बभूव प्राप्नोति। इन्द्रः स्वमाहात्म्येन तत्तद्देवतारूपो भवतीत्यर्थः। अस्य चेन्द्रस्य तत् प्राप्तमग्न्यादिदेवतास्वरूपं प्रतिचक्षणाय प्रतिनियतदर्शनाय अयमग्निरयं विष्णुरयं रुद्र इत्येवमसंकीर्णदर्शनाय भवति। अपि चायं इन्द्रो मायाभिः। ज्ञाननामैतत्। ज्ञानैः आत्मीयैः सङ्कल्पैः पुरुरूपः बहुविधशरीरः सन् ईयते बहून् यजमानान् गच्छति। ननु द्वावेवास्याश्वावेकश्च रथः, कथमनेन युगपद्बहून् गच्छतीत्यत आह— अस्य इन्द्रस्य हरयः अश्वाः युक्ताः रथे योजिताः शता दश सहस्रसंख्याकाः अपरिमिताः सन्ति। हि यस्मादेवं तस्माद्बहुशरीराणि स्वीकृत्य युगपत् हविष्मतो यजमानान् गच्छतीत्यर्थः। अन्ये मन्यन्ते। 'इदि परमैश्वर्ये' इत्यस्य धातोरर्थानुगमात् इन्द्रः परमात्मा। स चाकाशवत् सर्वगतः सदानन्दरूपः। स एव उपाधिभिरन्तःकरणैः प्रतिशरीरमवच्छिन्नः सन् जीवात्मेति व्यपदिश्यते। स एव अनादिमायाशक्तिभिः वियदादिजगदात्मना विवर्तते। शब्दादिविषयहरणशीला इन्द्रियवृत्तयश्च तेनैव सम्बद्धाः। एतत्सर्वं तस्य परमात्मनो यद्वास्तवं रूपं तस्य दर्शनायेति। अयमर्थोऽनया प्रतिपाद्यते। रूपंरूपम्। रूप्यते इति रूपं शरीरादि। प्रतिशरीरं चिद्रूपः सर्वगतः परमात्मा प्रतिरूपः प्रतिबिम्बरूपः सन् सर्वाणि शरीराणि बभूव प्राप्नोत्। तच्च प्राप्तं प्रतिबिम्बरूपमस्य परमात्मनः प्रतिचक्षणाय प्रतिनियताकारस्य दर्शनाय भवति। स चेन्द्रः परमेश्वरो मायाभिर्मायाशक्तिभिः पुरुरूपो वियदादिभिर्बहुविधरूपैरुपेतः सन् ईयते चेष्टते। एतदप्यस्य परमात्मनः प्रतिचक्षणाय भवति। अस्य च दश शता सहस्रसंख्याका हरय इन्द्रियवृत्तयः युक्ता विषयग्रहणायोद्युक्ताः सन्ति। तदप्यस्य वास्तवरूपस्य दर्शनाय भवतीति। एवं स्थूलसूक्ष्मशरीरयोर्वियदादिमहाप्रपञ्चस्य च तत्त्वज्ञानहेतुत्वमनया प्रत्यपादीति। ऋसा.

त्रैलोक्यव्यापकः

**युजानो हरिता रथे भूरि त्वष्टेह राजति।**
**को विश्वाहा द्विषतः पक्ष आसत उतासीनेषु सूरिषु॥**

हरिता हरितावश्वौ रथे युजानः युञ्जन् त्वष्टा दीप्तः इन्द्रः इह त्रैलोक्ये भूरि भूरिषु बहुषु प्रदेशेषु राजति दीप्यते। उत अपि च सूरिषु स्तोतृष्वस्मादृशेषु आसीनेषु सत्सु विश्वाहा सर्वदा इन्द्रादन्यः कः नाम द्विषतः शत्रोः पक्षः पाचको बाधकः सन् आसते आस्ते। इन्द्र एव सर्वदा शत्रून् बाधत इत्यर्थः। यद्वा। पक्ष इति सकारान्तं समीपवचनम्। इन्द्रादन्यः को नाम द्विषतः शत्रोः समीपं आसते आस्ते। इन्द्र एव निर्भयः सन् शत्रुसमीपे स्थातुं शक्नोतीति भावः। ऋसा.

विश्वसृक्, विश्वनियन्ता, अपारमहिमा, सर्वेभ्यो लोकेभ्य ओजसा महांश्च

**इन्द्रो महा रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत्।**

---

(१) ऋसं. ६।४७।१७. (२) ऋसं. ६।४७।१८, शब्रा. १४।५।५।१९, जैउब्रा. १।४४।१, २; बृउ. २।५।१९.

(१) ऋसं. ६।४७।१९. (२) ऋसं ८।३।६; असं. २०।११८।४, सासं. २।१६।२ सुवानास (स्वानास).

**इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥**

अय इन्द्रः शवः शवस आत्मीयस्य बलस्य मह्ना महिम्ना महत्त्वेन रोदसी द्यावापृथिव्यौ पप्रथत् अप्रथयत् विस्तारितवान् । तथा स्वर्भानुनावृत सूर्य अयमेव इन्द्रः अरोचयत् अदीपयत् । तस्यासुरस्य वधेन प्रकाशितवान् । अपि च इन्द्रे ह अस्मिन्नेवेन्द्रे विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि येमिरे उपरमन्ते । इन्द्रेण नियम्यन्त इत्यर्थः । तथा सुवानासः सूयमाना अभिषूयमाणाः इन्दवः सोमाश्च अस्मिन्नेव इन्द्रे नियम्यन्ते अन्तर्भवन्तीत्यर्थः । ऋसा.

**[1]येना समुद्रमसृजो महीरपस्तदिन्द्र वृष्णि ते शवः ।**
**सद्यः सो अस्य महिमा न संनशे यं क्षोणीरनुचक्रदे ॥**

हे इन्द्र येन आत्मीयेन बलेन समुद्र अब्धि प्रति महीः महतीः अपः उदकानि असृजः व्यसृजः । महान् समुद्रो यावद्भिर्जलैः पूर्यते तावन्ति जलानि पुरा त्वं सृष्टवानित्यर्थः । ते त्वदीय तत् शवः बल वृष्णि वर्षक अभीष्टफलदमित्यर्थः । अस्य इन्द्रस्य सः महिमा न संनशे न सम्यगापनीयः । परैरप्रधृष्य इत्यर्थः । यं महिमान क्षोणीः क्षोणी पृथिवी अनुचक्रदे अनुगच्छति । यदधीना वर्तत इत्यर्थः । ऋसा.

**[2]कन्नव्यो अतसीनां तुरो गृणीत मर्त्यः ।**
**नही न्वस्य महिमानमिन्द्रियं स्वर्गृणन्त आनशुः ॥**

अतसीनां अतन्तीना सततगामिनीना स्तुतीनां तुरः प्रेरयिता मर्त्यः मरणधर्मा नव्यः अभिनवः इदानींतनः कत् को नाम स्तोता गृणीत इन्द्रं स्तुयात् । अल्पप्रज्ञैरिदानीतनैरिन्द्रः स्तोतुं न शक्यत इत्यर्थः । नु पुरा पूर्वस्मिन्नपि काले विद्यमानाः स्वः सर्वे गृणन्तः स्तोतारः । यद्वा । स्वः सुष्ठु अरणीय प्राप्तव्यमिन्द्रं गृणन्तः स्तुवन्तो जनाः । इन्द्रियम् । इन्द्रियमिन्द्रस्य लिङ्गमिन्द्रस्यैवासाधारणम् । अस्य इन्द्रस्य महिमान महत्त्वं नहि आनशुः न खलु प्राप्नुवन् । ऋसा.

(१) ऋस. ८।३।१०; असं. २०।९।४, २०।४९।७.
(२) ऋसं. ८।३।१३, असं. २०।५०।१, ऐब्रा. २९।५।१; शाब्रा. २४।५, गोब्रा. २।६।३.

**[1]न द्याव इन्द्रमोजसा नान्तरिक्षाणि वज्रिणम् ।**
**न विव्यचन्त भूमयः ॥**

द्यावः द्युलोका इम इन्द्र ओजसा बलेन न विव्यचन्त न व्याप्नुवन्ति । द्युलोकेभ्योऽप्यस्य बलमधिकमित्यर्थः । तथा अन्तरिक्षाणि अन्तरा क्षान्तानि द्यावापृथिव्योर्मध्ये वर्तमाना लोकाः वज्रिणं वज्रवन्तमिन्द्र न व्याप्नुवन्ति । तथा भूमयः भूलोकाश्च तमिन्द्र न व्याप्नुवन्ति । ' त्रयो वा इमं त्रिवृतो लोकाः ' ( ऐआ. १ । १ । २ ) इति ब्राह्मणादेकैकस्य लोकस्य त्रित्वम् । ' तिस्रो भूमीः ' ( ऋस. २ । २७ । ८ ) इत्यादिनिगमाच्च । ऋसा.

**[2]यदङ्ग तविषीयस इन्द्र प्रराजसि क्षितीः ।**
**महाँ अपार ओजसा ॥**

अङ्ग इत्यभिमुखीकरणे । हे इन्द्र यत् यस्त्वं तविषीयसे । तविषीति बलनाम । बलमिवाचरसि । हर्त्यश्वरथादिक बलं यथा सर्व शत्रुजात भनक्ति तद्वत्त्वमसहाय एव सन् सर्वमेव शत्रुजातं मारयसीत्यर्थः । यश्च त्वं क्षितीः । मनुष्यनामैतत् । मनुष्यान् प्रराजसि प्रकर्षेणेशिषे । सः इन्द्रः ओजसा बलेन महान् सर्वेभ्योऽधिकः अत एव अपारः पाररहितः । केनाप्यवसानं प्रापयितुमशक्य इत्यर्थः । ऋसा.

सूर्यात्मा पूर्वज ऋषिः

**[3]आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् ।**
**परो यदिध्यते दिवा ॥**

परः दिवा दिवः परस्तात् द्युलोकस्योपरि यत् यदा अयमिन्द्रः सूर्यात्मना इध्यते दीप्यते आदित् अनन्तरमेव प्रत्नस्य चिरन्तनस्य रेतसः गन्तुः । यद्वा । रेत इत्युदकनाम । रेतस्विन उदकवतः । सामर्थ्यात् मत्वर्थो लक्ष्यते । ईदृशस्येन्द्रस्य सूर्यात्मनः वासरं निवासक वासरस्य निवासस्य हेतुभूतं वा ज्योतिः द्योतमानं तेजः पश्यन्ति सर्वे जनाः । यद्वा । कृत्स्नमहरुदयप्रभृत्यास्तमनं यावज्ज्योतिष्पश्यन्तीत्यर्थः । ऋसा.

(१) ऋसं. ८।६।१५. (२) ऋसं. ८।६।२६.
(३) ऋसं. ८।६।३०, सासं. ११।१२ दिवा (दिवि); कासं. २।१४ ( ७८ ); ऐआ. ३।२।४।८, छाउ. ३।१७।७.

ऋषिर्हि पूर्वजा अस्येक ईशान ओजसा ।
इन्द्र चोष्कूयसे वसु ॥

हे इन्द्र पूर्वजाः सर्वेभ्यो देवेभ्यः पूर्व जात उत्पन्नः । यद्वा । यज्ञेषु प्रथममेव प्रादुर्भूतः । त्व ऋषिर्हि द्रष्टा सर्वज्ञः खलु असि भवसि । अपि च सर्वेषु देवेषु मध्ये एकः मुख्यः ओजसा बलेन ईशानः ईश्वरो भवसि । यद्वा एकोऽसहाय एव सन्नोजसा आत्मीयेनैव बलेन ईशानः सर्वस्य जगत ईश्वरो भवसि । स त्व वसु धनं चोष्कूयसे पुनः पुनः स्तोतृभ्यो ददासि । तथा चोक्तम्—'चोष्कूयमाण इन्द्र भूरि वाम ददिन्द्र बहु वननीयम्' ( नि. ६।२२ ) इति । ऋसा.

बलेन तेजसा च त्रैलोक्यव्यापक', सूर्यधारणेन जगद्धारकः, नक्षत्रादिजगद्विष्टम्भकश्च

ने यं विविक्तो रोदसी नान्तरिक्षाणि वज्रिणम् ।
अमादिदस्य तित्विषे समोजसः ॥

यं वज्रिण वज्रवन्तमिन्द्रं रोदसी द्यावापृथिव्यौ न विविक्तः न पृथक्कुरुतः स्वसमीपात् पृथक्कर्तुं न शक्नुतः। द्यावापृथिव्यौ व्याप्य य इन्द्रो वर्तत इत्यर्थः । अन्तरिक्षाणि अन्तरा क्षान्तानि द्यावापृथिव्योर्वर्तमानानि गन्धर्वादीनां स्थानानि च यं न पृथक्कुर्वन्ति । अस्य इन्द्रस्य अमादित् । अमति रुजति शत्रूननेनेत्यमो बलम् । बलादेव तित्विषे सर्व जगद्दीप्यते । किमर्थम् । ओजसः बलस्य सगमाय । यद्वा । ओजस्विनो बलवतोऽस्येन्द्रस्येति योज्यम् । समित्युपसर्गः तित्विष इत्यनेन संबध्यते । ऋसा.

यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः ।
आदित्ते विश्वा भुवनानि येमिरे ॥

हे इन्द्र अमुं विप्रकृष्टं शुक्र निर्मल ज्योतिः द्योतमानं सूर्य सर्वस्य प्रेरक शोभनवीर्य वा आदित्य दिवि द्युलोके जगतः प्रकाशनाय यदा यस्मिन्काले अधारयः धारितवानसि । आदित् अनन्तरमेव त्वया विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि येमिरे नियम्यन्ते स्म । ऋसा.

(१) ऋसं. ८।६।४१.
(२) ऋसं. ८।१२।२४.
(३) ऋसं. ८।१२।३०.

इन्द्रेण रोचना दिवो दृळ्हानि दृंहितानि च ।
स्थिराणि न पराणुदे ॥

दिवः द्युलोकस्य सबन्धीनि रोचना रोचमानानि देवगृहात्मकानि नक्षत्राणि इन्द्रेण दृळ्हानि दृढावयवानि बलवन्ति कृतानि दृंहितानि च दृढीकृतानि । यथैकत्र नैश्चल्येन अवतिष्ठन्ते तथा कृतानीत्यर्थः । यद्वा । दृंहितानि वर्धितानि चेत्यर्थः । अपि च स्थिराणि स्थास्नूनि दृढानि तानि न पराणुदे परानोदनीयानि न भवन्ति । न केनापि स्थानात् प्रच्यावयितु शक्यानीत्यर्थः । ऋसा.

बलप्रज्ञानादिप्रख्यापनेन वाग्भि स्तोतव्य

तम्वभि प्र गायत पुरुहूतं पुरुष्टुतम् ।
इन्द्र गीर्भिस्तविषमा विवासत ॥

पुरुहूत बहुभिराहूतं पुरुष्टुत बहुभिः स्तुत तमु तमेवेन्द्र हे स्तोतारः अभि प्र गायत अभिमुख प्रकर्षेण स्तुध्वम् । एतदेव स्पष्टयति । तविष महान्त इन्द्रं गीर्भिः वाग्भिः आ विवासत परिचरत । ऋसा.

यस्य द्विबर्हसो बृहत्सहो दाधार रोदसी ।
गिरीँरज्राँ अपः स्वर्वृषत्वना ॥

द्विबर्हसः द्वयोः स्थानयोः परिवृढस्य यस्य इन्द्रस्य बृहत् महत् सहः बल रोदसी द्यावापृथिव्यौ दाधार धारयति । तथा अज्रान् क्षिप्रगमनान् गिरीन् पर्वतान् मेघान् वा स्वः सरणशीलाः अपः उदकानि च वृषत्वना वृषत्वेन वीर्येण यस्येन्द्रस्य बल धारयति तत्रावस्थापयति । तम्वभीति पूर्वया सबन्धः स त्वमित्युत्तरया वा । ऋसा.

तव त्यदिन्द्रियं बृहत्तव शुष्ममुत क्रतुम् ।
वज्रं शिशाति धिषणा वरेण्यम् ॥

हे इन्द्र त्यत् तत् प्रसिद्ध इन्द्रिय इन्द्रस्य लिङ्गं बृहत् प्रभूत वीर्य धिषणा स्तुतिः शिशाति निःश्यति

(१) ऋसं ८।१४।९, असं. २०।२८।३, २०।३९।४ दृळ्हानि (दृंहानि); ऐब्रा २७।४।७-८; गोब्रा. २।५।१३. (२) ऋसं. ८।१५।१; असं. २०।६१।४, २०।६२।८; सासं. १।४।४; ऐआ. ५।२।५।२. (३) ऋसं. ८।१५।२; असं. २०।६१।५, २०।६२।९. (४) ऋसं. ८।१५।७; असं. २०।१०६।१; सासं. २।१७।३ शुष्ममुत ( दक्षमुत ).

तीक्ष्णीकरोति। तथा तव त्वदीय शुष्मं शोषक बलं उत अपि च क्रतुं प्रज्ञान बल कर्म वा वरेण्य वरणीय वज्रं आयुधं च स्तुतिस्तीक्ष्णीकरोति। ऋसा.

द्युपृथिवीविष्णुमित्रवरुणा. तद्यश. कीर्तयन्ति

**तव द्यौरिन्द्र पौंस्यं पृथिवी वर्धति श्रवः।**
**त्वामापः पर्वतासश्च हिन्विरे॥**

हे इन्द्र तव त्वदीय पौंस्य बल द्यौः वर्धति वर्धयति। त्वदीयं श्रवः यशः पृथिवी वर्धयति। त त्वा आपः उदकानि अन्तरिक्षाणि पर्वतासः पर्वताः पर्ववन्तो मेघाः च गिरयश्च वा हिन्विरे प्रीणयन्ति स्वामित्वेन प्राप्नुवन्ति वा। ऋसा.

**त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः।**
**त्वां शर्धो मदत्यनु मारुतम्॥**

हे इन्द्र बृहन् महान् क्षयः निवासहेतुः विष्णुः मित्रः वरुणः च त्वां गृणाति स्तौति। तथा मारुतं मरुत्सबन्धि शर्धः बल त्वा अनु मदति तव मदमनुलक्ष्य पश्चान्माद्यति। त्वामनुमादयति वा। ऋसा.

दातृतम·, असहाय एव असुरहन्ता, सर्वप्रशंसाना सर्वप्रशस्ताना च एक एवाधिकरणम्

**त्वं वृषा जनानां मंहिष्ठ इन्द्र जज्ञिषे।**
**सत्रा विश्वा स्वपत्यानि दधिषे॥**

हे इद्र वृषा वर्षिता त्व जनानां देवजनाना मध्ये मंहिष्ठः दातृतमः जज्ञिषे प्रादुर्भवसि। अत एव विश्वा सर्वाणि स्वपत्यानि शोभनैः पुत्रादिभिः सहितानि सत्रा सह दधिषे दातुं धारयसि ददासि वा। ऋसा.

**सत्रा त्वं पुरुष्टुतँ एको वृत्राणि तोशसे।**
**नान्य इन्द्रात्करणं भूय इन्वति॥**

हे पुरुष्टुत बहुभिः स्तुतेन्द्र त्वं एकः असहाय एव सन् सत्रा। महन्नामैतत्। महान्ति वृत्राणि शत्रुजातानि। यद्वा। सत्रेति सहार्थे। सहैव युगपदेवैकयत्नेनैव तोशसे हिनस्सि। तोशतिर्वधकर्मा। अकर्तुं शक्तानीति भावः। अपि चास्मात् इन्द्रात् अन्यः कश्चित् भूयः बहुतरं करण कर्म वृत्रवधादिक न इन्वति न प्राप्नोति। इन्द्र एव कर्तुं शक्नोतीति भावः। ऋसा.

**यस्मिन्नुक्थानि रण्यन्ति विश्वानि च श्रवस्या।**
**अपामवो न समुद्रे॥**

यस्मिन् इन्द्रे उक्थानि शस्त्राणि रण्यन्ति रमन्ते विश्वानि सर्वाणि श्रवस्या श्रवस्यानि श्रवणीयानि हविर्लक्षणान्यन्नानि च रमन्ते। तत्र दृष्टान्तः। समुद्रे उदधौ अपा उदकाना अवो न। अवति गच्छतीत्यवस्तरङ्गजालम्। तद्यथा समुद्रेऽन्तर्भवति तथा रण्यन्तीत्यर्थः। ऋसा.

**इन्द्रो ब्रह्मेन्द्र ऋषिरिन्द्रः पुरू पुरुहूतः।**
**महान्महीभिः शचीभिः॥**

अय इन्द्रः ब्रह्मा परिवृढः सर्वेभ्योऽधिकः। स एव इन्द्रः ऋषिः द्रष्टा सर्वस्यार्यजातस्य। सः इन्द्रः पुरु बहुल पुरुहूतः बहुभिराहूतश्च महीभिः महतीभिः शचीभिः क्रियाभिर्वृत्रवधादिरूपाभिः महान् प्रभूतो भवति। ऋसा.

**स स्तोम्यः स हव्यः सत्यः सत्वा तुविकूर्मिः।**
**एकश्चित्सन्नभिभूतिः॥**

सः पूर्वोक्त इन्द्रः स्तोम्यः स्तोमार्हः स्तुत्यर्हः। स एव हव्यः ह्वातव्यश्च सत्यः सत्सु साधुरवितथस्वभावो वा सत्वा शत्रूणामवसादयिता तुविकूर्मिः बहुकर्मा। यत एवमतः कारणात् एकश्चित्सन् असहायोऽपि भवन् अभिभूतिः शत्रूणामभिभविता तिरस्कर्ता भवति। ऋसा.

**तमर्केभिस्त सामभिस्त गायत्रैश्चर्षणयः।**
**इन्द्रं वर्धन्ति क्षितयः॥**

चर्षणयः द्रष्टारो मन्त्राणा क्षितयः मनुष्याः त इन्द्रं अर्केभिः अर्चनसाधनैर्यजूरूपैर्मन्त्रैः वर्धन्ति वर्धयन्ति। तथोद्गातारः सामभिः गानविशिष्टैर्मन्त्रैः त वर्धयन्ति। तथा गायत्रैः गायत्र्यादिच्छन्दोयुक्तैः शस्त्ररूपैरप्रगीतैर्मन्त्रैः तं एव इन्द्रं होतारो वर्धयन्ति। ऋसा.

---

(१) ऋसं. ८।९५।८; असं. २०।१०६।२; सासं. २।७७।३. (२) ऋसं. ८।९५।९; असं. २०।१०६।३; सासं. २।७७।३. (३) ऋसं. ८।९५।१०. (४) ऋसं. ८।९५।११.

(१) ऋसं. ८।१६।२; असं. २०।४४।२. (२) ऋसं. ८।१६।७. (३) ऋसं. ८।१६।८. (४) ऋसं. ८।१६।९.

प्राणिनामन्तःस्थितः प्राणः सः

[1]एवा नूनमुप स्तुहि वैयश्व दशमं नवम् ।
सुविद्वांसं चर्कृत्यं चरणीनाम् ॥

हे वैयश्व व्यश्वस्य पुत्र विश्वमनः चरणीना मनुष्याणा देहे स्थिताना नवाना प्राणाना दशम दशसख्यापूरकम् । तत्र मन्त्रः —'नव वै पुरुषे प्राणा मनुष्येषु वर्तमाना इन्द्रस्तेषां दशधा भवतीन्द्रस्यात्मान दशधा चरन्तम्' इति । एतादृशमत एव नव स्तुत्य सुविद्वांसं अन्तर्यामित्वात् सुष्ठु सर्व जानन्त चर्कृत्यं भूयो भूयः कार्येपु सर्वैर्नमस्कर्तव्यमेवविधमिन्द्रं एव नून इदानी उप स्तुहि समीपे स्तुहि । ऋसा.

द्युभूमिसूर्यादिभ्यो लोकेभ्यो देवेभ्यो मर्त्येभ्यश्चातिशायी

[2]यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥

हे इन्द्र ते तव प्रतिमानार्थं यत् यदि द्यावः द्युलोकाः स्युः तथापि नाश्नुवन्ति । उत अपि च भूमीः भूम्यः ते तव मूर्तिप्रतिबिम्बाय शत स्युः तथापि नाश्नुवन्ति । हे वज्रिन् त्वा त्वां सहस्रं सूर्याः अगणिता अपि सूर्याः न अनु भवन्ति । न प्रकाशयन्तीत्यर्थः । 'न तत्र सूर्यो भाति' (काउ. ५।१५) इति श्रुतेः । किं बहुना । जात पूर्वमुत्पन्न किंचन न अष्ट नाश्नुते । तथा रोदसी द्यावापृथिव्यौ नाश्नुवाते । सर्वेभ्योऽतिरिच्यसे इत्यर्थः । 'ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' (छाउ. ३।१४।३) इति श्रुतेः । ऋसा.

[3]न त्वा देवास आशत न मर्त्यासो अद्रिवः ।
विश्वा जातानि शवसाऽभिभूरसि न त्वा देवास आशत ॥

हे अद्रिवः वज्रवन्निन्द्र त्वा त्वां देवासः त्वदन्ये सर्वे देवाः न आशत । स्वकर्मणा स्वबलेन वा न व्याप्नुवन्ति ।

(१) ऋसं ८।२४।२३, असं. २०।६६।२.

(२) ऋसं. ८।७०।५, असं. २०।८१।१, २०।९२।२०; सासं. १।३।५; तैसं. २।४।१४।३, कासं. १२।१५ (५७); ऐब्रा. २१।२।१८, शाब्रा. २२।४, २५।६; ताब्रा. १२।४।१ यद् द्याव (यद्याव), तैआ. १।७।५; जैउब्रा. १।३२।१, २, नि. १३।२. (३) ऋसं. ८।९७।९.

न मर्त्यासः मर्त्या मनुष्याश्च न व्याप्नुवन्ति । कुत एतदवसीयते तदाह—विश्वा विश्वानि सर्वाणि जातानि भूतजातानि शवसा स्वबलेनैव अभिभूरसि अभिभावुकोऽसि भवसि । तस्मात् न त्वा देवास आशत इति गतार्थः । ऋसा.

बलवत्तमः

[1]त्वं पुर इन्द्र चिकिदेना व्योजसा शविष्ठ शक्र नाशयध्यै ।
त्वद्विश्वानि भुवनानि वज्रिन् द्यावा रेजेते पृथिवी च भीषा ॥

हे शविष्ठ बलवत्तम अत एव हे शक्र शत्रुहननसमर्थ हे इन्द्र त्व एनाः एतानि पुरः शम्बरस्य पुराणि ओजसा स्वीयेनैव तेजसा वि नाशयध्यै विनाशयितुं चिकित् ज्ञाता भवसि । पुनरपि सामर्थ्यं प्रशसति । हे वज्रिन् वज्रवन्निन्द्र विश्वानि सर्वाणि भुवनानि भूतजातानि त्वत् त्वत्तो भीत्या कम्पन्ते । तथा द्यावापृथिवी द्यावापृथिवी च भीषा त्वत्तो भीत्या रेजेते कम्पेते । सर्वे त्वदधीना इत्यर्थः । ऋसा.

धर्मकर्ता, विपश्चित्, विश्वदेवः, ज्योतिषां ज्योतिः, अगूढः, स्वर्गपतिः, पितृरूपश्च

[2]इन्द्राय साम गायत विप्राय बृहते बृहत् ।
धर्मकृते विपश्चिते पनस्यवे ॥

हे उद्गातारः विप्राय मेधाविने बृहते महते धर्मकृते कर्मणः कर्त्रे विपश्चिते विदुषे पनस्यवे स्तुतिमिच्छते इन्द्राय बृहत् बृहन्नामकं साम गायत पठत । ऋसा.

[3]त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः ।
विश्वकर्मा विश्वदेवो महाँ असि ॥

हे इन्द्र त्वं अभिभूः शत्रूणामभिभविता असि भवसि । किंच त्वं सूर्यं आदित्यं अरोचयः तेजोभिरदीपयः । किंच विश्वकर्मा विश्वस्य कर्ता असि, विश्वदेवः सर्वदेवश्चासि । तथा च यजुर्ब्राह्मणम्— 'अग्नि वा अन्वन्या

(१) ऋसं. ८।९७।१४. (२) ऋसं. ८।९८।१, असं. २०।६२।५; सासं. १।४।४, २।६।६ धर्मकृते (ब्रह्मकृते); ताब्रा. १३।६।३; ऐआ. ५।२।५।२; नि ७।२।४.

(३) ऋसं. ८।९८।२; असं. २०।६२।६, सासं. २।६।६; तैब्रा. २।४।१।२.

देवताः। इन्द्रमन्वन्यः।' (तैब्रा. ३।७।१।८) इति। अतो महान् सर्वाधिकोऽसि। ऋसा.

[1]विभ्राजञ्ज्योतिषा स्वरगच्छो रोचनं दिवः।
देवास्त इन्द्र सख्याय येमिरे ॥

हे इन्द्र त्वं ज्योतिषा तेजसा दिवः आदित्यस्य रोचनं प्रकाशकमधिकरणत्वेन स्वः स्वर्ग विभ्राजन् प्रकाशयन् अगच्छः प्राप्नोः। किंच देवाः सर्वे ते तव सख्याय मित्रत्वाय येमिरे स्वं स्वमात्मान नियमितवन्तः। अस्माकमिन्द्रः सखा यथा स्यादिति सर्वे देवाः प्रयत्नमकार्षुरित्यर्थः। ऋसा.

[2]ऐन्द्र नो गधि प्रियः सत्राजिदगोह्यः।
गिरिर्न विश्वतस्पृथुः पतिर्दिवः॥

हे इन्द्र प्रियः प्रियतमः सत्राजित् महता जेता अगोह्यः केनापि गूहितुमशक्यः गिरिर्न पर्वत इव विश्वतः सर्वतः पृथुः पृथुतमः दिवः स्वर्गस्य पतिः ईश्वरस्त्वं नः अस्मान् आ गधि आ गच्छ। ऋसा.

[3]त्वं हि नः पिता वसो त्व माता शतक्रतो बभूविथ।
अधा ते सुम्नमीमहे ॥

हे वसो वासयितः शतक्रतो बहुकर्मन्निन्द्र त्व नः अस्माक पिता पितृवत्पालकः बभूविथ भव। त्व माता मातृवद्धारकश्च बभूविथ। अध अथ च वय ते तव स्वभूतं सुम्नं सुखं ईमहे याचामहे। ऋसा.

स स्तोतव्य यदि सत्य.

[4]प्र सु स्तोमं भरत वाजयन्त इन्द्राय सत्यं यदि सत्यमस्ति।
नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श कमभि ष्टवाम ॥

हे जनाः वाजयन्तः सग्राममिच्छन्तो यूयं इन्द्राय सत्य सत्यभूत स्तोम सु सुष्ठु प्र भरत। इन्द्रोऽस्तीत्येतत् यदि सत्यमस्ति भवति। इन्द्रास्तित्वे कः सदेहः, तत्राह — नेम उ मार्गवो नेम एव इन्द्रः नाम त्वः कश्चित् न अस्ति इति आह। तत्र कारणं दर्शयति—क ईं एनमिन्द्र ददर्श अद्राक्षीत्। न कोऽप्यपश्यत्। अतः क वय अभि ष्टवाम अभिष्टुमः। तस्मादिन्द्रो नाम कश्चिद्विद्यत इति वादमात्र न तु तत्सत्यमित्यर्थः। ऋसा.

सः सर्वेश्वरत्वेन स्वसत्ता प्रमाणयति

[1]अयमस्मि जरितः पश्य मेह विश्वा जातान्यभ्यस्मि मह्ना।
ऋतस्य मा प्रदिशो वर्धयन्त्यादर्दिरो भुवना दर्दरीमि ॥

एवं नेमस्यर्षेर्वचनमाकर्ण्य इन्द्रस्तस्य समीपमाजगाम। आगत्य चात्मानमनेन तृचेन स्तौति। हे जरितः स्तोतः अयं अह अस्मि। इह तव समीपे स्थितं मा मा पश्य। विश्वा सर्वाणि जातानि भुवनानि मह्ना महत्त्वेन अभ्यस्मि अहमभिभवामि। किंच मां ऋतस्य सत्यस्य यज्ञस्य वा प्रदिशः प्रदेष्टारो विद्वांसः स्तोत्रैः वर्धयन्ति। अपि च आदर्दिरः आदरणशीलोऽह भुवना भुवनानि शत्रुभूतानि दर्दरीमि भृशं विदारयामि। ऋसा.

[2]आ यन्मा वेना अरुहन्नृतस्यँ एकमासीनं हर्यतस्य पृष्ठे।
मनश्चिन्मे हृद आ प्रत्यवोचदचिक्रदञ्छिशुमन्तः सखायः ॥

यत् यदा ये ऋतस्य यज्ञस्य यज्ञं वेनाः कामयमानाः हर्यतस्य कान्तस्यान्तरिक्षस्य पृष्ठे आसीनं उपविष्ट एक मा मां आ अरुहन् तदानी तेषा भवतामारोहं मनश्चित् मन एव मे मम हृदे हृदयाय प्रत्यवोचत् अब्रवीत्। अज्ञासिषं च तदाह्वान शिशुमन्तः पुत्रयुक्ताः सखायः प्रिया अमी अचिक्रदन् मां क्रन्दन्तीति। ऋसा.

[3]अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम् ॥

अहमिन्द्रः वसुनः धनस्य पूर्व्यः मुख्योऽसाधारणः पतिः

---

(१) ऋसं. ८।९८।३; असं. २०।६२।७; सासं. २।६।६. (२) ऋसं. ८।९८।४, असं. २०।६४।१, सासं. १।४।५, २।९।८ प्रिय. (प्रिय) गोह्यः (गोह्य), ताब्रा. १४।१२।२. (३) ऋसं. ८।९८।११; असं. २०।१०८।२, सासं. २।८।६ अधा (अथा). (४) ऋसं. ८।१००।३.

(१) ऋसं. ८।१००।४. (२) ऋसं ८।१००।५. (३) ऋसं. १०।४८।१; ऐब्रा. २४।२।६, शाब्रा. २२।४,२६।१६.

स्वामी भुव अभवम् । तथा अह शश्वतः । बहुनामैतत् । बहोः शत्रोः सबन्धीनि धनानि । समित्येकीभावे । सह जयामि । किंच मामेव जन्तवः प्राणिनो यजमानाः हवन्ते आह्वयन्ति । पितर न पितरमिव पुत्राः । अह दाशुषे हविषो दात्रे यजमानाय भोजन अन्न वि भजामि ददामि । ऋसा.

**[1]मह्यं त्वष्टा वज्रमतक्षदायसं मयि देवासोऽवृजन्नपि क्रतुम् ।**
**ममानीकं सूर्यस्येव दुष्टरं मामार्यन्ति कृतेन कर्त्वेन च ॥**

मह्य मदर्थं त्वष्टा देवः आयसं अयोमयं वज्र आयुध अतक्षत् सपादितवान् । देवाः मयि विषये क्रतु स्वविरोधिहननरूप कर्म अपि अवृजन् समपादयन् । मम अनीकं सेनासमूह सूर्यानीकमिव दुष्टर अन्येन तरीतुमशक्यम् । मामेव कृतेन कर्मणा कर्त्वेन इतः पर कर्तव्येन वृत्रवधादिरूपेण आर्यन्ति गच्छन्ति । आर्यतिर्गतिकर्मा । यद्वा । आर्यमीश्वरं कुर्वन्ति । ऋसा.

**[2]अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽव तस्थे कदा चन ।**
**सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथन ॥**

इन्द्रः सर्वस्य धनस्य स्वामी अहं धनं आत्मीय न परा जिग्य इत् नैव पराभावयामि । मदीय धनं न पराभूयत इत्यर्थः । किंच अह मृत्यवे सर्वेषा मारकाय कदा चन कदापि नाव तस्थे नावस्थितो भवामि । इन्द्रभक्ता न मृत्युभाजो भवन्ति किल, किमु वक्तव्यमिन्द्रस्य मृत्युविरहे । यस्मादेव तस्मात् सोम सुन्वन्तः हे यजमानाः वसु युष्मदपेक्षितं धन मा इत् मामेव याचत । हे पूरवः मनुष्याः मे सख्ये न रिषाथन मा रिष्टा भवथ । मत्सख्यं मा विनाशयत ।

ऋसा.

**[3]अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम् ।**
**अहं भुवं यजमानस्य चोदितायज्वनः साक्षि विश्वस्मिन्भरे ॥**

अहं इन्द्रः गृणते स्तुवते पूर्व्यं मुख्य वसु धन दा अदाम् । अहमेव ब्रह्म परिवृढ कर्म स्तुतिलक्षण मह्यं वर्धन कृणवं करोमि । स्तोतुः सबन्धि स्तोत्र तस्मै धन प्रयच्छन् मह्यमेव वर्धन करोमीत्यर्थः । तथा अह यजमानस्य मामुद्दिश्य यष्टुर्धनस्य चोदिता प्रेरकः भुवं भवामि । अयज्वनः अयष्टुः, अयष्टारमित्यर्थः । तं विश्वस्मिन् भरे सर्वस्मिन्नपि सग्रामे साक्षि अभिभवामि । ऋसा.

**[1]मां धुरिन्द्रं नाम देवता दिवश्च ग्मश्चापां च जन्तवः ।**
**अहं हरी वृषणा विव्रता रघू अहं वज्रं शवसे धृष्ण्वा ददे ॥**

इन्द्र नाम इन्द्रनामान मा देवता देवाना मध्ये दिवः द्युलोकस्य । ग्मा पृथिवी आपः अन्तरिक्षम् । एतेषु लोकेषु जन्तवः जाताः मा मामेव धुः दधुः धारयन्ति हविर्भिः स्तुतिभिश्च । अहं यज्ञगमनाय सग्रामगमनाय वा हरी हरितवर्णौ वृषणा पुस्त्वोपेतौ विव्रता विविधकर्माणौ रघू लघू शीघ्रगती अश्वौ नियोजयामि रथे । तथा अह धृष्णु धर्षकं वज्रमायुधं शवसे बलाय आ ददे स्वीकरोमि ।

ऋसा.

देवानां रक्षिता, स्वयमकर्ता, मार्यी च

**[2]तां सु ते कीर्तिं मघवन्महित्वा यत्त्वा भीते रोदसी अह्वयेताम् ।**
**प्रावो देवाँ आतिरो दासमोजः प्रजायै त्वस्यै यदशिक्ष इन्द्र ॥**

हे इन्द्र मघवन् धनवन् ते तव सबन्धिनी महित्वा महत्त्वेनागता कीर्तिं सु सुष्ठु कीर्तयामीति शेषः । किंच यत् यदा त्वा त्वां प्रति भीते असुरैर्भय प्राप्ते रोदसी द्यावापृथिव्यौ अह्वयेतां अवेत्यब्रूतां तदानी देवान् प्रावः प्रारक्षः । तथा दास देवानामुपक्षयकर्तारमसुरं आतिरः व्यनाशयः । असुरान् हत्वा देवाना रक्षणेन द्यावापृथिव्योः भीतिं पर्यहर इति यदस्ति किंच त्वस्यै एकस्यै

(१) ऋसं. १०।४८।३.
(२) ऋसं. १०।४८।५.
(३) ऋसं. १०।४९।१.

(१) ऋसं. १०।४९।२.
(२) ऋसं. १०।५४।१; ऐब्रा. २३।४।१; शाब्रा. २६।१२, ऐआ. ५।१।६।१.

प्रजायै यजमानरूपायै यत् बल अशिक्षः प्रायच्छः ता कीर्ति कीर्तयामीत्यर्थः। ऋसा.

**[१]यद्चरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेपु।**
**मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से ॥**

हे इन्द्र तन्वा शरीरेण स्तोत्रेण वा वावृधानः वर्धमानः जनेपु प्राणिपु बलानि प्रब्रुवाणः वृत्रवधादिरूपाणि सामर्थ्यानि प्रकर्षेण कथयन् अचरः इति यत् सचार कृतवानिति यदस्ति ते तव सा गतिः मायेत् मायैव। मृषेत्यर्थः। किच यानि युद्धानि शत्रुविपयाणि आहुः ब्रुवते पुराविद ऋपयः तान्यपि मायैव। कुत इति आह। अद्य इदानी शत्रु हन्तव्य न विवित्से न लभसे। अद्य मा भूत् पूर्व हतवानस्मीति यत् ब्रूपे तदपि नेत्याह। ननु इति प्रश्ने। कि पुरा शत्रुमलभथाः। तदपि नेत्यर्थः। ऋसा.

अनन्तमहिमयुक्त, अनेकशरीरधारी, धनपतिश्च

**[२]के उ नु ते महिमनः समस्यास्मत्पूर्व ऋपयोऽन्तमापुः।**
**यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः ॥**

हे इन्द्र ते तव महिमनः महिम्नः समस्य सर्वस्यापि अन्त पार अस्मत् अस्मत्तः पूर्व ऋपयः के आपुः प्राप्नुवन्। न केऽपि इत्यर्थः। यद्यपि महत्त्वं प्रख्यापयन्ति तथापि न कात्स्न्र्येनेति। तत्र कारणमाह—यत् यस्मात् मातरं च पितरं च। 'द्यौः पिता पृथिवी माता' (तैब्रा. ३।७।५।४,५) इति हि श्रुतम्। अतो द्यावापृथिव्यावित्यर्थः। ते उभे अपि साकं सहैव स्वायाः तन्वः स्वकीयाच्छरीरात् अजनयथाः उदपादयः। अतो नापुरिति सबन्धः। ऋसा.

**[३]चत्वारि ते असुर्याणि नामादाभ्यानि महिपस्य सन्ति।**
**त्वमङ्ग तानि विश्वानि वित्से येभिः कर्माणि मघवञ्चकर्थ ॥**

हे इन्द्र महिषस्य महतः पूज्यस्य ते तव चत्वारि असुर्याणि असुरविघातीनि अदाभ्यानि अन्यैरहिंस्यानि उत्तरसूक्ते उपान्त्यवर्जिते 'दूरे तन्नाम' इत्यादिषु प्रतिपादितानि यानि नाम नामकानि शरीराणि सन्ति अङ्ग सखे त्व तानि विश्वानि सर्वाणि वित्से वेत्सि जानासि। येभिः यैः नामभिः कर्माणि वृत्रवधादिरूपाणि चकर्थ कुरुपे हे मघवन् तानि वेत्सीति। ऋसा.

**[१]त्व विश्वा दधिपे केवलानि यान्याविर्या च गुहा वसूनि।**
**काममिन्मे मघवन्मा वि तारीस्त्वमाज्ञाता त्वमिन्द्राऽसि दाता ॥**

हे इन्द्र त्व विश्वा सर्वाणि केवलानि अन्येषामसाधारणानि वसूनि धनानि दधिपे धारयसि। विश्वानीत्युक्तं, कथ विश्वत्वमित्यत आह—यान्याविः आविर्भूतानि सर्वैः प्रसिद्धानि वसूनि वासयोग्यानि धनानि सन्ति या च गुहा गुहाया निगूढे प्रदेशे वर्तमानानि वसूनि सन्ति तानि विश्वानि दधिपे इति। यस्मादेव तस्मात् मे मम काम काङ्क्षित हे मघवन् धनवन्निन्द्र मा वि तारीः मा हिसीः। इत् इति पूरणः। वर्धयेति शेषः। हे इन्द्र त्वमाज्ञाता असि प्रापयिताऽसि अभिलपितं धनम्। तथा हे इन्द्र त्वं दाता असि। ऋसा.

ज्योतीरसस्थापकः

**[२]यो अदधाज्ज्योतिषि ज्योतिरन्तर्यो असृजन्मधुना सं मधूनि।**
**अध प्रियं शूषमिन्द्राय मन्म ब्रह्मकृतो बृहदुक्थादवाचि ॥**

यः इन्द्रः ज्योतिषि द्योतमाने आदित्यादिके तेजसि अन्तः ज्योतिः तेजः अदधात् धारितवान्। यदादित्याग्न्यादिपु तेजोऽस्ति तदिन्द्रकृतमित्यर्थः। यश्च मधुना मधुरेण रसेन मधूनि सोमादिमधुरद्रव्याणि समसृजत् समयोजयत्। यद्वा। मधुना। अत्र मधुशब्देन सर्वैः सेव्यमान आदित्य उच्यते। तेन सह मधूनि उदकानि समसृजत्। अध संप्रति तस्मै इन्द्राय प्रियं प्रीतिजनकं शूषं बल शत्रूणा शोपकत्वात् बलकरं मन्म मननीयं स्तोत्रं ब्रह्मकृतो मन्त्रकृतो बृहदुक्थात् प्रभूतशस्त्रयुक्तात्

(१) ऋसं. १०।५४।२, शब्रा. ११।१।६।१० उत्त.
(२) ऋसं. १०।५४।३. (३) ऋसं. १०।५४।४.

(१) ऋसं. १०।५४।५. (२) ऋसं. १०।५४।६.

एतन्नामकाद्धेः मत्तः अवाचि उक्तमभूत्। ऋसा.

²दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै।
उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान्मघवन्तित्विषाणः॥

अनया 'चत्वारि ते असुर्याणि नाम' इत्युक्तस्याद्य नाम स्तूयते। हे इन्द्र ते तव तद्वक्ष्यमाण नाम सर्वेषां नामकं शरीरं पराचैः पराङ्मुखैर्मनुष्यैः मनुष्याणामित्यर्थः। गुह्य गोपनीय अप्रकाशित सत् दूरे इतो विप्रकृष्टे दूरदेशे वर्तत इति शेषः। यत् यदा त्वा त्वां रोदसी द्यावापृथिव्यौ भीते सती अह्वयेता अवेत्यब्रूताम्। किमर्थम्। वयोधै अन्नस्य निधानार्थम्। जगतोऽन्नस्य साधनायेत्यर्थः। तदानी तेन शरीरेणाभीके। अन्तिकनामैतत्। तव समीप एव पृथिवीं द्यां च उत् ऊर्ध्वं परस्परवियुक्त यथा भवति तथा अस्तभ्नाः स्ताम्भितवानसि। किं कुर्वन्। हे मघवन्निन्द्र भ्रातुः पर्जन्यस्य पुत्रान् पुत्रस्थानीयानुदकसंस्त्यायान् तित्विषाणः दीपयन्।

ऋसा.

²महत्तन्नाम गुह्यं पुरुस्पृग्येन भूतं जनयो येन भव्यम्।
प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्च॥

हे इन्द्र तव तद्गुह्यं गोपनीयं अन्यैरविज्ञातं पुरुस्पृक् बहुभिर्वृष्टयर्थिभिः स्पृहणीयमाकाशात्मक नाम शरीर महदत्यन्त प्रवृद्ध येन नाम्ना भूतं भव्य च पूर्व जनयः उत्पादितवानसि। भूतभव्योभयान्वयाय येनेत्यस्यावृत्तिः स्यात्। आकाशात्मकाद्धि परमेश्वरस्वरूपात् भूतभव्यात्मकं जगदुत्पद्यते। 'आकाशाद्वायुः' (तैउ. २।१) इत्यादिश्रुतेः। किच प्रत्नं पुराणं पूर्वकालीनं यज्ज्योतिः द्योतमानमादित्याख्यं उदकाख्य वा अस्य इन्द्रस्य प्रिय प्रियभूतं तत्त्व जातमुत्पन्नं प्रियाः प्रीयमाणाः पञ्च। पञ्च जना इति शेषः। भीमसेनो भीम इतिवदेकदेशलक्षणा। निषादपञ्चमाः चत्वारो वर्णाः समविशन्त सविशन्ते। स्वनिर्वाहार्थं भजन्ते इत्यर्थः। ऋसा.

(१) ऋसं. १०।५५।१.
(२) ऋसं. १०।५५।२.

¹आ रोदसी अपृणादोत मध्यं पञ्च देवाँ ऋतुशः सप्तसप्त।
चतुस्त्रिंशता पुरुधा वि चष्टे सरूपेण ज्योतिषा विव्रतेन॥

अयमिन्द्रः आत्मीयेन शरीरेण तेजसा वा रोदसी द्यावापृथिव्यौ आ सर्वतः अपृणात् पूरयति। उतापि च मध्य द्युभूम्यपेक्षया मध्यभूत अन्तरिक्ष, आपृणादिति वर्तते। तदपि स्वशरीरेण तेजसा वा पूरयति। किंच पञ्च देवान् देवमनुष्यपितृसुरराक्षससंज्ञकान् तथा सप्त सप्त। द्विरुक्त्या सप्तसख्याकानि तत्त्वानि लोके यानि सान्ति तानि परिगृह्यन्ते। कानि तानीति। सप्त मरुद्गणान् सप्तादित्यरश्मीन् सप्त चेन्द्रियाणि सप्त लोकानन्यानपि सप्तसख्योपेतानृतुशः काले काले चतुस्त्रिंशता चतुस्त्रिंशत्सख्याकेन देवगणेन सह पुरुधा बहुप्रकार वि चष्टे विपश्यति सर्वदा ईक्षते। अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च विराट् चेति चतुस्त्रिंशत्त्व देवानाम्। केनेति तदुच्यते। सरूपेण समानरूपेण ज्योतिषा प्रकाशकेन विव्रतेन विविधेन कर्मणा। ऋसा.

सर्वस्याक्षस्थानीय, ईशान, योगक्षेमद, चक्षुषश्चक्षुश्च

²इन्द्राय गिरो अनिशितसर्गा अपः प्रेरयं सगरस्य बुध्नात्।
यो अक्षेणेव चक्रिया शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम्॥

इन्द्राय इन्द्रार्थं अनिशितसर्गाः अतनूकृतविसर्गाः उपर्युपरि वर्तमाना याः गिरः स्तुतयः ताभिर्गीर्भिः सगरस्य अन्तरिक्षस्य। 'सगरं समुद्रः' इत्यन्तरिक्षनामसु पाठात्। बुध्नात् प्रदेशात् अपः उदकानि प्रेरयं प्रेरयानि। यः इन्द्रः शचीभिः कर्मभिः पृथिवी उत अपि च द्यां दिव चक्रिया रथचक्राणि अक्षेणेव यथा रथाक्षेण तद्वत् विष्वक् सर्वतः तस्तम्भ अस्तभ्नात्।

ऋसा.

(१) ऋसं. १०।५५।३.
(२) ऋसं. १०।८९।४, सासं. १।३।११ प्रेरयं (प्रेरयत्) चक्रिया (चक्रियौ), तैब्रा. २।४।५।२ प्रेरयं (प्रेरयन्).

[1]इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम् ।
इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः ॥

दिवः द्युलोकस्य इन्द्रः ईशे ईष्टे । पृथिव्याः भूमेरपि इन्द्रः ईशे ईश्वरो भवति । अपा उदकानामपि इन्द्रः ईश्वरो भवति । पर्वताना मेघानामपि इन्द्रः ईश्वरो भवति । वृधा वृद्धानामपि इन्द्र एव ईश्वरः । मेधिराणां प्राज्ञानामपि इन्द्र एवेश्वरो भवति । किंच इन्द्रः क्षेमे लब्धस्य धनस्य परिपालने हव्यः ह्वातव्यः, योगे अलब्धस्य धनस्य लाभे अपीन्द्र एव ह्वातव्यो भवति । ऋसा.

[2]त्व विश्वस्य जगतश्चक्षुरिन्द्रासि चक्षुपः ।
वृषा यदाजिं वृपणा सिपाससि चोदयन् वध्रिणा युजा ॥

सूक्तस्य विकल्पेनैन्द्रत्वादादाविन्द्रस्य स्तुतत्वादन्तेऽपीन्द्रः स्तूयते । हे इन्द्र त्व विश्वस्य सर्वस्य जगतः चक्षुपः चक्षुष्मतः पश्यतो वा जगतः चक्षुः असि । प्रत्येकमुत्पत्तिविशिष्टचक्षुःसद्भावेऽपि सर्वस्य साधारण चक्षुरसि । त्वया दृष्ट्या द्रष्टव्यानैहिकामुष्मिकपदार्थान् पश्यन्तीत्यर्थः । त्वामेव हि यज्ञादिना लब्ध्वा पुरुषार्थान् साधयन्ति । यद्वा । विश्वस्य जगतो यन्निज चक्षुरस्ति तस्यापि चक्षुपस्त्वं चक्षुरसि । यत् यस्मात् वृषा अभिमतवर्पकस्त्वं आजिं मुद्गलस्य मम सग्राम वध्रिणा पाशेन युजा युजौ युक्तौ वृपणा वृपणौ वर्पकावश्वौ रथे योजयित्वा चोदयन् शत्रुपु प्रेरयन् सिपाससि आजि संभक्तुमिच्छसि तस्माच्चक्षुरसि । ऋसा.

सर्वद्रष्टा, महतामपि महान्, सूर्याग्न्यात्मकश्च

[3]नैहि मे अक्षिपच्चनाच्छान्त्सुः पञ्च कृष्टयः ।
कुवित्सोमस्यापामिति ॥

चनेति निपातसमुदायोऽप्यर्थे । पञ्च कृष्टयोऽपि निषादपञ्चमाश्चत्वारो वर्णाः पञ्च जनाः । यद्वा । देवमनुष्यादयः । मे मदीय अक्षिपत् चक्षुःपतन दृष्टिसंचारं न हि अच्छान्त्सुः न हि अपवृण्वन्ति । 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' (बृउ. ४।३।२३) इति हि श्रुतेः । यस्माद्बहुवारं सोमं अपाम् । यस्मात् कुवित् बहुवार सोमस्य सोम अपा पीतवानस्मि । ऋसा.

[4]नैहि मे रोदसी उभे अन्यं पक्षं चन प्रति ।
कुवित्सोमस्यापामिति ॥

उभे रोदसी द्यावापृथिव्यौ मे मदीय अन्यं पक्षं चन पक्षमपि प्रति समाने न भवतः । ऋसा.

[5]अभि द्यां महिना भुवमभीमां पृथिवीं महीम् ।
कुवित्सोमस्यापामिति ॥

उक्तमर्थं प्रतिपादयति । महिना महिम्ना आत्मीयेन द्या द्युलोकं अभि भुव अभिभवामि । तथा महीं महतीमिमा पृथिवीं स्वमहिम्ना अभि भवामि । ऋसा.

[6]हन्ताहं पृथिवीमिमां नि दधानीह वेह वा ।
कुवित्सोमस्यापामिति ॥

हन्तेति सभावनायामनुज्ञाया वा । संभावयामि एतदनुजानामि वा । किं तत् । अहमिमां पृथिवीं इह वा अन्तरिक्षे नि दधानि । इह वा द्युलोके इति हस्तेन निर्दिशति । ऋसा.

[4]ओषमित्पृथिवीमहं जङ्घनानीह वेह वा ।
कुवित्सोमस्यापामिति ॥

अह पृथिवीमभिलक्ष्य ओषं स्वतेजसा तापकमादित्यं इह वा अन्तरिक्षे इह वा द्युलोके जङ्घनानि भृशं यापयानि । इदिति पूरणः । ऋसा.

[5]दिवि मे अन्यः पक्षोऽधो अन्यमचीकृपम् ।
कुवित्सोमस्यापामिति ॥

मे मदीयः अन्यः पक्षः दिवि द्युलोके स्थापितः । अधः अधस्तात् पृथिव्यामन्यं पक्षमचीकृषं अकार्षम् । कृप विलेखने । विलेखनं नाम उत्पादनम् । उदपादयं आस्थापयमित्यर्थः । ऋसा.

[6]अहमस्मि महामहोऽभिनभ्यमुदीपितः ।
कुवित्सोमस्यापामिति ॥

अभिनभ्य नाभौ मध्यस्थाने भवं नभ्यमन्तरिक्षम् ।

(१) ऋसं. १०।८९।१०, नि. ७।२।१.
(२) ऋसं. १०।१०२।१२. (३) ऋसं. १०।११९।६.

(१) ऋसं. १०।११९।७ (२) ऋसं. १०।११९।८. (३) ऋसं. १०।११९।९, नि. १।४।२३. (४) ऋसं. १०।११९।१०. (५) ऋसं. १०।११९।११. (६) ऋसं. १०।११९।१२.

अन्तरिक्षमभि उदीपितः उद्गतः सूर्यात्मा अह महामहोऽस्मि । महतामपि महान् अस्मि । यद्वा । महत् प्रभूत महः तेजः यस्य । प्रभूततेजस्कोऽस्मि ।

ऋसा.

**गृहो याम्यरंकृतो देवेभ्यो हव्यवाहनः ।**
**कुवित्सोमस्यापामिति ॥**

गृहः हविषा ग्रहीता अरंकृतः यजमानैरलङ्कृतः अहं देवेभ्यः इन्द्रादिभ्यः हव्यवाहनः हविषा वोढा प्रापयिता अग्न्यात्मा सन् यामि हवींषि प्रापयामि । इति यस्मात् कुवित् बहुवार सोमस्य सोम अपा पीतवानस्मि । तस्मादेतान्यकार्षं इतीन्द्रः स्वात्मानमेव अस्तावीत् ।

ऋसा.

सूर्यधारकः

**एता त्या ते श्रुत्यानि केवला यदेक एकमकृणोरयज्ञम् ।**
**मासां विधानमदधा अधि द्यवि त्वया विभिन्नं भरति प्रधिं पिता ॥**

हे इन्द्र त्या तानि ते तव त्वदीयानि वीर्यकर्माणि एता एतान्येव केवला केवलानि श्रुत्यानि श्रोतव्यानि स्तुत्यर्हाणि । नान्यदीयानि । कानि पुनस्तानि । एकः असहायस्त्वं एक प्रधानभूत अयज्ञं यज्ञरहितमसुर अकृणोः अहिंसीरिति यत् एतदेक कर्म । तथा मासां मासाना विधान विधातार कर्तारं सूर्यं अधि द्यवि द्युलोके उपरि अदधाः अधारयः । इदमपरं कर्म । तथा पिता पालको द्युलोकः विभिन्नं विदारितं वृत्राद्विभक्तं प्रधि रथचक्रस्य पार्श्वम् । पार्श्वफलके प्रधी इत्युच्येते । ईदृश सूर्यरथसबन्धिन प्रधिमन्यैर्धारयितुमशक्यं त्वया एव भरति धारयति । इदमपर कर्म । एतत्प्रभृतीनि त्वया कृतानि कर्माणि परेषामसाधारणानि सर्वदा स्तोतव्यानीत्यर्थः । ऋसा.

सर्वविभूतिरूपः ईश्वर

**अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः ।**

(१) ऋसं. १०।११९।१२. (२) ऋसं. १०।१३८।६.
(३) ऋसं. ४।२६।१, शब्रा. १४।४।२।२२; बृउ. १।४।१०.

**अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥**

इदमादिमन्त्रत्रयेण गर्भे वसन् वामदेवः उत्पन्नतत्त्वज्ञानः सन् सार्वात्म्य स्वानुभव मन्वादिरूपेण प्रदर्शयन्नाह । अह वामदेव इन्द्रो वा मनुरभव सर्वस्य मन्ता प्रजापतिरस्मि । अहं एव सूर्यश्च सर्वस्य प्रेरकः सविता चास्मि । विप्रः मेधावी कक्षीवान् दीर्घतमसः पुत्रः एतत्सञ्ज्ञकः ऋषिः अप्यहमेव अस्मि । आर्जुनेय अर्जुन्याः पुत्रं कुत्सं एतन्नामकमृषिं अह एव न्यृञ्जे नितरा प्रसाधयामि । कविः क्रान्तदर्शी उशना एतदाख्य ऋषिः अह एवास्मि । उक्तमुपलक्षणम् । परमार्थदृष्ट्या कृत्स्नमप्यहमेवास्मीत्यर्थः । हे जनाः मा मा सर्वात्मक पश्यत । यूयमप्येवमेव स्वस्वरूपमनुभवतेत्युक्त भवति ।

ऋसा.

**अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय ।**
**अहमपो अनयं वावशाना मम देवासो अनु केतमायन् ॥**

अहं वामदेव इन्द्रो वा आर्याय मनवे भूमि पृथ्वीं अददा दत्तवानस्मि । दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय वृष्टि सस्याद्यभिवृध्यर्थं वृष्टिलक्षणमुदक अह एव अददाम् । किंच अह वावशानाः शब्दायमानाः अपः उदकानि अनयं सर्वमपि प्रदेश अगमयम् । देवासः वह्न्यादयो देवाः मम केत मदीय सकल्प अनु आयन् अनुयन्ति ।

ऋसा.

**अहं पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य ।**
**शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम् ॥**

अहं वामदेव इन्द्रो वा मन्दसानः सोमेन माद्यन् नव नवसख्याकाः नवतीः नवतिसख्याकाश्च शम्बरस्य एतन्नामकस्यासुरस्य संबन्धीनि पुरः पुराणि साक युगपदेव व्यैर अध्वंसयम् । शततम शतसख्यापूरण पुरं वेश्यं दिवोदासनाम्ने प्रवेशार्हमकरवम् । सर्वताता सर्वतातौ यज्ञे अतिथिग्वं आतिथीनामभिगन्तार दिवोदास दिवोदास-

(१) ऋसं. ४।२६।२. (२) ऋसं. ४।२६।३.

नामकं राजर्षिं यत् यदा आर्वं अपालयम्। तदा पुरो व्यैरमिति पूर्वेण सम्बन्धः। ऋसा

प्र सु ष विभ्यो मरुतो विरस्तु प्र श्येनः श्येनेभ्य आशुपत्वा।
अचक्रया यत्स्वधया सुपर्णो हव्यं भरन्मनवे देवजुष्टम्॥[1]

अथैन्द्राग्निं श्येनः स्तूयते। हे मरुतः वेगेन मरस्वन्तः पक्षिणः स प्रसिद्धः श्येनाख्यः वि पक्षी विभ्यः पक्षिभ्यो युष्मत्. प्र नु अस्तु श्येन प्रकृष्टो भवतु। किंच श्येनेभ्यः शत्रुविघातनेभ्यः. स्वस्वजातीयेभ्य पक्षिभ्य सकाशात् आशुपत्वा आशुपतनः शीघ्रगामी श्येनः प्रकृष्टो भवतु। सुपर्णः शोभनपतनः यत् यदा श्येनः अचक्रया चक्रवर्जितया स्वधया रथेन देवजुष्टं देवैः सेवित हव्यं सोमलक्षणं हविः मनवे प्रजापतये भरत् अहरत् द्युलोकस्थात्सकाशादाहृतवान्। अत्र स्वधाशब्दो रथवाची 'अचक्रया स्वधया वर्तमानम्' (ऋसं. १०।२७।१९) इत्यादौ दर्शनात्। ऋसा.

भरद्यदि विरतो वेविजानः पथोरुणा मनोजवा असर्जि।
तूयं ययौ मधुना सोम्येनोत श्रवो विविदे श्येनो अत्र॥[2]

यदि यदा विः पक्षी श्येनः अतः अस्मात् द्युलोकात् वेविजानः सोमपालकान् भीषयन् सोमम् अहरत्। सोममाहृतवान्। तदा उरुणा विस्तीर्णेन पथा अन्तरिक्षमार्गेण मनोजवाः मनोवत् वेगयुक्तः सन् असर्जि संसृष्टः आसीत्। सोम्येन सोममयेन मधुना अन्नेन सह तूयं क्षिप्रं ययौ जगाम। उत अपि च अत्र अस्मिन् लोके श्येनः सुपर्णः श्रवः सोमाहरणनिमित्तं यशः विविदे लेभे। ऋसा

ऋजीपी श्येनो ददमानो अंशुं परावतः शकुनो मन्द्रं मदम्।
सोमं भरद्दादृहाणो देवावान्दिवो अमुष्मादुत्तरादादाय॥[3]

ऋजीपी ऋजुगामी परावतः दूरात् अंशुं सोमं ददमानः धारयन् श्येनः शकुनो शोभनपतनः देववान् देवैः सहितः शकुनः पक्षी मन्द्रं मदनीयं स्तुत्यं मदं मदकरं सोमं उत्तरात् उन्नततरात् अमुष्मात् दिवः द्युलोकात् आदाय स्वीकृत्य दादृहाणः दृढीकुर्वन् भरत् अहरत्। ऋसा.

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम्।
अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः॥[1]

श्येनः शत्रुविघातकः पक्षी सवान् सवना यज्ञान् सहस्रं सहस्रसंख्यकं अयुतं च अयुतसंख्यकम्। अन्तरिक्षलोकनिवासार्थं। साकं सह सोमं सोमलक्षणमन्नम् आदाय आदानं कृत्वा अभरत् अहरत् आजहार। अत्र अस्मिन् सोमे आहृते सति पुरंधिः पुरन्धिर्बहुकर्मा अमूरः अमूढः प्राज्ञ इन्द्रः सोमस्य सम्बन्धिनि मदे हर्षे सति मूराः मूढाः अरातीः शत्रून् अजहात् अत्यजत्; जघानेत्यर्थः। अत्रारातिशब्दः स्त्रीलिङ्गः। ऋसा.

आत्मानमवदत् श्येनः

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।
शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम्॥[2]

अत्रेदं श्लोकः पठ्यते—'श्येनभाव सन्नात्मार्थ गर्भात् वेगेन निःसृतः। ऋषिर्गर्भे शयानः सन् ब्रूते गर्भे नु सन्निति॥ गर्भे नु गर्भे एव सन् विद्यमानः अहं वामदेवः एषां इन्द्रादीनां देवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अनु अवेद आनुपूर्व्येणाज्ञासिषम्। परमात्मनः सकाशात् सर्वे देवा जाता इत्यवेदिषमित्यर्थः। इतः पूर्वं शत बहूनि आयसीः आयसानि अभेद्यानि पुरः शरीराणि मा मा अरक्षन् अपालयन्। यथाहं शरीरात् व्यतिरिक्तमात्मानं न जानीयां तथा मामरक्षन्नित्यर्थः। अध अधुना श्येनः श्येनवत् स्थितः अहं जवसा वेगेन निरदीयं शरीरान्निर्गतवानस्मि।

(१) ऋसं ४।२६।४.
(२) ऋसं ४।२६।५.
(३) ऋसं. ४।२६।६.

(१) ऋसं ४।२६।७, नि. ११।२१
(२) ऋसं. ४।२७।१, ऐआ. २।५।१।१३, ऐउ. २।४।५.

अनावरणमात्मानं जानन्निर्गतोऽस्मीत्यर्थः। 'पुरुषे ह वा अयमादितः' इति खण्डे 'गर्भे एवैतच्छयानो वामदेव एवमुवाच' (ऐआ. २।५।१) इत्यादिना अयमर्थः सम्यक् प्रतिपादितः। ऋसा.

**न घा स मामप जोषं जभाराभीमास त्वक्षसा वीर्येण।**
**ईर्मा पुरंधिरजहादरातीरुत वाताँ अतरच्छूशुवानः॥**

सः गर्भः मां वामदेव जोष पर्याप्त न घ नैव अप जभार अपजहार। गर्भेऽपि वसतो मे मोक्षो नाभूदित्यर्थः। अहं तु ई इदं गर्भस्थं दुःखं त्वक्षसा तीक्ष्णेन वीर्येण ज्ञानसामर्थ्येन अभि आस अभ्यभवम्। ईर्मा सर्वस्य प्रेरकः पुरंधिः पुरा धारकः परमात्मा अरातीः गर्भसंश्रितान् शत्रून् अजहात् अत्यजत् जघान। उत अपि च शूशुवानः वर्धमानः परिपूर्णः परमात्मा वातान् गर्भक्लेशकरान् वायून् अतरत् अतारीत्। ऋसा.

**अव यच्छ्येनो अस्वनीदध द्योर्वि यद्यदि वात ऊहुः पुरंधिम्।**
**सृजद्यदस्मा अव ह क्षिपज्ज्यां कृशानुरस्ता मनसा भुरण्यन्॥**

अध तदानीं सोमाहरणकाले यत् यदा श्येनः द्योः द्युलोकात् अव अस्वनीत् अवाङ्मुखं शब्दमकरोत्। यदि वा यदा च। वेति चार्थे। यत् य पुरंधिं सोमं अतः अस्मात् श्येनात् वि ऊहुः सोमपाला विक्षिप्तवन्तः। यत् यदा अस्ता शराणां-क्षेप्ता मनसा मनोवेगेन भुरण्यन् गन्तुमिच्छन् कृशानुः एतन्नामकः सोमपालः ज्या धनुपः कोटौ मौर्वी क्षिपत् ह चिक्षेप खलु। अस्मै श्येनाय शर अव असृजत् त्यक्तवान्। तथा च ब्राह्मणं—'तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदत्' (ऐब्रा. ३।२६) इत्यादि। यदा सोमपाला इत्थमित्थ चक्रुः तदा श्येनः सोममाजहारेत्युत्तरया सबन्धः। ऋसा.

**ऋजिप्य ईमिन्द्रावतो न भुज्युं श्येनो जभार बृहतो अधि ष्णोः।**
**अन्तः पतत्पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद्वेः॥**

ऋजिप्यः ऋजुगामी श्येनः इन्द्रवतः इन्द्रो रक्षको यस्य तस्मात् बृहतः महतः अधि उपरि स्नोः स्थितात् द्युलोकात् ईं एन सोमं जभार आजहार। तत्र दृष्टान्तः। इन्द्रवतः, इन्द्रः समर्थः तद्वतो देशात् भुज्यु न भुज्युनामक राजान यथा अश्विनौ आजह्रतुस्तद्वत्। अध तदानीं यामनि युद्धे प्रसितस्य कृशानोरस्त्रैर्बद्धस्य वेः गन्तुः अस्य श्येनस्य अन्तः मध्ये स्थित पतत्रि पतनशील तत् पर्ण पतत् अपतत्। ऋसा.

**अध श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमन्धः।**
**अध्वर्युभिः प्रयतं मध्वो अग्रमिन्द्रो मदाय प्रति धत्पिबध्यै शूरो मदाय प्रति धत्पिबध्यै॥**

अध अधुना शूरः विक्रान्तः मघवा धनवान् इन्द्रः श्वेतं शुभ्रं कलश कलशे पात्रे स्थित गोभिः गव्येन पयसा अक्तं सिक्त आपिप्यानं आप्याययन्तं शुक्रं सारोपेतं अध्वर्युभिः प्रयतं दत्तं अन्धः सोमलक्षणमन्न मध्वः मधुरस्य सोमरसस्य अग्र अग्रे मदाय मदार्थं पिबध्यै पातुं प्रति धत् प्रतिदधातु। पुनरुक्तिरादरार्था। ऋसा.

सर्वेश्वर, सर्वात्मा, सर्वरूप, मातृपितृस्वरूपः

**इन्द्रो भूतस्य भुवनस्य राजेन्द्रो दाधार पृथिवीमुतेमाम्।**
**इन्द्रे ह विश्वा भुवना श्रितानीन्द्रं मन्ये पितरं मातरं च॥**
**इन्द्रः पृणन्तं पपुरिं चेन्द्रा इन्द्रः स्तुवन्तꣳ स्तवितारमिन्द्रः।**
**दधाति शक्रः सुकृतस्य लोक इन्द्रं मन्ये पितरं मातरं च॥**
**इन्द्रो द्यौरुर्व्युत भूमिरिन्द्रा इन्द्रः समुद्रो अभवद्गभीरः।**
**उर्वन्तरिक्षꣳ स जनासा इन्द्रा इन्द्रं मन्ये पितरं मातरं च॥**
**इन्द्रो वृत्रꣳ वज्रेणावधीद्धीन्द्रो व्यꣳसमुत शुष्णमिन्द्रः।**

(१) ऋसं. ४।२७।२. (२) ऋसं. ४।२७।३.
(३) ऋसं. ४।२७।४.
(१) ऋस. ४।२७।५.
(२) मैसं. ४।१४।७. (९२–९७).

इन्द्रः पुर· शम्बरस्याभिनद्धीन्द्रं मन्ये पितरं मातरं च ॥
इन्द्रो बभूव ब्रह्मणा गभीर इन्द्रा आभूतः परिभूश्विन्द्रः ।
इन्द्रो भविष्यदुत भूतमिन्द्रा इन्द्र मन्ये पितरं मातरं च ॥
इन्द्रोऽस्मं अवतु वज्रबाहुरिन्द्रे भूतानि भुवनानीन्द्रे ।
अस्माकमिन्द्रो भवतु प्रसाह इन्द्रं मन्ये पितरं मातरं च ॥

अकर्ता, नाथी

तस्मादेतदृषिणाऽभ्यनूक्तम् । न त्वं युयुत्से कतमच्च नाहर्न तेऽमित्रो मघवन् कश्चनास्ति । मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रून्न नु पुरा युयुत्स इति × ॥

उक्तार्थदार्ढ्याय ऋचमपि सवादयति—तस्मादेतदृषिणा अभ्यनूक्तमिति । ऋषिरिन्द्रः । स च 'न त्वं युयुत्से' इत्यादिका ऋक् । हे इन्द्र त्वं न युयुत्से युद्धं न कृतवान् । त्वय्यतिनष्टानामसुराणामभावात् । कतमच्च किमपि शत्रुसैन्यं नाहः नावधीः । हे मघवन्निन्द्र ते तव प्रकृतसृष्टौ अमित्रः शत्रुः कश्चन कोऽपि नास्ति । वृत्रादिभिरसुरै. सह यानि तव युद्धान्याहु. सा मायेत्, इच्छब्देऽवधारणे, तत् मायामात्र, न वास्तविकम् । तत् कुत इति चेत्, उच्यते । अद्य अस्मिन्काले पुरा पूर्वकालेऽपि त्वं शत्रून् न युयुत्से न प्रहृतवानसि । इत्यासा. ※

---

× शेष विश्वसृष्टिप्रकरणे द्रष्टव्यम् ।

※ 'कया शुभा सुवयसा' ( ऋसं. १।१६५ ) 'असन् सु मे' ( ऋसं. १०।२७ ) इत्येते सूक्ते सायणाचार्येण परमात्मप्रतिपरत्या व्याख्याते, परन्तु तादृशार्थस्य स्पष्टप्रतिभानान् नात्र संगृहीते ।

इन्द्रस्य परमात्मत्वव्यञ्जकविशेषणानि अस्मिन् प्रकरणेऽसंगृहीतवचनान्तरेष्वपि समुपलभ्यन्ते । यथा—

अभिभू –ऋसं. २।२१, ८।१६, ८९,९७ १०.१५३.
अमर्त्यः–ऋसं १।१२९, १६५, ३.५१
अमृत –ऋसं. ५ ३१· ६ २१, ७।२०.

(१) शब्रा. ११।१।६।१०.

अविता नृणां सखीयतां स्तोस्तॄणां च– ऋसं ४।१७, ३१ ६।४४, ७।१९, ८.२,१६ १०।२४

ईशान·, एकराट् अस्य जगत – ऋसं १।१००, ७ ३२· ८।६, १७, ३२, ३७, ४०, ४६, ५३, ६८, ७९, ८१

ऋतस्य जनक रक्षक अधिष्ठान च–ऋसं. २।३०, ३।५३, ७।२०, ८।६, ७०.

ऋतस्य सदस धीति –ऋसं १०।१११.

ज्योतिष कर्ता– ऋस ८।१६.

पितॄणां कर्ता– ऋस. ४।१७

विश्वस्य कर्मण धर्ता– ऋस १।११.

कवितम कवीनाम्– ऋसं ६।१८

कृष्टीनां राजा– ऋसं १।१७७ ४ १७ ६ ४७

चर्षणीनां राजा वृषभो वा सम्राट् वा धर्ता वा– ३. ३७. ५१ ४ १७ ६।१८. ७।२३ ८।१६, ७०. ९६; १०।८९.

जनाना पति विश्वस्य जगतश्च– ऋस. १।१०१; ६ ३४, ४७. ८।१३

जनाना राजा–ऋस ८।६४.

जनुषा राजा–ऋस. ४।१७

जनिता दिव पृथिव्या सूर्यस्य च–ऋसं ३.४९; ८।३६.

ज्येष्ठतम.– ऋसं. २।१६.

ज्येष्ठराज – ऋसं. ८।१६

दमिता विश्वस्य– ऋसं ५।३४.

दिवस्पति – ऋसं. ८ १३, ९८.

देवतम – ऋसं ४.२२.

देव. देवस्य– ऋसं ८।९७ १०।२२

धर्ता दिव रजस – ऋसं. ३।४९.

धृतव्रत – ऋसं ६।१९, ६८, ८।९७

नृतम – ऋसं. ३।३०, ४९, ४।१७, २२, २५; ६।१८,३३ ७।१९, ८।२४, १०।२९, ८९

नृपति – ऋस. १.१०२, ४ २०, ७।३०. ८।५४, १०।६४.

परम – ऋसं ५।३०.

पिता– ऋसं ३।३१ ४।१७, ८ ६, ५२· १० ८,९२.

पितृतम पितॄणां, पितॄणां कर्ता च– ऋस ४।१७

प्रतिमानं सत – ऋम ३।३१.

प्रथम. उपमानां यज्ञियानां च– ऋसं. ६।४१, ८.६१.

प्रभङ्ग. दुर्मतीनाम्– ऋसं. ८।४६.

## सोमः

ज्योतिर्जनकः, अमृतलब्धा, द्यावापृथिव्यन्तरिक्षाणां स्थापक·, गवादिषु रसस्य स्थापक., धारक , पोषक , विज्ञाता, प्रकाशक·, व्यापक , अविनश्वरबल·, विश्वस्य राजा, ज्योतिषा ज्योति , द्यावापृथिव्यग्निसूर्येन्द्र-विष्णवादीनां देवाना स्वर्गस्य मतीना च जनिता, अमृतं, प्रजाना दिव्यं रेत ; इन्द्रादिदेवतर्पक , अशस्तिहा, दुरितनाशक·, विभूतिमत्सत्त्वात्मा, इन्द्रस्य ओज , सूर्यस्य ज्योतिश्च

[1]अयमकृणोदुषसः सुपत्नीरयं सूर्ये अदधाज्ज्योतिरन्तः ।
अयं त्रिधातु दिवि रोचनेषु त्रितेषु विन्ददमृतं निगूळ्हम् ॥

त्राता– ऋसं ३।४१
मघवत्तम.– ऋसं ८।५४.
मघानां विभक्ता– ऋसं. ७।२६.
मुनीनां सखा– ऋसं ८।१७.
रक्षिता सर्वतः– असं. १९।१५।३
वरिष्ठ – ऋसं. ८।९७.
विद्वान् विश्वस्य– ऋस. ४।१६; ६।४२; ७।२०; ८।४६, १०।१६०.
विप्रतम.– ऋसं. ३।३१, १०।११२.
विश्वः– ऋसं. ८।३.
विश्वकर्मा– ऋस ८।९८. शुसं. १७।२३.
विश्वजन्या – ऋसं. १।१६९.
विश्वतो धी – ऋसं. ८।३४.
विश्वमना·–ऋसं १०।५५.
विश्वरूप – ऋसं. ३।३८.
विश्ववारः– ऋस. १।३०, ८।४६.
विश्ववीर्यः– ऋसं २।१६.
विश्वशम्भू – शुसं. १७।२३.
विश्वानर·– ऋसं. १०।५०.
व्रतपा देवानाम्– ऋसं १०।३२.
शन्तमः– ऋसं ८।३३, ५३.
शिवतम – ऋसं. ८।९६.
सखा– ऋसं. ८।१००, १०।११२.
सत्ययोनि.– ऋसं. ४।१९; ८।६९.
सूनृतानां गिरां पतिः– ऋसं. ३।३१.

(१) ऋसं. ६।४४।२३.

अय सोमः उषसः उषःकालान् सुपत्नीः शोभनः पतिः पालकः सूर्यो यासामुषसा तादृशीः अकृणोत् अकरोत् । अय एव सूर्ये सूर्यमण्डले अन्तः मध्ये ज्योतिः तेजः अदधात् निहितवान् । त्रिधातु सवनत्रयरूपेण त्रिप्रकार अय लतारूपः सोमः दिवि द्युलोके रोचनेषु रोचमानेषु त्रितेषु तृतीये स्थाने ततेषु विस्तृतेषु देवेषु निगूळ्ह नितरा गूढमदृश्यतया वर्तमान अमृत अमृतत्व-कारणं पीयूष विन्दत् अविन्दत् अलभत । हे इन्द्र त्वत्साहाय्यादेवमेव सोमः कृतवान् इति इन्द्रस्य स्तुति-रधिगन्तव्या । यद्वा । इदशब्देनेन्द्र एव परामृश्यते । अयमिन्द्रः उषसः शोभनपतिकाः अकरोत् । अयमेव सूर्येऽन्तर्ज्योतिरदधात् । दिवि द्युलोके रोचमानेषु त्रितेषु त्रिस्थानगतेषु देवेषु मध्येऽयमेवेन्द्रस्त्रिधातु सवनत्रया-त्मना त्रिप्रकार निगूढ पात्रैः सवृतममृतममरणहेतुभूतं सोममविन्दत् अलभत । ऋसा.

[1]अयं द्यावापृथिवी वि ष्कभायदयं रथमयुनक्सप्तरश्मिम् ।
अयं गोषु शच्या पक्वमन्तः सोमो दाधार दशयन्त्रमुत्सम् ॥

अय सोमः द्यावापृथिवी दिव च पृथिवीं च वि ष्कभायत् विविधमस्थापयत् । अपि च अय सोमः सूर्यस्य च रथ सप्तरश्मि सप्तरश्मिभिः किरणैरुपेत सप्ताश्वं सप्तचक्र वा अयुनक् अयोजयत् । तथा अय सोमः गोषु अन्तः मध्ये पक्व निष्पन्न शच्या प्रज्ञया संकल्प-रूपया उत्स उत्सरणशील पयः दाधार धारयति । दश-यन्त्रम् । उत्सस्य हेतुगर्भविशेषणमेतत् । उत्सरणहेतुभूतैर्द-शभिश्चक्षुःश्रोत्रादिभिर्यन्त्रैरुपायैर्युक्तम् । इद च पदं खैलिकेन मन्त्रान्तरेण व्याख्यायते—'चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरम् । द्वौ प्रत्यञ्चा-वनुलोमौ विसर्गावेत तं मन्ये दशयन्त्रमुत्सम् ॥' इति । यद्वा । अयमिन्द्रो द्यावापृथिवी वि ष्कभायत् । स्वे स्वे स्थाने स्थिते अकरोत् । अयमेव सप्तरश्मि सूर्यस्य रथ-मयुनक् । अयमेवेन्द्रो गोष्वन्तः शच्या आत्मीयेन कर्मणा पक्वं पयो धारयति । एवभूतेन्द्रार्थं सोमो दशयन्त्र दश-संख्याकैरैन्द्रवायवादिभिर्ग्रहैर्यन्त्रितैर्गृहीतैरुपेतमुत्समुत्सरण-

(१) ऋसं. ६।४४।२४.

शील रसं दाधार धारयति । प्रातःसवने ऐन्द्रवायवादयो दश ग्रहा गृह्यन्ते । तथा च ब्राह्मणं– 'नव प्रातर्ग्रहा गृह्यन्ते नवभिर्बहिष्पवमाने स्तुवते स्तुते सोमे दशमं गृह्णाति' (ऐब्रा. ३।१) इति । अन्यत्राम्नात— 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' (शाब्रा. १४।२) इति । तदभिप्रायेणेद दशयन्त्रमिति विशेषणम् । ऋसा.

**अयं स यो वरिमाणं पृथिव्या वर्ष्माणं दिवो अकृणोदयं सः ।**
**अयं पीयूष तिसृषु प्रवत्सु सोमो दाधारोर्वन्तरिक्षम् ॥**

सः खलु अय सोमः यः पृथिव्याः वरिमाण उरुत्व विस्तृतत्व अकृणोत् अकरोत् । तथाऽयं सोमः दिवः द्युलोकस्य वर्माण महत्व दृढत्वमकृणोदकरोत् । अय सोमः सः हि भवति । अपि च अय सोमः तिसृषु ओषधिष्वप्सु गोषु च प्रवत्सु प्रकृष्टास्वेतासु पीयूष रस दाधार धारयति । तथा उरु विस्तीर्णं अन्तरिक्ष च धारयति । तथा च मन्त्रान्तरं—'त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्व गाः । त्वमा ततन्थोर्वन्तरिक्षम्' (ऋसं. १।९१।२२) इति । ऋसा.

**अय विदच्चित्रदृशीकमर्णः शुक्रसद्मनामुषसामनीके ।**
**अयं महान्महता स्कम्भनेनोद्द्यामस्तभ्नाद् वृषभो मरुत्वान् ॥**

अय सोमः चित्रदृशीकं विचित्रदर्शन यद्वा आश्चर्यत्वेन दर्शनीयं अर्णः सर्वस्य प्रेरकं सौरं ज्योतिः विदत् लम्भयति । कस्मिन् काले । शुक्रसद्मना शुक्रं निर्मलमन्तरिक्ष सद्म सदनं यासा तासा उषसा अनीके प्रमुखे । उषःकाले इत्यर्थः । अपि च महान् प्रवृद्धः अयं सोमः महता स्थविष्ठेन स्कम्भनेन स्तम्भनसाधनेन मध्यवर्तिनान्तरिक्षेण द्या द्युलोक उत् अस्तभ्नात् ऊर्ध्वमस्थापयत् । यथाऽधो न पतति तथाऽन्तरिक्षं तस्याधारत्वेन कृतवानित्यर्थः । कीदृशः सोमः । वृषभः वृष्टेर्जनयिता । सोमाहुत्या हि वृष्टिर्जन्यते । मरुत्वान् मरुद्भिर्युक्तः । ऋसा.

(१) ऋसं. ६।४७।४.
(२) ऋसं. ६।४७।५.

[1]**वि यो ममे यम्या संयती मदः साकंवृधा पयसा पिन्वदक्षिता ।**
**मही अपारे रजसी विवेविददभिव्रजन्नक्षितं पाज आ ददे ॥**

यो मदः, माद्यत्यनेनेति मदः सोमरसः । यम्या युगलभूते सयती परस्पर सगच्छमाने द्यावापृथिव्यौ वि ममे विशेषेण निर्मितवान् । ततः ते साकंवृधा सहैव वर्धनशीले तथा अक्षिता अक्षीणे सामर्थ्यवत्यौ यथा भविष्यतः तथा स सोमः पयसा पयोरूपेण स्वीयरसेन पिन्वत् असिञ्चत् । अवर्धयदिति यावत् । किंच मही महत्यौ अत एव अपारे पर्यन्तरहिते रजसी । द्यावापृथिवीनामैतत् । ते द्यावापृथिव्यौ विवेविदत् । इयं पृथिवीयं द्यौरिति सर्वेषां विविच्य तेजसा प्रज्ञापयन्नभिव्रजन् अभितः सर्वतो गच्छन् स सोमः अक्षित अक्षीणमविनश्वर पाजो बलमा ददे स्वीकृतवान् । अत्यन्त बलवानभवदित्यर्थः । ऋसा.

[2]**स मातरा विचरन्वाजयन्नपः प्र मेधिरः स्वधया पिन्वते पदम् ।**
**अंशुर्यवेन पिपिशे यतो नृभिः स जामिभिर्नसते रक्षते शिरः ॥**

मेधिरः मेधावान् प्राज्ञः सः सोमः मातरा मातरौ जगतो निर्मात्र्यौ द्यावापृथिव्यौ विचरन्नन्तरेणात्यन्तं चरन् तथा अपः अन्तरिक्षस्थितान्युदकानि वाजयन् प्रेरयन् । तादृशः स्वधया सक्तुलक्षणेनान्नेन सह पदं स्वस्थानमुत्तरवेदिरूप प्र पिन्वते प्रकर्षेणाप्याययति । ततो नृभिः कर्मनेतृभिः ऋत्विग्भिः यतः सयत अंशुः सोमः यवेन पिपिशे । अवयवत्वेन कृतः मिश्रित इत्यर्थः । सोमस्तु यवसक्तुभिः श्रीयते खलु । सोऽय जामिभिरेकस्मात्स्थानादेत्यन्नाभिरङ्गुलीभिः स नसते सगच्छते च । शिरः शीर्ष भूतजातं रक्षते च । स्वीयरसेन रक्षति पोषयति । ऋसा.

[3]**सं दक्षेण मनसा जायते कविर्ऋतस्य गर्भो निहितो यमा परः ।**
**यूना ह सन्ता प्रथमं वि जज्ञतुर्गुहा हितं जनिम नेममुद्यतम् ॥**

(१) ऋसं. ९।६८।३. (२) ऋसं. ९।६८।४.
(३) ऋसं. ९।६८।५.

प्रसङ्गात् सोमसूर्ययोराविर्भावमाह—दक्षेण प्रवृद्धेन मनसा सह स जायते पृथिव्याः सम्यग्जायते । तथा ऋतस्य उदकस्यैव गर्भः गर्भस्थानीयः । यद्वा । सत्यस्य यज्ञस्य मध्ये गर्भः शब्दनीयः स्तुत्यः । स एव सोमः परः परस्तादन्तरिक्षे यमा यमेन नियमेन देवैर्निहितः सः । सूर्याद्धि वृष्टिर्भवति । तस्मात्सोमः सूर्यात्मकतयाऽवास्थित इत्यर्थः । एवं यूना । ह इत्यवधारणे । युवानावेव सन्तौ तौ प्रथमं जननकाले वि जज्ञतुः । अय सोमोऽय सूर्य इति विशेषेण ज्ञायेते । तयोश्चार्ध जनिम जन्म गुहा गुहाया हित निहितं भवति । तयोः नेम अर्ध च उद्यतं प्रकाशितं भवति । दिवा सूर्यः प्रादुर्भवति रात्रौ चन्द्रमा इति । ऋसा.

[1]आ यस्तथौ भुवनान्यमर्त्यो विश्वानि सोमः परि तान्यर्षति ।
कृण्वन्त्संचृतं विचृतमभिष्टय इन्दुः सिषक्त्युपसं न सूर्यः ॥

यः अमर्त्यः देवः सोमः भुवनानि लोकान् आ तस्थौ आस्थितवान् तानि विश्वानि सर्वाणि भुवनानि परि अर्षति परितो गच्छति । परितो रक्षतीत्यर्थः । सोऽय इन्दुः यज्ञ यजमान वा सचृत देवैः फलैर्वा सबद्धं कृण्वन् कुर्वन् विचृतं असुरादिभिर्दुःखैर्वा विमुक्तं कृण्वन् अभितो यागाय सिषक्ति सेवते यज्ञम् । उषस न सूर्यः । सूर्य उषसमिव यथा अभिष्टये अभितो गमनाय प्राणिना संचृतं प्रकाशैः संयुक्तं विचृत तमोभिर्विमुक्त च लोक कुर्वन् उपसं सेवते तद्वत् । ऋसा.

[2]अधि द्यामस्थाद्वृषभो विचक्षणोऽरूरुचद्वि दिवो रोचना कविः ।
राजा पवित्रमत्येति रोरुवद्दिवः पीयूष दुहते नृचक्षसः ॥

अधि अस्थात् द्यां द्युलोक वृषभः वर्षिता विचक्षणः विद्रष्टा अय सोमः । तथा कृत्वा दिवः द्युलोकसबन्धीनि रोचना रोचमानानि नक्षत्रादीनि व्यरूरुचत् विविधं रोचयति । कविः क्रान्तप्रज्ञः सन् राजा सोमः पवित्रं दशापवित्र अत्येति अतिक्रम्य गच्छति । रोरुवत् शब्दं कुर्वन् । दिवः द्युलोकस्य पीयूष सारं रसं नृचक्षसः नृणां द्रष्टारः सोमाः दुहते स्रवन्ति । स्वकीय रसमान्तरिक्ष्यमुदक वा दुहन्तीत्यर्थः । ऋसा.

[1]ऊर्ध्वो गन्धर्वो अधि नाके अस्थाद्विश्वा रूपा प्रतिचक्षाणो अस्य ।
भानुः शुक्रेण शोचिषा व्यद्यौत्प्रारूरुचद्रोदसी मातरा शुचिः ॥

ऊर्ध्वः उन्नतः गन्धर्वः रश्मीना धारकः सोमः नाके आदित्ये अधि अस्थात् अधितिष्ठति । किं कुर्वन् । अस्य आदित्यस्य विश्वा विश्वानि रूपाणि प्रतिचक्षाणः प्रतिपश्यन् । भानुः आदित्यः सोमाधिष्ठितः सन् शुक्रेण दीप्तेन शोचिषा तेजसा व्यद्यौत् विद्योतते । न केवल स्वयमेव अपि तु मातरा निर्मात्र्यौ रोदसी द्यावापृथिव्यौ प्रारूरुचत् प्ररोचयति । शुचिः दीप्तः सूर्यः । ऋसा.

[2]विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोस्ते सतः परि यन्ति केतवः ।
व्यानशिः पवसे सोम धर्मभिः पतिर्विश्वस्य भुवनस्य राजसि ॥

हे विश्वचक्षः सर्वस्य द्रष्टः सोम प्रभोः परिवृढस्य सतः ते तव ऋभ्वसः । ऋभ्वा इति महन्नाम । महान्तः केतवः रश्मयः विश्वा सर्वाणि धामानि तेजःस्थानानि देवशरीराणि परि यन्ति परिगच्छन्ति । प्रकाशयन्तीत्यर्थः । हे सोम व्यानशिः व्यापनशीलश्च त्वं धर्मभिः धारकैः रसनिस्यन्दैः पवसे पूयसे । विश्वस्य भुवनस्य च पतिः स्वामी त्वं राजसि ईश्वरो भवसि । ऋसा.

[3]राजा समुद्रं नद्यो वि गाहतेऽपामूर्मिं सचते सिन्धुषु श्रितः ।
अध्यस्थात्सानु पवमानो अव्ययं नाभा पृथिव्या धरुणो महो दिवः ॥

अय सोमो राजा समुद्र अन्तरिक्ष नद्यः तत्रत्या अपश्च वि गाहते । विगाह्य चापामूर्मिं सचते उदकपूरं स्रवति । सिन्धुषु उदकेषु ग्रहेषु वा श्रितः सन् हूयमानः सन् रश्मि-

(१) ऋसं. ९।८४।२.
(२) ऋसं ९।८५।९.

(१) ऋसं. ९।८५।१२.
(२) ऋसं ९।८६।५; सासं. २।५।१ प्रभोस्ते (प्रभोष्टे) व्यानशि (व्यानशी) धर्मभि. (धर्मणा).
(३) ऋसं. ९।८६।८.

हे सोम उरुगव्यूतिः विस्तीर्णमार्गस्त्व अभयानि स्तोतृभ्यः कृण्वन् कुर्वन् पुरन्धी । इद द्यावापृथिव्योर्नाम । ते समीचीने सगते कुर्वन्ना पवस्व आक्षर । अपः उषसः स्वः आदित्य गाः रश्मीश्च सिषासन् पुष्ट्यर्थ समक्तुमिच्छन् स चिक्रदः सक्रन्दसे । महो महतो महान्ति वाजान् अन्नानि अस्मभ्यं दातुमिति शेषः ।

ऋसा.

**मत्सि सोम वरुणं मत्सि मित्रं मत्सीन्द्रमिन्दो पवमान विष्णुम् ।**
**मत्सि शर्धो मारुतं मत्सि देवान्मत्सि महामिन्द्रमिन्दो मदाय ॥**

हे पवमान पूयमान इन्दो सोम त्व वरुणादीन् मत्सि तर्पय तेषा मदाय । इन्द्रस्य प्राधान्याद्द्विरभिधानम् ।

ऋसा.

**एवा राजेव क्रतुमाँ अमेन विश्वा घनिघ्नद्दुरिता पवस्व ।**
**इन्दो सूक्ताय वचसे वयो धा यूयं पात स्वस्तिभिः सदा नः ॥**

अनया स्तुतिमुपसहरन् फलमाशास्ते । हे सोम एव एवं स्तुत इति शेषः । क्रतुमास्त्व राजेव अमेन बलेन विश्वा सर्वाणि दुरिता दुरितानि घनिघ्नद्विनाशयन् पवस्व । हे इन्दो दीप्त सोम सूक्ताय शोभनमुदिताय वचसे अस्माकं स्तोत्राय तद्वचो विमृश्यार्थवदवगत्य वयो धाः अन्न धेहि । अन्नलाभस्य स्तुतिनिमित्तकत्वात्तस्य स्तुतिवचसः प्राधान्येनोक्तिः। शिष्ट सिद्धम् । ऋसा.

**सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।**
**जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥**

सोमः अभिषूयमाणः पवते पात्रेषु क्षरति । कीदृशः । मतीना बुद्धीना यद्वा मननीयाना स्तुतीना जनिता जनयिता । किंच दिवः द्युलोकस्य जनिता प्रादुर्भावयिता तथा पृथिव्याः जनयिता अग्नेर्जनयिता प्रकाशयिता सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य जनिता इन्द्रस्य जनिता पानेन मदस्य जनयिता उतापि च विष्णोर्व्यापकस्य जनिता जनयिता । एतत्सर्वं सोमेऽभिषूयमाणे भवतीति । सोमो हि देवान् आप्याययतीति ।

ऋसा.

**ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।**
**श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥**

सोमः एवरूपो भवति । देवाना स्तोत्रकारिणामृत्विजा ब्रह्मा ब्रह्माख्यर्त्विक्स्थानीयो भवति । यद्वा । देवाना द्योतमानानामिन्द्रादीना ब्रह्मा राजा भवति । तथा कवीना क्रान्तप्रज्ञानां पदवीः । स्खलन्ति पदानि साधुत्वेन यो योजयति स पदवीः । तथा विप्राणा मेधाविना मध्ये ऋषिः भवति । यः परोक्ष पश्यति स ऋषिः 'ऋषिर्दर्शनात्' (नि० २।११) इति । मृगाणा महिषो भवति महिषाख्यो बलवान् राजा भवति । तथा गृध्राणा पक्षिविशेषाणा श्येनः शसनीयः पक्षिराजो भवति । वनाना, वनतिर्हिंसाकर्मा, हिंसकाना छेदकाना मध्ये स्वधितिः एतन्नामकश्छेदकोऽसि । एवप्रभावः सोमः रेभन् शब्दायमानः सन् पवित्र ऊर्णास्तुकेन कृत अत्येति अतिगच्छति ।

ऋसा.

**अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा ।**
**वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥**

समुद्रः, यस्मादापः समुद्द्रवन्ति स समुद्रः । अपा वर्षकः राजा सोमः प्रथमे विस्तृते भुवनस्योदकस्य विधर्मन् विधारकेऽन्तरिक्षे प्रजाः जनयन्नुत्पादयन्नक्रान् सर्वे-

(१) ऋसं. ९।९०।५, ६.

(२) ऋसं. ९।९६।५, सासं. १।५।६, २।५।६; ताब्रा. १२।११।६; साब्रा. १।४।४, २।८।२; नि. १४।१२.

(१) ऋसं. ९।९६।६; मासं २।५।६; तैसं ३।४।११।१, कासं. २३।१२ (३७), मैसं. ४।१२।६ (१६८) ऋषिर्वि (कविर्वि); नाउ ४०, नि. १४।१३.

(२) ऋसं. ९।९७।४०; सासं. १।५।६, २।१०।१ राजा (गोपाः) सुवान इन्दु (स्वानो अद्रि), ताब्रा. १५।१।१, तैआ. १०।१।१५ अक्रान् (आक्रान्), नाउ. १।१५, नि. १४।१६.

मतिक्रामति । वृषा कामानां वर्षिता सुवानः अभिषूयमाणः इन्दुः दीप्तः स सोमः अध्यधिक सानौ समुच्छ्रिते अव्ये अविभवे पवित्रे बृहत् प्रभूत ववृधे वर्धते । ऋसा.

**¹महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।**
**अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥**

महिषः महान्पूज्यो वा सोमः महत् प्रभूत तत्कर्म चकार अकरोत् । किं तत् । अपा गर्भः उदकाना गर्भभूतः जनयितृत्वाज्जन्यत्वाच्च स सोमः देवान् अवृणीत समभजतेति यत् तत् कृतवानिति । किंच पवमानः पूयमानः सोमः ओजः सोमपानेन जन्य बलमिन्द्रे अदधात् व्यदधात् । तथा इन्दुः सोमः सूर्ये ज्योतिः तेजः अजनयत् । ऋसा.

**²मत्सि वायुमिष्टये राधसे च मत्सि मित्रावरुणा पूयमानः ।**
**मत्सि शर्धो मारुत मत्सि देवान्मत्सि द्यावापृथिवी देव सोम ॥**

हे सोम त्व वायु मत्सि मादय । किमर्थम् । इष्टये अस्माकमेषणायान्नाय राधसे धनाय च । तथा पूयमानः पवित्रेण त्व मित्रावरुणा मित्रावरुणौ च मत्सि तर्पयसि । किच मारुत मरुता स्वभूत शर्धः बल च मत्सि । तथा देवान् इन्द्रादीन् मत्सि हर्षयसि । हे देव स्तोतव्य हे सोम द्यावापृथिव्यौ च मत्सि मादय । एतान् हर्षयुक्तान् कृत्वाऽस्मभ्यं धन प्रयच्छेत्यर्थः । ऋसा.

**³एष प्रत्नेन वयसा पुनानस्तिरो वर्पांसि दुहितुर्दधानः ।**
**वसानः शर्म त्रिवरूथमप्सु होतेव याति समनेषु रेभन् ॥**

प्रत्नेन पूर्वकालीनेन वयसा अन्नेन पुनानः पूयमानः । अन्नात्मिकया धारया क्षरन्नित्यर्थः । तादृशः दुहितुः सर्वस्य दोग्ध्र्याः पृथिव्याः वर्पांसि । वर्प इति रूपनाम वृणोति शरीरमिति । रूपाणि तिरः दधानः स्वतेजसा तिरस्कुर्वन् आच्छादयन् तथा त्रिवरूथं त्रिभूमिकोपेतम् । यद्वा । त्रयः शीतातपवर्षाः, तेषा निवारकम् । शर्म यज्ञगृहं वसानः आच्छादयन् अप्सु वसतीवरीषु स्थितः एषः सोमः होतेव यथा होता स्तुतिध्वनि कुर्वन् यज्ञेषु याति तद्वत् रेभन् शब्दायमानः सन् समनेषु । समन्ति कर्माणि धृष्टाः प्रगल्भाः यन्त्यत्रेति समना यज्ञाः । तेषु याति गच्छति । ऋसा.

**¹तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः ।**
**त्वां देवासो अमृताय कं पपुः ॥**

उदप्रुतः वसतीवर्याख्यमुदक प्रति गच्छन्तः । यद्वा । उदकस्य निर्गमयितारः । तव स्वभूताः द्रप्साः द्रुतगामिनो रसाः मदाय मदार्थं इन्द्र वावृधुः वर्धयन्ति । ततः देवासः देवा इन्द्रादयः क सुखकर त्वा अमृताय अमरणार्थं पपुः पिबन्ति । ऋसा.

## सोमापूषणौ

सोमापूषणौ विश्वजननौ अमृतस्थानं च

**²सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।**
**जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥**

सोमापूषणा हे सोमापूषणौ युवा रयीणां धनाना जनना जनयितारौ दिवः द्युलोकस्यापि जनना जनयितारौ पृथिव्याः प्रथितायाश्च जनयितारौ भवथः । किंच जातौ जातमात्रावेव युवा विश्वस्य भुवनस्य कृत्स्नस्य जगतः गोपौ गोप्तारौ देवाः अमृतस्य अमरणस्य नाभिं हेतु अकृण्वन् अकार्षुः । ऋसा.

सोमः विश्वस्य जनिता, पूषा द्रष्टा

**³विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण एति ।**

(१) ऋसं. ९।९७।४१; सास १।५।७, २।१०।१, साब्रा. १।७।१; नि. १४।१७.

(२) ऋसं. ९।९७।४२; सासं २।१०।१ च मत्सि (नो मत्सि); ताब्रा. १५।१।३. (३) ऋसं. ९।९७।४७.

(१) ऋसं. ९।१०६।८; सासं. २।१०।११.

(२) ऋसं. २।४०।१, तैसं. १।८।२२।५; कासं. ८।१७ (७०); मैसं. ४।११।२ (४२).

(३) ऋसं. २।४०।५, मैसं. ४।१४।१ (१०) णाववतं (णा अवतं), तैब्रा. २।८।१।६ युवाभ्या (युवभ्यां).

**सोमापूषणाववतं धियं मे युवाभ्यां विश्वाः पृतना जयेम ॥**

हे सोमापूषणौ अन्यः युवयोरेकः सोमः विश्वानि भुवना भुवनानि भूतानि जजान अजनयत्। तथा च मन्त्रः— 'सोमः पवते जनिता मतीनाम्' ( ऋसं. ९।९६।५ ) इति। अन्यः अपरः पूषा आदित्यः विश्व अभिचक्षाणः अभिपश्यन् एति गच्छति। तौ युवा सोमापूषणौ मे धियं कर्म। 'धीः शची' (नि २।१।२१) इति कर्मनामसु पाठात्। अवत रक्षतम्। किंच वयं युवाभ्या हेतुभ्या विश्वाः पृतनाः सर्वाः शत्रुसेनाः जयेम अभिभवेम। ऋसा.

---

## वरुणः

अमूलेऽन्तरिक्षे स्थितः, सूर्यपथकृत्, पापमोचक, नक्षत्र-चन्द्रमसा प्रकाशनगमनादिव्रतानामधिष्ठाता

**[१]अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः।**
**नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥**

पूतदक्षः शुद्धबलः वरुणः राजा अबुध्ने मूलरहिते अन्तरिक्षे तिष्ठन् वनस्य वननीयस्य तेजसः स्तूप सघं ऊर्ध्वं उपरिदेशे ददते धारयति। नीचीनाः स्थुः। ऊर्ध्वदेशे वर्तमानस्य वरुणस्य रश्मयः इत्यध्याहार्यम्। ते ह्यधोमुखास्तिष्ठन्ति। एषा रश्मीना बुध्नः मूलं उपरि तिष्ठतीति शेषः। तथा सति केतवः प्रज्ञापकाः प्राणाः अस्मे अस्मासु अन्तर्निहिताः स्थापिताः स्युः। मरणं न भविष्यतीत्यर्थः। ऋसा.

**[२]उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ।**
**अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥**

वरुणः राजा सूर्याय सूर्यस्य पन्था मार्ग उरु विस्तीर्ण चकार। हिशब्दः प्रसिध्दौ। उत्तरायणदक्षिणायनमार्गस्य विस्तारः प्रसिद्धः। किमर्थमेव कृतवान् इति तदुच्यते। अन्वेतवा उ अनुक्रमेण उदयास्तमयौ गन्तुमेव। तथा अपदे पादरहिते अन्तरिक्षे पादा प्रतिधातवे पादौ प्रक्षेप्तुं अकः मार्ग कृतवान्। पूर्वत्र रथस्य मार्गः अत्र पादयोरिति विशेषः। यद्वा। अपदे यूपे बद्धेन मया गन्तुमशक्ये भूप्रदेशे पादौ प्रक्षेप्तु उपाय बन्धविमोचनरूपं करोत्वित्यर्थः। उत अपि च हृदयाविधश्चित् अस्मदीयवेधकस्य शत्रोरपि अपवक्ता अपवदिता निराकर्ता भवतु। ऋसा.

**[१]शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु।**
**बाधस्व दूरे निर्ऋतिं पराचैः कृत चिदेनः प्र मुमुग्ध्यस्मत् ॥**

हे राजन् वरुण ते तव शत भिषजः बन्धनिवारकाणि शतसंख्याकानि औषधानि वैद्या वा सन्ति। ते तव सुमतिः अस्मदनुग्रहबुद्धिः उर्वी विस्तीर्णा गभीरा गाम्भीर्योपेता स्थिरा अस्तु। निर्ऋतिं अस्मदनिष्टकारिणीं निर्ऋतिं पापदेवतां पराचैः पराङ्मुखा कृत्वा दूरे असक्तो व्यवहिते देशे स्थापयित्वा ता बाधस्व। कृत चित् अस्माभिरनुष्ठितमपि एनः पापं अस्मत् प्र मुमुग्धि प्रकर्षेण मुक्तं नष्टं कुरु। ऋसा.

**[२]अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः।**
**अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥**

अमी रात्रावस्माभिर्दृश्यमानाः ऋक्षाः सप्त ऋषयः। तथा च वाजसनेयिन आमनन्ति—'ऋक्षा इति ह स्म वै पुरा सप्त ऋषीनाचक्षते' इति। यद्वा। ऋक्षाः सर्वेऽपि नक्षत्रविशेषाः। 'ऋक्षाः स्तृभिरिति नक्षत्राणाम्' ( नि० ३।२० ) इति यास्केन उक्तत्वात्। उच्चा

---

(१) ऋसं. १।२४।७. (२) ऋसं. १।२४।८, तैस. १।४।४५।१; कासं. ४।१३ (७८); मैसं. १।३।३९ (११४) विधश्चित् ( वृधश्चित् ); शुसं. ८।२३; शब्रा. ४।४।५।४.

(१) ऋसं १।२४।९, तैस. १।४।४५।१ गभीरा (गम्भीरा) दूरे ( द्वेषो ); कासं. ४।१३ (७९) बाधस्व दूरे ( आरे बाधस्व ) ग्ध्यस्मत् ( ग्ध्यस्मात् ); मैसं. १।३।३९ ( ११५ ) बाधस्व दूरे ( आरे बाधस्व ).

(२) ऋसं. १।२४।१०; तैआ. १।११।२ नक्तमेति ( नक्षत्रमेति ), नि. ३।२०।६.

उच्चैः उपरि द्युप्रदेशे निहितासः स्थापिताः ये सन्ति ते ऋक्षाः नक्त रात्रौ ददृश्रे सर्वैरपि दृश्यन्ते । दिवा अहनि कुह चित् ईयुः क्वापि गच्छेयुः । न दृश्यन्ते इत्यर्थः । वरुणस्य राज्ञः व्रतानि कर्माणि नक्षत्रदर्शनादिरूपाणि अदब्धानि केनापि अहिंसितानि । किंच वरुणस्य आज्ञयैव चन्द्रमाः नक्त रात्रौ विचाकशत् विशेषेण दीप्यमानः एति गच्छति । ऋसा.

पक्षिपद-नौ-मास-वायुमार्ग-देवाना वेदिता, प्रजासु स्थित, सम्राट्, सुक्रतु, धृतव्रत., प्रज्ञाव-दृष्टाद्भुतकर्मा

[1]वेदा यो वीनां पदमन्तरिक्षेण पतताम् ।
वेद नावः समुद्रियः ॥

अन्तरिक्षेण पतता आकाशमार्गेण गछता वीनां पक्षिणां पद यः वरुणः वेद । तथा समुद्रियः समुद्रेऽवस्थितः वरुणः नावः जले गच्छन्त्याः पद वेद जानाति सोऽस्मान् बन्धनान्मोचयत्विति शेषः । ऋसा.

[2]वेद मासो धृतव्रतो द्वादश प्रजावतः ।
वेदा य उपजायते ॥

धृतव्रतः स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः प्रजावतः तदा तदोत्पद्यमानप्रजायुक्तान् द्वादश मासः चैत्रादीन् फाल्गुनान्तान् वेद जानाति । यः त्रयोदशोऽधिकमासः उपजायते सवत्सरसमीपे स्वयमेवोत्पद्यते तमपि वेद । वाक्यशेषः पूर्ववत् । ऋसा.

[3]वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः ।
वेदा ये अध्यासते ॥

उरोः विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतः गुणैरधिकस्य वातस्य वायोः वर्तनि मार्ग वेद वरुणो जानाति । ये देवाः अध्यासते उपरि तिष्ठन्ति तानपि वेद जानाति । ऋसा.

[4]नि षसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥

धृतव्रतः पूर्वोक्तः वरुणः पस्त्यासु दैवीषु प्रजासु आ नि षसाद आगत्य निषण्णवान् । किमर्थम् । प्रजानां साम्राज्यसिद्ध्यर्थ, सुक्रतुः शोभनकर्मा । ऋसा.

अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति ।
कृतानि या च कर्त्वा ॥

अतः अस्माद्वरुणात् विश्वानि अद्भुता सर्वाण्याश्चर्याणि चिकित्वान् प्रज्ञावान् अभि पश्यति सर्वतोऽवलोकयति या कृतानि यान्याश्चर्याणि पूर्व वरुणेन संपादितानि । चकारात् अन्यानि यान्याश्चर्याणि कर्त्वा इतः पर कर्तव्यानि तानि सर्वाण्यभिपश्यतीति पूर्वत्रान्वयः । ऋसा.

दुरितमोचन, ऋतस्य धर्ता, सर्वस्य एक एव ईश्वरः

[1]वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य ।
मा तन्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥

हे वरुण मत् मत्सकाशात् रशनामिव रज्जुमिव आगः विहिताननुष्ठानजनित पाप वि श्रथय शिथिलीकुरु । विमोचयेत्यर्थः । ते त्वत्सबन्धिनः ऋतस्य उदकस्य पूर्णा खा नदीम् । खा इति नदीनाम । ता ऋध्याम लभेमहि । अपिच धिय कर्म वयतः सतन्वतः मे मम तन्तुः कर्मसततिः मा छेदि छिन्नो मा भूत् । नैरन्तर्येणेत्यर्थः । तथा ऋतोः समाप्तिकालात् पुरा पूर्व अपसः कर्मणः मात्रा शरीर प्राच्योदीच्याङ्गलक्षण मा शारि शीर्ण विकलं मा भूत् ।

ऋसा.

[3]अपो सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय ।

---

(१) ऋसं. १।२५।७.

(२) ऋसं. १।२५।८.

(३) ऋसं. १।२५।९.

(४) ऋसं. १।२५।१०, तैसं. १।८।१६।१, कासं. २।७ (४३), ७।१४ (८३), १५।८ (२३), ३८।४ (४४); मैसं. १।६।१२ (३२), २।६।१२ (३६), २।७।१६ (२३१), ४।४।६ (७), शुसं. १०।२७, २०।२; ऐब्रा. ३८।२।१, ३८।४।१, तैब्रा. १।७।१०।२, २।६।५।१, शब्रा. ५।४।४।५, १२।८।३।१०.

(१) ऋसं. १।२५।११.

(२) ऋसं. २।२८।५; मैसं. ४।१४।९ (१२०).

(३) ऋसं. २।२८।६, मैसं. ४।१४।९ (१२२) अपो सु (अपो षु).

**दामेव वत्साद्वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्चनेशे ॥**

हे वरुण भियस भय मत् मत्तः सु सुष्टु अपो म्यक्ष अपगमय । हे सम्राट् सम्यग्राजमान हे ऋतावः सत्यवन् यज्ञवन् वा वरुण मा मा अनु गृभाय अनुगृहाण । अपि च दामेव वत्सात् यथा दोग्धा वत्ससकाशात् बन्धनी रज्जु विमुञ्चति तथा अंहः पाप मत्सकाशात् वि मुमुग्धि विमुञ्च पृथक्कुरु । त्वदारे त्वत्तो दूरदेशे वर्तमानस्त्वदन्य इत्यर्थः । त्वत्तोऽन्यः कश्चित् निमिषश्चन निमेषस्यापि अक्षिपक्ष्मचलनस्यापि नहि ईशे नेष्टे । त्वमेवेश्वर इत्यर्थः । ऋसा.

राजा त्रसदस्यु परमेश्वरं वरुणं इन्द्रं चात्मत्वेनानुभवति

**[1]मम द्विता राष्ट्रं क्षत्रियस्य विश्वायोर्विश्वे अमृता यथा नः ।**
**क्रतु सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥**

क्षत्रियस्य क्षत्रियजात्युत्पन्नस्य विश्वायोः कृत्स्नमनुष्याधीशस्य । मम इत्यात्मनो निर्देशः । द्विता क्षितिस्वर्गभेदेन द्वित्वापन्न राष्ट्रम् । मम त्रसदस्योः विश्वे सर्वे अमृताः देवाः यथा नः अस्माक भवन्ति तथा राष्ट्र प्रजाश्चेत्यर्थः । वरुणस्य वारकस्य वरुणात्मनो वा कृष्टेः मनुष्यस्य तद्वतो वा उपमस्य । अन्तिकनामैतत् । सर्वेषामन्तिकतमस्य वव्रेः । रूपनामैतत् । रूपवतो मम क्रतुं कर्म सचन्ते सेवन्ते देवाः सर्वेऽपि । अहं च राजामि । राजतिरैश्वर्यकर्मा । सर्वेश्वरः भवामि । यद्वा । उपमस्य वव्रेः कृष्टेः राजामीति योज्यम् । ऋसा.

**[2]अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयन्त ।**
**क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥**

अहं एव च राज्ञा वरुणः भवामि । मह्यं मदर्थमेव प्रथमा मुख्यानि तानि प्रसिद्धानि असुर्याणि असुरविघातकानि बलानि धारयन्त अधारयन् देवाः । शिष्टं गतम् । ऋसा.

(१) ऋसं. ४।४२।१.
(२) ऋसं. ४।४२।२.

**[1]अहमिन्द्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके ।**
**त्वष्टेव विश्वा भुवनानि विद्वान्त्समैरयं रोदसी धारयं च ॥**

अह त्रसदस्युः इन्द्रः इन्द्रोऽप्यस्मि । अह वरुणः च । ते महित्वा महित्वेन उर्वी विस्तीर्णे गभीरे दुरवगाहे अवकाशवत्यौ वा सुमेके सुरूपे रजसी द्यावापृथिव्यौ ते अपि अहमेव । विद्वान् जानन्नह त्वष्टेव प्रजापतिरिव विश्वा भुवनानि सर्वाणि भूतानि समैरय सम्प्रैरयम् । रोदसी द्यावापृथिव्यौ धारय च धृतवानस्मि । ऋसा.

**[2]अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य ।**
**ऋतेन पुत्रो अदितेर्ऋतावोत त्रिधातु प्रथयद्वि भूम ॥**

अह एव उक्षमाणाः सिञ्चतीः अपः अपिन्व असेचयम् । तथा ऋतस्य उदकस्य आदित्यस्य वा सदने स्थाने निमित्ते सति दिव द्युलोक धारयम् । यद्वा । उदकाधारे स्थाने दिवमादित्य धारयम् । अहमेव ऋतेन उदकेन निमित्तेन अदितेः पुत्रः ऋतावा अभूवम् । उत अपि च भूम व्याप्तमाकाशं त्रिधातु त्रिप्रकार वि विशेषेण प्रथयत् । मदर्थमेव क्षित्यादिलोकत्रयमकार्षीत् परमेश्वरः । ऋसा.

**[3]मां नरः स्वश्वा वाजयन्तो मां वृताः समरणे हवन्ते ।**
**कृणोम्याजिं मघवाहमिन्द्र इयर्मि रेणुमभिभूत्योजाः ॥**

मां मामेव स्वश्वाः शोभनाश्वाः वाजयन्तः संग्राममिच्छन्तः नरः नेतारो भटाः । अनुगच्छन्ति इति शेषः । मा एव वृताः सन्तः समरणे सयामे हवन्ते आह्वयन्ति युद्धार्थम् । मघवा धनवान् अहमिन्द्रः सन् आजिं रणं कृणोमि करोमि । अभिभूत्योजाः परेषा अभिभाविबलोऽहं रेणु इयर्मि प्रेरयामि । ऋसा.

**[4]अहं ता विश्वा चकरं नकिर्मा दैव्यं सहो वरते अप्रतीतम् ।**

(१) ऋसं. ४।४२।३. (२) ऋसं. ४।४२।४.
(३) ऋसं. ४।४२।५. (४) ऋसं. ४।४२।६.

**यन्मा सोमासो ममदन्यदुक्थोभे भयेते रजसी अपारे ॥**

अहं त्रसदस्युः ता तानि प्रसिध्दानि विश्वा सर्वाणि चकरं अकार्षम् । अप्रतीतं अप्रतिगतं मा मां दैव्यं सहः देवसंबन्धि सहो बलं नकिः वरते नैव वारयति । यत् यस्मात् सोमासः सोमाः मा मां ममदन् अमदयन् । यत् च उक्था शस्त्राण्यपि ममदन् तस्मात् मत्तः अपारे दूरपारे उभे रजसी द्यावापृथिव्यौ भयेते चलतः ।

ऋसा.

सूर्यार्थमाकाशस्य विस्तारयिता, अन्तरिक्षबलपयःक्रतु-
वह्निसूर्यसोमानां यथास्थानेषु व्यवस्थापकः, सर्वस्य
राजा, जलजनयिता, कवितमः, मायी, जगतः
परिच्छेत्ता

**[1]प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।**
**वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥**

अत्रिः स्वात्मानं संबोध्य ब्रवीति । हे अत्रे त्वं सम्राजे सम्यक् राजमानायेश्वराय श्रुताय सर्वत्र श्रूयमाणाय वरुणाय उपद्रवस्य निवारकाय जनानामावरकाय चैतन्नामकाय देवाय बृहत् प्रभूतं गंभीरं दुरवगाहं बह्वर्थोपेतं प्रियं प्रियभूतं ब्रह्म स्तोत्ररूपं कर्म प्र अर्च प्रार्चय । प्रोच्चारयेत्यर्थः । यः वरुणः शमितेव चर्म शमिता पशुविशसनकर्ता यथोपस्तरणाय चर्म हन्ति तद्वत् पृथिवीं विस्तीर्णमन्तरिक्षम् । ‘ तृतीयस्यां पृथिव्याम् ’ ( तैसं. १।२।१२।१ ) इति श्रुतेः अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वम् । सूर्याय सूर्यस्य उपस्तिरे आस्तरणाय वि जघान विस्तारयामास । विस्तृतं हि व्यवहारयोग्यं भवति । तस्मात् व्यवहाराय अन्तरिक्षं विस्तारितवान् । ‘ उरुं हि राजा वरुणश्चकार ’ ( ऋसं. १।२४।८ ) इति ह्युक्तम् ।

ऋसा.

**[2]वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।**
**हृत्सु क्रतुं वरुणो अप्स्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥**

अयं वरुणः वनेषु वृक्षाग्रेषु अन्तरिक्षं वि ततान विस्तारितवान् । तथा वाजसनेयकं— ‘ वनेषु हीदमेषु वृक्षाग्रेष्वन्तरिक्षं विततं तस्मादाह वनेषु व्यन्तरिक्षं ततान ’ इति । वाजं बलं अर्वत्सु अश्वेषु वि ततान । पयः क्षीरं उस्रियासु गोषु । उस्रियेति गोनाम । उस्राविणोऽस्यां भोगा इति तद्व्युत्पत्तिः । हृत्सु हृदयेषु क्रतुं कर्मसंकल्पम् । यद्धि मनसा ध्यायति तत्कर्मणा करोति । अप्सु उदकेषु अग्निं वैद्युतमौर्वं वा । सर्वत्र वि ततानेति संबन्धः । किंच दिवि द्युलोके सूर्यं अदधात् स्थापितवान् । सोमं च अद्रौ पर्वतेऽदधात् ।

ऋसा.

**[1]नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।**
**तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥**

नीचीनबारं अधोमुखबिलं प्र ससर्ज कृतवान् । कम् । कवन्धम् । कवनमुदकं, तत् धीयतेऽत्रेति कवन्धो मेघः । तं तथाऽकरोत् । अथवा कवन्धमुदकम् । तदुदकं नीचीनबारं नीचीननिर्गमनबिलं चकार । मेघं विदार्य उदकमधोमुखं चकारेत्यर्थः । किं प्रतीत्युच्यते । रोदसी द्यावापृथिव्यौ अन्तरिक्षं च प्रति । लोकत्रयहितायेत्यर्थः । तेन उदकेन विश्वस्य सर्वस्य भुवनस्य भूतजातस्य राजा स्वामी वरुणः भूम भूमिं व्युनत्ति क्लेदयति । वृष्टिः सेक्ता पुमान् यवं न यवमिव यवान् यथा प्ररोहाय सर्वत्र प्रसारयति तद्वत् भूमिं सर्वत्रोनत्ति । अथवा वृष्टिर्वरुण इति संबन्धः । वर्षकः पर्जन्य इत्यर्थः । अस्मिन् पक्षे यवं पुरुष इवेति पुरुषशब्दोऽध्याहार्यः । अत्र ‘ नीचीनबारं वरुणः कवन्धम् ’ ( नि १०।४ ) इत्यादिनिरुक्तं द्रष्टव्यम् ।

ऋसा.

---

(१) ऋसं. ५।८५।१; कासं. १२।१५ ( ६१ ).

(२) ऋसं. ५।८५।२; तैसं. १।२।८।१ पय उस्रियासु ( पयो अघ्नियासु ) अप्स्वग्निं ( विक्ष्वग्निं ); कासं. २।६ ( ३७ ), ४।९ ( ५० ) पय उस्रियासु ( पयो अघ्न्यासु ) अप्स्वग्निं ( विक्ष्वग्निं ); मैसं. १।२।६ ( ४० ) अप्स्वाग्निं ( दिक्ष्वग्निं ). पूर्वार्धं कासंवत्; शुसं. ४।३१ अप्स्वग्निं ( विक्ष्वग्निं ); शाब्रा. ७।१०; शब्रा. ३।३।४।७.

(१) ऋसं. ५।८५।३; नि. १०।४.

[1]उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित् ।
समभ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः ॥

वरुणः भूमि पृथिवी प्रथितमन्तारिक्षम् । अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्व पूर्वमुक्तम् । उत अपि च द्यां द्युलोक उनत्ति क्लेदयति । यदा अयं दुग्ध उदकपूरण वष्टि कामयते । अथवा दुग्धमुदकम् । तेन तत्कार्यमोषध्यादिक लक्ष्यते । ओषध्यादयः प्रवर्धन्तामिति यदा कामयते आदित् अनन्तरमेव सं वसत समाच्छादयन्ति । के । पर्वतासः पर्ववन्तः अद्रयः । केन । अभ्रेण मेघेन । किंच तविषीयन्तः बलमिच्छन्तः वीराः विशेषेण वृष्टेः प्रेरयितारो मरुतः श्रथयन्त श्रथयन्ति मेघान् । ऋसा.

[2]इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचम् ।
मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण ॥

आसुरस्य असुरसंबन्धिनः । असुराणामस्य च वध्यघातकभावः सबन्धः । असुरहन्तुरित्यर्थः । अथवा असुरो मेघः । प्राणदानात् तत्सबन्धिनः श्रुतस्य विश्रुतस्य मही महती इमा माया प्रज्ञां प्र वोचं प्रब्रवीमि । कैषा मायेति सोच्यते । यः वरुणः अन्तरिक्षे तस्थिवान् तिष्ठन् मानेनेव दण्डेनेव सूर्येण पृथिवीं अन्तरिक्ष वि ममे परिच्छिनत्ति तस्यैषा माया । ऋसा.

[3]इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।
एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥

कवितमस्य प्रकृष्टप्रज्ञस्य देवस्य द्योतमानस्य स्तुत्यस्य वा वरुणस्य इमा सर्वप्रसिद्धा मही महती मायां प्रज्ञा नकिः नैव आ दधर्ष न हिनस्ति कश्चिदपि । ऊ नु इति पूरणौ । यत् यस्मात् एकं समुद्रं उद्ना उदकेन न पृणन्ति न पूरयन्ति । काः । एनीः एन्यः शुभ्रा गमनशीला वा आसिञ्चन्तीः उदकमासेचयन्त्यः अवनयः नद्यः । बह्वयो नद्यः सर्वदोदकेन पूरयन्त्योऽपि नैकमपि समुद्र पूरयन्तीति । इद वरुणस्य महत् कर्म इति । अत्र अन्तरिक्षविस्तारादिसमुद्रापूरणपर्यन्त कर्म परमेश्वरस्यैवोचित न वरुणस्येति न वाच्य, तस्य वरुणादिरूपावस्थानात् । ' एष ब्रह्म ' इत्यादिश्रुतेः । ऋसा.

(१) ऋसं. ५।८५।४.
(२) ऋसं. ५।८५।५.
(३) ऋसं. ५।८५।६; नि. ६।१३।१.

गुरुमित्रभ्रात्रादिसंबधिपापनिवारक.

[1]अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद् भ्रातरं वा ।
वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत् ॥

हे वरुण अर्यम्यम् । अर्यमैवार्यम्यः । प्रदातारमित्यर्थः । अथवा ईरणात् मननात् च शास्तीत्यर्यमा गुरुः, तम् । वा अथवा मित्र्यम् । अनुरक्तमित्यर्थः । वा अथवा सखाय समानख्यान सदमित् सर्वदैव भ्रातरं वा । नित्य निरन्तर वेश निकटनिकेतनवर्तिन वा । अरण वा अशब्दमित्यर्थः । अथवा अरणमदातार वा नित्य निरन्तरम् । एतान् प्रति यत्सीं यदेतत् आगः अपराध चकृम तत् शिश्रथः अस्मत्तो विनाशय । ऋसा.

मिथ्याभिशंसनाज्ञानकृतदुरितमोचन

[2]कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥

कितवासः कितवा द्यूतकृतः । किं तवास्ति, सर्व मया जितमिति वदतीति कितवः । ते दीवि न देवने द्यूते यथा यद्रिरिपुः लेपयन्ति पापमारोपयन्ति तथास्मासु द्वेष्टारो मयि त्वमेतत् पापमकरोः इत्याक्षिपन्ति । अत्र पुरस्तादुपचारोऽपि नकार उपमार्थीयः । वा अथवा । घ इति पूरणः । यत् पाप सत्य आरोपमन्तरेण कृतवन्तः स्मः । उत अपि च यत् कृतं पाप न विद्म न जानीमः ता तानि सर्वा सर्वाणि शिथिरेव शिथिलानीव शिथिल-

(१) ऋसं. ५।८५।७.
(२) ऋसं. ५।८५।८; तैसं ३।४।११।६ देवाधा (देवाथा); कासं. २३।१२ (४६), मैसं. ४।१४।३ (४०) तैसंवत्.

बन्धनानि फलानीव वि ष्य विमोचय । हे देव अध अनन्तर ते तव प्रियासः प्रियाः स्याम भवेम ।

ऋसा.

द्यावापृथिव्यो स्तम्भन , सूर्यस्य नक्षत्राणा च प्रेरक , भूमेर्विस्तारयिता, अनेनस भक्तस्य ऋषेः दिदृक्षाया. अन्तर्वर्तित्वेन समर्पिपयिषाया समीपजिगमिषायाश्च विषयः, आनन्ददश्च

[1]धीरा त्वस्य महिना जनूंपि वि यस्तस्तम्भ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥

अस्य वरुणस्य जनूंषि जन्मानि महिना महिम्ना, तु क्षिप्र धीरा धीराणि धैर्यवन्ति भवन्ति । यः वरुणः उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यावपि वि तस्तम्भ विविध स्तब्धे स्वकीये स्थाने स्थिते अकरोत् । यश्च बृहन्त महान्तं नाकमादित्यं नक्षत्रं च ऋष्व दर्शनीय द्विता द्वैधं प्र नुनुदे प्रेरयति स्म । अहनि सूर्य दर्शनीय प्रेरयति रात्रौ नक्षत्र तथेति द्विप्रकारः । भूम भूमिं च यः पप्रथत् अप्रथयत् विस्तारितवान् । तस्यास्य वरुणस्येत्यन्वयः ।

ऋसा.

[2]उत स्वया तन्वा सं वदे तत्कदा न्वन्तर्वरुणे भुवानि ।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम् ॥

वरुणं शीघ्रं दिदृक्षमाण ऋषिरनया वितर्कयति । उतेति विचिकित्सायाम् । उत किं स्वया तन्वा स्वीयेनात्मीयेन शरीरेण स वदे सहवदनं करोमि । आहो स्वित् तत्तेन वरुणेन सह सं वदे । कदा नु कदा खलु वरुणे देवे अन्तः भुवानि अन्तर्भूतो भवानि । वरुणस्य चित्ते सलग्नो भवानीत्यर्थः । अपि च मे मदीय हव्य स्तोत्रं हविर्वा अहृणानः अक्रुध्यन् वरुणः किं केन हेतुना जुषेत सेवेत । सुमनाः शोभनमनस्कः सन्नह कदा कस्मिन्काले मृळीकं सुखयितार वरुणमभि ख्य अभिपश्येयम् ।

ऋसा.

(१) ऋसं. ७।८६।१, कासं. ४।१६ ( १४३ ).
(२) ऋसं. ७।८६।२.

[1]पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम् ।
समानमिन्मे कवयश्चिदाहुरय ह तुभ्य वरुणो हृणीते ॥

हे वरुण तदेनः पाप पृच्छे त्वा पृच्छामि । दिदृक्षु, छान्दसः सुलोपः । द्रष्टुमिच्छन्नह येन पापेन हेतुना त्वदीयैः पाशैर्बद्धोऽस्मि पृष्टः सन् तत्पाप कथय । अहं विपृच्छ विविध प्रष्टु चिकितुषः विदुषो जनान् उपो एमि उपागाम् । ते कवयश्चित् क्रान्तदर्शिनो जनाश्च मे मह्य समानमित् समानमेवैकरूपमेवाहुः अकथयन् । यदाहुस्तदाह । हे स्तोतः तुभ्यमय ह अयमेव वरुणः हृणीते क्रुध्यतीति । अतः क्रोध परित्यज्यास्मान् पाशेभ्यो मोचय ।

ऋसा.

[2]किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम् ।
प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥

हे वरुण ज्येष्ठ अधिक किमाग आस कोऽपराधो मया कृतो बभूव । यत् येनागसा सखाय मित्रभूत सन्त स्तोतारं जिघासंसि हन्तुमिच्छसि । हे दूळभ दुर्दभ अन्यैर्बाधितुमशक्य स्वधावः तेजस्विन् हे वरुण तत् आगः मे मह्यं प्र वोचः प्रब्रूहि । एवं सति तस्य प्रायश्चित्त कृत्वा अनेनाः अपापः सन्नहं तुरः त्वरमाणः शीघ्रः नमसा नमस्कारेण हविषा वा त्वा अव इयां उपगच्छेयम् ।

ऋसा.

पैत्र्यात्स्वकृताच्च पापात् मोचयिता

[3]अव द्रुग्धानि पित्र्या सृजा नोऽव या वय चकृमा तनूभिः ।
अव राजन्पशुतृपं न तायु सृजा वत्सं न दाम्नो वसिष्ठम् ॥

हे वरुण पित्र्या पितृतः प्राप्तानि नः अस्मदीयानि द्रुग्धानि द्रोहान् बन्धनहेतुभूतान् अव सृज विमुञ्च । अस्मत्तो विश्लेषय । वय च या यानि द्रोहजातानि तनूभिः

(१) ऋसं. ७।८६।३.
(२) ऋसं. ७।८६।४.
(३) ऋसं. ७।८६।५.

शरीरैः चकृम कृतवन्तः स्म तानि च अव सृज । हे राजन् राजमान वरुण पशुतृप न तायु स्तैन्यप्रायश्चित्त कृत्वाऽवसाने घासादिभिः पशूना तर्पयितारं स्तेनमिव दाम्नः रज्जोः वत्स न वत्समिव च वसिष्ठ मा बन्धकात् पापादव सृज विमुञ्च । ऋसा.

विविधपापकारणमीमासा

**[१]न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ।**
**अस्ति ज्यायान्कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥**

हे वरुण सः स्वो दक्षः पुरुपस्य स्वभूत तद्बल पापप्रवृत्तौ कारण न भवति । किं तर्हि ध्रुतिः स्थिरा उत्पत्तिसमय एव निर्मिता दैवगतिः कारणम् । सा च ध्रुतिर्वक्ष्यमाणरूपा । सुरा प्रमादकारिणी मन्युः क्रोधश्च गुर्वादिविषयः सन्ननर्थहेतुः । विभीदकः द्यूतसाधनोऽक्षः । स च द्यूतेषु पुरुष प्रेरयन्ननर्थहेतुर्भवति । अचित्तिः अज्ञानं अविवेककारणम् । अत ईदृशी दैवक्लृप्तिरेव पुरुषस्य पापप्रवृत्तौ कारणम् । अपि च कनीयसः अल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तौ उपारे उपागते समीपे नियन्तृत्वेन स्थितः ज्यायानधिक ईश्वरोऽस्ति । स एव त पापे प्रवर्तयति । तथा चाम्नातम्—‘ एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते ’ ( कौउ. ३ । ८ ) इति । एव च सति स्वप्नश्चन स्वप्नोऽपि अनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति । इत् इति पूरकः । स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते, किमु वक्तव्य जाग्रति कृतैः कर्मभिः पापान्युत्पद्यन्ते इति । अतो ममापराधो दैवागत इति हे वरुण त्वया क्षन्तव्य इति भावः । ऋसा.

अपापेन परिचरणीयः स. कवितरः, योगक्षेमोपद्रवशमनः, धनदश्च

**[२]अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।**
**अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥**

मीळ्हुषे सेक्त्रे कामाना वर्षित्रे भूर्णये जगतो भर्त्रे देवाय दानादिगुणयुक्ताय वरुणाय अनागाः तत्प्रसादादपापः सन् अहं अर अल पर्याप्तं कराणि परिचरण करवाणि । दासो न यथा भृत्यः स्वामिने सम्यक् परिचरति तद्वत् । अर्यः स्वामी स च देवः अचितः अजानतोऽस्मान् अचेतयत् चेतयतु प्रज्ञापयतु । गृत्सं स्तोतार च कवितरः प्राज्ञतरो देवः राये धनाय धनप्राप्त्यर्थं जुनाति जुनातु प्रेरयतु । ऋसा.

**[१]अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ।**
**शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ॥**

हे स्वधावः अन्नवन् वरुण तुभ्यं त्वदर्थं क्रियमाणः अयं एतत्सूक्तात्मकः स्तोमः स्तोत्र हृदि त्वदीये हृदये सु सुष्ठु उपश्रितः उपगतः समवेतः अस्तु । चिदिति पूरकः । अप्राप्तस्य प्रापण योगः, प्राप्तस्य रक्षणं क्षेमः । नः अस्मदीये क्षेमे रक्षणे श उपद्रवाणा शमनं अस्तु । योगे च नः अस्मदीये प्रापणे शमु शमनमेवास्तूपद्रवाणाम् । हे वरुणादयो देवाः नः अस्मान् सर्वदा स्वस्तिभिः अविनाशैः पात रक्षत । ऋसा.

स्वान्तर्हितसर्वलोक , सूर्यपथकृत् , जलजनक , रात्रिकर्ता, वाग्वात्मा, द्यावापृथिव्यो सर्वस्थानेषु प्रियस्थितिः, मेधावी, शिक्षकः, सुपारक्षत्र., सतः स्वामी, पापिनोऽप्यनुकम्पक

**[२]रदत्पथो वरुणः सूर्याय प्रार्णांसि समुद्रिया नदीनाम् ।**
**सर्गो न सृष्टो अर्वतीर्ऋतायञ्चकार महीरवनीरहभ्यः ॥**

अय वरुणः देवः सूर्याय सर्वस्य प्रेरकायादित्याय पथः मार्गान् अन्तरिक्षप्रदेशान् प्र रदत् प्रायच्छत् । समुद्रिया समुद्रे उदधौ भवानि । यद्वा । समुद्द्रवन्त्यस्मादाप इति समुद्रमन्तरिक्षम् । तत्र भवानि । अर्णांसि उदकानि नदीना प्रासृजत् । सर्गो न । सृज्यते युद्धभूमौ सादिना प्रेर्यते इति सर्गोऽश्वः । स यथा अर्वतीः

(१) ऋसं. ७।८६।६.
(२) ऋसं. ७।८६।७.

(१) ऋसं. ७।८६।८.
(२) ऋसं. ७।८७।१, कासं. १२।१५ (६०).

वडवाः प्रति शीघ्रं गच्छति तद्वत् ऋतायन् ऋत शीघ्रं गमनमात्मन इच्छन् महीः महतीः अवनीः रात्रीः अहभ्यः अहोभ्यः सकाशात् चकार भेदेन कृतवान्। अस्तं गच्छन् सूर्य एव वरुण इत्युच्यते । स हि स्वगमनेन रात्रीर्जनयति । ऋसा.

[१]आत्मा ते वातो रज आ नवीनोत्पशुर्न भूर्णि-र्यवसे ससवान् ।
अन्तर्मही बृहती रोदसीमे विश्वा ते धाम वरुण प्रियाणि ॥

हे वरुण ते त्वदीयस्त्वयाऽन्तरिक्षे प्रेर्यमाणः वातः वायुः आत्मा सर्वस्य प्राणिजातस्य प्राणरूपेण धारयिता । स च रजः उदक आ नवीनोत् समन्तात् प्रेरयति । वातेन हि वृष्टिर्जायते । भूर्णिः जगतो भर्ता स वायुः यवसे घासे प्रक्षिप्ते सति यथा पशुरन्नवान् भवति तद्वत् ससवान् । 'ससम्' इत्यन्ननाम । तद्वान् भवति । हविर्लक्षणमन्नमपि तस्मै प्रयच्छन्तीत्यर्थः । यद्वा सनोतेः क्वसौ रूपम् । ततः ससवान् संभक्तवान् वातो घासे सति पशुर्यथा भारवाही भवति तद्वज्जगतो भर्ता । हे वरुण मही महत्यौ बृहती परिवृढे इमे रोदसी द्यावापृथिव्यौ अन्तः मध्ये । द्यावापृथिव्योर्मध्ये इत्यर्थः । ते तव विश्वा सर्वाणि धाम धामानि स्थानानि तेजांसि वा प्रियाणि सर्वेषां प्रीतिकराणि भवन्ति । ऋसा.

[२]परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यन्ति रोदसी सुमेके ।
ऋतावानः कवयो यज्ञधीराः प्रचेतसो य इषयन्त मन्म ॥

स्पशन्ति स्पृशन्तीति स्पशः चराः । वरुणस्य देवस्य स्पशः चराः स्मदिष्टाः । स्मदित्येतत् प्रशस्यार्थे सहार्थे च वर्तते । प्रशस्तगतयः । यद्वा । सह प्रेषिताः सन्तः । सुमेके शोभनमेहने सुरूपे वा उभे रोदसी द्यावापृथिव्यौ परि पश्यन्ति परितः ईक्षन्ते । उभयोर्लोकयोर्वर्तमानान् पुण्यापुण्यकारिणो जनान् पश्यन्तीत्यर्थः । यस्मादेव तस्मात् तद्भीत्या ऋतावानः कर्मवन्तः यज्ञधीराः यज्ञेषु कृतबुद्धयः प्रचेतसः प्राज्ञाः कवयः क्रान्तदर्शिनः ये जनाः मन्म मन्मानि स्तोत्राणि इषयन्त गमयन्ति वरुण प्रापयन्ति । तानपि परिपश्यन्तीत्यर्थः । अतः अस्मानपि स्तोतॄन् ज्ञात्वा पापात् मुञ्चन्त्वित्यृषि-राशास्ते । ऋसा.

[१]उवाच मे वरुणो मेधिराय त्रिः सप्त नामाघ्न्या बिभर्ति ।
विद्वान्पदस्य गुह्या न वोचद्युगाय विप्र उपराय शिक्षन् ॥

मेधिराय मेधाविने मे मह्यं वरुणः उवाच उक्तवान्। किमुक्तवान् तदाह—त्रिः सप्त एकविंशतिसङ्ख्याकानि नामानि अघ्न्या गौः बिभर्ति धारयतीति । वागत्र गौरुच्यते । सा च उरसि कण्ठे शिरसि च बद्धानि गायत्र्यादीनि सप्त छन्दसा नामानि बिभर्ति । यद्वा । वेदात्मिका वागेकविंशतिसंस्थाना यज्ञानां नामानि बिभर्ति धारयति । अपर आह । गौः पृथिवी । तस्याश्च 'गौर्ग्मा ज्मा' इति पठितान्येकविंशतिनामानीति । अपि च विद्वान् जानन् विप्रः मेधावी स वरुणः युगाय युक्ताय उपराय उप समीपे रममाणायान्तेवासिने मह्यं शिक्षन् उपदिशन् पदस्य उत्कृष्टस्य स्थानस्य ब्रह्मलोक-लक्षणस्य सबन्धीनि गुह्या गुह्यानि रहस्यान्युपदेश-गम्यानि । नशब्दश्चार्थे । इमानि च वोचत् उक्तवान् । अतोऽहं वरुणस्य शिष्योऽस्मि । तस्मात् स वरुणः अस्मान् पापात् मोचयत्वित्यर्थः । ऋसा.

[२]तिस्रो द्यावो निहिता अन्तरस्मिन्तिस्रो भूमी-रुपराः षड्विधानाः ।
गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेङ्खं हिर-ण्ययं शुभे कम् ॥

तिस्रः त्रिप्रकारा उत्तममध्यमाधमभावेन त्रिविधाः द्यावः द्युलोकाः अस्मिन् वरुणे अन्तः मध्ये निहिताः । तिस्रः पूर्ववत् त्रिविधाः भूमीः भूम्यश्च षड्विधानाः । विधान विधा । वसन्ताद्यृतुभेदेन षड्विधाः प्रकाराः यासु तादृश्यः । उपराः अस्मिन्नेव वरुणे उप्ता अन्त-र्भूताः । लोकाना त्रित्वं च 'त्रयो वा इमे त्रिवृतो लोकाः' (ऐब्रा. २।१७) इत्यादिना ब्राह्मणेनाव-गम्यते । 'तिस्रो भूमीर्धारयन्' (ऋसं. २।२७।८)

(१) ऋसं. ७।८७।२. (२) ऋसं. ७।८७।३.

(१) ऋसं. ७।८७।४. (२) ऋसं. ७।८७।५.

इति निगमश्च भवति । इमौ लोकावावृत्य वरुणस्तिष्ठतीत्यर्थः । अपि च गृत्सः स्तुत्यः राजा ईश्वरः सः वरुणः दिवि अन्तरिक्षे हिरण्यय हिरण्मय सुवर्णमय हितरमणीयं वा प्रेङ्ख दोलावद्दिग्द्वयसस्पर्शिनं एत सूर्यं शुभे क दीप्त्यर्थं चक्रे कृतवान् । 'दिवि सूर्यमदधात्सोममद्रौ' (ऋस. ५।८५।२) इति हि श्रूयते ।

ऋसा.

[१]अव सिन्धुं वरुणो द्यौरिव स्याद्द्रप्सो न श्वेतो मृगस्तुविष्मान् ।
गम्भीरशंसो रजसो विमानः सुपारक्षत्रः सतो अस्य राजा ॥

द्यौरिव सूर्य इव दीप्तः वरुणः सिन्धु समुद्र अव स्यात् वेलायामवस्थापयति । यथा वेला नातिक्रामति तथा करोतीत्यर्थः । कीदृशो वरुणः । द्रप्सो न द्रवणशील उदबिन्दुरिव श्वेतः शुभ्रवर्णः मृगः । लुप्तोपममेतत् । गौरमृग इव तुविष्मान् बलवान् प्रवृद्धो वा गम्भीरशंसः । गम्भीरो महान् शसः स्तोत्रं यस्य स तथोक्तः । रजसः उदकस्य विमानः निर्माता सुपारक्षत्रः सुष्ठु दुःखात् पारक क्षत्र बल धन वा यस्य तादृशो वरुणः सतः विद्यमानस्य अस्य जगतः राजा ईश्वरो भवति ।

ऋसा.

[२]यो मृळयाति चक्रुषे चिदागो वयं स्याम वरुणे अनागाः ।
अनु व्रतान्यदितेर्ऋधन्तो यूय पात स्वस्तिभिः सदा नः ॥

आगः अपराध चक्रुषे चित् कृतवतेऽपि स्तोत्रे यः वरुणः मृळयाति उपदयां करोति तस्मिन् वरुणे अनागाः अनागसोऽनपराधाः सन्तः वय स्याम वर्तमाना भवेम । किं कुर्वन्तः । अदितेः अदीनस्य वरुणस्य सबन्धीनि व्रतानि कर्माणि अनु आनुपूर्व्येण ऋधन्तः समर्धयन्तः । हे वरुणादयो देवाः यूयमस्मान् सर्वदा कल्याणैः पालयत ।

ऋसा.

मनुष्याणा रक्षक, मायया विश्वधारक, मनुष्यैरनुष्ठीयमानव्रतपतिः; दिशा भुवनाना च धर्ता, स्वर्गस्य कर्ता, गुह्यनाम्नां वेदिता, सर्वकाव्याना नाभिरिवाश्रय.

[१]अस्मा ऊ षु प्रभूतये वरुणाय मरुद्भ्योऽर्चा विदुष्टरेभ्यः ।
यो धीता मानुषाणां पश्वो गाइव रक्षति नभन्तामन्यके समे ॥

हे स्तोतः सु प्रभूतये प्रकृष्टधनाय अस्मै वरुणाय विदुष्टरेभ्यः विद्वत्तरेभ्यः मरुद्भ्यः च अर्च स्तुहि । यः वरुणः धीता कर्मणा मानुषाणा मनुष्याणा पश्वः पशून् गाइव रक्षति । अन्यके शत्रवोऽपि समे सर्वे नभन्ता अग्निना हिंस्यन्ताम् ।

ऋसा.

[२]तमू षु समना गिरा पितॄणां च मन्मभिः ।
नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे ॥

तमु तमेव वरुणं समना समानया गिरा स्तुत्या सु अभिष्टौमि । पितॄणा मन्मभिः स्तोमैः च अभिष्टौमि । नाभाकस्य ऋषेः प्रशस्तिभिः स्तोत्रैश्चाभिष्टौमि । सिन्धूनां स्यन्दमानाना नदीना उप समीपे यः उदये उद्गच्छति यश्च सप्तस्वसा स मध्यमः इति वाग्भिर्निरुच्यते । अन्यके दुर्धियः शत्रवः समे सर्वे नभन्ता मा भूवन् । तथा च यास्कः—'त स्वभिष्टौमि समानया गिरा, गीत्या स्तुत्या, पितॄणा च मननीयैः स्तोमैर्नाभाकस्य प्रशस्तिभिः । ऋषिर्नाभाको बभूव । यः स्यन्दमानानामासामपामुपोदये । सप्तस्वसारमेनमाह वाग्भिः, स मध्यम इति निरुच्यतेऽथैष एव भवति । नभन्तामन्यके समे मा भूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसकल्पाः' (नि. १०।५) इति ।

ऋसा.

[३]स क्षपः परि षस्वजे न्युस्रो मायया दधे स विश्वं परि दर्शतः ।
तस्य वेनीरनु व्रतमुषस्तिस्रो अवर्धयन्नभन्तामन्यके समे ॥

सः वरुणः क्षपः रात्रीः परि षस्वजे परिष्वजते ।

(१) ऋसं. ७।८७।६.
(२) ऋसं. ७।८७।७.

(१) ऋसं. ८।४१।१. (२) ऋसं. ८।४१।२; नि. १०।५।१. (३) ऋसं. ८।४१।३.

अपि च दर्शतः दर्शनीयः सः वरुणः उस्रः उत्सरणशीलः सन् विश्व मायया कर्मणा परि परितः नि दधे निदधाति । किंच तस्य वरुणस्य व्रत कर्म वेनीः कामयमानाः प्रजाः तिस्रः उषः त्रिषु प्रातर्माध्यदिनं साय च अनु अवर्धयन् अनुवर्धयन्ति । सिद्धमन्यत् । ऋसा.

**य[1]ः ककुभो निधारयः पृथिव्यामधि दर्शतः ।**
**स माता पूर्व्यं पदं तद्वरुणस्य सप्त्यं स हि गोपा-**
**इवेर्यो नभन्तामन्यके समे ॥**

यः वरुणः पृथिव्यामधि पृथिव्या उपरि दर्शतः दर्शनीयः सन् ककुभः दिशः निधारयः निधारयति सः वरुणः माता निर्माता । पूर्व्यं प्रत्न पद स्वर्गाख्य स्थान सप्त्य अस्माभिश्च सर्पणीयं तत् वरुणस्य स्वकृतम् । अपि च स हि स एव इर्यः ईश्वरः सन् गोपाइव गोपाल इव पशूनामस्माक रक्षिता । सिद्धमन्यत् । ऋसा.

**यो[2] धर्ता भुवनानां य उस्राणामपीच्या वेद**
**नामानि गुह्या ।**
**स कविः काव्या पुरु रूप द्यौरिव पुष्यति नभ-**
**न्तामन्यके समे ॥**

यः वरुणः भुवनाना धर्ता धारयिता यः च उस्राणा देवाधिष्ठानभूताना रश्मीनां अपीच्या अपीच्यान्यन्तर्हितानि गुह्या गुह्यानि गुहाया निहितानि नामानि वेद जानाति सः वरुणः कविः प्राज्ञः सन् काव्या काव्यानि कविकर्माणि पुरु बहूनि रूपं द्यौरिव पुष्यति । सिद्धमन्यत् । ऋसा.

**यस्मि[3]न्विश्वानि काव्या चक्रे नाभिरिव श्रिता ।**
**त्रितं जूती सपर्यत व्रजे गावो न संयुजे युजे**
**अश्वाँ अयुक्षत नभन्तामन्यके समे ॥**

यस्मिन् वरुणे विश्वानि सर्वाणि काव्या काव्यानि कविकर्माणि चक्रे नाभिरिव यथा रथस्य चक्रे नाभिस्तथा श्रिता श्रितानि त त्रितं त्रिस्थान वरुण जूती जूत्या क्षिप्र सपर्यत हे मदीया जनाः परिचरत । किमर्थमित्यत आह । व्रजे गोष्ठे गावो न यथा गाः संयुजे सयोगार्थं सह स्थापयितु युजे युञ्जन्ति तथाऽस्माकमभियोगाय अश्वान-

(१) ऋसं. ८।४१।४; ऐब्रा. २९।८।३.
(२) ऋसं. ८।४१।५.
(३) ऋसं. ८।४१।६.

युक्षत सपत्ना युञ्जन्ति । अतस्तदुपद्रवपरिहाराय वरुणं परिचरतेत्यर्थः । ऋसा.

देवानुष्ठेयव्रत , समुद्ररूप , तेजसा मायानिवारकः, तेजसा त्रिलोकव्यापी, द्यावापृथिव्यो स्तम्भनः

**य[1] आस्वत्क आशये विश्वा जातान्येषाम् ।**
**परि धामानि मर्मृशद्वरुणस्य पुरो गये विश्वे**
**देवा अनु व्रत नभन्तामन्यके समे ॥**

.... त्परिमृशतः वरुणस्य पुरो गये रथस्य पुरस्ताद्भवति तस्य वरुणस्य पुरस्तात् विश्वे सर्वे देवाः व्रत कर्म अनुगच्छन्तीत्यर्थः । सिद्धमन्यत् । ऋसा.

**स[2] समुद्रो अपीच्यस्तुरो द्यामिव रोहति नि**
**यदासु यजुर्दधे ।**
**स माया अर्चिना पदास्तृणान्नाकमारुहन्नभन्ता-**
**मन्यके समे ॥**

यस्मादापः समुद्द्रवन्ति सः वरुणः समुद्रः अपीच्यः अन्तर्हितः तुरः क्षिप्रः द्यामिव यथादित्यो द्यां रोहति तथा नाक रोहति । अपि च यत् यः वरुणः आसु दिक्षु यजुः प्रजाभ्यो दान नि दधे निदधाति सः वरुणः मायाः असुराणां मायाः अर्चिना अर्चिष्मता पदा स्थानेन । तेजसेत्यर्थः । आ अस्तृणात् समन्ताद्धिनस्ति । नाक स्वर्ग आरुहत् आरोहति । सिद्धमन्यत् । ऋसा.

**यस्य[3] श्वेता विचक्षणा तिस्रो भूमीरधिक्षितः ।**
**त्रिरुत्तराणि पप्रतुर्वरुणस्य ध्रुवं सदः स सप्ताना-**
**मिरज्यति नभन्तामन्यके समे ॥**

यस्य वरुणस्य अधिक्षितः अन्तरिक्षेऽधिवसतः श्वेता श्वेतानि विचक्षणा तेजासि तिस्रो भूमीः त्रिरुत्तराणि तिसृणामधिस्थितानि भुवनानि पप्रतुः प्रथयन्ति । तथा च मन्त्रवर्णः ‘ तिस्रो भूमीर्धारयन् त्रीँरुत द्यून् ’ ( ऋस. २।२७।८ ) इति । तस्य । वरुणस्य सदः स्थानं ध्रुवं अचलमिति । किच सः वरुणः सप्तानां सिन्धूनां इरज्यति ईश्वरो भवति । सिद्धमन्यत् । ऋसा.

**यः[4] श्वेताँ अधिनिर्णिजश्चक्रे कृष्णाँ अनु व्रता ।**
**स धाम पूर्व्यं ममे यः स्कम्भेन वि रोदसी**
**अजो न द्यामधारयन्नभन्तामन्यके समे ॥**

(१) ऋसं. ८।४१।७. (२) ऋसं. ८।४१।८.
(३) ऋसं. ८।४१।९. (४) ऋसं. ८।४१।१०.

यः वरुणः निर्णिजः आत्मीयान् रश्मीन् दिवा श्वेतान् अधि चक्रे अधिकरोति तथा रात्रौ कृष्णान् चक्रे। सः वरुणः अनु व्रता कर्माणि लक्षीकृत्योभयविधकर्मानुगुण पूर्व्यं धाम अन्तरिक्ष दिव वा ममे निर्ममे। अपि च यः स्कम्भेन अन्तरिक्षेण अजो न यथा आदित्यः द्या धारयति तथा रोदसी द्यावापृथिव्यौ वि अधारयत् विधारयति सः वरुण इत्यर्थः। सिद्धमन्यत्। ऋसा.

द्युस्तम्भ', पृथिवीकर्ता, सर्वभुवनाधिष्ठाता, अमृतगोप्ता, क्रतोर्बलस्य च वर्धन

**अस्तभ्नाद्द्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः।**
**आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि॥**

विश्ववेदाः विश्वधनः असुरः बलवान् वरुणः द्या अस्तभ्नात्। तथा पृथिव्याः च वरिमाणं परिमाण अमिमीतं चक्रे। एव निर्मितानि विश्वा सर्वाणि भुवनानि सम्राट् भूत्वा आसीदत् च अध्यतिष्ठच्च। वरुणस्य तानि एतानि व्रतानि कर्माणि विश्वेत् विश्वान्येव। अतो वर्णयितुमशक्यानीत्यर्थः। ऋसा.

**एवा वन्दस्व वरुणं बृहन्त नमस्या धीरममृतस्य गोपाम्।**
**स नः शर्म त्रिवरूथं वि यंसत्पातं नो द्यावापृथिवी उपस्थे॥**

हे स्तोतः बृहन्त महान्तं वरुणं एव एवं वन्दस्व स्तुहि। अमृतस्य गोपा. गोपायितार धीरं प्राज्ञं वरुणं नमस्य नमस्कुरु च। सः वरुणः नः अस्मभ्यं त्रिवरूथ त्रिस्थान शर्म गृहं वि यंसत् प्रयच्छतु। उपस्थे उपस्थाने वर्तमानान् नः अस्मान् द्यावापृथिवी द्यावापृथिव्यौ पातं रक्षतम्। ऋसा.

**इमां धियं शिक्षमाणस्य देव क्रतु दक्षं वरुण सं शिशाधि।**
**ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम॥**

हे देव द्योतमान वरुण इमा धियं इदं कर्म शिक्षमाणस्य अनुतिष्ठतो मम क्रतु प्रज्ञानं दक्ष बल च सं शिशाधि तीक्ष्णीकुरु। यया नावा यज्ञरूपया विश्वा सर्वाणि दुरिता दुरितानि अति तरेम तां सुतर्माण सुष्ठु तारयित्री यज्ञरूपा नाव अधि रुहेम वयमारुहेम। दुःखसागरतरणे हेतुत्वाद्यज्ञो नौरित्यत्र व्यपदिश्यते। ऋसा.

सर्वेषामधिष्ठाता, समीपसाक्षी, स्थिरचरज्ञाता, सर्वगूढागूढचेष्टितद्रष्टा, कृत्स्नजगद्व्यापकः, जलनिलीन., अनृतवक्तृनिग्राहकपाशधर'

**बृहन्नेषामधिष्ठाता अन्तिकादिव पश्यति।**
**यस्तायन्मन्यते चरन्त्सर्वं देवा इदं विदुः॥**

बृहन् महान् परिवृढो वा वरुणः एषा दुरात्मनां शत्रूणा अधिष्ठाता नियन्ता सन् तैः कृतं सर्वं अन्याय्यं अन्तिकादिव पश्यति समीपदेशादिव जानाति। न तस्य व्यवधायक किंचिदस्तीत्यर्थः। यः वरुणः तायत् सातत्येन वर्तमान स्थिरवस्तु चरत् चरणशील नश्वर च वस्तु मन्यते। स्थावरजङ्गमात्मक सर्वं जगज्जानातीत्यर्थः। स बृहन् इति संबन्धः। ईदृग्विधज्ञानसद्भावं वरुणस्य उपपादयति सर्वमिति। व्यवहित विप्रकृष्ट स्थिरं नश्वर स्थूलं सूक्ष्मं इत्येतादृग् इद सर्वं अतिरोहितज्ञानत्वात् देवाः विदुः जानन्ति। असा.

**यस्तिष्ठति चरति यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम्।**
**द्वौ संनिषद्य यन्मन्त्रयेते राजा तद्वेद वरुणस्तृतीयः॥**

पूर्वस्यामृचि एषां इत्युक्तम्। तत्र इदमा के पुनः

(१) ऋसं ८।४२।१; कासं. २।६ (३६) मसुरो (मृषभो), ऐब्रा. ५।४।२५, शाब्रा. ९।६; गोब्रा. २।४।१५.

(२) ऋसं. ८।४२।२; कासं. १७।१९ (१०७), मैसं. १।२।१३ (८६); ऐब्रा. ५।४।२७, शाब्रा. ९।६; तैब्रा. २।५।८।४ पातं नो......उपस्थे (यूयं पात स्वस्तिभि सदा नः).

(१) ऋसं. ८।४२।३, तैसं. १।२।२।२; कासं. २।३ (९) शिक्षमाणस्य (शिक्षमानस्य) वरुण (वरुणं) रुहेम (रुहेयम्), मैसं. १।२।२ (१५) रुहेम (रुहेयम्); ऐब्रा. ३।२।२५.

(२) असं. ४।१६।१. (३) असं. ४।१६।२.

प्रतिनिर्दिश्यन्ते इति तान् निर्दिशति यस्तिष्ठतीति पूर्वार्धेन । यः शत्रुस्तिष्ठति अभिमुख अवतिष्ठते यश्चरति गच्छति यश्च वञ्चति कौटिल्येन प्रतारयति यः शत्रुः निलायं निलयनेन अनिर्गमनेन चरति । यद्वा निलीनः अदृश्यः सन् चरति । यः शत्रुः प्रतङ्क प्रकर्षेण कृच्छ्रजीवन प्राप्य चरति वर्तते । एषा शत्रूणा इति पूर्वेण संबन्धः । अन्तिकादिव पश्यतीति यदुक्तं तदपि समर्थयते द्वौ सनिषद्येत्युत्तरार्धेन । द्वौ पुरुषौ रहसि सनिपद्य उपविश्य यत् कार्य मन्त्रयेते गुप्त भाषेते । तयोर्गुप्त भाषमाणयोः तृतीयः त्रित्वसंख्यापूरकः सन् राजा ईश्वरो वरुणः स्वसार्वज्ञ्येन तत् सर्व वेद जानातीत्यर्थः । ततश्च अकार्यचिन्तावसर एव तान् निग्रहीतु वरुणः शक्नोतीत्यर्थः । असा.

**[१]उतेयं भूमिर्वरुणस्य राज्ञ उतासौ द्यौर्बृहती दूरेअन्ता ।**
**उतो समुद्रौ वरुणस्य कुक्षी उतास्मिन्नल्प उदके निलीनः ॥**

उतशब्दः अप्यर्थे । इय सर्वाधिष्ठानत्वेन निहिता भूमिरपि राज्ञः ईश्वरस्य दुष्टनिग्रहे अधिकृतस्य वरुणस्य वशे वर्तते । उत अपि च असौ विप्रकृष्टा बृहती महती दूरेअन्ता दूरे विप्रकृष्टे देशे अन्ते अन्तिके च भवतीति दूरेअन्ता । यत एवं व्याप्य वर्तते अतो बृहतीति भावः । एवरूपा द्यौश्च वरुणस्य राज्ञो वशे वर्तते । बृहती दूरेअन्तेति विशेषणद्वय भूम्या अपि योज्यम् । अत एव दूरेअन्ते इति द्यावापृथिव्योर्नामसु पठितम् । उतो अपि च समुद्रौ पूर्वपश्चिमौ वरुणस्य राज्ञः कुक्षी दक्षिणोत्तरपार्श्वभेदेन अवस्थिते द्वे उदरे । एव भूम्यादिक कृत्स्नं जगत् व्याप्य वर्तमानोऽपि अस्मिन् अल्पेऽपि उदके तटाकह्रदादिगते निलीनः अन्तर्हितो भवति । असा.

**[२]उत यो द्यामतिसर्पात् परस्तान्न स मुच्यातै वरुणस्य राज्ञः ।**
**दिव स्पशः प्र चरन्तीदमस्य सहस्राक्षा अति पश्यन्ति भूमिम् ॥**

उत अपि च यः शत्रुः अनर्थकारी अस्माकं पुरस्तात् द्या अन्तरिक्षप्रदेशं अतिसर्पात् अतिक्रम्य सर्पेत् गच्छेत् । यद्वा सुकृतप्राप्य द्या स्वर्ग अतिक्रम्य अपथे प्रवर्तेतेत्यर्थः । स शत्रुः वरुणस्य राज्ञः पाशेभ्यो न मुच्यातै न मुच्येत । तैर्बद्ध एव वर्ततामित्यर्थः । कथ द्युलोकस्थो वरुणः मनुष्यकृत अपराध जानातीति तत्राह—दिवः स्पश इति । दिवः द्युलोकान्निर्गताः अस्य वरुणस्य स्पशः चाराः इद पार्थिव स्थान प्र चरन्ति प्राप्य सचरन्ति । ते च सहस्राक्षाः सहस्रसख्याकैर्दर्शनोपायैर्युक्ताः सन्तः भूमिं अति पश्यन्ति भूलोकवृत्तान्तं सर्व अतिशयेन साक्षात्कुर्वन्तीत्यर्थः । असा.

**[१]सर्वं तद्राजा वरुणो वि चष्टे यदन्तरा रोदसी यत् परस्तात् ।**
**संख्याता अस्य निमिषो जनानामक्षानिव श्वघ्नी नि मिनोति तानि ॥**

रोदसी अन्तरा द्यावापृथिव्योर्मध्ये यत् प्राणिजात वर्तते तथा पुरस्तात् स्वस्य पुरोभागे यत् प्राणिजात अस्ति तत् सर्व वरुणो राजा वि चष्टे विशेषेण पश्यति । तस्मात् तेषा जनाना प्राणिनां निमिषः निमेषणव्यापारस्य । उपलक्षणमेतत् । अक्षिपरिस्पन्दोपलक्षितस्य अस्य साध्वसाधुकर्मणः सख्याता परिमाणयिता वरुणः तानि पापिनां शिक्षाकर्माणि तत्तत्पापानुसारेण नि मिनोति निक्षिपति । तत्र दृष्टान्तः अक्षानिवेति । स्वघ्नी स्व आत्मान स्वकीयं धनं च हन्तीति कितवः स्वघ्नी । यथा कितवः अक्षान् आत्मनो जयार्थ निक्षिपति तद्वदित्यर्थः । असा.

**[२]ये ते पाशा वरुण सप्तसप्त त्रेधा तिष्ठन्ति विषिता रुशन्तः ।**
**छिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु ॥**

हे वरुण ये त्वदीयाः पाशाः सप्तसप्त उत्तममध्यमाधमभेदेन प्रत्येक सप्तसंख्याकाः त्रेधा त्रिप्रकार विसिताः तत्रतत्र पापिना निग्रहाय जालवत् बद्धाः । एतच्च त्रैविध्य 'उदुत्तम वरुण' ( ऋसं. १ । २४ । १५ ) इति मन्त्रान्तरादप्यवसितम् । रुषन्तः तत्तत्पापानुसारेण पापिष्ठान् हिंसन्तस्तिष्ठन्ति सर्वे ते पाशाः अनृत वदन्तं पापकृतं अस्मदीयं शत्रु छिनत्तु छिन्दन्तु । यस्तु सत्यवादी

(१) असं. ४।१६।३. (२) असं. ४।१६।४.

(१) असं. ४।१६।५. (२) असं. ४।१६।६.

सत्यवदनशीलः पुण्यकृत् त अति सृजन्तु विमुञ्चन्तु ।
असा.

अनन्तमहिमोपेत., कपटजनभयङ्कर , अप्रमेयव्रतधर , अद्वितीयसर्वज्ञः

कथं महे असुरायाब्रवीरिह कथं पित्रे हरये त्वेषनृम्णः ।
पृश्निं वरुण दक्षिणां ददावान् पुनर्मघ त्वं मनसाचिकित्सीः ॥
न कामेन पुनर्मघो भवामि सं चक्षे कं पृश्निमेतामुपाजे ।
केन नु त्वमथर्वन् काव्येन केन जातेनासि जातवेदाः ॥
सत्यमहं गभीरः काव्येन सत्यं जातेनास्मि जातवेदाः ।
न मे दासो नार्यो महित्वा व्रतं मीमाय यदहं धरिष्ये ॥
न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन् ।
त्वं ता विश्वा भुवनानि वेत्थ स चिन्नु त्वज्जनो मायी बिभाय ॥
त्वं ह्यङ्ग वरुण स्वधावन् विश्वा वेत्थ जनिमा सुप्रणीते ।
किं रजस एना परो अन्यदस्त्येना किं परेणावरममुर ॥
एकं रजस एना परो अन्यदस्त्येना पर एकेन दुर्णशं चिदर्वाक् ।
तत् ते विद्वान् वरुण प्र ब्रवीम्यधोवचसः पणयो भवन्तु नीचैर्दासा उप सर्पन्तु भूमिम् ॥
त्वं ह्यङ्ग वरुण ब्रवीषि पुनर्मघेष्ववद्यानि भूरि ।
मो षु पणीरभ्येतावतो भून्मा त्वा वोचन्नराधसं जनासः ॥
मा मा वोचन्नराधसं जनासः पुनस्ते पृश्निं जरितर्ददामि ।
स्तोत्रं मे विश्वमा याहि शचीभिरन्तर्विश्वासु मानुषीषु दिक्षु ॥
आ ते स्तोत्राण्युद्यतानि यन्त्वन्तर्विश्वासु मानुषीषु दिक्षु ।
देहि नु मे यन्मे अदत्तो असि युज्यो मे सप्तपदः सखासि ॥
समा नौ बन्धुर्वरुण समा जा वेदाहं तद्यन्नावेषा समा जा ।
ददामि तद्यत् ते अदत्तो अस्मि युज्यस्ते सप्तपदः सखास्मि ॥
देवो देवाय गृणते वयोधा विप्रो विप्राय स्तुवते सुमेधाः ।
अजीजनो हि वरुण स्वधावन्नथर्वाणं पितरं देवबन्धुम् ।
तस्मा उ राधः कृणुहि सुप्रशस्तं सखा नो असि परमं च बन्धुः ॥

(१) ऋसं. ५।११।१-११.

---

## विष्णुः

रक्षक', एक एव त्रिभि. पदैः त्रिलोकव्यापी, अनाभिभवनाथि., धर्माधार , चिन्तनीयस्तोतव्यवीर्यकर्मनामजन्मरूपः, लोकत्रयस्य एक एव स्रष्टा धारकश्च, सूरीणा दर्शनस्तवनविषयपरमपदः, मधुपूर्णाक्षीयमाणत्रिपदः, मर्त्यदृश्यपदद्वय', अप्रमेयतृतीयपद., भक्तभोग्यमधुनिष्यान्दिपरमपदः, नित्यतरुणः, अतिवृद्ध', अहिंसकः, स्वर्द्रष्टा, चक्रप्रवर्तक., आकाशरीरः, अनन्तमहिमगूढानेकरूपः, सर्वहितबुद्धिद., मनुष्येभ्यो वासार्थं पृथिवीप्रदः

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्त धामभिः ॥

विष्णुः परमेश्वरः सप्त धामभिः सप्तभिर्गायत्र्यादिभिश्छन्दोभिः साधनभूतैः यतः पृथिव्याः यस्माद्भूप्रदेशात् विचक्रमे विविधं पादक्रमणं कृतवान्, अतः अस्मात् पृथिवीप्रदेशात् नः अस्मान् देवाः अवन्तु । विष्णोः पृथिव्यादिलोकेषु छन्दोभिः साधनैर्जयं तैत्तिरीया

(१) ऋसं. १।२२।१६; सासं. २।१८।२ सप्त धामभिः (अधि सानवि)

**यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरु-गायः ॥**

हे नराः विष्णोः व्यापनशीलस्य देवस्य वीर्याणि वीर-कर्माणि नु क अतिशीघ्र प्र वोच प्रब्रवीमि। अत्र यद्यपि नु क इति पदद्वय, तथापि यास्केन 'नवोत्तराणि पदानि' (नि ३।१३) इत्युक्तत्वात्, शाखान्तरे एक-त्वेन पाठाच्च नु इत्येतस्मिन्नेवार्थे नु क इति पदद्वयम्। कानि तानीति तत्राह। यः विष्णुः पार्थिवानि पृथिवी-संबन्धीनि रजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमा-नीनि अग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्ममे। अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः। तथा च मन्त्रान्तरम्—'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः' (ऋस. १।१०८।९) इति। तैत्तिरीयेऽपि —'योऽस्यां पृथिव्यामस्यायुपा' इत्युपक्रम्य 'यो द्विती-यस्यां तृतीयस्यां पृथिव्याम्' (तैस. १।२।१२।१) इति। तस्मात् लोकत्रयस्य पृथिवीशब्दवाच्यत्वम्। किंच यः च विष्णुः उत्तरं उद्गततरमतिविस्तीर्णं सधस्थ सहस्थानं लोकत्रयाश्रयभूतमन्तरिक्षं अस्कभायत् तेषा-माधारत्वेन स्तम्भितवान् निर्मितवानित्यर्थः। अनेन अन्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्त भवति। यद्वा। यो विष्णुः पार्थिवानि पृथिवीसबन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान् विममे विविध निर्मित-वान्। रजःशब्दो लोकवाची, 'लोका रजांस्युच्यन्ते' इति यास्केनोक्तत्वात्। किंच यश्चोत्तरं उद्गततर उत्तरभाविन सधस्थ सहस्थान पुण्यकृतां सहनिवासयोग्य भूरादिलोक-सप्तकं अस्कभायत् स्कम्भितवान् सृष्टवानित्यर्थः। अथवा पार्थिवानि पार्थिवीनिमित्तकानि रजांसि लोकान् विममे। भूरादिलोकत्रयमित्यर्थः। भूम्यां उपार्जितकर्मभोगार्थत्वात् इतरलोकानां तत्कारणत्वम्। किंच यश्चोत्तरं उत्कृष्टतर सर्वेषां लोकानामुपरिभूतम्। अपुनरावृत्तेः तस्योत्कृष्ट-त्वम्। सधस्थं उपासकानां सहस्थानं सत्यलोकमस्कभा-यत् स्कम्भितवान् ध्रुव स्थापितवान् इत्यर्थः। किं कुर्वन्। त्रेधा विचक्रमाणः त्रिप्रकार स्वसृष्टान् लोका-न्विविध क्रममाणः। विष्णोस्त्रेधा क्रमणं 'इदं विष्णुर्वि चक्रमे' (ऋसं. १।२२।१७) इत्यादिश्रुतिषु प्रसिद्धम्। अत एव उरुगायः उरुभिः महद्भिः गीयमानः अतिप्रभूतं गीयमानो वा। य एव कृतवान् तादृशस्य विष्णोर्वीर्याणि प्र वोचम्। ऋसा.

**प्र[1] तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।**
**यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥**

यस्येति वक्ष्यमाणत्वात् स इति अवगम्यते। स महा-नुभावः वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण स्तवते स्तूयते सर्वैः। वीर्येण स्तूयमानत्वे दृष्टान्तः। मृगो न सिंहादिरिव। यथा स्वविरोधिनो मृगयिता सिंहः भीमः भीतिजनकः कुचरः कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता वा गिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते। अस्मिन्नर्थे निरुक्तं—'मृगो न भीमः कुचरो गिरिष्ठाः। मृग इव भीमः कुचरो गिरिष्ठाः। मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव। कुचर इति चरतिकर्म कुत्सितमथ चेद्देवताभिधान क्वाय न चर-तीति वा। गिरिष्ठा गिरिस्थायी। गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा' (नि. १।२०) इति। तद्वदयमपि मृगो-ऽन्वेष्टा शत्रूणा भीमो भयानकः सर्वेषां भीत्यपादानभूतः। परमेश्वराद्भीतिः 'भीषास्माद्वातः पवते' (तैउ. २।८) इत्यादिश्रुतिषु प्रसिद्धा। किंच कुचरः शत्रुवधादिकुत्सितकर्मकर्ता कुषु सर्वासु भूमिषु लोकत्रये संचारी वा तथा गिरिष्ठाः गिरिवत् उच्छ्रितलोकस्थायी। यद्वा। गिरि मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः। ईदृशोऽय स्वमहिम्ना स्तूयते। किंच यस्य विष्णोः उरुषु विस्तीर्णेषु त्रिसङ्ख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातानि अधिक्षियन्ति आश्रित्य निवसन्ति स विष्णुः स्तूयते। ऋसा.

**प्र[2] विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे।**

(१) ऋस. १।१५४।२, असं. ७।२७।२, ३ तद्विष्णुः स्तवते वीर्येण (तद्विष्णु स्तवते वीर्याणि) गिरिष्ठा.+ (परा-वत आ जगम्यात् परस्या.); कासं २।१० (५९); मैसं १।२।९ (७१); शुसं. ५।२० तद्विष्णुः (तद्विष्णु); तैब्रा. २।४।३।४; शब्रा. ३।५।३।२३ शुसंवत्

(२) ऋसं. १।१५४।३.

**य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥**

विष्णवे सर्वव्यापकाय शूष अस्मत्कृत्यादिजन्यं बल महत्त्व मन्म मनन स्तोत्रं मननीयं शूषं बलं वा विष्णु एतु प्राप्नोतु । कीदृशाय । गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णे वर्षित्रे कामानाम् । एव महानुभावं शूषं प्राप्नोतु । कोऽस्य विशेष इति उच्यते । यः विष्णुः इद प्रसिद्ध दृश्यमान दीर्घ अतिविस्तृतं प्रयत नियत सधस्थ सहस्थान लोकत्रयं एकः इत् एक एवाद्वितीयः सन् त्रिभिः पदेभिः पादैः विममे विशेषेण निर्मितवान् । ऋसा.

**[1]यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।**

**य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥**

यस्य विष्णोः मधुना मधुरेण दिव्येनामृतेन पूर्णा पूर्णानि (त्री) त्रीणि पदानि पादप्रक्षेपणानि अक्षीयमाणा अक्षीयमाणानि स्वधया अन्नेन मदन्ति मादयन्ति तदाश्रितजनान् । य उ य एव पृथिवी प्रख्याता भूमिं द्या उत द्योतनात्मकमन्तरिक्ष च विश्वा भुवनानि सर्वाणि भूतजातानि चतुर्दशलोकांश्च । यद्वा । पृथिवीशब्देन अधोवर्तीनि अतलवितलादिसप्तभुवनान्युपात्तानि । द्युशब्देन तदवान्तररूपाणि भूरादिसप्तभुवनानि । एवं चतुर्दशलोकान् विश्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजातानि । त्रिधातु । त्रयाणा धातूनां समाहारस्त्रिधातु । पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा दाधार धृतवान् उत्पादितवानित्यर्थः । छन्दोगारण्यके—'तत्तेजोऽसृजत । तदन्नमसृजत । ता आप ऐक्षन्त ।' इति भूतत्रयसृष्टिमुक्त्वा 'हन्ताहमिमास्तिस्रो देवतास्तासा त्रिवृतं त्रिवृतमेकैका करवाणि' ( छाउ. ६।३।२–३ ) इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता । यद्वा । त्रिधातु कालत्रयं गुणत्रय वा दाधारेत्यन्वयः । ऋसा.

**[2]तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।**

(१) ऋस. १।१५४।४.

(२) ऋसं. १।१५४।५, मैसं. ४।१२।१ ( २२ ) मध्व ( मध्वा ), ऐब्रा ३।६।६; तैब्रा. २।४।६।२.

**उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥**

अस्य महतो विष्णोः प्रियं प्रियभूतं तत् सर्वैः सेव्यत्वेन प्रसिद्ध पाथः, अन्तरिक्षनामैतत्, 'पाथोऽन्तरिक्ष॰ पथा व्याख्यातम्' ( नि. ६।७ ) इति यास्केनोक्तत्वात् । अविनश्वर ब्रह्मलोकमित्यर्थः । अश्या व्याप्नुयाम् । तदेव विशेष्यते । यत्र स्थाने देवयवः देव द्योतनस्वभावं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तः नरः मदन्ति तृप्तिमनुभवन्ति । तदश्यामित्यन्वयः । पुनरपि तदेव विशेष्यते । उरुक्रमस्य अत्याधिक सर्व जगदाक्रममाणस्य तत्तदात्मना अत एव विष्णोः व्यापकस्य परमेश्वरस्य परमे उत्कृष्टे निरतिशये केवलसुखात्मके पदे स्थाने मध्वः मधुरस्य उत्सः निष्यन्दो वर्तते । तदश्याम् । यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति संकल्पमात्रेण अमृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः । ततोऽधिक नास्तीत्याह । इत्था इत्थमुक्तप्रकारेण स हि बन्धुः स खलु सर्वेषा सुकृतिना बन्धुभूतो हितकरः वा तस्य पदं प्राप्तवतां न पुनरावृत्तेः । 'न च पुनरावर्तते' इति श्रुतेस्तस्य बन्धुत्वम् । हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः । ऋसा.

**[1]तां वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।**

**अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥**

हे पत्नीयजमानौ वा युष्मदर्थं ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोः गमनाय उश्मसि कामयामहे । तदर्थं विष्णु प्रार्थयाम इत्यर्थः । तानीत्युक्त कानीत्याह । यत्र येषु वास्तुषु गावः रश्मयः भूरिशृङ्गाः अत्यन्तोन्नत्युपेताः बहुभिराश्रयणीया वा अयासः अयना गन्तारोऽतिविस्तृताः । यद्वा । यासो गन्तारः, अतादृशाः, अत्यन्तप्रकाशयुक्ता इत्यर्थः । अत्राह अत्र खलु वास्त्वाधारभूते द्युलोके उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामाना वर्षितुर्विष्णोस्तत्तादृश सर्वत्र पुराणादिषु गन्त-

(१) ऋसं. १।१५४।६, कासं. ३।३ वृष्णः ( विष्णो॰ ), नि. २।७।१.

व्यत्वेन प्रसिद्धं परम निरतिशय पदं स्थान भूरि अति-प्रभूत अव भाति स्वमहिम्ना स्फुरति। अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः—'तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृङ्ग श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वाऽयासोऽयनाः। तत्र तदुरुगायस्य विष्णोर्महागतेः परम पद परार्ध्यस्थमवभाति भूरि। पादः पद्यतेः' ( नि. २।७ ) इति।　　ऋसा.

[१]तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीळ्हुषः।
यः पार्थिवानि त्रिभिरिद्विगामभिरुरु क्रमिष्टोरु-गायाय जीवसे॥

अस्य महानुभावस्य तत्तत् पौंस्य पुंस्त्व पराक्रमातिशयं गृणीमसि गृणीमः स्तुमः। कीदृशस्यास्य। इनस्य सर्वस्य स्वामिनः त्रातुः पालकस्य अवृकस्य। वृको हिंसकः शत्र्वादिः। तद्रहितस्य मीळ्हुषः सेक्तुर्नित्यतरुणस्य। स्तुत्येषु पराक्रमेषु मध्ये एकमुदाहरति। यः विष्णुः पार्थिवानि पृथिव्यादीनि प्रथनवन्ति वा सामर्थ्यात् रजासीति गम्यते। लोकत्रयस्यापि पृथिवीशब्दवाच्यत्व पूर्वमुदाहृतम्। तानि त्रिभिरिद्विगामभिः त्रिभिरेव विविधगमनैः उरु विस्तीर्णं यथा भवति तथा क्रमिष्ट क्रान्तवान् विचक्रमे इत्यर्थः। उरुगायाय उरुगातव्याय जीवसे लोकत्रयरक्षणाय। यद्वा। उरुगायाय। षष्ठ्यर्थे चतुर्थी। उरुगायस्य विष्णोरीदृश पराक्रम गृणीमसि। किमर्थम्। जीवसे जीवनाय रक्षणाय।　　ऋसा.

[२]द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति।
तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः॥

अस्य स्वर्दृशः स्वर्गस्य सर्वस्य वा द्रष्टुर्विष्णोः द्वे इत् क्रमणे द्वे एव पदे मर्त्यः मनुष्यः अभिख्याय सर्वभूत्यादिना प्रख्याय भुरण्यति गच्छति भजते। भुरण्यतिः कण्ड्वादिर्गतिकर्मा, 'भुरण्यति शवति' (नि. २।१४।१६) इति तत्कर्मसु पाठात्। प्रसिद्धत्वात् भूलोकं बृहद्यागमनादन्तरिक्ष चेत्युभे क्रमणे जानाति। अस्य विष्णोः तृतीयं क्रमण द्युलोकाख्य कोऽपि मर्त्यः नकिः नैव आ दधर्षति बुद्ध्या नाभिभवति ज्ञातु न शक्नोतीत्यर्थः। न केवलं मनुष्य एव अपि तु वयश्चन वेतारो मरुतोऽपि। कीदृशास्ते। पतयन्तः सर्वत्र गमनसमर्थाः तथा पतत्रिणः पतनशीला गरुडादयो वायवो वा नकिरा दधर्षति नैव शक्नुवन्ति। सत्यलोकस्य अत्यन्तविप्रकृष्टत्वेन सर्वेषामविषयत्वादिति भावः।　　ऋसा.

[१]चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीरवीविपत्।
बृहच्छरीरो विमिमान ऋक्वभिर्युवाकुमारः प्रत्येत्याहवम्॥

अयमादित्यात्मा विष्णु चतुर्भिः साक सहिता नवतिं च। चतुर्नवतिमित्यर्थः। एतत्सख्याकान् कालावयवान् नामभिः स्वकीयनमनप्रकारैः प्रेरणविशेषैः वृत्त यथा भवति तथा व्यतीन् विविधातनस्वभावान् वृत्तं चक्रं न बहुरोपेत चक्रमिव त यथा शत्रोरुपरि प्रक्षेपेण भ्रमयति तद्वदुक्तसख्याकान् कालावयवान् अवीविपत् कम्पयति भ्रमयति। के पुनस्ते। उच्यन्ते। संवत्सर एकः। अयने द्वे। पञ्चर्तवः। द्वादश मासाः। चतुर्विंशत्यर्धमासाः। त्रिंशदहोरात्राः। अष्टौ यामाः। एकस्मिन् दिने पर्यावर्तमानानि मेषादीनि द्वादशलग्नानीति मिलित्वा चतुरधिकनवतिसंख्याकानवीविपत्। नन्वादित्यः स्वयमपि इतरवत्परिभ्रमति, कथ भ्रमयति इत्युच्यते। नैष दोषः। एतेषा भ्रामकस्य ध्रुवस्य विष्णोः मूर्त्यन्तरत्वात्। अथवा स्वभ्रमणाधीनत्वादितरेषा परिभ्रमणस्य, अतः स्वय भ्रमयति इत्युच्यते। एव कालात्मकः विष्णुः बृहच्छरीरः विराडात्मना सर्वदेवमनुष्यादिशरीराणा स्वशरीरत्वात्। बृहच्छरीरत्वमेवोपपादयति। विमिमानः विविधमात्मानं मिमानो देवतिर्यगात्मना विभज्य स्थापयन्। यद्वा। ऋक्वभिः स्तुतिमद्भिः मन्त्रवद्भिः वा विमिमानः। यद्यपि विभुस्तथापि भक्त्यधीनत्वात् स्तुत्या मीयते। युवा सर्वत्र मिश्रणशीलो नित्यतरुणो वा अत एव अकुमारः अनल्पः एवं भूतो महाविष्णुः आहव आह्वानं प्रत्येति गच्छति यज्ञदेशम्।　　ऋसा.

(१) ऋसं. १।१५५।४.　(२) ऋसं. १।१५५।५.

(१) ऋसं. १।१५५।६.

[1]परो मात्रया तन्वा वृधान न ते महित्वमन्व- श्नुवन्ति ।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥

पर इति सकारान्त परस्तादित्यस्यार्थे । मात्रयेति व्यत्ययेन तृतीया । मात्रया परः परस्ताद्वर्तमानयाऽपरिमितया तन्वा शरीरेण वृधान वर्धमान हे विष्णो ते तव महित्व महत्त्वं न अन्वश्नुवन्ति नानुव्याप्नुवन्ति । त्रैविक्रमसमये यत्तव माहात्म्य तत्सर्वैरपि जनैर्ज्ञातु न शक्यते इत्यर्थः। ते तव उभे रजसी उभौ लोकौ पृथिव्याः आरभ्य पृथिवीमन्तरिक्षं च विद्मः जानीमः वयं चक्षुषोपलभामहे नान्यत्। देव द्योतमान विष्णो त्वं एव परमस्य स्वर्गादेरुत्कृष्टलोकस्य परमं लोक वित्से जानासि । अतस्तव महत्त्वं न केनापि व्याप्तुं शक्यमिति भावः । ऋसा.

[2]न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ।
उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥

हे देव दानादिगुणयुक्त विष्णो ते तव महिम्नः महत्त्वस्य परं विप्रकृष्टं अन्तं अवसान जायमानः प्रादुर्भवज्जनः न आप न प्राप्नोति । तथा जातः प्रादुर्भूतोऽपि जनः न एव प्राप्नोति । तव महत्त्वस्यावसान नास्ति । अत एव सर्वैर्न ज्ञायते इति भावः । कोऽसौ महिमा तमाह । ऋष्वं दर्शनीयं बृहन्तं महान्त नाकं द्युलोक उदस्तभ्नाः त्वमूर्ध्वमधारयः । यथाऽधो न पतति तथा। पृथिव्याः भूमेः सबन्धिनी प्राचीं ककुभं च दाधर्थ धारितवानसि । उपलक्षणमेतत् सर्वस्य भूतजातस्य । तथा च मन्त्रान्तर— 'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' ( ऋसं. १।१५४।४ ) इति। ऋसा.

[3]इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या ।
व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥

हे द्यावापृथिव्यौ मनुषे स्तुवते मनुष्याय दशस्या दित्सया युक्ते युवा इरावती अन्नवत्यौ धेनुमती गोमत्यौ सूयवसिनी शोभनयवसे च भूत अभूतम्। हिशब्दः प्रसिद्धौ। विष्णुना विक्रान्तत्वाद्युवां एवमेव खलु पूर्वमभूतमित्यर्थः। हे विष्णो एते इमे रोदसी द्यावापृथिव्यौ व्यस्तभ्नाः विविधमधारयः । पृथिवीमूर्ध्वमुखत्वेन द्यामधोमुखत्वेनेति विविधत्वम्। अपि च पृथिवीं प्रथितामिमा भूमि अभितः सर्वत्र स्थितैः मयूखैः पर्वतैः दाधर्थ धारितवानसि । यथा न चलति तथा दृढीकृतवानित्यर्थः। पर्वता हि विष्णोः स्वभूताः । 'विष्णुः पर्वतानामधिपतिः' (तैस. ३।४।५।१ ) इति श्रुतेः। ऋसा.

[1]नू मर्तो दयते सनिष्यन्यो विष्णव उरुगायाय दाशत् ।
प्र यः सत्राचा मनसा यजात एतावन्तं नर्यमाविवासात् ॥

सः मर्तः मनुष्यः सनिष्यन् धनमिच्छन् नु क्षिप्र दयते धनमादत्ते । यः मनुष्यः उरुगायाय बहुभिः कीर्तनीयाय विष्णवे दाशत् हवींषि दद्यात्। यः च सत्राचा सहाञ्चता मनसा मननेन स्तोत्रेण प्र यजाते प्रकर्षेण पूजयेत्। एतावन्तं एतावत्परिमाण महान्त नर्यं नरेभ्यो हित विष्णु आविवासात् नमस्कारादिभिः परिचरेत् ।स मर्तो दयते इत्यन्वयः। यद्वा। स मर्तः सनिष्यन् धनादीनि लप्स्यमानो भवन्नेव हविरादिकं नु क्षिप्रं दयते विष्णवे ददातीति योज्यम्। ऋसा.

[2]त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः ।

(१) ऋसं. ७।९९।१; मैसं. ४।१४।५ ( ६० ), तैब्रा. २।८।३।२ तन्वा ( तनुवा ). (२) ऋसं. ७।९९।२.
(३) ऋसं. ७।९९।३, तैसं. १।२।१३।२ मनुषे दशस्या। व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ (.मनवे यशस्ये। व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार), मैसं. १।२।९ ( ६४ ) मनुषे दशस्या ( मनवे यशस्ये ) व्यस्तभ्ना ( व्यष्कभ्ना ) विष्णवेते ( विष्ण एते ); शुसं. ५।१६ मनुषे ( मनवे.) व्यस्तभ्ना ( व्यस्कभ्ना ) मयूखै.+ ( स्वाहा ); शब्रा. ३।५।३।१४ शुसंवत्.
(१) ऋसं. ७।१००।१, तैब्रा. २।४।३।४; गोब्रा. २।४।१७.
(२) ऋसं. ७।१००।२.

पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चन्द्रस्य रायः ॥

हे एवयावः। एवाः प्राप्तव्याः कामाः। तान् यापयति प्रापयति स्तोतॄनित्येवयावा। हे एवयावन् विष्णो त्वं विश्वजन्यां सर्वजनहिता अप्रयुता दोषैर्वियुक्ता सुमतिं अनुग्रहबुद्धिं दाः अस्मभ्य देहि । सुवितस्य सुष्ठु प्राप्तव्यस्य भूरेः बहुलस्य अश्वावतः अश्वयुक्तस्य पुरुश्चन्द्रस्य पुरूणां बहूनामाह्लादकस्य रायः धनस्य पर्चः सपर्कः नः अस्माकं यथा भवति तथा देहीत्यन्वयः। ऋसा.

[१]त्रिर्देवः पृथिवीमेष एतां वि चक्रमे शतर्चसं महित्वा ।

प्र विष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम ॥

एषः देवः दानादिगुणयुक्तो विष्णुः शतर्चसं शतसंख्यान्यर्चींषि यस्यास्तादृशीं एतां पृथिवीम्। उपलक्षणमेतत्। पृथिव्यादींस्त्रील्लोकान् महित्वा महत्त्वेन त्रिः वि चक्रमे त्रिभिः पदैर्विक्रान्तवान्। तवसः तवस्विनो वृद्धादपि तवीयान् तवस्वितरः विष्णुः प्र अस्तु अस्माकं प्रभवतु स्वामी भवतु। अस्य स्थविरस्य वृद्धस्य विष्णोः नाम नामक रूपं विष्णुरित्येतन्नामैव वा त्वेषं हि यस्माद्दीप्त तस्मात्कारणात् स विष्णुः प्रभवत्वित्यर्थः। ऋसा.

[२]वि चक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन्।

ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥

एषः देवः विष्णुः एतां पृथिवीं पृथिव्यादीनिमांस्त्रील्लोकान् क्षेत्राय निवासार्थं मनुषे स्तुवते देवगणाय दशस्यन् असुरेभ्योऽपहृत्य प्रदास्यन् वि चक्रमे विक्रान्तवान्। अस्य च विष्णोः कीरयः स्तोतारः जनासः जनाः ध्रुवासः निश्चला भवन्ति। ऐहिकामुष्मिकयोर्लाभेन स्थिरा भवन्तीत्यर्थः। सुजनिमा शोभनानि जनिमानि कीर्तनस्मरणादिना सुखहेतुभूतानि यस्य तादृशो विष्णुः उरुक्षितिं विस्तीर्णनिवासं चकार स्तोतृभ्यः करोति। ऋसा.

(१) ऋसं. ७।१००।३, मैसं. ४।१४।५ (६२); तैब्रा २।४।३।५. (२) ऋसं. ७।१००।४, मैसं. ४।१४।५ (६१), तैब्रा. २।४।३।५.

[१]प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान्।

तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥

हे शिपिविष्ट रश्मिभिराविष्ट विष्णो ते तव तत् प्रसिद्धं विष्णुरिति प्रख्यात नाम अर्यः स्वामी स्तुतीनां हविषां वा तथा वयुनानि ज्ञातव्यान्यर्थजातानि विद्वान् जानन्नहं अद्य इदानीं प्र शंसामि प्रकर्षेण स्तौमि। तवसं प्रवृद्धं तं त्वा त्वा विष्णु अतव्यान् अतवीयानवृद्धतरोऽहं गृणामि स्तौमि। कीदृशम्। अस्य रजसः लोकस्य पराके दूरदेशे क्षयन्त निवसन्तम्। ऋसा.

[२]किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि।

मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥

पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिम रूपान्तरं धारयन् संग्रामे वसिष्ठस्य साहाय्यं चकार। त जानन्नृषिरनया प्रत्याचष्टे। अत्र निरुक्त—'शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः। किं ते विष्णो प्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिः। अपि वा प्रशंसानामैवाभिप्रेत स्यात्। किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीय यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः। शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति। मा वर्पो अस्मदप गूह एतत्। वर्प इति रूपनाम वृणोतीति सतः। यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिः' (नि. ५।७,८) इति। तत्र कुत्सितार्थपक्षे योजना। हे विष्णो ते तव तन्नाम किं परिचक्ष्य प्रख्यापनीयं भूत् भवति। किंशब्दः क्षेपे। अप्रख्यापनीयमेव तद्भवति। यत् नामास्मभ्यं प्र ववक्षे

(१) ऋसं. ७।१००।५, सासं. २।९७।१ नामार्यः (हव्यमर्यः), तैसं. २।२।१२।५ मतव्यान् (मतवीयान्); कासं. ६।१० (३९), मैसं. ४।१०।१ (३२); नि. ५।९।१. (२) ऋसं. ७।१००।६, सासं. २।९७।१ परिचक्ष्यं भूत्प्र (परिचक्षि नाम प्र); तैसं. २।२।१२।५; मैसं. ४।१०।१ (३१); नि. ५।८.

प्रब्रूषे शिपिविष्टोऽस्मि इति। अन्तर्णीतोपमानमेतत्। शेप इव निर्वेष्टितस्तेजसानाच्छादितो भवामीति। तद-श्लीलार्थत्वादिद नाम न प्रशस्तमित्यर्थः। तन्नाम किं परिचक्ष्यं वर्जनीयं परित्याज्यम्। विरुद्धार्थप्रतिपादक-त्वात् स्वत एव परित्यक्त हि तत्। शिष्ट समानं पूर्वेण। अत उक्तरूपविलक्षण यद्वैष्णवरूपमस्ति एतत् वर्पः रूप अस्मत् अस्माकं मा अप गूहः अपगूढ सवृत मा कुरु। अपि तु तदेव रूप प्रकटय। वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत्। यत् यस्मात् अन्यरूपः रूपान्तरमेव धारयन् समिथे संग्रामे बभूथ अस्माक सहायो भवसि तस्मादिद गूहन न कार्यमिति। प्रशसापक्षे तु हे विष्णो ते तव तन्नाम कि परिचक्ष्यं भूत् किं प्रख्यापनीय भवति। न प्रख्यापनीयम्। किं तन्नाम। शिपिविष्टो रश्मिभिरा-विष्टोऽस्मीति यन्नाम प्रब्रूषे। यत एवं प्रख्यातरूपस्त्वम-तोऽस्माकमेतद्वैष्णव रूप सवृतं मा कार्षीः। इदानीं गूढरूपोऽपि यत् यस्मात् त्व समिथे सग्रामेऽन्यरूपः कृत्रिमरूप यदन्यद्वैष्णव रूप शौर्यादिलक्षण तादृग्रूप एव बभूथ भवसि तस्मात्त्व गूढोऽपि ज्ञायस एवेति व्यर्थ-मेव तस्य रूपस्य गूहनम्। अतो बहुतेजस्कं यद्वैष्णव रूप तदस्माक प्रदर्शयेति तात्पर्यार्थः। ऋसा.

**वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।**
**वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः॥**

हे विष्णो ते तुभ्य आसः आस्यात् आ अभिमुखं वषट् कृणोमि करोमि। वषट्कारेण हविर्हावयामि। हे शिपिविष्ट, शिपयो रश्मयः, तैराविष्ट विष्णो तत् वषट्कृतं मे मदीयं हव्यं हविः जुषस्व सेवस्व। सुष्टुतयः शोभन-स्तुत्यात्मिकाः गिरः वाचश्च त्वां वर्धन्तु वर्धयन्तु। नः अस्मान् यूय त्वत्परिवाराश्च सर्वे स्वस्तिभिः अविनाशि-भिर्मङ्गलैः सदा पात रक्षत। ऋसा.

देवैर्यजनशीलैर्मानवैश्च कर्तव्या विष्णवात्मबुद्धिः

**अथ विष्णुक्रमान् क्रमते। एतद्वै देवा विष्णुर्भूत्वेमाँल्लोकानक्रमन्त। यद्विष्णुर्भूत्वाऽक्रमन्त, तस्माद्-विष्णुक्रमाः। तथैवैतद्यजमानो विष्णुर्भूत्वेमाँल्लोकान् क्रमते॥**

अथ विष्णुक्रमक्रमण विधाय तन्निर्वचनद्वारेण प्रशसति— अथ विष्णुक्रमानिति। विष्णुभूतैर्देवैः क्रान्तत्वात् विष्णु-क्रम इति नाम सपन्नम्। यथा देवैस्तथैव एतत् एतेन समन्त्रकपादाक्रमणेन इमान् लोकान् विष्णुर्भूत्वा क्रान्त-वान् भवति यजमानः। शब्रासा.

(१) ऋसं. ७।१००।७, सासं २।९७।१, तैसं. २।२।१२।४; कासं. ६।१० (४०) विष्णवास (विष्ण आस).
(२) शब्रा. ६।७।२।१०.

---

## सविता

स्थिरचरात्मा

**[1]चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुण-स्याग्नेः।**
**आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जग-तस्तस्थुषश्च।**

देवानां दीव्यन्तीति देवा रश्मयः तेषाम्। देवजनाना-मेव वा। अनीकं तेजःसमूहरूपं चित्र आश्चर्यकरं सूर्यस्य मण्डल उदगात् उदयाचलं प्राप्तमासीत्। कीदृ-शम्। मित्रस्य वरुणस्य अग्नेश्च। उपलक्षणमेतत्। तदु-पलक्षितानां जगता चक्षुः प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा। उदय प्राप्य च द्यावापृथिवी दिवं पृथिवीमन्तरिक्षं च आप्राः। स्वकीयेन तेजसा आ समन्तात् अपूरयत्। ईदृग्भूतमण्डलान्तर्वर्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा स्वरूपभूतः। स हि सर्वस्य स्थावरजङ्गमात्मकस्य कार्य-वर्गस्य कारणम्। कारणाच्च कार्यं नातिरिच्यते। तथा च पारमर्ष सूत्रम्— 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्रसू. २।१।१४) इति। यद्वा। स्थावरजङ्गमात्मकस्य सर्वस्य

(१) ऋसं. १।११५।१; असं. १३।२।३५, २०।१०७।१४ आप्रा (आप्राद्); सासं. १।६।५; तैसं. १।४।४३।१, २।४।१४।४, कासं. ४।९ (४७), २२।५ (१०), मैसं. १।३।३७ (१०१), शुसं. ७।४२ षश्च+(स्वाहा), ऐब्रा. १७।४।११; तैब्रा. २।८।७।३, शब्रा. ४।३।४।१०, ७।५।२।२७, ऐआ. ३।२।३।१०, तैआ. १।७।६, २।१३।१; नि. १२।१६।१.

प्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सदुपलभ्यते। तथा च श्रूयते—'योऽसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणानादायोदेति' (तैआ. १।१४।१) इति। ऋसा.

देवैरपि अबाध्यव्रत

[१]न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः।
नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः॥

यस्य सवितुर्देवस्य व्रतं प्रसवाख्यं कर्म इन्द्रः न मिनाति न हिनस्ति। वरुणः च न मिनाति। मित्रः च अर्यमा च न मिनाति। रुद्रः च न मिनाति। अरातयः असुराश्च न मिनन्ति। मिनातीति (मिनन्तीति) श्रुतमाख्यातं यथायोगं विपरिणामेन प्रत्येकमभिसंबध्यते। तं सवितारं सर्वस्य प्रेरकं देवं द्योतमानं इदं इदानीं नमोभिः अन्नरूपैर्हविर्भिः सह। 'नमः आयुः' (नि. २।७।२२) इत्यन्ननामसु पाठात्। स्वस्ति क्षेमाय हुवे स्तौमि। ऋसा.

विश्वरूप., प्रजानां जनक, भुवनपति.

[२]देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान।
इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम्॥

सविता अन्तर्यामितया सर्वस्य प्रेरकः विश्वरूपः नानाविधरूपः त्वष्टा त्वष्टृनामकः देवः प्रजाः पुरुधा बहुधा जजान जनयति। ताश्च पुपोष पोषयति। इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि च अस्य त्वष्टुः संबन्धीनि। तदिदं देवानां एकं मुख्यं असुरत्वम्। अस्यति क्षिपति सर्वानित्यसुरः प्रबलः, तस्य भावः असुरत्वं प्राबल्यम्। महदैश्वर्यम्। ऋसा.

स्थिर, सर्वेषां धर्ता, संवत्सररूप, प्रजाजनक.

[३]षड्भारॉ एको अचरन्बिभर्त्यृतं वर्षिष्ठमुप गाव आगुः।
तिस्रो महीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका॥

अचरन् स्थायी एकः संवत्सरः षट् षट्संख्याकान् भारान्, भ्रियते पुष्पविकासादि येष्विति भारा ऋतवः तान् वसन्तादीन् बिभर्ति अवयवत्वेन धारयति। तथा ऋतं सत्यभूतं वर्षिष्ठं वृद्धतरमादित्यात्मकं तमेव संवत्सरं गावः रश्मयः उप आगुः प्राप्नुवन्ति। किंच तस्मिन्नेव संवत्सरे अत्याः अतनशीलाः आगमापायिधर्मोपेताः तिस्रो महीः त्रयो लोकाः उपराः उपर्युपरि वर्तमानाः तस्थुः तिष्ठन्ति। लोकत्रयमेव दर्शयति। गुहा गुहायां स्वात्मनि द्वे द्यौश्चान्तरिक्षं चेत्येते निहिते न दृश्येते। एका भूमिः दर्शि सर्वभूताधारतया दृश्यते। ऋसा.

[१]त्रिपाजस्यो वृषभो विश्वरूप उत त्र्युधा पुरुध प्रजावान्।
त्र्यनीकः पत्यते माहिनावान्त्स रेतोधा वृषभः शश्वतीनाम्॥

त्रिपाजस्यः ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिर्ऋतुभिः पाजस्यमुरो यस्य सः त्रिपाजस्यः। त्र्युरस्क इत्यर्थः। उरोवचनश्च पाजस्यशब्दः। 'इन्द्रस्य क्रोडोऽदित्यै पाजस्यम्' (शुस. २५।८) इति अश्वमेधमन्त्रे उरःपरतयाम्नानात्, पाजसि बले साधुरिति व्युत्पत्तेश्च सर्वेषामङ्गानां मध्ये उरसो बलवत्त्वात्। वृषभः स्वावयवभूतेः वर्षतौं अपां वर्षकः विश्वरूपः तत्तद्दत्वसाधारणकार्यैः पुष्पविकासादिभिर्लिङ्गैर्नानारूपः उत अपि च त्र्युधा, वसन्तशरद्धेमन्ताख्यैस्त्रिभिर्ऋतुभिरूधो यस्य स त्र्युधा। प्रजावान्। प्रकर्षेण जायन्त इति व्रीह्यादयः प्रजाः। पुरुध नानाप्रकारेण विद्यमानव्रीहियवादिरूपप्रजावान्। किंच त्र्यनीकः त्रिभिरुष्णवर्षशीताख्यैः अनीकैः गुणैरुपेतः माहिनावान् महत्त्ववान् संवत्सराभिमानी देवः पत्यते आगच्छति। वृषभः सेचनसमर्थः सः संवत्सरः शश्वतीनां बह्वीनां ओषधीनां पुष्पफलादिसंपत्तये रेतोधाः रेतसः उदकस्य धर्ता भवति।

ऋसा.

(१) ऋसं. २।३८।९.
(२) ऋसं. ३।५५।१९, नि. १०।३४.
(३) ऋसं. ३।५६।२.

(१) ऋसं. ३।५६।३.

विश्वदृक्

[1]यो विश्वाभि विपश्यति भुवना सं च पश्यति ।
स नः पूषाविता भुवत् ॥

यः पूषा विश्वा भुवना सर्वान् लोकान् अभि आभिमुख्येन विपश्यति विशेषेण पश्यति । किञ्च तानि सं पश्यति तत्तद्वस्तुयाथात्म्य सम्यक् जानाति । सः तादृशः पूषा देवः नः अस्माक अविता रक्षकः भुवत् भवतु । ऋसा.

धिया प्रेरयिता ध्यानविषय

[2]तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥

यः सविता देवः नः अस्माकं धियः कर्माणि धर्मादिविषया वा बुद्धीः प्रचोदयात् प्रेरयेत् तत् तस्य देवस्य सवितुः सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य वरेण्य सर्वैः उपास्यतया ज्ञेयतया च सभजनीयं भर्गः अविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयज्योतिः परब्रह्मात्मकं तेजः धीमहि वय ध्यायामः । यद्वा । तत् इति भर्गोविशेषणम् । सवितुः देवस्य तत् तादृश भर्गः धीमहि । किं तदित्यपेक्षायामाह । यः इति लिङ्गव्यत्ययः । यत् भर्गः धियः प्रचोदयात् तत् ध्यायेम इति संमन्वयः । यद्वा । यः सविता सूर्यो धियः कर्माणि प्रचोदयात् प्रेरयति तस्य सवितुः सर्वस्य प्रसवितुः देवस्य द्योतमानस्य सूर्यस्य तत् सर्वैः दृश्यमानतया प्रसिद्धं वरेण्यं सर्वैः सभजनीय भर्गः पापाना तापकं तेजोमण्डल धीमहि ध्येयतया मनसा धारयेम । यद्वा भर्गःशब्देनान्नमभिधीयते । यः सविता देवो धियः प्रचोदयति तस्य प्रसादात् भर्गः अन्नादिलक्षण फलं धीमहि धारयामः । तस्याधारभूता भवेमेत्यर्थः । भर्गःशब्दस्य अन्नपरत्वे धीशब्दस्य कर्मपरत्वे चाथर्वणम्–' वेदांश्छन्दासि सवितुर्वरेण्य भर्गो देवस्य कवयोऽन्नमाहुः । कर्माणि धियस्तदु ते प्रब्रवीमि प्रचोदयत्सविता याभिरेति ॥ ' ( गोब्रा. १।१।३२ ) इति । ऋसा.

सर्वव्यापी, सर्वस्येशान , प्राज्ञ, द्रष्टा च

[1]हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥

अनया सौर्यर्चा 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते ' ( छाउ. १।६।६ ) इत्यादिश्रुत्युक्तो मण्डलाभिमानी देवोऽस्ति यश्च सर्वप्राणिचित्तरूपस्थितः परमात्मा यच्च निरस्तसमस्तोपाधिकं पर ब्रह्म तत्सर्वमेकमेवेति प्रतिपाद्यते । हसः । हन्तिर्गत्यर्थः । सर्वत्र सर्वदा गन्ता 'योऽहं सोऽसौ ' इत्यादिश्रुत्युक्तप्रकारेणैकीकृत्योपास्यः परमात्ममन्त्रप्रतिपाद्य आदित्यः । स च शुचौ दीप्ते द्युलोके सीदतीति शुचिषत् । ' अथ यदतः परो दिवो ज्योतिर्दीप्यते ' ( छाउ. ३।१३।७ ) इत्यादिश्रुतेः । अनेन द्युस्थानः आदित्यः प्रतिपादितः । स एव मध्यस्थानो वायुरित्याह । वसुः सर्वस्य वासयिता वायुः । स च अन्तरिक्षसत् अन्तरिक्षसचारी । अथ तस्यैव क्षितिस्थानवैदिकाग्निरूपतामाह–होता देवानामाह्वाता होमनिष्पादको वा वेदिषत् वेद्यां गार्हपत्यादिरूपेण स्थितः । अतिथिः अतिथिवत् सर्वदा पूज्योऽग्निः । दुरोणसत् । दुरोण गृहनाम । तत्र पाकादिसाधनत्वेन स्थितः । अनेन लौकिकाग्न्यात्मकत्वमुक्तम् । नृषत् । नृषु मनुष्येषु चैतन्यरूपेण सीदतीति नृषत् । अनेन परमात्मरूपत्वमुक्तम् । पुनरप्यादित्यात्मतामाह । वरसत् । वरे वरणीये मण्डले सीदतीति वरसत् आदित्यः । 'वरं वा एतत्सद्मना यस्मिन्नेष आसन्नस्तपति ' ( ऐब्रा. ४।२० ) इति हि श्रूयते । ऋतं सत्य ब्रह्म यज्ञो वा । तत्र सीदतीति ऋतसत् अग्निः । व्योमान्तरिक्ष, तत्र सीदतीति व्योमसत् वायुः । इदानी-

---

(१) ऋसं. ३।६२।९.

(२) ऋसं ३।६२।१०; सासं. २।१३।४; तैसं. १।५।६।४, ४।१।११।१, मैसं. ४।१०।३ ( ७७ ), शुसं. ३।३५, २२।९, ३०।२, ऐब्रा. २०।४।२, २१।५।६, २२।८।८, ५।२३।८; शाब्रा. २३।३, २६।१०, गोब्रा. १।१।३४, शब्रा. २।३।४।३९, १३।६।२।९; तैआ. १।११।२; नाउ. ३५.

(१) ऋसं. ४।४०।५, तैसं. १।८।१५।२, ४।२।१।५ ऋतम्+ ( बृहत् ), कासं. १५।८ ( २५ ), १६।८ (९५); मैसं. २।६।१२ ( ३८ ); शुसं १०।२४, १२।१४ तैसंवत्; ऐब्रा. १८।६।६; शब्रा. ५।४।३।२२, ६।७।३।११ तैसंवत्; नाउ. १२।२, ४० तैसंवत्, काउ. २।५।२ तैसंवत्; नि. १४।२९.

मादित्यतोच्यते । अब्जाः उदकेषु जातः । उदकमध्ये खल्वयं जायते । गोजाः गोषु रश्मिषु जातः । ऋत सत्यम् । सर्वैर्दृश्यत्वेन सत्यजातः । न ह्यसाविन्द्रादिवत् परोक्षो भवति । यद्वा । उदकेषु वैद्युतरूपेण वा बाडवरूपेण वा जातः । अद्रिजाः अद्रावुदयाचले जातः । एव महानुभावः आदित्यः ऋत सत्यमबाध्य सर्वाधिष्ठान ब्रह्मतत्त्वम् । तद्रूपो ह्यसावेव । आदित्यस्योक्तरूपत्व 'हसः शुचिषदित्येष वै हसः शुचिषत्' ( ऐब्रा. ४।२० ) इत्यादिना ब्राह्मणे समाम्नातम् ।

ऋसा.

[1]दिवो धर्ता भुवनस्य प्रजापतिः पिशङ्गं द्रापिं प्रति मुञ्चते कविः ।
विचक्षणः प्रथयन्नापृणन्नुर्वजीजनत्सविता सुम्नमुक्थ्यम् ॥

दिवः द्युलोकस्य धर्ता धारकः । न केवलं दिव एव अपि तु भुवनस्य कृत्स्नस्यापि लोकस्य धर्ता प्रजापतिः प्रजानां प्रकाशवृष्ट्यादिना पालयिता कविः प्राज्ञो देवः पिशङ्ग द्रापि हिरण्मयं कवचं प्रति मुञ्चते आच्छादयति प्रत्युदयम् । विचक्षणः विविधं द्रष्टा स एव देवः प्रथयन् प्रख्यापयन् तेजः आपृणन् आपूरयन् परितः उरु प्रभूत सुम्नं सुख उक्थ्य स्तुत्य अजीजनत् उत्पादयति ।

ऋसा.

[2]बृहत्सुम्नः प्रसवीता निवेशनो जगतः स्थातुरुभयस्य यो वशी ॥
स नो देवः सविता शर्म यच्छत्वस्मे क्षयाय त्रिवरूथमंहसः ॥

यः बृहत्सुम्नः प्रभूतधनः प्रभूतसुखो वा प्रसविता प्रकर्षेणानुज्ञाता कर्मणां, निवेशनः सर्वैर्गन्तव्यः । जगतः जङ्गमस्य स्थातुः स्थावरस्य उभयस्य यो वशी सः महान् सविता देवः नः अस्मभ्यं शर्म सुख यच्छतु । कीदृशं शर्म । त्रिवरूथ त्रीणि वरूथानि गृहाणि स्थानानि क्षित्यादीनि यस्य तत्तादृशम् । अस्मे अस्माकं अंहसः पापस्य क्षयाय भवत्विति शेषः ।

ऋसा.

(१) ऋसं. ४।५३।२, शाब्रा. २१।४.
(२) ऋसं. ४।५३।६.

देवानाममृतत्वं तदनुज्ञातम् । जीवितप्रकाशकः.

[1]देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वं सुवसि भागमुत्तमम् ।
आदिद्दामानं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥

प्रथमं देवेभ्यो हि, हिशब्दः प्रसिद्धौ, देवेभ्यः यज्ञियेभ्यः यज्ञार्हेभ्यः अमृतत्व तत्साधन उत्तमं उत्कृष्टतम भाग सोमादिलक्षण सुवसि अनुजानासि । आदित् अनन्तरमेव दामान हविषां दातार हे सवितः व्यूर्णुषे प्रकाशयसि । मानुषेभ्यः यजमानेभ्यः जीविता जीवितानि अनूचीना अनुक्रमयुक्तानि । पितृपुत्रपौत्रा इत्यनुक्रमः । ईदृशानि जीवितानि पश्चात् व्यूर्णुषे । ऋसा.

पातकनाशन , विश्वधारककर्मानुशासकः.

[2]अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ।
देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥

हे सवितः वयं अचित्ती अप्रज्ञया दैव्ये जने देवे त्वयि दीनैः दुर्बलैः पुत्रादिभिर्ऋत्विग्भिर्वा तथा दक्षैः प्रवृद्धैर्वा तैः प्रभूती प्रभूत्या । ऐश्वर्यमदेनेति यावत् । पुरुषत्वता पुरुषवत्तया च यत् आगः चकृम । न केवल त्वय्येव कृत अपि तु देवेषु अन्येषु मानुषेषु च अज्ञानादिभिः यच्चकृम नः कृतवतोऽस्मान् त्वं अत्र अस्मिन् कर्मणि अनागसः अपापान् सुवतात् अनुजानीहि ।

ऋसा.

[3]न प्रमिये सवितुर्दैव्यस्य तद्यथा विश्वं भुवनं धारयिष्यति ।
यत्पृथिव्या वरिमन्ना स्वङ्गुरिर्वर्ष्मन्दिवः सुवति सत्यमस्य तत् ॥

सवितुर्दैव्यस्य देवस्य तत् कर्म न प्रमिये न प्रमीयेत न प्रहिंस्येत । हिंसार्ह न भवतीत्यर्थः । यद्वा । दैव्यस्येति अधिकरणे षष्ठी । सा च कर्मार्था । दैव्य

(१) ऋसं. ४।५४।२; शुस. ३३।५४.
(२) ऋसं. ४।५४।३, तैसं. ४।१।११।१, मैसं. ४।१०। ३ ( ७८ ) पूरुष ( पुरुष ).
(३) ऋसं. ४।५४।४, शाब्रा. १३।४।२।१३.

कर्मेत्यर्थः। कथमहिंस्यमित्यत आह—यथा विश्वं भुवनं धारयिष्यति धारयति। विश्वधारणरूप यत् कर्मास्ति तन्न प्रमिये। तथा स्वङ्गुरिः शोभनाङ्गुल्युपलक्षितहस्तः यत् यः पृथिव्या वरिमन्ना। आकारश्चार्थे। भूम्या उरुत्वे च सुवति प्रेरयति। तथा दिवः द्युलोकस्य वर्ष्मन् उरुत्वे च सुवति। अस्य देवस्य तत् उक्तं कर्म सत्य अबाध्यमिति। ऋसा.

मनस धिया च विषय., सर्वकर्मविषयकप्रज्ञावान्, सर्वरूपधर., सर्वेषा कल्याणकर, स्वर्गद्रष्टा, देवानामग्रयायी, महिम्ना सर्वव्यापक, सर्वकर्मणामनुज्ञापकश्च

**[१]युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः।**
**वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः॥**

विप्राः मेधाविनः ऋत्विग्यजमानाः मनः स्वीयं सर्वेषु कर्मसु युञ्जते योजयन्ति। सवित्रनुग्रहाय सङ्कल्पं कुर्वन्तीत्यर्थः। उत अपि च धियः कर्माण्यपि युञ्जते प्राप्नुवन्ति। कस्यानुज्ञयेत्युच्यते। विप्रस्य मेधाविनः बृहतः महतः विपश्चितः स्तुत्यस्य ज्ञानवतो वा सवितुः अनुज्ञयेति। 'सविता वै प्रसवानामीशे' (ऐब्रा. ७।१६) इति हि श्रुतिः। स एव सविता होत्राः सप्तहोत्रकाणामुचिताः क्रियाः वयुनावित्। वयुनमिति प्रज्ञानाम। तत्तदनुष्ठानविषयप्रज्ञावेत्ता एक इत् एक एव वि दधे करोति पृथक्पृथगवधारयति। किंच तस्य सवितुः देवस्य परिष्टुतिः स्तुतिः मही महती अतिप्रभूता स्तुत्यगोचरेत्यर्थः। ऋसा.

**[२]विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे।**
**वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति॥**

कविः मेधावी सविता विश्वा सर्वाणि रूपाणि आत्मनि प्रति मुञ्चते बध्नाति धारयति। किंच भद्रं कल्याणं गमनादिविषय प्रासावीत् अनुजानाति। कस्मै। द्विपदे मनुष्याय चतुष्पदे गवाश्वादिकाय। किंच सविता सर्वस्य प्रेरको देवः वरेण्यः वरणीयः सन् वि अख्यत् ख्यापयति प्रकाशयति। किम्। नाक, नास्मिन्नकं दुःखमस्तीति नाकः स्वर्गः। यजमानार्थं स्वर्ग प्रकाशयतीत्यर्थः। स देवः उषसः प्रयाण उदयं अनु वि राजति प्रकाशते। सवितुरुदयात् पूर्वं ह्युषा उदेति। ऋसा.

**[१]यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमोजसा।**
**यः पार्थिवानि विममे स एतशो रजांसि देवः सविता महित्वना॥**

अन्य इत् देवाः अन्येऽप्यग्न्यादयः यस्य देवस्य द्योतमानस्य सवितुः प्रयाणमनु ययुः गच्छन्ति प्राप्नुवन्ति। किम्। महिमानं महत्त्वम्। सवितुरुदयाभावे अग्निहोत्राद्यनिष्पत्तेस्तेषा हविःस्तुत्याद्यभावात्। ओजसा बलेन च युक्ता भवन्ति। यः सविता पार्थिवानि रजांसि पृथिव्यादिलोकान् महित्वना स्वमहत्त्वेन विममे परिच्छिनत्ति सः देवः एतशः एतवर्णः शुभ्रः शोभमानः सन्, राजते इति शेषः। 'युवशा ताकृणोतन' (ऋसं. १।१६१।७) इत्यादिवत्। ऋसा.

**[२]उत यासि सवितस्त्रीणि रोचनोत सूर्यस्य रश्मिभिः समुच्यसि।**
**उत रात्रीमुभयतः परीयस उत मित्रो भवसि देव धर्मभिः॥**

हे सवितः देव उत अपि च त्रीणि रोचना रोचमानान् द्युलोकान् यासि गच्छसि। 'तिस्रो दिवः पृथिवीः'

(१) ऋसं. ५।८१।१, तैसं. १।२।१३।१, ४।१।१।१, कासं. २।१० (५१), १५।११ (३६), मैसं. १।२।९ (६१), ४।९।१ (१) विदेक (विदेका), शुसं. ५।१४ परिष्टुति.+ (स्वाहा), ११।४, ३७।२; ऐब्रा. २०।२।४; शाब्रा. २०।२, २२।१, २५।९, शब्रा. ३।५।३।११, ६।३।१।१६, १४।१।२।८; तैआ. ४।२।१; श्वेउ. २।४.

(२) ऋसं. ५।८१।२, तैस. ४।१।१०।४, कासं. १६।८ (८४); मैसं. २।७।८ (९५) मख्यत् (मक्शत्); शुसं. १२।३; ऐब्रा. ५।३।१४; शाब्रा. ९।३, शब्रा. ६।७।२।४; नि. १२।१३।१.

(१) ऋसं ५।८१।३; तैसं. ४।१।१।२ नमोजसा (नमर्चतः); कासं. १५।११ (३८) तैसंवत्, मैसं. २।७।१ (६) तैसंवत्, शुसं. ११।६; शब्रा. ६।३।१।१८.

(२) ऋसं. ५।८१।४.

( ऋस. ४।५३।५ ) इत्युक्तम् । उत अपि च सूर्यस्य रश्मिभिः समुच्यसि सगच्छसि । उदयात्पूर्वभावी सविता उदयास्तमयवर्ती सूर्य इति । उत अपि च रात्रीमुभयतः उभयपार्श्वे परीयसे परिगच्छसि । उत अपि च हे देव सवितस्त्वं धर्मभिः जगद्धारकैः कर्मभिः मित्रो भवसि । मित्राख्यो देवो भवसि । अथवा प्रकाशादिप्रदानेन सखा भवसि सर्वजगताम् । ऋसा.

**[१]उतेशिषे प्रसवस्य त्वमेक इदुत पूषा भवसि देव यामभिः ।**
**उतेदं विश्वं भुवनं वि राजसि श्यावाश्वस्ते सवितः स्तोममानशे ॥**

हे सवितः त्वमेक इत् एक एव प्रसवस्य सर्वकर्मानुज्ञाकरणस्य ईशिषे समर्थो भवसि । ये लौकिक गमनादिरूप वैदिकमग्निहोत्रादिरूप कर्मानुतिष्ठन्ते तेषा सर्वेषामनुज्ञातुमेक एव प्रभवसि । उत अपि च पूषा पोषकः भवसि हे देव यामभिः गमनैः । उत अपि च इद विश्व भुवनं भूतजात वि राजसि ईशिषे धारयितुम् । यस्मादेवं महानुभावस्तस्मात् हे सवितः ते तुभ्य श्यावाश्वः ऋषिः स्तोम स्तोत्रं आनशे व्याप्नोति करोति । इत्येवमात्मान परोक्षतया निर्दिशन्नाह । ऋसा.

सर्वप्रेरक, श्रेष्ठवरणीयविविधसर्वधारकधनप्रदाता, स्वराट्, सर्वपातकनाशन, विश्वदेवः, सत्पतिः, भद्रानुज्ञापकः, सत्यप्रेरकः

**[२]तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् ।**
**श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥**

तत् प्राप्यत्वेन प्रसिद्धं भोजन भोग्यं धन वयं स्तोतारः वृणीमहे प्रार्थयामः । कस्य धनम् । सवितुः प्रेरकस्य देवस्य स्वभूतम् । लब्ध्वा च श्रेष्ठ प्रशस्य सर्वधातमं सर्वधातृतमम् । सर्वभोगप्रदमित्यर्थः । तुरं शत्रूणा हिंसकम् । धनेन शत्रून् हन्तु शक्यत्वात् । तादृश धनं भगस्य भजनीयस्य सवितुरनुग्रहात् धीमहि धारयाम । उपभोग करवामेत्यर्थः । अथवा धनं वृणीमहे अर्थित्वाच्च लभेमहीति । ऋसा.

**[३]अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् ।**
**न मिनन्ति स्वराज्यम् ॥**

अस्य सवितुः स्वयशस्तरं स्वयमसाधारण यशो यस्यातिशयेन भवति तत्तादृशं प्रियं सर्वेषा प्रियभूतं स्वराज्य स्वयमेव राजमानत्वमैश्वर्य कच्चन केचिदप्यसुरादयः न मिनन्ति न हिंसन्ति । ऋसा.

**[२]स हि रत्नानि दाशुषे सुवाति सविता भगः ।**
**तं भागं चित्रमीमहे ॥**

स हि स खलु सविता भगः भजनीयो देवः दाशुषे हविर्दात्रे मह्यं रत्नानि रमणीयानि धनानि सुवाति प्रेरयति प्रयच्छति । तं देवं भागं भजनीयं चित्र चायनीय धन ईमहे याचामहे । ऋसा.

**[३]अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।**
**परा दुःष्वप्न्यं सुव ॥**

हे सवितः देव नः अस्मभ्यं अद्य अस्मिन् यागदिने प्रजावत् पुत्राद्युपेत सौभग धन सावीः प्रेरय । दुःष्वप्न्यं दुःस्वप्नं दुःस्वप्नवद्दुःखकर दारिद्र्यं परा सुव दूरे प्रेरय । ऋसा.

**[४]विश्वानि देव सवितर्दुरितानि परा सुव ।**
**यद्भद्रं तन्न आ सुव ॥**

हे सवितः देव त्वं विश्वानि दुरितानि परा सुव । यद्भद्र प्रजापशुगृहादिक तत् नः अस्मभ्यं आ सुव अस्मदभिमुख प्रेरय । 'प्रजा वै भद्रं पशवो भद्रं गृहं भद्रम्' इति हि श्रुतिः । ऋसा.

(१) ऋसं. ५।८१।५.

(२) ऋसं. ५।८२।१; ऐब्रा. २०।२।३, २१।२।६, २२।३।६, २३।२।६, २४।२।९, शाब्रा. १६।३, १९।९, २०।२, २५।९; ऐआ. १।५।३।१, तैआ. १।११।३.

(१) ऋसं. ५।८२।२.

(२) ऋसं ५।८२।३.

(३) ऋसं ५।८२।४; सासं. १।२।३, ऐब्रा. २०।२।३, २१।२।६, २२।३।६, २३।२।६, २४।२।९; शाब्रा. १९।९, २०।२, २५।९, तैब्रा. २।४।६।३; ऐआ. १।५।३।१, तैआ. १०।१०।२, १०।४९।१ दुःष्वप्न्यं ( दुष्ष्वप्नियं ), नाउ. ३९.

(४) ऋसं. ५।८२।५, शुसं. ३०।३; तैब्रा. २।४।६।३ तन्न ( तन्म ); शब्रा. १३।४।२।१०, १३।६।२।९, तैआ. १०।१०।२, १०।४९।१ तैब्रावत्; नाउ. ३९.

अनागसो अदितये देवस्य सवितुः सवे ।
विश्वा वामानि धीमहि ॥

वयमनुष्ठातारः सवितुः प्रेरकस्य देवस्य सवे अनुज्ञायां सत्यां अदितये अखण्डनीयायै देव्यै भूम्यै अनागसः स्याम अनपराधिनो भवेम । भूम्या हि पापाः संभवन्ति । अपगतेष्वागःसु विश्वा सर्वाणि वामानि वननीयानि धनानि धीमहि धारयाम । ऋसा.

आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे ।
सत्यसवं सवितारम् ॥

विश्वदेव विश्वे देवा यस्य वशे भवन्ति तं तादृशम् । स हि सर्वात्मा, 'इन्द्रं मित्रं वरुणमग्निमाहुः' (ऋसं. १ । १६४ । ४६ ) इत्यादिश्रुतेः इतरेषां तद्विभूतित्वात् । सत्पतिं सतामनुष्ठातॄणां पालकं सत्यसवं सत्यानुज्ञं सवितारं देवं अद्य अस्मिन् यागदिने सूक्तैः आ वृणीमहे संभजामहे । ऋसा.

य इमे उभे अहनी पुर एत्यप्रयुच्छन् ।
स्वाधीर्देवः सविता ॥

यः सविता देवः स्वाधीः शोभनाध्यानः सुकर्मा वा सन् इमे अहनी रात्र्यहनी तयोः पुरः पुरस्तात् अप्रयुच्छन् अप्रमाद्यन् एति गच्छति त आ वृणीमहे इति संबन्धः । ऋसा.

य इमा विश्वा जातान्याश्रावयति श्लोकेन ।
प्र च सुवाति सविता ॥

यः देवः इमा इमानि विश्वा सर्वाणि जातानि उत्पन्नान् प्राणिनः । जङ्गमानित्यर्थः । तान् श्लोकेन यशसा आश्रावयति । सर्वेऽप्यस्य स्तुतिं शृण्वन्तीत्यर्थः । अथवा गर्जनशब्देन सर्वाणि इमान्युत्पन्नानि आश्रावयति वृष्ट्युन्मुखः सन् । किंच सविता प्र सुवाति च प्रेरयति त वृणीमहे इति । ऋसा.

(१) ऋसं. ५।८२।६.
(२) ऋसं. ५।८२।७; तैसं. ३।४।११।२, मैसं. ४।१२।६ ( १६९ ); ऐब्रा. २।३।७, २०।४।२, २१।५।६, २३।४।८; शाब्रा. २०।३; शब्रा. १३।४।२।१३.
(३) ऋसं. ५।८२।८.
(४) ऋसं. ५।८२।९, कासं. १०।१२ ( २२ ), मैसं. ४।१२।६ ( १८० ); ऐब्रा. २।३।७, शब्रा. १३।४।२।७.

सर्वदेवस्तोतव्यः

अपि ष्टुतः सविता देवो अस्तु यमा चिद्विश्वे वसवो गृणन्ति ।
स नः स्तोमान्नमस्यश्चनो धाद्विश्वेभिः पातु पायुभिर्नि सूरीन् ॥

अपि च सविता देवः अस्माभिः स्तुतः अस्तु । अस्मदीयाः स्तुतीः शृणोत्वित्यर्थः । विश्वे वसवः चित् सर्वे देवा अपि य सवितार आ गृणन्ति अभिष्टुवन्ति नमस्यः सर्वैर्नमस्करणीयः स देवः स्तोमान् नः अस्मदीयानि स्तोत्राणि चनः अन्न धात् दधातु, अफलानि करोतु । विश्वेभिः विश्वैः सर्वैः पायुभिः पालनैः सूरीन् स्तोतॄनस्मान् नि पातु नितरां पालयतु । ऋसा.

अभि यं देव्यदितिर्गृणाति सवं देवस्य सवितुर्जुषाणा ।
अभि सम्राजो वरुणो गृणन्त्यभि मित्रासो अर्यमा सजोषाः ॥

देवी द्योतमाना अदितिः अदीना देवमाता यं सवितार अभि गृणाति अभिष्टौति । कीदृशी । सवितुः देवस्य एव सव प्रसव अनुज्ञा जुषाणा सेवमाना । सम्राजः सम्यग्राजमानाः वरुणः । उपलक्षणमेतत् । वरुणादयो देवाः यं सवितार अभि गृणन्ति अभिष्टुवन्ति । मित्रासः मित्रादयश्च सजोषाः समानप्रीतिः अर्यमा एतत्संज्ञको देवश्च य अभि गृणन्ति । स नः स्तोमाश्चनो धादिति पूर्वयर्चा संबन्धः । ऋसा.

अबाध्यव्रतः, गर्भेऽपत्यकर्ता

गर्भे नु नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः ।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥

त्वष्टा रूपाणां कर्ता सविता सर्वेषां शुभाशुभस्य प्रेरकः विश्वरूपः सर्वात्मकः देवः दानादिगुणयुक्तः जनिता जनयिता प्रजापतिः गर्भे नु गर्भावस्थायामेव नौ आवा दपती जायापती कः कृतवान् एकोदरे सहवासित्वात् । अस्य

(१) ऋसं. ७।३८।३.
(२) ऋसं. ७।३८।४.
(३) ऋसं. १०।१०।५; असं १८।१।५.

प्रजापतेः व्रतानि कर्माणि नकिः प्र मिनन्ति न केचित् प्रहिंसन्ति । न लोपयन्तीत्यर्थः । अतः कारणाद्गर्भावस्थायामेव आवयोः प्रजापतिकृते दपतित्वे सति संभोग कुर्वित्यर्थः । अपि च नौ आवयोः अस्य इद मातुरुदरे सहवासजनित दपतित्व पृथिवी भूमिः वेद जानाति । उत अपि च द्यौः द्युलोकोऽपि जानाति । ऋसा.

सर्वदेवस्वामी, सर्वरूप·

[1]इयं मे नाभिरिह मे सधस्थमिमे मे देवा अयमस्मि सर्वः ।
द्विजा अह प्रथमजा ऋतस्येदं धेनुरदुहज्जायमाना ॥

इय माध्यमिका वाक् मे नाभिः सनाहिनी । आदित्यस्य तस्याश्चाभेदादस्यर्षेर्माध्यमिका वाग्बन्धिका भवति । तथा च ब्राह्मण–'सा या वागसौ स आदित्यः' (शब्रा. १०।५।१।४) इति । इह असिन् मण्डले मे मम सधस्थं स्थानम् । इमे मे देवाः द्योतमाना रश्मयः मे मम स्वभूताः । अयमहमस्मि सर्वः । सूर्यस्य स्वस्योक्तेन प्रकारेणाभेदात्तद्द्वारा सर्वात्मकत्वम् । अह किंचेत्यर्थः । द्विजाः विप्राः ऋतस्य प्रथमजाः सत्यस्य प्रथमजाः सत्यभूतस्य ब्रह्मणः प्रथमोत्पन्नाः । धेनुः पृश्निदेवता माध्यमिका वाक् जायमाना इदं सर्व अदुहत् दुदोह । उदपादयदित्यर्थः । ऋसा.

देवाना यज्ञरूपः, वैश्वानरोऽग्नि· दिवि स्थितः सूर्य एव, स च शरीररक्षकः, त्रैलोक्यविस्तारयिता, स्थावरजङ्गमजनयिता,. उभयलोकस्थो देव, सर्वस्य प्रत्यक्स्थितः

[2]हविष्पान्तमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ ।
तस्य भर्मणे भुवनाय देवा धर्मणे कं स्वधया पप्रथन्त ॥

पान्तं पानीय सोमात्मकं अजरं जरारहित जुष्टं देवानां प्रियं यत् हविः स्वर्विदि सूर्यस्य वेदितरि दिविस्पृशि दिवि स्प्रष्टरि अग्नौ आहुत अभिहुत तस्य सोमात्मकस्य हविषः भर्मणे भरणाय भुवनाय भावनाय च धर्मणे धारणाय च क सर्वस्य सुखकरमिममग्निं देवाः स्वधया अन्नेन पप्रथन्त प्रथयन्ति । तथा च यास्कः—'हविर्यत्पानीयमजर सूर्यविदि दिविस्पृश्यभिहुत जुष्टमग्नौ तस्य भरणाय च भावनाय च धारणाय चैतेभ्यः सर्वेभ्यः कर्मभ्यो देवा इममग्निमन्नेनापप्रथन्त' (नि. ७।२५) इति । ऋसा.

[1]गीर्णं भुवनं तमसापगूळ्हमाविः स्वरभवज्जाते अग्नौ ।
तस्य देवाः पृथिवी द्यौरुतापोऽरणयन्नोषधीः सख्ये अस्य ॥

गीर्णं पूर्वं निगीर्णं तमसा अन्धकारेण अपगूढ आच्छादितं स्वः सर्वं भुवनं अग्नौ यस्मिन् वैश्वानरे जाते उत्पन्ने सति आविः अभवत् आविर्भवति तस्य अस्य वैश्वानरस्याग्नेः सख्ये सखिकर्मणि देवाः इन्द्रादयः पृथिवी भूमिश्च द्यौः च आपः अन्तरिक्ष चोदकानि च ओषधीः ओषध्यश्च अरणयन् अरमन्त । प्रीतिं कृतवन्त इत्यर्थः । ऋसा.

[2]देवेभिर्न्विषितो यज्ञियेभिरग्निं स्तोषाण्यजरं बृहन्तम् ।
यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम् ॥

यज्ञियेभिः यज्ञार्हैः देवेभिः देवैरिन्द्रादिभिः नु क्षिप्रं इषितः अहं अजर जरारहित बृहन्तं महान्तं अग्निं त वैश्वानराग्नि स्तोषाणि स्तोषामि । यः वैश्वानराग्निः भानुना तेजसा पृथिवी भूमिं उत अपि च इमा द्या दिव च आततान आतनोति । तदेव दर्शयति । रोदसी द्यावापृथिव्यौ चाततान आतनोति । विस्तारयतीत्यर्थः । ऋसा.

[3]यो होतासीत्प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना वृणानाः ।
स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥

' यः वैश्वानरोऽग्निः देवजुष्टः देवैः सेवितः प्रथमः मुख्यः होता आसीत् अभूत्, यं च वैश्वानराग्निं यज-

(१) ऋस. १०।६१।१९.
(२) ऋसं. १०।८८।१; ऐब्रा. २२।३।११; शब्रा. २२।३; नि. ७।२५.

(१) ऋसं. १०।८८।२. (२) ऋसं. १०।८८।३.
(३) ऋसं. १०।८८।४.

मानाः वृणानाः आज्येन समाञ्जन् समञ्जन्ति जातवेदाः जातप्रज्ञो जातधनो वा, सः वैश्वानरः अग्निः पतत्रि पतनशील पक्षिजात इत्वर गमनशील सरीसृपादिकं स्थाः स्थावर वृक्षादिरूप च जगत् । स्थावर जङ्गम च जगदित्यर्थः । श्वात्र क्षिप्रमेव अकृणोत् अजनयत् । तथा च यास्कः—'स पतत्रि चेत्वर स्थावर जङ्गम च यत्तत्क्षिप्रमग्निरकरोज्जातवेदाः' ( नि. ५।३ ) इति ।

ऋसा.

[1]यज्जातवेदो भुवनस्य मूर्धन्नतिष्ठो अग्ने सह रोचनेन ।
तं त्वाहेम मतिभिर्गीर्भिरुक्थैः स यज्ञियो अभवो रोदसिप्राः ॥

हे जातवेदः जातप्रज्ञ अग्ने यत् यस्त्व भुवनस्य त्रैलोक्यस्य मूर्धन् मूर्धनि रोचनेन आदित्येन सह अतिष्ठः स्थितवानसि त वैश्वानराग्निं त्वा त्वां मतिभिः अर्चनीयाभिः गीर्भिः स्तुतिभिः उक्थैः शस्त्रैश्च अहेम प्रपद्यामहे । सः वैश्वानरस्त्व रोदसिप्राः द्यावापृथिव्योः पूरयिता यज्ञियः यज्ञार्हश्च अभवः भवसि ।

ऋसा.

[2]मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन् ।
मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन् ॥

अग्निः वैश्वानरोऽग्निः नक्तं रात्रौ भुवः भूतजातस्य मूर्धा शिरोवत्प्रधानभूतः भवति । रात्रौ सर्वप्राणिनामालोकस्य तदधीनत्वात् । ततः रात्रेरनन्तर प्रातरुद्यन् सूर्यो जायते । अहनि स एव वैश्वानरोऽग्निः सूर्यो भवतीत्यर्थः । किंच यज्ञियाना यज्ञसंपादिताना देवाना माया उ प्रज्ञामेव एता मन्यन्ते कवय इति शेषः । यत् प्रजानन् प्रज्ञायमानः सूर्यः तूर्णिः त्वरमाणः सन् अपः अन्तरिक्ष कर्म वा चरति । तथा च यास्कः—'मूर्धा मूर्तमस्मिन्धीयते मूर्धा यः सर्वेषा भूतानां भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्स एव । प्रज्ञा त्वेता मन्यन्ते यज्ञियाना देवाना यज्ञसपादिनामपो यत्कर्म चरति प्रजानन्सर्वाणि स्थानान्यनुसंचरति त्वरमाणः' ( नि. ७। २७ ) इति ।

ऋसा.

[1]ईशेन्यो यो महिना समिद्धोऽरोचत दिवियोनिर्विभावा ।
तस्मिन्नग्नौ सूक्तवाकेन देवा हविर्विश्व आजुहवुस्तनूपाः ॥

यः वैश्वानरोऽग्निः महिना महत्त्वेन ईशेन्यः सर्वेदर्शनीयः समिद्धः सम्यग्दीप्तः दिवियोनिः द्युस्थानः विभावा दीप्तिमांश्च सन् अरोचत दीप्यते तस्मिन्वैश्वानरे अग्नौ तनूपाः शरीराणा रक्षका विश्वे सर्वे देवाः सूक्तवाकेन 'इद द्यावापृथिवी' इत्यादिवाक्येन स्तोत्राणां वचनेन वा हविः आजुहवुः आभिमुख्येन जुहुवुः ।

ऋसा.

[2]सूक्तवाकं प्रथममादिदग्निमादिद्धविरजनयन्त देवाः ।
स एषां यज्ञो अभवत्तनूपास्तं द्यौर्वेद तं पृथिवी तमापः ॥

प्रथमं पूर्वं सूक्तवाकं 'इदं द्यावापृथिवी' इत्यादि वाक्य मनसा निरूपयन्ति आदित् अनन्तरमेव अग्निं मथनेनोत्पादयन्ति । आदित् अनन्तरमेव देवाः हविरजनयन्त जनयन्ति । सः वैश्वानरोऽग्निः एषा देवानां यज्ञः यष्टव्यः अभवत् भवति । सः तनूपाः शरीराणां रक्षिता च भवति । तं अग्निं द्यौः द्युलोकः वेद जानाति । त अग्निं पृथिवी भूमिरपि च जानाति । त अग्निं आपः अन्तरिक्षं च जानाति ।

ऋसा.

[3]यं देवासोऽजनयन्ताग्निं यस्मिन्नाजुहवुर्भुवनानि विश्वा ।
सो अर्चिषा पृथिवीं द्यामुतेमामृजूयमानो अतपन्महित्वा ॥

यं वैश्वानर अग्निं देवासः देवाः अजनयन्त उत्पादितवन्तः यस्मिश्च उत्पन्ने वैश्वानरेऽग्नौ विश्वा विश्वानि भुवनानि भूतानि आजुहवुः आभिमुख्येन जुहुवुः सर्वमेधे सः वैश्वानरोऽग्निः अर्चिषा तेजसा पृथिवीं अन्तरिक्षम् । 'आपः पृथिवी' इत्यन्तरिक्षनामसु पाठात् । द्यां दिवं

(१) ऋसं. १०।८८।५.
(२) ऋसं. १०।८८।६, नि. ७।२७.

(१) ऋसं. १०।८८।७. (२) ऋसं. १०।८८।८.
(३) ऋसं १०।८८।९.

च उत अपि च इमां भूमिं च ऋजूयमानः ऋजुगमनः महित्वा महत्त्वेन अतपत् सर्वं तपति । ऋसा.

[1]स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम् ।
तमू अकृण्वन्त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ॥

देवासः देवाः शक्तिभिः कर्मभिः रोदसिप्रा द्यावापृथिव्योरापूरयितार अग्निं सूर्यात्मक दिवि द्युलोके स्तोमेन हि स्तुत्या खलु अजीजनन् उत्पादितवन्तः । अपि च तमु तमेव क सुखकरमग्निं यज्ञे त्रेधा भुवे त्रेधाभावाय अकृण्वन् कुर्वन्ति । सः पृथिव्या वर्तमानः विश्वरूपाः सर्वरूपाः ओषधीः व्रीह्याद्यास्तेन तेनोपकारेण पचति । अत्र यास्कः—'स्तोमेन यं हि दिवि देवासोऽग्निमजनयन् शक्तिभिः कर्मभिर्द्यावापृथिव्योः पूरणं तमकुर्वस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । यदस्य दिवि तृतीयं तदसावादित्य इति हि ब्राह्मणम्' ( नि. ७।२८ ) इति । ऋसा.

[2]यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् ।
यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन्भुवनानि विश्वा ॥

यदेत् यदैव प्रातः आदितेयं अदितेः पुत्र सूर्य एनं अग्निं च यज्ञियासः यज्ञार्हाः देवाः दिवि द्युलोके अदधुः धृतवन्तः । यदा चेमौ चरिष्णू चरणशीलौ सूर्यवैश्वानरौ मिथुनावभूता प्रादुरभूताम् । आदित् अनन्तरमेव विश्वा विश्वानि भुवनानि भूतजातानि प्रापश्यन् तौ पश्यन्ति । अत्र यास्कः—'यदैनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमदितेः पुत्र यदा चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च । मिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा थु इति नामकरणस्थकारो वा नयतिः परो वनिर्वा समाश्रितावन्योन्यं नयतो वनुतो वा मनुष्यमिथुनावप्येतस्मादेव मेथन्तावन्योन्य वनुत इति वा' ( नि. ७।२९ ) इति । ऋसा.

(१) ऋसं. १०।८८।१०; नि. ७।२८.
(२) ऋसं. १०।८८।११, मैसं. ४।१४।१४ (२०९) नावभू ( ना अभू ), नि. ७।२९.

[1]विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ।
आ यस्ततानोषसो विभातीरपो ऊर्णोति तमो अर्चिषा यन् ॥

देवाः इन्द्रादयः विश्वस्मै भुवनाय वैश्वानर विश्वनरहित अग्निं अह्ना दिवसानां केतु प्रज्ञापक अकृण्वन् अकुर्वन् । यः वैश्वानरोऽग्निः उषसो विभातीः विविध दीप्यमानः आ ततान विस्तारयति । किंच सोऽय यन् गच्छन् तमः अन्धकार अर्चिषा तेजसा अपो ऊर्णोति अपगमयति । ऋसा.

[2]वैश्वानरं कवयो यज्ञियासोऽग्निं देवा अजनयन्नजुर्यम् ।
नक्षत्रं प्रत्नममिनच्चरिष्णु यक्षस्याध्यक्षं तविषं बृहन्तम् ॥

कवयः मेधाविनः यज्ञियासः यज्ञार्हा यज्ञसंपादिनो वा देवाः अजुर्यं जरावर्जितमहिस्यं वा वैश्वानरं विश्वनरहितं सूर्यात्मक अग्निं अजनयन् उत्पादितवन्तः । स च देवैरुत्पादितोऽग्निः नक्षत्र कृत्तिकादि प्रत्न पुराण चरिष्णु चरणशील यक्षस्य पूज्यस्य देवस्य अध्यक्षं प्रत्यक्ष स्वामिनं वा तविष वृद्ध बृहन्त महान्त अमिनन् हिंसितवान् । तेजसाऽभिभूतवानित्यर्थः । ऋसा.

[3]वैश्वानरं विश्वहा दीदिवांसं मन्त्रैरग्निं कविमच्छा वदामः ।
यो महिम्ना परिबभूवोर्वी उतावस्तादुत देवः परस्तात् ॥

विश्वहा सर्वदा दीदिवांसं दीप्त कविं क्रान्तप्रज्ञ वैश्वानर अग्निं मन्त्रैः अच्छा वदामः अभिष्टुमः । यः वैश्वानरोऽग्निः महिम्ना महत्त्वेन उर्वी द्यावापृथिव्यौ परिबभूव परिभवति । उत अपि च अयं अवस्तात् अधस्तात् तपति । उत अपि चाय सूर्यात्मकः देवः परस्तात् उपरिष्टाच्च तपतीत्यर्थः । ऋसा.

(१) ऋसं. १०।८८।१२.
(२) ऋसं. १०।८८।१३.
(३) ऋसं. १०।८८।१४.

[1]द्वे स्रुती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्।
ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥

पितॄणां देवानां च उत अपि मर्त्यानां मनुष्याणां च द्वे स्रुती द्वौ मार्गौ देवयानपितृयाणाख्यौ अहं अशृणवं अश्रौषम्। यत् विश्वं पितरं पालकत्वेन पितृभूतां द्यां मातरं च धारकत्वेन मातृभूतां पृथिवीं च अन्तरा द्यावापृथिव्योर्मध्ये भवति तत् इदं विश्वं अग्निना संस्कृतं सत् एजत् देवलोकं पितृलोकं च गच्छत् ताभ्यां देवयानपितृयाणाख्याभ्यां मार्गाभ्यां समेति गच्छति। तौ च मार्गौ भगवता दर्शितौ—'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ॥' (भ. गी. ८।२४–२७) इति। ऋसा.

[2]द्वे समीची बिभृतश्चरन्तं शीर्षतो जातं मनसा विमृष्टम्।
स प्रत्यङ् विश्वा भुवनानि तस्थावप्रयुच्छन् तरणिर्भ्राजमानः ॥

समीची सगते द्वे द्यावापृथिव्यौ चरन्तं गच्छन्तं शीर्षतः शिरसः जातं उत्पन्नम्। तथा च निगमान्तरम्—'उत मन्येऽहमेनमनयोर्हि शिरस्तोऽयं प्रातर्जायते' इति। यद्वा। सर्वशिरोभूतादादित्याज्जातमित्यर्थः। मनसा, मन्यतिरर्चतिकर्मा। अर्चनीयया स्तुत्या विमृष्टं शोधितं संस्कृतं अग्निं बिभृतः धारयतः। सः अप्रयुच्छन् अप्रमाद्यन् तरणिः क्षिप्रकारी भ्राजमानः दीप्यमानोऽग्निः विश्वा विश्वानि भुवनानि प्रत्यङ् अभिमुखः तस्थौ तिष्ठति। तथा च श्रूयते—'तस्मात् सर्व एव मन्यन्ते मां प्रत्युदगात्' (तैस. ६।५।४।२) इति। ऋसा.

[1]यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद।
आ शेकुरित्सधमादं सखायो नक्षन्त यज्ञं क इदं वि वोचत् ॥

यत्र यस्मिन् काले अवरः पार्थिवोऽग्निर्दैव्यो होता परश्च मध्यमो वायुश्च उभौ वदेते विवादं कुर्वाते यज्ञन्योः यज्ञस्य नेत्रोः नौ आवयोर्मध्ये कतरः भूयिष्ठं यज्ञं वि वेद वेत्ति तत्र सखायः समानख्यानाः ऋत्विजः सधमादं यज्ञं आ शेकुः कर्तुं शक्नुवन्ति। तथा यज्ञं नक्षन्त अश्नुवते अनुतिष्ठन्ति च ये तेषां विदुषां यज्ञमश्नुवानानां मध्ये कः विद्याननुष्ठाता वा इदं अस्य विवादस्य निर्णयरूपं वाक्यं वि वोचत् ब्रवीति। माध्यमिकमिममग्निं ब्रवीति। तथा च यास्कः—'यत्र विवदेते दैव्यौ होतारावयं चाग्निरसौ च मध्यमः कतरो नौ यज्ञे भूयो वेदेत्याशक्नुवन्ति तत्सहमदनं समानख्याना ऋत्विजस्तेषां यज्ञं समश्नुवानानां को न इदं विवक्ष्यति' (नि. ७।३०) इति। ऋसा.

[2]कत्यग्नयः कति सूर्यासः कत्युषासः कत्यु स्विदापः।
नोपस्पिजं वः पितरो वदामि पृच्छामि वः कवयो विद्मने कम् ॥

एवं विवदमानौ अग्निवायू पितॄन् प्रश्नमेयतुः। तत्र मध्यमस्तान् पृच्छति। कत्यग्नयः। अग्नयः कति कतिसंख्याकाः। सूर्यासः सूर्याश्च कतिसंख्याकाः। उषासः उषसश्च कतिसंख्याकाः। आपः च कति। उ इति पूरणः। स्विच्छब्दोऽत्र विचारणार्थः। हे पितरः वः युष्माकं उपस्पिजम्। उपस्पिजमिति स्पर्धायुक्तं वचनमुच्यते। पूर्वोक्तं प्रश्नवचनमेतत् न वदामि। किं तर्ह्यहमजानन् हे कवयः मेधाविनः युष्मान् विद्मने विज्ञानाय कं सुखस्वरूपपर्यालोचनक्लेशमन्तरेण पृच्छामि। अत्रोत्तराणि वालखिल्यसंहितायां दर्शितानि—'एक एवाग्निर्बहुधा

(१) ऋसं १०।८८।१५, कासं. १७।१९ (११४) स्रुती (सृती) विश्वमेजत्स (विश्वं भुवनं स), ३८।१२ (२५), मैसं २।३।८ (४४) ताभ्यां (याभ्यां), शुसं १९।४७ स्रुती (सृती); तैब्रा. १।४।२।३ विश्वं......मातरं च (विश्वं भुवनं समेति। अन्तरा पूर्वमपरं च केतुम्।), २।६।३।५ ताभ्यां (याभ्यां), शब्रा. १२।८।१।२१; बृउ. ६।२।२ शुसंवत्. (२) ऋसं. १०।८८।१६.

(१) ऋसं. १०।८८।१७; नि. ७।३०.
(२) ऋसं १०।८८।१८.

समिद्ध एकः सूर्यो विश्वमनु प्रभूतः। एकैवोषाः सर्वमिदं विभात्येकं वा इदं वि बभूव सर्वम्' (ऋस. ८।५८।२) इति। ऋसा.

**[1]यावन्मात्रमुपसो न प्रतीकं सुपर्ण्यो वसते मातरिश्वः।**
**तावद्दधात्युप यज्ञमायन् ब्राह्मणो होतुरवरो निषीदन्॥**

प्रकृतस्य वैश्वानरस्य विषये यः प्रश्नः तस्य निर्णयमनया वदन्ति। हे मातरिश्वः मातर्यन्तरिक्षे श्वसन् माध्यमिक वायो यावन्मात्रं यावदेव सुपर्ण्यः सुपतना रात्रयः उषसः प्रतीकं मुखं प्रकाशाख्यं दर्शनं वा। न इति पूरणः। वसते आच्छादयन्ति तावत् एव ब्राह्मणः होता अवरः निकृष्टः होतुः अस्याग्नेर्वैश्वानरस्य दैव्यस्य होतुः निषीदन् हौत्रं कर्म कर्तुमुपविशन् यज्ञमायन् उपगच्छन् उप दधाति। होतृकर्म स्वबुद्धौ धारयति। तथा च यास्कः— 'यावन्मात्रमुपसः प्रत्यक्तं भवति प्रतिदर्शनमिति वास्त्युपमानस्य सम्प्रत्यर्थे प्रयोग इहेव निधेहीति यथा सुपर्ण्यः सुपतना एता रात्रयो वसते मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति यज्ञमागच्छन् ब्राह्मणो होताऽस्याग्नेर्होतुरवरो निषीदन् होतृजपस्त्वनग्निर्वैश्वानरीयो भवति' (नि. ७।३१) इति। ऋसा.

पृथिव्याः दिवश्च धर्ता, अन्तरिक्षस्य दोग्धा, विश्वस्य देवानां सुपर्णस्य च जन्मस्थानम्

**[2]सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत्।**
**अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम्॥**

सविता सर्वस्य प्रसविता प्रेरको मध्यमस्थानो देवः सोऽयं यन्त्रैः यमनसाधनैर्वृष्टिप्रदानादिभिर्यैः वायवीयैः पाशैर्वा पृथिवीं प्रथितां भूमिं अरम्णात्। सुखेनावस्थापयति। तथा स एव सविता अस्कम्भने, पतनप्रतिबन्धकमालम्बनं स्कम्भनं, तद्रहिते स्थले द्यां द्युलोकमपि अदृंहत् दृढीकृतवान्। यथाधो न पतति तथात्मीयैरेवोपायैरवस्थापितवानित्यर्थः। अश्वमिव धुनिं कम्पयितव्यं कम्पयितारं वा अन्तरिक्षं अन्तरा क्षान्तं मध्यमस्थानगतं अतूर्ते केनाप्यहिंसितेऽत्वरमाणे वा नभसि वायवीयैः पाशैः बद्धं समुद्रं मेघमयमेव सविता अधुक्षत्। उदकानि दोग्धि। यद्वा। अन्तरिक्षमिति सप्तम्यर्थे प्रथमा। अतूर्तेऽन्तरिक्षे बद्धं समुदितारं धुनिं कम्पनीयं मेघमश्वमिवाऽधुक्षत्। सविता क्लेशयति। यथा शिक्षकः सादी अश्वं क्लेशयत्येवं वर्षणाय मेघं क्लेशयतीत्यर्थः। अथ निरुक्त— 'सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्णं इति वाऽत्वरमाण इति वा सविता समुदितारम्' (नि. १०।३२) इति। ऋसा.

**[1]यत्रा समुद्रः स्कभितो व्यौनदपां नपात्सविता तस्य वेद।**
**अतो भूरत आ उत्थितं रजोऽतो द्यावापृथिवी अप्रथेताम्॥**

यत्र यस्मिन्नन्तरिक्षे समुद्रः समुन्दनशीलो मेघः स्कभितः स्तम्भितो वायुपाशैर्बद्धः सन् व्यौनत् विशेषेण भूमिमुनत्ति उदकैः क्लेदयति। हे अपां नपात् मध्यमस्थान वैद्युताग्ने तव सम्बन्धी सविता प्रेरको देवः तस्य तत्स्थानं वेद वेत्ति जानाति। अतः अस्मादेव सवितुः भूः भूमिरासीत्। अतः एव उत्थितं ऊर्ध्वमवस्थितं रजः अन्तरिक्षं च आः आसीत् अजायत। अतः अस्मादेव सवितुः द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां विस्तीर्णे अभूताम्। ऋसा.

**[2]पश्चेदमन्यदभवद्यजत्रममर्त्यस्य भुवनस्य भूना।**
**सुपर्णो अङ्ग सवितुर्गरुत्मान्पूर्वो जातः स उ अस्यानु धर्म॥**

अन्यत् सवितृव्यतिरिक्तं इदं देवतान्तरं पश्चा पश्चात्। सवितृप्रेरणानन्तरमेव यजत्रं यष्टव्यं अभवत्। केन साधनेन। अमर्त्यस्य मरणरहितस्य भुवनस्य लोकस्य स्वर्गाख्यस्य संबन्धिना भूना भूतेन स्वर्गे उत्पन्नेन सोमेनेत्यर्थः। यद्वा। अमर्त्यस्य भुवनस्य संबन्धीदं देवतान्तरं भूना भूम्ना बहुत्वेन युक्तं यष्टव्यमभवत्। कुत इत्यत आह। हे अङ्ग स्तोतः सुपर्णः शोभनपतनः गरुत्मान्

(१) ऋसं. १०।८८।१९, नि. ७।३१.
(२) ऋसं. १०।१४९।१, नि. १०।३२।१.

(१) ऋसं. १०।१४९।२.
(२) ऋसं. १०।१४९।३, शब्रा. १०।२।२।३.

सोमस्यापहर्ता तार्क्ष्यः सवितुः प्रेरकादस्माद्देवात् पूर्वः प्रथमभावी सन् जातः । अतो हेतोः सुपर्णो गरुत्मान् अस्य सवितुः धर्म धारणमनुसृत्य वर्तते । सवितृप्रेरणाधीनत्वात्सर्वगतीनां सोमाहरणमपि तदधीनामिति सवितृप्रेरणानन्तरमेव सर्वे सोमयागाः प्रवर्तन्ते इत्यर्थः । उ इति पूरकः । ऋसा.

**[१]गावइव ग्रामं यूयुधिरिवाश्वान्वाश्रेव वत्सं सुमना दुहाना ।**
**पतिरिव जायामभि नो न्येतु धर्ता दिवः सविता विश्ववारः ॥**

गाव इव यथाऽरण्ये सचरन्तो गावः ग्राम शीघ्रमभिगच्छन्ति । युयुधिरिव यथा योद्धा युद्धार्थं अश्वान् अभिगच्छति । सुमनाः शोभनमनस्का दुहाना दोग्ध्री बहुपयस्का वाश्रेव हम्भारवात्मक शब्द कुर्वती गौर्यथात्मीय वत्स अभिगच्छति । पतिरिव यथा भर्ता जायां स्वभार्या शीघ्रमभिगच्छति एवमेव सविता नः अस्मान् नि अभि एतु नितरामभिगच्छतु । कीदृशः । दिवः द्युलोकस्य धर्ता धारयिता अवस्थापयिता वा अत एव विश्ववारः सर्वैर्वरणीयः । ऋसा.

**[२]हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अस्मिन् ।**
**एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् ॥**

हे सवितः प्रेरक त्वा त्वां आङ्गिरसः अङ्गिरसः पुत्रः हिरण्यस्तूपः मम पिता अस्मिन् वाजे अन्ने निमित्तभूते सति यथा जुह्वे आहूतवान् एव एवं अर्चन् एतत्सज्ञोऽहं त्वा त्वां अवसे अवनाय रक्षणार्थं वन्दमानः स्तुवन् आह्वयामीति शेषः । आहूय च सोमस्येवाशु यथा सोमलता प्रति यजमाना जाग्रति यागपर्यन्तं तद्रक्षणे प्रबुद्धा वर्तन्ते तथा अह त्वत्परिचर्यां प्रति जागर जागर्मि । अत्र निरुक्त—' हिरण्यस्तूपो हिरण्मयस्तूपो हिरण्यमयः स्तूपोऽस्येति वा । स्तूपः स्त्यायतेः संघातः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजेऽन्नेऽस्मिन्नेव त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम्' ( नि. १०।३३ ) इति । ऋसा.

(१) ऋसं. १०।१४९।४.
(२) ऋस १०।१४९।५, नि. १०।३३।१.

विपश्चितामन्तःकरणगोचर , स्वर्गप्रदाया वाचो मन्ता

**[१]पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः ।**
**समुद्रे अन्तः कवयो वि चक्षते मरीचीनां पदमिच्छन्ति वेधसः ॥**

असुरस्य असनकुशलस्य सर्वोपाधिविहीनस्य परब्रह्मणः सबन्धिन्या मायया त्रिगुणात्मिकया अक्त व्यक्तमभिव्यक्तम् । यद्वा । मायेति प्रज्ञानाम । प्रज्ञया संबद्धं सर्वज्ञ पतङ्ग, पतति गच्छतीति पतङ्गः सूर्यः, तं विपश्चितः विद्वांसः हृदा हृत्स्थेन हृदि निरुद्धेन मनसा पश्यन्ति जानन्ति । कवयः क्रान्तदर्शिनस्ते समुद्रे, समुद्द्रवन्त्यस्माद्रश्मय इति समुद्र सूर्यमण्डलं, तास्मिन् अन्तः मध्ये वि चक्षते विपश्यन्ति । मण्डलान्तर्वर्तिन हिरण्मयं पुरुषमपि जानन्तीत्यर्थः । य एव वेधसः विधातारः उक्तप्रकारेण सूर्योपासनस्य कर्तारः ते मरीचीना रश्मीनां पदं स्थानं सूर्यमण्डल इच्छन्ति अभिलषन्ति । तदुपासनया प्राप्नुवन्तीत्यर्थः । यद्वा । माययाऽक्त जीवरूपेणाभिव्यक्तमात्मान विपश्चितो वेदान्ताभिज्ञा हृत्स्थेनान्तर्मुखेन मनसा पतङ्ग, पतति व्याप्नोतीति पतङ्गः परमात्मा, त पश्यन्ति । उपाधिपरित्यागेन जीवात्मनः परमात्मना तादात्म्यं साक्षात्कुर्वन्तीत्यर्थः । अपि च ते कवयः क्रान्तदर्शिनो वेदान्ताभिज्ञाः समुद्रे, समुद्द्रवन्त्यस्माद्भूतानीति समुद्रः परमात्मा, तस्मिन्नधिष्ठानभूतेऽन्तर्मध्ये सर्व दृश्यजातमध्यस्तत्वेन वि चक्षते विपश्यन्तीति । अतो दृग्व्यतिरिक्तस्य सर्वस्य मिथ्यात्वाद्वेधसो विधातारस्ते मरीचीना वृत्तिज्ञानानां पदमधिष्ठानभूतं सच्चित्सुखात्मक यत्परं ब्रह्म तदेवेच्छन्ति तद्भावप्राप्तिमेव कामयन्ते । ऋसा.

**[२]पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः ।**
**तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो नि पान्ति ॥**

पतङ्गः सूर्यः वाच त्रयीरूपां मनसा प्रज्ञया बिभर्ति

(१) ऋस. १०।१७७।१, ऐब्रा ४।३।७; शाब्रा ८।४, २५।७, तैआ ३।११।१० विपश्चितः ( मनीषिणः ), जैउब्रा. ३।३५।१. (२) ऋसं. १०।१७७।२, तैआ. ३।११।११; जैउब्रा. ३।३६।१.

धारयति। श्रूयते हि—'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः' (तैब्रा. ३।१२।९।१) इति। तामेव वाचं गर्भे शरीरस्य मध्ये वर्तमानः गन्धर्वः, गाः शब्दान् धारयतीति गन्धर्वः प्राणवायुः। अन्तः मध्ये अवदत् वदति प्रेरयति। 'मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्' (पा. शि. ७) इति स्मरणात्। द्योतमानां स्वर्यं स्वर्गमयित्रीं स्वर्गाय हिता वा मनीषा मनसः ईशित्रीं तां त्रयीरूपां वाच ऋतस्य यज्ञस्य सत्यभूतस्य सूर्यस्य वा पदे स्थाने कवयः मेधाविनः ऋषयः नि पान्ति अध्यापनेन नितरां रक्षन्ति। यद्वा। पतङ्गः सर्वोपाधिशून्यो व्याप्तः परमात्मा। स सृष्ट्यादौ वाच मनसा बिभर्ति। कानि कानि स्रष्टव्यानीति पर्यालोचनेन मनसा सकलार्थप्रतिपादकं वेदं परामृष्टवानित्यर्थः। स्मर्यते हि–'वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' इति। गर्भे हिरण्मये ब्रह्माण्डेऽन्तर्वर्तमानो गन्धर्वो हिरण्यगर्भस्ता वाचमवदत् प्रथममुच्चारितवान्। द्योतमानत्वादिगुणविशिष्टा तां वाच कवयः क्रान्तदर्शिनो देवा ऋतस्य सत्यस्य ब्रह्मणः पदे स्थाने नि पान्ति निभृतं रक्षन्ति। ऋसा.

**[१]अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्।**
**स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः॥**

अहं गोपा गोपायितारमादित्य अपश्य अज्ञासिषम्। एष हि सर्वाणि भूतजातान्युदयास्तमयादिकर्मणा गोपायति। कीदृशम्। अनिपद्यमान उच्चैर्गच्छन्तम्। न ह्यसौ कदाचिन्नीचैः पद्यते। पथिभिः आकाशमार्गैः पूर्वाह्णे आ चरन्तं अस्मानभिलक्ष्य गच्छन्त सायंसमये परा चरन्तं पराङ्मुखं गच्छन्तम्। प्रकारद्वयसमुच्चयार्थौ चशब्दौ। स सूर्यः सध्रीचीः सहाञ्चन्तीः विषूचीः विविध पृथक् पृथक् अञ्चन्तीः स्वस्वव्यापाराय गच्छन्तीः। प्राच्याद्या महादिशः सध्रीच्यः, विषूच्यः कोणदिशः। वसानः स्वभासाऽऽच्छादयन् प्रकाशयन् भुवनेषु लोकेषु अन्तः मध्ये आ वरीवर्ति पुनःपुनरुद्यन्नस्तं गच्छश्चावर्तते। यद्वा। गोपा शरीरस्य गोपायितारं अनिपद्यमानं अविनाशिनमविपन्न आ च परा चाभिमुखेन च पराङ्मुखेन च पथिभिः नाडीलक्षणैर्मार्गैश्चरन्तं शरीरे वर्तमान प्राणमपश्यं अहमदर्शम्। ऋसा.

यत् गुहास्थितं विश्वात्मकं परमं अमृतधाम, तस्य द्रष्टा वेत्ता वेन. गन्धर्व. देवाना नामधारकः पितामहश्च

**[१]वेनस्तत् पश्यत् परमं गुहा यद्यत्र विश्वं भवत्येकरूपम्।**
**इदं पृश्निरदुहज्जायमानाः स्वर्विदो अभ्यनूषत व्राः॥**

वेनतेः कान्तिकर्मसु पाठात् दीप्यमान आदित्यो वेन इत्युच्यते। गुहा गुहायाम्। गुहारूपे सर्वप्राणिहृदये यत् श्रुत्यन्तरप्रसिद्धं सत्यज्ञानादिलक्षण परमं ब्रह्म। यत्र यस्मिन् अधिष्ठानरूपे ब्रह्मणि विश्वं आरोपितं कृत्स्नं जगत् एकरूपं एकाकारं भवति, आरोपितस्य अधिष्ठानव्यतिरेकेण सत्त्वाभावात्। आह स्म भगवान् बादरायणः– 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्रसू. २।१।१४) इति। तत् उक्तलक्षणं ब्रह्म वेनः पश्यत् अपश्यत्। स्वानन्यत्वेन साक्षात्कृतवान् इत्यर्थः। पृश्निः दिवश्च आदित्यस्य च साधारणनामैतत्। प्राप्तोज्ज्वलवर्णं आदित्यः। इदं भूतभौतिकप्रपञ्चजातं अदुहत्। अनुद्भूतनामरूपात्मकं जगत् ब्रह्मानन्यत्वेन सर्वशक्तित्वादुद्भूतनामरूपत्वेन व्यक्त अकार्षीदित्यर्थः। जायमानाः उत्पद्यमानाः व्राः व्रियन्ते इति व्राः आवृतात्मानः प्रजाः। स्वर्विदः स्वःशब्दाभिधेय आदित्यं स्वोत्पादकं विदन्ति जानन्तीति स्वर्विदः। अभ्यनूषत आभिमुख्येन तं आदित्यं स्तुवन्ति। यद्वा। वेनः पर्जन्यात्मा मध्यमस्थानो देवः। तत् आदित्यमण्डलस्थं उदक पश्यति। तदेव विशिनष्टि। परम उत्कृष्टं गुहारूपे आदित्यमण्डले यत् उदकं अस्ति। यत्र च उदके विश्वं जगत् एकरूपं नैमित्तिकप्रलये उदकात्मकं भवति। 'आपो वा इदमग्रे

(१) ऋसं. १०।१७७।३; असं. ९।१५।११; मैसं. ४।९।६ (८५), शुसं. ३७।१७, ऐब्रा. ४।३।९, शब्रा. १४।१।४।९; ऐआ. २।१।६।६; तैआ. ४।७।१, ५।६।४, जैउब्रा. ३।३७।१, २, नि. १४।३.

(१) असं. २।१।१.

सलिलं आसीत्' ( तैस. ७।१।५।१ ) इति । 'आपो वा इदं सर्वं विश्वा भूतान्यापः' ( तैआ. १०।२२ ) इति च श्रुतेः । अथ वा यत्र यस्मिन्नुदके विषये विश्व एकरूप उपजीव्यत्वेन एकाकारबुद्धिमत् भवति । श्रूयते हि—'नानामनसः खलु वै पशवो नानाव्रतास्तेप एवाभि समनसः' ( तैस. ५।३।१।३ ) इति । तत् पश्यतीति संबन्धः । इद, उदकनामैतत् । उदक उक्त उदक पृश्निः आदित्यः तद्रश्मिसमूहो वा अदुहत् वर्षति । 'यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति' (तैस. २।४।१०।२) इति । 'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति' (तैआ. १०।६३) इति तैत्तिरीयकश्रुतेः । 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' ( मस्मृ. ३।७६ ) इति स्मृतेश्च । जायमानाः पृश्नेरुत्पद्यमानाः स्वर्विदः सुखस्य लम्भयित्रीः व्राः व्रियमाणाः संभज्यमानाः स्वीक्रियमाणाः अपः सर्वे जनाः अभ्यनूषत अभिष्टुवन्ति । एवं उक्तलक्षणः सर्वज्ञ आदित्यः शुभाशुभविज्ञान करोतु इति विज्ञानकर्मणा सबन्धः ।

असा.

प्र[1] तद्वोचेदमृतस्य विद्वान् गन्धर्वो धाम परमं गुहा यत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुष्पितासत् ॥

अमृतस्य अविनाशिनो ब्रह्मणो विद्वान् जानन् । गन्धर्वः गावो रश्मयः तान् धारयतीति गन्धर्वः आदित्यः । 'सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरसः' ( तैसं. ३।४।७।१ ) इति श्रुतेः । गां वेदलक्षणां वाचं वा धारयतीति गन्धर्वः । 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' ( तैब्रा. ३।१२।९।१ ) इत्यादिश्रुतेः । तत् उक्तलक्षण ब्रह्म प्र वोचेत् प्रब्रवीतु । उपासकेभ्य इति शेषः । किं तत् इति तदाह । परम क्रियाफलभूतविनश्वरस्वर्गाद्यपेक्षया उत्कृष्टं धाम पुनरावृत्तिरहित स्थानम् । उक्त हि भगवता—'न तद् भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥' ( भ. गी. १५। १६ ) इति । गुहा गुहाया हृद्रूपाया स्थितं यत् तत्त्व तत् वोचेत् इति संबन्धः । हृदयस्थस्य नित्यापरोक्षस्य परतत्त्वस्य उपदेश्यत्व अनुपपन्न इत्यत आह—त्रीणि पदानीति । अस्य परमात्मनः त्रीणि पदानि गुहा गुहाया निहिता निहितानि । यद्यपि अत्र निरुपाधिकस्य ब्रह्मणो निरवयवत्वात् पादकल्पना नोपपद्यते तथापि भूतभौतिकप्रपञ्चजातात् तदुपादानस्य आत्मनो निरतिशयमहत्त्वं प्रतिपादयितु त्रिपदत्व उक्तं इति अविरोधः । यथा छान्दोग्ये—'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छाउ. ३।१२।६ ) इति । गुहानिहितपदार्थवत् अज्ञातं अपरिच्छिन्नं ब्रह्म उपदेशैकसमधिगम्यमस्तीति तात्पर्यार्थः । यद्वा अस्य पूर्वोक्तस्य परब्रह्मणः त्रीणि पदानि । पद्यन्ते गम्यन्ते मुमुक्षुभिः प्राप्यन्ते इति पदशब्देन अशीभूता विराड्ढिरण्यगर्भेश्वरा उच्यन्ते । गुहा गूहयति सवृणोति परिच्छिनत्ति परमात्मान इति गुहा माया । तत्र निहितानि समष्टिरूपेण उपहितानि । गुरूपदेशजनितब्रह्मावबोधस्य प्रयोजनमाह—यः शमदमादिसपन्नोऽधिकारी तानि तत् पादत्रयोपलक्षित निष्कलं ब्रह्म वेद जीवेश्वरोपाधिपरित्यागेन साक्षात्करोति । स विद्वान् पितुः स्वजनकस्यापि पिता कारणभूतः असत् भवति । सर्वजगदधिष्ठानभूतब्रह्मीभावेन स्वस्यापि सर्वजगत्कारणत्वोपपत्तेः । तदुक्तं सामब्राह्मणे—'शिशुर्वा आङ्गिरसो मन्त्रकृता मन्त्रकृदासीत् स पितॄन् पुत्रका इत्यामन्त्रयत' इत्यादि । स्मर्यते च—'अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ ते तमर्थमपृच्छन्त देवानागतमन्यवः । देवाश्चैनान् समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥' ( मस्मृ. २।१५१,१५२ ) इति । अथवा तानि विराड्ढिरण्यगर्भेश्वरतत्त्वानि वेद प्रणवावयवैः अकारादिभिः व्यष्टिरूपाणा विश्वतैजसप्राज्ञाना समष्टिरूपविराडादितादात्म्यज्ञानपुरःसरं तुरीय वस्तु यो वेद स पितुः पिता असत् इति पूर्ववत् ।

असा.

स[1] नः पिता जनिता स उत बन्धुर्धामानि वेद भुवनानि विश्वा ।

(१) असं. २।१।२; शुसं. ३२।९ अमृतस्य ( अमृतं नु ) परम गुहा यत् ( विभृतं गुहा सत् ); तैआ. १०।१।३ (प्र तद्वोचे अमृतं नु विद्वान् गन्धर्वो नाम निहितं गुहासु । त्रीणि पदा निहिता गुहासु यस्तद्वेद सवितुः पिता सत् ॥).

(१) असं. २।१।३.

**यो देवानां नामध एक एव तं संप्रश्नं भुवना यन्ति सर्वा ॥**

स सूर्यात्मकः परमात्मा नः अस्माकं पिता पालयिता। न केवलं पालकः किंतु जनिता जनयिता उत्पादकः। उत अपि च सः उक्त एव बन्धुः भ्रात्रादिरूपो बन्धुवर्गः। पुत्रादीनां चेतनानां तद्व्यतिरेकेण अभावात् तत्तन्नामभिः स एवाभिधीयते इत्यर्थः। इदानीं तस्य सर्वज्ञतामाह। धामानि कर्मफलभूतस्वर्गादिस्थानानि। 'धामानि त्रयाणि भवन्ति। स्थानानि नामानि जन्मानीति' (नि. ९।२८) इति हि निरुक्तम्। तत्र स्थितानि विश्वा विश्वानि सर्वाणि भवन्ति सत्तां लभन्ते उत्पद्यन्ते इति भुवनानि भूतजातानि च वेद। स्वाध्यस्तं कृत्स्नप्रपञ्चं स्वाभिन्नं जानातीत्यर्थः। तथा य उक्तः परमात्मा एक एव देवानां इन्द्रादीनां स्वसृष्टानां नामधाः। इन्द्रमित्रादीनि नामानि दधाति विदधाति करोतीति नामधाः। श्रूयते हि–'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते' (तैआ. ३। १२।७) इति। यद्वा इन्द्राग्न्यादिदेवतात्मकः सन् तत्तन्नामानि स्वयमेव धत्ते इति नामधाः। तथा चाम्नायते—'तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः। तदेव शुक्रं तद्ब्रह्म तदापस्तत्प्रजापतिः॥' (तैआ. १०।१।२) इति। 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥' (ऋसं. १। १६४।४६) इति। तं उक्तलक्षणं आत्मानं विषयीकृत्य सर्वा सर्वाणि (भुवना) भुवनानि भूतजातानि। संप्रश्नम्। किंविधोऽयं आत्मा इति संभूय क्रियमाणः प्रश्नः संप्रश्नः। तं यन्ति प्राप्नुवन्ति। 'यतो वाचो निवर्तन्ते' (तैउ. २।९) इत्यादिश्रुत्या परतत्त्वस्य अवाङ्मनसगोचरत्वात् तत्स्वरूपं निश्चेतुं असमर्थाः सन्तो जिज्ञासवः किमयमात्मा ज्ञानादिगुणकः उत निर्गुणः, परिच्छिन्नः अपरिच्छिन्नो वा, जगतः किं निमित्तकारणमेव उत उपादानकारणमपि, इत्येवमादिसंशयं आपद्यन्ते इत्यर्थः। अथवा संप्रश्नं, क्रियाविशेषणमेतत्। संगतः प्रश्नः संप्रश्नः। तत्पूर्वकं गुरुशास्त्रोपदेशतस्तमेव परमात्मानं यन्ति। तदैक्यं लभन्ते इत्यर्थः। 'ब्रह्मैव सन् ब्रह्माप्येति' (बृउ. ४।४।६) 'ब्रह्मविद् आप्नोति परम्' (तैउ. २।१) 'ब्रह्म वेद ब्रह्मैव भवति' (मुउ. ३।२।९) इत्यादिश्रुतिभ्यः। विश्वं कृत्स्नं जगत् कर्म कर्तव्यं यस्येति व्युत्पत्त्या विश्वकर्मशब्देन परमात्मैवोच्यते इति वैश्वकर्मणहोमेऽपि अस्या ऋचो विनियोग उपपन्नः। असा.

सर्वदेवरथानं, ऋततन्तुरूपः, अग्निस्वरूप.

**परि द्यावापृथिवी सद्य आयमुपातिष्ठे प्रथमजामृतस्य।**
**वाचमिव वक्तरि भुवनेष्ठा धास्युरेष नन्वेषो अग्निः॥**

ज्ञानोत्तरकालं तत्त्ववित् ब्रूते। द्यावापृथिवी द्यौश्च पृथिवी च द्यावापृथिव्यौ। तदुपलक्षितं कृत्स्नं जगत् सद्यः तदानीं तत्त्वज्ञानसमकालमेव पर्याय परितः प्राप्तवान् अस्मि। स्वाभेदेन अवगतस्य ब्रह्मणः सर्वात्मकत्वादिति भावः। तथा च श्रुत्यन्तरे–'अहं मनुरभवं सूर्यश्च' (ऋसं. ४।२६।१) इति। ऋतस्य सत्यस्य सत्यात् ब्रह्मणः। प्रथमजाः भूतभौतिकप्रपञ्चजातात् पूर्वं उत्पन्नः सूत्रात्मा। श्रूयते हि–'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' (ऋसं. १०।१२०।१) इति उपातिष्ठेत्। स यथा समष्टिरूपेण कृत्स्नं जगत् व्याप्य अवतिष्ठते तद्वदहमस्मीत्यर्थः। सद्यःप्राप्तिं दृष्टान्तेन उपपादयति वाचमिवेति। वक्तरि प्रयोक्तरि स्थितां वाचं निकटस्थिता बोद्धारो यथा प्रयोगसमकाले एव अवगच्छन्ति तथेत्यर्थः। यद्वा ज्ञानिना प्राप्यस्य तत्त्वस्य सर्वात्मकतामाह–वाचमिवेति। वाक् स्वात्मकं विततं शब्दब्रह्म वक्तरि पुरुषे परिच्छिन्नं सत् यथा आविर्भवति। यथाहुराचार्याः–'स स्वः श्रुतिसंपन्नैः शब्दब्रह्मेति कथ्यते। स तु सर्वत्र संस्यूतो जाते भूताकरे पुनः॥ आविर्भवति देहेषु प्राणिनामर्थविस्तृतः॥' इति। एवं परमात्मा भुवनेष्ठाः। मायातत्कार्यात्मके भुवने भूतजाते तिष्ठति उपहितः सन् वर्तते इति भुवनेष्ठाः। एष परमात्मा धास्युः पोषणेच्छावान्। हेतुगर्भविशेषणमेतत्। पोषणाद्धेतोस्तत्रतत्र भूतेषु वर्तत इत्यर्थः। यद्वा धासिरिति अन्ननाम। तदुपलक्षितं भोग्यजातं आत्मन इच्छतीति धास्युः। निष्क्रियस्य सतः कथं

(१) असं. २।१।४.

पोषकत्व भोक्तृत्वं चेति तत्राह—नन्वेषो अग्निरिति । एष परमात्मा अग्निर्नतु वैश्वानरात्मना पोषको भोक्ता खलु । श्रूयते हि वाजसनेयके— ‘ एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः ’ इति । भगवताऽप्युक्तम्— ‘अहं वैश्वानरो भूत्वा प्राणिना देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्न चतुर्विधम् ॥ ’ (भ. गी. १५।१४) इति ।

असा.

**परि विश्वा भुवनान्यायमृतस्य तन्तुं वितत दृशे कम् ।**
**यत्र देवा अमृतमानशानाः समाने योनावध्यैरयन्त ॥**

विश्वा विश्वानि भुवनानि पृथिव्यादीन् कर्मफलभूतान् लोकान् पर्यायं ज्ञानोत्पत्तेः प्राक् खलु परितः प्राप्तवम् । परितो गमनस्य प्रयोजनमाह । ऋतस्य सत्यस्य ब्रह्मणः तन्तु पटस्य तन्तुवत् जगतः कारणभूतं वितत व्याप्तं स्वरूप दृशे द्रष्टुम् । पर्यायमिति संबन्धः । कं इति पदपूरणः । यद्वा । ऋतस्य पुण्यापुण्यलक्षणकर्मणः कारणभूतं तन्तुं तन्तुवद्बन्धनहेतुं मूलाज्ञान वितत अनादित्वेन विस्तीर्णम् । ‘ ऋतस्य तन्तु विततं विचृत्य ’ ( नाउ. १।४ ) इति श्रुत्यन्तरादत्रापि छिन्त्वेत्यध्याहारः । क सुखात्मकं ब्रह्म । ‘ क ब्रह्म ख ब्रह्म ’ ( छाउ. ४।१०।५ ) इति श्रुतेः । दृशे द्रष्टुं पर्यायं इति योजना । द्रष्टव्य ब्रह्मैव विशिनष्टि यत्र देवा इत्यर्धर्चेन । यत्र यस्मिन् ब्रह्मणि देवाः इन्द्राद्याः अमृतं अविनश्वरं परमानन्द आनशानाः अश्नुवानाः प्राप्नुवन्तः समाने योनौ एकस्मिन्नेव कारणभूते ब्रह्मणि ऐरयन्त स्वात्मानं अगमयन् । तदेकीभूता इत्यर्थः । अथ वा तत्त्ववित् स्वानुभव आविष्करोति । यत्र ब्रह्मणि मनोवृत्तिभिः साक्षात्कृते अमृत अनश्वरनिरतिशयानन्दं आनशानाः प्राप्नुवन्तो देवा इन्द्रियाणि समाने योनौ साधारणे कारणभूते ब्रह्मणि अध्यैरयन्त प्राप्नुवन्ति । लीना भवन्तीत्यर्थः । अर्थद्वयेऽपि तद् ब्रह्म द्रष्टुमिति संबन्धः ।

असा.

(१) असं. २।१।५.

इन्द्रमहेन्द्रलोकप्रजापतिविष्णुरूपः यज्ञभुक् च

**त्वमिन्द्रस्त्वं महेन्द्रस्त्वं लोकस्त्वं प्रजापतिः । तुभ्यं यज्ञो वि तायते तुभ्यं जुह्वति जुह्वतस्तवेद्विष्णो बहुधा वीर्याणि । त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥**

हे सूर्य त्व इन्द्रः स्वर्गाधिपतिः ‘ सहस्राक्षो गोत्रभिद्वज्रबाहुः ’ (तैस. २।३।१४।४) इत्यादिमन्त्रोक्तस्वरूप इन्द्रस्त्वमेव । तथा महेन्द्रस्त्वमेव महत्त्वगुणविशिष्ट इन्द्रोऽपि त्वमेव । वस्तुतो देवतैक्येऽपि विशेषणभेदाद्देवताभेदं इच्छन्ति तान्त्रिकाः । इन्द्रस्य महत्त्वगुणयोगः ‘ इन्द्रो वै वृत्र हत्वा महान् अभवत् ’ ( ऐआ. १।१ ) इत्यादिश्रुतेर्वृत्रवधाद्यसाधारणपराक्रमजन्यः । तथा त्वमेव लोकः सुकृतिभिः प्राप्यो लोकः स्वर्गादिलक्षणस्त्वमेव । अथ वा परब्रह्मस्वरूपत्वात् सर्वलोकात्मकस्त्वमेव । एवं प्रजापतिः प्रजाना स्रष्टा देवस्त्वमेव । यत एव अतस्तुभ्य तव प्रीतये यज्ञो ज्योतिष्टोमादिः वि तायते विस्तार्यते यजमानैः । तथा जुह्वतः होमं कुर्वन्तः सर्वेऽपि तुभ्य त्वदर्थमेव जुह्वति होमं कुर्वन्ति । याज्यापुरोनुवाक्यापुरःसर हूयमाना यागाः, तद्रहिता होमाः इति तयोर्विवेकः ।

(हे विष्णो व्याप्नोति स्वरश्मिभिः सर्वं ब्रह्माण्डान्तरालमिति विष्णुरादित्यः । अथवा द्वादशादित्यमध्ये ‘ दिवाकरो मित्रो विष्णुश्च ’ इति श्रुतौ स्मृतौ च विष्णोरपि परिगणनात् विष्णुरादित्यः । तादृशविष्णुशब्दाभिधेयादित्य तवेत् तवैव वीर्याणि बहुधा बहुप्रकाराणि नान्यस्य देवतान्तरस्य । यतस्त्वं विष्णुः अतस्तव वीर्याणि अनन्तानीत्यभिप्रायः । विष्णुत्वोपाधौ तु—‘ विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तर सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ ’ ( ऋसं. १।१५४।१ ) इत्यादिमन्त्रश्रुतिषु पुराणेतिहासागमादिषु च प्रसिद्धानि । साक्षात् सूर्यस्य भगवतो वीर्याण्यपि जगदन्धकारनिर्हरणसकलपदार्थप्रकाशननिखिललौकिकवैदिककर्मनिर्वर्तनसमयवृष्टिप्रदानारोग्यकरणमोक्षप्रदानादीनि लोकप्रसिद्धान्येव । यतस्तव सर्वप्राण्युपकारकाणि बहुविधानि वीर्याणि सन्ति अतस्त्वं

(१) असं. १७।१।१८.

नः अस्मान् विश्वरूपैः गोमहिष्यजाविकरितुरगोष्ट्रादिलक्षणैः पशुभिः पृणीहि पूरय। तथा मा मा एतद्देहावसाने परमे निरतिशये व्योमन् व्योमनि, विशेषेण अवतीति व्योम, तस्मिन् ब्रध्नस्य विष्टपे स्थाने। 'यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितम्। तस्मिन् मां धेहि पवमानामृते लोके अक्षिते ॥' (ऋस. ९।११३।७) ) इति मन्त्रोक्तलक्षणे इत्यर्थः। तथाविधे लोके स्वधायां, अन्ननामैतत्, यत्सेवया क्षुत्तृष्णाशोकमोहजरामरणादयो न भवन्ति तथाविधे अन्ने अमृते मा मा धेहि स्थापय। तद्भोगार्हं कुर्वित्यर्थः। ) असा.

असति सत् प्रतिष्ठितं सति भूतं प्रतिष्ठितम्। भूतं ह भव्य आहितं भव्यं भूते प्रतिष्ठितं तवेद्विष्णो बहुधा वीर्याणि। त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥

असति। अत्र असच्छब्देन नामरूपादिराहित्यात् असत्प्रायं निरस्तसमस्तोपाधिकं सन्मात्रं ब्रह्म अभिधीयते। यथा दृश्यपदार्थाः नामरूपादिघटितत्वेन सद्व्यवहारमर्हन्ति एवं नामरूपाद्यभावेन चक्षुराद्यविषयत्वेन द्रष्टुमनर्हत्वात् ब्रह्म असदित्युच्यते। सच्छब्देन च असतः प्रपञ्चस्य सत्त्वेनावभासकत्वात् स्वयं च तद्रूपेण सत्त्वेनावभासात् अनृतनीहारमायाद्यपरपर्यायं अज्ञानं अभिधीयते। यद्यपि वस्तुतः सच्छब्देन ब्रह्म अभिधातव्यं 'सदेव सोम्येदमग्र आसीत्' (छाउ. ६।२।१) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तैउ. २।१), इत्यादिश्रुतेः, तथा असच्छब्देन अब्रह्म (अज्ञान) अभिधातव्यं सद्विलक्षणत्वात् भ्रान्तिबाधयोर्विषयत्वाच्च 'अतोऽन्यदार्तम्' (बृउ. ३।५।१) इति श्रुतेः, तथापि प्रतीत्यनुसारेण एवमुक्तम्। तस्मिन्नसति ब्रह्मणि सत् अज्ञानं प्रतिष्ठितं आश्रितं अध्यस्तम्। यथा इदमंशे शुक्तौ रजतं, रज्वां सर्पधारादि, एवं ब्रह्मणि अज्ञानं प्रतिष्ठितम्। सति उक्तलक्षणे अज्ञाने चैतन्यप्रतिबिम्बवति अज्ञाने भूतं भूतकालावच्छिन्नं पृथिव्यादिभूतपञ्चकं सकलसृष्ट्युपादानभूतं प्रतिष्ठितं तदाश्रित्य वर्तते। तत उत्पद्यत इत्यर्थः। यद्यपि 'आत्मन आकाशः सम्भूतः' (तैउ. २।१) इत्यादिश्रुतेर्ब्रह्मतो भूतानामुत्पत्तिर्न मायातः, तथापि अविक्रियस्य केवलस्य सन्मात्रस्य अकार्यत्वात् अकारणत्वात् मायात एव तेषामुत्पत्तिः। तदधिष्ठानत्वात् ब्रह्मत उत्पत्त्यभिधानश्रुतिः। 'भ्रमाधिष्ठानतामात्रात् प्रकृतित्वमुपेयते' इति हि स्मरन्ति। अथ वा असच्छब्देन साङ्ख्यशास्त्रप्रसिद्धं अनुद्भूतोद्भवाभिभवं गुणत्रयसाम्यावस्थालक्षणं प्रधानं उच्यते। तस्य विकृतिरूपताऽभावात् असच्छब्दव्यवहारः। तस्मिन्नसति सत् उद्भूतोद्भवाभिभवं अन्तरुदितत्रिभेदं महत्तत्त्वं प्रतिष्ठितम्। महत्तत्त्वस्य प्रधानविकारत्वात् सच्छब्देन व्यवहारः। तस्मिन् सति महत्तत्त्वे भूतं भूतपञ्चकं प्रतिष्ठितम्। तच्च भूतं भूतपञ्चकं सर्वस्य कार्यप्रपञ्चस्य उपादानभूतं भव्ये कार्यजाते आहितं अनुगतम्। तच्च भव्यं कार्यजातं भूते स्वकारणभूते भूतपञ्चके प्रतिष्ठितं नियतं वर्तते। कारणव्यतिरेकेण पृथगवस्थानाभावात्। एवमात्मनः प्रपञ्चावस्थानस्य परमेश्वरमहिमायत्तत्वात् तवेत् विष्णो बहुधा वीर्याणि इत्युच्यते। गतमन्यत्। असा.

बुद्धिमनसा प्रेरक, बुद्धिसंकल्पशोधक

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः। अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याऽभरत् ॥

सविता प्रेरकः परमेश्वरः प्रथमं अग्निचयनविषये मनो युञ्जानः समादधानः धियः इष्टकादिविषयाणि ज्ञानानि तत्त्वाय तनित्वा विस्तार्य अग्निं ज्योतिर्निचाय्य चीयमानमग्निं सफलानां कर्मणां प्रकाशनसाधनभूतं निश्चित्य पृथिव्या अध्याभरत् भूमेरुपर्यानीतवान्। अनन्तरं तमग्निं उखालक्षणपृथिव्यां स्थापयितुमुखानिर्माणादाविमं होमं करोमीति भावः। तैसा.

युक्त्वाय मनसा देवान्त्सुवर्यतो धिया दिवम्। बृहज्ज्योतिः करिष्यतः सविता प्र सुवाति तान् ॥

सविता तानिन्द्रियविशेषान् प्रकर्षेण सुवाति प्रेरयति।

(१) असं १७।१।१९.

(१) तैसं. ४।१।१।१, कासं. १५।११ (३३), मैसं. २।७।१ (१), शुसं २।१ अग्निं ज्यो (अग्नेर्ज्यो), शब्रा. ६।३।१।१२ शुसंवत्, श्वेउ. २।१ शुसंवत्.

(२) तैसं ४।१।१।१; कासं १५।११ (३५) मनसा (सविता) सुवर्यतो (स्वर्यतो); मैसं. २।७।१ (३) कासवत्; शुसं. ११।३ कासंवत्; शब्रा. ६।३।१।१५ कासंवत्; श्वेउ. २।३.

किं कृत्वा, देवान् क्रीडापरत्वेन चपलानिन्द्रियविशेषान् मनसा युक्त्वाय विषयेभ्यो नियम्य। कीदृशानिन्द्रियविशेषान्, सुवर्यतः स्वर्गं गच्छतः स्वर्गप्राप्त्यर्थमुद्यतानित्यर्थः। बृहज्ज्योतिः प्रौढ चीयमानमग्निं धिया दिव करिष्यतस्तत्तदिष्टकादिविषयया प्रज्ञया द्योतमान कर्तुमुद्यतान्। तैसा.

**²युक्तेन मनसा वय देवस्य सवितुः सवे।**
**सुवर्गेयाय शक्त्यै॥**

यस्मात्पूर्वोक्तरीत्या सवितेन्द्रियाणि प्रेरयति तस्माद्वयं सवितुर्देवस्य प्रेरणे सति युक्तेन विषयेभ्यो नियमितेन मनसा सुवर्गेयाय स्वर्गलोके गीयमानस्याग्नेः संपादनाय शक्त्यै शक्ता भूयास्मेति शेषः।

तैसा.

**³युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः।**
**वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः॥**

विप्रस्य ब्राह्मणस्य यजमानस्य संबन्धिनो विप्राः ऋत्विजः मनो युञ्जते प्रथमं स्वकीय मनो विषयेभ्यो निवर्त्य समाहितं कुर्वन्ति। उतापि च धियः इष्टकादिविषयज्ञानानि युञ्जते संपादयन्ति। कीदृशस्य विप्रस्य, बृहतः प्रभूताग्निचयनोद्योगेनाभिवृद्धस्य विपश्चितो विदुषः प्रयोगाभिज्ञस्य। कीदृशा विप्राः। होत्रा होमशीलाः कर्मण्यालस्यरहिता इत्यर्थः। एक इदेक एव सविता विदधे सर्वमिदं निर्मितवान्। कीदृशः सविता। वयुनावित्, ऋत्विग्यजमानाभिप्रायाभिज्ञः। कथमेक एव सर्वमिदं कृतवानिति न विस्मेतव्यम्। यतः सवितुर्देवस्य परिष्टुतिर्मही परितः सर्वेषु वेदेषु श्रूयमाणा स्तुतिर्महती। तैसा.

**¹युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोका यन्ति पथ्येव सूराः।**
**शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः॥**

यजमानः पत्नी चेत्येतौ हे दम्पती वां युवयोरर्थे पूर्व्यं पुरातनैर्महर्षिभिरनुष्ठितं ब्रह्म परिवृढमग्निचयनाख्यं कर्म नमोभिर्नमस्कारपूर्वकैरिष्टकोपधानादिभिर्युजे संपादयामि। तस्मिन्संपादिते सति श्लोका यजमानस्य कीर्तयो वियन्ति भूमौ विविध प्रसरन्ति। तत्र दृष्टान्तः— पथ्या सूरा इव गीर्वाणमार्गेऽन्तरिक्षे सूर्यरश्मयो यथा प्रसरन्ति तद्वत्। किंच, अमृतस्य प्रजापतेः पुत्रा ये देवा दिव्यानि धामान्यातस्थुः प्राप्तवन्तस्तेऽपि विश्वे सर्वे शृण्वन्ति यजमानस्य कीर्तिमिति शेषः। तैसा.

**²यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः।**
**यः पार्थिवानि विममे स एतशो रजांसि देवः सविता महित्वना॥**

यस्य सवितुः प्रयाण प्रवृत्तिं अन्ये सर्वे देवा अनुययुः इत् अवश्यं अनुगच्छन्त्येव। किं कुर्वन्तः। अस्य देवस्य महिमानमर्चतोऽर्चयन्तः। किं च, यः सविता पार्थिवानि रजांसि विममे पृथिवीगतान्परमाणून् विशेषेण गणयित्वा निश्चितवान् स सविता देवः महित्वना महत्त्वेनैतशो व्याप्तवान्, एति सर्वत्र गच्छतीत्येतशः। तैसा.

**³देव सवितः प्र सुव यज्ञं प्र सुव यज्ञपतिं भगाय दिव्यो गन्धर्वः।**

(१) तैसं ४।१।१।१, कास. १५।११ (३४) सुवर्गेयाय शक्त्यै (स्वर्ग्यया शक्त्या); मैसं. २।७।१ (२) सुवर्गेयाय शक्त्यै (स्वर्ग्याय शक्तये), शुसं. ११।२ सुवर्गेयाय शक्त्यै (स्वर्ग्याय शक्त्या), शब्रा. ६।३।१।१४ शुसवत्, श्वेउ. २।२ शक्त्यै (शक्त्या).

(२) तैसं. ४।१।१।१. अन्यस्थलादिनिर्देशः अस्मिन्नेव प्रकरणे (पृ. ९७) द्रष्टव्यः।

(१) ऋस. १०।१३।१ श्लोका...सूराः (श्लोक एतु पथ्येव सूरेः) शृण्वन्ति (शृण्वन्तु), असं. १८।३।३९ पादत्रयम्, तैसं ४।१।१।२, कासं. १५।११ (३७) श्लोका ..शृण्वन्ति (श्लोक एतु पथेव सूर. । शृण्वन्तु); मैसं. २।७।१ (५) श्लोका... . . शृण्वन्ति (श्लोक एतु पथ्येव सूरे । शृण्वन्तु), शुसं. ११।५ ऋसंवत्; ऐब्रा. ५।३।२; शब्रा. ६।३।१।१७, श्वेउ २।५.

(२) तैसं. ४।१।१।२. अन्यस्थलादिनिर्देश. अस्मिन्नेव प्रकरणे (पृ. ९७) द्रष्टव्यः।

(३) तैसं. १।७।७।१, ४।१।१।२, कासं. १३।१४ (४४) केतं न. (केतं), १५।११ (४०) केतं नः ......स्वदाति

**केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः ॥**

हे सवितः देव यज्ञ प्रसुव प्रकर्षेण प्रेरय, यज्ञपति यजमानं च प्रसुव। किमर्थम्। भगाय सौभाग्याय। दिव्यो दिवि स्वर्गे भवः कश्चिद्गन्धर्वः केतपूः केतं परकीयचित्ते वर्तमानं ज्ञान पुनाति शोधयतीति केतपूः। स च नोऽस्माक केत चित्तवर्तिज्ञान पुनातु भ्रान्तिपरिहारेण शोधयतु। वाचस्पतिः अद्य अस्मिन् कर्मणि नोऽस्मदीया वाचं स्वदाति स्वदयतु। तैसा.

सर्वदेवात्मा आदित्यपुरुषः ब्रह्म

**यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्म। तदत्रैव यजमानः सर्वासां देवतानां सलोकतां सायुज्यमाप्नोति ॥**

सूर्यमण्डलस्थपुरुषस्य शारीरहृदयाकाशस्थाक्षिपुरुषस्य च एकता, अमृतस्थ स एव मृत्युः, स प्राण., सर्वभूतेष्वेक एव सः, स एव नानोपासकैरुपास्यो नानारूपै

**यदेतन्मण्डलं तपति तन्महदुक्थं, ता ऋचः, स ऋचां लोकः। अथ यदेतदर्चिर्दीप्यते तन्महाव्रतं, तानि सामानि, स साम्नां लोकः। अथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निः, तानि यजूंषि, स यजुषां लोकः ॥ १ ॥**

अथ मण्डलब्राह्मण व्याख्यायते—सूर्यमण्डलार्चिःपुरुषत्रयस्य अधिदैवाधियज्ञाध्यात्मपरत्वेनार्थ उच्यते। तत्राधिदैवमयमर्थः — चयनगतमहदुक्थमहाव्रताग्नित्रय क्रमेण मण्डलार्चिःपुरुषरूपत्वेनोपासनीयामिति। अधियज्ञमयमर्थः— चयनगतरुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलादित्रयरूपत्वेनोपासनामिति। अध्यात्ममपि मण्डलादित्रयमेव दक्षिणाक्षिगतशुक्लकृष्णवर्णतदन्तर्वर्तिपुरुषाणा मण्डलादित्रयरूपत्वेनोपासनामिति। लोचने हि शुक्लरूपं कृष्णरूप चास्ति तदन्तर्वर्ती पुरुषश्च दृश्यते। एतत्प्रसङ्गेन सव्यलोचनगतपुरुषस्य मिथुनत्वसपादनम्। अथ पुरुषस्य मृत्युत्वमुपजीव्य मृत्युगतैकत्वबहुत्वान्तिकत्वदूरत्वमीमासा। तस्यैव पुरुषस्य बहुधोपासन तत्फलमिति मण्डलब्राह्मणप्रतिपादितार्थसंग्रहः। अक्षरार्थो व्याख्यायते—यदेतन्मण्डल तपति तन्महदुक्थमिति। यदुक्त तन्मण्डलत्वेन ध्येयम्। एव महाव्रतचित्याग्नी अर्चिःपुरुषात्मना ध्येयौ, वेदत्रयस्याग्निवायुसूर्यात्मकत्वेन त्रयो वेदा दैवतानीति वक्तु प्रयुज्यते। अतो मण्डलस्य बृहदुक्थद्वारा ऋग्वेदात्मकत्वोपासनामिति। उत्तरत्राधियज्ञपर्याये, ऋक्सामादयो यज्ञावयवरूपविशेषा इति। नाध्यात्माधियज्ञयोः तेषामुपारयार्थता। तन्महदुक्थं ता ऋचः स ऋचा लोक इति। उक्थस्य ऋक्संघात्मकत्वात्, तस्य च मण्डलात्मकत्वोपासनात् 'ऋचा लोकः' ऋग्वेदरूपेण मण्डलमुपासनीय, मण्डलरूपेण वा ऋग्वेद उपासनीयः, तदुभयात्मना महदुक्थमुपासनीय, उभयथा व्याख्यातत्वात्। एवमुत्तरत्र महाव्रत सर्वसामात्मकमर्चीरूपमिति सामवेदात्मना वा ध्यानमार्चिषः। अग्निर्मण्डलस्थपुरुषरूपः, अग्निश्च यजुर्मन्त्रसाध्य इति तस्य पुरुषत्वोक्त्या यजुर्मन्त्रसाध्यत्वोक्त्या च यजुर्वेदात्मकत्वम्। एवमुक्थमहाव्रतचित्याग्नीना मण्डलार्चिःपुरुषात्मकत्वेन तस्य मण्डलादित्रयस्य, ऋग्यजुःसामरूपत्वम्। शब्रासा.

**सैषा त्रय्येव विद्या तपति। तद्धैतदप्यविद्वांस आहुः, त्रयी वा एषा विद्या तपतीति, वाग्घैव तत्पश्यन्ती वदति ॥ २ ॥**

सैषा त्रय्येव तपतीति। त्रयी वेदत्रयं एव तपति। उक्तार्थे लोकसमतिमाह—तद्धैतदप्यविद्वांस आहुरिति। ह प्रसिद्धम्। अविद्वासः अपि एतदाहुः—एषा त्रयी एव विद्या तपतीति। एतदुक्तमर्थस्वरूपं पश्यन्ती पर्यालोचयन्ती वाक् वदति—त्रय्येव विद्या तपतीति। शब्रासा.

**स एष एव मृत्युः, य एष एतस्मिन्मण्डले पुरुषः। अथैतदमृतं यदेतदर्चिर्दीप्यते। तस्मान्मृत्युर्न म्रियते अमृते ह्यन्तः। तस्मादु न दृश्यते अमृते ह्यन्तः ॥ ३ ॥**

अथ मण्डलस्थपुरुषस्य मृत्युरूपत्वमर्चिषोऽमृतरूपत्वं

( केतं पुनातु वाचस्पतिर्वाचं न. स्वदतु ॥ ); मैस १।११।१ ( १ ) केतं न. ( केतं ) स्वदाति ( स्वदातु ); शुसं. ९।१ वाचमद्य स्वदाति नः ( वाजं नः स्वदतु स्वाहा ), ११।७ वाचमद्य स्वदाति नः (वाचं न स्वदतु ); शब्रा. ५।१।१।१४,१६शुसं९।१वत्,६।३।१।१९ शुस ११।७ वत्.

(१) शाब्रा. ८।३.

(२) शब्रा. १०।५।२।१-२३.

चाह–स एष एव मृत्युरिति। यः एतस्मिन्मण्डले पुरुषः सः मृत्युः। यत् एतदर्चिर्दीप्यते तदमृतम्। यतः अमृते मरणरहिते अर्चिषि अन्तः मध्ये वर्तते। अतो मृत्युर्न म्रियते। न ह्यमृतमध्यवर्ती विनश्यति। तस्यापि विनाशे अमृतत्वप्राप्तिः उत्तमफलत्वेनोपन्यसितुमयुक्तेति तात्पर्यम्। अन्तर्वर्तित्वमेव विशदयति–तस्मात् न दृश्यतेऽमृते ह्यन्तरिति। मृत्युरूपः पुरुषोऽमृतरूपेऽर्चिष्यन्तर्वर्तते इत्युक्तेऽस्मिन्नर्थेऽर्चिराश्रयमण्डलस्य पुरुषाधिष्ठितत्वम्। शब्रासा.

**तदेष श्लोको भवति। 'अन्तरं मृत्योरमृतम्' इति। अवरं ह्येतन्मृत्योरमृतम्। 'मृत्यावमृतमाहितम्' इति। एतस्मिन् हि पुरुष एतन्मण्डलं प्रतिष्ठितं तपति। 'मृत्युर्विवस्वन्तं वस्ते' इति। असौ वा आदित्यो विवस्वान्, एष ह्यहोरात्रे विवस्ते। तमेष वस्ते सर्वतो ह्येनेन परिवृतः। 'मृत्योरात्मा विवस्वति' इति। एतस्मिन् हि मण्डल एतस्य पुरुषस्यात्मा। एतदेष श्लोको भवति॥ ४॥**

पुरुषार्चिषोरुभयोर्मण्डलमेव प्रतिष्ठेत्यस्मिन्नुक्ते चार्थे मन्त्र सवादयति–तदेष श्लोको भवतीति। श्लोकः मन्त्रः पादबद्धत्वसाम्यात्। मन्त्रपाठस्त्वेवम्– 'अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम्। मृत्युर्विवस्वन्त वस्ते मृत्योरात्मा विवस्वति॥' इति। अयमर्थः– मृत्योः पुरुषस्यामृतमर्चिरन्तरं व्यवधायकम्। अमृतमध्यवर्तित्वात्पुरुषस्येतरैर्जीवैरदर्शनात् अमृतमेव तस्यान्तरमित्युक्तम्। मृत्यौ पुरुषे अमृतं अमृतरूपार्चिरधिकरण मण्डल, अन्तरं अवर तदपेक्षयाऽधरत्वात्। आहितं प्रतिष्ठितम्। विवस्वन्त अहोरात्रे विवासयति, इदमहरेषा रात्रिरिति विभजति पुनः पुनः करोतीति वा विवस्वान् आदित्यमण्डलमित्यर्थः। तं मृत्युः वस्ते आच्छादयति सर्वतः स्वतेजसा परिवृणोति। मृत्योः पुरुषस्य आत्मा विवस्वति मण्डले प्रकाशत इति। अत्र वेदान्तिनो मण्डलस्थः पुरुष ईश्वर इति मण्डलं केवल न तपति किन्तु तन्मध्यवर्तिनी पुरुषतेजसीति प्रतिपादयन्ति। ईश्वरस्य च मृत्युरूपत्वं 'अन्तस्तद्धर्मोपदेशात्' (ब्रसू. १।१।२०) 'ज्योतिषि भावाच्च' (ब्रसू. १।३।३२) 'अत्ता चराचरग्रहणात्' (ब्रसू. १।२।९) इत्येतैरधिकरणैः। अत्रापि तन्मतानुसारेण मण्डलवर्तिनः पुरुषस्य मृत्युरूपत्वम्। मण्डल च तेनाधिष्ठित तस्य च मण्डलमेव प्रतीतिस्थानत्वेन प्रतिष्ठा इति। पूर्वमुक्त मन्त्र प्रतिपादमनूद्य व्याचष्टे–अन्तर मृत्योरमृतमित्यवरं ह्येतन्मृत्योरमृतमित्यादिना। अवर अधस्ताद्भवममृत पुरुषस्य परस्तादित्यर्थः सिद्धः। अनेन अमृतमध्यवर्तित्वमुक्तमित्यर्थः। द्वितीयपादगतामृतपदेनार्चिरधिकरणमण्डलमुच्यते तत् पुरुषे प्रतिष्ठित तपति। तेन हि तस्य मण्डलस्य जगत्प्रकाशकत्वमस्तीति। तृतीयपादगत विवस्वत्पदं निर्वक्ति– एष ह्यहोरात्रे विवस्त इति। एतेन विवस्वता परिवृतः सर्वतो वेष्टितः। चतुर्थपाद व्याचष्टे—एतस्मिन् विवस्वति मण्डले पुरुषस्यात्मा प्रतीयते इति शेषः। एतदेष श्लोको भवति इति निगमनम्। शब्रासा.

**तयोर्वा एतयोरुभयोरेतस्य चार्चिषः, एतस्य च पुरुषस्यैतन्मण्डलं प्रतिष्ठा। तस्मान्महदुक्थं परस्मै न शंसेत्, नेदेतां प्रतिष्ठां छिनदा इति। एतां ह स प्रतिष्ठां छिन्ते यो महदुक्थं परस्मै शंसति। तस्मादुक्थशसं भूयिष्ठं परिचक्षते। प्रतिष्ठाछिन्नो हि भवति। इत्यधिदेवतम्॥ ५॥**

तयोर्वा एतयोः इत्यादेरयमर्थः–यतः पुरुषार्चिषोर्मण्डलमेव प्रतिष्ठा अतो मण्डलरूप महदुक्थ न परस्मै शसेत्। एता प्रतिष्ठा नेच्छिनदै 'नेदिति परिभये' (नि. १।११।१) न च्छिन्द्यामिति। स्वप्रतिष्ठाया अन्याधीनत्वे स्वयमप्रतिष्ठितो भवतीत्यर्थः। तथाच बहुधा बृहदुक्थस्य परस्मै शसननिषेधः ऐतरेयकोपनिषदि समाम्नायते– 'तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत्' (ऐआ. ३।२।४।१०) इति। यतः परस्मै बृहदुक्थशसन निषिध्यते। अतः उक्थशस भूयिष्ठ परिचक्षते। परस्मै शसितारं होतार लोके बहु निन्दन्ति यतः प्रतिष्ठाछिन्नः प्रतिष्ठाहीनो भवतीति। मण्डलार्चिःपुरुषाणां बृहदुक्थमहाव्रताग्निद्वारेण ऋग्यजुःसामरूपत्वेनोपासनाच्च बृहदुक्थादीना तादृक् मण्डलाद्यात्मनोपासनमिति अधिदेवतं अर्थ उक्त इत्युपसहरति–इत्यधिदेवतमिति।

शब्रासा.

**अथाधियज्ञं यदेतन्मण्डलं तपति अयं स रुक्मः । अथ यदेतदर्चिर्दीप्यते इदं तत्पुष्करपर्णम् । आपो ह्येताः । आपः पुष्करपर्णम् । अथ य एष एतस्मिन्मण्डले पुरुषः अयमेव स योऽयं हिरण्मयः पुरुषः । तदेतदेवैतत्त्रयं संस्कृत्येहोपधत्ते । तद्यज्ञस्यैवानु संस्थामूर्ध्वमुत्क्रामति । तदेतमप्येति य एष तपति । तस्मादग्निं नाद्रियेत परिहन्तुम् । अमुत्र ह्येष तदा भवतीत्यु एवाधियज्ञम् ॥ ६ ॥**

अधियज्ञ वक्तुं प्रतिजानीते—अथाधियज्ञमिति । अत्र रुक्मपुष्करपर्णहिरण्मयपुरुषाणा मण्डलार्चिःपुरुषात्मनोपासनमित्यधियज्ञवाक्यस्य तात्पर्यम् । अक्षरार्थस्तु यत् मण्डलं तपति अय अत्रोपहितो रुक्मः, यत् अर्चिर्दीप्यते तत् रुक्मपुरुषयोरधस्तादुपहित पुष्करपर्णम् । कथमर्चिषः पुष्करपर्णात्मत्वं तत्राह—आपो ह्येता आपः पुष्करपर्णमिति । अर्चिषो ह्यापः, सूर्यकिरणानामेव वृष्टिकर्तृत्वात्, कार्यकारणयोरभेदेन अर्चिरेव आप इत्युक्तम् । पुष्करपर्णमधि अद्भ्य उत्पन्नत्वात्तदात्मकमित्यर्थः । मण्डलमध्यवर्ती पुरुष एवात्रोपहितो हिरण्मयः पुरुषः । एवमेतत् रुक्मादित्रय मण्डलाद्यात्मना संस्कृत्य भावयित्वा इहाग्नावुपधत्ते । तदा यज्ञस्य संस्था समाप्तिं अनु ऊर्ध्वं उत्क्रामति, उत्क्रामन् यजमानः एतं मण्डलादिरूपेण त्रिविधमादित्य अप्येति प्राप्नोति । य एष तपति । अत्र कञ्चिद्धर्ममाह—तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीति । यतोऽस्मिन्नग्नि चितवान् परत्रादित्यो भवति अतः अग्नि परिहन्तुं नाद्रियेत चितमग्निमिष्टकाविशेषेण नाशयितुमादरं न कुर्यात् । कुतः एषोऽग्निरमुत्र भवति परलोके यजमानशरीरात्मनोत्पद्यत इति । यद्वा परिहन्तुं प्राप्तुं स्प्रष्टुमित्यर्थः । चित्याग्निस्पर्शने दोषश्रवणात् । एवमधियज्ञमर्थो व्याख्यातः । शब्रासा.

**अथाध्यात्मम् । यदेतन्मण्डलं तपति, यश्चैष रुक्मः इद तच्छुक्लमक्षन् । अथ यदेतदर्चिर्दीप्यते, यच्चैतत्पुष्करपर्णं इदं तत्कृष्णमक्षन् । अथ य एष एतस्मिन्मण्डले पुरुषः, यश्चैष हिरण्मयः पुरुषः । अयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः ॥ ७ ॥**

अथाध्यात्मं प्रदर्श्यते इति शेषः । अत्रायं विशेषः—मण्डलादित्रयस्याधियज्ञिकरुक्मपुष्करपर्णहिरण्मयपुरुषत्रयस्य च दक्षिणाक्षिगतशुक्लकृष्णवर्णद्वयतदन्तर्वर्तिपुरुषेषु तादात्म्येनोपासनमिति । एव मण्डलादित्रयस्य लोचनगतशुक्लादित्रयस्य च तादात्म्येन ध्यानमुक्तम् । पुरुषस्य च द्वे चक्षुषी, तत्र यथा दक्षिणे तथा सव्यलोचनेऽपि पुरुषो दृश्यते । शब्रासा.

**स एष एव लोकम्पृणा । तामेष सर्वोऽग्निरभिसंपद्यते । तस्यैतन्मिथुनम् । योऽयं सव्येऽक्षन्पुरुषः । अर्धमु हैतदात्मनः यन्मिथुनम् । यदा वै सह मिथुनेन । अथ सर्वः । अथ कृत्स्नः । कृत्स्नतायै तद्यत्ते द्वे भवतः । द्वन्द्वं हि मिथुनं प्रजननम् । तस्माद् द्वे द्वे लोकम्पृणे उपधीयेते । तस्मादु द्वाभ्यां चितिं प्रणयन्ति ॥ ८ ॥**

सोऽयमुक्तदक्षिणाक्षिपुरुषस्य मिथुनत्वेन सपद्यत इत्याह—स एष एव लोकम्पृणेति । स एष सूर्यमण्डलगतपुरुष एव लोकम्पृणा इष्टका लोकम्पृणेष्टकाया आदित्यात्मत्वमष्टमकाण्डावसाने प्रतिपादितम् । तथा हि—'अथ लोकम्पृणामुपदधात्यसौ वा आदित्यो लोकम्पृणैष हीमान् लोकान् पूरयत्यमुमेवैतदादित्यमुपदधाति' ( शब्रा. ८।७।२।१ ) इति । ता सूर्यात्मकलोकम्पृणेष्टकामभिलक्ष्य सर्वोऽग्निः सपद्यते—लोकम्पृणाभिः सर्वोऽग्निः कृत्स्नः सतर्पित इत्यर्थः । तस्य सूर्यपुरुषात्मकदक्षिणाक्षिपुरुषस्य सव्याक्षिगतः पुरुषः मिथुनं योषित् इत्येतस्मिन् मिथुने हि आत्मनः अर्द्धं अर्धभागः । 'अर्धो वा एष आत्मनो यत्पत्नी' (तैस. ६।५।९ ) इति तैत्तिरीयश्रुतेः । यतोऽर्द्धमतः सव्याक्षिपुरुषो नातिरिक्त इत्यर्थः । यदा आत्मा मिथुनेन युक्तः तदा सर्वः कृत्स्नः संपूर्णः । पुरुषद्वयं मिथुनात्मना स्तौति—तद्यत्ते द्वे भवत इति । यत् यदा ते द्वे भवतः तदा कृत्स्नतायै पूर्णत्वाय । द्वे इति व्यक्त्यपेक्षं नपुंसकलिङ्गत्वम् । यतः पुरुषयोः द्वन्द्वं यतः सूर्यात्मिके लोकम्पृणे द्वे द्वे उपधीयेते । 'तिसृषु लोकम्पृणासु मन्त्रो दशसु च द्वयोर्वा दशस्येकस्यां च' (का. श्रौ. १७।१७ ) इति लोकम्पृणोपधानप्रस्तावे सूत्रम् । अष्टमकाण्डे लोकम्पृणाप्रस्तावे द्वन्द्वशः उपधानमुक्तम् । अथ तत्र या द्वितीया मिथुनं तत् अर्धमु हैतदात्मनो यन्मिथुनं ' स यस्यां स्वक्त्यां प्रथम उपदधाति ततो दशभिर्दशाभिः सछादयति '

(शब्रा. ८।७।२।१२) इति। द्वित्वमेवमन्यत्रापि दर्शयति—तस्मादु द्वाभ्यामिति। तस्मादेव द्वाभ्यां द्वाभ्यां यजुष्मतीलोकम्पृणाभ्यां चितिं प्रणयान्ति।

शब्रासा.

**स एष एवेन्द्रः योऽयं दक्षिणेऽक्षन्पुरुषः। अथेयमिन्द्राणी। ताभ्यां देवा एतां विधृतिमकुर्वन् नासिकाम्। तस्माज्जायाया अन्ते नाऽश्नीयात्। वीर्यवान् हास्माज्जायते। वीर्यवन्तमु ह सा जनयति यस्या अन्ते नाश्नाति॥ ९॥**

यदुक्तमक्षिद्वये पुरुषद्वन्द्वं मिथुनमिति तदेव स्त्रीपुंलिङ्गेन्द्रेन्द्राणीशब्दाभ्यां विशदयति—स एष एवेन्द्र इति। दक्षिणाक्षिपुरुष इन्द्र इत्युच्यते। सव्याक्षिपुरुष इन्द्राणीत्युच्यते। इन्द्रस्य स्त्री इन्द्राणी। ताभ्यां स्त्रीपुंसाभ्यामिन्द्राणीन्द्राभ्यामर्थे एतां नासिकां विधृतिं व्यवधायकवस्त्रस्थानीयां अकुर्वन् यतः स्त्रीपुरुषयोर्मध्ये देवा विधृतिं कृतवन्तः। अतः जायाया अन्ते नाश्नीयात्, स्त्रियाः समीपे स्त्रियं पश्यन् भोजनं न कुर्यादित्यर्थः। स्त्रीसमीपे भोजनाकरणस्य फलं दर्शयति—वीर्यवान् हास्मादिति। अस्मात् स्त्रीसमीपे भोजनमकुर्वतो वीर्यवान् सुतो जायते। यस्याः समीपे न भुङ्क्ते सा उ ह साऽपि वीर्यवन्तमुत्पादयति। शब्रासा.

**तदेतद्देवव्रतम्। राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति। तस्मादु तेषु वीर्यवान् जायते। अमृतवाका वयसां सा क्षिप्रश्येनं जनयति॥ १०॥**

एतद्व्रतमनुतिष्ठतां वीर्यवत्पुत्रोत्पत्तिर्भवतीत्याह—तदेतद्देवव्रतं राजन्यबन्धव इति। यदुक्तं जायाया अन्ते नाश्नीयात् इति तत् इदं देवकल्पितं व्रतं एतत् मनुष्याणां मध्ये राजन्यबन्धवः अनुतमां गोपायन्ति अनुतमां अत्यर्थं रहस्यत्वेन कुर्वन्ति। तस्मात् उ तस्मादेव तेषु वीर्यवान् पुत्रो जायते। वयसां पक्षिणां मध्ये अमृतवाका नाम पक्षिजातिरेतद्व्रतं गोपायति, अतः सा क्षिप्रश्येनं शीघ्रगामिनं श्येननामकं पक्षिणं जनयति। शब्रासा.

**तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतः। तौ यदा मिथुनस्यान्तं गच्छतः। अथ हैतत्पुरुषः स्वपिति। तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वाऽसंविद् इव भवति एवं हैवैतदसंविद इव भवति। दैवं ह्येतन्मिथुनम्। परमो ह्येष आनन्दः॥ ११॥**

अथेन्द्रेन्द्राणीनाम्नोः स्त्रीपुरुषयोः संगमस्य स्थानं तल्लक्षणानि चाह—तौ हृदयस्याकाशमित्यादिना। स्त्रीपुरुषौ हृदयाकाशं दहरं प्राप्य मिथुनीभवतः मिथुनकर्म संभोगं कुरुत इत्यर्थः। तौ यदा मैथुनकर्मणः अन्तं अवसानं गच्छतः तदानीमेव पुरुषः जीवात्मा स्वपिति लोके मानुषस्य मैथुनस्यान्तं गत्वा असंविदः अजानानेव स्त्री भवति। एवं तदा तयोर्मिथुनभावे पुरुषः असंविद इव भवति अजानन्निव भवति। हि यतः एतन्मिथुनं इन्द्रेन्द्राणीद्वन्द्वं दैवं देवनिर्मितं, अतस्तयोर्मिथुनभावे परमः आनन्दः भवति।

शब्रासा.

**तस्मादेवंवित्स्वप्यात्। लोक्यं हैते एव तद्देवते। मिथुनेन प्रियेण धाम्ना समर्धयति। तस्मादु ह स्वपन्तं धुरेव न बोधयेत्। नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति। तस्मादु हैतत् सुषुपुषः श्लेष्मणमिव मुखं भवति। एते एव तद्देवते रेतः सिञ्चतः। तस्माद्रेतस इदं सर्वं संभवति यदिदं किंच॥ १२॥**

तस्मादेवं जानानः स्वापेन तयोर्मिथुनकर्म समर्धयति परमानन्दयुक्तं करोति। अत्र कंचिद्धर्ममाह—तस्मादु ह स्वपन्तं धुरेवेति। यतः स्त्रीपुंसयोर्मैथुनेन पुरुषः स्वपिति तस्मात्स्वापं कुर्वन्तं धुरेव पीडायै एव न बोधयेत् न प्रबुद्धं कुर्यात्। इव एवार्थे। यद्वा धुरा इव वेगेनेव न प्रबोधयेत्। अत्याहितकार्ये शनैः प्रबोधयेदित्यर्थः। तत्र कारणम्—नेदेते देवते इति। यदि सहसा प्रबोधस्तर्हि एते देवते इन्द्रेन्द्राणीनाम्न्यौ मिथुनीभवन्त्यौ न हिनसानि न हनानीति मनीषया सुप्तस्य सहसा प्रबोधो न कार्यः। तयोरिदानीं मिथुनीभावस्य लक्षणमाह—तस्मादु हैतत्सुषुपुष इति। यस्मात्तयोर्मिथुनभावेन पुरुषस्य स्वापस्तस्मात्सुप्तवतो जनस्य मुखं श्लेष्मणं श्लेष्मयुक्तमिव भवति। कुतो मुखस्य श्लेष्मयुक्तता तत्राह—एते एव तद्देवते रेतः सिञ्चत इति। तयोर्देवतयोः रेतःसेकात् सुप्तमुखं श्लेष्मयुक्तं तदाकारमिव भवतीत्यर्थः। तस्माद्रेतसः सकाशात् इदं

सर्वं विश्वं संभवति उत्पद्यते यदिदं किंच यत्किञ्चित्प्राणिजातम्। शब्रासा.

**स एष एव मृत्युः य एष एतस्मिन्मण्डले पुरुषः। यश्चायं दक्षिणेऽक्षन्पुरुषः तस्य हैतस्य हृदये पादावतिहितौ। तौ हैतदाच्छिद्योत्क्रामति। स यदोत्क्रामति अथ हैतत् पुरुषो म्रियते। तस्मादु हैतत्प्रेतमाहुः आच्छेद्यस्येति॥ १३॥**

एवं प्रासङ्गिकं परिसमाप्य मण्डलस्थपुरुषात्मनोपासनीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वमेवाह—स एष एव मृत्युर्य एष एतस्मिन्मण्डल इति। तस्य एतस्य अक्षिपुरुषस्य पादौ हृदये अतिहितौ व्याप्तौ कीलितौ भवतः। तौ यदा पादौ आच्छिद्योत्क्रामति पुरुषशरीरात् तदानीमेव पुरुषो म्रियते। यस्मादाच्छिद्य गतस्तस्मादिमं प्रेतमित्याहुः। शब्रासा.

**एष उ एव प्राणः। एष हीमाः सर्वाः प्रजाः प्रणयति। तस्यैते प्राणाः स्वाः। स यदा स्वपिति अथैनमेते प्राणाः स्वाः अपियन्ति। तस्मात्स्वाप्ययः। स्वाप्ययो ह वैतं स्वप्न इत्याचक्षते परोक्षम्। परोक्षकामा हि देवाः॥ १४॥**

ननु कथमक्षिपुरुषनिर्गमे पुरुषस्य मरणमन्यत्र प्राणप्रस्तुत्याम्नातम्—'तस्मिन्नुत्क्रान्ते' इत्यादिना प्राणनिर्गमादनन्तरमेव शरीरपात इत्याशङ्क्य तस्यैवाक्षिपुरुषस्य प्राणात्मकतामाह—एष उ एव प्राण इति। एषः अक्षिपुरुषः एव प्राणः। निर्वचनमाह—हि यतः एषः इमाः प्रजाः सर्वाः प्रणयति लोकान्तरं प्रापयति तस्मात् एष एव प्राणः। तस्याक्षिपुरुषस्य प्राणरूपस्य एते प्राणाः प्राणापानादयः पञ्च प्राणाः स्वाः ज्ञातयः प्राणत्वेन समानजातीया इत्यर्थः। सः अक्षिपुरुषः यदा स्वपिति निलीयते तदा एनं एते स्वाः प्राणाः अपियन्ति प्राप्नुवन्ति अनुलीयन्ते इत्यर्थः। स्वानामप्यय इति स्वाप्ययः, स्वाप्ययं स्वप्न इत्याचक्षते परोक्षेण। यतो हि परोक्षकामाः देवाः। शब्रासा.

**स एतैः सुप्तो न कस्य चन वेद। न मनसा संकल्पयति। न वाचाऽन्नस्य रसं विजानाति। न प्राणेन गन्धं विजानाति। न चक्षुषा पश्यति। न श्रोत्रेण शृणोति। एतं ह्येते तदाऽपीता भवन्ति। स एष एकः सन् प्रजासु बहुधा व्याविष्टः। तस्मादेका सती लोकम्पृणा सर्वमभिमनुविभवति। यदेक एव। तस्मादेका॥ १५॥**

तस्मिन् सर्वेषां प्राणानामप्यय विशदयति—स एतैः सुप्तो न कस्य चन वेदेति। सामान्योक्तं विवृणोति—न मनसेति। संकल्पो नामाध्यवसायः। वाचा रसनया। प्राणेन नासिकया। वस्तुतः एकस्यैवाक्षिपुरुषस्य नानाप्रजास्वावेशाद्बहुत्वमित्याह—स एष एकः सन् प्रजास्विति। तस्मात् लोकम्पृणा सूर्यपुरुषात्मिका वस्तुतो जात्या एकाऽपि सती सर्वमभिमनुविभवति व्याप्नोति। अथ यतः एक एव पुरुषः तस्मादेका लोकम्पृणा। शब्रासा.

**तदाहुः। एको मृत्युर्बहवा३ इति। एकश्च बहवश्चेति ह ब्रूयात्। यदहासावमुत्र तेनैकः। अथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः॥ १६॥**

एवं मण्डलमध्यवर्तिपुरुषात्मनोपासनीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वं प्राणरूपत्वं चोक्तम्। तत्र मृत्योरेकत्वं बहुत्वं चेति प्रश्नोत्तराभ्यामाह—तदाहुरेको मृत्युरिति। एको मृत्युर्बहवश्च। बहवा३ इत्यत्र विचारार्थे प्लुतिः। असावमुत्र लोके आदित्यमण्डलमध्यवर्ती पुरुष एकः। इह भूलोके प्रजासु मनुष्यपश्वादिष्वन्तरावेशात् बहवः मृत्यवः। शब्रासा.

**तदाहुः। अन्तिके मृत्युर्दूरा३ इति। अन्तिके च दूरे चेति ह ब्रूयात्। यदहायमिहाध्यात्मं तेनान्तिके। अथ यदसावमुत्र तेनो दूरे॥ १७॥**

तदाहुरन्तिक इति। मृत्योः समीपदूरवर्तित्ववाक्यमप्येवं व्याख्येयम्—इहाध्यात्मं अयमक्षिपुरुषः समीपवर्ती अमुत्र द्युलोके असौ मण्डलस्थः पुरुषो दूरवर्तीति। शब्रासा.

**तदेष श्लोको भवति। 'अन्ने भात्यपश्रितो रसानां संक्षरेऽमृतः' इति। यदेतन्मण्डलं तपति तदन्नम्। अथ य एष एतस्मिन्मण्डले पुरुषः सोऽत्ता। स एतस्मिन्नन्ने अपश्रितो भाति। इत्यधिदेवतम्॥ १८॥**

अथ मृत्योरन्नात्तृत्वं मन्त्रसंवादपूर्वकमाह—तदेष श्लोको भवतीति। 'अन्ने भात्यपश्रितो रसानां संक्षरेऽमृतः' इति एतावान्मन्त्रः। तमेव श्लोकमधिदेवाध्यात्मपरत्वेन

व्याचष्टे—यदेतन्मण्डलं तपतीति । यदेतत् जगत्प्रकाशकं ज्योतिर्मण्डलं तदन्नं, तन्मध्यवर्ती पुरुषः अत्ता रसाना संक्षरे अन्ने मण्डले अपश्रितः स्थितः सः अमृतः मरणधर्मरहितः पुरुषः अत्ता भाति दीप्यते इत्यधिदैवतमर्थः । शब्रासा.

**अथाध्यात्मम् । इदमेव शरीरमन्नम् । अथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ता । स एतस्मिन्नन्नेऽपश्रितो भाति ॥ १९ ॥**

अध्यात्मं तु इदमेव शरीरमन्नं, दक्षिणाक्षिपुरुष एव अत्ता, तथा च अन्ने शरीरे अपश्रितः अमृतोऽक्षिपुरुषोऽत्ता भाति प्रकाशते इति । शब्रासा.

**तमेतमग्निरित्यध्वर्यव उपासते यजुरिति । एष हीदं सर्वं युनक्ति । साम इति छन्दोगाः । एतस्मिन् हीदं सर्वं समानम् । उक्थमिति बह्वृचाः । एष हीदं सर्वमुत्थापयति । यातुरिति यातुविदः । एतेन हीदं सर्वं यतम् । विषमिति सर्पाः । सर्प इति सर्पविदः । ऊर्गिति देवाः । रयिरिति मनुष्याः । मायेत्यसुराः । स्वधेति पितरः । देवजन इति देवजनविदः । रूपमिति गन्धर्वाः । गन्ध इत्यप्सरसः । तं यथायथोपासते तदेव भवति तद्धैनान्भूत्वाऽवति । तस्मादेनमेवं वित्सर्वैरेवैतैरुपासीत । सर्वं हैतद्भवति । सर्वं हैनमेतद्भूत्वाऽवति ॥ २० ॥**

एवमधिदैवमध्यात्मं च यः पुरुषः परमात्मा ध्येयत्वेनोक्तः तस्य प्रशंसार्थं नानारूपैरुपासनं दर्शयति—तमेतमग्निरित्यध्वर्यव उपासते यजुरिति । तमेतमग्निः इति यः पुरुष उक्तः स परमात्मेति सर्वत्र व्याख्येयम् । अत एवैतरेयके अध्यात्ममधिदेवं चैकं परमात्मानं प्रस्तुत्य समाम्नातम्—'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेत दिव्येतं वायावेतमाकाशे' इति प्रक्रम्य 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' (ऐआ. ३।२।३।९) इति । तत्राध्वर्यवो याजुषाः । एतं पुरुषमग्निरिष्टकाचयनेन निष्पादितोऽग्निः इत्युपासते यजुरिति च । यजुःशब्दस्य परमात्मपरतां दर्शयति—एष हीदं सर्वं युनक्तीति । एषः पुरुषः इदं सर्वं जगत् युनक्ति सर्वत्र स्वयं संगतं इति । अनेन सर्वव्यापकत्वमुक्तम् । सामेति छन्दोगाः सामवेदिनः सामेत्युपासते । सामशब्दस्य परमात्मतां निर्वक्ति—एतस्मिन् हीदमिति । एतस्मिन्परमात्मनि कारणे इदं सर्वं कार्यजातं समानं समानमिति सामशब्दनिष्पत्तिः । उक्थमिति बह्वृचाः, बह्वः ऋचो येषां ते बह्वृचाः ऋग्वेदिनः उक्थमित्युपासते । एष हीदं सर्वमुत्थापयति जनयति सर्वमिति उक्थशब्देन परमात्मोच्यते इत्यर्थः । यातुविदः यातुधानाः यातुः इत्युपासते । एतेन सर्वं यत नियतं स्वस्वस्थानमनतिलङ्घ्य स्थापितं वर्तत इति । यातुशब्दः पुरुषवाचकः । सर्पाः विषमिति । स्वोपजीव्यत्वाद्विषस्योपासनम् । एवमुत्तरत्र । सर्पविदः आहितुण्डिकाः । सग्रहेणाह—तं यथायथोपासते तदेव भवतीति । तं परमात्मानं यथा येन रूपेण उक्तेन प्रकारेणान्येन वा उपासीरन् ते तदेव तत्स्वरूपाः भवन्तीति । शब्रासा.

**स एष त्रीष्टकोऽग्निः, ऋगेका, यजुरेका, सामैका । तद् यां कां चात्रर्चोपदधाति रुक्म एव तस्या आयतनम् । अथ यां यजुषा पुरुष एव तस्या आयतनम् । अथ यां साम्ना पुष्करपर्णमेव तस्या आयतनम् । एवं त्रीष्टकः ॥ २१ ॥**

यदुक्तं पूर्वस्मिन् ब्राह्मणे—'एतस्याग्नेर्वागेवोपनिषत्' इति प्रक्रम्य 'सा वा एषा वाक् त्रेधा विहिता ऋचो यजूंषि सामानि, तेनाग्निस्त्रेधा विहितः, तेन हि त्रयेण चीयते' इति । तत्र सूर्यमण्डलार्चिःपुरुषरूपत्वमेवमुक्तम्—'मण्डलमेव ऋचः, अर्चिः सामानि, पुरुषो यजूंषि' इति । अथैतेषामधियज्ञमेवमुक्तं—'यदेतन्मण्डलं तपत्ययं स रुक्मोऽथ यदेतदर्चिर्दीप्यत इदं तत्पुष्करपर्णमथ य एष एतस्मिन्मण्डले पुरुषोऽयमेव स योऽयं हिरण्मयः पुरुषः' इति, तत्सर्वं पर्यालोच्याह—स एष त्रीष्टकोऽग्निरिति । एषः चित्याग्निः त्रीष्टकः त्रिसंख्याकेष्टकः । ता एवेष्टका दर्शयति—ऋगेका यजुरेका सामैकेति । तद्या कां चात्रर्चोपदधाति इत्यादेरयमर्थः—अत्राग्नौ यां का इष्टका ऋचा ऋङ्मन्त्रेणोपदध्यात् सा ऋगिष्टका । साध्यसाधनयोरभेदोपचारादेवमुक्तम् । तस्याः रुक्म एव आयतनं ऋगात्मकं मण्डलमेवाधियज्ञे रुक्म इत्युक्तम् । यां इष्टकां यजुर्मन्त्रेणोपदध्यात् सा यजुरिष्टका, तस्याः पुरुष एवायतनं मण्डलान्तर्वर्तियजुरात्मकः पुरुषः इत्युक्तम् । मण्डलाधिष्ठातुः पुरुषस्याधियज्ञ हिरण्मयपुरुषत्व-

मुक्तम् । अथ यामिष्टका साम्नोपदध्यात्सा सामेष्टका । तस्याः पुष्करपर्णमेव आयतन सामात्मकार्चिषोऽधियज्ञ पुष्करपर्णमेव आयतनं सामात्मकार्चिषोऽधियज्ञ पुष्करपर्णात्मत्वमुक्तम् । एवमृगादिभेदेन त्रीष्टकोऽग्न्याख्यो यज्ञः । शब्रासा.

ते वा एते उभे, एष च रुक्मः, एतच्च पुष्करपर्णम् । एतं पुरुषमपीतः । उभे हि ऋक्सामे यजुरपीतः । एवम्वेकेष्टकः ॥ २२ ॥

एकेष्टकत्व सपादयितुमाह—ते वा एते उभे इति । एषः रुक्मः एतत् पुष्करपर्णं च एते उभे एत पुरुषमपीतः प्राप्नुतस्तदाधारे भवत इत्यर्थः । ऋक्सामे उभे यजुरपीतः यजुरधीने स्तः। एवं उ एवमेवैकेष्टकः। रुक्मपुष्करपर्णयोः पुरुषाधारत्वं, ऋक्सामयोश्च यजुरधीनत्व, तस्मादेकेष्टकोऽग्निरित्यर्थः । शब्रासा.

स एष एव मृत्युः य एष एतस्मिन्मण्डले पुरुषः । यश्चायं दक्षिणेऽक्षन्पुरुषः । स एष एवंविद आत्मा भवति । स यदैवंविदस्माल्लोकात्प्रैति । अथैतमेवात्मानमभिसंभवति । सोऽमृतो भवति, मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥

स एष एव मृत्युरित्यादिना वेदितुः फलवर्णनम् । स एष अग्निर्यजुरात्मकोऽधिदैवं मण्डलमध्यवर्ती । अध्यात्म दक्षिणाक्षिवर्ती पुरुषः मृत्युरूपः तमात्मत्वेन विद्वानस्माल्लोकात्प्रयन्नेवामृतो भवतीति । शब्रासा.

सावित्र्युपनिषत्

एतद्ध स्मैतद्विद्वांसमेकादशाक्षं मौद्गल्यं ग्लावो मैत्रेयोऽभ्याजगाम । स तस्मिन्ब्रह्मचर्यं वसतीति विज्ञायोवाच । किं स्विन्मर्यादा अयं तां मौद्गल्योऽध्येति यदस्मिन्ब्रह्मचर्यं वसतीति । तद्धि मौद्गल्यस्यान्तेवासी शुश्राव । स आचार्याय आव्रज्याचचष्टे । दुरधीयानं वा अयं भवन्तमवोचद्योऽयमद्यातिथिर्भवति । किं सौम्य विद्वानिति । त्रीन्वेदान् ब्रूते भो३ इति । तस्य सौम्य यो विस्पष्टो विजिगीषोऽन्तेवासी तन्मे ह्वयेति । तमाजुहाव । तमभ्युवाचासाविति भो ३ इति । किं सौम्य त आचार्योऽध्येतीति । त्रीन्वेदान् ब्रूते भो३ इति । यन्नु खलु सौम्यास्माभिः सर्वे वेदा मुखतो गृहीताः कथं त एवमाचार्यो भाषते । कथं नु शिष्टाः शिष्टेभ्य एवं भाषेरन् । यं ह्येनमहं प्रश्नं पृच्छामि न तं विवक्ष्यति न ह्येनमध्येतीति । स ह मौद्गल्यः स्वमन्तेवासिनमुवाच । परेहि सौम्य ग्लावं मैत्रेयमुपसीद । अधीहि भोः सावित्रीं गायत्रीं चतुर्विंशतियोनिं द्वादशमिथुनां यस्या भृग्वङ्गिरसश्चक्षुर्यस्यां सर्वमिदं श्रितं, तां भवान् प्रब्रवीत्विति । स चेत्सौम्य दुरधीयानो भविष्यत्याचार्योवाच ब्रह्मचारी ब्रह्मचारिणे सावित्रीं प्राहेति वक्ष्यति तत्त्वं ब्रूयात् । दुरधीयानं तं वै भवान् मौद्गल्यमवोचत् । स त्वा यं प्रश्नमप्राक्षीन्न तं व्यवोचः । पुरा संवत्सरादार्तिमार्क्ष्यसीति ॥

स तत्राजगाम यत्रेतरो बभूव । तं ह पप्रच्छ । स ह न प्रतिपेदे । तं होवाच । दुरधीयानं तं वै भवान् मौद्गल्यमवोचत् । स त्वा यं प्रश्नमप्राक्षीन्न तं व्यवोचः । पुरा संवत्सरादार्तिमार्क्ष्यसीति । स ह मैत्रेयः स्वानन्तेवासिन उवाच । यथार्थं भवन्तो यथागृहं यथामनो विप्रसृज्यन्ताम् । दुरधीयानं वा अहं मौद्गल्यमवोचम् । स मा यं प्रश्नमप्राक्षीन्न तं व्यवोचम् । तमुपेष्यामि । शान्तिं करिष्यामीति । स ह मैत्रेयः प्रातः समित्पाणिर्मौद्गल्यमुपससाद स वा (दासावा) अहं भो मैत्रेयः। किमर्थमिति। दुरधीयानं वा अहं भवन्तमवोचम् । त्वं मा यं प्रश्नमप्राक्षीर्न तं व्यवोचम् । त्वामुपेष्यामि । शान्तिं करिष्यामीति । स होवाच । अत्र वा उपेतं च सर्वं च कृतं पापकेन त्वा यानेन चरन्तमाह रथोऽयं मम कल्याणस्तं ते ददामि तेन याहीति । स होवाच । एतदेवात्रात्विषं चानृशंस्यं च यथा भवानाहोपायामित्येवं भवन्तमिति । तं होपेयाय । तं होपेत्य पप्रच्छ । किंस्विदाहुर्भोः सावितुर्वरेण्यं भर्गो देवस्य कवयः किमाहुर्धियो विचक्ष्व यदि ताः प्रविश्य प्रचोदयन्त्सविता याभिरेतीति । तस्मा एतत्प्रोवाच । वेदाश्छन्दांसि सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः । कर्माणि धियस्तदु ते ब्रवीमि प्रचोदयन्त्सविता याभिरेतीति । तमुपसंगृह्य पप्रच्छ । अधीहि भोः कः सविता का सावित्री ॥

(१) गोब्रा. १।१।३१-३८.

मन एव सविता। वाक् सावित्री। यत्र ह्येव मनस्तद्वाक् यत्र वै वाक्तन्मनः इत्येते द्वे योनी एकं मिथुनम्। अग्निरेव सविता। पृथिवी सावित्री। यत्र ह्येवाग्निस्तत्पृथिवी यत्र वै पृथिवी तदग्निरित्येते द्वे योनी एकं मिथुनम्। वायुरेव सविता। अन्तरिक्षं सावित्री। यत्र ह्येव वायुस्तदन्तरिक्षं यत्र वा अन्तरिक्षं तद्वायुरित्येते द्वे योनी एकं मिथुनम्। आदित्य एव सविता। द्यौः सावित्री। यत्र ह्येवादित्यस्तद्द्यौः यत्र वै द्यौस्तदादित्य इत्येते द्वे योनी एकं मिथुनम्। चन्द्रमा एव सविता। नक्षत्राणि सावित्री। यत्र ह्येव चन्द्रमास्तन्नक्षत्राणि यत्र वै नक्षत्राणि तच्चन्द्रमा इत्येते द्वे योनी एकं मिथुनम्। अहरेव सविता। रात्रिः सावित्री। यत्र ह्येवाहस्तद्रात्रिर्यत्र वै रात्रिस्तदहरित्येते द्वे योनी एकं मिथुनम्। उष्णमेव सविता। शीतं सावित्री। यत्र ह्येवोष्णं तच्छीतं यत्र वै शीतं तदुष्णमित्येते द्वे योनी एकं मिथुनम्। अभ्रमेव सविता। वर्षं सावित्री। यत्र ह्येवाभ्रं तद्वर्षं यत्र वै वर्षं तदभ्रमित्येते द्वे योनी एकं मिथुनम्। विद्युदेव सविता। स्तनयित्नुः सावित्री। यत्र ह्येव विद्युत्तत्स्तनयित्नुर्यत्र वै स्तनयित्नुस्तद्विद्युदित्येते द्वे योनी एकं मिथुनम्। प्राण एव सविता। अन्नं सावित्री। यत्र ह्येव प्राणस्तदन्नं यत्र वा अन्नं तत्प्राण इत्येते द्वे योनी एकं मिथुनम्। वेदा एव सविता। छन्दांसि सावित्री। यत्र ह्येव वेदास्तच्छन्दांसि यत्र वै छन्दांसि तद्वेदा इत्येते द्वे योनी एकं मिथुनम्। यज्ञ एव सविता। दक्षिणा सावित्री। यत्र ह्येव यज्ञस्तद्दक्षिणा यत्र वै दक्षिणास्तद्यज्ञ इत्येते द्वे योनी एकं मिथुनम्। एतद्ध स्मैतद्विद्वांसमोपाकारिमासस्तुर्ब्रह्मचारी ते संस्थित इत्यथैत आसस्तुराचित इव चितो बभूव। अथोत्थाय प्राव्राजीत्। इत्येतद्वाऽहं वेद। नैतासु योनिष्वित एतेभ्यो वा मिथुनेभ्यः संभूतो ब्रह्मचारी मम पुरायुषः प्रेयादिति ॥

ब्रह्म हेदं श्रियं प्रतिष्ठामायतनमैक्षत। तत्तपस्व। यदि तद्व्रते ध्रियेत। तत्सत्ये प्रत्यतिष्ठत्। स सविता सावित्र्या ब्राह्मणं सृष्ट्वा तत्सावित्रीं पर्यदधात्। तत्सवितुर्वरेण्यमिति सावित्र्याः प्रथमः पादः। पृथिव्यर्चं समदधात्। ऋचाऽग्निम्। अग्निना श्रियम्। श्रिया स्त्रियम्। स्त्रिया मिथुनम्। मिथुनेन प्रजाम्। प्रजया कर्म। कर्मणा तपः। तपसा सत्यम्। सत्येन ब्रह्म। ब्रह्मणा ब्राह्मणम्। ब्राह्मणेन व्रतम्। व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद। यश्चैवंविद्वानेवमेतं सावित्र्याः प्रथमं पादं व्याचष्टे ॥

भर्गो देवस्य धीमहीति सावित्र्या द्वितीयः पादः। अन्तरिक्षेण यजुः समदधात्। यजुषा वायुम्। वायुनाऽभ्रम्। अभ्रेण वर्षम्। वर्षेणौषधिवनस्पतीन्। ओषधिवनस्पतिभिः पशून्। पशुभिः कर्म। कर्मणा तपः। तपसा सत्यम्। सत्येन ब्रह्म। ब्रह्मणा ब्राह्मणम्। ब्राह्मणेन व्रतम्। व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद। यश्चैवंविद्वानेवमेतं सावित्र्या द्वितीयं पादं व्याचष्टे ॥

धियो यो नः प्रचोदयादिति सावित्र्यास्तृतीयः पादः। दिवा साम समदधात्। साम्नाऽऽदित्यम्। आदित्येन रश्मीन्। रश्मिभिर्वर्षम्। वर्षेणौषधिवनस्पतीन्। ओषधिवनस्पतिभिः पशून्। पशुभिः कर्म। कर्मणा तपः। तपसा सत्यम्। सत्येन ब्रह्म। ब्रह्मणा ब्राह्मणम्। ब्राह्मणेन व्रतम्। व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद। यश्चैवंविद्वानेवमेतं सावित्र्यास्तृतीयं पादं व्याचष्टे ॥

तेन ह वा एवंविदुषा ब्राह्मणेन ब्रह्माभिपन्नं ग्रसितं परामृष्टम्। ब्रह्मणाऽऽकाशमभिपन्नं ग्रसितं परामृष्टम्। आकाशेन वायुरभिपन्नो ग्रसितः परामृष्टः। वायुना ज्योतिरभिपन्नं ग्रसितं परामृष्टम्। ज्योतिषाऽऽपोऽभिपन्ना ग्रसिताः परामृष्टाः। अद्भि-

भूमिराभिपन्ना ग्रसिता परामृष्टा । भूम्याऽन्नमभिपन्नं ग्रसितं परामृष्टम् । अन्नेन प्राणोऽभिपन्नो ग्रसितः परामृष्टः । प्राणेन मनोऽभिपन्नं ग्रसितं परामृष्टम् । मनसा वागभिपन्ना ग्रसिता परामृष्टा । वाचा वेदा अभिपन्ना ग्रसिताः परामृष्टाः । वेदैर्यज्ञोऽभिपन्नो ग्रसितः परामृष्टः । तानि ह वा एतानि द्वादशमहाभूतान्येवं विधिप्रतिष्ठितानि तेषां यज्ञ एव पराद्धर्यः ॥

तं ह स्मैतमेवंविद्वांसो मन्यन्ते विद्मैनमिति याथातथ्यमविद्वांसः । अयं यज्ञो वेदेषु प्रतिष्ठितः । वेदा वाचि प्रतिष्ठिताः । वाङ् मनसि प्रतिष्ठिता । मनः प्राणे प्रतिष्ठितम् । प्राणोऽन्ने प्रतिष्ठितः । अन्नं भूमौ प्रतिष्ठितम् । भूमिरप्सु प्रतिष्ठिता । आपो ज्योतिषि प्रतिष्ठिताः । ज्योतिर्वायौ प्रतिष्ठितम् । वायुराकाशे प्रतिष्ठितः । आकाशं ब्रह्मणि प्रतिष्ठितम् । ब्रह्म ब्राह्मणे ब्रह्मविदि प्रतिष्ठितम् । यो ह वा एवंवित्स ब्रह्मवित् । पुण्यां च कीर्तिं लभते सुरभींश्च गन्धान् । सोऽपहतपाप्माऽनन्त्याश्रियमश्नुते य एवं वेद । यश्चैवंविद्वानेवमेतां वेदानां मातरं सावित्रीसंपदमुपनिषदमुपास्त इति ब्राह्मणम् ॥ *

* सवितुः परमात्मत्वव्यञ्जकविशेषणानि अस्मिन् प्रकरणेऽसंगृहीतवचनान्तरेष्वपि समुपलभ्यन्ते । मित्रवरुणभगसूर्यापानपात्पूष्णा सवितुश्च आदित्यत्वात् सूर्यात्मकत्वाच्च तेषां संबन्धी मन्त्रब्राह्मणसंग्रहोऽत्र पृथक् न कृतः । वरुणस्य तु आदित्यत्वेऽपि महामहिमत्वं ऋक्संहितायां स्वातन्त्र्येण चकास्तीति तन्निरूपणपरः आम्नायसंग्रहः पूर्वं कृतः । अत्र विशेषणानि बाहुल्येन यथाम्नातमेव समुद्धृतानि । कानिचित्तु आम्नातार्थानुवादकानि । यथा—

## सविता

अमृतं मर्त्यं च निवेशयन्–ऋसं. १।३५.
ईशानः वार्याणाम्–ऋसं. १।२४.
चित्रस्य राधस. विभक्ता–ऋसं. १।२२; ४।५४.,
विश्वा दुरिता बाधमानः–ऋसं. १।३५.
विश्वेषां भुवनानामाधार.–ऋसं. १।३५.
सुनीथ –ऋसं. १।३५.
धृतव्रतः–ऋसं. ४।५३.
कवितम कवीनाम्–ऋसं ५।४२.
प्राणिजातस्य प्रसवनिवेशनप्रभुः–ऋसं ६।७१.
अमृतज्योतिष आश्रय.–ऋसं. ७।७६.
विश्वानर –ऋसं. ७।७६.
ऋतावृध्–ऋसं. ७।८२, ८३.
सत्यसवः–ऋसं. ५।८२; १०।३६.
सत्यधर्मा–ऋसं. १०।३४, १३९.

## मित्रः

पूतदक्ष·–ऋसं १।२.
द्यावापृथिव्योर्धर्ता देवानां च–ऋसं. ३।५९.
पापसंसर्गशून्यः–ऋसं. ३।५९.
नृणां प्रियतम.–ऋसं. ७।६२.

## मित्रावरुणौ

ऋतावृधौ–ऋसं १।२, २३, २।४१; ३।६२; ५।६५; ७।६०, ६६.
ऋतावानौ–ऋसं. १।१३६; १५१; ५।६५, ६७; ७।६२, ६६, ८।२५.
ऋतस्य गोपौ–ऋसं. ५।६३, ७।६४.
ऋतौ–ऋसं. ६।६७.
अनृतद्विषौ–ऋसं. ७।६६
अनृतस्य सेतू–ऋसं. ७।६५.
असुरौ देवानाम्–ऋसं. ७।६५.
ऋतरक्षकौ अनृतनाशकौ–ऋसं. १।१५२.
शुचिव्रतौ–ऋसं. ३।६२.
धृतव्रतौ– ऋसं. १।१५; २।२९; ८।२५.
देवैरबाध्यव्रतौ–ऋसं. ५।६९.
व्रतेन ध्रुवक्षेमौ–ऋसं. ५।७२.
धर्मणा यातयज्जना–ऋसं. ५।७२.
जनानां यन्तारौ–ऋसं. ६।६७.
मर्त्येषु ऋजु वृजिना च पश्यन्–ऋसं. ७।६०.
अद्रुहौ–ऋसं. ७।६६.
ऋजुनीती–ऋसं. १।९०.
सुक्रतू–ऋसं. ३।६२, ५।६६; ७।६१; ८।२५.
पूतदक्षसौ–ऋसं. १।२३, ५।६६; ७।६५, ८।२५.
सत्यधर्माणौ–ऋसं. ५।६३.
विश्वेषां सतां ज्येष्ठतमौ–ऋसं. ६।६७.
वार्षिष्ठक्षत्रौ–ऋसं. ८।१०१.
विश्वस्य भुवनस्य गोपौ–ऋसं. ५।६२; ७।६०; ८।२५.
द्यावापृथिव्योर्धर्तारौ–ऋसं. ५।६२, ६९; ६।६७.

## द्यावापृथिव्यौ

अज्ञेयजनने, गर्भवत्प्राणिजातधारिण्यौ, अपापस्वर्गदाक्षीयमाणधनदे, देवजनन्यौ, अमृतधारिण्यौ, पितरौ सर्वेषाम्

**कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद।**
**विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥**

धर्तारौ चर्षणीनाम्-ऋस. ५।६७
दिवि सूर्यस्थापकौ-ऋस. ५।६३, ६।६७.
सम्राजौ-ऋसं. १।१३६; २।४१; ५।६३, ६८, ८।२५, १०।६५.

## पूषा

विश्वसौभगः-ऋसं. १।४२.
अमर्त्यः-ऋसं. ८।४.
भुवनस्य गोपा-ऋसं १०।१९.

## भगः

अद्वेष.-ऋसं १।२४.
सर्वधातम-ऋसं. ८।३१.

## अपां नपात्

विश्वेषां जनिता-ऋसं. २।३५.
भुवनानि अस्य शाखाः-ऋसं. २।३५.

## सूर्यः

श्रेष्ठो देवानाम्-ऋसं. १।४३; ५।६२.
प्रत्यङ् देवानां मानुषाणां विश्वस्य च-ऋसं. १।५०.
महो देवः-ऋसं. १०।३७.
महान् देव-ऋसं. ८।१०१.
जगतस्तस्थुषस्पति-ऋसं. ७।६६.
देवानामपसामपस्तमः-ऋसं. १।१६०.
अमृतस्य नाभि-ऋसं. ४।५८
विश्वजन्यं अमृतं ज्योतिः-ऋसं. ७।७६.
विभु ज्योति-ऋसं. ८।१०१.
श्रेष्ठ ज्योतिषां ज्योतिः-ऋसं. १०।१७०.
उत्तमं ज्योतिः-ऋसं. १।५०; १०।१७०.
जनिता पुत्रश्च रोदस्यो.-ऋसं. १।१६०.

(१) ऋसं. १।१८५।१; ऐब्रा. २२।८।१०; शाब्रा. २३।८; ऐआ.१।५।३।४; नि. ३।२२.

अयोः एनयोः द्यावापृथिव्योर्मध्ये कतरा पूर्वा पूर्वमुत्पन्ना। कतरा वा अपरा पश्चाद्भाविनी। एव पौर्वापर्यप्रश्नः। उभयोः अविनाभावेन सहैव वर्तमानत्वादिति भावः। तथा कथा केन हेतुना जाते किमनयोरुत्पादनमित्यर्थः। हे कवयः क्रान्तदर्शिनोऽतीन्द्रियज्ञाः यूयं वदत को वि वेद पौर्वापर्यं कारण च विशेषेण विविच्य वा जानाति। न केनापि ज्ञायते इत्यर्थः। अज्ञाने कारणमाह। यद्ध यस्मात्खलु हेतोः नाम प्रसिद्धं विश्व कृत्स्नमपि जगत् अविशेषेण त्मना आत्मनैव अन्यनैरपेक्ष्येणैव बिभृतः धारयतः। यद्वा। यद्ध नाम यत्किंचित् पदार्थजातमस्ति विश्व तत्सर्वमात्मना बिभृतः। अनेन यत्कारण ब्रूमस्तदपि आभ्यामेव ध्रियते इति कारणाभावः प्रतिपादितः। उत्तरेण पौर्वापर्याभाव उच्यते। अहनी एते द्यावापृथिव्यौ चक्रियेव चक्रयुक्ते इव वि वर्तेते। अत्र 'कतरा पूर्वा कतरापरैनयोः' (नि. ३।२२) इत्यादिनिरुक्त द्रष्टव्यम्।

ऋसा.

**[1]भूरिं द्वे अचरन्ती चरन्तं पद्वन्तं गर्भमपदी दधाते।**
**नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥**

अचरन्ती अविचले द्वे एव एते द्यावापृथिव्यौ भूरिं बहुतरं चरन्त पद्वन्त पादयुक्त गर्भ गर्भवदाश्रितं कृत्स्न प्राणिजात अपदी स्वय पादरहिते दधाते धारयतः। अनयोर्मध्ये खलु सर्व जगत् क्षेमेण वर्तते। धारणे दृष्टान्तः। पित्रोः मातापित्रोः उपस्थे उत्सङ्गे वर्तमानं नित्य ध्रुवमात्मज सूनुं न पुत्रमिव यथा स्नेहेन वर्धयन्तौ धारयन्तौ मातापितरौ तद्वत्। अथ प्रत्यक्षेणाह। हे द्यावा पृथिवी द्यावापृथिव्यौ। इतरेतरापेक्षया द्वित्वमुभयोः। नः अस्मान् अभ्वात् महतो भयहेतोः पापान् रक्षतं पालयतम्। यद्वा। अभ्वात् अभ्व महत्। अत्यर्थमित्यर्थः। अभ्वेति महन्नाम।

ऋसा.

(१) ऋसं. १।१८५।२, मैस. ४।१४।७ (८९) भूरिं (भूरि), तैब्रा. २।८।४।८ द्यावा...अभ्वात् (तं पिपृतं रोदसी सत्यवाचम्).

अनेहो दात्रमदितेरनर्वं हुवे स्वर्वदवधं नमस्वत् ।
तद्रोदसी जनयतं जरित्रे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥

अदितेः । एतदन्तरिक्षस्याप्युपलक्षणम् । अखण्डनीयायाः पृथिव्याः तादृगस्यान्तरिक्षस्य च संबन्धि दात्र धन हुवे आह्वयामि स्पृहयामीत्यर्थः । कीदृश तद्धनम् । अनेहः अपाप दुःखरहित सुखात्मक अनर्व अनरण अक्षीणमित्यर्थः । स्वर्वत् सर्वतः फलभूतेन स्वर्गेण तद्वत् अवध अहिंसित नमस्वत् अन्नवत् । ईदृश धन हुवे । तत् अस्माभिः काङ्क्षितमुक्तलक्षण धन हे रोदसी द्यावापृथिव्यौ जरित्रे स्तोत्रे यजमानाय जनयत उत्पादयतम् । द्यावेत्यादि व्याख्यातम् । ऋसा.

अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे ।
उभे देवानामुभयेभिरह्नां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥

अवसा स्वतोऽधिकेन केनचित् कृतेन अवनेन समृद्ध्या अतप्यमाने अनीश्वरे । तपेः ऐश्वर्यकर्मणः इद रूपम् । अतप्यमाने अन्यैरपीड्यमाने । अवसा अन्नेन अवन्ती तर्पयन्त्यौ देवपुत्रे देवाः व्यवहर्तारो मनुष्याः पुत्रस्थानीयाः ययोस्तादृश्यौ । लोकद्वयस्थाः मनुष्याश्च देवाश्च तदुपजीव्यत्वात् पुत्राः इत्युच्यन्ते । ईदृशौ उभे रोदसी द्यावापृथिव्यौ देवानां अह्नाम् । एतद्रात्रेरप्युपलक्षणम् । द्योतमानानां अह्नां रात्रीणा च संबन्धिभिः उभयविधैः शीतोष्णादिरूपैः विलक्षणैः धनैः निमित्तभूतैः । तेषां लाभायेत्यर्थः । तदर्थं युवां अनु स्याम अनुभवेम । शिष्टो व्याख्यातः । ऋसा.

संगच्छमाने युवती समन्ते स्वसारा जामी पित्रोरुपस्थे ।
अभिजिघ्रन्ती भुवनस्य नाभिं द्यावा रक्षतं पृथिवी नो अभ्वात् ॥

सगच्छमाने परस्परमुपकारित्वेन सह युज्यमाने । वृष्टि-हविषोश्च परस्परमुपकार्योपकारकभावः । यद्वा । पूर्वं ससृष्टे एव सत्यौ पश्चाद्वियुज्य वृष्टिहविषी अकुर्वन्त्यौ पश्चात् मनुष्यैः प्रार्थितैर्देवैः विवाहिते सत्यौ सगते अभूतामित्याहुः । अयमर्थः 'द्यावापृथिवी सहास्ताम्' (तैब्रा. १।१।३।२) इत्यादिब्राह्मणे समाम्नातः । युवती नित्यतरुण्यौ मिश्रयन्त्यौ वा सर्वेषु भावेषु समन्ते समानान्तिके समानपर्यन्ते वा स्वसारा परस्परं स्वसृभूते जामी बन्धुभूते । प्रजापतेः सकाशात् सहोत्पन्नत्वात् परस्पर जामित्वम् । तथाच निगमौ–'दिवं च पृथिवीं चान्तरिक्षमथो स्वः' (ऋसं. १०।१९०।३) 'यतो द्यावापृथिवी निष्टतक्षुः' (ऋसं. १०।३१।७) इति । पित्रोः सर्वस्य पितृस्थानीययोः पालकयोस्तयोः उपस्थे उत्सङ्गे स्थित भुवनस्य भूतजातस्य नाभिं बन्धकमुदक । अभिजिघ्रन्ती अभिघ्राण कुर्वन्त्यौ स्पृशन्त्यौ । 'समानमेतदुदकम्' (ऋस. १।१६४।५१) इत्यादिमन्त्रवर्णात् उभयोरुदकप्रदत्व प्रसिद्धम् । ईदृश्यौ नः रक्षतम् । ऋसा.

उर्वी सद्मनी बृहती ऋतेन हुवे देवानामवसा जनित्री ।
दधाते ये अमृतं सुप्रतीके द्यावा रक्षतं पृथिवी नो अभ्वात् ॥

उर्वी विस्तीर्णे सद्मनी सदनाधारभूते बृहती महत्यौ महानुभावे देवानाम् । उपलक्षणमेतत् । देवमनुष्यादीना अवसा प्रीत्या निमित्तेन जनित्री वृष्टिसस्ययोर्जनित्र्यौ । वृष्ट्यादेर्देवानामवसा तर्पणेन निमित्तेन ऋतेन यज्ञेन च निमित्तभूतेन हुवे आह्वयामि । देवाना हविरर्थं अस्मद्यज्ञायेत्यर्थः । ये सुप्रतीके शोभनरूपे अमृत उदकं दधाते धारयतः ते युवामाह्वयामि । शिष्ट स्पष्टम् । ऋसा.

उर्वी पृथ्वी बहुले दूरेअन्ते उप ब्रुवे नमसा यज्ञे अस्मिन् ।
दधाते ये सुभगे सुप्रतूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥

उर्वी उर्व्यौ महत्यौ पृथ्वी पृथिव्यौ बहुले अनेकप्रकारेण प्रथमाने बह्वाकारे दूरेअन्ते विप्रकृष्टान्तदेशे

(१) ऋसं. १।१८५।३.
(२) ऋसं. १।१८५।४
(३) ऋसं. १।१८५।५.

(१) ऋसं १।१८५।६. (२) ऋसं. १।१८५।७; मैसं. ४।१४।७ (९१), तैब्रा. २।८।४।८.

अपारे इत्यर्थः । ईदृश्यौ युवा अस्मिन् यज्ञे नमसा नमः-साधनेन स्तोत्रेण उप ब्रुवे उपेत्य ब्रवीमि स्तौमीत्यर्थः । पुनः कीदृश्यौ । ये सुभगे शोभनभाग्ये सुप्रतूर्ती सुप्रतरणे शोभनदाने दधाते विश्व जगत् ते युवां उप ब्रुवे स्तौमि ।

ऋसा.

[१]देवान्वा यच्चकृमा कच्चिदागः सखायं वा सदमिज्जास्पतिं वा ।
इयं धीर्भूया अवयानमेषां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥

हे द्यावापृथिव्यौ वय देवान् देवान् प्रति यत् कच्चित् आगः अपराध तत्तद्यागकाले तेषा तेषा अयागलक्षण सदामित् सर्वदैव चकृम कृतवन्तो वयम् । सखाय वा प्रिय मित्रं वा प्रति यच्चकृम । जास्पतिं जाः पुत्र्यः, तासा पति जामातरं वा जायापतिं प्रति दोषारोपणकलहोत्पादनादिरूप यत्सर्वदैव चकृम । एषा उक्तरूपाणा पापाना अपगम कर्तु इय धीः युष्मत्स्तुतिरूपं इद कर्म भूयाः भूयात् भवतु । द्यावेत्यादि गतम् । अत्र सर्वत्र प्रकारान्तरेण मन्त्रमन्तरेण रक्षतं रक्षतमिति प्रार्थन तयोः अश्विन्यादिबहुमननाऽसभवात् उचितमेव । तस्मात् स्वस्थाने एव स्थिते अनुकूले भवतमित्येव प्रार्थ्यते ।

ऋसा.

[२]उभा शंसा नर्या मामविष्टामुभे मामूती अवसा सचेताम् ।
भूरि चिदर्यः सुदास्तरायेषा मदन्त इषयेम देवाः ॥

उभा शंसा द्यावापृथिव्योरुभयोः विषयौ उभावपि शंसौ नर्या नरेभ्यो हितौ ईदृश्यौ उभयाश्रये स्तुती मां अविष्टां रक्षताम् । यद्वा । द्यावापृथिव्यभिमानिदेवयोरेव शंसशब्देन अभिधानात् पुलिङ्गता । तथा उभे ऊती रक्षिके द्यावापृथिव्यौ मा अवसा रक्षणेन सचेताम् । यद्वा । प्राणिभ्यो हितकरौ उभौ ऐहिकामुष्मिकविषयौ शसौ मां अविष्टां प्राप्नुताम् । तथा उभे अपि ऊती तयोः सबन्धिन्योरभिमानिदेवतयोः अवसा अस्मत्तर्पणेन निमित्तेन सचेताम् । हे देवाः द्यावापृथिव्योरन्तर्भूताः सर्वेऽपि देवाः अर्यः स्तोतारो वय सुदास्तराय अतिशयेन शोभनदातृत्वाय इषा अन्नेन सोमलक्षणेन मदन्तः मादयन्तः सन्तः भूरि चित् अभिपूजित धन इषयेम इच्छेम । यद्वा । अर्यः इति षष्ठया रूपम् । ईश्वराद्राजादेरपि सुदास्तरायेत्यर्थः । शिष्ट समानम् ।

ऋसा.

[१]ऋतं दिवे तदवोचं पृथिव्या अभिश्रावाय प्रथमं सुमेधाः ।
पातामवद्याद्दुरितादभीके पिता माता च रक्षतामवोभिः ॥

सुमेधाः शोभनप्रज्ञोऽहं दिवे द्युदेवतायै पृथिव्यै पृथिवीदेवतायै तत् तत्प्रीतिकर ऋत स्तोत्र प्रथमम् । मुख्यनामैतत् । प्रतम प्रकृष्टतमं अवोच ब्रवीमि । किमर्थम् । अभिश्रावाय अभितः सर्वतः श्रवणाय । किंच पिता पालको द्युलोकः माता सस्यादेर्निर्मात्री पृथिवी च उभे अवद्यात् निन्दितात् दुःखप्रापकात् अहसः सकाशात् पाता रक्षताम् । तथा अभीके । अन्तिकनामैतत् । समीपे एव अवोभिः अभिमततर्पणैः रक्षता पालयताम् ।

ऋसा.

[२]इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवे वाम् ।
भूतं देवानामवमे अवोभिर्विद्यामेषं वृजनं जीरदानुम् ॥

हे द्यावापृथिवी द्यावापृथिव्यौ इदं अस्माभिः क्रियमाणं स्तोत्रं सत्यमस्तु अवितथ भवतु फलवद्भवत्वित्यर्थः । इदमित्युक्त किं तदित्याह । हे पितः द्यौः हे मातः पृथिवि वा युवां प्रति इह अस्मिन् यज्ञे यत् स्तोत्र उपब्रुवे उपेत्य ब्रवीमि तत्सत्यमस्तु । देवानां स्तोतॄणामस्माक अवमे । अन्तिकनामैतत् । नित्यसंनिहिते युवा अवोभिः तर्पणैर्युक्ते भूतं भवतम् । अवशिष्टं गतम् ।

ऋसा.

(१) ऋसं. १।१८५।८.
(२) ऋसं. १।१८५।९.

(१) ऋसं. १।१८५।१०.
(२) ऋसं. १।१८५।११, मैसं. ४।१४।७ (१०); तैब्रा. २।८।४।८.

सविता एव द्यावापृथिव्योर्द्रष्टा, द्यावापृथिव्यौ ऋतस्य सदने स्थिते भूतानां देवानां चाधारः, द्यौः पिता सर्वस्य

[1]को अद्धा वेद क इह प्र वोचद्देवाँ अच्छा पथ्या का समेति ।
ददृश्र एषामवमा सदांसि परेषु या गुह्येषु व्रतेषु ॥

कः वा अद्धा सत्यभूत तादृगमर्थं वेद वेत्ति । कः वा इह अस्मिन् प्रज्ञातमर्थं प्र वोचत् प्र ब्रवीति । किं तत्तदुच्यते । देवान् अच्छ अभिलक्ष्य का पथ्या पथि साधुः समीचीनः को वा मार्गः समेति सम्यक् प्राप्नोतीति । इममर्थं न कश्चिज्जानाति । न कोऽपि ब्रवीति । किं ते देवा विद्यन्ते । बाढमित्याह । एषां दिवि स्थितानां नक्षत्ररूपाणां देवानां अवमा अधोमुखानि सदांसि स्थानानि ददृश्रे दृश्यन्ते । तथापि परेषु उत्तमेषु गुह्येषु दुर्ज्ञानेषु व्रतेषु कर्मसु अनुष्ठितेषु या यानि दिवि देवस्थानानि लभ्यन्ते तत्रागन्तु को मार्ग इति वेदमन्तरेण न कश्चिज्जानातीत्यभिप्रायः । ऋसा.

[2]कविर्नृचक्षा अभि षीमचष्ट ऋतस्य योना विघृते मदन्ती ।
नाना चक्राते सदनं यथा वेः समानेन क्रतुना संविदाने ॥

कविः क्रान्तदर्शी नृचक्षाः नृणां द्रष्टा सूर्यः सीं एते द्यावापृथिव्यौ अभि अचष्ट सर्वतः पश्यति । ऋतस्य योना जलस्य स्थानेऽन्तरिक्षे मदन्ती हृष्यन्त्यौ विघृते, घृतमस्या ओषधयो जलममुष्या इति, एवंविधरसोपेते, समानेन । 'समानमेतदुदकमुच्चैत्यव चाहभिः । भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥' ( ऋसं. १। १६४।५१ ) इति परस्परप्रीणनाख्येनैकेन क्रतुना कर्मणा संविदाने परस्परमैकमत्यं प्राप्ते ते द्यावापृथिव्यौ नाना पृथग्भूतं सदनं स्थानं चक्राते । तथा च श्रुतिः— 'इमौ वै लोकौ सहास्तां तौ व्यैताम्' ( ऐब्रा. ४।२७ ) इति । तत्र दृष्टान्तः । यथा वेः कुलायं नाना भवति तद्वत् । ऋसा.

[1]समान्या वियुते दूरेअन्ते ध्रुवे पदे तस्थतुर्जागरूके ।
उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥

समान्या समाने परस्परप्रीणनाख्येन कर्मणा ऐकमत्यं गते वियुते वियुज्य वर्तमाने दूरेअन्ते दूरेऽन्तोऽवसानं ययोस्ते दूरेअन्ते अविनाशिन्यौ ते द्यावापृथिव्यौ जागरूके जागरणशीले सत्यौ ध्रुवे अविनाशिनि पदे अन्तरिक्षे तस्थतुः तिष्ठतः । उत अपि च युवती नित्यतरुणे स्वसारा भगिन्यौ एकस्मादात्मनो जाते इति भवन्ती भवन्त्यौ तस्थतुरित्यन्वयः । आदु अनन्तर मिथुनानि द्वन्द्वानि नाम उर्वी, पृथ्वी, बहुले, दूरेअन्ते, रोदसी, पुरोहिते इत्यादीनि नामानि ब्रुवाते ते परस्पर ब्रूतः । उर्व्यादिभिर्द्वन्द्वनामभिर्द्यावापृथिव्यावुच्येते इत्यर्थः । ऋसा.

[2]विश्वेदेते जनिमा सं विविक्तो महो देवान्बिभ्रती न व्यथेते ।
एजद्ध्रुवं पत्यते विश्वमेकं चरत्पतत्रि विषुणं वि जातम् ॥

एते द्यावापृथिव्यौ विश्वेत् जनिम सर्वाण्यपि भूतजातानि सं विविक्तः अवकाशप्रदानेन सविभज्य कुरुतः । किंच महः महतः देवान् इन्द्रसूर्यादीन् सरित्समुद्रपर्वतादींश्च बिभ्रती बिभ्राणे अपि ते न व्यथेते न खिद्येते । किंच एजत् जङ्गमात्मकं ध्रुव स्थावरात्मकं च विश्वं जगत् एकं स्थान पृथिवीमेव पत्यते अभिगच्छति । तथा चरत् चञ्चलं पशुजातं पतत्रि पक्षिजात च विषुणं विष्वक् नानारूपमनयोर्मध्ये वि तिष्ठते । योग्यक्रियाध्याहारः । ऋसा.

[3]सना पुराणमध्येम्यारान्महः पितुर्जनितुर्जामि तन्नः ।
देवासो यत्र पनितार एवैरुरौ पथि व्युते तस्थुरन्तः ॥

हे द्यौः महः महत्याः पितुः सर्वस्य पालयित्र्याः जनितुः जनयित्र्यास्तव सना सनातन पुराण पूर्वक्रमागतं

(१) ऋसं. ३।५४।५. (२) ऋसं. ३।५४।६.

(१) ऋसं. ३।५४।७; नि. ४।२५।६.
(२) ऋसं. ३।५४।८.
(३) ऋसं. ३।५४।९.

नः अस्माकं तत् जामि जामित्वम् । सर्वमेकस्मात् जातमिति द्यौर्मे भगिनी भवति तादृश भगिनीत्व तत् आरात् अधुना अध्येमि स्मरामि । दिवः पितृत्वे जनयितृत्वे च मन्त्रवर्णः––' द्यौर्मे पिता जनिता नाभिरत्र ' ( ऋस. १।१६४।३३ ) इति । यत्र यस्यां दिवि अन्तः मध्ये उरौ विस्तीर्णे व्युते विविक्ते पथि नभसि पनितारः त्वां स्तुवन्तः देवासः देवाः एवैः गमनसाधनैः स्वैः स्वैर्वाहनैः सहिताः सन्तः तस्थुः । तत्र स्थिता देवा मदीय स्तोत्र शृण्वन्त्विति भावः । ऋसा.

---

## रुद्रः

भिषक्तम , द्वेषपातकरोगाणामपहर्ता, श्रिया सर्वश्रेष्ठः, भुवनस्येशान , सर्वस्य रक्षक , सत्पतिः, ज्ञाता च

[1]आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः ।
अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ॥

हे मरुतां पितः मरुत्सज्ञाना देवानामुत्पादक रुद्र । ते त्वदीयमस्मभ्यं दातव्य सुम्नं सुख आ एतु आगच्छतु । रुद्रस्य च मरुता पितृत्व ' इद पित्रे मरुताम् ' ( ऋस. १।११४।६ ) इत्यत्राख्यायिकामुखेनावादिष्म । तथा त्व नः अस्मान् सूर्यस्य सदृशः सदर्शनात् मा युयोथाः मा पृथक् कार्षीः । अर्वति शत्रौ ' भ्रातृव्यो वा अर्वा ' ( तैस. ६।३।८।४ ) इति श्रुतेः । नः अस्माकं वीरः वीर्यवान् पुत्रादिः अभि क्षमेत अभिभवतु । यद्वा, वीरस्त्व नोऽस्मानभिक्षमेथाः अस्मान् कृतापराधानभिक्षमस्व । हे रुद्र प्रजाभिः पुत्रपौत्रादिभिः प्र जायेमहि प्रभूताः स्याम । ऋसा.

[2]त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः ।
व्यस्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥

हे रुद्र त्वादत्तेभिः त्वया दत्तैः शंतमेभिः अतिशयेन सुखकरैः भेषजेभिः भेषजैरौषधैः शत हिमाः शतं हेमन्तान् शतसवत्सरान् अशीय व्याप्नुयाम् । अपि च अस्मत् अस्मत्तः द्वेषः द्वेष्टॄन् वि चातयस्व विनाशय । तथा अंहः पाप वितर अत्यन्त विचातयस्व । अमीवाः रोगान् विषूचीः विषु नाना अञ्चतीः कृत्स्नशरीरव्यापकान् रोगान् विचातयस्व अस्मत्तः पृथक्कृत्य विनाशय । ऋसा.

[1]श्रेष्ठो जातस्य रुद्र श्रियाऽसि तवस्तमस्तवसां वज्रबाहो ।
पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥

हे रुद्र जातस्य उत्पन्नस्य सर्वस्य जगतो मध्ये श्रिया ऐश्वर्येण श्रेष्ठः प्रशस्यतमः असि भवसि । तथा हे वज्रबाहो आयुधहस्त रुद्र तवसा प्रवृद्धाना मध्ये तवस्तमः अतिशयेन प्रवृद्धोऽसि । स त्व नः अस्मान् अंहसः पापस्य पार तीर स्वस्ति क्षेमेण पर्षि पारय । तथा रपसः पापस्य विश्वाः सर्वाः अभीतीः अभिगमनानि युयोधि पृथक् कुरु । ऋसा.

[2]मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥

हे रुद्र त्वा त्वा नमोभिः अयथाक्रियमाणैर्नमस्कारैर्हविर्भिर्वा मा चुक्रुधाम मा क्रोधयाम क्रुद्धं मा कार्ष्म । हे वृषभ कामाना वर्षितः दुष्टुती दुःस्तुत्या अशोभनया स्तुत्या मा चुक्रुधामेत्येव । तथा सहूती सहूत्या विसदृशैरन्यैर्देवैः सहाह्वानेन मा क्रोधयाम । श्रेष्ठो हि स्वस्मान्न्यूनेन सहाह्वाने क्रुद्धो भवति । स त्वं नः अस्माकं वीरान् पुत्रान् भेषजेभिः त्वदीयैर्भेषजैः औषधैः उत् अर्पय उत्कृष्टं सयोजय । हे रुद्र त्वा त्वा भिषजां चिकित्साभिज्ञानां मध्ये भिषक्तमं अतिशयेन भैषज्यस्य कर्तारं शृणोमि । ' प्रथमो दैव्यो भिषक् ' ( तैसं. ४।५।१।२ ) इति च मन्त्रान्तरेऽप्युक्तम् । ऋसा.

---

(१) ऋसं २।३३।१, ऐब्रा. १३।१०।४–६ उत्तरार्धे (त्वं नो वीरो अर्वति क्षमेथाः प्रजायेमहि रुद्रिय प्रजाभिः); तैब्रा. २।८।६।९.

(२) ऋसं. २।३३।२; तैब्रा. २।८।६।८.

(१) ऋसं. २।३३।३.

(२) ऋसं. २।३३।४.

हवीमभिर्हवते यो हविर्भिरव स्तोमेभी रुद्रं दिषीय ।
ऋदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै ॥

यः रुद्रः हविर्भिः चरुपुरोडाशादिभिः सहितैः हवीमभिः आह्वानैः स्तुतिलक्षणैः हवते आहूयते स्तूयते । त रुद्र स्तोमेभिः स्तोत्रैः अव दिषीय अवखण्डयामि पृथक् करोमि । अपगतक्रोध करोमीति यावत् । ऋदूदरः । 'ऋदूदरो मृदूदरः' ( नि. ६।४ ) इति यास्कः । सुहवः शोभनाह्वानः बभ्रुः भर्ता सर्वस्य बभ्रुवर्णो वा । सुशिप्रः । शिप्रे हनू नासिके वा । शोभनशिप्रः । एवगुणविशिष्टः स रुद्रः अस्यै मनायै । हन्मीति मन्यमाना बुद्धिर्मना । तस्यै नः अस्मान् मा रीरधत् मा वश नैषीत् । 'रध्यतिर्वशगमने' इति यास्कः ।

ऋसा.

उन्मा ममन्द वृषभो मरुत्वान्त्वक्षीयसा वयसा नाधमानम् ।
घृणीव च्छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम् ॥

वृषभः कामानां वर्षिता मरुत्वान् मरुद्भिः पुत्रैर्युक्तो रुद्रः नाधमानं याचमान मा मा त्वक्षीयसा दीप्तेन वयसा अन्नेन उत् ममन्द उत्कर्षेण तर्पयतु । अपि चाह घृणीव छाया यथा सूर्यकिरणसतप्तः छायां प्रविशति एव रुद्रस्य सुम्नं सुखं अरपाः अपापः सन् अशीय व्याप्नुयाम् । तदर्थं त रुद्र आ विवासेयं परिचरेयम् । विवासतिः परिचरणकर्मा । ऋसा.

क्व स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः ।
अपभर्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः ॥

हे रुद्र ते तव मृळयाकुः सुखयिता स्यः सः हस्तः क्व कुत्र वर्तते । यः हस्तः भेषजः भैषज्यकृत् जलाषः सर्वेषां सुखकरः अस्ति भवति । स हस्तो विद्यते एव । तेन हस्तेन मा रक्षेति भावः । अपि च हे वृषभ कामानां वर्षितः दैव्यस्य देवकृतस्य रपसः पापस्य अपभर्ता अपहर्ता विनाशयिता भूत्वा कृतापराध मा मा नु क्षिप्र अभि चक्षमीथाः अभिक्षमस्व । ऋसा.

प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि ।
नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥

बभ्रवे विश्वस्य भर्त्रे बभ्रुवर्णाय वा वृषभाय कामाना वर्षित्रे तद्वत्प्रसह्यकारिणे वा श्वितीचे श्वैत्यमञ्चते, एवगुणविशिष्टाय रुद्राय महो मही महतोऽपि महतीं सुष्टुतिं शोभनस्तुतिं प्र ईरयामि प्रकर्षेणोच्चारयामि । हे स्तोतः कल्मलीकिनम् । ज्वलतो नामधेयमेतत् ( नि. २।२८ ) । ज्वलन्तम् । कलयति अपगमयति मलमिति कल्मलीक तेजः । तद्वन्त रुद्रं नमोभिः नमस्कारैः हविर्भिर्वा नमस्य पूजय । वय च रुद्रस्य महादेवस्य त्वेष दीप्त नाम गृणीमसि गृणोमः सकीर्तयामः ।

ऋसा.

स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ।
ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यम् ॥

स्थिरेभिः स्थिरैः दृढैः अङ्गैः अवयवैर्युक्तः पुरुरूपः अष्टमूर्त्यात्मकैर्बहुभिः रूपैरुपेतः उग्रः उद्गूर्णस्तेजस्वी बभ्रुः भर्ता बभ्रुवर्णो वा रुद्रः शुक्रेभिः दीप्तैः हिरण्यैः हिरण्मयैर्हितरमणीयैर्वाऽलङ्कारैः पिपिशे दीप्यते । ईशानात् ईश्वरात् अस्य भुवनस्य भूतजातस्य भूरेः भर्तुः रुद्रात् । असुर्यं 'असु क्षेपणे' असुरः क्षेप्ता । असुर्यं बल न वा उ योषत् नैव पृथक् भवति । ऋसा.

अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् ।

(१) ऋसं. २।३३।५.
(२) ऋसं. २।३३।६.
(३) ऋसं. २।३३।७.

(१) ऋसं. २।३३।८. (२) ऋसं. २।३३।९.
(३) ऋसं. २।३३।१०; मैसं ४।९।४ ( ७१ ) धन्वार्ह ( धन्वा अर्ह ) उत्तरार्धे ( अर्हन्निदं दयसे विश्वमा धन्वा ओजीयो रुद्रस्तदस्ति ); शाब्रा. ८।४, तैब्रा. २।८।६।९; तैआ. ४।५।७ मभ्वं ( मभ्भुवं ).

अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति ॥

हे रुद्र त्व अर्हन् अर्हो योग्य एव सन् सायकानि शरान् धन्व धनुश्च बिभर्षि धारयसि । तथा अर्हन् एव यजत यजनीय पूजनीय विश्वरूप बहुविधरूपयुक्तं निष्क हारं बिभर्षि । तथा अर्हन् एव इद विश्व सर्वं अभ्वम् । महन्नामैतत् । अतिविस्तृत जगत् दयसे रक्षसि । हे रुद्र त्वत् त्वत्तोऽन्यत् किंचित् ओजीयः ओजस्वितरं बलवत्तर न वै अस्ति न खलु विद्यते । अतः त्वमेव उक्तव्यापारेषु योज्य इत्यर्थः । ऋसा.

[1]स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥

हे स्तोतः श्रुत विश्रुतं प्रख्यात रुद्र स्तुहि । कीदृशम् । गर्तसद गर्तो रथः । तत्र सीदन्त युवान नित्यतरुण मृगं न भीमं मृग सिंहमिव भयंकरम् । उपहत्नुं उपहन्तारं शत्रूणां उग्रं उद्गूर्णं हे रुद्र त्व स्तवानः अस्माभिः स्तूयमानः सन् जरित्रे स्तोत्रे मह्य मृळ सुखय । ते त्वदीयाः सेनाः अस्मत् अन्यं अस्मद्व्यतिरिक्तं पुरुष नि वपन्तु निघ्नन्तु । ऋसा.

[2]कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् ।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥

वन्दमानं आयुष्मान्भव सौम्य इति स्तुवन्तं पितर कुमारश्चित् यथा कुमारः । चिदित्येतदुपमार्थे । हे रुद्र उपयन्तं अस्मत्समीपे गच्छन्तं त्वां प्रति ननाम प्रतिनतोऽस्मि । अपि च भूरेः बहुनो धनस्य दातारं सत्पतिं सतां पालयितारम् । हे रुद्र एवंभूत त्वा गृणीषे स्तौमि । स्तुतः च त्वं अस्मे अस्मभ्यं भेषजा भेषजानि रासि देहि । ऋसा.

[1]या वो भेषजा मरुतः शुचीनि या शंतमा वृषणो या मयोभु ।
यानि मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि ॥

हे मरुतः रुद्रपुत्राः वः युष्माकं या यानि भेषजा भेषजान्यस्मदारोग्यहेतुभूतान्यौषधानि शुचीनि शुद्धानि निर्मलानि सन्ति । हे वृषणः कामाना वर्षितारो मरुतः या यानि च युष्मदीयानि भेषजानि शतमा अतिशयेन सुखकराणि । या यानि च भेषजानि मयोभु मयोभूनि मयसः सुखस्य भावयितॄणि नः अस्मत्पिता मनुः यानि भेषजानि युष्मदीयानि अवृणीत वृतवान् ता तानि भेषजानि रुद्रस्य महादेवस्य सबन्धि शं च योश्च यच्छमनीयाना रोगाणामुपशमन यावनीयानां भयाना यद्यावनमस्मत्तः पृथक्करण तदुभय च वश्मि कामये । ऋसा.

[2]परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥

रुद्रस्य महादेवस्य हेतिः आयुध नः अस्मान् परि वृज्याः परिवर्जयतु । तथा त्वेषस्य दीप्तस्य रुद्रस्य मही महती दुर्मतिः दुःखकारिणी बुद्धिश्च परि गात् अस्मान् वर्जयित्वा अन्यत्र गच्छतु । हे मीढ्वः सेचनसमर्थ रुद्र स्थिरा स्थिराणि त्वदीयानि धनूंषि मघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः अव तनुष्व अवततज्यानि कुरु । तथा तोकाय अस्मत्पुत्राय तनयाय तत्पुत्राय च मृळ सुख कुरु । ऋसा.

[3]एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि ।
हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः ॥

हे बभ्रो जगतो भर्तर्बभ्रुवर्ण वा वृषभ कामाना

(१) ऋस. २।३३।११. अन्यस्थलादिनिर्देशः अग्रेऽस्मिन्नेव प्रकरणेऽस्मिन्नेव मन्त्रे द्रष्टव्यः ।
(२) ऋसं. २।३३।१२.

(१) ऋसं. २।३३।१३.
(२) ऋसं. २।३३।१४. अन्यस्थलादिनिर्देशः अग्रेऽस्मिन्नेव प्रकरणेऽस्मिन्नेव मन्त्रे द्रष्टव्यः ।
(३) ऋसं. २।३३।१५, तैब्रा. २।८।६।९ हवनश्रुन्नो (हावनश्रूर्नो).

वर्धितः चेकितान सर्वं जानन् हे देव द्योतमान रुद्र यथा येन प्रकारेण न हृणीषे न क्रुध्यसि न च हसि। एव हवनश्रुत् अस्मदीयमाह्वानं शृण्वन् नः अस्मान् हे रुद्र इह अस्मिन् देशे बोधि बुध्यस्व। विदथे यज्ञे गृहे वा सुवीराः शोभनपुत्राः सन्तः बृहत् प्रौढं त्वदीयं स्तोत्रं वदेम उच्चारयाम। ऋसा.

अग्निरूप, अग्निजलौषध्यादिषु स्थितः, विश्वकर्ता

**यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश।**
**य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये॥**

यो रुद्रः रोदयति शत्रून् इति रुद्रः। एतन्नामा देवः अग्नौ अन्तः मध्य आविवेश यष्टव्यत्वेन अग्निमध्य प्रविष्टः। यश्च अप्सु अन्तः आविवेश वरुणात्मना प्रविष्टः। यश्च वीरुधः विशेषेण विविध वा रोहन्तीः ओषधीः, ओषः फलपाको धार्यते निधीयते आस्विति ताः, फलपाकान्ता लताः आविवेश सोमात्मना आविष्टः। किं बहुना यो रुद्रः इमा इमानि नामरूपात्मना परिदृश्यमानानि विश्वा विश्वानि सर्वाणि भुवनानि भवन्ति भूतानि, स्रष्टु इति शेषः। चाक्लृपे समर्थो भवति। तस्मै सर्वजगत्स्रष्ट्रे सर्वं जगदनुप्रविष्टाय रुद्राय रुद्रात्मने अग्नये नमः नमस्कारोऽस्तु। यद्वा अग्नये अङ्गनादिगुणविशिष्टाय रुद्राय नमोऽस्तु। असा.

भवात्मकः, शर्वात्मकः, भूतपतिः, पशुपतिः, सर्वव्यापकः, सर्वत्र सर्वदा सर्वाङ्गेषु नमस्यः आस्तिक्यबुद्ध्या रक्षणार्थम्

**भवाशर्वौ मृडतं माभि यातं भूतपती पशुपती नमो वाम्।**
**प्रतिहितामायतां मा वि स्राष्टं मा नो हिंसिष्टं द्विपदो मा चतुष्पदः॥**

एतदादिसूक्तत्रयेण भौमान्तरिक्षाद्युत्पातदोषनिवृत्तये अष्टमूर्तिर्महादेवः प्रार्थ्यते। ताश्च पारमेश्वर्यो मूर्तयः आगमिकैरेवमनुक्रान्ताः। 'शर्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम्। महादेवं च भीमं च' इति। तासामुत्पत्तिः शतपथब्राह्मणे षष्ठकाण्डे 'असद्वा इदमग्र आसीत्' (शब्रा. ६।१।१।१) इत्यादिना प्रपञ्चिता। तत्र सृष्ट्यादौ भवति यस्मात् सर्वं जगत् इति भवः। शृणाति सर्वं जगत् हिनस्ति संहृतिसमये इति शर्वः। स्थितिकालवर्तिनीनामन्यासां मूर्तीनामुपसंग्रहाय सृष्टिसंहृतिकारिण्यौ आद्यन्तवर्तिन्यौ परमेश्वरस्य मूर्ती निर्दिश्येते। भवश्च शर्वश्च भवाशर्वौ, हे भवाशर्वौ एतत्संज्ञौ देवौ मृळत अस्मान् सुखयतम्। तथा मा मा अभि यातं रक्षणार्थं आभिमुख्येन गच्छतम्। यद्वा हिंसार्थं अभिगमनं मा कार्ष्टम्। हे भूतपती भूताना प्राणिनां स्वामिनौ, हे पशुपती पशूना गोमहिषादीना पालयितारौ, वा युवाभ्या नमः, करोमीति शेषः। अस्मदीयेन नमस्कारेण सतुष्टौ युवा प्रतिहिता आत्मीये धनुषि प्रतिसंहिता आयता ज्यया सह आकृष्टां आत्मीया इषु मा वि स्राष्ट अस्मदाभिमुख्येन मा विसृजतम्। 'यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे' (तैस. ४।५।१।२) इति हि निगमः। तथा नः अस्माकं द्विपदः पादद्वयोपेतान् पुत्रभृत्यादिरूपान् मनुष्यान् मा हिंसिष्ट ज्वरादिरोगेण पीडितान् मा कार्ष्ट इत्यर्थः। तथा चतुष्पदः पादचतुष्टयोपेतान् गोमहिषाश्वादीन् अस्मदीयान् मा हिंसिष्टम्। असा.

**शुने क्रोष्ट्रे मा शरीराणि कर्तमलिक्लवेभ्यो गृध्रेभ्यो ये च कृष्णा अविष्यवः।**
**मक्षिकास्ते पशुपते वयांसि ते विघसे मा विदन्त॥**

हे भवाशर्वौ शरीराणि अस्मत्संबन्धीनि शुने सारमेयाय। क्रोष्ट्रे सृगालाय। श्वसृगालभक्षणार्थं कर्तु मा प्रभवत इत्यर्थः। तथा अविक्लवेभ्यः विक्लवाः अधृष्टाः कातरास्तद्विपरीतेभ्यः। गृध्रेभ्यः मांसमुखेभ्यः पक्षिभ्यः। ये च कृष्णाः कृष्णवर्णा वायसाः अविष्यवः आमिष इच्छन्तः अन्तरिक्षे सचरन्ति तेभ्यश्च। गृध्रकाकादिपक्षिणां भक्षणार्थमपि अस्मच्छरीराणि मा कुरुतमित्यर्थः। हे पशुपते पशूनामधिपते रुद्र ते त्वदीयाः मक्षिकाः तथा ते त्वदीयानि वयांसि पक्षिणश्च विघसे विशेषेण अद्यते इति विघसः अन्नं, तस्मिन् विघसे

(१) असं. ७।९२ (८७)।१.
(२) असं. ११।२।१-३१; कब्रा. ११४,११५.

अन्ने निमित्तभूते सति मा विदन्त अस्मच्छरीराणि न लभन्ता मा भक्षयन्तु इत्यर्थः । असा.

**क्रन्दाय ते प्राणाय याश्च ते भव रोपयः ।**
**नमस्ते रुद्र कृण्मः सहस्राक्षायामर्त्य ॥**

हे भव ते तव क्रन्दाय क्रन्दनाय शब्दाय प्राणाय प्राणवायवे नमस्कुर्मः । यद्वा । क्रन्दयति रोदयति सर्वं अन्तकाले इति क्रन्दः । तथा प्राणाय प्राणयित्रे प्राणनव्यापारेण चेष्टयित्रे जगत्प्राणभूताय वा ते तुभ्य नमस्कुर्मः । तथा हे भव ते तव याश्च रोपयः रोपयित्र्यो मोहयित्र्यस्तन्वः सन्ति ताभ्यश्च नमस्कुर्म इत्यर्थः । हे रुद्र रोदयति सर्वं अन्तकाले इति रुद्रः । यद्वा । रुद् दुःख दुःखहेतुर्वा तस्य द्रावको देवो रुद्रः परमेश्वरः । हे देव सहस्राक्षाय सहस्रं अक्षीणि दर्शनशक्तयो यस्य स तथोक्त॰ । सर्वजगत्साक्षिणे निरावरणज्ञानरूपायेत्यर्थः । अमर्त्यः, अमर्त्याय अमरणधर्मणे सांसारिकदुःखासस्पृष्टाय इत्यर्थः । एवभूताय ते तुभ्य नमः नमस्कार कृण्मः कुर्मः । असा.

**पुरस्तात् ते नमः कृण्म उत्तरादधरादुत ।**
**अभीवर्गाद् दिवस्पर्यन्तरिक्षाय ते नमः ॥**

हे रुद्र ते तुभ्य पुरस्तात् पूर्वस्या दिशि नमः कृण्मः नमस्कारं कुर्मः । तथा उत्तरात् उत्तरस्या दिशि । अधरात् अधरशब्दो दक्षिणदिग्वचनः । 'पश्चात्पुरस्तादधरादुदक्तात्' (ऋस. १०।८७।२१) इत्यादिनिगमेषु तथा दर्शनात् । अधरस्या दक्षिणस्या दिशि । उतशब्दः अप्यर्थे । दक्षिणोत्तरदिशोरवस्थिताय ते तुभ्य नमः । कृण्म इत्यनुषङ्गः । अभीवर्गात् अभितो वृज्यते गृहादिरूपेण परिच्छिद्यते इति अभीवर्गः अवकाशात्मक आकाशः । तादृशात् दिवः द्योतमानादाकाशात् परि उपरिभागे । आकाशमण्डलस्य मध्ये अन्तरिक्षाय अन्तरा क्षान्ताय नियन्तृत्वेन अवस्थिताय ते तुभ्य नमस्कुर्मः । असा.

**मुखाय ते पशुपते यानि चक्षूंषि ते भव ।**
**त्वचे रूपाय संदृशे प्रतीचीनाय ते नमः ॥**

हे पशुपते पशूनां पालयितर्देव ते त्वदीयाय मुखाय आस्याय नमोऽस्तु । हे भव एतत्संज्ञक देव ते तव यानि चक्षूंषि दर्शनसाधनानि इन्द्रियाणि सन्ति तेभ्यो नमोऽस्तु । तथा त्वचे त्वच्छरीरसम्बन्धिने चर्मणे रूपाय नीलपीतादिवर्णाय संदृशे सम्यग्दर्शनाय । यद्वा । सम्यक् अर्थान्पश्यतीति सदृक् संद्रष्टा तद्रूपाय । प्रतीचीनाय प्रत्यगात्मरूपिणे ते तुभ्य नमोऽस्तु । असा.

**अङ्गेभ्यस्त उदराय जिह्वाया आस्याय ते ।**
**दद्भ्यो गन्धाय ते नमः ॥**

हे पशुपते ते तव सम्बन्धिभ्यः अङ्गेभ्यः हस्तपादादिभ्यो नमोऽस्तु । सामान्योक्तमेव प्राधान्यख्यापनाय विशेषतो निर्दिशति । ते तव लीलाविग्रहधारिणः सम्बन्धिने उदराय जिह्वायै रसनायै (आस्याय) आस्याख्यकुहराय दद्भ्यः दन्तेभ्यः गन्धाय गन्धग्राहकेन्द्रियाय घ्राणाय ते त्वत्सम्बन्धिने नमः । असा.

**अस्त्रा नीलशिखण्डेन सहस्राक्षेण वाजिना ।**
**रुद्रेणार्धकघातिना तेन मा समरामहि ॥**

अस्त्रा क्षेप्त्रा नीलशिखण्डेन नीलवर्णकेशसनिवेशविशेषयुक्तेन सहस्राक्षेण सहस्रसंख्याकचक्षुरिन्द्रिययुक्तेन वाजिना वेगवता अर्धकघातिना सेनाया अर्धं हन्तु शील अस्य । एवगुणविशिष्टेन तेन प्रसिद्धेन रुद्रेण मा सं अरामहि मा संगच्छामहै । आर्ता मा भूमेत्यर्थः । असा.

**स नो भवः परि वृणक्तु विश्वत आप इवाग्निः**
**परि वृणक्तु नो भवः ।**
**मा नोऽभि मांस्त नमो अस्त्वस्मै ॥**

सः उदीरितप्रभावः भवः नः अस्मान् विश्वतः विश्वस्मात् सर्वस्मादुपद्रवजातात् परि वृणक्तु परितो वर्जयतु । अयमेवार्थो दृष्टान्तेन दृढीक्रियते—आप इवाग्निरिति । यथा दहन्नग्निः आपः अपः उदकानि परिवर्जयति परित्यजति एव नः अस्मान् भवः परि वृणक्तु परित्यजतु । नः अस्मान् ( माभि मस्त ) मा अभिमन्यताम् । मा बाधतामित्यर्थः । अस्मै भवाय नमोऽस्तु नमस्कारो भवतु । असा.

**चतुर्नमो अष्टकृत्वो भवाय दश कृत्वः पशुपते**
**नमस्ते ।**
**तवेमे पञ्च पशवो विभक्ता गावो अश्वाः पुरुषा**
**अजावयः ॥**

अष्टकृत्वो भवायेति विशेषणात् चतुर्नम इत्यत्र शर्वायेति अर्थात्संबध्यते । चतुः चतुर्वारं शर्वाय

नमोऽस्तु । तथा भवाय देवाय अष्टकृत्वः अष्टवारं नमोऽस्तु । हे पशुपते ते तुभ्यं दशकृत्वः दशवारं नमोऽस्तु । कस्मादेवं प्रार्थ्यसे इति, उच्यते । इमे वक्ष्यमाणा विभक्ताः जातितो भिन्नाः हे पशुपते तव स्वभूताः गावः गोत्वजातीयाः सास्नादिमद्व्यक्तयः, अश्वाः अश्वजात्याक्रान्ता एकखुराः पशवः, पुरुषाः मनुष्यजातीयाः, अजाश्च अवयश्च अजावयः । अजत्वावित्वे द्वे जाती विभिन्नव्यक्तिके प्रसिद्धे । यस्मात् इमे पञ्चधा भिन्नाः पशवस्तव स्वभूताः तस्मात् तान् रक्षेति प्रार्थ्यसे (प्रार्थ्यते) इत्यर्थः । असा.

**तव चतस्रः प्रदिशस्तव द्यौस्तव पृथिवी तवेदमुग्रोर्वन्तरिक्षम् ।**
**तवेदं सर्वमात्मन्वद्यत् प्राणत् पृथिवीमनु ॥**

हे उग्र उद्गूर्णबल रुद्र चतस्रः चतुःसंख्याकाः प्रदिशः प्रधानभूताः प्राच्याद्या महादिशस्तव स्वभूताः । तथा द्यौः स्वर्गलोकोऽपि तव वशे वर्तते । पृथिवी भूलोकश्च तव स्वभूता । इदं परिदृश्यमानं उरु विस्तीर्णं अन्तरिक्षं च तवाधीनम् । इत्थं दिग्वलय लोकत्रयं च व्याप्यावस्थितस्य तवेदं परिदृश्यमानं सर्वं आत्मन्वत् आत्मना भोक्तृरूपेण अधिष्ठितं शरीरजातं स्वभूतम् । तथा पृथिवीं अनु पृथिवीं लक्षीकृत्य, पृथिव्यामित्यर्थः । यत् प्राणत् प्राणनव्यापारं कुर्वद्वर्तते तत् सर्वं तव प्रशासनं वर्तते इत्यर्थः । तस्मात्सर्वेषामनुग्रहाय त्वमेव नमस्कार्यो भवसीति भावः । असा.

**उरुः कोशो वसुधानस्तवायं यस्मिन्निमा विश्वा भुवनान्यन्तः ।**
**स नो मृड पशुपते नमस्ते परः क्रोष्टारो अभिभाः श्वानः परो यन्त्वघरुदो विकेश्यः ॥**

हे पशुपते पशूनां पालयितर्महादेव उरुः विस्तीर्णो वसुधानः वसूनि वासहेतुभूतानि पुण्यपापरूपाणि कर्माणि धीयन्ते अस्मिन्निति वसुधानः । एवंभूतः कोशः अण्डकटाहात्मकः तवायं, तव स्वभूतोऽयमित्यर्थः । कोशं विशिनष्टि । यस्मिन् अण्डकटाहात्मके महति कोशे अन्तः मध्ये इमा इमानि परिदृश्यमानानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि वर्तन्ते । स कोशस्तव स्वभूत इति संबन्धः । स तथाविधस्त्वं नः अस्मान् मृड सुखय । ते तुभ्यं नमोऽस्तु । त्वत्प्रसादात् अभिभाः अभिभवितारः क्रोष्टारः क्रोशनशीलाः सृगालाः मांसभक्षकाः श्वानश्च परः परस्तात् अस्मत्तो दूरदेशे यन्तु गच्छन्तु । तथा अघरुदः अघं अमङ्गलं यथा भवति तथा रुदत्यः रोदनं कुर्वत्यः विकेश्यः विकीर्णकेशाः पिशाच्यश्च परो यन्तु परस्तात् दूरं गच्छन्तु । असा.

**धनुर्बिभर्षि हरितं हिरण्ययं सहस्रघ्नि शतवधं शिखण्डिन् ।**
**रुद्रस्येषुश्चरति देवहेतिस्तस्यै नमो यतमस्यां दिशीतः ॥**

हे रुद्र त्वं सहृतिसमये विश्वसंहरणार्थं धनुर्बिभर्षि धारयसि । कीदृशं तत् धनुरिति विशिनष्टि । हरितं हरिद्वर्णं हिरण्ययं हिरण्यविकारं स्वर्णमयमित्यर्थः । सहस्रघ्नं सहस्रसंख्याकान् एकयत्नेन हन्ति हिनस्तीति सहस्रघ्न्यम् । यद्वा सहस्रं हन्यन्ते आताड्यन्ते अनेनेति सहस्रघ्न्यम् । शतवधं शतसंख्याकस्य प्राणिजातस्य मारकम् । यद्वा शतं सहस्रं इति अपरिमितनाम । अपरिमितस्य विश्वस्य संहारकमित्यर्थः । (शिखण्डिन) मयूरपिच्छादिनिर्मिताः शिखण्डास्तद्युक्तम् । तस्मै त्वदीयाय धनुषे नमोऽस्तु । इदानीं इषु नमस्करोति । रुद्रस्य रोदयितुर्देवस्य इषुः बाणः चरति सर्वत्र अप्रतिहतगतिर्वर्तते । देवहेतिः देवस्य सम्बन्धिनी हननसाधनभूता शक्तिरेव सेत्यर्थः । तस्यै इष्वै नमोऽस्तु नमस्कारो भवतु । इतः अस्मात् अस्मदीयात्स्थानात् यतमस्यां यस्यां दिशि वर्तते तस्यां दिशि अवस्थितायै तस्यै नमोऽस्त्विति संबन्धः ।

असा.

**योऽभियातो निलयते त्वां रुद्र निचिकीर्षति ।**
**पश्चादनु प्रयुङ्क्षे तं विद्धस्य पदनीरिव ॥**

हे रुद्र यः पुरुषस्त्वया अभियातः अभिगतो निलयते पुरतः स्थातुमशक्तः पलायते । यद्वा तत्रैव निलीनो भवति (न च केवलं निलीनो भवति) प्रत्युत त्वा निचिकीर्षति निकर्तुं हिंसितुमिच्छति । हे देव तं अपकृतवन्तं जनं पश्चात् अनन्तरमेव त्वं अनुप्रयुङ्क्षे तत्कृतस्यापकारस्य अनुप्रयोगं करोषि । यथापराधं दण्डयसीत्यर्थः । तत्र दृष्टान्तः । विद्धस्य शस्त्रहतस्य पुरुषस्य पदनीरिव तदीयानि पदानि भूमौ निक्षिप्तानि नयन्

यत्र शत्रुर्निवसति तावत्पर्यन्तं गमयन् पुरुषः निलीन शत्रुं उपलभ्य प्रतिविध्यति तद्वदित्यर्थः । असा.

**भवारुद्रौ सयुजा संविदानावुभावुग्रौ चरतो वीर्याय ।**

**ताभ्यां नमो यतमस्यां दिशीतः ॥**

भवश्च रुद्रश्च भवारुद्रौ । सयुजा सयुजौ समान युञ्जानौ मित्रभूतौ सविदानौ समान जानानौ, ऐकमत्य गतावित्यर्थः । तौ उभौ उग्रौ उद्गूर्णबलौ परैरप्रधृष्यौ सन्तौ वीर्याय वीर्य वीरकर्म चरतः अनुतिष्ठतः । यद्वा उग्रौ दुष्प्रधर्षौ चरतः सर्वत्र वर्तेते । किमर्थम् । वीर्याय स्ववीर्यप्रकटनार्थम् । ताभ्यां भवारुद्राभ्या नमोऽस्तु । दूरस्थयोरेव तयोर्नमस्कारः कर्तव्यः न सनिधानमपेक्षणीयं तस्यार्तिकरत्वात् इत्यभिप्रेत्याह—यतमस्यामिति । इतः अस्मात् अस्मदावासस्थानात् यतमस्या दिशि यस्या कस्याचित् दिशि तौ वर्तेते तत्रस्थयोरेव तयोर्नमस्कारः । नमस्कारार्थमपि सनिहितौ मा भूतामित्यर्थः । असा.

**नमस्तेऽस्त्वायते नमो अस्तु परायते ।**

**नमस्ते रुद्र तिष्ठत आसीनायोत ते नमः ॥**

हे रुद्र आयते अस्मदाभिमुख्येन गच्छते ते तुभ्य नमोऽस्तु । तथा परायते पराङ्मुख गच्छते तुभ्य नमोऽस्तु । आगमन परागमनं च विहाय यत्र क्वापि तिष्ठते (ते) तुभ्य नमोऽस्तु । उत अपि च आसीनाय स्वस्थाने उपविष्टाय ते तुभ्य नमः । असा.

**नमः सायं नमः प्रातर्नमो राज्या नमो दिवा ।**

**भवाय च शर्वाय चोभाभ्यामकरं नमः ॥**

हे रुद्र साय सायंकाले तुभ्य नमोऽस्तु । (प्रातः) प्रातःकाले प्रभातसमये च तुभ्यं नमोऽस्तु । तथा राज्या रात्रिसमये तुभ्य नमोऽस्तु । दिवा दिवससमयेऽपि तुभ्यं नमोऽस्तु । एतेन नमस्कारस्य सार्वकालिकत्वमुक्तम् । 'भवाशर्वौ मृडतम्' इति यौ देवौ प्राक् सह निर्दिष्टौ तत्र भवाय च नमः शर्वाय च नमः । उभाभ्या परस्परानुरागेण संयुक्ताभ्यां च नमः अकर अह नमस्कारोमि । असा.

**सहस्राक्षमतिपश्यं पुरस्ताद्रुद्रमस्यन्तं बहुधा विपश्चितम् ।**

**मोपाराम जिह्वयेयमानम् ॥**

सहस्राक्ष सहस्रसख्याकैः अक्षिभिर्युक्त पुरस्तात् पुरोभागे अतिपश्यं अतिशयेनातिक्रम्य वा पश्यतीति अतिपश्यः । यद्वा पुरस्तात् इति उत्तरत्र सबध्यते । पुरस्तात् पूर्वस्या दिशि बहुधा बहुप्रकार अस्यन्त शरजाल क्षिपन्त विपश्चितं मेधाविन सूक्ष्मदर्शिन जिह्वया ईयमान जिह्वाग्रेण कृत्स्न जगत् व्याप्नुवन्तं भक्षणार्थ लिहन्तमित्यर्थः । एवभूत रुद्र मा उपाराम मा उपगच्छाम । असा.

**श्यावाश्वं कृष्णमसितं मृणन्तं भीमं रथं केशिनः पादयन्तम् ।**

**पूर्वे प्रतीमो नमो अस्त्वस्मै ॥**

श्यावाश्व श्यावाः कपिशवर्णा अश्वा यस्य स तथोक्तः त कृष्ण कृष्णवर्ण असित सितेतरपरिच्छद मृणन्त हिंसन्तम् । भीम बिभेति अस्मादिति भीमो भयकरः । एतत्सज्ञक रुद्रं केशिनः केशी नाम असुरः । तस्य रथ पादयन्त भङ्क्त्वा भूमौ क्षिपन्त एवभूत देवं पूर्वे अन्येभ्यः स्तोतृभ्यः प्रथमभाविनः सन्तो वय प्रतीमः जानीमः । रक्षकत्वेन अवगच्छाम इत्यर्थः । अस्मै रुद्राय नमोऽस्तु । असा.

**मा नोऽभि स्रा मत्यं देवहेतिं मा नः क्रुधः पशुपते नमस्ते ।**

**अन्यत्रास्मद्दिव्यां शाखां वि धूनु ॥**

हे रुद्र देवहेतिं देवसबन्धि आयुध वज्रात्मकं आत्मीयां इषु वा नः अस्माक मत्यं मरणधर्माण जनं अभिलक्ष्य मा स्राः मा विसृज । हे पशुपते नः अस्मभ्य मा क्रुधः क्रुद्धो मा भूः । ते तुभ्यं नमोऽस्तु । देवहेतिविसर्जनस्यावकाशमाह—अन्यत्रेति । अस्मत् अस्मत्तः अन्यत्र देशे दिव्यां दिवि भवा शाखा शाखावत् प्रसृता देवहेतिं वि धूनु विसृज । असा.

**मा नो हिंसीरधि नो ब्रूहि परि णो वृङ्ग्धि मा क्रुधः ।**

**मा त्वया समरामहि ॥**

हे रुद्र नः अस्मान् मा हिंसीः अस्मद्विषये हिंसा मा कृथाः । नः अस्मान् अधि ब्रूहि आधिक्येन कथय । अनुग्राह्यत्वेन पक्षपातवचनमधिवचनम् । नः अस्मान्

परि वृङ्ग्धि तवायुधविषयात्परिहर। अस्मान् परिहृत्यान्यत्र त्वद्धेतिः प्रवर्ततामित्यर्थः। मा क्रुधः अस्मद्विषये क्रुद्धो मा भूः। एवभूतेन त्वया वय मा समरामहि सगच्छामहे। उक्तार्थमेतत्। असा.

**मा नो गोषु पुरुषेषु मा गृधो नो अजाविषु।**
**अन्यत्रोग्र वि वर्तय पियारूणां प्रजां जहि॥**

हे रुद्र नः अस्माक सबन्धिषु गोषु पुरुषेषु पुत्रभृत्यादिषु च मा गृधः हिंसितु अभिकाङ्क्षा मा कृथाः। तथा नः अस्माक अजाविषु अजेषु अविषु च मा गृधः। हे उग्र उद्गूर्णबल तव हेति अन्यत्र अस्मत्तः अन्यस्मिन्स्थाने पियारूणा प्रजाया वि वर्तय गमय क्षिप। तथा कृत्वा च पियारूणा देवहिंसकाना प्रजा जहि। असा.

**यस्य तक्मा कासिका हेतिरेकमश्वस्येव वृषणः क्रन्द एति।**
**अभिपूर्वं निर्णयते नमो अस्त्वस्मै॥**

तक्मा (कृच्छ्रेण) जीवनप्रापिका। कासिका कुत्सितशब्दकारिणी आर्तस्वरकरी ज्वरादिपीडा (यस्य) रुद्रस्य हेतिः हननसाधनं आयुधमेकमपकारिण पुरुष वृषणः सेचनसमर्थस्य अश्वस्य क्रन्दः हेषाशब्द इव एति प्राप्नोति। सा हेतिस्तत्र अभिपूर्वं पूर्वपूर्व अभिलक्ष्य तत्र योग्यः प्रथमभावी तत निर्णयते निःशेषेण गमयति नाश प्रापयति। अस्मै ज्वराद्युपद्रवकारिणे रुद्राय नमोऽस्तु। असा.

**योऽन्तरिक्षे तिष्ठति विष्टभितोऽयज्वनः प्रमृणन् देवपीयून्।**
**तस्मै नमो दशभिः शक्वरीभिः॥**

यो रुद्र. अन्तरिक्षे आकाशे निराधारप्रदेशे विष्टभितः विशेषेण स्तभितः निरुद्धगतिस्तिष्ठति। किं कुर्वन्। अयज्वन दर्शपूर्णमासादियागेन इष्टवन्तो जना यज्वानः, तद्विपरीता अयज्वानः, तान्देवपीयून् देवाना हिंसकान् जनान् प्रमृणन् प्रकर्षेण हिंसन्। तस्मै रुद्राय दशभिः शक्वरीभिः। शक्वर्य इति अङ्गुलिनाम। कर्मसु शक्ताभिरङ्गुलिभिर्नमोऽस्तु। अञ्जलिबन्धनेन प्रणामं कुर्म इत्यर्थः। असा.

**तुभ्यमारण्याः पशवो मृगा वने हिता हंसाः सुपर्णाः शकुना वयांसि।**
**तव यक्षं पशुपते अप्स्वन्तस्तुभ्यं क्षरन्ति दिव्या आपो वृधे॥**

हे पशुपते पशूना पालयितर्महादेव तुभ्यं त्वदर्थ आरण्याः अरण्ये भवाः पशवः। तानेव यथेच्छ स्वीकुरु। ग्राम्यान्पशून् मा बाधिष्ठा इत्यर्थः। आरण्यानेव पशून्निर्दिशति। वने अरण्ये हिताः विधात्रा स्थापिताः मृगाः हरिणशार्दूलसिंहाद्याः। (हसाः) एतत्संज्ञाः पक्षिणः। सुपर्णाः शोभनपतनाः श्येनाः। शकुनाः अन्ये च शकुनयो वनचराः पक्षिणः। एवमात्मकानि वयासि पक्षिजातानि हे रुद्र त्वदर्थं भागत्वेन कल्पितानि। तव त्वदीय यक्ष पूज्य स्वरूप अप्सु अन्तः उदकेषु मध्ये वर्तते अतः तुभ्य त्वदर्थं मृधे उन्दनाय अभिषेकाय दिव्याः दिवि भवा आपः क्षरन्ति प्रवहन्ति। अस्मदुपभोग्य उदकमपि मा स्पृश इत्यर्थः। असा.

**शिंशुमारा अजगराः पुरीकया जपा मत्स्या रजसा येभ्यो अस्यसि।**
**न ते दूरं न परिष्ठास्ति ते भव सद्यः सर्वान् परि पश्यसि भूमिं पूर्वस्माद्धंस्युत्तरस्मिन् समुद्रे॥**

आरण्यपशुवज्जलचरप्राणिनामपि रुद्रभागत्वमुच्यते। शिंशुमाराः नक्रविशेषाः। अजगराः सर्पविशेषाः। पुलीकयाद्याः जलचराः प्राणिविशेषाः। हे रुद्र त्वदर्थं एते सर्वे जलचराः प्राणिन इत्यर्थः। रजसा आत्मीयेन तेजसा येभ्यः जलचरप्राणिभ्यः अस्यसि आयुध क्षिपसि। हे भव ते तव सर्वगतस्य दूर विप्रकृष्ट नैवास्ति। (ते) परिष्ठा परिहृत्य स्थिता प्रजाऽपि न विद्यते। यतस्त्वं सर्वा कृत्स्नां भूमिं सद्यः क्षणादेव परि पश्यसि परितः अवलोकयसि। तथा पूर्वस्मात् पुरोवर्तिनः समुद्रात् उत्तरस्मिन् उत्तरदिग्वर्तिनि समुद्रे जलधौ हंसि क्षणादेव गच्छसि। अतः सर्वगतस्य तव विप्रकृष्टं नैवास्ति। तथा च शिंशुमारादयस्तव नित्यसंनिहिता इत्यर्थः। असा.

**मा नो रुद्र तक्मना मा विषेण मा नः सं स्रा दिव्येनाग्निना।**
**अन्यत्रास्मद्विद्युतं पातयैताम्॥**

हे रुद्र तक्मना कृच्छ्रजीवनकारिणा ज्वरादिरोगेण

त्वदीयेनायुधेन नः अस्मान् मा स स्राः मा ससृज । तथा विषेण स्थावरजङ्गमोद्भवेन प्राणापहारिणा मा ससृज । तथा दिव्येन दिवि भवेनाग्निना वैद्युतरूपेण तेजसा नः अस्मान् मा ससृज । अस्मत्तः अन्यत्र आरण्यपश्वादिषु एतां विद्युत त्वदायुधभूतां विद्योतमानामशनिं पातय प्रक्षिप । असा.

**भवो दिवो भव ईशे पृथिव्या भव आ पप्र उर्वन्तरिक्षम् ।**
**तस्मै नमो यतमस्यां दिशीतः ॥**

भवः एतत्सज्ञो देवो दिवः द्युलोकस्य ईशे ईष्टे । द्युलोक ईशितव्यत्वेन अधितिष्ठतीत्यर्थः । तथा स एव भवः पृथिव्याः भूलोकस्यापि ईशे ईष्टे । तथा उरु विस्तीर्ण अन्तरिक्ष द्यावापृथिव्योर्मध्ये वर्तमानं लोक स एव भवः आ पप्रे स्वतेजसा आपूरयति । तस्मै त्रैलोक्यव्यापिने । अन्यदुक्तार्थम् । असा.

**भव राजन् यजमानाय मृड पशूनां हि पशुपतिर्बभूथ ।**
**यः श्रद्दधाति सन्ति देवा इति चतुष्पदे द्विपदेऽस्य मृड ॥**

हे राजन् सर्वस्याधिपते हे भव यजमानाय त्वदर्थं याग कुर्वते जनाय मृळ सुखय । त्व खलु पशूनां पशुपतिः बभूथ 'तवेमे पञ्च पशवो विभक्ताः' (अस. ११।२।९) इति प्रागुदीरिताना गवाश्वादीना पशूनां पतिः पालयिता भवसि । पशूनां पशुपतिरिति वृत्त्यवृत्तिभ्यां बहुत्वं स्वामित्व च प्रतिपाद्यते । हि यस्मात् एवं तस्माद्यजमानाय मृडेति संबन्धः । य आस्तिकः पुरुषो देवा इन्द्रादयो रक्षकाः सन्तीति श्रद्दधाति आद्रियते विश्वसितीत्यर्थः । अस्य श्रद्दधानस्य पुरुषस्य सबन्धिने चतुष्पदे गवाश्वादये द्विपदे पुत्रभृत्यादिरूपाय च मृळ सुखय । असा.

**मा नो महान्तमुत मा नो अर्भकं मा नो वहन्तमुत मा नो वक्ष्यतः ।**
**मा नो हिंसीः पितरं मातरं च स्वां तन्वं रुद्र मा रीरिषो नः ॥**

हे रुद्र नः अस्माक संबन्धिन महान्तं प्रवयसं वृद्ध मा हिंसीः । उत अपि च नः अस्माकं अर्भकं शिशुं मा हिंसीः । नः अस्माक सबन्धिनं वहन्तं भारवहनक्षमं मध्यमवयस्कं पुरुषं मा हिंसीः । उत अपि च वक्ष्यतः कृतवहनव्यापारान् पुरुषान् नः अस्मदीयान्मा हिंसीः । तथा नः अस्मदीयं पितरं मातर च मा हिंसीः । तथा नः अस्माक स्वा स्वकीया तन्व शरीरं मा रीरिषः मा हिंसीः । असा.

**रुद्रस्यैलबकारेभ्योऽसंसूक्तगिलेभ्यः ।**
**इदं महास्येभ्यः श्वभ्यो अकरं नमः ॥**

अतः पर महादेवस्य परिवारा नमस्कारेण प्रार्थ्यन्ते । रुद्रस्य महादेवस्य सबन्धिभ्यः एलबकारेभ्यः । एलबानि प्रेरणयुक्तानि कर्माणि कुर्वन्तीति एलबकाराः कर्मकराः प्रमथगणाः । तेभ्योऽहं नमस्करोमि । तथा असंसूक्तगिलेभ्यः । सम्यक् सूक्त शोभन भाषित संसूक्तम् । तद्विपरीत असंसूक्त असमीचीन अशोभनवचन गृणन्ति भाषन्ते इति असंसूक्तगिलाः । यद्वा । तादृक् भाषण यथा भवति तथा गिरन्ति भक्षयन्तीति असंसूक्तगिलाः । एवभूतेभ्यो रुद्रगणेभ्यो नमस्करोमि । महास्येभ्यः महत् प्रभूतं आस्यं मुखविवरमेषा अस्तीति महास्याः । मृगयाविहारार्थं किरातवेषधारिणो देवस्य संबन्धिभ्यः ( श्वभ्यः ) सारमेयेभ्यः इद नमः अकर करोमि । असा.

**नमस्ते घोषिणीभ्यो नमस्ते केशिनीभ्यः ।**
**नमो नमस्कृताभ्यो नमः संभुञ्जतीभ्यः ।**
**नमस्ते देव सेनाभ्यः स्वस्ति नो अभयं च नः ॥**

हे रुद्र ते त्वदीयाभ्यो घोषिणीभ्यः प्रभूतघोषयुक्ताभ्यः सेनाभ्यः नमोऽस्तु । तथा ते त्वदीयाभ्यः केशिनीभ्यः विपरीताकृतिकेशयुक्ताभ्यः विकीर्णकेशयुक्ताभ्यो वा सेनाभ्यो नमोऽस्तु । याश्च त्वदीयाः सेनाः नमस्कृताः चण्डेश्वरप्रभृतयः ताभ्यश्च नमोऽस्तु । संभुञ्जतीभ्यः सहभोजनं कुर्वतीभ्यः सेनाभ्यो नमोऽस्तु । हे देव रुद्र ते त्वदीयाभ्यः उक्तव्यतिरिक्ताभ्यः सेनाभ्यो नमोऽस्तु । हे देव त्वत्प्रसादात् नः अस्मभ्यं स्वस्ति क्षेमं अभयं चन भयराहित्यमपि भवतु । असा.

यच्छन्य, देवासुरर्षिपूर्वजः, महादेव', शिवः

**आ त्वा वहन्तु हरयः सुचेतसः श्वेतैरश्वैरिह केतुमद्भिः ।**

(१) मैसं. २।९।१ (१,२), कथा. ११९.

वातजवैर्बलवद्भिर्मनोजवैरस्मिन् यज्ञे मम हव्याय शर्व ॥

देवानां च ऋषीणां चासुराणां च पूर्वजम् ।
महादेवꣳ सहस्राक्षꣳ शिवमावाहयाम्यहम् ॥

रुद्रगौरीस्कन्ददन्तिब्रह्मविष्णुभानुचन्द्रवह्निध्यानसृष्टिरूपा देवा ध्येयाः

[1] तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥
[2] तद्गाङ्गौच्याय विद्महे गिरिसुताय धीमहि ।
तन्नो गौरी प्रचोदयात् ॥
तत्कुमाराय विद्महे कार्तिकेयाय धीमहि ।
तन्नः स्कन्दः प्रचोदयात् ॥
तत्कराटाय विद्महे हस्तिमुखाय धीमहि ।
तन्नो दन्ती प्रचोदयात् ॥
तच्चतुर्मुखाय विद्महे पद्मासनाय धीमहि ।
तन्नो ब्रह्मा प्रचोदयात् ॥
तत्केशवाय विद्महे नारायणाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥
तद्भास्कराय विद्महे प्रभाकराय धीमहि ।
तन्नो भानुः प्रचोदयात् ॥
तत्सोमराजाय विद्महे महाराजाय धीमहि ।
तन्नश्चन्द्रः प्रचोदयात् ॥
तज्ज्वलनाय विद्महे वैश्वानराय धीमहि ।
तन्नो वह्निः प्रचोदयात् ॥
तत्त्यजपाय विद्महे महाजपाय धीमहि ।
तन्नो ध्यानः प्रचोदयात् ॥
तत्परमात्माय विद्महे वैनतेयाय धीमहि ।
तन्नः सृष्टिः प्रचोदयात् ॥

रुद्रः नमस्येषुधनुर्बाहुमन्युः, शिवेषुधिधनुरिषुधरः, निष्पापशिवतनुः, जगते आरोग्यसौमनस्यप्रदः, प्रथमो दैव्यो भिषक्, अहियातुधानीहन्ता, ताम्रारुणबभ्रुरूपधरः, सुमङ्गलः, मीढ्वान्, सर्वासु दिक्षु सहस्ररूपैः स्थितः, गोपालादिजनैः सर्वभूतैश्च दृष्टः

[3] नमस्ते रुद्र मन्यव उतो त इषवे नमः ।
नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः ।

'कर्मप्रकरणे पाठात्कर्माङ्गत्वमपीष्यते । ज्ञानहेतुत्वमप्यस्य सर्वोपनिषदीरितम् ॥ किं जप्येनामृतत्वं नो ब्रूहीत्युक्तो मुनिर्जगौ । शतरुद्रीयकेणेति जाबाला आमनन्ति हि ॥' हे रुद्र ते त्वदीयो यो मन्युः कोपः तस्मै नमोऽस्तु । स मन्युरस्मद्वैरिष्वेव प्रसरतु न त्वस्मासु । उत (उतो) अपि च ते तवेषवे नमः त्वदीयाय बाणाय नमोऽस्तु । तथा ते धन्वने त्वदीयाय धनुषे नमोऽस्तु । उत अपि च ते बाहुभ्यां त्वदीयाभ्यां धनुर्बाणोपेताभ्यां हस्ताभ्यां नमोऽस्तु । एतत्सर्वं वैरिष्वेव प्रवर्ततां न तु मयीत्यभिप्रायः । तैसा.

[1] या त इषुः शिवतमा शिवं बभूव ते धनुः ।
शिवा शरव्या या तव तया नो रुद्र मृडय ॥

हे रुद्र ते त्वदीया या इयं इषुः शिवतमा शान्ततमा बभूव, तथा ते त्वदीयं यद्धनुः शिवं शान्तं बभूव, तथा या च तव शरव्या तव इषुधिस्तया शान्तया इष्वा तेन च शान्तेन धनुषा तया च शान्तया शरव्यया नोऽस्मान् मृडय सुखय । भक्तेषु प्रवृत्त्यभावात्तेषां शान्तत्वम् । तैसा.

[2] या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।
तया नस्तनुवा शन्तमया गिरिशन्ताभि चाकशीहि ॥

द्वे हि रुद्रस्य तनू । तथा चोपरिष्टादाम्नायते—'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्या' इति । हिंसिका घोरा, अनुग्राहिका शिवा । हे रुद्र ते तव या तनूः शिवा अस्मास्वनुग्रहकारिणी अत एव अघोरा हिंसिका न भवति । अघोरत्वमेव स्पष्टीक्रियते—

---

(१) मैसं. २।९।१ (३); कासं. १७।११ (३२); तैआ १०।१।५. (२) मैसं. २।९।१ (४–१३). (३) तैसं. ४।५।१।१, कासं. १७।११ (३३) (नमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नमः । उतो त इषवे नमः ॥), मैसं. २।९।२ (१४) त इषवे (ता इषवे); शुसं. १६।१ (नमस्ते अस्तु धन्वने०), शब्रा ९।१।१।१४

(१) तैसं. ४।५।१।१, कासं. १७।११ (४७) रुद्र मृडय (मृड जीवसे).

(२) तैसं. ४।५।१।१; कासं. १७।११ (३४) नस्तनुवा (नस्तन्वा), मैसं. २।९।२ (१५) कासंवत्, शुसं. १६।२ कासंवत्; श्वेउ. ३।५.

अपापकाशिनी पाप हिंसारूपमनिष्टं काशयतीति पापकाशिनी, तादृशी न भवतीत्यपापकाशिनी । गिरौ कैलासे स्थित्वा नित्य प्राणिभ्यो यः श सुखं तनोति सः गिरिशन्तस्तस्य सबोधन हे गिरिशन्त । तथाविध हे रुद्र शन्तमया अतिशयेन सुखकारिण्या तया तनुवा अभि चाकशीहि मामभिलक्ष्य प्रकाश कुरु । एतादृशी त्वदीया तनु प्रकाश्य मा सुखिन कुरु इत्यर्थः । तैसा.

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत् ॥

हे गिरिशन्त यामिषुं बाणं अस्तवे वैरिषु प्रक्षेप्तु हस्ते बिभर्षि । कैलासाख्यं गिरिं त्रायते पालयतीति गिरित्रः तत्सबोधन हे गिरित्र । तथाविध हे रुद्र ता हस्ते धृतामिषु शिवां अस्मासु शान्ता कुरु । पुरुषं अस्मदीय मनुष्यं जगत् मनुष्यव्यतिरिक्तमपि जङ्गम गवादिकं मा हिंसीः । तैसा.

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥

गिरौ कैलासे शेते तिष्ठतीति गिरिशः । हे गिरिश त्वा अच्छ प्राप्तुं शिवेन मङ्गलेन स्तुतिरूपेण वचसा वदामसि वय प्रार्थयामहे । यथा येन प्रकारेण नः अस्मदीय सर्वमिज्जगत् सर्वमपि मनुष्यपश्वादिकं जङ्गमजात अयक्ष्मं रोगरहितं सुमना असत् सौमनस्योपेतं भवति तथा कुरु । तैसा.

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहीꣳश्च सर्वान् जम्भयन्त्सर्वाश्च यातुधान्यः ॥

यो रुद्रः अधिवक्ता अधिकोऽयमित्येव सर्वेषामग्रे मां प्रति वक्तु क्षमः तेनोक्ते सति मम सर्वाधिक्यं तदानीमेव सिध्यति । अतस्तादृशो रुद्रः अध्यवोचत् मां सर्वाधिक वदतु । कीदृशोऽधिवक्ता, प्रथमो देवानां मध्ये मुख्यो दैव्यः सर्वान् देवानर्हति स्वय देवान्पालयितुं क्षम इत्यर्थः । भिषक्, एतस्य ध्यानमात्रेण सर्वरोगोपशमनात् अय चिकित्सकः । किं कुर्वन्, अहींश्च सर्वान् सर्पव्याघ्रादीन् सर्वानपि सर्वाश्च यातुधान्यः सर्वा अपि राक्षसजातीः जम्भयन् विनाशयन् । तैसा.

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।
ये चेमाꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशो वैषाꣳ हेड ईमहे ॥

यो रुद्रोऽसौ मण्डलस्थादित्यरूपः । स च ताम्रः उदयकाले अत्यन्तरक्तः अरुणः उदयादूर्ध्वमीषद्रक्तः । उत अपि च बभ्रुः ततोऽप्यूर्ध्वं पिङ्गलः । एवमन्येऽपि वर्णास्तत्तत्कालगता उन्नेयाः । सुमङ्गलः नानावर्णः सन् तदातदा अन्धकारादिनिवर्तकत्वादत्यन्तं मङ्गलः । ये चान्ये रश्मिरूपा रुद्रा इमामभितः अस्याः भूमेः परितो दिक्षु श्रिताः प्राच्यादिदिक्ष्ववस्थिताः । ते च सहस्रशोऽनेकसहस्रसख्याकाः । एषां आदित्यरश्मिरूपाणा सर्वेषां रुद्राणां हेडः क्रोधसदृशं तीक्ष्णत्वमवेमहे भक्तिनमस्कारादिना निवारयामः । तैसा.

असौ योऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनं गोपा अदृशन्नदृशन्नुदहार्यः ।
उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ॥

यो रुद्रो नीलग्रीवः कालकूटविषधारणेन नीलवर्णा ग्रीवा यस्यासौ नीलग्रीवः । स एव विलोहितो विशेषेण लोहितवर्णः सन्नसौ मण्डलवर्ती भूत्वा अवसर्पति उदयास्तमयौ सपादयितु प्रवर्तते । तस्य च रुद्रस्य मण्डलवर्तिस्वरूपधारणे प्रयोजनमुच्यते—उत अपि च गोपा वेद-

(१) तैसं. ४।५।१।१; कासं. १७।११ (३५), मैसं. २।९।२ (१६) गिरित्र (गिरिश), शुसं. १६।३, श्वेउ. ३।६.

(२) तैसं. ४।५।१।२, कासं. १७।११ (३६), मैसं. २।९।२ (१७) सर्वमिज्जगदयक्ष्मं (सर्वा इज्जन. सगमे), शुसं. १६।४.

(३) तैसं. ४।५।१।२, कासं. १७।११ (३७) उत्तरार्धे (अहींश्च सर्वाञ्जम्भय सर्वाश्च यातुधान्योऽधराचीः परासुव ॥), मैसं २।९।२ (१८) यातुधान्यः (यातुधान्योऽधराचीः परासुव); शुसं. १६।५ मैसंवत्.

(१) तैसं. ४।५।१।२, कासं. १७।११ (३८) चेमाꣳ (चेमे), मैसं. २।९।२ (१९) चेमाꣳ रुद्रा अभितो (चेमे अभितो रुद्रा), शुसं. १६।६ चेमां (चैनं).

(२) तैसं. ४।५।१।३; कासं. १७।११ (३९) अदृशन्नदृशन्नुद (अदृश्रन्नुतैनमुद), मैसं. २।९।२ (२०,२१) मृडयाति (मृडयातु) शेष कासंवत्; शुसं १६।७ उत्तरार्धे (उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृडयाति न. ॥).

शास्त्रसंस्काररहिता गोपाला अप्येन मण्डलवर्तिनमादित्यरूपिण रुद्र अदृशन् पश्यन्ति । उदहार्यः उदकाना हारिण्यो योषितोऽप्येन अदृशन् पश्यन्ति । उत अपि च एनमादित्यरूपिण रुद्रं विश्वा भूतानि गोमहिष्यादयः सर्वेऽपि प्राणिनः पश्यन्ति । सर्वेषा दर्शनार्थमेव हि रुद्रस्य आदित्यमूर्तिधारणम् । कैलासादिवर्ति रुद्रस्य रूप तु वेदशास्त्राभिज्ञैरेव दृश्यते नान्यैः । तादृशो रुद्रो दृष्टः सन् नः अस्मान् मृडयाति सुखिनः करोत्वित्यर्थः । तैसा.

[1]नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्त्वानोऽहं तेभ्योऽकरं नमः ॥

यः पूर्वोक्तरीत्या नीलग्रीवः स एव इन्द्रमूर्तिधारणेन सहस्राक्षः । स पुनः पर्जन्यमूर्तिधारणेन मीढ्वान् सेचको वृष्टिकर्तेत्यर्थः । तादृशाय रुद्राय नमोऽस्तु । अथो अपि च ये केचिदस्य रुद्रस्य सत्त्वानो भृत्यरूपाः प्राणिनस्तेभ्यः सर्वेभ्योऽहं नमः अकरं नमस्करोमि । तैसा.

[2]प्र मुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥

हे भगवो भगवन् पूजावन् महदैश्वर्यसपन्न रुद्र त्व धन्वनः त्वदीयस्य धनुषः उभयोरार्त्नियोः कोटयोरवस्थितां ज्या मौर्वी प्र मुञ्च अवरोपय । याश्च ते हस्त इषवो वर्तन्ते ता अपि परा वप परित्यज । तैसा.

[3]अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे ।
निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥

इन्द्ररूपेण सहस्रसख्याकान्यक्षीणि यस्यासौ सहस्राक्षः । शतसंख्याका इषुधयो बाणस्थानानि यस्यासौ शतेषुधिः । तादृश हे रुद्र धनुः अवतत्य अवरोपितज्याक कृत्वा शल्यानां मुखा मुखानि इषुगतलोहानामग्राणि निशीर्य इषुधिषु न्यग्भावेन शीर्णानि कृत्वा नः अस्मान् प्रति सुमना अनुग्रहयुक्तः सन् शिवः शान्तो भव । तैसा.

[1]विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳ उत ।
अनेशन्नस्येषव आभुरस्य निषङ्गथिः ॥

कपर्दो जटाजूटः सोऽस्यास्तीति कपर्दी रुद्रः तस्य धनुः विज्यं विगतज्याकमस्तु । उत अपि च बाणा अस्मिंस्तिष्ठन्तीति बाणवान् इषुधिः । स च विशल्यः अस्तु इषुगताना शल्याना तदुदरे गोपितत्वेन बहिराविर्भूतशल्यरहितोऽस्तु । अस्य रुद्रस्य इषवो बाणा इषुधौ प्रक्षिप्ता अनेशन् वेद्धुमसमर्था भवन्तु । अस्य रुद्रस्य निषङ्गथिः बाणाधार आभुः अस्तु ईषत्प्रभुरस्तु । कुड्यनिखातशङ्कावासञ्जितत्वेन बाणान् धारयितुमेव प्रभवतु न तु बाणाकर्षणयोग्य इत्यर्थः । अथवा निषङ्गथिः खड्गकोशः । सोऽपि पूर्ववत् क्वचिदारोपितत्वेन खड्गं धारयितुमेव प्रभवतु । न तु खड्गाकर्षणसमर्थः । तैसा.

[2]या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परि ब्भुज ॥

हे मीढुष्टम अतिशयेन कामाभिवर्षक या ते हेतिः तव सबन्धि खड्गादिरूप यदायुध, यदपि ते तव हस्ते धनुः बभूव, अयक्ष्मया अनुपद्रवकारिण्या तया हेत्या तथाविधेन धनुषा च त्व अस्मान् विश्वतः परिब्भुज. सर्वतः परिपालय । तैसा.

[3]नमस्ते अस्त्वायुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥

हे रुद्र ते त्वदीयाय आयुधाय बाणरूपाय नमोऽस्तु ।

---

(१) तैस. ४.५।१।३, कासं. १७।११ (४०), मैसं. २।९।२ (२२) अस्तु नीलग्रीवाय (नीलकपर्दाय) सत्त्वानोऽहं (सत्वान इद); शुसं. १६।८ नमो अस्तु (नमोऽस्तु)

(२) तैसं ४।५।१।३ कासं १७।११ (४१) रार्त्नियोर्ज्याम् (रार्त्न्योर्ज्याम्), मैस २.९.२ (२४) हस्त (हस्ता) शेषं काम्वत्. शुसं १६।९ कासंवत.

(३) तैस. ४.५।१.४, कास १७।११ (४६) मुखा (मुखे) मैस. २।९.२ (२५) धनुस्त्वꣳ (धनुष्ट्वꣳ) निशीर्य (प्रतीर्य) मुखा (मुखे) शुसं. १६।१३ धनुस्त्वं (धनुष्ट्वꣳ)

(१) तैसं. ४।५।१।४, कास. १७।११ (४२) वाꣳ उत (वानुत) आभुरस्य (आभूरस्य), मैसं. २।९।२ (२६) बाणवाꣳ (बाणवं) न्नस्ये.. रस्य (न्नस्य या इषव आभूरस्य), शुसं. १६।१० न्नस्येषव (न्नस्य या इषव) ङ्गथिः (ङ्गधि.).

(२) तैसं. ४।५।१।४; कासं. १७।११ (४३) यक्ष्मया (यक्ष्मेण), मैसं २।९।२ (२८) हस्ते (शिवं), शुसं. १६।११. तैत्तिरीयसंहितातोऽन्यत्र ' परिभुज ' इति पाठः ।

(३) तैसं. ४।५।१।४; कासं. १७।११ (४५) नमस्ते अस्त्वा (नमासि त आ); मैसं. २।९।२ (२३)

कीदृशायायुधाय। अनातताय धनुषि सधानाभावादप्रसारिताय, धृष्णवे स्वरूपेण प्रहर्तुं प्रगल्भाय। किंच ते त्वदीयाभ्या उभाभ्या बाहुभ्या नमोऽस्तु। तथा तव त्वदीयाय धन्वने नमोऽस्तु। तैसा.

[1]परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः।
अथो य इषुधिस्तवाऽऽरे अस्मन्नि धेहि तम्॥

हे रुद्र ते त्वदीयस्य धन्वनो हेतिः बाणशल्यरूपा अस्मान् विश्वतः सर्वतः परि वृणक्तु वर्जितान् करोतु मा बाधतामित्यर्थः। अथो अपि च यः तव इषुधिः तं अस्मदारे अस्मत्तो दूरे नि धेहि स्थापय। तैसा.

विश्वरूपधर, सर्वकर्तृकर्मादिकारकात्मकोऽखिलस्वस्वामिसंबन्धिस्वरूप, पशुपतिपथपत्यन्नपतिपुष्टपतिजगत्पतिदिक्पतीत्यादिभावेन स्थित, सेनागणव्रातसभास्तेनरथाश्वादितदधिष्ठातृसेनान्यादिरूपधर', ब्रह्मराजन्यविट्सूतरथकारनिषादादिजातितत्संकरमूर्तिधर', आसीनशयानस्वपज्जाग्रत्तिष्ठद्धावदाद्यवस्थ, महन्क्षुल्लकादिविरुद्धधर्मोपेतः, जलवायुभूकार्येषु तदात्मकत्वेन प्रविष्टः, शंकर., भव., शर्व', सहस्राक्ष, शिपिविष्ट., मीढुष्टम, सोमः, शंभुः

[2]नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः॥

हिरण्यनिर्मितान्याभरणानि बाह्वोर्यस्यासौ हिरण्यबाहुः। स च संग्रामेषु सेना नयतीति सेनानीः। तादृशमूर्तिधरो यो रुद्रस्तस्मै नमोऽस्तु। यश्च दिशां पालको रुद्रस्तस्मै नमोऽस्तु। तैसा.

[3]नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः॥

हरितवर्णाः केशाः पर्णरूपा येषा वृक्षाणां ते हरिकेशाः तादृशेभ्यो वृक्षेभ्यो वृक्षाकाररुद्रमूर्तिभ्यो नमोऽस्तु। यो रुद्रः पशूना पालकस्तस्मै नमोऽस्तु। तैसा.

[1]नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमः॥

सस्पिशब्दो बालतृणवाची। पीतरक्तसंकीर्णवर्णवाची पिञ्जरः। बालतृणवत्पिञ्जरः सस्पिञ्जरः। स च त्विषीमान् दीप्तिमान्। तथाविधरुद्रमूर्तये नमोऽस्तु। पथीना शास्त्रोक्तदक्षिणोत्तरतृतीयमार्गाणा पतिः पालको यो रुद्रः तस्मै रुद्राय नमोऽस्तु। तैसा.

[2]नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमः॥

बिभर्ति रुद्रमिति बभ्रुः वृषभः, स एव बभ्लुः। रलयोर्भेदाभावः। तस्मिन् शेते तिष्ठतीति बभ्लुशः। स च विद्वेषिणो विशेषेण विध्यतीति विव्याधी। तथाविधाय विव्याधिने नमोऽस्तु। यश्चान्नाना पालको रुद्रस्तस्मै नमोऽस्तु। तैसा.

[3]नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः॥

नीलमूर्धजाय पलितरहिताय उपवीतिने मङ्गलार्थं यज्ञोपवीतधारिणे रुद्राय नमोऽस्तु। पुष्टाना परिपूर्णगुणानां पुरुषाणा पतये स्वामिने नमोऽस्तु। तैसा.

[4]नमो भवस्य हेत्यै जगतां पतये नमः॥

भवः संसारः तस्य हेतिः आयुध, संसारच्छेत्रे रुद्राय नमोऽस्तु। जगता पालको यो रुद्रस्तस्मै नमोऽस्तु। तैसा.

[5]नमो रुद्रायाऽऽततायिने क्षेत्राणां पतये नमः॥

आततेन विस्तारितेन धनुषा अवति रक्षतीत्याततावी,

---

नमस्ते अस्त्वा (नमस्ता आ), शुसं. १६।१४ नमस्ते अस्त्वा (नमस्त आ).

(१) तैसं. ४।५।१।४, कासं. १७।११ (४४); मैसं. २।९।२ (२७), शुसं. १६।१२.

(२) तैसं. ४।५।२।१, कासं. १७।१२ (४८); मैसं. २।९।३ (२९), शुसं. १६।१७, शब्रा. ९।१।१।१८.

(३) तैसं. ४।५।२।१; कासं. १७।१२ (४८), मैसं. २।९।३ (२९); शुसं. १६।१७,

(१) तैसं. ४।५।२।१; कासं. १७।१२ (४८) सस्पि (शष्पि), मैसं. २।९।३ (२९) कासंवत्; शुसं. १६।१७ कासंवत्.

(२) तैसं. ४।५।२।१; कासं. १७।१२ (४८) विव्याधिने (व्याधिने), मैसं. २।९।३ (२९) न्नाना (न्नस्य) शेषं कासंवत्, शुसं. १६।१८ कासंवत्.

(३) तैसं. ४।५।२।१; कासं १७।१२ (४८); मैसं. २।९।३ (२९), शुसं. १६।१७.

(४) तैसं. ४।५।२।१; कासं. १७।१२ (४८) जगता पतये (जगतस्पतये); मैसं. २।९।३ (२९) कासंवत्; शुसं. १६।१८.

(५) तैसं. ४।५।२।१; कासं. १७।१२ (४८) तायिने (तायिने), मैसं. २।९।३ (२९) क्षेत्राणा (क्षेत्रस्य) शेषं कासंवत्; शुसं. १६।१८ कासंवत्.

तस्मै रुद्राय नमोऽस्तु। क्षेत्राणा पालको यो रुद्रः तस्मै नमोऽस्तु। तैसा.

**नम: सूतायाहन्त्याय वनानां पतये नमः॥**[2]

सूतः सारथिः। अहन्त्यो वैरिभिर्हन्तुमशक्यः। तादृशाय रुद्राय नमोऽस्तु। यो वनाना पालकः तस्मै रुद्राय नमोऽस्तु। तैसा.

**नमो रोहिताय स्थपतये वृक्षाणां पतये नमः॥**[3]

रोहितो लोहितवर्णः। स्थपतिः प्रभुः। तस्मै रुद्राय नमोऽस्तु। वृक्षाणा यः पालकः तस्मै नमोऽस्तु। तैसा.

**नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमः॥**[4]

राजसभाया मन्त्रालोचनकुशलो मन्त्री। स च वणिजा स्वामित्वेन वाणिजः तस्मै नमोऽस्तु। वनगता गुल्मादयः कक्षाः तेषा पालकाय नमोऽस्तु।

तैसा.

**नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः॥**[5]

भुवं तनोतीति भुवन्तिः। वरिवो धनं तस्य कर्ता वरिवस्कृत् स एव वारिवस्कृतः तस्मै नमोऽस्तु। ओषधीनां ग्राम्यारण्यानां पालकः तस्मै नमोऽस्तु।

तैसा.

**नम उच्चैर्घोषायाऽऽक्रन्दयते पत्तीनां पतये नमः॥**

युध्दकाले उच्छ्रितो घोषो ध्वनिः यस्यासावुच्चैर्घोषस्तस्मै। आक्रन्दयन् वैरिणा रोदयिता तस्मै रुद्राय नमोऽस्तु। पत्तीना पादचारिणो योधाः पत्तिशब्दवाच्याः तेषां पालकाय नमोऽस्तु।

तैसा.

(१) तैसं. ४।५।२।१, कासं. १७।१२ (४८) हन्त्याय (हन्त्वाय); मैसं. २।९।३ (२९) कासंवत्, शुसं. १६। १८ हन्त्याय (हन्त्यै).

(२) तैसं. ४।५।२।१, कासं. १७।१२ (४८), मैसं. २।९।३ (२९); शुसं. १६।१९.

(३) तैसं. ४।५।२।२, कासं. १७।१२ (४८); मैसं. २।९।३ (२९); शुसं. १६।१९.

(४) तैसं. ४।५।२।२, कासं. १७।१२ (४८); मैसं २।९।३ (२९); शुसं. १६।१९.

(५) तैसं. ४।५।२।२; कासं. १७।१२ (४८) (नम आक्रन्दयत उच्चैर्घोषाय सत्त्वाना पतये नमः), मैसं. २।९।३ (२९) कासंवत्; शुसं. १६।१९.

**नमः कृत्स्नवीताय धावते सत्त्वनां पतये नमः॥**[1]

कृत्स्न सैन्य वीत वेष्टित येनासौ कृत्स्नवीतः तस्मै। धावते पलायमानाना परकीयसैन्याना पृष्ठतो गच्छन् धावन् तस्मै नमोऽस्तु। सत्त्वानः सात्त्विकाः शरणागताः तेषा पालकाय नमोऽस्तु।

तैसा.

**नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः॥**[2]

सहमानो विरोधिनोऽभिभवन्। नितरा विरोधिनो विध्यतीति निव्याधी, तादृशाय रुद्राय नमः। आ समन्तात् विध्यन्तीत्याव्याधिन्यः शूराः सेनास्तासा पालकाय नमः। तैसा.

**नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः॥**[3]

ककुभाय ककुभसदृशाय प्रधानभूतायेत्यर्थः। निषङ्गी खड्गहस्तः तस्मै नमः। स्तेना गुप्तचोराः तेषा पालकाय नमः। रुद्रो हि लीलया नट इव तत्तद्वेष धत्ते। यद्वा तस्य सर्वजगदात्मकत्वाद्ये यत्र यथा वर्तन्ते तत्र तथारूपेण रुद्रो वर्तते इति रुद्रस्य सार्वात्म्यमनुसंधातुं मन्त्रैरेवमुच्यते। स्तेनादिशरीरेषु रुद्रो द्वेधा वर्तते जीवरूपेण ईश्वररूपेण च। तत्र च यज्जीवरूपं तत्स्तेनादिशब्दाना वाच्योऽर्थः। स एव शास्त्रेषु निन्द्यः। यत्त्वीश्वररूप तत्स्तेनादिशब्दैरुपलक्ष्यते। तदनुसधानं तु पापक्षयहेतुत्वेन परमपुरुषार्थ इति लक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुज्यन्ते इति द्रष्टव्यम्। उपलक्षकवाच्यार्थद्वारेण लक्ष्यार्थो मुग्धैरपि सहसा सम्यग्बोद्धुं शक्यते। यथा शाखाग्रे चन्द्र इत्यत्र। तस्मात् लक्ष्यार्थस्यैव विवक्षायामपि सुखावबोधद्वारत्वेन मुख्यार्थवाचकाः शब्दाः प्रयोक्तव्याः। तैसा.

(१) तैसं. ४।५।२।२; कासं. १७।१२ (४८) कृत्स्न (कृत्सं) सत्त्वना (पत्तीना); मैसं. २।९।३ (२९) सत्त्वनां (पत्तीना), शुसं १६।२० कृत्स्नवीताय (कृत्स्नायतया).

(२) तैसं. ४।५।३।१; कासं. १७।१२ (४८), मैसं. २।९।३ (२९), शुसं. १६।२०.

(३) तैसं. ४।५।३।१; कासं. १७।१२ (४८) नमः कुकुभाय निषङ्गिणे (नमो निषङ्गिणे कुकुभाय), मैसं. २। ९।३ (२९) कासंवत्; शुसं, १६।२० कासंवत्.

नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः ॥

धनुषि सधातु हस्ते धृतो बाणो निषङ्गः । पृष्ठे बद्धो बाणाधार इषुधिः । तदुभययुक्ताय नमः । तस्कराः प्रकटचोराः तेषा पालकाय नमः ।

तैसा.

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः ॥

स्वामिन आप्तो भूत्वा तदीयक्रयविक्रयादिव्यवहारेषु यत्र क्वापि यत्किञ्चित् तद्द्रव्यापह्नवो वञ्चनम् । सर्वेष्वपि व्यवहारेष्वपह्नवः परिवञ्चनम् । तदुभयरूपाय नमः । गुप्तचोराः द्विविधाः । दूरादागत्य रात्रावज्ञाताः सन्तः कपाटोद्घाटनेन ये द्रव्यापहर्तारस्ते स्तेनाः । स्वकीया एव भूत्वा रात्रावह्नि वा अन्यैरज्ञाताः सन्तोऽपहर्तारो ये ते स्तायवः । तेषा स्तायूना पालकाय नमः । तैसा.

नमो निचेरवे परिचरायारण्यानां पतये नमः ॥

स्वामिगृहे एव कदा अपहरिष्यामीत्यनया बुद्ध्या सावधानो निरन्तरं चरणशीलो निचेरुः, परितः आपणवीथिप्रवाटिकादावपहारबुद्ध्या चरणशीलः परिचरः, तदुभयरूपाय नमः । मार्गे गन्तुर्द्रव्यापहारेण बाधितु निरन्तर अरण्ये वर्तमानाश्चोराः अरण्यास्तेषा पालकाय नमः । तैसा.

नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमः ॥

सृकशब्दो वज्रवाची । तेन स्वशरीरमवन्ति रक्षन्तीति सृकाविनः, प्राणिनो हन्तुमिच्छन्तश्चोराः जिघांसन्तः, तदुभयरूपाय नमः । कृषिकाः सन्तः स्वामिधान्यानामपहर्तारो मुष्णन्तः तेषा पालकाय नमः ।

तैसा.

नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृन्तानां पतये नमः ॥

असिमन्तः खड्गधारिणश्चोराः । ये रात्रौ चरन्तो वीथ्या निर्गतान्प्राणिनो बाधमानाश्चोरास्ते नक्तं चरन्तः । तदुभयरूपाय नमः । हत्वैवापहरन्तः प्रकृन्तास्तेषा पालकाय नमः । तैसा.

नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः ॥

शिरोवेष्टनवान् उष्णीषी, ग्राम्यजनवत् उष्णीषेण शिरो वेष्टयित्वा तन्मध्ये प्रविश्य वर्तमानश्चोरः उष्णीषी । गिरौ काष्ठादिसपादकानां वस्त्रादिकमपहर्तुं चरतीति गिरिचरस्तदुभयरूपाय नमः । कुं भूमि गृहक्षेत्रादिरूपा लुञ्चन्ति अपहरन्तीति कुलुञ्चाः तेषा पालकाय नमः ।

तैसा.

नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमः ॥

भीषयितुं हस्ते बाणधारिण इषुमन्तः । तथा भीषयितुं हस्ते धनुर्धारिणो धन्वाविनः । तदुभयरूपा हे रुद्राः वो युष्मभ्य नम इति विशेषणद्वयेन वाक्य भेत्तु द्विर्नमस्कारः । तैसा.

नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः ॥

धनुषि ज्या आरोपयन्तः आतन्वानाः, तद्रूपेभ्यो युष्मभ्यं रुद्रेभ्यो नमः । धनुषि बाणं संदधानाः प्रतिदधानाः, तद्रूपेभ्यो युष्मभ्यं नमः । तैसा.

नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमः ॥

ज्याकर्षण कुर्वन्तः आयच्छन्तः, बाण मुञ्चन्तो विसृजन्तः । शेष पूर्ववत् व्याख्येयम् । तैसा.

---

(१) तैसं. ४।५।३।१, कासं. १७।१२ (४८); मैसं. २।९।३ (२९), शुसं. १६।२१.

(२) तैसं ४।५।३।१, कासं १७।१२ (४८), मैसं २।९।३ (२९), शुसं. १६।२१.

(३) तैसं. ४।५।३।१, कासं. १७।१२ (४८) निचेरवे (निचराय), मैसं. २।९।३ (२९), शुसं. १६।२०.

(४) तैसं. ४।५।३।१; कासं. १७।१२ (४८) विभ्यो (यिभ्यो), मैसं. २।९।३ (२९) सृकाविभ्यो (सृगायिभ्यो); शुसं. १६।२१ कासंवत्.

(१) तैसं. ४।५।३।१; कासं. १७।१२ (४८), मैसं. २।९।३ (२९); शुसं. १६।२१ प्रकृन्ताना (विकृन्ताना).

(२) तैसं. ४।५।३।१, कासं. १७।१२ (४८); मैसं. २।९।३ (२९), शुसं. १६।२२.

(३) तैसं. ४।५।३।१, कासं. १७।१३ (४९), मैसं. २।९।४ (३०) नम (नमा), शुसं. १६।२२.

(४) तैसं. ४।५।३।२, कासं. १७।१३ (४९); मैसं. २।९।४ (३०), शुसं. १६।२२.

(५) तैसं. ४।५।३।२, कासं. १७।१३ (४९) (नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नम ), मैसं. २।९।४ (३०); शुसं. १६।२२ कासवत्.

नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमः ॥[1]

मुक्तस्य बाणस्य लक्ष्यपर्यन्त गमनमसनं तस्य कर्तारः अस्यन्तः । लक्ष्यसमीप गतस्य बाणस्य लक्ष्ये प्रवेशो वेधस्तस्य कर्तारो विध्यन्तः ।

तैसा.

नम आसीनेभ्यः शयानेभ्यश्च वो नमः ॥[2]

नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः ॥

नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः ॥

नमः सभाभ्यः सभापतिभ्यश्च वो नमः ॥

नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ॥

स्वपन्ति ते स्वपन्तः स्वप्नावस्थामनुभवन्तस्तेभ्यो नमः । जाग्रति ते जाग्रतः जाग्रदवस्थावन्तस्तेभ्यो वो नमः । शेरते ते शयानाः सुपुप्त्यवस्थावन्तस्तेभ्यो नमः । आसते आसीनाः उपविशन्तस्तेभ्यश्च वो नमः । तिष्ठन्ति ते तिष्ठन्तो गतिनिवृत्तास्तेभ्यो नमः । धावन्ति ते धावन्तो वेगवद्गतयः तेभ्यो वो नमः ।

अथ जातसंज्ञा रुद्रा रुद्रलोके सन्ति ते कथ्यन्ते रुद्राद्वैतप्रतिपादनाय 'अथो एव ँ हैतानि रुद्राणां जातानि' (शब्रा. ९।१।१।१९) इति श्रुतेः । सभारूपेभ्यो रुद्रेभ्यो नमः। सभादिषु रुद्रदृष्टिः कर्तव्येति तात्पर्यम् । सभायाः पतिभ्यो नमः । अश्वास्तुरगास्तेभ्यो वो नमः । अश्वानां पतिभ्यो वो नमः । शुम.

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः ॥[3]

आ समन्तात् वेद्धुं शक्ताः स्त्रीमूर्तय आव्याधिन्यः, विशेषेण वेद्धुं शक्ता विविध्यन्त्यस्ताभ्यो नमः ।

तैसा.

(१) तैसं ४।५।३।२, कासं. १७।१३ ( ४९ ) नमोऽस्यद्भ्यो ( नमो विसृजद्भ्यो ); मैसं २।९।४ ( ३० ); शुसं. १६।२३ कासंवत्.

(२) तैसं. ४।५।३।२; कासं. १७।१३ ( ४९ ) नमो अश्वेभ्यो (नमोऽश्वेभ्यो); मैसं २।९।४ ( ३० ) आसीनेभ्य. शयानेभ्यश्च ( शयानेभ्या आसीनेभ्यश्च ) शेषं कासंवत्; शुसं. १६।२३–२४ कासंवत्.

(३) तैसं. ४।५।४।१, कासं. १७।१३ ( ४९ ) विविध्यन्तीभ्यश्च ( विविध्यद्भ्यश्च ), मैसं. २।९।४ ( ३० ); शुसं. १६।२४.

नम उगणाभ्यस्तृ ँ हतीभ्यश्च वो नमः ॥[1]

उत्कृष्टगणरूपाः सप्तमातृकाद्याः स्त्रिय उगणाः, हिंसितु समर्था दुर्गाद्या उग्रदेवतास्तृहत्यः, ताभ्यो नमः।

तैसा.

नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः ॥[2]

गर्धनशीलाः गृत्साः विपयलम्पटा इत्यर्थः । तेषां पालका गृत्सपतयस्तेभ्यो नमः ।

तैसा.

नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ॥[3]

नानाजातीयानां संघा व्रातास्तेषां पालका व्रातपतयः तेभ्यो नमः । तैसा.

नमो गणेभ्यो गणपतिभ्यश्च वो नमः ॥[4]

देवस्यानुचरा भूतविशेषा गणाः, तेषां पालका गणपतयस्तेभ्यो नमः । तैसा.

नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥[5]

विरूपा विकृतरूपा नग्नमुण्डादयः । विश्वरूपाः तुरङ्गगजवक्त्रादिनानाविधरूपधारिणो भृत्यास्तेभ्यो नमः । तैसा.

नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमः ॥[6]

अणिमाद्यैश्वर्योपेता महान्तः, तद्रहिताः क्षुल्लकाः तेभ्यो नमः ।

तैसा.

(१) तैसं. ४।५।४।१; कासं. १७।१३ ( ४९ ); मैसं. २।९।४ ( ३० ) नम ( नमो ); शुसं. १६।२४.

(२) तैसं. ४।५।४।१; कासं. १७।१३ ( ४९ ) ( नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमः ); मैसं. २।९।४ ( ३० ) कासंवत्; शुसं. १६।२५.

(३) तैसं. ४।५।४।१; कासं.१७।१३ ( ४९ ); मैसं. २।९।४ ( ३० ); शुसं. १६।२५.

(४) तैसं. ४।५।४।१; कासं १७।१३ ( ४९ ); मैसं. २।९।४ ( ३० ), शुसं. १६।२५.

(५) तैसं. ४।५।४।१, कासं. १७।१३ ( ४९ ); मैसं. २।९।४ ( ३० ); शुसं १६।२५.

(६) तैसं. ४।५।४।१; कासं. १७।१३ ( ४९ ) महद्भ्यः क्षुल्लके ( महद्भ्योऽर्भके ), मैसं. २।९।४ ( ३० ) महद्भ्यः क्षुल्लके ( बृहद्भ्योऽर्भके ); शुसं. १६।२६ महद्भ्यः क्षुल्लके ( महद्भ्यो अर्भके ).

[1] नमो रथिभ्योऽरथेभ्यश्च वो नमः ॥

रथमारूढा रथिनः, तद्रहिता अरथास्तेभ्यो नमः।

तैसा.

[2] नमो रथेभ्यो रथपतिभ्यश्च वो नमः ॥
[3] नमः सेनाभ्यः सेनानिभ्यश्च वो नमः ॥
[4] नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमः ॥
[5] नमो युवभ्य आशिनेभ्यश्च वो नमः ॥
[6] नमो ब्राह्मणेभ्यो राजन्येभ्यश्च वो नमः ॥
नमः सूतेभ्यो विश्येभ्यश्च वो नमः ॥
[7] नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः ॥
नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः ॥
नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमः ॥
नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमः ॥
नमो मृगयुभ्यः श्वनिभ्यश्च वो नमः ॥
नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥

पक्षिपुञ्जाना घातकाः पुञ्जिष्टाः । मत्स्यघातिनो निषादाः । शुना गलेषु बद्धाना पाशाना धारकाः श्वनयः । अत्र द्वितीयानुवाको लीलार्थदेवतामूर्तिप्राधान्येन स्तोतु प्रवृत्तः । तृतीयानुवाकः चोरमूर्तिप्राधान्येन स्तोतु प्रवृत्तः । चतुर्थोऽनुवाको नानाजातिमूर्तिप्राधान्येनेति विभागो द्रष्टव्यः ।

तैसा.

(१) तैसं. ४।५।४।१, कासं १७।१३ ( ४९ ) भ्योऽरथेभ्यश्च ( भ्यो वरूथिभ्यश्च ), मैसं २।९।४ ( ३० ) कासंवत्, शुसं. १६।२६ भ्योऽर ( भ्यो अर ).

(२) तैसं. ४।५।४।१.

(३) तैसं. ४।५।४।२; कासं. १७।१३ ( ४९ ) सेनानि ( सेनानी ), मैसं. २।९।४ ( ३० ) कासंवत्, शुसं. १६।२६.

(४) तैसं. ४।५।४।२; कासं १७।१३ ( ४९ ), मैसं. २।९।४ ( ३० ), शुसं. १६।२६.

(५) कासं १७।१३ ( ४९ ), मैसं. २।९।४ ( ३० ) आशिनेभ्यश्च वो नम. ( आशीनेभ्यश्च वो नमो नम. ).

(६) मैसं. २।९।५ ( ३१ ).

(७) तैसं. ४।५।४।२; कासं १७।१३ (४९) पुञ्जिष्टेभ्यो ( पुञ्जिष्ठेभ्यो ), मैसं. २।९।५ ( ३१ ) ( २।९।४ नम इषु. ) धन्वकृद्भ्यश्च ( धनुष्कृद्भ्यश्च ), शुसं १६।२७–२८ पुञ्जिष्टे ( पुञ्जिष्ठे ), १६।४६ मैसंवत्.

[1] नमो भवाय च रुद्राय च । नमः शर्वाय च पशुपतये च । नमो नीलग्रीवाय च शितिकण्ठाय च । नमः कपर्दिने च व्युप्तकेशाय च । नमः सहस्राक्षाय च शतधन्वने च । नमो गिरिशाय च शिपिविष्टाय च । नमो मीढुष्टमाय चेषुमते च । नमो ह्रस्वाय च वामनाय च । नमो बृहते च वर्षीयसे च । नमो वृद्धाय च संवृध्वने च । नमो अग्रियाय च प्रथमाय च । नम आशवे चाजिराय च । नमः शीघ्रियाय च शीभ्याय च । नम ऊर्म्याय चावस्वन्याय च । नमः स्रोतस्याय च द्वीप्याय च ॥

भवन्ति प्राणिनोऽस्मादिति भवः । रुद् रोदनहेतुभूत दुःख द्रावयतीति रुद्रः । शृणाति हिनस्ति पापमिति शर्वः । पशुसमानानज्ञानिनः पुरुषान् पालयतीति पशुपतिः । कालकूटधारणेन नीलवर्णो ग्रीवैकदेशो यस्यासौ नीलग्रीवः । शितिः श्वेतवर्णोऽवशिष्टः कण्ठप्रदेशो यस्यासौ शितिकण्ठः । कपर्दो जटाजूटो यस्यास्तीति कपर्दी । मुण्डितकेशो व्युप्तकेशः । पाशुपतादिवेषेण कपर्दित्वम् । यत्यादिवेषेण मुण्डितकेशत्वम् । इन्द्रवेषेण सहस्राक्षत्वम् । सहस्रभुजावतारित्वेन शतसख्याकैर्धनुर्भिरुपेतत्वम् । गिरौ कैलासे शेते तिष्ठतीति गिरिशः । विष्णुमूर्तिधारी शिपिविष्टः । ‘ विष्णुः शिपिविष्टः ’ ( तैसं. ७।५।५।२ ) इति श्रुतेः । मेघरूपेणात्यन्तं वर्षयिता मीढुष्टमः । बाणधारकः इषुमान् । शरीरेऽल्पप्रमाणत्व ह्रस्वत्वम् । अङ्गुल्याद्यवयवसंकोचात् वामनत्वम् । आकारेण प्रौढो बृहन् । गुणैः समृद्धो वर्षीयान् । वयसा अधिको वृद्धः । सम्यक् स्तुतिभिर्वर्धितः संवृध्वा । जगदुत्पत्तेः पूर्वमवस्थितः अग्रियः । सभायां

(१) तैसं ४.५।५।१, २, कासं. १७।१३, १४ ( ४९, ५० ) शिपिविष्टाय ( शिपिविष्ठाय ) संवृध्वने ( सवृध्वने ) नमो अग्रियाय ( नमोऽग्र्याय ) शीघ्रियाय च शीभ्याय च (शीभाय च शीघ्राय च ) नम स्रोतस्याय. ( नमो नाद्याय ), मैसं. २।९।५ ( ३१ ) मीढुष्टमाय ( मीढुष्टराय ) संवृध्वने ( सुवृध्वने ) नमो अग्रि ( नमोऽग्री ) शीघ्रियाय च शीभ्याय ( शीभाय च शीघ्राय च ); शुसं. १६।२८–३१ संवृध्वने ( सवृधे ) अग्रियाय ( ऽग्र्याय ) शीघ्रियाय ( शीघ्र्याय ) स्रोतस्याय ( नादेयाय ).

मुख्यः प्रथमः । आशुर्व्यापी । अजिरो गमनकुशलः । शीघ्रियः शीघ्रगामी । शीभशब्दः उदकप्रवाहवाची, तत्रावस्थितः शीभ्यः । ऊर्मौ तरङ्गे स्थित ऊर्म्यः । अवस्वने ध्वनिरहिते स्थिरजलेऽवस्थितः अवस्वन्यः । स्रोतसि प्रवाहे स्थितः स्रोतस्यः । द्वीपे वारिमध्यवर्तिभूमौ स्थितो द्वीप्यः । अत्रैकैकस्मिन् यद्यपि चतुर्थ्यन्ताभ्या पदाभ्या नमःशब्द पृथगन्वेतु समुच्चयार्थौ चकारौ पठितौ । तैसा.

नमो ज्येष्ठाय च कनिष्ठाय च । नमः पूर्वजाय चापरजाय च । नमो मध्यमाय चापगल्भाय च । नमो जघन्याय च बुध्नियाय च । नमः सोभ्याय च प्रतिसर्याय च । नमो याम्याय च क्षेम्याय च । नम उर्वर्याय च खल्याय च । नमः श्लोक्याय चावसान्याय च । नमो वन्याय च कक्ष्याय च । नमः श्रवाय च प्रतिश्रवाय च । नम आशुषेणाय चाशुरथाय च । नमः शूराय चावभिन्दते च । नमो वर्मिणे च वरूथिने च । नमो बिल्मिने च कवचिने च । नमः श्रुताय च श्रुतसेनाय च ॥

विद्यैश्वर्यादिभिरधिको ज्येष्ठः । तैः रहितोऽल्पः कनिष्ठः । पूर्वं जगदादौ हिरण्यगर्भरूपेण उत्पन्नः पूर्वजः । अपरस्मिन् जगदवसानकाले सहर्तु कालाग्न्यादिरूपेणोत्पन्नः अपरजः । मध्यकाले देवतिर्यगादिरूपेणोत्पन्नो मध्यमः । अपगल्भः अप्ररूढेन्द्रियो बालः । जघने गवादीना पश्चाद्भागे वत्सादिरूपेण भवो जघन्यः । बुध्ने वृक्षादीनां मूले शाखादिरूपेणोत्पन्नो बुध्नियः । उभाभ्या पुण्यपापाभ्या सह वर्तते इति सोभो मनुष्यलोकः । अत एव आथर्वणिका आमनन्ति—'पुण्येन पुण्यं लोक जयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्' (प्रउ. ३।७) इति । तत्र भवः सोभ्यः । प्रतिसरो विवाहादौ हस्ते धार्यमाणो रक्षाबन्धः तमर्हतीति प्रतिसर्यः । यमलोके पापिशिक्षकरूपेणोत्पन्नो याम्यः । क्षेमो मोक्षः तमर्हतीति क्षेम्यः । उर्वरा सर्वसस्याढ्या भूमिः तामर्हति धान्याविशेषरूपेण इति उर्वर्यः । खलो धान्यविवेचनदेशः तमर्हति मेढ्यादिरूपेणेति खल्यः । श्लोका वैदिकमन्त्राः तत्प्रतिपाद्यत्वेन तत्र भवः श्लोक्यः । अवसानं वेदान्तः तत्प्रतिपाद्यत्वेन तत्र भवोऽवसान्यः । वने वृक्षादिरूपेण भवो वन्यः । कक्षे लतादिरूपेण भवः कक्ष्यः । श्रूयत इति श्रवः शब्दः । प्रतिश्रवः प्रतिध्वनिः । आशुः शीघ्रगामिनी सेना यस्यासौ आशुषेणः । आशुः शीघ्रगामी रथो यस्यासौ आशुरथः । शूरो युद्धे धैर्यवान् । अवभिन्दन् वैरिणा प्रहर्ता । वर्मी कञ्चुकोपेतः । वरूथी गृहोपेतः । बिल्म बिलोपेत युद्धे शिरोरक्षक तदस्यास्तीति बिल्मी । कवचः शरीररक्षकः सोऽस्यास्तीति कवची । श्रुतो वेदेषु प्रसिद्धः । श्रुता वेदेषु प्रसिद्धा सेना यस्यासौ श्रुतसेनः । तैसा.

नमो दुन्दुभ्याय चाहनन्याय च । नमो धृष्णवे च प्रमृशाय च । नमो दूताय च प्रहिताय च । नमो निषङ्गिणे चेषुधिमते च । नमस्तीक्ष्णेषवे चायुधिने च । नमः स्वायुधाय च सुधन्वने च । नमः स्रुत्याय च पथ्याय च । नमः काट्याय च नीप्याय च । नमः सूद्याय च सरस्याय च । नमो नाद्याय च वैशन्ताय च । नमः कूप्याय चावट्याय च । नमो वर्ष्याय चावर्ष्याय च । नमो मेघ्याय च विद्युत्याय च । नम ईध्रियाय चातप्याय च । नमो वात्याय च रेष्मियाय च । नमो वास्तव्याय च वास्तुपाय च ॥

दुन्दुभौ भेर्या भवः शब्दो दुन्दुभ्यः । आहन्यते ताड्यते अनेनेत्याहनन दुन्दुभ्याघातार्थो दण्डस्तत्र

(१) तैस. ४।५।६।१,२; कासं. १७।१४ (५०) बुध्नियाय (बुध्न्याय) चावभिन्दते (चावभेदिने); मैसं. २।९।६ (३२) ज्येष्ठाय च कनिष्ठाय च (ज्यायसे च कनीयसे च) बुध्नियाय (बुध्न्याय) प्रतिसर्याय (प्रतिसराय); शुसं. १६।३२-३५ बुध्नियाय (बुध्न्याय).

(१) तैसं. ४।५।७।१,२; कासं. १७।१४, १५ (५०, ५१) (नमो दूताय च प्रहिताय च०) स्रुत्याय (स्रुत्याय) सूद्याय (कुल्याय) ईध्रियाय (वीध्न्याय) रेष्मियाय (रेष्म्याय); मैसं. २।९।६,७ (३२, ३३) नमो दुन्दु .. न्याय च (नमो दुन्दुभये चाहननीयाय च) (नमो दूताय च प्रहिताय च०) स्तीक्ष्णेषवे (स्तिग्मेषवे) नम ईध्रियाय (नमो वीध्रियाय) रेष्मियाय (रेष्मण्याय) स्रुत्याय (स्रुत्याय) नमः काट्याय च नीप्याय च (नमो नीप्याय च भिद्याय च), शुसं. १६।३५-३९ (नमो दूताय च प्रहिताय च०) सूद्याय (कुल्याय) नाद्याय (नादेयाय) नम ईध्रियाय (नमो वीध्न्याय) रेष्मियाय (रेष्माय).

ताडनरूपेण उत्पन्नः आहनन्यः। धृष्णुर्युद्धे पलायनरहितः। प्रमृशः परसैन्यवृत्तान्तपरामर्शकः। दूतस्तद्वृत्तान्तज्ञापनकुशलः। प्रहितः स्वामिना प्रेषितः पुरुषः। निषङ्गी खड्गयुक्तः। इषुधिमान् बाणाधारयुक्तः। तीक्ष्णा इषवो यस्यासौ तीक्ष्णेषुः। बहून्यायुधानि यस्य सन्तीत्यायुधी। शोभनमायुध त्रिशूलरूप यस्यासौ स्वायुधः। शोभन धन्व पिनाकरूप यस्यासौ सुधन्वा। स्रुतिः पादसचारमात्रयोग्यः क्षुद्रमार्गः तमर्हतीति स्रुत्यः। पन्था रथाश्वादिसचारक्षमः प्रौढो मार्गस्तमर्हतीति पथ्यः। कुत्सितमटति जलमत्रेति काटोऽल्पप्रवाहयोग्यः कुल्याप्रदेशः तत्र जलरूपेण भवः काट्यः। यस्मिन्प्रदेशे पर्वताग्रात् जल न्यग्भावेन पतति स प्रदेशो नीपः तत्र जलरूपेणावस्थितो नीप्यः। सूदः कर्दमप्रदेशः तत्रत्यजलरूपः सूद्यः। सरः प्रसिद्ध तत्रत्यजलरूपः सरस्यः। नदीगतजलरूपो नाद्यः। अल्पसरो वेशन्तः तत्रत्यजलरूपो वैशन्तः। कूपस्थजलरूपः कूप्यः। अवटस्थजलरूपः अवट्यः। वर्षजलरूपो वर्ष्यः। वर्षनिरपेक्षजलरूपः अवर्ष्यः। मेघेषु स्थितो मेघ्यः। विद्युता सह चरतीति विद्युत्यः। ईध्र निर्मलत्वेन दीप्यमान शरदभ्र तत्र भवः ईध्रियः। आतपेन सह वृष्टः आतप्यः। वातेन सह वृष्टो वात्यः। रिष्यन्ति विनश्यन्ति भूतान्यत्रेति रेष्मः प्रलयकालः, तत्र भवः शर्करापाषाणादिसहितो वृष्टिजलविशेषो रेष्मियः। वस्तु धन गवाश्वादिपदार्थरूपं तत्र तत्कार्यरूपेणावस्थितो वास्तव्यः। गृहनिर्माणार्था भूमिर्वास्तु तत्पालको वास्तुपः। तैसा.

नमः[1] सोमाय च रुद्राय च। नमस्ताम्राय चारुणाय च। नमः शङ्गाय च पशुपतये च। नम उग्राय च भीमाय च। नमो अग्रेवधाय च दूरेवधाय च। नमो हन्त्रे च हनीयसे च। नमो वृक्षेभ्यो हरिकेशेभ्यः। नमस्ताराय। नमः शंभवे च मयोभवे च। नमः शंकराय च मयस्कराय च। नमः शिवाय च शिवतराय च। नमस्तीर्थ्याय च कूल्याय च। नमः पार्याय चावार्याय च। नमः प्रतरणाय चोत्तरणाय च। नम आतार्याय चाऽऽलाद्याय च। नमः शष्प्याय च फेन्याय च। नमः सिकत्याय च प्रवाह्याय च॥

उमया सह वर्तते इति सोमः। रुद् रोदनहेतुर्दुःखं तत् द्रावयति विनाशयतीति रुद्रः। आदित्यरूपेण उदयकाले अत्यन्त रक्तस्ताम्रः। उदयादूर्ध्व ईषद्रक्तोऽरुणः। शं सुखं गमयति प्रापयतीति शङ्गः। पशूना पालयिता पशुपतिः। विरोधिनो नाशयितुं क्रोधयुक्तः उग्रः। दर्शनमात्रेण विरोधिना भयहेतुर्भीमः। अग्रे पुरतो वधः अस्येत्यग्रेवधः। एवं दूरेवधः। पुरतो दूरे वा वर्तमानं विरोधिनमनायासेनैव हन्तीत्यर्थः। लोकेऽपि यो यत्र विरोधिनं हन्ति तत्र तद्रूपेणायमेव हन्ता। अत एव ईश्वरेणार्जुन प्रत्युक्तम्—'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति। सहारकाले अतिशयेन च सर्वेषा हन्ता हनीयान्। हरितवर्णानि केशसदृशानि पर्णानि येषा ते हरिकेशास्तथाविधा ये वृक्षाः कल्पतरुप्रभृतयस्तद्रूपः अयं रुद्र इत्यर्थः। तारः प्रणवप्रतिपाद्यः। शं सुखं भावयति उत्पादयतीति शंभुः। मयः सुख भावयतीति मयोभूः। एकं विषयसुखमपर मोक्षसुखमिति तयोर्विवेकः। पित्रादिरूपेण शं लौकिकसुखं करोतीति शंकरः। आचार्यशास्त्रादिरूपेण मोक्षसुखं करोतीति मयस्करः। साक्षात्सुखकारित्वमेताभ्यां पदाभ्यामुक्त एतन्मुखेन कारयितृत्वं पूर्वाभ्या पदाभ्यामिति विवेकः। शिवः कल्याणरूपः स्वयं निष्कल्मष इत्यर्थः। अतिशयेन शिवः शिवतरः स्वभक्तानपि निष्कल्मषान् करोतीत्यर्थः। तीर्थे प्रयागादौ संनिहितस्तीर्थ्यः। कूले नदीतीरे प्रतिष्ठापितलिङ्गरूपेणावतिष्ठते इति कूल्यः। पारे ससारसमुद्रस्य परतीरे मुमुक्षुभिर्ध्येयत्वेनावतिष्ठते इति पार्यः। अवारे अर्वाक्तीरे ससारमध्ये काम्यफलप्रदत्वेनावतिष्ठते इत्यवार्यः। प्रकृष्टेन मन्त्रजपादिरूपेण पापतरणहेतुः प्रतरणः। तत्त्वज्ञानरूपेण कृत्स्नससारोत्तरणहेतुः उत्तरणः। सभवत्यपि संसारोत्तरणहेतौ तत्त्वज्ञाने तदुपेक्ष्य काम्यकर्मानुष्ठानेन संसारे पुनरागमनं आतारः तमर्हतीत्यातार्यः काम्यफलप्रद इत्यर्थः। अल संपूर्ण यथा भवति

(१) तैसं. ४।५।८।१,२, कासं १७।१५ (५१) शङ्गाय (शङ्गवे) नमो अग्रे (नमोऽग्रे) (नम आतार्याय चाऽऽलाद्याय च०), मैसं. २।९।७,८ (३३,३४) कासंवत्, शुसं. १६।३९-४३ शम्भवे च मयोभवे (शम्भवाय च मयोभवाय) शेषं कासंवत्.

तथा कर्मफलमत्तीत्यलादो जीवः ' तयोरन्यः पिप्पल स्वाद्वत्ति ' ( मुउ. ३।१।१ ) इति श्रुतेः । तस्य प्रेरकत्वेन तत्संबन्धित्वादालाद्यः । शष्प बालतृण गङ्गातीरादावुत्पन्न कुशाङ्कुरादि तदर्हतीति शष्प्यः । नदीमध्यगत फेनमर्हतीति फेन्यः । सिकतामर्हतीति सिकत्यः । प्रवाहमर्हतीति प्रवाह्यः । यः पुरुषः श्रद्धालुः सन् स्नानादितत्परो निरन्तर गङ्गादितीरे वर्तते तद्रूप इति शष्प्यादिशब्दाना चतुर्णा तात्पर्यार्थः । तैसा.

**नम इरिण्याय च प्रपथ्याय च । नमः किंशिलाय च क्षयणाय च । नमः कपर्दिने च पुलस्तये च । नमो गोष्ठ्याय च गृह्याय च । नमस्तल्प्याय च गेह्याय च । नमः काट्याय च गह्वरेष्ठाय च । नमो ह्रदय्याय च निवेष्प्याय च । नमः पांसव्याय च रजस्याय च । नमः शुष्क्याय च हरित्याय च । नमो लोप्याय चोलप्याय च । नम ऊर्व्याय च सूर्म्याय च । नमः पर्ण्याय च पर्णशद्याय च । नमोऽपगुरमाणाय चाभिघ्नते च । नम आक्खिदते च प्रक्खिदते च ॥**

इरिण ऊषरं तत्र भवः इरिण्यः । प्रपथो बहुभिः सेवितो मार्गस्तत्र भवः प्रपथ्यः । कुत्सिताः क्षुद्राः शिलाः यत्र प्रदेशे तादृशः शार्करिलः प्रदेशः किंशिलः । क्षयणो निवासयोग्यो देशः । कपर्दी जटाबन्धवान् । भक्ताना पुरतस्तिष्ठतीति पुलस्तिः । गवां स्थानं गोष्ठं तत्र भवो गोष्ठ्यः । गृहे भवो गृह्यः । तल्पे खट्वाया शयानस्तल्प्यः । गेहे प्रासादे भवो गेह्यः । कुत्सितमटति कण्टकलतादिपूर्णतया दुष्प्रवेशत्व प्राप्नोतीति दुर्गमोऽरण्यविशेषः काटस्तत्र भवः काट्यः । गह्वरे विषमे गिरिगुहादौ तिष्ठतीति गह्वरेष्ठः । ह्रदेषु अगाधजलेषु भवो ह्रदय्यः । निवेष्प नीहारजल तत्र भवो निवेष्प्यः । पांसुषु परमाणुष्ववस्थितः पांसव्यः । रजसि विस्पष्टाया धूल्यामवस्थितो रजस्यः । शुष्केषु काष्ठेषु भवः शुष्क्यः । हरितमार्द्रं तत्र भवो हरित्यः । लुप्यते तृणादिकमस्मिन्निति लोपः कठीनप्रदेशः तत्र भवो लोप्यः । उलपा बल्वजतृणादयस्तत्र भवः उलप्यः । उर्व्यां पृथिव्या भवः ऊर्व्यः । शोभना ऊर्मयो यस्या नद्यां सेय सूर्मिः तत्र भवः सूर्म्यः । पर्णेषु पत्रेषु भवः पर्ण्यः । शुष्काणा पर्णाना सघातः पर्णशदः तत्र भवः पर्णशद्यः । अपगुरमाणः उद्यतायुधः । अभिघ्नन् प्रहरन् । आक्खिदन् ईषत्खेदयन् । प्रक्खिदन् अत्यन्त खेदयन् ।

तैसा.

**नम आखिदाय च विखिदाय च ॥**

**नमो वः किरिकेभ्यो देवानां हृदयेभ्यः । नमो विक्षीणकेभ्यः । नमो विचिन्वत्केभ्यः । नम आनिर्हतेभ्यः । नम आमीवत्केभ्यः ॥**

किरन्ति भक्तेभ्यो धनानीति किरिकाः उदाराः रुद्रावताराः । ते च देवानां हृदयभूताः सर्वदेवप्रियत्वात् तादृशेभ्यो वो युष्मभ्यं नमः । क्षीणकेभ्यो विपरीताः विक्षीणकाः कदाचिदपि क्षयरहिता इत्यर्थः । विचिन्वन्ति अपेक्षितमर्थं सपादयन्तीति विचिन्वत्काः । आ समन्तात् निःशेषेण हतं पाप

---

(१) तैसं. ४।५।९।१,२; कासं. १७।१५ (५१) पुलस्तये ( पुलस्तिने ) ह्रदय्याय च निवेष्प्याय ( ह्रदव्याय च निवेष्याय ) ऊर्व्याय ( ऊर्म्याय ) पर्णशद्याय ( पर्णशादाय ) आक्खिदते च प्रक्खिद ( आखिदते च प्रखि ), मैसं. २।९।८ ( ३४ ) क्षयणाय ( क्षेणाय ) नम कप... स्तये च ( नम. शिखण्डिने च पुलस्तिने च ) गह्वरेष्ठाय ( गह्वरेष्ठ्याय ) नमो ह्रद . .. ष्प्याय च ( नमो नीवेष्प्याय च ह्रदाय च ) शुष्क्याय ( शुष्याय ) चोलप्याय ( चोलपाय ) ऊर्व्याय ( ऊर्म्याय ) पर्ण्याय ( पर्णाय ) शद्याय ( शादाय ) आक्खिदते च प्रक्खि ( आखिदते च प्रखि ); शुसं. १६।४३-४६ गृह्याय ( व्रज्याय ) ह्रदय्याय ( ह्रदय्याय ) सूर्म्याय ( सूर्व्याय ) पर्ण्याय ( पर्णाय ) शद्याय ( शदाय ) नमोऽपगुर ( नम उद्गुर ) आक्खिदते च प्रक्खि ( आखिदते च प्राखि ).

(१) कासं. १७।१५ (५१), मैसं. २।९।८ ( ३४ ) विखि ( प्राखि ).

(२) तैसं. ४।५।९।२; कासं. १७।१६ (५२) ( नम आमीवत्केभ्य. ० ), मैसं. २।९।९ ( ३५ ) व किरिकेभ्यो ( गिरिकेभ्यो. ) विक्षीणकेभ्य. ( आक्षिणकेभ्य ) आनिर्हतेभ्यः ( आनृहतेभ्य. ) ( नम आमीवत्केभ्यः ० ), शुसं. १६।४६ विक्षीणकेभ्यः ( विक्षिणत्केभ्य ) ( नम आमीवत्केभ्य. ० ); शब्रा. ९।१।१।२२, २३.

यैस्ते आनिर्हताः । आ समन्तात् मीवन्ति स्थूलीभाव प्राप्नुवन्तीत्यामीवत्काः । अत्र विक्षीणकविचिन्वत्कानिर्हतामीवत्केषु देवाना हृदयेभ्य इत्यनुषज्यते । पञ्चमानुवाकमारभ्य नवमान्तेष्वनुवाकेष्वन्यतरतोनमस्काराणि बहूनि यजूष्यभिहितानि । तैः सर्वैः परमेश्वरस्य सार्वात्म्य प्रतिपादयितु एकैकेन यजुषा स्थावर जङ्गम चैकैकं रूपमभिहितम् । तैसा.

स्वस्य स्वीयाना च रक्षणार्थ प्रार्थनीयः शिवतनुधरः

**द्रापे अन्धसस्पते दरिद्रन्नीललोहित.।**
**एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किं चनाऽऽममत् ॥**

द्रापयति कुत्सितां गति प्रापयतीति द्रापिः, पापिनो नरकप्रदानेन क्लेशयतीत्यर्थः । अन्धः अन्न तस्य पतिः पालकः भक्तानामन्नं पालयतीत्यर्थः । दरिद्रत् अकिंचनः स्वय विरक्तः केवल इत्यर्थः । 'एकमेवाद्वितीय ब्रह्म' 'नेह नानास्ति किंचन' इति श्रुतेः। कण्ठे नीलः अन्यत्र लोहितः इति नीललोहितः । एतैः शब्दैः सबोध्यमान हे रुद्र एषा अस्मदीयाना पुरुषाणा पुत्रपौत्रादीनामेषा अस्मदीयाना पशूना गोमहिष्यादीना च समूह मा भेः मा भीषय । एषामुक्ताना सर्वेषां मध्ये किंचनैकमपि वस्तु मा अरः मा गच्छतु मा विनश्यत्वित्यर्थः । मो आममत् मैव रुग्णमभूत् । तैसा.

**यो ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी ।**
**शिवा रुद्रस्य भेषजी तया नो मृड जीवसे ॥**

हे रुद्र ते त्वदीया शिवा शान्ता तनूर्या विद्यते तया तन्वा नः अस्मान् जीवसे जीवयितुं मृड सुखय । कथ तन्वाः शिवत्व, तदुच्यते—यस्मादेव विश्वाहभेषजी सर्वेष्वहःसु रोगदारिद्र्यादेः औषधवद्विनाशहेतुः तस्माच्छिवा। किंच, यस्माद्रुद्रस्य तादात्म्यप्राप्तये भैषज्यौषधरूपा ज्ञानप्रदानेन जन्ममरणादिदुःख निवारयति तस्मादपि एषा शिवा । तैसा.

**इमा॰ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम् ।**
**यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥**

यथा येन प्रकारेण नः अस्मदीयाय द्विपदे पुत्रपौत्रादिरूपाय मनुष्याय चतुष्पदे गोमहिष्यादिरूपाय पशवे च शमसत् सुख स्यात् । किंच अस्मिन्ग्रामे विश्व सर्व प्राणिजातं पुष्टं सुखपूर्णं अनातुरं उपद्रवरहित च यथा भवति तथा वय रुद्राय रुद्रार्थं इमा मति पूजाध्यानादिविषया बुद्धिं प्रभरामहे प्रकर्षेण पोषयामः । कीदृशाय रुद्राय । तवसे बलयुक्ताय अस्मदपेक्षित कर्तुं समर्थायेत्यर्थः । कपर्दिने जटाबन्धयुक्ताय तापसवेषायेत्यर्थः । क्षयद्वीराय क्षीयमाणप्रतिपक्षपुरुषाय अन्यथाभानरूपपापविनाशहेतवे इत्यर्थः । तैसा.

**मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।**
**यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ ॥**

हे रुद्र नः अस्मान्मृडय इह लोके सुखय । उतापि च नः अस्माक परलोकेऽपि मयः सुख कृधि कुरु । क्षयद्वीराय क्षपितास्मदीयपापाय ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम । पिता पालको मनुः प्रजापतिः शं च

---

(१) तैसं. ४।५।१०।१; कासं. १७।१६ (५३) दरि...ममत् ( दरिद्र नीललोहित । आसां प्रजानामेषा पुरुषाणामेषां पशूनाम् । मा भैर्मा रौङ् मा नः किञ्चनाममत् ), मैसं. २।९।९ (३६) दरिद्र...ममत् ( दरिद्र नीललोहित। एषा पशूनामासा प्रजाना मा भैर्मा रुङ् मो च नः कि चनाममत् ), शुसं. १६।४७ दरिद्र...ममत् ( दरिद्र नीललोहित । आसा प्रजानामेषा पशूना मा भेर्मा रोङ्मो च न. किचनाममत् ), शब्रा. ९।१।१।२४.

(२) तैसं. ४।५।१०।१; कासं. १७।१६ (५५) रुद्रस्य ( रुतस्य ); मैसं. २।९।९ (३८) भेषजी ( भेषजा ) रुद्रस्य भेषजी ( रुतस्य भेषजा ); शुसं. १६।४९ विश्वाह ( विश्वाहा ) रुद्रस्य ( रुतस्य ).

(१) ऋसं. १।११४।१ इमा॰ ( इमा ) मतिम् (मती.); तैसं. ४।५।१०।१, कासं. १७।१६ (५४) ऋसंवत्, मैस. २।९।९ (३७) ऋसंवत्, शुसं. १६।४८ (न. ०) शेषं ऋसंवत्

(२) ऋसं. १।११४।२ रायजे ( रायेजे ) प्रणीतौ ( प्रणीतिषु ); तैसं. ४।५।१०।२; कासं. ४०।११ (८७) रायजे ( रायेजे ) प्रणीतौ ( प्रणीतिषु ).

सुखं च योश्च दुःखपृथग्भावं च यत् आयजे यत्किंचित्सपादितवास्तत्सर्वं वयं हे रुद्र तव प्रणीतौ प्रणये स्नेहातिशये सति अश्याम प्राप्नुयाम।

तैसा.

मा[1] नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्।
मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः॥

हे रुद्र नः अस्मदीयं महान्तं स्थविरं पुरुषं मा रीरिषो मा हिंसीः। उतापि च नः अस्मदीयमर्भकं बालं मा रीरिषः। किंच नः अस्मदीयमुक्षन्तं सेचनसमर्थं युवानं पुरुषं मा रीरिषः। उतापि च नः अस्मदीयमुक्षितं गर्भस्थं पुरुषं मा रीरिषः। नः अस्मदीयं पितरं मा वधीः। उतापि च मातरं मा वधीः। नः अस्मदीयाः प्रियाश्च तनुवः शरीराणि मा रीरिषः।

तैसा.

मा[2] नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः।
वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते॥

हे रुद्र नः अस्मदीये तोके अपत्यमात्रे तनये विशेषतः पुत्रे मा रीरिषः हिंसां मा कुरु। नः अस्मदीये आयुषि मा रीरिषः। नः अस्मदीयेषु गोषु मा रीरिषः। नः अस्मदीयेषु अश्वेषु मा रीरिषः। भामितः क्रुद्धः सन् नः अस्मदीयान् वीरान् भृत्यान् मा वधीः। वयं हविष्मन्तो हविर्युक्ताः ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम। तैसा.

(१) ऋसं. १।११४।७ प्रिया मा नस्तनुवो (मा नः प्रियास्तन्वो); असं. ११।२।२९, तैसं. ४।५।१०।२; शुसं. १६।१५ ऋसंवत्; नाउ. ५२.

(२) ऋसं. १।११४।८ आयुषि (आयौ) ष्मन्तो नमसा विधेम ते (ष्मन्तः सदमित्त्वा हवामहे); तैसं. ३।४।११।२, ४।५।१०।३, कासं. २३।१२ (४८) आयुषि (आयौ); मैसं. ४।१२।६ (१७९); शुसं. १६।१६ उत्तरार्धे (मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित् त्वा हवामहे); नाउ. ५३; श्वेउ. ४।२२ भामितो......ते (भामिनोऽवधीर्हविष्मन्तः सदमित्त्वा हवामहे).

आरात्ते[1] गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु।
रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः॥

गोघ्ने गोघ्नस्य पूरुषघ्ने पुत्रपौत्रादिपुरुषघ्नस्य क्षयद्वीराय क्षपितभृत्यस्य ते तव उग्ररूपं आरात् अस्तु दूरे तिष्ठतु। यत्तु सुम्नं त्वदीयं सुखकरं रूपं तत् अस्मे अस्मासु अस्तु। 'घोराऽन्या शिवाऽन्या' इति यच्छरीरद्वयमुक्तं तयोर्द्वयोर्मध्ये यत् घोरं शरीरं तत् दूरे गच्छतु। शिवं शरीरं अत्र आगच्छत्वित्यर्थः। किंच नः अस्मान् रक्ष सर्वतः पालय। किंच हे देव अधि ब्रूहि अस्मान् इतरेभ्यो यजमानेभ्योऽधिकान् देवेषु ब्रूहि। अध चापि च द्विबर्हाः द्वयोर्लोकयोर्वर्धयिता त्वं शर्म यच्छ सुखं देहि। तैसा.

स्तुहि[2] श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम्।
मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्नि वपन्तु सेनाः॥

हे मदीयवचः श्रुतं प्रसिद्धं रुद्रं स्तुहि। कीदृशं, गर्तसदं गर्तसदृशे हृदयपुण्डरीके सर्वदा तिष्ठन्तम्। 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' (भ. गी. १८।६१) इति स्मृतेः। युवानं नित्यतरुणम्। उपहत्नुं उग्रं प्रलयकाले सर्वं जगत्संहर्तुं उग्ररूपिणम्। तत्र दृष्टान्तः—भीमं मृगं न भयंकरं सिंहमिव, यथा गजविदारणायोग्रः सिंहो भवति तद्वत्। हे रुद्र स्तवानः अस्मद्वचसा स्तूयमानः जरित्रे जरणशीले दिनेदिने क्षीयमाणेऽस्मच्छरीरे मृड सुखं कुरु। ते त्वदीयाः सेना अस्मदन्यं वैरिणं निवपन्तु विनाशयन्तु। तैसा.

(१) ऋसं. १।११४।१० (आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु। मृळा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः॥); तैसं. ४।५।१०।३.

(२) ऋसं. २।३३।११ स्तवानो अन्यं (स्तवानोऽन्यं); असं. १८।१।४० युवानं मृगं न (जनानां राजानं) अन्यं...सेना. (अन्यमस्मत्ते नि वपन्तु सन्येम्); तैसं. ४।५।१०।३; तैब्रा. २।८।६।९.

[1]परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय ॥

हन्यतेऽनयेति हेतिः आयुध, रुद्रस्य हेतिः नः अस्मान् परिवृणक्तु परितो वर्जितान् करोतु कदाचिदपि मा विध्यत्वित्यर्थः । त्वेषस्य क्रोधोज्ज्वलितस्य अघायोः अघ पाप प्रहाररूपमिच्छतो रुद्रस्य या दुर्मतिः उग्रबुद्धिः साऽप्यस्मान् परिवृणक्तु । स्थिरा विरोधिनाशनाय या दृढा दुर्मतिरस्ति तां मघवद्भ्यो हविर्लक्षणान्नयुक्तेभ्यो यजमानेभ्यः सकाशादव तनुष्व अवतता अपनीता कुरु । हे मीढ्वः कामानामभिवर्षक तोकाय अस्मत्पुत्राय तनयाय तदीयपुत्राय च मृडय सुख देहि । तैसा.

[2]मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्ष आयुधं निधाय कृत्ति वसान आ चर पिनाकं बिभ्रदा गहि ॥

हे मीढुष्टम अतिशयेन सेचक कामानामभिवर्षक हे शिवतम अतिशयेन शान्तस्वरूप नःअस्मान् प्रति शिवः शान्तः सुमनाः सौमनस्येन स्नेहेन युक्तश्च भव । आयुध त्रिशूलादिकं परमे अत्युन्नते वृक्षे वटाश्वत्थादिरूपे निधाय यथा अस्माभिर्न दृश्यते तथाऽवस्थाप्य कृत्तिं वसानो व्याघ्रचर्ममात्र परिदधान आचर अस्मदाभिमुख्येन आगच्छ । आगच्छन्नपि पिनाक बिभ्रत् भूषणार्थ धनुर्मात्र हस्ते धारयन् बाणादिक परित्यज्य आ गहि आगच्छ । तैसा.

[1]विकिरिद विलोहित नमस्ते अस्तु भगवः ।
यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्नि वपन्तु ताः ॥

कीर्यन्ते भक्ताना संनिधौ बहुधा प्राक्षिप्यन्ते इति किरयो धनानि तानि ददातीति किरिदः । विशेषेण किरिदो विकिरिदः । विलोहितो लौहित्यरहितः श्वेतः इत्यर्थः । यद्वा । विशेषेण लोहितो विलोहितः । भगवो भगवन् षड्गुणसपन्न । यथोक्तविशेषणत्रयविशिष्ट हे रुद्र ते तुभ्यं नमोऽस्तु । ते तव सहस्रं सहस्रसख्याका हेतयो यान्यायुधानि सन्ति ताः सर्वा अस्मदन्य विरोधिन निवपन्तु विनाशयन्तु । तैसा.

[2]सहस्राणि सहस्रधा बाहुवोस्तव हेतयः ।
तासामीशानो भगवः पराचीना मुखा कृधि ॥

हे रुद्र तव बाहुवोः हस्तयोः हेतयः सहस्रधा सहस्रप्रकाराः सहस्राणि सहस्रसख्याका विद्यन्ते । धनुः खड्गत्रिशूलमित्येव जातिभेदेन सहस्रप्रकारत्वम् । एकैकस्यां जातौ बहवः सहस्रसंख्याकाः । हे भगवः षड्गुणोपेत त्वमीशानः समर्थः सन् तासां हेतीना मुखा मुखानि शल्यानि पराचीना कृधि अस्मत्तः पराङ्मुखानि कुरु । तैसा.

द्युभूमिदिगन्तरिक्षभूगर्भवृक्षान्नजलतीर्थपथादिष्वनन्तरूपैः स्थितो रक्षणार्थं प्रार्थनीयः

[3]सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥

(१) ऋसं. २।३३।१४ पूर्वार्धे ( परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् ) मृडय ( मृळ ); तैसं. ४।५।१०।४; कासं. १७।१६ ( ५६ ) मृडय ( मृड ), मैसं २।९।९ ( ३९ ) परि णो ( परि नो ) शेषं कासंवत्, शुसं. १६।५० मैसंवत्.

(२) तैसं. ४।५।१०।४; कासं. १७।१६ ( ५७ ) आ चर...गहि ( उच्चर पिनाकं बिभ्रदुच्चर ); मैसं. २।९।९ ( ४० ) न. ( न एधि ) उत्तरार्धे ( अवतत्य धनुष्ट्वमक्रुद्ध. सुमना भव । पिनाकं बिभ्रदागहि कृत्तिꣳ वसाना उच्चर ), शुसं. १६।५१.

(१) तैसं. ४।५।१०।५; कासं. १७।१६ ( ५८ ) विकिरिद ( विकिरिड ) न्यमस्म ( न्येऽस्म ), मैसं. २।९।९ ( ४१ ) विकिरिद ( व्यक्रुड ) न्यमस्म (न्याꣳस्ते अस्म); शुसं. १६।५२ विकिरिद ( विकिरिद्र ).

(२) तैसं. ४।५।१०।५, कासं. १७।१६ ( ५९ ) पूर्वार्धे ( सहस्रधा सहस्राणि हेतयस्तव बाह्वो. ) कृधि ( कुरु ); मैसं. २।९।९ ( ४२ ) पूर्वार्धे ( सहस्राणि सहस्रशो हेतयस्तव बाह्वोः ) भगवः ( मघवन् ), शुसं. १६।५३ सहस्रधा बाहुवो ( सहस्रशो बाह्वो ).

(३) तैसं. ४।५।११।१; कासं. १७।१६ ( ६० ) सहस्राणि सहस्रशो ( असंख्याता सहस्राणि ), मैसं. २।९।९ ( ४३ ) कासंवत्; शुसं. १६।५४ कासंवत्; शब्रा. ९।१।१।३०.

भूम्यामधि भूमेरुपरि ये रुद्राः सहस्रशः सहस्रप्रकाराः सहस्राणि सहस्रसङ्ख्याकाः सन्ति, सहस्रश इति जात्युक्तिः । विनायकप्रमथशैलादयो जातिभेदाः, ते सर्वेऽपि रुद्रविशेषाः । तत्राप्येकस्यां जातौ बहुभिः सहस्रैः सङ्ख्याता मूर्तिविशेषाः । तेषां सर्वेषां धन्वानि धनूंषि सहस्रयोजने अस्मत्तः सहस्रयोजनव्यवहितदेशे अव तन्मसि अवततज्याकानि स्थापयामः । तैसा.

[1]अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि ॥ *

अस्मिन् दृश्यमाने महत्यर्णवे महासमुद्रसदृशे प्रौढेऽन्तरिक्षेऽधिश्रित्य वर्तमाना भवा रुद्रमूर्तिविशेषा ये सन्ति । तेषां सहस्रयोजने इत्याद्युक्तार्थमुत्तरार्धं द्वितीयादिषु नवमान्तासु ऋक्षु अनुषज्जते । तदनुषङ्गद्योतनायैव दशम्या ऋचि पुनः पठितम् । तैसा.

[2]नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ॥

ग्रीवायामेकस्मिन्प्रदेशे नीलवर्णा नीलग्रीवाः । प्रदेशान्तरे श्वेतवर्णाः शितिकण्ठाः । तादृशाः शर्वा रुद्रमूर्तिविशेषाः । कीदृशाः, अधः क्षमाचराः भूमेरधस्तात्पातालेषु सञ्चरन्ति । तेषामित्यादि पूर्ववत् । तैसा.

[3]नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः ।

दिवमुपश्रिताः स्वर्गे वर्तमानाः । तैसा.

[4]ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः ॥

यथा लोकेष्ववस्थिता रुद्रास्तथा वृक्षेष्ववस्थिताः । तेषु केचित् सस्पिञ्जराः शष्पवद्बालतृणवत्पिञ्जरवर्णाः । नीलग्रीवाः नीलवर्णग्रीवाः । केचित् ग्रीवादेशे नीलवर्णोपेताः । अपरे पुनर्विलोहिताः विशेषेण रक्तवर्णाः । ईदृशा ये सन्ति तेषामित्यादि । तैसा.

[1]ये भूतानामधिपतयो विशिखासः कपर्दिनः ॥

भूतशब्देन अन्तर्हितशरीराः सन्तो मनुष्योपद्रवकारिणो गणविशेषा उच्यन्ते । तेषामधिपतयो ये रुद्राः तेषु केचिद्विशिखासो मुण्डितमूर्धानः । अपरे कपर्दिनो जटाबन्धोपेताः, तेषामित्यादि । तैसा.

[2]ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ॥

ये रुद्रा अन्नेषु भुज्यमानेषु गूढत्वेनावस्थिताः सन्तो जनान् विविध्यन्ति विशेषेण धातुवैषम्यादिना बाधन्ते । तथा पात्रेषु पातव्येषु क्षीरोदकादिषु गूढत्वेन अवस्थिताः पिबतो जनान् विविध्यन्ति, तेषामित्यादि । तैसा.

[3]ये पथां पथिरक्षय ऐलबृदा यव्युधः ॥

ये रुद्राः पथिरक्षयो लौकिकवैदिकमार्गाणां रक्षकाः । नात्र केषाञ्चिदेव मार्गाणां किंतु सर्वेषां पथां ते च रक्षकाः । ऐलबृदाः इरा अन्नं तस्य समूहः ऐरम् । ऐरमेव ऐलम् । तत् बिभ्रति इत्यैलभृतः । ऐलभृत एव ऐलबृदाः अन्नप्रदानेन पोषका इत्यर्थः । ते च यव्युधः, यौति मिश्रीभवति विरोधं करोतीति युः शत्रुः । युभिः शत्रुभिः सह युध्यन्तीति यव्युधः । अस्मदनिष्टनिवारका इत्यर्थः । तेषामित्यादि । तैसा.

[4]ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ॥

---

*कासं. मैसं. शुसं. इत्यत्र एतदारभ्य 'य एतावन्तश्च' इत्याद्यष्टमन्त्रेषु 'तेषाꣳ सहस्र' इति उत्तरार्धत्वेन पठितमस्ति ।

(१) तैसं. ४।५।११।१; कासं. १७।१६ (६१) अस्मिन्म (येऽस्मिन्म); मैसं. २।९।९ (४४) अस्मि... न्त (ये अस्मिन् महत्यर्णवे अन्त); शुसं. १६।५५, शब्रा. ९।१।१।३०.

(२) तैसं. ४।५।११।१; कासं १७।१६ (६३) नील (ये नील), मैसं. २।९।९ (४६) कासंवत्; शुसं. १६।५७.

(३) तैसं. ४।५।११।१; कासं. १७।१६ (६२) नील (ये नील), मैसं. २।९।९ (४५) कासंवत्; शुसं. १६।५६.

(४) तैसं. ४।५।११।१; कासं. १७।१६ (६४) वृक्षेषु सस्पि (वनेषु शष्पि), मैसं. २।९।९ (४७) कासंवत्; शुसं. १६।५८ सस्पि (शष्पि).

(१) तैसं. ४।५।११।१, कासं. १७।१६ (६६), मैसं. २।९।९ (४८); शुसं. १६।५९.

(२) तैसं. ४।५।११।१; कासं. १७।१६ (६५) ये अन्ने (येऽन्ने); मैसं. २।९।९ (५१); शुसं. १६।६२ कासंवत्.

(३) तैसं. ४।५।११।१, कासं. १७।१६ (६७) पथां (पथीनां) ऐलबृदा (ऐडमृदा), मैसं. २।९।९ (४९) ऐल ..धः (ऐलमृडा वो युधः), शुसं. १६।६० यव्युधः (आयुर्युधः).

(४) तैसं. ४।५।११।१; कासं. १७।१६ (६८); मैसं. २।९।९ (५०) सृकावन्तो (सृगवन्तो), शुसं. १६।६१ सृकावन्तो (सृकाहस्ता).

ये रुद्रास्तीर्थानि काशीप्रयागादीनि रक्षितु प्रचरन्ति। कीदृशा रुद्राः। सृकावन्तः सृकाः छुरिकाः हस्ते धार्यमाणास्तीक्ष्णाग्रा आयुधविशेषाः तद्युक्ताः केचित्। अपरे निषङ्गिणः खङ्गयुक्ताः तेषामित्यादि। तैसा.

**य॑ एतावन्तश्च भूया॑ऽसश्च दिशो रुद्रा वितस्थिरे। तेषा॑ऽ सहस्रयोजनेऽव धन्वानि तन्मसि ॥**

ये रुद्रा एतावन्तश्च 'सहस्राणि सहस्रशः' इत्यादृग्भिः यावन्त उक्ताः तावन्तोऽपि भूयासश्च इतोऽप्यधिका अन्ये बहवोऽपि दिशो वितस्थिरे सर्वा दिशः प्रविश्य स्थिताः तेषामित्यादि। तैसा.

**न॑मो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥**

अत्र पृथिव्यादिलोकभेदादिषु भेदाच्च यजुस्त्रय द्रष्टव्यम्। तदा एव पाठः संपद्यते—नमो रुद्रेभ्य इत्युपक्रम्य ये पृथिव्या येषामन्नमिषव इत्याद्यो मन्त्रः। येऽन्तरिक्षे येषा वात इषव इति द्वितीयो मन्त्रः। ये दिवि येषा वर्षमिषव इति तृतीयो मन्त्रः। तेभ्यो दश प्राचीरित्यादि सर्वत्र समानम्। ये रुद्राः पृथिव्या वर्तन्ते तेष्वपि रुद्रेषु येषा रुद्रविशेषाणामन्नमेवेषवो बाणाः, अपथ्यान्नभक्षणे प्रवर्त्य वाऽन्नार्थं चौर्यं कारयित्वा वा यान् हिंसन्ति तान् प्रति हिंसकाना रुद्राणामन्नमेवेषवस्तेभ्यः पृथिव्या स्थितेभ्योऽन्नबाणकेभ्यश्च रुद्रेभ्यो नमोऽस्तु। तथा ये रुद्राः अन्तरिक्षे वर्तन्ते तेषामपि मध्ये येषां वात इषवस्तीव्रेण वायुना रोगानुत्पाद्य हिंसन्ति तेभ्योऽन्तरिक्षवर्तिभ्यो वातेषुभ्यश्च रुद्रेभ्यो नमोऽस्तु। तथा ये रुद्रा दिवि वर्तन्ते तेष्वपि येषा रुद्रविशेषाणा वर्षमेवेषवोऽतिवृष्टयनावृष्टिभ्या प्राणिनो हिंसन्ति तेभ्यो दिवि स्थितेभ्यो वर्षेषुभ्यो रुद्रेभ्यो नमोऽस्तु। कीदृशो नमस्कार इति स एव विशेष्यते—दश प्राचीः, प्राङ्मुखत्वेनाञ्जलिकरणे दशाङ्गुलयः प्रागग्रा भवन्ति। एव दक्षिणादिषूर्ध्वान्तेषु योज्यम्। ईदृशैरञ्जलिविशेषैस्तेभ्यो रुद्रेभ्यो नमोऽस्तु। ते च रुद्रा नः अस्मान्मृडयन्तु सुखयन्तु। ते च वय नमस्कृतरुद्राः सन्तो य वैरिण तूष्णीमवस्थितमपि द्विष्मः, यश्च वैरी नः अस्मास्तूष्णीमवस्थितानपि द्वेष्टि, तमुभयविध वैरिणं हे रुद्रा वो युष्माक जम्भे विदारितास्ये दधामि स्थापयामि। तैसा.

**न॑मोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥**

**न॑मोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥**

**न॑मोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥**

(१) तैसं. ४।५।११।२; कासं. १७।१६ (६९) न्तश्च भूया॑ऽसश्च (न्तो वा भूयांसो वा); मैसं. २।९।९ (५२) कासंवत्; शुसं. १६।६३.

(२) तैसं. ४।५।११।२.

(१) कासं. १७।१६ (७०) नमोऽस्तु (नमो अस्तु) (ते नोऽवन्तु०) दध्मः (दधामि), मैसं. २।९।९ (५३) नमोऽस्तु (नमो अस्तु) (ते नोऽवन्तु०) मृडयन्तु (मृडन्तु); शुसं. १६।६४, शब्रा. ९।१।१।३५.

(२) कासं. १७।१६ (७०) नमोऽस्तु (नमो अस्तु) (तेऽनोऽवन्तु०) दध्मः (दधामि), मैसं २।९।९ (५३) नमोऽस्तु (नमो अस्तु) येऽन्तरि (ये अन्तरि) (ते नोऽवन्तु०) मृडयन्तु (मृडन्तु), शुसं. १६।६५, शब्रा. ९।१।१।३६.

(३) कासं. १७।१६ (७०) नमोऽस्तु (नमो अस्तु) (ते नोऽवन्तु०) दध्मः (दधामि), मैसं. २।९।९ (५३) नमोऽस्तु (नमो अस्तु) (ते नोऽवन्तु०) मृडयन्तु (मृडन्तु); शुसं. १६।६६; शब्रा. ९।१।१।३७.

[1]अघोरेभ्यो अथ घोरेभ्यो अघोरघोरतरेभ्यश्च ।
सर्वतः शर्वशर्वेभ्यो नमस्ते रुद्र रूपेभ्यो नमः ॥
[2]यः पथः समनुयाति स्वर्गं लोक गामिव सुप्रणीतौ ।

तेन त्वं भगवान् याहि पथा ॥
इमे हिरण्यवर्णाः स्वꣳ योनिमाविशन्तौ ॥

गच्छ त्वं भगवान् पुनरागमनाय पुनर्दर्शनाय सहदेव्याय सहवृषाय सहगणाय सहपार्षदाय यथाहुताय नमोनमाय नमः शिवाय नमस्ते अस्तु मा मा हिꣳसीः ॥

आवाहितमावाहित, नमस्कृतं नमस्कृत, विसर्जितꣳ विसर्जित, पथं गछ पथं गछ, दिवं गछ दिवं गछ, स्वर्गछ स्वर्गछ, ज्योतिर्गछ ज्योतिर्गछ, नमस्ते अस्तु, मा मा हिꣳसीः ॥

सहस्राक्ष, सहस्रपात्, भवशर्वपशुपत्युग्रदेवमहा-
देवरुद्रेशानाशनीत्यष्टनामा, अबग्निवाय्वोषधिवन-
स्पत्यादित्यचन्द्रमोऽन्नेन्द्रेत्यष्टमूर्तिः

[3]प्रजापतिः प्रजातिकामस्तपोऽतप्यत । तस्मात्तप्तात्पञ्चाजायन्त । अग्निर्वायुरादित्यश्चन्द्रमा उषाः पञ्चमी । तानब्रवीत् । यूयमपि तप्यध्वमिति तेऽदीक्षन्त । तान्दीक्षितांस्तेपानानुषाः प्राजापत्याप्सरोरूपं कृत्वा पुरस्तात्प्रत्युदैत् । तस्यामेषां मनः समपतत् । ते रेतोऽसिञ्चन्त । ते प्रजापतिं पितरमेत्याब्रुवन् । रेतो वा असिञ्चाम । हा इदं नो मामुया भूदिति । स प्रजापतिर्हिरण्मयं चमसमकरोदिषुमात्रमूर्ध्वमेवं तिर्यञ्चम् । तस्मिन्नेतत्समसिञ्चत् । तत उदतिष्ठत्सहस्राक्षः सहस्रपात्सहस्रेण प्रतिहिताभिः ॥ १ ॥

स प्रजापतिं पितरमभ्यायच्छत् । तमब्रवीत् । कथा माऽभ्यायच्छसीति । नाम मे कुर्वित्यब्रवीत् । न वा इदमविहितेन नाम्नाऽन्नमत्स्यामीति । स वै त्वमित्यब्रवीद्भव एवेति । यद्भव आपः । तेन ह वा एनं न भवो हिनस्ति । नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चन । अथ य एनं द्वेष्टि स एव पापीयान्भवति । न स य एवं वेद । तस्य व्रतम् । आर्द्रमेव वासः परिदधीतेति ॥ २ ॥

तं द्वितीयमभ्यायच्छत् । तमब्रवीत् । कथा माऽभ्यायच्छसीति । द्वितीयं मे नाम कुर्वित्यब्रवीत् । न वा इदमेकेन नाम्नाऽन्नमत्स्यामीति । स वै त्वमित्यब्रवीच्छर्व एवेति । यच्छर्वोऽग्निः । तेन न ह वा एनं शर्वो हिनस्ति । नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चन । अथ य एनं द्वेष्टि स एव पापीयान् भवति । न स य एवं वेद । तस्य व्रतम् । सर्वमेव नाश्नीयादिति ॥ ३ ॥

तं तृतीयमभ्यायच्छत् । तमब्रवीत् । कथा माऽभ्यायच्छसीति । तृतीयं मे नाम कुर्वित्यब्रवीत् । न वा इदं द्वाभ्यां नामभ्यामन्नमत्स्यामीति । स वै त्वमित्यब्रवीत्पशुपतिरेवेति । यत्पशुपतिर्वायुः । तेन न ह वा एनं पशुपतिर्हिनस्ति । नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चन । अथ य एनं द्वेष्टि स एव पापीयान् भवति । न स य एवं वेद । तस्य व्रतम् । ब्राह्मणमेव न परिवदेदिति ॥ ४ ॥

तं चतुर्थमभ्यायच्छत् । तमब्रवीत् । कथा माऽभ्यायच्छसीति । चतुर्थं मे नाम कुर्वित्यब्रवीत् । न वा इदं त्रिभिर्नामभिरन्नमत्स्यामीति । स वै त्वमित्यब्रवीदुग्र एव देव इति । यदुग्रो देव ओषधयो वनस्पतयः । तेन न ह वा एनमुग्रो देवो हिनस्ति । नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चन । अथ य एनं द्वेष्टि स एव पापीयान्भवति । न स य एवं वेद । तस्य व्रतम् । स्त्रिया एव विवरं नेक्षेतेति ॥ ५ ॥

तं पञ्चममभ्यायच्छत् । तमब्रवीत् । कथा माऽभ्यायच्छसीति । पञ्चमं मे नाम कुर्वित्यब्रवीत् । न वा इदं चतुर्भिर्नामभिरन्नमत्स्यामीति । स वै त्वमित्यब्रवीन्महानेव देव इति । यन्महान्देव आदित्यः । तेन न ह वा एनं महान्देवो हिनस्ति । नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चन । अथ य एनं द्वेष्टि स एव पापीयान्भवति । न स य एवं वेद । तस्य व्रतम् । उद्यन्तमेवैनं नेक्षेतास्तं यन्तं चेति ॥ ६ ॥

(१) मैसं. २।९।१०; तैआ १०।४५।१ ( अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वतः शर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ ), नाउ. १९ ( अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ ). (२) मैसं. २।९।१० ( ५५–५८). (३) शाब्रा. ६।१–९.

तं षष्ठमभ्यायच्छत्। तमब्रवीत्। कथा माऽभ्यायच्छसीति। षष्ठं मे नाम कुर्वित्यब्रवीत्। न वा इदं पञ्चभिर्नामभिरन्नमत्स्यामीति। स वै त्वमित्यब्रवीद्रुद्र एवेति। यद्रुद्रश्चन्द्रमाः। तेन न ह वा एनं रुद्रो हिनस्ति। नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चन। अथ य एनं द्वेष्टि स एव पापीयान्भवति। न स य एवं वेद। तस्य व्रतम्। विमूर्तमेव नाश्नीयान्मज्जानं चेति ॥ ७ ॥

तं सप्तममभ्यायच्छत्। तमब्रवीत्। कथा माऽभ्यायच्छसीति। सप्तमं मे नाम कुर्वित्यब्रवीत्। न वा इदं षड्भिर्नामभिरन्नमत्स्यामीति। स वै त्वमित्यब्रवीदीशान एवेति। यदीशानोऽन्नम्। तेन न ह वा एनमीशानो हिनस्ति। नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चन। अथ य एनं द्वेष्टि स एव पापीयान्भवति। न स य एवं वेद। तस्य व्रतम्। अन्नमेवेच्छमानं न प्रत्याचक्षीतेति ॥ ८ ॥

तमष्टममभ्यायच्छत्। तमब्रवीत्। कथा माऽभ्यायच्छसीति। अष्टमं मे नाम कुर्वित्यब्रवीत्। न वा इदं सप्तभिर्नामभिरन्नमत्स्यामीति। स वै त्वमित्यब्रवीदशनिरेवेति। यदशनिरिन्द्रः। तेन न ह वा एनमशनिर्हिनस्ति। नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चन। अथ य एनं द्वेष्टि स एव पापीयान्भवति। न स य एवं वेद। तस्य व्रतम्। सत्यमेव वदेद्धिरण्यं च बिभृयादिति। स एषोऽष्टनामाऽष्टधाविहितो महान्देवः। आ ह वा अस्याष्टमात्पुरुषात्प्रजाऽन्नमत्ति। वशीयान् वशीयान् हैवास्य प्रजायामाजायते। य एवं वेद ॥ ९ ॥

---

## वायुः

वायु देवानामात्मा

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥

अथ वायुः देवाना इन्द्रादीनामपि आत्मा जीवरूपेण तेष्ववस्थानात् भुवनस्य अपि भूतजातस्य गर्भः गर्भवत्प्राणरूपेणान्तर्वर्तमानः एषः ईदृशः देवः। यथावशं यथाकाम यथेच्छ चरति वर्तते। अनिवारितगतिः सन् क्वचिच्छीघ्र गच्छति क्वचिच्छनैर्गच्छति कुतश्चिच्छरीरान्निष्क्रामति अन्यच्च शरीर प्रविशतीत्येव यथेच्छं वर्तते इत्यर्थः। अस्य वायोरागच्छतः घोषा इत् शब्दा एव शृण्विरे श्रूयन्ते। रूप स्वरूप तु न दृश्यते नीरूपत्वात्। अदृग्विषयत्वेन शब्देनैवानुमीयते इत्यर्थः। तस्मै वाताय वायवे हविषा चरुपुरोडाशादिलक्षणेन विधेम परिचरेम।
ऋसा.

वायु. ब्रह्म विद्युद्वृष्टिचन्द्रमआदित्याग्नीनामन्तर्धानोद्भवाधिष्ठानम्

अथातो ब्रह्मणः परिमरः। यो ह वै ब्रह्मणः परिमरं वेद। पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते ॥

अथ पौरोहित्यविधानानन्तरं यतः पुरोहितेन सपाद्यः शत्रुक्षयः अपेक्षितः। अतः कारणाद्ब्रह्मणः परिमर एतन्नामकः कर्मविशेषेऽभिधीयते इति शेषः। ब्रह्मशब्देनात्र वायुर्विवक्षितः। 'अय वै ब्रह्म योऽय पवते' इति वक्ष्यमाणत्वात्। तस्य वायोः परितो विद्युदादीना मरणप्रकारः परिमर इत्युच्यते। तद्भावनारूपस्य कर्मविशेषस्य तदेव नामधेयम्। यः पुमान् ब्रह्मणः परिमरं यदा मनसा भावयति। एन परितः एतस्य परितोऽवस्थितासु सर्वासु दिक्षु द्वेष कुर्वन्तः शत्रवो म्रियन्ते। इदानीमेन द्विषन्तो जात्या शत्रवः सपत्नास्तेऽपि परितो म्रियन्ते। तस्मादेतद्वेदनं संपादनीयम्। ऐब्रासा.

अयं वै ब्रह्म योऽयं पवते। तमेताः पञ्च देवताः परिम्रियन्ते विद्युत् वृष्टिश्चन्द्रमा आदित्योऽग्निः। विद्युद्वै विद्युत्य वृष्टिमनुप्रविशति। साऽन्तर्धीयते। तां न निर्जानन्ति ॥

वेदनस्वरूपमाह—योऽय वायुः पवते अन्तरिक्षे सचरति अयमेव ब्रह्मशब्देन विवक्षितः। एता विद्युदादयः पञ्च देवताः वायु परिम्रियन्ते। तस्य परितो विनाशं गच्छन्ति। तदेतदनुसधेयस्वरूपम्। तत्रादौ विद्युतो मृतिं

(१) ऋसं. १०।१६८।४.

(१) ऐब्रा. ४०।५.

प्रतिपादयति—येय विद्युदस्ति सा विद्युत्य प्रकाशं कृत्वा पश्चात् वृष्टिमनुप्रविशति । अत एव सा अन्तर्धीयते अस्माभिर्न दृश्यते । ता वृष्टौ प्रविष्टा विद्युत क्व गता कुत्र स्थिता मृतेति मनुष्याः निःशेषेण न जानन्ति ।

ऐब्रासा.

**वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्राविशति । साऽन्तर्धीयते । तां न निर्जानन्ति । चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति । सोऽन्तर्धीयते । तं न निर्जानन्ति । आदित्यो वा अस्तं यन्नाग्निमनुप्रविशति । सोऽन्तर्धीयते । तं न निर्जानन्ति । अग्निर्वा उद्वान्वायुमनुप्रविशति । सोऽन्तर्धीयते । तं न निर्जानन्ति ॥**

विद्युतः इव वृष्टेर्विनाश दर्शयति—येय वृष्टिरस्ति सेय वृष्ट्वा भूमौ जल पातयित्वा स्वयमाप्यमण्डलरूप चन्द्रमसमनुप्रविशति । चन्द्रमसो विनाश दर्शयति—अयं चन्द्रमाः अमावास्याया तिथौ साकल्येन आदित्यमनुप्रविशति । आदित्यस्य विनाशं दर्शयति—आदित्यो यदाऽस्तमेति तदाऽयमग्निमनुप्रविशति । तदेतत्तैत्तिरीयैः समाम्नातम्—'अग्नि वावादित्यः साय प्रविशति । तस्मादग्निर्दूरान्नक्त ददृशे । उभे हि तेजसी सपद्येते' (तैब्रा. २।१।२।९) इति । अग्नेर्विनाश दर्शयति—उद्वानग्निः उद्वानमुपशमन प्राप्नुवन्नग्निः वायुमनुप्रविशति । वायुबाहुल्ये दीपविनाशदर्शनात् । ऐब्रासा.

**ता वा एता देवता अत एव पुनर्जायन्ते ॥**

वायोः परितो म्रियमाणाना देवताना पुनर्वायोरेव जन्म दर्शयति । वायोर्जगत्कारणभूतसूत्रात्मरूपत्वाज्जगदेकदेशानां विद्युदादीना जन्मविनाशौ वाय्वधीनौ । पूर्व विद्युदादीनामग्न्यन्तानां क्रमेण विनाशो दर्शितः ।

ऐब्रासा.

**वायोरग्निर्जायते । प्राणाद्धि बलान्मथ्यमानोऽधिजायते । अग्नेर्वा आदित्यो जायते । आदित्याद्वै चन्द्रमा जायते । चन्द्रमसो वै वृष्टिर्जायते । वृष्टेर्वै विद्युज्जायते ॥**

इदानीमग्न्यादीनां विद्युदन्तानां क्रमेणोत्पत्तिं विवक्षुरग्नेरुत्पत्तिं दर्शयति—योऽयमग्निः सोऽय वायोर्जायते । कथमेतदिति तदुच्यते । प्राणाद्बलात् प्राणवायुसबन्धिशक्तिवशान्मथ्यमानोऽयमग्निः अधिकत्वेन जायते । आदित्यस्योत्पत्ति दर्शयति—रात्रावग्नि प्रविष्ट आदित्यः परेद्युरग्नेर्जायते । अत एवाऽह्नि अग्निस्तेजोरहितः सूर्योऽधिकतेजा भासते । चन्द्रमसः उत्पत्तिं दर्शयति—तिथावमावास्यायामादित्ये प्रविष्टः चन्द्रमाः शुक्लपक्षप्रतिपदि आदित्याज्जायते । वृष्टेरुत्पत्तिं दर्शयति—जलमये चन्द्रमण्डले प्रविष्टा वृष्टिः कालान्तरे चन्द्राज्जायते । विद्युदुत्पत्तिं दर्शयति—वृष्टौ प्रविष्टा विद्युत्पुनरपि कदाचित्प्रसक्ताया वृष्टेर्जायते । ऐब्रासा.

**स एष ब्रह्मणः परिमरः ॥**

उक्तमर्थमुपसहरति—स एष ध्यानरूपो जपरूपश्च वायुसबन्धी परिमरनामकः कर्मविशेष उक्त इत्यर्थः ।

ऐब्रासा.

सर्वस्य जनक, यजु शब्दलक्षितः, आनन्दरूपं ज्येष्ठं ब्रह्म च वायु

**अयं वाव यजुः योऽयं पवते । एष हि यन्नेवेदं सर्वं जनयति । एतं यन्तमिदमनु प्रजायते । तस्माद्वायुरेव यजुः ॥ १ ॥**

अथ अत्र यजुस्तद्विधायकब्राह्मणयोर्निर्वचनपुरःसरमधिदैवाध्यात्मभेदेनार्थः, मन्त्रब्राह्मणप्रसङ्गादुपनिषदः स्तुतिः, तत्स्वरूप, तद्विदुपः फलमानन्दावाप्तिः, यजुपा उपाश्वनुष्ठानं चेति पञ्चमब्राह्मणप्रतिपादितार्थसग्रहः । यजुःशब्देन वायु निर्ब्रुवन् अधिदैवमर्थमाह—अय वाव यजुर्योऽय पवत इति । यः अन्तरिक्षे पवते सचरति स हि यजुरात्मकः, यजुरित्यत्र द्वे अक्षरे य इति जुः इति । एष यन्नेवेदमिति । एप वायुः यन् सर्वत्र सचरन् इद सर्व जनयति उत्पादयति । एत यन्त सचरन्तं वायुमनुलक्ष्य सर्वाः प्रजाः उत्पद्यन्ते । एतस्य यजुरात्मकस्य वायोर्ज्येष्ठब्रह्मरूपत्वमुत्तरत्रास्मिन् ब्राह्मणे वक्ष्यते सूत्रात्मश्रुत्यभिप्रायेण । तस्माद्वायुसचारमनु सर्वजगत उत्पत्तिर्युक्तेत्यर्थः । अत्र वायुः यन् जननिमित्त चेति यजुःशब्दनिर्वचनं कृतमित्यर्थः । शब्रासा.

**अयमेवाकाशो जूः यदिदमन्तरिक्षम् । एतं ह्याकाशमनु जवते । तदेतद्यजुर्वायुश्चान्तरिक्षं च यच्च जूश्च । तस्माद्यजुरेष एव । यदेष ह्येति ।**

(१) शब्रा. १०।३।५।१-१४.

**तदेतद्यजुर्ऋक्सामयोः प्रतिष्ठितं ऋक्सामे वहतः। तस्मात्समानैरेवाध्वर्युर्ग्रहैः कर्म करोति । अन्यान्यन्यानि स्तुतशस्त्राणि भवन्ति । यथा पूर्वाभ्यां स्यन्त्वा पराभ्यां धावयेत् तादृक् तत् ॥ २ ॥**

एवं प्रथमाक्षरधात्वर्थकथन उत्तरस्यार्थतो व्याख्यान च कृतम् । अथ द्वितीयाक्षरस्य धात्वर्थकथन पूर्वस्यार्थतो व्याख्यान चाह – अयमेवाकाशो जूरिति । जूः इति सौत्रो धातुर्गत्यर्थः । यदिदं प्रतीयमान अन्तरिक्ष अस्ति तदेव जूः इति पदेनोच्यते । एतमाकाश अनुलक्ष्य जवते वायुः गच्छति । वायुजवयोरधिकरणत्वात् जूः आकाशः । उक्तमर्थद्वयमक्षरद्वये योजयित्वा दर्शयति–तदेतद्यजुर्वायुश्चान्तरिक्षमिति । यत् इति वायुः जूः इति आकाश उच्यते इत्यर्थः । आधाराधेययोर्वाय्वाकाशयोरभेदोपचारेण वायोरेव यजुःशब्दमाह–तस्माद्यजुरेष एवेति । एप वायुः यस्मात् अन्तरिक्षे एति तस्मात् असौ यजुःशब्दाभिधेय इत्यर्थः । तदेतद्यजुर्ऋक्सामयोः प्रतिष्ठितमित्यादेरयमर्थः । अन्तरिक्षलोको हि द्यावापृथिव्योर्मध्यवर्तीति तयोरधिकरणमुपचर्यते तयोश्च ऋक्सामरूपत्वं भूःस्वरिति ऋक्सामसारभूतव्याहृतिद्वयकल्पितत्वात् । तथाऽन्यत्राम्नायते–'स भूरिति व्याहरत्, स भूमिमसृजत । स भुव इति व्याहरत्, सोऽन्तरिक्षमसृजत । स स्वरिति व्याहरत्, स दिवमसृजत ' इति । अतो यजुर्ऋक्सामयोः प्रतिष्ठित मध्यस्थितमित्यर्थः । तस्यैव विवरणम्–ऋक्सामे वहत इति । तस्मात् आधारयोर्नानारूपतो भेदेऽपि आधेयस्यैकरूपेण भेदाभावात् अध्वर्युणा याजुषेण समानैरेव ग्रहैः प्रकृतिसोमयागगतैरेवैन्द्रवायवादिभिर्विकृतिकर्म क्रियते । सामगबह्वृचैः स्तुतशस्त्राणि स्तोत्रशस्त्राणि, अन्यान्यन्यानि प्रकृतिगतव्यतिरिक्तानि क्रियन्ते । यथा महाव्रतयज्ञे बृहद्रथन्तरयोर्वैकल्पिकयोः प्राकृतयोः पृष्ठसाम्नोः स्थाने पञ्च सामानि, निष्केवल्यस्थाने महदुक्थमित्युक्तम् । ऋक्सामयोस्तत्र क्रतुपु भिन्नरूपत्व स्तौति–यथा पूर्वाभ्या स्यन्त्वेति । यथा पूर्वाभ्या अश्वाभ्या स्यन्त्वा गत्वा श्रान्तौ तौ विमुच्य पराभ्या अन्याभ्या धावयेत् तादृक् तत् तत्रान्यस्यान्यस्य स्तुतशस्त्रस्य करणमित्यर्थः ।

शब्रासा.

**अग्निरेव पुरः । अग्निं हि पुरस्कृत्येमाः प्रजा उपासते । आदित्य एव चरणम् । यदा ह्येवैष उदेति अथेदं सर्वं चरति । तदेतद्यजुः सपुरश्चरणमधिदेवतम् ॥ ३ ॥**

अथ ब्राह्मणापरनामधेयस्य पुरश्चरणशब्दस्य पूर्ववन्निर्वचनपुरःसरमधिदैवमर्थमाह–अग्निरेव पुर इत्यादिना । इमाः प्रजाः वैदिक्योऽग्नि पुरस्कृत्य उपासते तस्मात् अग्निः पुरःशब्दवाच्यः । आदित्यः चरणशब्दवाच्यः । यदा असौ उदेति तदैव सर्वस्य स्वव्यापारं प्रति चरणात् । उक्त शब्दतो निर्वचनं तदर्थ चोपसहरति–तदेतद्यजुः सपुरश्चरणमिति । शब्रासा.

**अथाध्यात्मम् । प्राण एव यजुः । प्राणो हि यन्नेवेदं सर्वं जनयति । प्राणं यन्तमिदमनु प्रजायते । तस्मात्प्राण एव यजुः ॥ ४ ॥**

**अयमेवाकाशो जूः । योऽयमन्तरात्मन्नाकाशः । एतं ह्याकाशमनु जवते । तदेतद्यजुः प्राणश्चाकाशश्च यच्च जूश्च तस्माद्यजुः । प्राण एव यत्प्राणो ह्येति ॥ ५ ॥**

एतयोराध्यात्मिकोऽर्थो वक्ष्यते इति प्रतिजानीते–अथाध्यात्मं प्राण एव यजुरिति । प्राणः पञ्चभूतात्मकः । अन्तरात्मन्नाकाश इति । हृदयमध्यवर्ती देहे एवाकाशः । शिष्ट पूर्ववत् व्याख्येयम् । शब्रासा.

**अन्नमेव यजुः । अन्नेन हि जायते । अन्नेन जवते । तदेतद्यजुरन्ने प्रतिष्ठितम् । अन्नं वहति । तस्मात्समान एव प्राणेऽन्यदन्यदन्नं धीयते ॥ ६ ॥**

अन्नमेव यजुरित्यादेरयमर्थः । यथा यजुः ऋक्सामाधिकरणे प्रतिष्ठित एव प्राणोऽपि अन्ने प्रतिष्ठितः । आधारस्याप्यन्नस्य जननजीवननिमित्तत्वमाश्रित्य यजुरात्मकत्वकथनम् । ' अन्नाद्वै प्रजाः प्रजायन्ते अन्नेन जातानि जीवन्ति ' ( तैउ. २।२ ) इति श्रुतेः । तदेतद्यजुरिति । प्राणः परामृश्यते । यजुः यजुरात्मकः प्राणः यजुरात्मकेऽन्ने प्रतिष्ठितः । अत्रापि प्राणस्यैकत्वात्तत्पोषकस्यान्नस्य नानात्वादाधेयस्य प्राणस्यैकत्वादेकरूपे प्राणे विषये नानाविधमन्न धीयते । शब्रासा.

**मन एव पुरः । मनो हि प्रथमं प्राणानाम् । चक्षुरेव चरणम् । चक्षुषा ह्ययमात्मा चरति । तदेतद्यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितम् । स**

**यो हैतदेवं यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितं वेद ॥ ७ ॥**

पुरश्चरणपदस्याध्यात्मपरतामाह—मन एव पुर इति। यस्मात् सर्वप्राणाना मनः प्रथम, तस्मात् तत्पुरःशब्दाभिधेयम्। चक्षुषा हि सर्वो जनः स्वस्वव्यापारार्थं सचरतीति चक्षुश्चरणशब्दवाच्यमुक्तम्। यजुःपुरश्चरणशब्दयोरधिदैवाध्यात्मभेदेनोक्तमर्थं विदुषः फलमाह—स यो हैतदेवं यजुः सपुरश्चरणमिति। शब्रासा.

**अरिष्टो हैवानार्तः स्वस्ति यज्ञस्योदृचमश्नुते। अथो स्वानां श्रेष्ठः पुरएता भवत्यन्नादोऽधिपतिर्य एवं वेद ॥ ८ ॥**

अरिष्ट इति। अरिष्टः अन्येनाबाधितः अनार्तः शरीरपीडारहितः अत्र स्वस्ति क्षेमेण यज्ञस्योदृच समाप्तिं अश्नुते। तस्यैव फलान्तर समुच्चिनोति—अथो स्वानां श्रेष्ठ इति। स्वाना ज्ञातीना मध्ये स्वयं श्रेष्ठः प्रशस्यतमः पुरएता पुरतो गन्ता अन्नादः ईश्वरो भवति। शब्रासा.

**य उ हैवंविदं स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवति। अथ य एवैतमनुभवति यो वै तमनु भार्यान्बुभूर्षति स हैवालं भार्येभ्यो भवति ॥ ९ ॥**

विद्वन्निन्दकस्य दोषं तत्स्तावकस्य च फल दर्शयति—य उ हैवविदमिति। यः पुरुषः स्वेषु मध्ये एवंविदं उक्तविद्यां जानानं पुरुष प्रति प्रतिर्बुभूषति प्रातिकूल्यमाचरितुमिच्छति स भार्येभ्यः पोषणीयेभ्यः स्वीयेभ्यो नाल न पर्याप्तो भवति पोषणसमर्थो न भवतीत्यर्थः। यस्तु एवंविदमनुकूलयेत् सः पोष्यान् पोषयितु शक्नोति। शब्रासा.

**तदेतज्ज्येष्ठं ब्रह्म। न ह्येतस्मात्किं चन ज्यायो अस्ति। ज्येष्ठो ह वै श्रेष्ठः स्वानां भवति य एवं वेद ॥ १० ॥**

यजुःशब्दस्य वायुप्राणरूपोऽर्थ उक्तः। तं ज्येष्ठब्रह्मात्मना स्तौति—तदेतज्ज्येष्ठं ब्रह्मेति। ब्रह्मणि ज्येष्ठत्वमाह—न ह्येतस्मादिति। न हि हिरण्यगर्भात्मनः (सूत्रात्मनः) परस्ताज्ज्यायो वस्त्वस्ति तस्यैव सर्वजगदाधारत्वात्। तथा च बृहदारण्यके चतुर्दशकाण्डे समाम्नायते—'वायुर्वै गौतम तत् सूत्रम्। वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सदृब्धानि भवन्ति' (बृउ. ३।७।२) इति। वेदितुरपि ज्येष्ठत्वं फल भवतीत्याह—ज्येष्ठो ह वै श्रेष्ठ इति। शब्रासा.

**तदेतद्ब्रह्मापूर्वमपरवत्। स यो हैतदेवं ब्रह्मापूर्वमपरवद्वेद न हास्मात्कश्चन श्रेयान्त्समानेषु भवति। श्रेयांसः। श्रेयांसो हैवास्मादपरपुरुषा जायन्ते। तस्माद्योऽस्माज्ज्यायान्त्स्यात् दिशोऽस्मात्पूर्वा इत्युपासीत। तथो हैनं न हिनस्ति ॥ ११ ॥**

तदेतत् ब्रह्मापूर्वमित्यादेरयमर्थः—यदुक्त तद्ब्रह्म अपूर्व यस्मात् पूर्वो न विद्यते कारणरहितम्। अपरवत् सृज्यजगद्रूपापरवत्। उक्तगुणद्वयविशिष्टस्योपासनस्य फलमाह—स यो हैतदिति। एवमुपासीतेत्यर्थः। यदि वेदितुः सकाशात् ज्यायसः पुरुषस्य सद्भावे तदा स्वयं बाध्यो भवतीत्याशङ्क्य तस्मात् पुरुषादधिक वस्तु दिशः इत्युपासितव्यमित्याह—योऽस्माज्ज्यायानिति। यदि अस्मात् उपासकात् यः अधिकः स्यात् तर्हि तस्मात् अधिकात् दिशः पूर्वाः इत्युपासीत ततः ज्यायसोऽपि ज्यायउपासने स्वस्याधिक्यात् बाधको नास्तीत्यर्थः। शब्रासा.

**तस्य वा एतस्य यजुषो रस एवोपनिषत्। तस्माद्यावन्मात्रेण यजुषाऽध्वर्युर्ग्रहं गृह्णाति स उभे स्तुतशस्त्रे अनुविभवति। उभे स्तुतशस्त्रे अनुव्यश्नुते। तस्माद्यावन्मात्र इवान्नस्य रसः सर्वमन्नमवति। सर्वमन्नमनुव्येति ॥ १२ ॥**

यजुर्मन्त्रब्राह्मणप्रसङ्गादुपनिषदोऽर्थ तत्स्वरूपं वेदितुः फल च दर्शयति— तस्य वा एतस्य यजुष इति। अन्नरूपस्य यजुषो रसः सार एव उपनिषत्। तस्याश्च वेदसारत्वमन्नरसदृष्टान्तेन प्रतिपादयति— तस्माद्यावदिति। यथा अन्नस्य यावान् रसः तावान् स्वाश्रयभूतं सर्वमन्नं अवति तर्पयति भोगभाग्य करोति, अनुव्येति व्याप्नोति च अत उपनिषत् सकल साङ्ग वेदं व्याप्नोति। शब्रासा.

**तृप्तिरेवास्य गतिः। तस्माद्यदाऽन्नस्य तृप्यति। अथ स गत इव मन्यते। आनन्द एवास्य विज्ञानमात्मा। आनन्दात्मानो हैव सर्वे देवाः। सा हैषैव**

**देवानामद्धा विद्या । स ह स न मनुष्यो य एवंवित् । देवानां हैव स एकः ॥ १३ ॥**

अस्य अन्नात्मकस्य यजुषः तृप्तिरेव गतिः फलावाप्तिः । यथा लोके अन्नेन तृप्तः पुरुषः गतः प्राप्तप्रयोजन इव मन्यते । उपनिषत्प्रतिपाद्यस्वरूपमाह— आनन्द एवास्य विज्ञानमात्मेति । अस्य उपनिषदात्मकस्य रसस्य आनन्दः विज्ञानमेव आत्मा सच्चिदानन्दैकरसमखण्ड वस्तुस्वरूपमित्यर्थः । आनन्दात्मान इत्यादिकेन विद्याप्रशसा । अद्धा विद्या आनन्दात्मकदेवाना प्रतिपादकत्वादेषा उपनिषत् अद्धा अपरोक्षा विद्या साक्षादमरत्वात् । तद्वेदितुर्देवत्वमेव फलमित्याह—स ह स न मनुष्य इति । एव उपनिषदखण्डविज्ञानलक्षणमात्मान जानानो मनुष्यो न भवति किं तु देवाना मध्ये एको भवतीत्यर्थः । शब्रासा.

**एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन आह वायुं वान्तम् । आनन्दस्त आत्मा । इतो वा वाहि इतो वेति । स ह स्म तथैव वाति । तस्माद्यो देवेष्वाशिषमिच्छेदेतेनैवोपतिष्ठेत आनन्दो वा आत्मा असौ मे कामः स मे समृध्यतां इति । सं हैवास्मै स काम ऋध्यते यत्कामो भवति । एतां ह वै तृप्तिं एतां गतिं एतमानन्दं एतमात्मानं अभिसंभवति य एवं वेद ॥ १४ ॥**

उक्त देवानामानन्दात्मत्वमुपजीव्य यजुरात्मकवायोरानन्दात्मत्वपरिज्ञानफलं पुरावृत्तकथनेन दर्शयति—एतद्ध स्म वै तद्विद्वानिति । एतत् देवानामानन्दात्मत्व यजूरूपाया उपनिषद आनन्दविज्ञानरूप च विद्वान् रोहिणपुत्रः प्रियव्रतो नामाह वायुं वान्त सचरन्तं वायुमुक्तवान् । किमिति । हे वायो ते तव आत्मा स्वरूप आनन्दः इति । तस्मात् इतः अन्यप्रदेशे वाहि इतो वा देशे वाहि संचरेति वायुमुक्तवान् । स वायुरपि स्वकीयानन्दलक्षणस्वरूप वेदितुर्वाक्यमनतिलङ्घयन्निदानीमपि तथैव इतस्ततो वाति । वायुवशीकरण तस्य फलमित्युक्त भवति । तस्माद्या देवेष्वाशिषं इत्यादेरयमर्थः— सर्वत्र देवेष्वानन्दत्वपरिज्ञानेन सर्वकामप्राप्तिर्भवतीति । आनन्दो वा आत्मा इत्यय ब्राह्मणप्रतिपादितः उपस्थानमन्त्रः । 'तस्य वा एतस्य यजुषो रस एवोपनिषत्' इत्यादिना प्रतिपादितमर्थजातं विदुषः फलमाह— एतां ह वै तृप्तिमेतां गतिमिति । शब्रासा.

---

## आपः

सर्वभेषजस्थानं, सर्वदुरितनिवारिका, स्थिरचरजनित्र्य, मातृतमा, धनस्य जनाना च ईशित्र्यः, वरुणाग्निविश्वदेवाना स्थानं वैश्वानरस्य च, अग्नेः सवितुश्च जन्मस्थानं, त्रैलोक्यनिवासिन्य

**अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।**
**अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥**

अप्सु जलेषु अन्तः मध्ये विश्वानि भेषजा सर्वाणि औषधानि सन्तीति मे मह्य मन्त्रदर्शिने मुनये सोमः देवः अब्रवीत् । तथा विश्वशंभुवं सर्वस्य जगतः सुखकरं एतन्नामकं च अग्निं च अप्सु वर्तमान सोमोऽब्रवीत् । तथा च तैत्तिरीयाः— 'अग्नेस्त्रयो ज्यायासः' इत्यनुवाके 'सोऽपः प्राविशत्' (तैसं. २।६।६।१) इति अग्नेः अप्सु प्रवेशमामनन्ति । लतागुल्मवृक्षमूलादीना औषधानां वृष्टिजन्यत्वेन जलवर्तित्वं प्रसिद्धम् । विश्वभेषजीः विश्वानि भेषजानि यासु तथाविधाः अपः अपि अब्रवीत् । विश्वशंभुवम् । यद्वा । विश्वे सर्वेऽपि व्यापाराः सुखकरा यस्य । ऋसा.

**आपः पृणीत भेषजं वरूथं तन्वे मम ।**
**ज्योक् च सूर्यं दृशे ॥**

हे आपः मम तन्वे शरीरार्थं वरूथं रोगनिवारक भेषजं औषध पृणीत पूरयत । किंच ज्योक् चिर सूर्यं दृशे द्रष्टु नीरोगा वय शक्नुयाम इति शेषः । ऋसा.

**इदमापः प्रवहत यत्किं च दुरितं मयि ।**
**यद्वाऽहमभिदुद्रोह यद्वा शेप उतानृतम् ॥**

---

(१) ऋसं. १।२३।२०, १०।९।६; असं. १।६।२ (आपश्च विश्वभेषजी.०.), कासं. २।१४ (८२) असंवत्; मैसं. ४।१०।४ (१०५) शंभुवम् (शभुव.) शेषं असवत्; तैब्रा. २।५।८।६.

(२) ऋसं. २।२३।२१, १०।९।७, असं. १।६।३, कासं. १२।१५ (६५)

(३) ऋसं. १।२३।२२, १०।९।८; असं. ७।८९।३ (इदमाप. प्र वहतावद्यं च मलं च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् ॥ ).

मयि यजमाने यत् किं च दुरितं अज्ञानात् निष्पन्न वा अथवा अह यजमानः अभिदुद्रोह सर्वतो बुद्धिपूर्वकं द्रोह कृतवानस्मि वा अथवा शेपे साधुजन शप्तवानस्मीति यत् अस्ति उत अपि च अनृत उक्तवानिति यत् अस्ति तत् इद सर्वमपराधजात प्र वहत मत्तोऽपनीय प्रवाहेणान्यतो नयत । ऋसा.

[1]**ओमानमापो मानुषीरमृक्तं धात तोकाय तनयाय शं योः ।**
**यूयं हि ष्ठा भिषजो मातृतमा विश्वस्य स्थातुर्जगतो जनित्रीः ॥**

हे आपः मानुषीः मनुष्यहिता यूय अमृक्तं अहिंसित ओमानम् । अवति रक्षतीत्योमा रक्षकमन्नम् । तोकाय पुत्राय तनयाय तत्पुत्राय च धात धत्त प्रयच्छत । तथा शं शमनमुपद्रवाणां योः यावन पृथक्करण च पृथक्कर्तव्याना धत्त प्रयच्छत । कुत इत्यत आह । हि यस्मात् यूयं मातृतमाः मातृभ्योऽप्यधिकाः भिषजः स्थ भवथ तस्मात् धातेत्यन्वयः । कथं मातृभ्योऽप्यधिक भैषज्यमस्तीत्यत आह । विश्वस्य सर्वस्य स्थातुः स्थावरस्य जगतः जङ्गमस्य जनित्रीः जनयित्र्यो भवथ । अतो यूय भिषजः स्थ । ऋसा.

[2]**यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।**
**मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु ॥**

वरुणः यासां अपां राजा स्वामी मध्ये मध्यमलोके याति गच्छति । किं कुर्वन् । जनानां प्रजानां सत्यानृते सत्यं चानृतं च अवपश्यन् जानन्नित्यर्थः । याः आपः मधुश्चुतः रसं क्षरन्त्यः शुचयः दीप्तियुक्ताः पावकाः शोधयित्र्यः । ता आपः देव्यः मां रक्षन्त्विति । ऋसा.

[3]**यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति ।**
**वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु ॥**

अपां राजा वरुणः यासु अप्सु वर्तते । सोमः यासु अप्सु वर्तते । यासु अप्सु स्थिताः विश्वे सर्वे देवाः ऊर्जं अन्नं मदन्ति । वैश्वानरः अग्निः यासु प्रविष्टः । ता आपः देव्यः इह स्थित मामवन्तु । ऋसा.

[1]**ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् ।**
**अपो याचामि भेषजम् ॥**

वार्याणा वारिप्रभवाना व्रीहियवादीनाम् । यद्वा, वरणीयानां धनानाम् । ईशानाः ईश्वराः चर्षणीना मनुष्याणां क्षयन्तीः निवासयित्रीः अपः उदकानि भेषजम् । सुखनामैतत् । पापापनोदन सुख याचामि अह प्रार्थये । ऋसा.

[2]**हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्वग्निः ।**
**या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥**

हिरण्यवर्णाः हितरमणीयवर्णाः हिरण्यसदृशवर्णा वा हिरण्यस्य वर्ण इव वर्णो यासां तास्तथोक्ताः । शुचयः शुद्धाः अत एव पावकाः अन्येषा स्नानपानादिना शोधयित्र्यः । अपा स्वरूपपर्यालोचनया शुद्धिहेतुता अभिधाय शोधकानां सवित्रादीना जन्महेतुत्वेनापि ता समर्थयते—यास्विति । यासु अप्सु सविता सर्वस्य प्राणिजातस्य प्रेरक आदित्यो जातः प्रादुर्भूतः । प्रत्यहं हि समुद्रात् सूर्य उद्यन् दृश्यते तदपेक्षोऽयं निर्देशः । तथा यासु अप्सु मेघस्थासु सामुद्रीषु च अग्निः वैद्युतवाडवरूपेण जात इति संबन्धः । गर्भरूपेण शुचिना अग्निना नित्यसंबन्धादपि अपा पूततामाह—या अग्निमिति । याः सुवर्णाः शोभनवर्णा आपः अग्निं अङ्गनादिगुणयुक्त देव गर्भ दधिरे गर्भत्वेन धारयन्ति ।

---

(१) ऋसं. ६।५०।७. (२) ऋसं. ७।४९।२. अन्यस्थलादिनिर्देश· अस्मिन्नेव प्रकरणे अस्मिन्नेव मन्त्रे (पृ. १५७) अग्रे द्रष्टव्यः.

(३) ऋसं. ७।४९।४.

(१) ऋसं. १०।९।५; असं. १।५।४, मैसं. ४।९।२७ (२४९) उत्तरार्धं ( अपो यातामभेषजं ता न. कृण्वन्तु भेषजम् ); तैब्रा. २।५।८।५, तैआ. ४।४२।४.

(२) असं १।३३।१; तैसं. ५।६।१।१ सविता यास्वग्निः ( कश्यपो यास्विन्द्रः ) या अग्निं ( अग्नि या ) सुवर्णास्ता ( विरूपास्ता ); मैसं. २।१३।१ (३) न आप. ( ना आपः ) शेषं तैसंवत् ; तैब्रा. २।८।९।३; कब्रा. ५७ ( पृ. १३१ ).

तथा च निगमः—'अग्ने गर्भो अपां असि' (तैस. ४।२।३।३) इति। ता उदीरितलक्षणाः सर्वा आपः नः अस्माकं अवसेकादिना कर्मणा शं रोगादिशमनहेतवः स्योनाः। सुखनामैतत्। सुखकारिण्यश्च भवन्तु। असा.

[2] यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम्।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु॥

आप एव स्तूयन्ते। राजा राजमानो वरुणः एतत्संज्ञः पापिना निग्रहकर्ता देवः यासा अपा मध्ये मध्यभागे। समुद्रमध्ये इति यावत्। तत्र स्थित्वा (जनाना) सत्यानृते। सत्य यथार्थभाषणं तद्विपरीत अनृतम्। उभे अवपश्यन् तत्कर्तुर्निग्रहार्थं अवयुत्य परस्परसाङ्कर्यपरिहारेण जानन् याति गच्छति पाशहस्तस्तत्रतत्र सनिधत्ते। तथा च तैत्तिरीयकम्—'अनृते खलु वै क्रियमाणे वरुणो गृह्णाति' (तैब्रा. १।७।२।६) इति। अन्यत् व्याख्यातम्। असा.

[3] यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु॥

देवाः इन्द्राद्याः यासा अपां सारभूत अमृत सोम वा दिवि द्युलोके भक्षं उपभोग्यं कृण्वन्ति कुर्वन्ति। तथा या आपः अन्तरिक्षे अन्तरिक्षलोके बहुधा बहुप्रकारेण वृष्ट्यादिरूपेण नाना भवन्ति। व्याख्यातमन्यत्। असा.

[3] शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे।
घृतश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु॥

(१) असं. १।३३।२, तैसं. ५।६।१।१ पू., मैसं. २।१३।१ (४) पू, तैब्रा. २।८।९।३. कब्रा ५८ (पृ. १३१).
(२) असं. १।३३।३; तैसं. ५।६।१।१ या...र्णास्ता (या पृथिवीं पयसोन्दन्ति शुक्रास्ता); मैसं. २।१३।१ (५) पू; तैब्रा. २।८।९।३; कब्रा. ५८ (पृ. १३१).
(३) असं. १।३३।४; तैसं. ५।६।१।२ तन्वोप (तनुवोप) पू, ५।६।१।१ घृत (मधु) उत्त.; मैसं. २।१३।१ (४,६) तैसंवत्, ऐब्रा. ३७।२।१०.

हे आपः अत्राभिमानिन्यो देवताः यूयं शिवेन अक्रूरेण सुखकरेण चक्षुषा लोचनेन मा मां सेकादिना अनिष्टपरिहारेष्टप्राप्तिकाम पश्यत अवलोकयत। तथा शिवया कल्याण्या इष्टप्राप्तिहेतुभूतया तन्वा युष्मदीयेन शरीरेण मे मम युष्मदनुग्रहकाङ्क्षिणः त्वच त्वग्धातुं उप स्पृशत संस्पृशत। परोक्षवदाह। घृतश्चुतः घृत क्षरणशीलं दीप्यमान वा अमृत श्चोतन्ति क्षरन्तीति घृतश्चुतः अमृतस्राविण्य आपः। अन्यत् व्याख्यातम्।

असा.

विश्वस्योपादानकारणं, प्रजापतेर्जनितुर्वायुरूपस्य स्थानम्

[1] आपो वा इदमग्रे सलिलमासीत्। स प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलायत्। स प्रतिष्ठां नाविन्दत। स एतदपां कुलायमपश्यत्। तस्मिन्नग्निमचिनुत। तदियमभवत्। ततो वै स प्रत्यतिष्ठत्॥

यदिद जगदिदानी दृश्यते तच्च सर्वमुत्पत्तेः पूर्वमाप एवाऽऽसीन्न तु देवमनुष्यादिकम्। तस्मिन्न(तास्व)प्सु पृथिव्यादिभूतान्तरमेलन वारयितुं सलिलमिति विशेष्यते। शुद्धजलमेवासीदित्यर्थः। तदानी प्रजापतिः स्वशरीरमवस्थापयितु मूर्तस्य कस्यचिदाधारस्याभावात्स्वयं वायुरूपोऽभूत्तदुदकमध्यवर्तिनि कस्मिंश्चित्पद्मपत्रे समाश्रितः। तस्य चलत्वात्स्वयं च वायुरूपत्वादलेलायदितस्ततो डोला(ल)यमानोऽभूत्। तादृशः कुत्रापि स्थिरां स्थितिं नालभत। स पुनराधार पर्यालोचयन्नपां मध्ये कुलायं शैवालमपश्यत्। तस्मिन् शैवाले अग्निमिष्टकाभिश्चितवान्। सोऽयमिष्टकाचितोऽग्निरिय दृश्यमाना भूमिरभवत्। तत ऊर्ध्वं स प्रजापतिस्तस्यां भूमौ प्रतिष्ठितोऽभूत्। तैसा.

[2] आपो वा इदमग्रे सलिलमासीत्। तस्मिन्प्रजापतिर्वायुर्भूत्वाऽचरत्। स इमामपश्यत्। तां वराहो भूत्वाऽहरत्। तां विश्वकर्मा भूत्वा व्यमार्ट्। साऽप्रथत। सा पृथिव्यभवत्। तत्पृथिव्यै पृथिवित्वम्। तस्यामश्राम्यत्प्रजापतिः। स देवानसृजत॥

इदमितीदानी दृश्यमान गिरिनदीसमुद्रादिकं जगत् पृथिव्युत्पत्तेः पूर्वं सलिलमासीत्। तस्मिन्नेव सलिले केवला आप एव न तु भूतान्तर तत्कार्यं वा किंचिदपि

(१) तैसं. ५।६।४।२. (२) तैसं. ७।१।५।१.

नाऽऽसीत् । तदानीं प्रजापतिर्मूर्तस्य शरीरस्यावस्थातु स्थानाभावाद्वायुरूपो भूत्वा तस्मिन्सलिले सर्वत्राचरत् । चरित्वा च सलिले निमग्नां भूमिं दृष्ट्वा स्वयं वराहो भूत्वा दंष्ट्राग्रेण तां भूमिं जलस्योपर्याहरत् । आहृत्य च वराहरूपमुत्सृज्य विश्वकर्मा भूत्वा विशेषेण मार्जनं कृत्वा तत्रत्यं द्रवमपनीय तां विस्तारितवान् । तत इयं दृश्यमाना सर्वप्राण्याधारभूता पृथिव्यभवत् । प्रथनादेव पृथिवीनाम संपन्नम् । तस्यां भूमौ स प्रजापतिः स्वेनैव शरीरेणावस्थाय सिसृक्षुरश्राम्यत्तपः कृतवान् । तस्माच्च तपस्सामर्थ्यात् त्रीन् वस्वादिदेवगणानसृजत । तैसा.

सर्वेषां लोकानां प्रतिष्ठा

**[१]योऽप्सु नावं प्रतिष्ठितां वेद । प्रत्येव तिष्ठति । इमे वै लोका अप्सु प्रतिष्ठिताः । तदेषाऽभ्यनूक्ता ॥**

यः पुमानप्सु प्रतिष्ठितां स्थैर्येणावस्थितां नावं वेद स स्वयं लोके प्रतिष्ठायुक्तो भवति । काऽसौ प्रतिष्ठिता नौरिति सेयमुच्यते—इमे वै दृश्यमाना एव भूरादयो लोकाः अप्सु स्थैर्येणावस्थिताः नौस्थानीयाः । अतः सर्वलोकाधारभूता आप इति वेदनेन प्रतिष्ठाप्राप्तिः । नद्यादिषु परतीरगमनाय जनैर्या नौः संपाद्यते सा जले प्रतिष्ठिता न भवति । गमनागमनाभ्यां चञ्चलत्वात् । सर्वलोकसंघरूपा तु नौर्न कदाचिदपि चलति किं त्वप्सु स्थैर्येणावतिष्ठते । आवरणसहितं ब्रह्माण्डं घनोदाख्ये महाजलेऽवतिष्ठते इति हि पौराणिकप्रसिद्धिः । तत्तस्मिन्सर्वजगदाधारभूता आप इत्येवंरूपेऽर्थे काचिदृगभ्यनूक्ता शाखान्तरे समाम्नाता । तैआसा.

**अपाꣳ रसमुदयꣳसन् । सूर्ये शुक्रꣳ समाभृतम् । अपाꣳ रसस्य यो रसः । तं वो गृह्णाम्युत्तममिति ॥**

योऽयमपां रसः सारस्तं रसमभिलक्ष्योदयन् सन् सर्वे लोका उद्गताः तस्मादेव रसादुत्पद्यन्तेऽस्मिन्नेवावतिष्ठन्ते इत्यर्थः । कीदृशं रसं, सूर्ये आदित्यमण्डले वृष्टिजननाय समाभृतं संपादितं, अत एव शुक्रं निर्मलम् । अपां रसस्य त्रैलोक्यरूपस्योदकसारस्य तद्(य उ)त्तमो रसः सोमरूपः, हे आपो युष्मदीयं तमुत्तमं रसं गृह्णामि । तेषु तेषु स्वीकरोमि । इतिशब्दो मन्त्रसमाप्त्यर्थः । तैआसा.

(१) तैआ. १।२२।७,८.

**इमे वै लोका अपाꣳ रसः । तेऽमुष्मिन्नादित्ये समाभृताः ॥**

य एते पृथिव्यादयो लोकास्ते सर्वेऽप्यपां मध्ये सारभूताः सर्वलोकगर्भिताः । ब्रह्माण्डगोलकरूपा पृथिवी क्षीरमध्ये मण्डमिव जलमध्ये घनीभूता । तथा च वाजसनेयिन आमनन्ति—'यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्' इति । ते चोदकसारभूता लोका अमुष्मिन् दृश्यमाने आदित्यमण्डले समाभृताः सम्यगाश्रिताः । आदित्यस्य वृष्टिद्वारेण सर्वलोकस्थितिहेतुत्वात् । तैआसा.

प्रजापतेराविर्भावस्थानम्

**[१]आपो वा इदमासन्त्सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामः समवर्तत । इदꣳ सृजेयमिति । तस्माद्यत्पुरुषो मनसाऽभिगच्छति । तद्वाचा वदति । तत्कर्मणा करोति । तदेषाऽभ्यनूक्ता ॥**

यदिदं जगदिदानीमस्माभिर्दृश्यते तदिदमुत्पत्तेः पूर्वमाप एवाऽऽसन्, न तु देवतिर्यङ्मनुष्यादिकं किंचिदपि भौतिकमासीत् । पृथिव्यादिभूतान्तरमपि वारयितुं सलिलमेवेत्युच्यते । तास्वप्सु मध्ये कस्मिंश्चित्पुष्करपर्णे जगदीश्वरः सः प्रजापतिः समभवत्सम्यगाविर्भूयावस्थितः । तस्य प्रजापतेर्मनसोऽन्तर्मध्ये सर्वमिदं जगत्सृजेयमित्येव काम उदपद्यत । तस्मात्प्रजापतेर्वाक्शरीरप्रभृतिभ्यां पूर्वं सर्वप्रवृत्तिहेतुः कामो मनस्याविरभूत्तस्मात्प्रजापतिसंततावुत्पन्नः सर्वः पुरुष इदं कार्यं करिष्यामीत्यादौ मनसा चिन्तयति तत्तथैव वाचा वदति कर्मणा शरीरव्यापारेणापि तथैव करोति । तत्तस्मिन्कामस्य प्रथमोत्पत्तिलक्षणेऽर्थे काचिदृक् शाखान्तरेऽभ्यनूक्ता । तैआसा.

**कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषेति ॥**

तत्तदानीं सृष्टिकाले प्रजापतेः सकाशादग्रे प्रथमं कामः सर्वं सृजेयमित्यभिलापः, अधि समवर्तताऽऽधिक्येन सम्यगुत्पन्नः । यद्यदा मनसः प्रथमं रेतः कार्य-

(१) तैआ. १।२३।१–९.

मासीत् । तदेति पूर्वत्रान्वयः । पूर्वसृष्टौ लीनायामव्यक्ते जगत्कारणे स्रक्ष्यमाणप्राणिकर्मोद्भवे सति यदा प्रजापतेर्मानसप्रथम कार्यमुत्पन्न तदा तत्कार्यं सृष्टिविषयेच्छारूपेण निष्पन्नमित्यर्थः । मनीषा मनस ईशितारः कवयो विद्वासस्तत्तत्सृष्टिगताः प्रजापतयो हृदि स्वचित्ते प्रतीष्य प्रत्येक निश्चित्य सतो विद्यमानस्य व्यक्तस्य जगतो बन्धु बन्धकमुत्पत्तिहेतु काममसत्यव्यक्ते कारणे निरविन्दन्निष्कृष्य लब्धवन्तः । न केवलमेतस्यामेव सृष्टौ किंतु सर्वास्वपि सृष्टिषु प्रवृत्ताः प्रजापतयः काममेव प्रथम लभन्ते इत्यर्थः । इतिशब्दो मन्त्रसमाप्तौ । तैआसा.

**उपैनं तदुपनमति । यत्कामो भवति । य एवं वेद ॥**

यथोक्तकाममाहात्म्यवेदन प्रशंसति—उपैनमिति । यः पुमान् काममाहात्म्य वेद स पुमान्यत्कामो यद्विषयकामनावान्भवति तद्वस्तु, एनं वेदितारमुपनमति प्राप्नोति । देशकालयोः सामीप्यविवक्षया द्वावुपशब्दावुक्तौ ।

तैआसा.

अप्स्वेव विराड्रूपपुरुषस्योत्थानं, आदित्यादीना देवानामसुराणा सर्वस्य च उत्पत्ति

**स तपोऽतप्यत । स तपस्तप्त्वा । शरीरमधूनुत । तस्य यन्मा<sup></sup>ऽसमासीत् । ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन् । ये नखाः । ते वैखानसाः । ये वालाः । ते वालखिल्याः । यो रसः । सोऽपाम् ॥**

स प्रजापतिः सृष्टिं कामयित्वा तपः कृतवान् । नात्र तपः उपवासादिरूप किंतु स्रष्टव्यं वस्तु कीदृशमिति पर्यालोचनरूपम् । अत एवाऽऽथर्वणिका आमनन्ति— 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इति । स प्रजापतिः, तपः पर्यालोचनरूप कृत्वा स्रष्टव्यविशेष निश्चित्य स्वकीयं शरीरमधूनुत कम्पितवान् । तस्य कम्पनस्य शरीरस्य यन्मासमस्ति, तस्मान्मासादरुणादिनामकास्त्रिविधा ऋषय उदपद्यन्त । प्रजापतेः सत्यसंकल्पत्वात्तत्तत्संकल्पानुसारेण तत्तद्वस्तूत्पद्यते । तस्य शरीरस्य ये नखा आसंस्ते वैखानसनामका मुनयोऽभवन् । ये च शरीरे वालाः केशास्ते वालखिल्यनामका मुनयोऽभवन् । यः शरीरस्य रसः सारांशः सोऽपां मध्ये कश्चित्कूर्मोऽभूदिति शेषः ।

तैआसा.

**अन्तरतः कूर्मं भूत<sup></sup>ऽ सर्पन्तम् । तमब्रवीत् । मम वै त्वङ्मा<sup></sup>ऽसा समभूत् । नेत्यब्रवीत् । पूर्वमेवाहमिहाऽऽसमिति । तत्पुरुषस्य पुरुषत्वम् । स सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । भूत्वोदतिष्ठत् । तमब्रवीत् । त्वं वै पूर्वं समभूः । त्वमिदं पूर्वः कुरुष्वेति ॥**

तेन कूर्मेण सह प्रजापतेः संवाद दर्शयति—अन्तरत इति । अन्तरतो जलस्य मध्ये कूर्माकारेण निष्पन्न तत्रैव सचरन्त त पुरुष प्रजापतिरब्रवीत् । हे कूर्म मम वै त्वङ्मांसा त्वचो मासस्य च सबन्धिनो रसात् समभूत्त्व समुत्पन्नोऽसीति । तदा स कूर्मो नेत्यब्रवीत्, यत्त्वयोक्त तन्न त्वदीयशरीररसान्नाहमुत्पन्नः किंतु कूर्माकारं शरीरमेव निष्पन्न, अहं तु सर्वगतनित्यचैतन्यस्वरूपत्वात्पूर्वमेवेहास्मिन् स्थाने स्थितोऽस्मीत्येतत्कूर्मस्य वचनम् । यस्मात्पूर्वमासमित्युवाच तस्मात्पुरुष इति परमात्मनो नाम सपन्नम् । एवमुक्त्वा स कूर्मशरीरवर्ती परमात्मा स्वसामर्थ्यप्रकटनाय विराड्रूपं कृत्वा सहस्रसख्याकैः शिरोभिरक्षिभिः पादैश्च युक्तो भूत्वा प्रादुरभूत् । तदानीं प्रजापतिस्त विराड्रूप दृष्ट्वा तत्रत्य परमात्मानमेवमब्रवीत् । भोः परमात्मन् मच्छरीरात्पूर्वं त्वमेव सर्वदा विद्यमानोऽतो मत्तः पूर्वभावी सत्त्वमेवेदं सर्व जगत्कुरुष्वेति ।

तैआसा.

**स इत आदायापः । अञ्जलिना पुरस्तादुपादधात् । एवा ह्येवेति । तत आदित्य उदतिष्ठत् । सा प्राची दिक् ॥**

तेन प्रजापतिनैवमुक्तस्य परमेश्वरस्य सृष्टिप्रकारं दर्शयति – स इत इति । स परमेश्वरः स्वयमारुणकेतुकरूपः सृजितः सृष्टेरपि पूर्वसिद्धात् सलिलमेवाऽऽसीदित्युक्तात् महाजलात्कियतीरपः स्वकीयेनाञ्जलिना समादाय पूर्वस्या दिशि तामग्नीष्टकामुपधत्तवान् । केन मन्त्रेण, एवा ह्येवेति, अनेन मन्त्रेण । तस्य मन्त्रस्याऽऽदित्यपरत्वं पूर्वमेव दर्शितम् । ततः समन्त्रकोपधानादादित्य उत्पन्नः । स यस्या दिश्युत्पन्नः सा प्राची दिगभूत् । तैआसा.

**अथाऽऽरुणः केतुर्दक्षिणत उपादधात् । एवा ह्यग्न इति । ततो वा अग्निरुदतिष्ठत् । सा दक्षिणा दिक् । अथाऽऽरुणः केतुः पश्चादुपादधात् । एवा हि वायो**

**इति । ततो वायुरुदतिष्ठत् । सा प्रतीची दिक् । अथाऽरुणः केतुरुत्तरत उपादधात् । एवा हीन्द्रेति । ततो वा इन्द्र उदतिष्ठत् । सोदीची दिक् । अथाऽऽरुणः केतुर्मध्य उपादधात् । एवा हि पूषन्निति । ततो वै पूषोदतिष्ठत् । सेयं दिक् । अथाऽरुणः केतुरुपरिष्टादुपादधात् । एवा हि देवा इति । ततो देवमनुष्याः पितरः । गन्धर्वाप्सरसश्चोदतिष्ठन् । सोर्ध्वा दिक् ॥**

एतेषु मन्त्रेषु एवा एतव्याः प्राप्तव्याः कामाः । हिशब्दः प्रसिद्धौ । सर्वेषां देवानां कामप्रदत्वेन तत्कामरूपत्वं प्रसिद्धमिति पूर्वं व्याख्यातम् । एवाहीतिशब्दः आगच्छेत्येतस्मिन्नर्थे वा व्याख्येयः । सेयमित्यधोदिगुच्यते । अन्यत्पूर्ववद्व्याख्येयम् । तैआसा.

**या विप्रुषो वि परापतन् । ताभ्योऽसुरा रक्षाꣳसि पिशाचाश्चोदतिष्ठन् । तस्मात्ते पराभवन् । विप्रुड्भ्यो हि ते समभवन् ॥**

देवसृष्टिमभिधाय असुरसृष्टिं दर्शयति—या विप्रुष इति । अञ्जलिनोपधीयमानानामपां सबन्धिन्यो या विप्रुषो बिन्दवो विविधा भूत्वा तस्मादुपधानप्रदेशाद्बहिः परापतंस्ताभ्यो विप्रुड्भ्योऽसुरादय उत्पन्नाः । ते चावान्तरजातिभेदात्त्रिविधाः । यस्मात्ते पराभवन्तीभ्यो विप्रुड्भ्य उत्पन्नास्तस्मात्पराभूताः, अधमाः सन्तो विनष्टा इत्यर्थः । तैआसा.

**तदेषाऽभ्यनूक्ता । आपो ह यद्बृहतीर्गर्भमायन् । दक्षं दधाना जनयन्तीः स्वयंभुम् । तत इमेऽध्यसृज्यन्त सर्गाः । अद्भ्यो वा इदꣳसमभूत् । तस्मादिदꣳसर्वं ब्रह्म स्वयंभ्विति ॥**

अपां सकाशाद्येयं सृष्टिः प्रपञ्चिता, तस्याः संग्रहरूपामृचमवतारयति—तदेषेति । तत्तस्मिन्नद्भ्यः सर्वं समुत्पन्नमित्यस्मिन्नर्थे काचिदियमृक्शाखान्तरेऽभ्यनूक्ता । तामेतामृचं दर्शयति—आपो हेति । अत्राद्भ्यो वा इति वाक्यं ब्राह्मणरूपमपि तृतीयपादतात्पर्यप्रदर्शनाय मन्त्रमध्ये समाम्नातम् । बृहतीः प्रौढा आपो यं गर्भं जाग्रद्रूपमायन् प्राप्तवत्यः । कीदृश्यः आपः । दक्षं वृद्धिशीलं गर्भं दधाना धारयन्त्यः, स्वयम्भुं कूर्मरूपं परमात्मानं जनयन्तीर्जनयितुकामाः, ततस्तस्माद्विराड्रूपादपां गर्भादिमे भूरादयः सर्गाः सृज्यमाना लोका अध्यसृज्यन्त, सृष्टवर्हानेतान् सृष्टवानित्यर्थः । अद्भ्य एवेदं सर्वं जगदुत्पन्नमिति कृत्वा पादत्रयेणोक्तोऽर्थो युक्त एव । यस्मात्कारणात्कूर्मरूपं ब्रह्मैव सर्वं सृष्टवांस्तस्मात्कारणादिदं सर्वं जगत् स्वयंभु स्वतःसिद्धं ब्रह्मैव । तैआसा.

**तस्मादिदꣳसर्वं शिथिलमिवाध्रुवमिवाभवत् ॥**

कार्यत्वं जगतो युक्त्योपपादयति—तस्मादिति । यस्माच्छिथिलाभ्योऽद्भ्यो जातं, आपो हि शिथिला न तु पाषाणवद्दृढाः, तस्मात्कारणादिदं सर्वं जगच्छिथिलमिव दृश्यते । तस्यैव व्याख्यानमध्रुवमिवेति । अनित्यत्वमध्रुवत्वम् । तैआसा.

प्रजापतेः सृष्टभूतेष्वनुप्रवेशः

**प्रजापतिर्वाव तत् । आत्मनाऽऽत्मानं विधाय । तदेवानुप्राविशत् ॥**

अथास्य जगतो दार्ढ्योपायं दर्शयति—प्रजापतिरिति । केवलकार्यत्वे समुत्पन्नं शिथिलं भवेन्न तु तदस्ति । किन्तु तज्जगत्प्रजापतिरेव । यथा घटे मृदंशः पृथुबुध्नोदराकाराशश्चेत्यंशद्वयमेव जगत्यपि सच्चिदानन्दरूपप्रजापत्यंशो नामरूपांशश्चेत्यंशद्वयं, तत्र नामरूपयोरेव कार्यत्वेन शैथिल्येऽपि सच्चिदानन्दप्रजापत्यंशस्य दार्ढ्यमस्ति । स हि प्रजापतिरात्मना साधनान्तरनिरपेक्षेण स्वसामर्थ्येनाऽऽत्मानं स्वस्वरूपं जगदाकारेण विधाय तदेव जगदनुसृत्य शरीरेषु स्वयं चिद्रूपेण प्राविशत् । तैआसा.

**तदेषाऽभ्यनूक्ता ॥**

तत्तस्मिन्स्वयमेव सृष्ट्वा प्रविष्ट इत्यस्मिन्नर्थे काचिदृक् शाखान्तरेऽभ्यनुक्ता । तैआसा.

**विधाय लोकान् विधाय भूतानि । विधाय सर्वाः प्रदिशो दिशश्च ।**
**प्रजापतिः प्रथमजा ऋतस्य । आत्मनाऽऽत्मानमभिसंविवेशेति ॥**

ऋतस्य सत्यस्य परब्रह्मणः सकाशात्प्रथममुत्पन्नः प्रजापतिः लोकान् भूरादीन् विधाय भूतानि प्राणिनश्च विधाय प्राच्याद्या मुख्यदिशः आग्नेय्याद्याः विदिशश्च विधायाऽऽत्मना स्वकीयेन चैतन्येनाऽऽत्मानं स्वशरीररूपं जगदभितः सम्यक्प्रविवेश । तैआसा.

सर्वमेवेदमाप्त्वा । सर्वमवरुध्य । तदेवानुप्रविशति । य एवं वेद ॥

यः पुमानेवं प्रजापतिसृष्टिप्रकार विजानाति स पुमान् सर्वमेव जगति विद्यमानमिद फल प्राप्य तच्च सर्व वशीकृत्य तदेव जगदनुप्रविशति। सर्वात्मको भवतीत्यर्थः। तैआसा. *

---

## विराट्

सलिलस्थानभूता, द्विवत्सजननी, कामधेनु, माया, ब्रह्मणः पिता, यज्ञाधारः, विश्वविमर्शयित्री, उषस स्वरूपेण स्थिता अदितिः

[1]कुतस्तौ जातौ कतमः सो अर्धः कस्माल्लोकात्कतमस्याः पृथिव्याः ।
वत्सौ विराजः सलिलादुदैतां तौ त्वा पृच्छामि कतरेण दुग्धा ॥
यो अक्रन्दयत्सलिलं महित्वा योनिं कृत्वा त्रिभुजं शयानः ।
वत्सः कामदुघो विराजः स गुहा चक्रे तन्वः पराचैः ॥
यानि त्रीणि बृहन्ति येषां चतुर्थं वियुनक्ति वाचम् ।
ब्रह्मैनद्विद्यात्तपसा विपश्चिद्यस्मिन्नेकं युज्यते यस्मिन्नेकम् ॥
बृहतः परि सामानि षष्ठात्पञ्चाधि निर्मिता ।
बृहद्बृहत्या निर्मितं कुतोऽधि बृहती मिता ॥
बृहती परि मात्राया मातुर्मात्राधि निर्मिता ।
माया ह जज्ञे मायाया मायाया मातली परि ॥
वैश्वानरस्य प्रतिमोपरि द्यौर्यावद्रोदसी विबबाधे अग्निः ।
ततः पष्ठादामुतो यन्ति स्तोमा उदितो यन्त्यभि पृष्ठमह्नः ॥
षट् त्वा पृच्छाम ऋषयः कश्यपेमे त्वं हि युक्तं युयुक्षे योग्यं च ।
विराजमाहुर्ब्रह्मणः पितरं तां नो वि धेहि यतिधा सखिभ्यः ॥
यां प्रच्युतामनु यज्ञाः प्रच्यवन्त उपतिष्ठन्त उपतिष्ठमानाम् ।
यस्या व्रते प्रसवे यक्षमेजति सा विराडृषयः परमे व्योमन् ॥
अप्राणैति प्राणेन प्राणतीनां विराट् स्वराजमभ्येति पश्चात् ।
विश्वं मृशन्तीमभिरूपां विराजं पश्यन्ति त्वे न त्वे पश्यन्त्येनाम् ॥
[1]को विराजो मिथुनत्वं प्र वेद क ऋतून्क उ कल्पमस्याः ।
क्रमान्को अस्याः कतिधा विदुग्धान्को अस्या धाम कतिधा व्युष्टीः ॥
[2]इयमेव सा या प्रथमा व्यौच्छदास्वितरासु चरति प्रविष्टा ।
महान्तो अस्यां महिमानो अन्तर्वधूर्जिगाय नवगज्जनित्री ॥
[3]छन्दःपक्षे उषसा पेपिशाने समानं योनिमनु सं चरेते ।

---

* विश्वकर्मा, प्रजापतिः, परमात्मा, सृष्टि· इत्येतेषु प्रकरणेषु अपा जगन्मूलत्वं, जगदाधारत्वं, सर्वदेवताश्रयत्वं, सर्वदेवतामयत्वमित्यादि द्रष्टव्यम् ।

(१) असं. ८।९।१-९.

(१) असं. ८।९।१०; मैसं. २।१३।१० (७२) (को विराजो मिथुनत्वं प्रवेद ऋतून् को अस्याः क उ वेद रूपम् । दोहान् को वेद कतिधा विदुग्धाः, कति धामानि कति ये विवासाः ॥ ).

(२) असं. ८।९।११; तैसं. ४।३।११।१ दास्वितरासु (दन्तरस्यां) उत्तरार्धे (वधूर्जजान नवगजनित्री त्रय एना महिमानः सचन्ते ।); कासं. ३९।१० (५१) व्यौच्छ... चरति (व्यौच्छन् सावास्वन्तश्चरति) उत्तरार्धे (वधूर्मिमाय नवगज्जनित्री त्रय एना महिमानः सचन्ते ।), मैसं. २।१३।१० (७३) व्यौच्छ...चरति (व्यौच्छत् साप्स्वन्तश्चरति) उत्तरार्ध कासंवत्, तैब्रा. २।५।५।३.

(३) असं. ८।९।१२, तैसं. ४।३।११।१ छन्द पक्षे (छन्दस्वती) सं चरेते (सं चरन्ती) सं चरतः (वि चरत·) केतुमती (केतुं कृण्वाने), कासं. ३९।१० (५२) छन्दःपक्षे उषसा (छन्दस्वती उषसौ) सं चरत· (वि-

सूर्यपत्नी सं चरतः प्रजानती केतुमती अजरे
भूरिरेतसा ॥
[1]ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मा अनु
रेत आगुः ।
प्रजामेका जिन्वत्यूर्जमेका राष्ट्रमेका रक्षति देव-
यूनाम् ॥
[2]अग्नीषोमावदधुर्या तुरीयासीद्यज्ञस्य पक्षावृषयः
कल्पयन्तः ।
गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्की यजमा-
नाय स्वराभरन्तीम् ॥
[3]पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु
पञ्च ।
पञ्च दिशः पञ्चदशेन क्लृप्तास्ता एकमूर्ध्नीरभि
लोकमेकम् ॥
[4]षड् जाता भूता प्रथमजर्तस्य षडु सामानि षडहं
वहन्ति ।
षड्योगं सीरमनु सामसाम षडाहुर्द्यावापृथिवीः
षडुर्वीः ॥

षडाहुः शीतान्षडु मास उष्णानृतुं नो ब्रूत यतमो-
ऽतिरिक्तः ।
सप्त सुपर्णाः कवयो नि षेदुः सप्त च्छन्दांस्यनु
सप्त दीक्षाः ॥
सप्त होमाः समिधो ह सप्त मधूनि सप्तर्तवो ह
सप्त ।
सप्ताज्यानि परि भूतमायन्ताः सप्तगृध्रा इति
शुश्रुमा वयम् ॥
सप्त च्छन्दांसि चतुरुत्तराण्यन्यो अन्यस्मिन्नध्या-
र्पितानि ।
कथं स्तोमाः प्रति तिष्ठन्ति तेषु तानि स्तोमेषु
कथमार्पितानि ॥
कथं गायत्री त्रिवृतं व्याप कथं त्रिष्टुप्पञ्चदशेन
कल्पते ।
त्रयस्त्रिंशेन जगती कथमनुष्टुप्कथमेकविंशः ॥
अष्ट जाता भूता प्रथमजर्तस्याष्टेन्द्रर्त्विजो दैव्या
ये ।
अष्टयोनिरदितिरष्टपुत्राष्टमीं रात्रिमभि हव्यमेति ॥
[1]इत्थं श्रेयो मन्यमानेदमागमं युष्माकं सख्ये
अहमस्मि शेवा ।
समानजन्मा क्रतुरस्ति वः शिवः स वः सर्वाः सं
चरति प्रजानन् ॥
[2]अष्टेन्द्रस्य षड्यमस्य ऋषीणां सप्त सप्तधा ।
अपो मनुष्यानोषधीस्ताँ उ पञ्चानु सेचिरे ॥
केवलीन्द्राय दुदुहे हि गृष्टिर्वशं पीयूषं प्रथमं
दुहाना ।
अथातर्पयच्चतुरश्चतुर्धा देवान्मनुष्याँ असुरा उत
ऋषीन् ॥
को नु गौः क एकऋषिः किमु धाम का
आशिषः ।
यक्षं पृथिव्यामेकवृदेकर्तुः कतमो नु सः ॥
एको गौरेक एकऋषिरेकं धामैकधाशिषः ।
यक्षं पृथिव्यामेकवृदेकर्तुर्नाति रिच्यते ॥

---

न्चरत॰ ); मैसं. २।१३।१० ( ७४ ) रेतसा ( रेतसौ ) शेष कासंवत्

(१) असं. ८।९।१३; तैसं. ४।३।११।१ घर्मा. आगु॰ ( घर्मासो अनु ज्योतिषाऽगुः ) जिन्वत्यू ( रक्षत्यू ) राष्ट्र ( व्रत ); कासं. ३९।१० ( ५३ ) घर्मा. ...आगुः ( घर्मासो अनु रेतसागुः ) जिन्वत्यू ( रक्षत्यू ) राष्ट्र ( क्षत्र ); मैसं. २।१३।१० ( ७५ ) पूर्वार्धं कासंवत्, राष्ट्र ( क्षत्र ).

(२) असं. ८।९।१४, तैसं. ४।३।११।२ ( चतुष्टोमो अभवद्या तुरीया यज्ञस्य पक्षावृषयो भवन्ती। गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवराऽभरन्निदम् ॥), कासं. ३९।१० ( ५४ ) ( चतुष्टोममदधाद्या तुरीया यज्ञस्य पक्षा ऋषयो भवन्ती। गायत्री त्रिष्टुब्जगती विराडर्कं युञ्जानाः स्वराभरन्निदम् ॥ ); मैसं. २।१३।१० ( ७६ ) पूर्वार्धं कासंवत्, उत्तरार्धं ( गायत्रीं त्रिष्टुभं जगती विराजमर्कं युञ्जानाः स्वराभरन्निदम् । ).

(३) असं. ८।९।१५; तैसं. ४।३।११।४ ता एकमू ( समानमू ); कासं. ३९।१० ( ५६ ) एकमू ( समानमू ); मैसं. २।१३।१० ( ८२ ) कासंवत्.

(४) असं. ८।९।१६-२१.

(१) असं. ८।९।२२, मैसं २।१३।१० ( ७९ ) (इदं श्रेयो मन्यमानो वा आगामहं वो आस्मि सख्याय शेव । समानजन्मा क्रतुरस्त्येक. सर्व. सर्वा विचरतु प्रजानन् ॥ ).

(२) असं. ८।९।२३-२६.

विराजः गार्हपत्याहवनीयदक्षिणाग्निसभासमित्यामन्त्रणेषु आक्रमणानि

[1]विराड्वा इदमग्र आसीत्तस्या जातायाः सर्वमबिभेदियमेवेदं भविष्यतीति ॥
सोदक्रामत्सा गार्हपत्ये न्यक्रामत् ॥
गृहमेधी गृहपतिर्भवति य एवं वेद ॥
सोदक्रामत्साहवनीये न्यक्रामत् ॥
यन्त्यस्य देवा देवहूतिं प्रियो देवानां भवति य एवं वेद ॥
सोदक्रामत्सा दक्षिणाग्नौ न्यक्रामत् ॥
यज्ञर्तो दाक्षिणीयो वासतेयो भवति य एवं वेद ॥
सोदक्रामत्सा सभायां न्यक्रामत् ॥
यन्त्यस्य सभां सभ्यो भवति य एवं वेद ॥
सोदक्रामत्सा समितौ न्यक्रामत् ॥
यन्त्यस्य समितिं सामित्यो भवति य एवं वेद ॥
सोदक्रामत्सामन्त्रणे न्यक्रामत् ॥
यन्त्यस्यामन्त्रणमामन्त्रणीयो भवति य एवं वेद ॥

देवमनुष्याणामुपजीवनस्य ज्ञात्री दात्री च

सोदक्रामत्साऽन्तरिक्षे चतुर्धा विक्रान्ताऽतिष्ठत् ॥
तां देवमनुष्या अब्रुवन्नियमेव तद्वेद यदुभय उपजीवेमेमामुप ह्वयामहा इति ॥
तामुपाह्वयन्त ॥
ऊर्ज एहि स्वध एहि सूनृत एहीरावत्येहीति ॥
तस्या इन्द्रो वत्स आसीद्गायत्र्यभिधान्यभ्रमूधः ॥
बृहच्च रथन्तरं च द्वौ स्तनावास्तां यज्ञायज्ञियं च वामदेव्यं च द्वौ ॥
ओषधीरेव रथन्तरेण देवा अदुह्रन्व्यचो बृहता ॥
अपो वामदेव्येन यज्ञं यज्ञायज्ञियेन ॥
ओषधीरेवास्मै रथन्तरं दुहे व्यचो बृहत् ॥
अपो वामदेव्यं यज्ञं यज्ञायज्ञियं य एवं वेद ॥

वनस्पतिपितृदेवमनुष्याणा जीवनं सा

सोदक्रामत्सा वनस्पतीनागच्छत्तां वनस्पतयोऽघ्नत सा संवत्सरे समभवत् ॥
तस्माद्वनस्पतीनां संवत्सरे वृक्णमपि रोहति वृश्चतेऽस्याप्रियो भ्रातृव्यो य एवं वेद ॥
सोदक्रामत्सा पितॄनागच्छत्तां पितरोऽघ्नत सा मासि समभवत् ॥
तस्मात्पितृभ्यो मास्युपमास्यं ददति प्र पितृयाणं पन्थां जानाति य एवं वेद ॥
सोदक्रामत्सा देवानागच्छत्तां देवा अघ्नत साऽर्धमासे समभवत् ॥
तस्माद्देवेभ्योऽर्धमासे वषट् कुर्वन्ति प्र देवयानं पन्थां जानाति य एवं वेद ॥
सोदक्रामत्सा मनुष्यानागच्छत्तां मनुष्या अघ्नत सा सद्यः समभवत् ॥
तस्मान्मनुष्येभ्यः उभयद्युरुप हरन्त्युपास्य गृहे हरन्ति य एवं वेद ॥

असुरपितृमनुष्यसप्तर्षिदेवगन्धर्वाप्सरसा इतरजनसर्पाणा च उपजीवनदोग्ध्री

सोदक्रामत्सासुरानागच्छत्तामसुरा उपाह्वयन्त माय एहीति ॥
तस्या विरोचनः प्राह्लादिर्वत्स आसीदयस्पात्रं पात्रम् ॥
तां द्विमूर्धार्त्व्योऽधोक्तां मायामेवाधोक् ॥
तां मायामसुरा उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥
सोदक्रामत्सा पितॄनागच्छत्तां पितर उपाह्वयन्त स्वध एहीति ॥
तस्या यमो राजा वत्स आसीद्रजतपात्रं पात्रम् ॥
तामन्तको मार्त्यवोऽधोक्तां स्वधामेवाधोक् ॥
तां स्वधां पितर उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥
सोदक्रामत्सा मनुष्यानागच्छत्तां मनुष्या उपाह्वयन्तेरावत्येहीति ॥
तस्या मनुर्वैवस्वतो वत्स आसीत् पृथिवी पात्रम् ॥
तां पृथी वैन्योऽधोक्तां कृषिं च सस्यं चाधोक् ॥
ते कृषिं च सस्यं च मनुष्या उप जीवन्ति कृष्टराधिरुपजीवनीयो भवति य एवं वेद ॥

(१) असं. ८।१०–१५ (१०).

सोदक्रामत्सा सप्तऋषीनागच्छत्तां सप्तऋषय उपाह्वयन्त ब्रह्मण्वत्येहीति ॥
तस्याः सोमो राजा वत्स आसीच्छन्दः पात्रम् ॥
तां बृहस्पतिराङ्गिरसोऽधोक्तां ब्रह्म च तपश्चाधोक् ॥
तद्ब्रह्म च तपश्च सप्तऋषय उप जीवन्ति ब्रह्मवर्चस्युपजीवनीयो भवति य एवं वेद ॥
सोदक्रामत्सा देवानागच्छत्तां देवा उपाह्वयन्तोर्ज एहीति ॥
तस्या इन्द्रो वत्स आसीच्चमसः पात्रम् ॥
तां देवः सविताऽधोक्तामूर्जामेवाधोक् ॥
तामूर्जां देवा उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥
सोदक्रामत्सा गन्धर्वाप्सरस आगच्छत्तां गन्धर्वाप्सरस उपाह्वयन्त पुण्यगन्ध एहीति ॥
तस्याश्चित्ररथः सौर्यवर्चसो वत्स आसीत्पुष्करपर्णं पात्रम् ॥
तां वसुरुचिः सौर्यवर्चसोऽधोक्तां पुण्यमेव गन्धमधोक् ॥
तं पुण्यं गन्धं गन्धर्वाप्सरस उप जीवन्ति पुण्यगन्धिरुपजीवनीयो भवति य एवं वेद ॥
सोदक्रामत्सेतरजनानागच्छत्तामितरजना उपाह्वयन्त तिरोध एहीति ॥
तस्याः कुबेरो वैश्रवणो वत्स आसीदामपात्रं पात्रम् ॥
तां रजतनाभिः काबेरकोऽधोक्तां तिरोधामेवाधोक् ॥
तां तिरोधामितरजना उप जीवन्ति तिरो धत्ते सर्वं पाप्मानमुपजीवनीयो भवति य एवं वेद ॥
सोदक्रामत्सा सर्पानागच्छत्तां सर्पा उपाह्वयन्त विषवत्येहीति ॥
तस्यास्तक्षको वैशालेयो वत्स आसीदलाबुपात्रं पात्रम् ॥
तां धृतराष्ट्र ऐरावतोऽधोक्तां विषमेवाधोक् ॥
तद्विषं सर्पा उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥
तद्यस्मा एवं विदुषेऽलाबुनाभिषिञ्चेत्प्रत्याहन्यात् ॥
न च प्रत्याहन्यान्मनसा त्वा प्रत्याहन्मीति प्रत्याहन्यात् ॥
यत्प्रत्याहन्ति विषमेव तत्प्रत्याहन्ति ॥
विषमेवास्याप्रियं भ्रातृव्यमनुविषिच्यते य एवं वेद ॥

---

## अदितिः

सर्वं खलु इदं अदितिः.

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥

अदितिः अदीना अखण्डनीया वा पृथिवी देवमाता वा सैव द्यौः द्योतनशीलो नाकः । सैव अन्तरिक्षं अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं व्योम । सैव माता निर्मात्री जगतो जननी । सैव पिता उत्पादकः । ततश्च सः पुत्रः मातापित्रोर्जातः पुत्रोऽपि सैव । विश्वे देवाः सर्वेऽपि देवाः अदितिः एव । पञ्च जनाः निषादपञ्चमाश्चत्वारो वर्णाः । यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसि । तदुक्तं यास्केन— 'गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः' (नि. ३।८) इति । ब्राह्मणे त्वेवमाम्नात— 'सर्वेषां वा एतत्पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च' (ऐब्रा. १३।७।५) इति । तत्र गन्धर्वाप्सरसामैक्यात्पञ्चजनत्वम् । एवंविधाः पञ्चजना अपि अदितिः एव । जातं जननं प्रजानामुत्पत्तिः सा अपि अदितिः एव । जनित्वं जन्माधिकरणं तदपि अदितिः एव । एवं सकलजगदात्मनाऽदितिः स्तूयते । उक्तं च यास्केन— 'इत्यदितेर्विभूतिमाचष्टे' (नि. ४।२३) इति ।

ऋसा.

---

(१) ऋसं. १।८९।१०; असं. ७।६।१, मैसं. ४।१४।४ (५७), शुसं. २५।२३; ऐब्रा. ३।३१।९, तैआ. १।१३।२.

सत्यस्य पालयित्री, अविनश्वरी, सुव्रतानां माता, द्युपृथिवीरूपा, अन्तरिक्षधारिणी

**[1] महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवामहे ।**
**तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ॥**

महीं महतीं महनीया वा सुव्रताना, व्रतमिति कर्मनाम, शोभनकर्मणा पुरुपाणा मातर मातृस्थानीया ऋतस्य सत्यस्य यज्ञस्य वा पत्नी पालयित्री तुविक्षत्रा बहुबला बहुधना वा । अजरन्तीं अविनश्वरी उरूची उरून् महतः अञ्चतीं उरु महत् अतिदूरं वा गच्छन्ती बहुप्रकारगतिं वा । सुशर्माण सुसुखाम् । सुप्रणीतिं सुखेन कर्मणा प्रणेत्रीं सुष्ठु प्रणीयमाना वा अदितिं अखण्डनीया देवमातरं नावं वा अवसे रक्षणाय सु सुष्ठु हुवामहे आह्वयामः । उ इति पदपूरणे । असा.

**[2] सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।**
**दैवीं नावं स्वरित्रामनागसो अस्रवन्तीमा रुहेमा स्वस्तये ॥**

सुत्रामाण सुष्ठु त्रायमाणा पृथिवी विस्तीर्णाम् । द्या द्योतमानां अभिगन्तव्यां वा अनेहसं अपापाम् । सुशर्माणमिति पादः पूर्वस्यामृचि व्याख्यातः । स्वरित्रां शोभनारित्राम् । अरित्र उदकक्षेपणसाधनभूतो दण्डः। अस्रवन्ती अछिद्रां दैवीं देवानामिय देवमातर देवसबन्धिनी वा नाव नौसदृशीं प्रसिद्धां वा नावं अनागसः अनपराधा वयं स्वस्तये क्षेमाय आ रुहेम आरूढा भूयास्म । अस्य मन्त्रस्य दीक्षायां कृष्णाजिनादि(धि)रूढेन यजमानेन जप्यत्वात् नौशब्देन कृष्णाजिनं विवक्ष्यते। तथा च ऐतरेयब्राह्मणे–'कृष्णाजिन वै सुतर्मा नौः' (ऐब्रा. ३।२।२९) इत्याम्नातम् । सर्वाणि विशेषणानि पूर्ववत् योज्यानि । असा.

**[1] वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।**
**यस्या उपस्थ उर्वन्तरिक्षं सा नः शर्म त्रिवरूथं नि यच्छात् ॥**

वाजस्य अन्नस्य प्रसवे उत्पत्तौ उत्पत्त्यर्थं मातरं अन्नस्य निर्मात्री महीं महती अदितिं नाम, अदितिः अदीना अखण्डनीया वा । एवंनामधेया एवंस्वभावां नाव वा नु क्षिप्र वचसा स्तुत्या करामहे कुर्महे । अदितिं नावं वा अन्नप्रसवार्थं स्तुम इत्यर्थः । यस्या अदित्या उपस्थे उत्सङ्गे समीपे उरु विस्तीर्णं अन्तरिक्षं आकाश वर्तते सा अदितिः नः अस्माकं त्रिवरूथं त्रिभूमिक त्रिकक्ष्य शर्म गृह नि यच्छात् नियच्छतु प्रयच्छतु । असा.

विश्वेषामाधारः माता च

**[2] वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।**
**यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत् ॥**

वाजस्य नु अन्नस्यैव प्रसवे उत्पत्तिनिमित्तं मातरं अन्नस्य निर्मात्री मही वेदिरूपा पृथिवीमदितिं नाम अखण्डनीयामेव वचसा स्तुत्या करामहे कुर्मः । यस्या पृथिव्यामिदं सर्वं भूतजातं प्रविश्यावतिष्ठते तस्या पृथिव्यां नोऽस्माक धर्म धारणं सविता देवः साविषत् अनुजानातु । तैसा.

देवजननी

**[3] अदितिर्वै प्रजाकामौदनमपचत् । सोच्छिष्टमाश्नात् । तस्या धाता चार्यमा चाऽजायेताम् । साऽपरमपचत् । सोच्छिष्टमाश्नात् । तस्या मित्रश्च वरुण-**

---

(१) असं. ७।६।२; तैसं. १।५। ११।५ हुवामहे (हुवेम); कासं. ३०।४ (१२) तैसंवत्; मैसं. ४।१०।१ (३४) तैसंवत्; शुसं. २१।५ तैसंवत्; ऐब्रा. २।३।७.

(२) ऋसं. १०।६३।१० सो अस्र (समस्र), असं. ७।७।१; तैसं. १।५।११।५ ऋसंवत्; कासं. २।३ (११) रुहेमा (रुहेम) शेषं ऋसंवत्; मैसं. ४।१०।१ (३३) ऋसंवत्, शुसं. २१।६ ऋसंवत्; ऐब्रा. २।३।७.

(१) असं. ७।७।२.

(२) तैसं. १।७।७।१, कासं. १३।१४ (४५) धर्म (धर्म); मैसं. १।११।१ (२) उत्तरार्धे (विश्वं ह्यस्या भुवनमाविवेश तस्या देवः सविता धर्म साविषत्); शुसं. ९।५, १८।३०, तैब्रा. १।३।५।२, शब्रा. ५।१।४।४.

(३) मैसं. १।६।१२ (१७).

श्चाजायेताम् । साऽपरमपचत् । सोऽच्छिष्टमाश्नात् । तस्या अंशश्च भगश्चाजायेताम् । साऽपरमपचत् । सैक्षत । उच्छिष्टं मेऽश्नत्या द्वौ द्वौ जायेते । इतो नूनं मे श्रेयः स्याद्यत् पुरस्तादश्नीयामिति । सा पुरस्तादशित्वोपाहरत् । ता अन्तरेव गर्भः सन्ता अवदताम् । आवमिदं भविष्यावो यदादित्या इति । तयोरादित्या निर्हन्तारमैछन् । ता अंशश्च भगश्च निरहताम् । तस्मादेतौ यज्ञेन यजन्ते । अंशप्रासोंऽशस्य भागधेयम् । जनं भगोऽगछत् । तस्मादाहुः । जनो गन्तव्यः । तत्र भगेन संगछता इति । स वा इन्द्र ऊर्ध्व एव प्राणमनुदश्रयत । मृतमितरमाण्डमवापद्यत । स वाव मार्ताण्डो यस्येमे मनुष्याः प्रजा । सा वा अदितिरादित्यानुपाधावत् । अस्त्वेव म इदम् । मा म इदं मोघे परापप्तदिति । तेऽब्रुवन् । अथैपोऽस्माकमेव ब्रवातै । न नोऽतिमन्याता इति । स वाव विवस्वानादित्यो यस्य मनुश्च वैवस्वतो यमश्च । मनुरेवास्मिंल्लोके यमोऽमुष्मिन् । एते वै देवयानान् पथो गोपायन्ति । यदादित्यास्त इयक्षमाणं प्रतिनुदन्ते । यो वा एतेभ्योऽप्रोच्याग्निमाधत्ते तमेते स्वर्गाल्लोकात्प्रतिनुदन्ते । उच्छिष्टभागा वा आदित्याः । यदुच्छिष्टे विवर्तयित्वा समिध आदधाति तदादित्येभ्योऽग्न्याधेयं प्राह । नैनꣳ स्वर्गाल्लोकात् प्रतिनुदन्ते ॥

---

## रोहितः *

जलादुद्गच्छन्, विश्वजनिता, राष्ट्रस्य तत्प्रविश्य धारक, जननीषु स्थितगर्भरूप, परमेष्ठी, विश्वस्य धारक, देवेभ्योऽमृतद, विश्वव्यापक, कविः, यज्ञस्य जनिता मुखं च, समितिषु उच्चस्थानद, सर्वलोकेष्वन्तः स्थित, सूनृतस्य राष्ट्रे स्थापक, अग्निसूर्यव्यापक, द्यावापृथिव्योर्विष्टम्भकः, देवाना सृष्टिकर्मणि प्रयोजक, ब्रह्मरूप, बहुजन्मा, यश स्वरूपः, इहामुत्र वा स्थित्वा सर्वद्रष्टा, विश्वव्यापिनी समुद्रोद्गमस्थानं गौः स., अमृत, अमर्त्य, परमे व्योम्नि स्थित, सर्वभूतचक्षु सूर्य., प्राणिजातजन्मकारणयज्ञस्य यजमानः

ऋषि

उदेहि[1] वाजिन् यो अप्स्वन्तरिदं राष्ट्रं प्र विश सूनृतावत् ।
यो रोहितो विश्वमिदं जजान स त्वा राष्ट्राय सुभृतं बिभर्तु ॥

हे वाजिन् अश्वमेधे कर्मणि प्रयुज्यमान हे अश्व उदेहि जलमध्यादुद्गच्छ । अतोऽत्राश्वमेधगतमश्वं सम्बोध्योच्यते योऽयमश्वोऽप्स्वन्तर्वर्तते स त्वं उदेह्युद्गत्य च सूनृतावत्प्रीतियुक्तमिद राष्ट्रमाविश । इहाऽऽस्यतामिह भुज्यतामित्येवरूपा वाणी सूनृता । अस्य चाश्वस्य प्रजापतिजन्यत्वेन तद्रूपत्वमुपचर्य प्रशस्यते—योऽश्वः स्वकारणभूतप्रजापतिरूपेण रजोगुणयुक्तत्वाद्रोहितः सन्निदं विश्व जजानोत्पादयामास, स प्रजापतिरूपोऽश्वो नोऽस्मानेतेषु राष्ट्रेषु सुधितान्सुखयुक्तान्कृत्वा स्थापयतु ।

तैब्रासा. २।५।२।१

उद्वाज[2] आ गन् यो अप्स्वन्तर्विश आ रोह त्वद्योनयो याः ।
सोमं दधानोऽप ओषधीर्गाश्चतुष्पदो द्विपद आ वेशयेह ॥

यूयमुग्रा[3] मरुतः पृश्निमातर इन्द्रेण युजा प्र मृणीत शत्रून् ।
आ वो रोहितः शृणवत्सुदानवस्त्रिषप्तासो मरुतः स्वादुसंमुदः ॥

हे मरुतो यूयं सयुजा युष्माभिः सहावस्थितेनेन्द्रेण साकमस्मदीयान् शत्रून्प्रमृणीथ निराकुरुत । रोहितः प्रजा-

---

* रोहितदेवस्य विशेषत. उद्यन् सूर्यो विभूतिः इति गम्यते, अतः 'सविता' प्रकरणे एव तस्य निवेशो युक्त । तथापि तस्य परब्रह्मरूपत्वं सर्वदेवतामयत्वं च विस्पष्टं प्रतिपाद्यतेऽस्मिन्काण्डे इति पृथक्तया संगृहीतः ।

(१) असं. १३।१।१, तैब्रा २।५।२।१ ( उदेहि वाजिन् यो अस्यप्स्वन्त. । इदꣳ राष्ट्रमाविश सूनृतावत् । यो रोहितो विश्वमिदं जजान । स नो राष्ट्रेषु सुधितान् दधातु ॥ ).

(२) असं. १३।१।२.

(३) असं. १३।१।३; तैब्रा. २।५।२।३ युजा प्र मृणीत ( संयुजा प्रमृणीथ ) रोहित. ... ...सो ( रोहितो अशृणोदभिद्यवः । त्रिसप्तासो ),

'प्रतिरूपोऽयमश्वो वो युष्मानाशृणोत् शत्रुक्षयकारिण एते इति भवदीया कीर्ति सर्वदा शृणोति। कीदृशा मरुतः। उग्राः शत्रुविषयेः कोपयुक्ताः। पृश्निर्मातैषा ते पृश्निमातरः। 'पृश्नेः पुत्रा उपमासः' (ऋस. ५।५८।५) इति हि मन्त्रान्तरम्। 'पृश्न्यै वै पयसो मरुतो जाताः' इति च ब्राह्मणम्। अभिद्यवः अभितो द्योतमानास्त्रिसप्तासस्त्रिविधाः सप्त सख्या येषा ते त्रिसप्तासः। 'सप्तगणा वै मरुतः' (तैब्रा. १।६।२।१) इति ब्राह्मणाम्नानात्। सप्तगणाः सप्तसख्याकाः। तत्र 'धूनिश्च ध्वान्तश्च' इत्यारण्यकानुवाकोक्तो गणो मध्यमः। तस्मात्पूर्ववर्तिनः 'ईदृङ् च' इत्यादिनोक्तास्त्रयो गणाः। 'ऋतश्च सत्यश्च' इत्यादिनोक्ताः उत्तरभाविनस्त्रयो गणाः। तत्रैकस्मिन् गणत्रये तिस्रः सप्तसख्या विद्यन्ते तस्मात्ते त्रिसप्तास इत्युच्यन्ते। स्वादुना हविषा सम्यङ्मोदन्ते इति स्वादुसंमुदः। अत्र मरुत इति सबुद्धयन्त पद द्विराम्नात, तच्च वाक्यद्वये योजनीयम्। हे मरुतः शत्रून् प्रमृणीथ। हे मरुतो युष्मान् रोहितोऽशृणोदिति योजना। तैब्रासा.२।५।२।३

रुहो रुरोह रोहित आ रुरोह गर्भो जनीनां जनुषामुपस्थम्।
ताभिः संरब्धमन्वविन्दन् षडुर्वीर्गातुं प्रपश्यन्निह राष्ट्रमाहाः॥

हे रोहित रोहिद्वर्ण प्रजापतिस्वरूपाश्व रोह रोह भौम भोग स्वर्गभोगमारुरोह आरोहणं कुरु। काभिः, प्रजाभिः सह। कमिव, वृद्धिमिच्छता प्रजाना सबन्ध्युपस्थ प्रत्यारोहणमिव। ताभिः प्रजाभिः सह संरब्ध उत्साहयुक्तः सन् षडुर्वीरविदत् ज्ञातवान् असि। उर्वीर्गातुं गन्तुं प्रपश्यन्निह राष्ट्रमाहाः आहृतवानसि। तव प्रेक्षणवशाद्राष्ट्रस्था जनाः संनिहिता इत्यर्थः। तैब्रासा. २।५।२।१

आ ते राष्ट्रमिह रोहितोऽहार्षीद्व्यास्थन्मृधो अभयं ते अभूत्।
तस्मै ते द्यावापृथिवी रेवतीभिः कामं दुहाथामिह शक्करीभिः॥

रोहितस्त्व राष्ट्रमिह आहार्षीत् आहृतवानसि। व्यास्थत् विरोधिनिष्पाद्यात् मृधो युद्धात् अश्वाभिन्नप्रजापते तव प्रसादान्नः अभयमस्तु। अश्वाभिन्नप्रजापते तव प्रसादात् द्यावापृथिवी द्यावापृथिव्यौ शक्करीभिः शक्करीछन्दोयुक्ताभी रेवतीभिः सामाभिमानिनीभिर्देवताभिः सह अस्मभ्यं अस्मदर्थं राष्ट्रं दुहाथा पूरयन्त्यौ। तैब्रासा. २।५।२।१

[1]रोहितो द्यावापृथिवी जजान तत्र तन्तुं परमेष्ठी ततान।
तत्र शिश्रियेऽज एकपादोऽदृंहद्द्यावापृथिवी बलेन॥

योऽयं रोहितोऽश्वरूपः प्रजापतिः। स एव पुरा द्यावापृथिव्यावुत्पादितवान्। तस्मिन् रोहितेऽश्वे परमेष्ठी प्रजापतिः तन्तु अश्वमेधतन्तुपरम्परा ततान विस्तारितवान्। एक एव पद्यते गच्छतीत्येकपात्। तथा च मन्त्रान्तरम् 'सूर्य एकाकी चरति' (तैस. ७।४।१८।१) इति। स च मनुष्यवत् सृष्टिमध्ये पुनः पुनर्जन्मरहितत्वादजस्तादृशः सूर्योऽपि तस्मिन्रोहितेऽश्वे शिश्रिये आश्रितवान्। रोहिताश्वस्य प्रजापतिद्वारा जगत्सृष्टिकर्तृत्वात्सूर्यस्य तदाश्रितत्व युक्तम्। स च रोहितः प्रजापतिः स्वकीयेन बलेन द्यावापृथिव्यावदृंहत् दृढीचकार। तैब्रासा. २।५।२।३

[2]रोहितो द्यावापृथिवी अदृंहत् तेन स्व स्तभितं तेन नाकः।
तेनान्तरिक्षं विमिता रजांसि तेन देवा अमृतमन्वविन्दन्॥

रोहितः प्रजापतिर्द्यावापृथिव्यौ दृढीकृतवान् तेन रोहितेन सुवः स्तभितं स्वर्गलोको यथाऽधो न पतति तथा

(१) असं १३।१।४, तैब्रा २।५।२।१ (रोह९ रोह९ रोहित आरुरोह। प्रजाभिर्वृद्धि जनुषामुपस्थम्। ताभि. स९रब्धो अविदत्षडुर्वी.। गातुं प्रपश्यन्निह राष्ट्रमाहा.॥).

(२) असं. १३।१।५, तैब्रा. २।५।२।१ (आहार्षीद्राष्ट्रमिह रोहित.। मृधो व्यास्थदभयं नो अस्तु। असभ्यं द्यावापृथिवी शक्करीभि। राष्ट्रं दुहाथामिह रेवतीभिः॥).

(१) असं. १३।१।६, तैब्रा. २।५।२।३ तत्र तन्तुं (तस्मि९स्तन्तुं) तत्र...दृंहद् (तस्मिञ्छिश्रिये अज एकपात्। अदृ९हद्).

(२) असं १३।१।७; तैब्रा. २।५।२।३ स्व स्तभितं (सुवः स्तभितं) (सो अन्तरिक्षे रजसो विमान.। तेन देवा. सुवरन्वविन्दन्।).

स्तभितः तथा नाकनामा स्वर्गविशेषोऽपि तेन स्तभितः। स एव रोहितोऽन्तरिक्षे रजसो रञ्जकस्य ज्योतिर्गणस्योदकस्य वा विमानो विशेषेण निर्माता । तेन रोहितेन देवा इन्द्रादयोऽपि सुवरन्वविन्दन् स्वर्गं लब्धवन्तः ।
तैब्रासा. २।५।२।३

[1]वि रोहितो अमृशद्विश्वरूपं समाकुर्वाणः प्ररुहो रुहश्च ।
दिवं रूढ्वा महता महिम्ना सं ते राष्ट्रमनक्तु पयसा घृतेन ॥

स रोहितः प्रजापतिर्विममर्श परामर्शं कृतवान् अनेनेदं कर्म कृत, अयमस्य फलस्य योग्यः इति परामर्शः। कीदृशः प्रजापतिः। विश्वरूपः सर्वजगदाकारेण वर्तमानस्तथा समाचक्राणः सम्यगासमन्ताद्यजमानान्फलविशेषान्कुर्वाणः। ते च फलविशेषाः प्ररुहो रुहश्चेति शब्दद्वयेन निर्दिश्यन्ते। प्रकर्षेण रुह्यन्ते प्राप्यन्ते इति प्ररुहः स्वर्गभोगाः, रुहो मानुषा भोगाः, तदुभयं कुर्वाणः स प्रजापतिर्दिवं गत्वाय स्वर्गं प्राप्य महता महिम्ना स्वकीयेनात्याधिक्येन माहात्म्येन नोऽस्मदर्थमिदं राष्ट्रं स्वेन पयसा स्वकीयेन वृष्टिजलेन व्युनत्तु विशेषेण क्लेदयतु ।
तैब्रासा. २।५।२।२

यास्ते रुहः प्ररुहो यास्त आरुहो याभिरापृणासि दिवमन्तरिक्षम् ।
तासां ब्रह्मणा पयसा वावृधानो विशि राष्ट्रे जागृहि रोहितस्य ॥

[2]यास्ते विशस्तपसः संबभूवुर्वत्सं गायत्रीमनु ता इहागुः ।
तास्त्वा विशन्तु मनसा शिवेन संमाता वत्सो अभ्येतु रोहितः ॥

हे रोहित प्रजापते त्वदीयेन तपसा या विशः प्रजाः संबभूवुः । तथा ह्यन्यत्राऽऽम्नायते—'स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत' (तैउ. २।६) इति। ते त्वदीयास्ताः प्रजाः गायत्रं वत्समन्वागुः। 'एष वै गायत्र्यै वत्सो यदाग्रयणः' इति श्रुत्यन्तरात् । आग्रयणग्रहो गायत्र्याख्यधेनोर्वत्सस्थानीयः । तमाग्रयणाख्यं वत्समश्वमेधस्य मध्यमेऽहन्यनुष्ठितवन्तः। ताः प्रजाः स्वेन महसा स्वकीयेनानुष्ठितेन महिमाख्यग्रहेण त्वा विशन्तु। किंबहुना माता सर्वभूतानां सम्यङ्निर्माता पुत्रवद्रक्षको रोहितोऽश्वरूपः प्रजापतिरभ्येतु अस्मानभिलक्ष्य आगच्छतु ।
तैब्रासा. २।५।२।२

[1]ऊर्ध्वो रोहितो अधि नाके अस्थाद्विश्वा रूपाणि जनयन् युवा कविः ।
तिग्मेनाग्निर्ज्योतिषा वि भाति तृतीये चक्रे रजसि प्रियाणि ॥

[2]सहस्रशृङ्गो वृषभो जातवेदा घृताहुतः सोमपृष्ठः सुवीरः ।
मा मा हासीन्नाथितो नेत् त्वा जहानि गोपोषं च मे वीरपोषं च धेहि ॥

[3]रोहितो यज्ञस्य जनिता मुखं च रोहिताय वाचा श्रोत्रेण मनसा जुहोमि ।
रोहितं देवा यन्ति सुमनस्यमाना स मा रोहैः सामित्यै रोहयतु ॥
रोहितो यज्ञं व्यदधाद्विश्वकर्मणे तस्मात् तेजांस्युप मेमान्यागुः ।
वोचेयं ते नाभिं भुवनस्याधि मज्मनि ॥
आ त्वा रुरोह बृहत्यूत पङ्क्तिरा ककुब्वर्चसा जातवेदः ।

(१) असं. १३।१।८, तैब्रा. २।५।२।२ (विममर्श रोहितो विश्वरूप.। समाचक्राण प्ररुहो रुहश्च। दिवं गत्वाय महता महिम्ना। वि नो राष्ट्रमुनत्तु पयसा स्वेन ॥ ).

(२) असं. १३।१।९.

(३) असं. १३।१।१०, तैब्रा. २।५।२।२ (यास्ते विशस्तपसा संबभूवुः। गायत्रं वत्समनु तास्त आगुः। तास्त्वा विशन्तु महसा स्वेन। सं माता पुत्रो अभ्येतु रोहितः ॥).

(१) असं. १३।१।११.

(२) असं. १३।१।१२, कासं. ३५।१८ (८७) वेदा सुवीर· (वेदा· स्तोमपृष्ठो घृतवान् सुप्रतीकः) गोपोषं .. धेहि (सहस्रपोष· सं गोपोषं च यच्छ), तैब्रा. ३।७।२।७ (सहस्रशृङ्गो वृषभो जातवेदा। स्तोमपृष्ठो घृतवान्त्सुप्रतीकः। मा नो हासीन्मेत्थितो नेत्त्वा जहाम। गोपोषं नो वीरपोषं च यच्छ ॥ ).

(३) असं. १३।१।१३-६०.

आ त्वा रुरोहोष्णिहाक्षरो वषट्कार आ त्वा
रुरोह रोहितो रेतसा सह ॥

अयं वस्ते गर्भं पृथिव्या दिवं वस्तेऽयमन्त-
रिक्षम् ।

अयं ब्रध्नस्य विष्टपि स्वर्लोकान् व्यानशे ॥

वाचस्पते पृथिवी नः स्योना स्योना योनिस्तल्पा
नः सुशेवा ।

इहैव प्राणः सख्ये नो अस्तु तं त्वा परमेष्ठिन्
पर्यग्निरायुषा वर्चसा दधातु ॥

वाचस्पत ऋतवः पञ्च ये नौ वैश्वकर्मणाः परि ये
संबभूवुः ।

इहैव प्राणः सख्ये नो अस्तु तं त्वा परमेष्ठिन्
परि रोहित आयुषा वर्चसा दधातु ॥

वाचस्पते सौमनसं मनश्च गोष्ठे नो गा जनय
योनिषु प्रजाः ।

इहैव प्राणः सख्ये नो अस्तु तं त्वा परमेष्ठिन्
पर्यहमायुषा वर्चसा दधातु ॥

परि त्वा धात् सविता देवो अग्निर्वर्चसा
मित्रावरुणावभि त्वा ।

सर्वा अरातीरवक्रामन्नेहीदं राष्ट्रमकरः
सूनृतावत् ॥

यं त्वा पृषती रथे प्रष्टिर्वहति रोहित ।
शुभा यासि रिणन्नपः ॥

अनुव्रता रोहिणी रोहितस्य सूरिः सुवर्णा बृहती
सुवर्चाः ।

तया वाजान् विश्वरूपां जयेम तया विश्वाः
पृतना अभि ष्याम ।

इदं सदो रोहिणी रोहितस्यासौ पन्थाः पृषती
येन याति ।

तां गन्धर्वाः कश्यपा उन्नयन्ति तां रक्षन्ति
कवयोऽप्रमादम् ॥

सूर्यस्याश्वा हरयः केतुमन्तः सदा वहन्त्यमृताः
सुखं रथम् ।

घृतपावा रोहितो भ्राजमानो दिवं देवः पृषतीमा
विवेश ॥

यो रोहितो वृषभस्तिग्मशृङ्गः पर्यग्निं परि सूर्यं
बभूव ।

यो विष्टभ्नाति पृथिवीं दिवं च तस्माद् देवा
अधि सृष्टीः सृजन्ते ।

रोहितो दिवमारुहन्महतः पर्यर्णवात् ।
सर्वा रुरोह रोहितो रुहः ॥

वि मिमीष्व पयस्वतीं घृताचीं देवानां धेनुरनप-
स्पृगेषा ।

इन्द्रः सोमं पिबतु क्षेमो अस्त्वग्निः प्र स्तौतु वि
मृधो नुदस्व ॥

समिद्धो अग्निः समिधानो घृतवृद्धो घृताहुतः ।
अभीषाड् विश्वाषाडग्निः सपत्नान् हन्तु ये मम ॥

हन्त्वेनान् प्र दहत्वरिर्यो नः पृतन्यति ।
क्रव्यादाग्निना वयं सपत्नान् प्र दहामसि ।

अवाचीनानव जहीन्द्र वज्रेण बाहुमान् ।
अधा सपत्नान् मामकानग्नेस्तेजोभिरादिषि ॥

अग्ने सपत्नानधरान् पादयास्मद् व्यथया सजात-
मुत्पिपानं बृहस्पते ।

इन्द्राग्नी मित्रावरुणावधरे पद्यन्तामप्रतिमन्यूय-
मानाः ।

उद्यंस्त्वं देव सूर्य सपत्नानव मे जहि ।
अवैनानश्मना जहि ते यन्त्वधमं तमः ॥

वत्सो विराजो वृषभो मतीनामा रुरोह शुक्रपृष्ठोऽ-
न्तरिक्षम् ।

घृतेनार्कमभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा
वर्धयन्ति ।

दिवं च रोह पृथिवीं च रोह राष्ट्रं च रोह द्रविणं
च रोह ।

प्रजां च रोहामृतं च रोह रोहितेन तन्वं सं
स्पृशस्व ॥

ये देवा राष्ट्रभृतोऽभितो यन्ति सूर्यम् ।
तैष्टे रोहितः संविदानो राष्ट्रं दधातु सुमन-
स्यमानः ॥

उत् त्वा यज्ञा ब्रह्मपूता वहन्त्यध्वगतो हरयस्त्वा
वहन्ति ।

तिरः समुद्रमति रोचसेऽर्णवम् ॥

रोहिते द्यावापृथिवी अधि श्रिते वसुजिति गोजिति संधनाजिति ।
सहस्रं यस्य जनिमानि सप्त च वोचेयं ते नाभि भुवनस्याधि मज्मनि ॥
यशा यासि प्रदिशो दिशश्च यशाः पशूनामुत चर्षणीनाम् ।
यशाः पृथिव्या अदित्या उपस्थेऽहं भूयासं सवितेव चारुः ॥
अमुत्र सन्निह वेत्थेतः संस्तानि पश्यसि ।
इतः पश्यन्ति रोचनं दिवि सूर्यं विपश्चितम् ॥
देवो देवान् मर्चयस्यन्तश्चरस्यर्णवे ।
समानमग्निमिन्धते तं विदुः कवयः परे ॥
अवः परेण पर एनाऽवरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात् क स्वित् सूते नहि यूथे अस्मिन् ॥
एकपदी द्विपदी सा चतुष्पद्यष्टापदी नवपदी बभूवुषी ।
सहस्राक्षरा भुवनस्य पङ्क्तिस्तस्याः समुद्रा अधि वि क्षरन्ति ॥
आरोहन् द्यामममृतः प्राव मे वचः ।
उत्त्वा यज्ञा ब्रह्मपूता वहन्त्यध्वगतो हरयस्त्वा वहन्ति ॥
वेद तत् ते अमर्त्य यत्त आक्रमणं दिवि ।
यत् ते सधस्थं परमे व्योमन् ॥
सूर्यो द्यां सूर्यः पृथिवीं सूर्य आपोऽति पश्यति ।
सूर्यो भूतस्यैकं चक्षुरा रुरोह दिवं महीम् ॥
उर्वीरासन् परिधयो वेदिर्भूमिरकल्पत ।
तत्रैतावग्नी आधत्त हिमं घ्रंसं च रोहितः ॥
हिमं घ्रंसं चाधाय यूपान् कृत्वा पर्वतान् ।
वर्षाज्यावग्नी ईजाते रोहितस्य स्वर्विदः ॥
स्वर्विदो रोहितस्य ब्रह्मणाग्निः समिध्यते ।
तस्माद् घ्रंसस्तस्माद्धिमस्तस्माद्यज्ञोऽजायत ॥
ब्रह्मणाग्नी वावृधानौ ब्रह्मवृद्धौ ब्रह्माहुतौ ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विदः ॥
सत्ये अन्यः समाहितोऽप्स्वन्यः समिध्यते ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विदः ॥
यं वातः परि शुम्भति यं वेन्द्रो ब्रह्मणस्पतिः ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विदः ॥
वेदिं भूमिं कल्पयित्वा दिवं कृत्वा दक्षिणाम् ।
घ्रंसं तदग्निं कृत्वा चकार विश्वमात्मन्वद्वर्षेणाज्येन रोहितः ॥
वर्षमाज्यं घ्रंसो अग्निर्वेदिर्भूमिरकल्पत ।
तत्रैतान् पर्वतानग्निर्गीर्भिरूर्ध्वाँ अकल्पयत् ॥
गीर्भिरूर्ध्वान् कल्पयित्वा रोहितो भूमिमब्रवीत् ।
त्वयीदं सर्वं जायतां यद् भूतं यच्च भाव्यम् ॥
स यज्ञः प्रथमो भूतो भव्यो अजायत ।
तस्माद्ध जज्ञ इदं सर्वं यत् किं चेदं विरोचते रोहितेन ऋषिणाऽऽभृतम् ॥
यश्च गां पदा स्फुरति प्रत्यङ् सूर्यं च मेहति ।
तस्य वृश्चामि ते मूलं न च्छायां करवोऽपरम् ॥
यो माऽभिच्छायमत्येषि मां चाग्निं चान्तरा ।
तस्य वृश्चामि ते मूलं न च्छायां करवोऽपरम् ॥
यो अद्य देव सूर्य त्वां च मां चान्तरायति ।
दुष्वप्न्यं तस्मिंछमलं दुरितानि च मृज्महे ॥
मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः ।
माऽन्त स्थुर्नो अरातयः ॥
यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः ।
तमाहुतमशीमहि ॥

देवानामधिपतिः, सूर्यात्मकः, विश्वव्यापकः, द्यावापृथिव्योर्जनकः, विष्णुः, कालप्रजापतिरूपविभूतिधरः

उदस्य केतवो दिवि शुक्रा भ्राजन्त ईरते ।
आदित्यस्य नृचक्षसो महिव्रतस्य मीढुषः ॥
दिशां प्रज्ञानां स्वरयन्तमर्चिषा सुपक्षमाशुं पतयन्तमर्णवे ।
स्तवाम सूर्यं भुवनस्य गोपां यो रश्मिभिर्दिश आभाति सर्वाः ॥
यत् प्राङ् प्रत्यङ् स्वधया यासि शीभं नानारूपे अहनी कर्षि मायया ।
तदादित्य महि तत् ते महि श्रवो यदेको विश्वं परि भूम जायसे ॥

(१) असं. १३।२।१-४६.

विपश्चितं तरणिं भ्राजमानं वहन्ति यं हरितः सप्त बह्वीः ।
स्रुताद्यमत्त्रिर्दिवमुन्निनाय तं त्वा पश्यन्ति परियान्तमाजिम् ॥
मा त्वा दभन् परियान्तमाजिं स्वस्ति दुर्गाँ अति याहि शीभम् ।
दिवं च सूर्य पृथिवीं च देवीमहोरात्रे विमिमानो यदेषि ॥
स्वस्ति ते सूर्य चरसे रथाय येनोभावन्तौ परियासि सद्यः ।
यं ते वहन्ति हरितो वहिष्ठाः शतमश्वा यदि वा सप्त बह्वीः ॥
सुखं सूर्य रथमंशुमन्तं स्योनं सुवह्निमधि तिष्ठ वाजिनम् ।
यं ते वहन्ति हरितो वहिष्ठाः शतमश्वा यदि वा सप्त बह्वीः ॥
सप्त सूर्यो हरितो यातवे रथे हिरण्यत्वचसो बृहतीरयुक्त ।
अमोचि शुक्रो रजसः परस्ताद् विधूय देवस्तमो दिवमारुहत् ॥
उत्केतुना बृहता देव आगन्नपावृक् तमोऽभि ज्योतिरश्रैत् ।
दिव्यः सुपर्णः स वीरो व्यख्यददितेः पुत्रो भुवनानि विश्वा ॥
उद्यन् रश्मीना तनुषे विश्वा रूपाणि पुष्यसि ।
उभा समुद्रौ क्रतुना वि भासि सर्वाँल्लोकान् परिभूर्भ्राजमानः ॥
पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातोर्णवम् ।
विश्वाऽन्यो भुवना विचष्टे हैरण्यैरन्यं हरितो वहन्ति ॥
दिवि त्वात्रिरधारयत् सूर्या मासाय कर्तवे ।
स एषि सुधृतस्तपन् विश्वा भूतावचाकशत् ॥
उभावन्तौ समर्षसि वत्सः संमातराविव ।
नन्वेतदितः पुरा ब्रह्म देवा अमी विदुः ॥
यत् समुद्रमनु श्रितं तत् सिषासति सूर्यः ।
अध्वाऽस्य विततो महान् पूर्वश्चापरश्च यः ॥
तं समाप्नोति जूतिभिस्ततो नाप चिकित्सति ।
तेनामृतस्य भक्षं देवानां नाव रुन्धते ॥
उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥
अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।
सूराय विश्वचक्षसे ॥
अदृश्रन्नस्य केतवो वि रश्मयो जनाँ अनु ।
भ्राजन्तो अग्नयो यथा ॥
तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
विश्वमा भासि रोचन ॥
प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषीः ।
प्रत्यङ् विश्वं स्वर्दृशे ॥
येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥
वि द्यामेषि रजस्पृथ्वहर्मिमानो अक्तुभिः ।
पश्यन् जन्मानि सूर्य ॥
सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
शोचिष्केशं विचक्षणम् ॥
अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ॥
रोहितो दिवमारुहत् तपसा तपस्वी ।
स योनिमैति स उ जायते पुनः स देवानामधिपतिर्बभूव ॥
यो विश्वचर्षणिरुत विश्वतोमुखो यो विश्वतस्पाणिरुत विश्वतस्पृथः ।
सं बाहुभ्यां भरति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥
एकपाद्द्विपदो भूयो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
द्विपाद्ध षट्पदो भूयो वि चक्रमे त एकपदस्तन्वं समासते ॥
अतन्द्रो यास्यन् हरितो यदास्थाद् द्वे रूपे कृणुते रोचमानः ।
केतुमानुद्यन्त्सहमानो रजांसि विश्वा आदित्य प्रवतो वि भासि ॥

बण्महाँ असि सूर्य बडादित्य महाँ असि ।
महांस्ते महतो महिमा त्वमादित्य महाँ असि ॥
रोचसे दिवि रोचसे अन्तरिक्षे पतङ्ग पृथिव्यां रोचसे रोचसे अप्स्वन्तः ।
उभा समुद्रौ रुच्या व्यापिथ देवो देवासि महिषः स्वर्जित् ॥
अर्वाङ् परस्तात् प्रयतो व्यध्व आशुर्विपश्चित् पतयन् पतङ्गः ।
विष्णुर्विचित्तः शवसाऽधितिष्ठन् प्र केतुना सहते विश्वमेजत् ॥
चित्रश्चिकित्वान् महिषः सुपर्ण आरोचयन् रोदसी अन्तरिक्षम् ।
अहोरात्रे परि सूर्य वसाने प्रास्य विश्वा तिरतो वीर्याणि ॥
तिग्मो विभ्राजन् तन्वं शिशानोऽरङ्गमासः प्रवतो रराणः ।
ज्योतिष्मान् पक्षी महिषो वयोधा विश्वा आस्थात् प्रदिशः कल्पमानः ॥
चित्रं देवानां केतुरनीकं ज्योतिष्मान् प्रदिशः सूर्य उद्यन् ।
दिवाकरोऽति द्युम्नैस्तमांसि विश्वातारीद् दुरितानि शुक्रः ॥
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्राद् द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥
उच्चा पतन्तमरुणं सुपर्णं मध्ये दिवस्तरणिं भ्राजमानम् ।
पश्याम त्वा सवितारं यमाहुरजस्रं ज्योतिर्यदविन्दददत्रिः ॥
दिवस्पृष्ठे धावमानं सुपर्णमदित्याः पुत्रं नाथकाम उप यामि भीतः ।
स नः सूर्य प्र तिर दीर्घमायुर्मा रिषाम सुमतौ ते स्याम ॥
सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा ॥
रोहितः कालो अभवद्रोहितोऽग्रे प्रजापतिः ।
रोहितो यज्ञानां मुखं रोहितः स्वराभरत् ॥
रोहितो लोको अभवद्रोहितोऽत्यतपद् दिवम् ।
रोहितो रश्मिभिर्भूमिं समुद्रमनु सं चरत् ॥
सर्वा दिशः समचरद्रोहितोऽधिपतिर्दिवः ।
दिवं समुद्रमाद् भूमिं सर्वं भूतं वि रक्षति ॥
आरोहञ्छुक्रो बृहतीरतन्द्रो द्वे रूपे कृणुते रोचमानः ।
चित्रश्चिकित्वान् महिषो वातमाया यावतो लोकानभि यद्विभाति ॥
अभ्यन्यदेति पर्यन्यदस्यतेऽहोरात्राभ्यां महिषः कल्पमानः ।
सूर्यं वयं रजसि क्षियन्तं गातुविदं हवामहे नाधमानाः ॥
पृथिवीप्रो महिषो नाधमानस्य गातुरदब्धचक्षुः परि विश्वं बभूव ।
विश्वं संपश्यन्त्सुविदत्रो यजत्र इदं शृणोतु यदहं ब्रवीमि ॥
पर्यस्य महिमा पृथिवीं समुद्रं ज्योतिषा विभ्राजन् परि द्यामन्तरिक्षम् ।
सर्वं संपश्यन्त्सुविदत्रो यजत्र इदं शृणोतु यदहं ब्रवीमि ॥
अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥

द्यावापृथिव्योर्जनकः, भुवनरूपवस्त्रधरः, वायुसमुद्रोद्गमस्थानं, जीवनमरणकारणं, भूताधारः, द्युपृथिवीसमुद्रेभ्यः प्राणापानदः, विराट्परमेष्ठिप्रजापतिवैश्वानराणामाश्रयः, षडुर्वीणां पञ्चदिशां चतसृणां चाधारः, अन्नपतिर्ब्रह्मणस्पतिर्भुवनपतिश्च, त्रयोदशमासकर्ता, ऋतस्य सदनं, कश्यपः, बृहद्रथन्तरयोः प्रेरकः, बृहद्रथन्तररूपपक्षधरः, वरुणाग्निमित्रसवित्रिन्द्ररूपविभूतिः, सर्वदेववहः स्वर्गगः अतिविस्तीर्णपक्षः हंसः, विश्वजनकातिस्वरूपः, आदित्यवहनकारणं यज्ञरूपं बहुप्रकारमेकं ज्योतिः,

अजरं भुवनाश्रयरूपचक्रं, मातरिश्वरूपविभूतिः, ऋततन्तुज्ञः, पृथिवीसमुद्रस्थापक, अग्निः, आत्मदः, सर्वस्य ईशानः

ये इमे द्यावापृथिवी जजान यो द्रापिं कृत्वा भुवनानि वस्ते।
यस्मिन् क्षियन्ति प्रदिशः षडुर्वीर्याः पतङ्गो अनु विचाकशीति।
तस्य देवस्य क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति।
उद्वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान्॥
यस्माद्वाता ऋतुथा पवन्ते यस्मात् समुद्रा अधि विक्षरन्ति।
तस्य देवस्य ०॥
यो मारयति प्राणयति यस्मात् प्राणन्ति भुवनानि विश्वा। तस्य ०॥
यः प्राणेन द्यावापृथिवी तर्पयत्यपानेन समुद्रस्य जठरं यः पिपर्ति। तस्य ०॥
यस्मिन् विराट् परमेष्ठी प्रजापतिरग्निर्वैश्वानरः सह पङ्क्त्या श्रितः।
यः परस्य प्राणं परमस्य तेज आददे। तस्य ०॥
यस्मिन् षडुर्वीः पञ्च दिशो अधि श्रिताश्चतस्र आपो यज्ञस्य त्रयोऽक्षराः।
यो अन्तरा रोदसी क्रुद्धश्चक्षुषैक्षत। तस्य ०॥
यो अन्नादो अन्नपतिर्बभूव ब्रह्मणस्पतिरुत यः।
भूतो भविष्यद् भुवनस्य यस्पतिः। तस्य ०॥
अहोरात्रैर्विमितं त्रिंशदङ्गं त्रयोदशं मासं यो निर्मिमीते। तस्य ०॥
कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत् पतन्ति।
त आववृत्रन्त्सदनादृतस्य। तस्य ०॥
यत् ते चन्द्रं कश्यप रोचनावद्यत्संहितं पुष्कलं चित्रभानु।
यस्मिन्त्सूर्या आर्पिताः सप्त साकम्। तस्य ०॥

बृहदेनमनु वस्ते पुरस्ताद् रथंतरं प्रति गृह्णाति पश्चात्।
ज्योतिर्वसाने सदमप्रमादम्। तस्य ०॥
बृहदन्यतः पक्ष आसीद् रथंतरमन्यतः सबले सध्रीची।
यद् रोहितमजनयन्त देवाः। तस्य ०॥
स वरुणः सायमग्निर्भवति स मित्रो भवति प्रातरुद्यन्।
स सविता भूत्वान्तरिक्षेण याति स इन्द्रो भूत्वा तपति मध्यतो दिवम्। तस्य ०॥
सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम्।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा। तस्य ०॥
अयं स देवो अप्स्वन्तः सहस्रमूलः पुरुशाको अत्त्रिः।
य इदं विश्वं भुवनं जजान। तस्य० ॥
शुक्रं वहन्ति हरयो रघुष्यदो देवं दिवि वर्चसा भ्राजमानम्।
यस्योर्ध्वा दिवं तन्वस्तपन्त्यर्वाङ् सुवर्णैः पटरैर्वि भाति। तस्य ०॥
येनादित्यान् हरितः संवहन्ति येन यज्ञेन बहवो यन्ति प्रजानन्तः।
यदेकं ज्योतिर्बहुधा विभाति। तस्य ०॥
सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः। तस्य ०॥
अष्टधा युक्तो वहति वह्निरुग्रः पिता देवानां जनिता मतीनाम्।
ऋतस्य तन्तुं मनसा मिमानः सर्वा दिशः पवते मातरिश्वा। तस्य ०॥
सम्यञ्चं तन्तुं प्रदिशोऽनु सर्वा अन्तर्गायत्र्याममृतस्य गर्भे। तस्य ०॥
निम्रुचस्तिस्रो व्युषो ह तिस्रस्त्रीणि रजांसि दिवो अङ्ग तिस्रः।

(१) असं. १३।३।१–२६.

विद्मा ते अग्ने त्रेधा जनित्रं त्रेधा देवानां जनिमानि विद्म । तस्य ० ॥
वि य और्णोत् पृथिवीं जायमान आ समुद्रमदधादन्तरिक्षे । तस्य ० ॥
त्वमग्ने क्रतुभिः केतुभिर्हितोऽर्कः समिद्ध उदरोचथा दिवि ।
किमभ्यार्चन्मरुतः पृश्निमातरो यद् रोहितमजनयन्त देवाः । तस्य ० ॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
योऽस्येशे द्विपदो यश्चतुष्पदः । तस्य ० ॥
एकपाद् द्विपदो भूयो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
चतुष्पाच्चक्रे द्विपदामभिस्वरे संपश्यन् पङ्क्तिमुपतिष्ठमानः ।
तस्य देवस्य क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति ।
उद्वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् ॥
कृष्णायाः पुत्रो अर्जुनो रात्र्या वत्सोऽजायत ।
स ह द्यामधि रोहति रुहो रुरोह रोहितः ॥

सविता महेन्द्रो धाता विधाता वायुरर्यमा वरुणो रुद्रो महादेवोऽग्निः सूर्यो महायमश्च स एव, स एक एव सर्वदेवानामेकत्वकर, सर्वप्रजाद्रष्टा

[1]स एति सविता स्वर्दिवस्पृष्ठेऽवचाकशत् ।
रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ॥
स धाता स विधर्ता स वायुर्नभ उच्छ्रितम् ।
रश्मि ० ॥
सोऽर्यमा स वरुणः स रुद्रः स महादेवः ।
रश्मि ० ॥
सो अग्निः स उ सूर्यः स उ एव महायमः ।
रश्मि ० ॥
तं वत्सा उप तिष्ठन्त्येकशीर्षाणो युता दश ।
रश्मि ० ॥
पश्चात् प्राञ्च आ तन्वन्ति यदुदेति वि भासति ।
रश्मि ० ॥
तस्यैष मारुतो गणः स एति शिक्याकृतः ।
रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ॥
तस्येमे नव कोशा विष्टम्भा नवधा हिताः ॥
स प्रजाभ्यो वि पश्यति यच्च प्राणति यच्च न ॥
तमिदं निगतं सहः स एष एक एकवृदेक एव ॥
एते अस्मिन् देवा एकवृतो भवन्ति ॥

द्वितीयत्वादिदशमत्वान्तसर्वसंख्यारहित., एकोऽद्वितीय सर्वदेवाद्वैतस्थानं, तादृशतज्ज्ञानेन कीर्तियशोब्राह्मणवर्चसाऽन्नादिफललाभः

[1]कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चान्नाद्यं च ।
य एतं देवमेकवृतं वेद ॥
न द्वितीयो न तृतीयश्चतुर्थो नाप्युच्यते ।
य एतं ० ॥
न पञ्चमो न षष्ठः सप्तमो नाप्युच्यते ।
य एतं ० ॥
नाष्टमो न नवमो दशमो नाप्युच्यते ।
य एतं ० ॥
स सर्वस्मै वि पश्यति यच्च प्राणति यच्च न ।
य एतं ० ॥
तमिदं निगतं सहः स एष एक एकवृदेक एव ।
य एतं ० ॥
सर्वे अस्मिन् देवा एकवृतो भवन्ति ।
य एतं ० ॥

मृत्युरूप. अमृतरूपः रक्षःस्वरूप. रुद्र वषट्कारश्च, यातूना सचन्द्रमसा नक्षत्राणा च प्रशास्ता, सर्वदेवानामद्वैतस्थानस्यैकस्य तस्य ज्ञानेन ब्रह्मादिस्वधान्ताना फलाना लाभ.

[2]ब्रह्म च तपश्च कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चान्नाद्यं च ।
य एतं ० ॥

(१) असं. १३।४।१-१३.

(१) असं. १३।५।१-८.
(२) असं. १३।६।१-७.

भूतं च भव्यं च श्रद्धा च रुचिश्च स्वर्गश्च स्वधा च ।
य एतं देवमेकवृतं वेद ॥
स एव मृत्युः सोऽमृतं सोऽभ्वं स रक्षः ॥
स रुद्रो वसुवनिर्वसुदेये नमोवाके वषट्कारोऽनु संहितः ॥
तस्येमे सर्वे यातव उप प्रशिषमासते ॥
तस्यामू सर्वा नक्षत्रा वशे चन्द्रमसा सह ॥

अहोरात्र्यन्तरिक्षवायुद्युदिग्भूम्यग्न्यब्वृग्यज्ञाना जनक· तज्जन्यश्च, अपरिमिततनुधर, पापभद्रपुरुषाणा हन्ता

[1]स वा अह्नोऽजायत तस्मादहरजायत ॥
स वै रात्र्या अजायत तस्माद्रात्रिरजायत ॥
स वा अन्तरिक्षादजायत तस्मादन्तरिक्षमजायत ॥
स वै वायोरजायत तस्माद्वायुरजायत ॥
स वै दिवोऽजायत तस्माद् द्यौरध्यजायत ॥
स वै दिग्भ्योऽजायत तस्माद् दिशोऽजायन्त ॥
स वै भूमेरजायत तस्माद् भूमिरजायत ॥
स वा अग्नेरजायत तस्मादग्निरजायत ॥
स वा अद्भ्योऽजायत तस्मादापोऽजायन्त ॥
स वा ऋग्भ्योऽजायत तस्मादृचोऽजायन्त ॥
स वै यज्ञादजायत तस्माद्यज्ञोऽजायत ॥
स यज्ञस्तस्य यज्ञः स यज्ञस्य शिरस्कृतम् ॥
स स्तनयति स वि द्योतते स उ अश्मानमस्यति ॥
पापाय वा भद्राय वा पुरुषायासुराय वा ॥
यद्वा कृणोष्योषधीर्यद्वा वर्षसि भद्रया यद्वा जन्यमवीवृधः ।
तावांस्ते मघवन् महिमोपो ते तन्वः शतम् ॥
उपो ते बध्वे बद्धानि यदि वाऽसि न्यर्बुदम् ॥

'त्रिशु. प्रभु. मह. सह.' इत्यादिरूपेणोपास्य. अमरत्व-मृत्युतोऽतिशायी इन्द्रः

[2]भूयानिन्द्रो नमुराद् भूयानिन्द्रासि मृत्युभ्यः ।
भूयानरात्याः शच्याः पतिस्त्वमिन्द्रासि विभूः प्रभूरिति त्वोपास्महे वयम् ।

(१) असं. १३।७।१–१७.
(२) असं. १३।८।१–६.

नमस्ते अस्तु पश्यत पश्य मा पश्यत ।
अन्नाद्येन यशसा तेजसा ब्राह्मणवर्चसेन ॥
अम्भो अमो महः सह इति त्वोपास्महे वयम् ।
नमस्ते० । अन्नाद्येन० ॥
अम्भो अरुणं रजतं रजः सह इति त्वोपास्महे वयम् ।
नमस्ते ० । अन्नाद्येन ० ॥

उरु पृथु इत्यादिरूपेणोपास्यः

[1]उरुः पृथुः सुभूर्भुव इति त्वोपास्महे वयम् ।
नमस्ते० । अन्नाद्येन० ॥
प्रथो वरो व्यचो लोक इति त्वोपास्महे वयम् ।
नमस्ते ० । अन्नाद्येन ० ॥
भवद्वसुरिदद्वसुः संयद्वसुरायद्वसुरिति त्वोपास्महे वयम् ।
नमस्ते ० । अन्नाद्येन ० ॥

---

## कालः

अजर, विपश्चिद्भिरारुह्यमाणः, सहस्राक्ष, विश्वव्यापक, प्रथमदेव, सूर्यरूपकुम्भाधारः तद्रूपश्च, सर्वेषा पिता पुत्रश्च, परमं तेजः

[2]कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः ।
तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा ॥

अनेन सूक्तद्वयेन सर्वजगत्कारणभूतः कालरूपः परमात्मा स्तूयते । तत्र प्रथमया कालोऽश्वात्मना रूप्यते । सप्तरश्मिः सप्तसंख्याका रश्मयो रज्जवो मुखग्रीवापादावबद्धाः यस्य सः सहस्राक्षः सहस्रलोचनः, अजरः जरारहितः नित्ययुवा, भूरिरेताः, रेतः शुक्ररूपः सप्तमो धातुः, प्रभूतवीर्यः रेतःसेचनसमर्थः अपत्योत्पादनशक्तः कालः कलयिता अश्वो वहति स्वारोहकान् अभिमतं प्रदेशं प्रापयति । तं अश्वं विपश्चितः अश्वारोहणावरोहणादिषु कुशलः अश्वशास्त्रनिष्णाताः कवयो धीमन्तः आरोहन्ति । तस्य अश्वस्य चक्रा चक्राणि गन्तव्यानि स्थानानि विश्वा विश्वानि भुवनानि । इति अश्वपक्षेऽर्थः ।

(१) असं. १३।९।१–५.
(२) असं. १९।५३।१–१०.

विवक्षितस्तु, अश्वः अश्नुते व्याप्नोति भूतभविष्यद्वर्तमानकालवर्तीनि वस्तूनीति अश्वः। कालः कलयिता सर्वस्य जगतः अनवच्छिन्नकालरूपः परमेश्वरः । सप्तरश्मिः। रश्मिशब्देन ऋतव उच्यन्ते । सप्तर्तुः एकैक ऋतुर्मासद्वयात्मकः सप्तमस्तु त्रयोदशो मासः । तथाच दाशतय्यामाम्नायते —' साकजाना सप्तथमाहुरेकज षळिद्यमा ऋषयो देवजा इति ' ( ऋस. १।१६४।१५ ) इति । अत्रापि समाम्नात प्राक् (अस.९।१४।१६) । सहस्राक्षः । अत्र अक्षिशब्देन दिनानि रात्रयश्च उच्यन्ते । सहस्रसख्याकाहोरात्रयुक्तः। अजरः जरारहितः सर्वदा एकरूपः। भूरिरेताः प्रभूतजगत्सर्जनसमर्थशक्तिसपन्नः । एवरूपः कालो वहति प्राणिजातं स्वस्वकर्मसु प्रापयति । तं कालं कवयः क्रान्तदर्शिनो विपश्चितः विद्वांसः आ रोहन्ति स्वाधीन कुर्वन्ति। स्वाधीनकाला भवन्तीत्यर्थः। तस्य कालात्मकस्य रथस्य चक्रा चक्राणि विश्वा विश्वानि भुवनानि भूतजातानि लोकान् अभिगच्छन्तीति शेषः। अथ वा अश्वशब्देन आदित्य उच्यते । तथाच यास्कः—' एको अश्वो वहति सप्तनामा । आदित्यः। सप्तास्मै रश्मयो रसान् अभिसनामयन्ति सप्तैन ऋषयः स्तुवन्तीति वा'( नि. ४।२७ ) इति। कालात्मकोऽश्वः सूर्यः सप्त रश्मयः प्रधानभूता यस्य। ते चैव सप्त सूर्या इत्युच्यन्ते । ' देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष नः ' (ऋस. ९।११४।३) इति निगमः। तेषा च नामानि तैत्तिरीया अधीयते —' आरोगो भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषीमान् विभासः ' ( तैआ. १।७।१ ) इति। असौ तु प्रधानभूतः कश्यपाख्य आदित्यः । ' कश्यपोऽष्टमः स महामेरुं न जहाति ' ( तैआ. १।७।१ ) इति श्रुतेः। यद्वा रश्मिशब्देन छन्दास्यभिधीयन्ते । गायत्र्यादीनि छन्दांसि यस्य। तथा च निगमः —' ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः ' ( तैब्रा. ३।१२।९।१) इति। यद्वा रश्मिमन्तोऽश्वा रश्मिशब्देन उच्यन्ते । सप्ताश्वः। 'सप्त युञ्जन्ति रथमेकचक्रम्' (असं. ९।१४।२) इति निगमः। सहस्राक्षः अक्षिवत् अक्षीणि किरणाः,—सहस्रकिरणोपेतः अजरः अविनश्वरो नित्यः भूरिरेताः।

(१) गृची रेतःशब्दः ।' यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति '(तैसं.२।४।१०।२) इति श्रुतिः । एवरूप आदित्यो वहति कालचक्र धारयति । त कालात्मक सूर्य विद्वांसः अधिगतपरमार्थाः आ रोहन्ति सूर्यमण्डल भित्त्वा उपगच्छन्ति । ' द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ ' इति स्मृतेः। यद्वा स्वात्मभावेन अधितिष्ठन्ति । अत एव आदित्य पुरुष प्रकृत्य श्रूयते—' तद् योह सोसौ योसौ सोह तदुक्त ऋषिणा सूर्य आत्मा जगतस्तस्थुषश्च' (ऐआ. २।२।४)। तस्य सूर्यस्य चक्रा चक्राणि चङ्क्रमणानि व्याप्तिस्थानानि सर्वाणि जगन्तीति। असा.

**सप्त चक्रान् वहति काल एष सप्तास्य नाभीरमृतं न्वक्षः ।**
**स इमा विश्वा भुवनान्यञ्जत् कालः स ईयते प्रथमो नु देवः ॥**

अनया सवत्सररूपकालचक्र वर्ण्यते । तस्य संवत्सरकालस्य चक्राणि एकं त्रीणि पञ्च षट् सप्त द्वादशेति तत्रतत्र आम्नायते—' सप्त युञ्जन्ति रथमेकचक्रम्' (असं. ९।१४।२ ) ' त्रिनाभि चक्रम् ' (असं. ९।१४।२ ) ' सप्तचक्रे षडरे ' ( असं. ९।१४।१२ ) ' द्वादशारम्' (अस. ९।१४।१३) इत्यादिषु। तथा च शौनकोऽप्याह— ' त्रिधा द्वादशधा षोढा पञ्चधा सप्तधा तथा । संवत्सर चक्रवच्च पराभिः कीर्तयत्यृषिः॥ '( बृदे. ४।३२) इति। एष सर्वजगत्कारणत्वेन अनुभूयमानः कालः परमात्मा सप्त चक्रा चक्राणि सप्त ऋतून् अनु अनुक्रमेण वहति धारयति। अस्य सवत्सरस्य सप्त नाभीः नाभयः। नह्यते नाभिः। अक्षबन्धकानि मध्यच्छिद्राणि सप्त ऋतुसंधिकालाः । अस्य अक्षः तनु सततं सूक्ष्मं अमृतं अमरणधर्मकं अविनश्वर तत्त्वम्। सप्तचक्रच्छिद्रेषु प्रोतः अनुस्यूतोऽक्षः सत्य अबाध्यं तत्त्वम्। सः पूर्वोक्तसवत्सररूपः प्रथमः सर्वस्य आदिभूतो देवः द्योतमानः नित्यज्ञानरूपः कालः परमात्मा इमा इमानि नामरूपात्मना व्याकृतानि विश्वा विश्वानि भुवनानि भवनवन्ति चराचरात्मकानि जगन्ति अञ्जत् अञ्जन् व्यक्तीकुर्वन् स्वेन कालेन अवच्छिन्नानि कुर्वन् उत्पादयन् सः, स्यति संहरतीति सः,' सहरंश्च ईयते गच्छति व्याप्नोति सर्व आवृत्य वर्तते। नुशब्दः प्रसिद्धौ।

यद्वा अध्यात्मपरत्वेन योज्यः। कालः कलयिता सर्वेन्द्रियव्यापारकर्ता शरीराभिमानी देवः। बन्धकाः विषया रूपादयः। तनु सूक्ष्म दुर्दर्शम्। अमृत चैतन्यम्। अक्षः सर्वेन्द्रियेषु तद्विषयेषु च अनुगतः। एवं सर्वाणि प्राणिजातानि अञ्जत् प्रेरयन् ईयते। सः उपसंहरश्च स कालः ईयते तत्त्वशैर्ज्ञायते। असा.

**पूर्णः कुम्भोधि काल आहितस्तं वै पश्यामो बहुधा नु सन्तः।**
**स इमा विश्वा भुवनानि प्रत्यङ् कालं तमाहुः परमे व्योमन्॥**

काले सर्वजगत्कारणभूते नित्ये अनवच्छिन्ने परमात्मनि स्वस्वरूपे पूर्णः सर्वत्र व्याप्तः कुम्भः कुम्भवत् कुम्भः अहोरात्रमासर्तुसंवत्सरादिरूपः अवच्छिन्नो जन्यः कालः आहितः निहितो वर्तते। सर्वस्य कार्यस्य स्वकारणेऽवस्थानात्। अत्र विद्वदनुभवं श्रुतिः प्रमाणयति। तं जन्य कालं सन्तः सत्पुरुषा बहुधा नानाप्रकार अहोरात्रादिभेदेन पश्यामो नु अनुभवामः खलु। अथवा तं जन्यकालाधारं परमात्मानं बहुधा बहुभिः श्रवणमनननिदिध्यासनैः पश्यामः साक्षात्कुर्मः। सन्तः सद्रूपब्रह्मोपासका वयम्। 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' (तैउ. २।६) इति हि श्रुतिः। वैनुशब्दौ प्रसिद्ध्यर्थौ। स कालः इमा इमानि परिदृश्यमानानि विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि प्रत्यङ् प्रत्यञ्चनः अभिमुखाञ्चनः आव्याप्नुवन् भवति। तं कालं परमे उत्कृष्टे सांसारिकसुखदुःखादिद्वन्द्वदोषरहिते व्योमन् व्योमनि आकाशवन्निर्लेपे सर्वगते विविधं रक्षके परमानन्दप्रदायके स्वस्वरूपे वर्तमानं आहुः विद्वांसः। असा.

**स एव सं भुवनान्याभरत् स एव सं भुवनानि पर्यैत्।**
**पिता सन्नभवत् पुत्र एषां तस्माद्वै नान्यत् परमस्ति तेजः॥**

स एव कालः भुवनानि भूतजातानि सं आ अभरत् आहरत् आहरति उत्पादयति। यद्वा स्वेनोत्पादितानि भुवनानि समन्तात् पुष्णाति। स एव कालः भुवनानि सं पर्यैत् सम्यक् परिगच्छति व्याप्नोति। स एव पिता एषा भुवनाना जनकः सन् एषा पुत्रोऽभवत् भवति। काल एव पितृत्वेन पुत्रत्वेन च व्यवह्रियते। यः पूर्वजन्मनि पितृत्वेन जातः स एव अस्मिन् जन्मनि पुत्रत्वेन व्यवह्रियते अवच्छेदककालाधीनत्वात् सर्वस्य। अथ वा एकस्मिन् जन्मन्येव पितुः पुत्रत्वं आम्नायते— 'अङ्गादङ्गात् सभवसि हृदयादधि जायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्॥' (कौउ. २।११) इति। तस्मात् सर्वोत्पादकात् सर्वगतात् पुत्रादिरूपेण भविष्यतश्च तस्मात् कालात् अन्यत् परं उत्कृष्ट तेजो नास्ति। वैशब्दः प्रसिद्धौ। तेजो नास्तीति निषेधात् स्वस्यापि तेजोरूपत्व अर्थसिद्धम्। 'तस्य भासा सर्वमिद विभाति' (काउ.५।१५) इति श्रुतेः। असा.

सर्वस्य जनकः सर्वाधारश्च

**कालोऽमूं दिवमजनयत्काल इमाः पृथिवीरुत।**
**काले ह भूतं भव्यं चेषितं ह वि तिष्ठते॥**

कालः परमात्मा अमू विप्रकृष्टा दिव द्युलोकं अजनयत् उत्पादितवान्। उत अपि च इमाः परिदृश्यमानाः सर्वप्राण्याधारभूताः पृथिवीः। व्यत्ययेन बहुवचन कक्ष्याभेदेन वा। तथा च मन्त्रवर्णः—'यद् इन्द्राग्नी अवमस्या पृथिव्या मध्यमस्या परमस्यामुत स्थः' (ऋसं. १।१०८।९) इति। तथा। हशब्दः एवार्थे। काल एव भूत भूतकाले आधारे अवच्छिन्न भव्यं भविष्यच्च इषितं इष्टं इष्यमाणं वर्तमानकालावच्छिन्नं च जगत् वि तिष्ठते विशेषेण आश्रित वर्तते। असा.

**कालो भूतिमसृजत काले तपति सूर्यः।**
**काले ह विश्वा भूतानि काले चक्षुर्वि पश्यति॥**

कालः कालरूपः परमात्मा भूतिं भवनवज्जगत् असृजत। काले प्रेरके सति सूर्यः आदित्यः तपति जगत् प्रकाशयति। काल एव आश्रये (विश्वा) विश्वानि भूतानि वर्तन्ते। काले चक्षुः। उपलक्षणमेतत्। चक्षुरादीन्द्रियाणि वि पश्यति। इदमपि उपलक्षणम्। दर्शनादिकर्माणि कुर्वन्ति। यद्वा चक्षुः। चक्षुःशब्दो लुप्तमत्वर्थीयः। चक्षुष्मान् सर्वेन्द्रियाधिष्ठाता वि पश्यति स्वस्वेन्द्रियव्यापारं करोति। असा.

मन प्राणनामतपोज्येष्ठब्रह्मणामाश्रय·, सर्वस्येश्वरः. प्रजापते· पिता, ब्रह्मरूप , परमेष्ठिन आधार·, सर्वस्य प्रेरको जनक· आश्रयश्च

**काले मनः काले प्राणः काले नाम समाहितम् ।**
**कालेन सर्वा नन्दन्त्यागतेन प्रजा इमाः ॥**

काले परमात्मनि मनः जगत्सिसृक्षानिमित्तभूत मनो वर्तते । तस्मिन्नेव प्राणः सूत्रात्मा सर्वजगदन्तर्यामी वर्तते । अन्तर्यमनोपाधिकत्वेन काले वर्तते इति आधारव्यपदेशः । यद्वा मनः । जात्येकवचनम् । सर्वेषा प्रणिना मनासि । प्राणः पञ्चवृत्तिकः, प्राणा अपि परमात्मन्येव वर्तन्ते । तथा नाम नामधेयं सर्वेषां वस्तूना सज्ञा अपि तत्रैव समाहितम् । स्त्रीपुरुषादिसंज्ञाभिः काल एव उच्यते इत्यर्थः । यद्वा सर्वेषा रूपाणि कृत्वा तेषा नामान्यपि स्वयमेव व्यवहरतीत्येतदभिप्रायेण काले नाम समाहितं इत्युक्तम् । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते' ( तैआ. ३।१२।७ ) इति हि श्रुतिः । कालेन वसन्तादिरूपेण आगतेन सर्वा इमाः प्रजाः नन्दन्ति संतुष्यन्ति स्वस्वकार्यसिद्धेः ।

अस.

**काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम् ।**
**कालो ह सर्वस्येश्वरो यः पिताऽऽसीत् प्रजापतेः ॥**

काले परमात्मनि तपः जगत्सर्जनविषयं पर्यालोचनम् । 'तपसा चीयते ब्रह्म' ( मुउ. १।१।८ ) इत्यादौ तपःशब्दः पर्यालोचनार्थत्वेन व्याख्यातः । तथा ज्येष्ठं सर्वस्य आदिभूत हिरण्यगर्भाख्य तत्त्वं वर्तते । तथा ब्रह्म साङ्गो वेदस्तत्प्रतिपादकः समाहित सम्यगाहितः । यद्वा तपः कृच्छ्रचान्द्रायणादिकम् । तत्फलप्रदातृत्वात् तत्रैव वर्तनम् । एकः कालशब्दो यौगिकः कलयितरि काले ज्येष्ठ ब्रह्म हिरण्याख्यम् । 'ज्येष्ठ ब्रह्म श्रेष्ठ ब्रह्म' इति हि श्रुत्यन्तरम् । हशब्दः अवधारणे । कालः सर्वस्य जगतः ईश्वरः स्वामी । यः कालः प्रजापतेः प्रजानां स्रष्टुश्चतुर्मुखस्य ब्रह्मणः पिता जनक आसीत् । अस.

**तेनेषितं तेन जातं तदु तस्मिन् प्रतिष्ठितम् ।**
**कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम् ॥**

तेन कालेन इषित इष्ट सर्व स्रष्टव्य जगत् । कामितमित्यर्थः । तेनैव जातं उत्पादित जगत् । तत् तज्जगत् । उशब्दः अवधारणे । तस्मिन्नेव काले प्रतिष्ठितम् । कालो ह काल एव ब्रह्म देशकालावच्छिन्न सच्चित्सुखयितृरसं अबाध्य परमार्थतत्त्व भूत्वा परमेष्ठिन परमे स्थाने सत्यलोके तिष्ठन्त चतुर्मुखब्रह्माणं बिभर्ति । अस.

**कालः प्रजा असृजत कालो अग्रे प्रजापतिम् ।**
**स्वयंभूः कश्यपः कालात् तपः कालादजायत ॥**

कालः अग्रे सृष्ट्यादौ प्रजापतिं ब्रह्माण असृजत उदपादयत् । ( कालः ) प्रजाश्च असृजत । स्वयंभूः स्वय आत्मना भवतीति स्वयभूः । कालव्यतिरिक्तकालान्तरनिषेधकः स्वयंशब्दः । कश्यपः आरोगभ्राजादिसप्तसूर्यापेक्षया अष्टमः सूर्यः । 'कश्यपोऽष्टमः स महामेरुं न जहाति' ( तैआ. १।७।१ ) इति श्रुत्यन्तरं उदाहृतम् । कश्यपशब्दनिर्वचन यास्केन (१) एव कृतम्—'कश्यपः पश्यको भवति यत् सर्व परिपश्यतीति सौक्ष्म्यात्' ( तैआ. १।८।८ ) इति । तादृशः सर्वस्य द्रष्टा सूर्यः तपः संतापक तेजश्च कालात् अजायत ।

अस.

सर्वस्य कारणं, सर्वनियामक·, परमो देवः

**कालादापः समभवन् कालाद् ब्रह्म तपो दिशः ।**
**कालेनोदेति सूर्यः काले नि विशते पुनः ॥**

कालात् सर्वजगत्कारणात् परमात्मनः सकाशात् आपः ब्रह्माण्डाधारभूताः समभवन् । स्मर्यते हि—'अप ए ससर्जादौ तासु वीर्यमवाकिरत् । तदण्डमभवद्धैमम्' (मस्मृ. १।८,९) इति । व्रततपः व्रतम् । कर्मनामैतत् यज्ञादि कर्म । तपः कृच्छ्रचान्द्रायणादिकम् । यद्वा व्रततपः इति पञ्चमी । जगत्सर्जनकर्मणे तप्यमानात् कालात् दिशः प्राच्याद्याः समभवन् । कालेन प्रेरकेण सूर्य उदेति उदय गच्छति । 'भीषास्माद्वातः पवते । भीषोदेति सूर्यः' (तैउ. २।८) इति हि निगमः । पुनः सूर्यः काले नि विशते विलीयते । अस्तमेतीत्यर्थः ।

अस.

**कालेन वातः पवते कालेन पृथिवी मही ।**
**द्यौर्मही काल आहिता ॥**
**कालो ह भूतं भव्यं च पुत्रो अजनयत् पुरा ।**
**कालादृचः समभवन् यजुः कालादजायत ॥**

(१) असं. १९।५४।१–५.

**कालो यज्ञं समैरयद्देवेभ्यो भागमक्षितम् ।**
**काले गन्धर्वाप्सरसः काले लोकाः प्रतिष्ठिताः ॥**
**कालेऽयमङ्गिरा देवोऽथर्वा चाधि तिष्ठतः ।**
**इमं च लोकं परमं च लोकं पुण्यांश्च लोकान् विधृतीश्च पुण्याः ।**
**सर्वाँल्लोकानभिजित्य ब्रह्मणा कालः स ईयते परमो नु देवः ॥**

कालेन प्रेरयित्रा परमात्मना वातो वायुः पवते । सर्वदा वाति । 'भीषाऽस्माद्वातः पवते' इति श्रुतिरुदाहृता । तेनैव मही महती पृथिवी आहिता दृढं स्थापिता वर्तते । मही महती द्यौश्च काले आधारे आहिता निहिता स्थापिता । कालेनैव पित्रा प्रेरकेण पुत्रः प्रजापतिः भूत भूतकालावच्छिन्न भव्यं भविष्यत्कालावच्छिन्नम् । चशब्दः अनुक्तसमुच्चयार्थः । वर्तमानं पुरस्तात् पूर्वं अजनयत् उत्पादितवान् ।

कालात् परमात्मनः ऋचः पादबद्धा मन्त्राः समभवन् । यजुः प्रश्लिष्टपाठरूपो मन्त्रः अजायत । उपलक्षणमेतत् सामवेदादीनाम् । तथा च पुरुषसूक्ते समाम्नातम्— 'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥' (असं. १९।६।१३) इति । तथा ( कालः कालः एव ) देवेभ्यः इन्द्रादिभ्यः अक्षितं क्षयरहित भाग भागत्वेन परिकल्पित यज्ञ प्रकृतिविकृत्यात्मक सोमयाग समैरयत् उदपादयत् । इन्द्रादिदेवभागत्वेन यज्ञं जनयामास ।

गा वाचं धारयन्तीति गन्धर्वाः । गन्धर्वाः गायकाः, अप्सु उदकेषु अन्तरिक्षे वा सरन्ति गच्छन्तीति अप्सरसः मध्यमलोकस्थानाः काल एव आधारे वर्तन्ते । किंबहुना लोकाः सर्वेऽपि काले प्रतिष्ठिताः । लोकशब्दो जनवाची भुवनवाची च । अय अथर्ववेदस्य स्रष्टा देवः दीप्यमानः अङ्गिराः परमात्माऽङ्गरसोद्भूतः अङ्गिरा नाम देवः । अथर्वा । 'अथार्वागेनं एतास्वेवाप्स्वन्विच्छ' (गोब्रा. १।४) इति ब्राह्मणे अशरीरया वाचा स्वसृष्टास्वेव अप्सु अर्वाक् अभिमुख एनं परमात्मान अन्विच्छेति अभिहितः परमात्मा अथर्वशब्दवाच्य इति बहुधा प्रपञ्चितम् । सोऽयं अथर्वा अथर्ववेदस्रष्टा देवश्च काले स्वजनके अधितिष्ठति ।

इम च सर्वकर्मार्जनस्थान लोक भूमि परमं फलभोगस्थानं स्वर्गलोक पुण्यान् पुण्यकर्मभिरार्जितान् लोकान् पुण्याः दुःखलेशासस्पृष्टाः विधृतीः लोकधारकान् सर्वान् उक्तान् अनुक्तांश्च लोकान् ब्रह्मणा स्वकारणेन देशकालवस्तुपरिच्छेदरहितेन सत्यज्ञानानन्तादिलक्षणेन परमात्मना अभिजित्य अभिव्याप्य सः एतत्सूक्तद्वयप्रतिपाद्यः परमः सर्वोत्तमः कालो देवः ईयते सर्व स्थावरजङ्गमात्मकं जगत् व्याप्य वर्तते । नुशब्दः विद्वदविद्वदनुभवप्रमाणद्योतनार्थः । असा.

सर्वप्रमाणविषय. संवत्सरात्मा काल. आदित्यमण्डलोपाधिक

**[१]स्मृतिः प्रत्यक्षमैतिह्यम् । अनुमानश्चतुष्टयम् ।**
**एतैरादित्यमण्डलम् । सर्वैरेव विधास्यते ॥**

स्मृतिरनुमेयश्रुतिमूल मन्वादिशास्त्रम् । प्रत्यक्ष सर्वपुरुषाणा श्रोत्रेण ग्राह्य वेदवाक्य च । ऐतिह्यमितिहासपुराणमहाभारतब्राह्मणादिकम् । अनुमानः शिष्टाचारः । तेन हि मूलभूतं श्रुतिस्मृतिलक्षण प्रमाणमनुमीयते । तदेतत्स्मृत्यादिचतुष्टयमवगतिकारणभूत प्रमाणम् । एतैः स्मृत्यादिभिः सर्वैरेव प्रमाणैरादित्यमण्डलं विधास्यते प्रमीयते, यादृशमिद मण्डल भवति यथा च प्रवर्तते यथा वा मन्वन्तरादिभेदभिन्न काल प्रवर्तयति यथा चोदकसृष्ट्यादिना विश्वमुत्पादयति तत्सर्व स्मृत्यादिप्रमाणसिद्धम् । हे आविष्टके त्वं तथाविधमण्डलस्वरूपाऽसीति स्तुतिः । तैआसा.

**सूर्यो मरीचिमादत्ते । सर्वस्माद्भुवनादधि ।**
**तस्याः पाकविशेषेण । स्मृतं कालविशेषणम् ॥**

अयं सूर्यो जगदादौ मरीचि सर्वव्यवहारहेतुभूतं कंचिद्रश्मिमादत्ते । कुत्राऽऽदत्ते इति तदुच्यते—सर्वस्माद्भुवनादधि सर्वस्य भूतजातस्योपरि, रसवीर्यविकारादिभिः सर्वभूतजातमनुग्रहीतुमित्यर्थः । तस्याः मरीचेः पाकविशेषेण तत्कृतेन पदार्थपरिपाकतारतम्येन कालविशेषणमस्माभिः स्मृत भवति । प्रथम तावद्बीजं मरीचिकृतेन केनचित्पाकेनाङ्कुरीभवति, स चाङ्कुरः पाकान्तरेण काण्डीभवति । तच्च काण्डं पाकान्तरेण पत्रपुष्पाण्युत्पादयति । तच्च पुष्पं पाकान्तरेण फलीभवति । एवं कालकृततत्त-

(१) तैआ. १।२.

त्पदार्थावस्था दृष्टा । तदुचिताः क्षणमुहूर्तदिवसपक्षमासादिरूपाः कालविशेषाः अस्माभिर्निश्चीयन्ते । ईदृशकालरूपा त्वमसीतीष्टकास्तुतिः । एव सर्वं सर्वत्र द्रष्टव्यम् ।

तैआसा.

सर्वेषामणुमहता कालानां संगम. सः

**नदीव प्रभवात्काचित् । अक्षय्यात्स्यन्दते यथा ।**
**तां नद्योऽभिसमायन्ति । सोरुः सती न निवर्तते ॥**

अत्र कालस्य दृष्टान्तोऽभिधीयते—प्रभवत्युत्पद्यते जलमस्मादिति गोदावर्याद्युत्पत्तिप्रदेशः प्रभवः, स च निरन्तरजलोत्पत्तिदर्शनादक्षय्यः । तस्मादक्षय्यात्प्रभवादुत्पन्ना महानदी स्यन्दते प्रवहति । सा नदी यादृशी तादृशोऽयं सवत्सरः । यथा च तां महानदीमन्याः क्षुद्रा नद्योऽभिसमायन्त्याभिमुख्येन संयोगं प्राप्नुवन्ति सा च महानदी बहुक्षुद्रनदीमेलनादुरुर्विस्तीर्णा सती न निवर्तते कदाचिदपि न शुष्यति किन्तु निरन्तरं प्रवहति । तैआसा.

**एवं नानासमुत्थानाः । कालाः संवत्सरꣳ श्रिताः ।**
**अणुशश्च महशश्च । सर्वे समवयन्त्रि तम् ॥**

अत्र दार्ष्टान्तिकोऽभिधीयते—यथा दृष्टान्ते क्षुद्रा नद्यः सर्वा महानदीमेकामभिसमायन्ति, एवमेव नानासमुत्थानाः नानासमाकाराः अणुशश्च महशश्च क्षणमुहूर्तादिरूपाः क्षुद्रकालाश्च दिवसपक्षादिरूपाः महाकालाश्च संवत्सर श्रिताः । ते क्षुद्रा महान्तश्च सर्वे समवयन्त्रि तम् । रेफस्य छान्दसत्वात्प्राप्नुवन्तीत्यर्थः ।

तैआसा.

**स तैः सर्वैः समाविष्टः । उरुः सन्न निवर्तते ।**
**अधिसंवत्सरं विद्यात् । तदेव लक्षणे ॥**

स च सवत्सरस्तैरणुभिर्महद्भिश्च कालावयवैः सर्वैः सम्यगाविष्टः उरुर्विस्तीर्णः सन्न निवर्तते कदाचिदपि न विच्छिद्यते, किंतु प्रभवविभवादिरूपेणानुवर्तते एव । तस्मादधिसवत्सर सवत्सरस्योपरि सर्व कालाधीनं जगदाश्रितमिति विद्यात् । लक्षणे काललक्षणे निरूप्यमाणे सति तदेव संवत्सररूपमेव व्यावहारिककालस्य तत्त्वमवगम्यते इति शेषः ।

तैआसा.

अणुमहद्भिरुपाधिभिर्युक्त. प्रत्यक्ष॰, केवलः सत्त्वोपाधिरहितः अदृश्यः

**अणुभिश्च महद्भिश्च । समारूढः प्रदृश्यते ।**
**संवत्सरः प्रत्यक्षेण । नाधिसत्त्वः प्रदृश्यते ॥**

अणुभिश्च स्वल्पैः क्षणमुहूर्तादिभिरपि महद्भिश्च दिवसपक्षादिभिरप्यवयवैः समारूढः सम्यक्प्राप्तः सवत्सरः प्रत्यक्षेण प्रदृश्यते । आऽविपालगोपालं हि सार्वजनीनेनानुभवेन व्यवह्रियमाणत्वात् । अधिसत्त्वः सत्त्वात्सर्वप्राणिनामस्तित्वेन प्रतीयमानात्संवत्सररूपात्कालादधिको नित्यो निरवयवः परमात्मरूपो व्यावहारिककालस्याप्युत्पादकः कालात्माऽधिसत्त्वः । योऽयं शास्त्रदृष्टिमन्तेरण न प्रदृश्यते । तैआसा.

कालस्य सहस्रविधता पुरुषरूपता च

**पटरो विक्लिधः पिङ्गः । एतद्वरुणलक्षणम् ।**
**यत्रैतदुपदृश्यते । सहस्रं तत्र नीयते ॥**

योऽयमधिसत्त्वनामको व्यावहारिककालस्याप्युत्पादकः परमात्मरूपचैतन्यात्मकः कालोऽस्ति ‘ ज्ञः कालकालः ’ इति श्रुत्यन्तरात् । तस्य कालस्य शास्त्रदृष्टिवर्जितैरदर्शने कारणमुच्यते । पटो वस्त्रसदृशश्चर्मविशेषोऽस्यास्तीति पटरः । विक्लिधो विविधक्लेदनयुक्तः । पिङ्गः पिङ्गलवर्णः । एतच्छुक्लकृष्णादेरुपलक्षणम् । एतैः सर्वैर्विशेषणैर्मांसमयोऽक्षिगोलकविशेषो विभज्यते । अस्ति हि तस्य पक्ष्मा( क्ष्म )पटलाख्यश्चर्मखण्डः पटसदृशः । विक्लेदनमप्यस्ति यदा तदा चक्षुषि जलस्रवणात् । पिङ्गलः शुक्लादिवर्णः स्पष्ट एव । एतादृश यदक्षिगोलकमेतदेव वरुणस्य पारमार्थिककालतत्त्वावरकस्य लक्षणं स्वरूप वरुणलक्षणं, मांसदृष्टिरेव तत्त्वविषया शास्त्रदृष्टिमावृणोतीत्यर्थः । यत्र यस्या मासदृष्टावेतज्जगत्प्रतीयते तत्र क्षणो मुहूर्तो दिवस इत्यादिरूपभेदेन कालभेदाना सहस्र नीयते । व्यवह्रियते अवगम्यते इत्यर्थः । तैआसा.

**एकꣳ हि शिरो नाना मुखे । कृत्स्नं तदृतुलक्षणम् ।**
**उभयतः सप्तेन्द्रियाणि । जल्पितं त्वेव दिह्यते ॥**

एकमेवास्य व्यावहारिककालस्य शिरः सवत्सर एव शिरोवदुत्तमावयवस्थानीयः । मुखे तु नाना मुखस्थानीये दक्षिणोत्तरायणे द्विविधे । यच्छिरःस्थानीयस्य संवत्सरस्यैकत्वं यच्च मुखस्थानीययोर्दक्षिणोत्तरायण-

योर्द्वित्वं तत्कृत्स्नमपि ऋतुलक्षणमृतूना ज्ञापनम् । सति हि सवत्सरे ततश्च तदशयोर्दक्षिणोत्तरायणयोः पश्चात्तदशत्वेनर्तवो ज्ञातु शक्यन्ते । उभयतस्तयोरुभयोर्मुखस्थानीययोरयनयोः सप्तेन्द्रियाणि सप्तसख्याकेन्द्रियाधारशीर्षण्यच्छिद्रयुक्तानि शरीराण्युत्पद्यन्ते । तदेव शास्त्रदृष्टिवर्जितानामेकः सवत्सरो द्वे अयने तदवयवा ऋतवस्तेषु च सर्वेषु कालेषु प्राणिशरीराण्युत्पद्यन्ते इत्येव भ्रान्तो व्यवहारः प्रवर्तते । परमार्थतस्तु शास्त्रदृष्टया पर्यालोच्यमानो जल्पितमेव दिह्यते सवत्सरायनादिनाममात्रमुपचीयते न त्वभिधेयः कश्चिदर्थोऽस्ति । अत एवोपनिषत्सु—'वाचारम्भण विकारो नामधेयम्' (छाउ. ६।१।४), 'नेह नानास्ति किञ्चन' (बृउ. ४।४।१९), 'मायामामात्रमिद द्वैतम्' (गौ. का. १।१७) इति व्यवहारस्य मिथ्यात्व बहुशश्चाम्नायते । एवमष्टौ मन्त्रा अभिहिताः । तैआसा.

**शुक्लकृष्णे संवत्सरस्य । दक्षिणवामयोः । पार्श्वयोः । तस्यैषा भवति ॥**

संवत्सरस्य व्यावहारिकस्य मुख्यस्य कालस्य दक्षिणवामपार्श्वस्थानीययोरुभयोः शुक्लकृष्णे तथाविधवर्णयुक्ते अहोरात्रे विद्येते । तस्यैतस्यार्थस्य प्रतिपादिका काचिदृग्विद्यते । तैआसा.

**शुक्रं ते अन्यद्यजतं ते अन्यत् । विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावः । भद्रा ते पूषन्निह रातिरस्त्विति ॥**

हे पूषन् जगतः पोषक संवत्सर ते तवांशरूपं शुक्र श्वेतवर्णमन्यदहराख्य वस्तु पृथगेवास्ति । तथा ते तव यजतं यजनीयं 'निशितायां निर्वपेत्' इत्यादियागोपलक्षितं रात्रिरूपमन्यत्पृथगेवास्ति । तदेवं विषुरूपे परस्परविलक्षणरूपे अहनी अहोरात्रे वर्तेते तयोर्मध्ये द्यौरिव त्वमसि । तयोः प्रवर्तयिता वर्तसे । हे स्वधावोऽन्नवत्संवत्सर विश्वा मायाः सर्वाः पक्षमासादिकल्पितकालावयवाकृतीरवसि पालयसे । हे पूषन्निह कर्मणि ते तव रात्रिर्भद्राऽस्तु फलप्रदानं समीचीनमस्तु । तैआसा.

केवलः भुवनपूषपश्वादिरहितः, संवत्सररूपः प्रत्यक्षः प्रियतमः

**नात्र भुवनम् । न पूषा । न पशवः । नाऽऽदित्यः । संवत्सर एव प्रत्यक्षेण प्रियतमं विद्यात् । एतद्वै संवत्सरस्य प्रियतमं[1] रूपम् । योऽस्य महानर्थ उत्पत्स्यमानो भवति । इदं पुण्यं कुरुष्वेति । तमाहरणं दद्यात् ॥**

अस्मिन्ब्राह्मणे पारमार्थिकतत्त्वं व्यावहारिककालश्च विविच्य प्रदर्श्यते—अत्र पारमार्थिकतत्त्वे भुवन भूतजात नास्ति । तथा सति सर्वस्माद्भुवनादधीति यदुक्तं तन्नोपपन्नम् । न वा पूषा कश्चिद्देवोऽस्ति । तेन भद्रा ते पूषन्नित्येतदयुक्तम् । न च पशवो द्विपादश्च चतुष्पादो वा सन्ति । तेनोभयतः सप्तेन्द्रियाणीत्येतदयुक्तम् । नाप्यादित्यः कश्चिदस्ति । तस्मादेतैरादित्यमण्डलमित्येतन्न युक्तम् । किं तर्हि विद्यते इति चेत्, उच्यते—सवत्सर एव निरस्तसमस्तक्षणमुहूर्ताद्यवयवविशेषोऽखण्डः एकाकारः कालतत्त्वमेव विद्यते । तर्हि तथाविध एव नित्यो निरवयवः संवत्सर एव परमार्थभूतः प्राणिभिरवबुध्यतामिति चेत् । मैवम् । प्रत्यक्षेण हि लोकसिद्धेन सर्वो जन्तुः प्रियतममेव रूपं विन्देन्न तु वस्तुतत्त्वम् । किं तर्हि प्रियतममिति चेत्तदुच्यते—क्षणमुहूर्तदिवसपक्षाद्यात्मकं काल्पनिकं संवत्सरे यद्रूपमेतदेव शास्त्रदृष्टिरहितानां प्रियतमम् । अस्य यजमानस्य योऽयमिष्टकोपधानपूर्वकः क्रतुरुत्पत्स्यमानो महानधिकोऽर्थः फलहेतुत्वेन पुरुषार्थो भवति तमेवाऽऽहरणमाहर्तव्यमनुष्ठेयमिष्टकोपधानपूर्वकं क्रतुं दद्याच्छिष्येभ्य उपदिशेत् । उपदेशप्रकार एव इदं पुण्यं कुरुष्वेतिवाक्येन स्पष्टं (ष्टी) क्रियते । नात्र भुवनमित्यादिपरमार्थतत्त्वं नोपदिशेत् । यद्यपि तत्त्वमेवोत्तमं तथाऽपि विवेकाभावान्नासार्वुपदेशार्हं इत्यभिप्रायः । तैआसा.

---

## त्वष्टा

प्राणिनां विभागेन जनिता

**प्रथमभाजं यशसं वयोधां सुपाणिं देवं सुगभस्तिमृभ्वम् ।**
**होता यक्षद्यजतं पस्त्यानामग्निस्त्वष्टारं सुहवं विभावा ॥**

प्रथमभाजं प्रथम उत्पत्तिकाल एव विभक्तारं जन्तु-

(१) ऋसं. ६।४९।९.

नाम् । 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायते' (तैसं. १।५।९।१) इति श्रुतेः। यशसं यशस्विन वयोधा वयसोऽन्नस्य हविर्लक्षणस्य धातार धारयितार यद्वा स्तोतृभ्योऽन्नप्रद सुपाणिं, हस्तस्य मणिबन्धादूर्ध्वप्रदेशः पाणिः, शोभनपाणिक देव दानादिगुणयुक्त सुगभस्तिं, गभस्तिरिति बाहुनाम, शोभनदोर्दण्ड ऋष्वं उरु भासमान महान्तं वा पस्त्याना, पस्त्यमिति गृहनाम, तत्स्थाना श्रजतं यष्टव्यम् । गृहस्थैर्यजनीयमित्यर्थः। सुहवं सुखेन ह्वातु शक्यम् । एवम्भूतं त्वष्टारं होता देवानामाह्वाता विभावा दीप्यमानः अग्निः यक्षत् यजत् अनेन हविषा यजतु । ऋसा.

सर्वेषु जननस्थानेषु स्थित्वा प्राणिरूपाणा विधाता

त्वष्टा पत्नीभिरिह नः सजोषा देवो देवीभिर्हविषो जुषाणः ।
उपो रयिं बहुलꣳ विष्यता नः शृणोत नः सुमतिꣳ यज्ञियासः ॥
रेतोधा यस्य भुवनस्य देवः ससाद योनौ जनिता जनिष्ठः ।
रूपाणि कृण्वन् विदधद्वपूꣳषि त्वष्टा पत्नीभिश्चरति प्रजानन् ॥
त्वष्टा पत्नीभिरनु मꣳहनेवाग्नेयावा धिषणे यं दधाते ।
विश्वा वसु हस्तयोरादधानोऽन्तर्मही रोदसी याति साधन् ॥
आ नो वीरैर्भिर्जनिता मतीनां गोभिरश्वैभिर्वसुभिर्वसूयन् ।
समञ्जानो धामभिर्विश्वरूपैस्त्वष्टा पत्नीभिश्चरति प्रजानन् ॥
त्वष्टा रेतो भुवनस्य पत्नीर्विकृण्वानास्तनयं भूरि पश्वः ।
मा वो देवी रोदसी तच्छृणोता नो रयिं जनत विश्ववारम् ॥

---

(१) मैसं. ४।१४।९ (११४-११८).

## धाता

सर्वस्येशान, विश्वजनकः

धाता ददातु नो रयिमीशानो जगतस्पतिः ।
स नः पूर्णेन वावनत् ॥

धाता विश्वस्य धारयिता जगतस्पतिः जगतः पालकः ईशानः परमेश्वरो नः अस्मभ्य रयि धन ददातु । स परमेश्वरो नः अस्मान् पूर्णेन समृद्धेन धनेन वावनत् संभजता सयोजयत्वित्यर्थः । तैसा.

धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान ।
धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम ॥

अय धाता प्रजायाः पुत्रादेरीशे ईष्टे स्वामी भवति । उतापि च रायः ईशे धनस्यापि स्वामी भवति । धाता सर्वमिद भुवनं प्राणिजातं जजान उत्पादितवान् । स च धाता यजमानाय पुत्र दास्यति । तस्मा उ तथाविधायैव देवाय हव्यमिद घृतवद्विधेम घृतयुक्त करवाम । तैसा.

धाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम् ।
वयं देवस्य धीमहि सुमतिꣳ सत्यराधसः ॥

स च धाता जीवातुमक्षिता जीवनाय पर्याप्ता अक्षीणा प्राची प्रकर्षेण अस्मास्वनुकूलां रयिं नः अस्मभ्य ददातु । सत्यराधसः सत्येन यज्ञेन आराधका वय देवस्य सुमति

---

(१) ऋसं. (खिलं) २।१ (पृ. ९२५) ददातु (दधातु), असं. ७।१७।१ ददातु (दधातु) वावनत् (यच्छतु); तैसं. ३।३।११।२, कासं. १३।१६ (९३) ददातु (दधातु).

(२) ऋसं. (खिलं) २।१ (पृ. ९२५) प्रजाया उ (प्रजानामु) उत्तरार्धे (धाता कृष्टीरनिमिषाभि चष्टे धात्र इद्धव्यं घृतवज्जुहोत); तैसं. ३।३।११।२.

(३) ऋसं. (खिलं) २।१ (पृ. ९२५) तु नो रयिं प्राचीं (तु दाशुषे प्राची) सत्यराधस· (वाजिनीवत); असं. ७।१७।२ पूर्वार्धे (धाता दधातु दाशुषे प्राचीं जीवातुमक्षिताम्) सत्य (विश्व); तैसं. ३।३।११।३; मैसं. ४।१२।६ (१५९) ददातु (दधातु) सत्यराधस· (सत्यधर्मणः), नि. ११।११ पूर्वार्धे (धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम्) सत्यराधसः (सत्यधर्मणः).

अनुग्रहयुक्त चित्त धीमहि ध्यायेम प्रार्थयाम इत्यर्थः ।

तैसा.

**[1]धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे ।**
**तस्मै देवा अमृताः संव्ययन्तां विश्वे देवासो अदितिः सजोषाः ॥**

स धाता दाशुषे हविर्दत्तवते यजमानाय वसूनि ददातु । कीदृशाय । प्रजाकामाय दुरोणे स्वगृहे मीढुषे देवानामाज्येन सेचितवते । अमृताः मरणरहिताः विश्वे देवासः सर्वे देवाः सजोषाः समानप्रीतिः अदितिः देवाश्च तस्मै तथाविधयजमानार्थं सव्ययन्ता तद्गृहे सवृत्यावतिष्ठन्ताम् ।

तैसा.

---

## विश्वकर्मा

सर्वभूतानां हवनकर्ता ऋषि, पिता, अनादिव्यापक., सर्वेषु प्रविष्टः, करणाधिकरणादिकारकरहित सन् विभु एक एव देवो द्यावाभूम्योर्जनक प्रेरकश्च, उत्तममध्यमावमरूपशाली, वाचस्पतिः, विश्वशभू, साधुकर्मा

**[2]य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ।**
**स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥**

अत्र निरुक्तम्—'विश्वकर्मा सर्वमेधे सर्वाणि भूतानि जुहवांचकार। स आत्मानमप्यन्ततो जुहवाचकार । तदभिवादिन्येषर्ग्भवति य इमा विश्वा भुवनानि जुह्वदिति' ( नि. १०।२६ ) इति । यो विश्वकर्मैतन्नामकः ऋषिः भुवनपुत्रः होता होमनिष्पादकः सन् विश्वा सर्वाणि भुवनानि जुह्वत् होम कुर्वन् । प्रथमं सर्व जगद्धुत्वेत्यर्थः । पश्चादग्नौ न्यसीदत् पिता जनकः । आत्मकृतेन कर्मणा देहोत्पत्तेः । न चैकस्य जन्यजनकभावो विरुध्यते तपोबलेन शरीरद्वयस्वीकारात् । 'स एकधा भवति' ( छाउ. ७।२६।२ ) इत्यादिश्रुतेः । स ऋषिः आशिषा आशीःप्रतिपादकेन सूक्तवाकादिना द्रविणं धन स्वर्गाख्यमिच्छमानः कामयमानः प्रथमच्छत् प्रथममग्नेर्भुवनैराच्छादयिता अवरान् विप्रकृष्टान् भूतान् स्वात्मनाऽऽहुतान् आविवेश आविष्टवानग्निमित्युक्तार्थ एव पुनर्विशेषेणोक्तः । एवमुत्तरत्राधियज्ञपरतया योज्यम् । अथाध्यात्मप्रसिद्धयोच्यते । यो विश्वकर्मा परमेश्वरः इमा विश्वा भुवनानि जुह्वत् प्रलयकाले पृथिव्यादीन् इमान् सप्त लोकान् स्वात्मन्याहुतिप्रक्षेपवत्संहरन्नृषिरतीन्द्रियद्रष्टा सर्वज्ञो होता सहाररूपस्य होमस्य कर्ता नोऽस्माकं पिता जनको निषसाद स्वय स्थितवान् । अयमर्थः—प्रलयकाले प्राप्ते सति सर्वाल्लोकान् संहृत्यास्माकमपि संहर्ता पुनः स्रष्टा च सन् सर्वज्ञो यः परमेश्वरः स्वयमेक एवासीत् । तथा हि श्रुतयः—'आत्मा वा इदमेक एवाग्र आसीत्' ( ऐउ. १।१।१ ), 'सदेव सोम्येदमग्र आसीत्' ( छाउ. ६।२।१ ) इत्यादिकाः । स तादृशः परमेश्वरः आशिषा 'बहु स्या प्रजायेय' इत्येवरूपया पुनः पुनः सिसृक्षया द्रविणमिच्छमानः धनोपलक्षित जगद्भोगमाकाङ्क्षमाणः प्रथमच्छत् प्रथमं मुख्य निष्प्रपञ्चं पारमार्थिक रूपमावृण्वन्नवरान् स्वसृष्टान् प्राणिहृदयप्रदेशाना विवेश आविष्टवान् जीवरूपेण । तथा च श्रूयते—'सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किंच । तत्सृष्ट्वा तदेवानुप्राविशत्' ( तैउ. २।६ ) इति । एवमन्या अप्युपनिषदः उदाहार्याः ।

ऋसा.

**[1]किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत् ।**

---

(१) ऋसं. ( खिलं ) २।१ ( पृ. ९२५ ) असं. ७।१७।३ ( धाता विश्वा वार्या दधातु प्रजाकामाय दाशुषे दुरोणे । तस्मै देवा अमृतं सं व्ययन्तु विश्वे देवा अदितिः सजोषाः ॥ ); तैसं. ३।३।११।३; मैसं. ४।१२।६ ( १६० ).

(२) ऋसं. १०।८१।१; तैसं. ४।६।२।१ न्यसीदत्पिता ( निषसादा पिता ) प्रथमच्छदवरा ( परमच्छदो वर ); कासं. १८।१ ( २ ) प्रथम ( परम ), मैसं २।१०।२ ( १५ ) वरा ( वरं ), शुसं. १७।१७.

(१) ऋसं. १०।८१।२; तैसं. ४।६।२।४ त्कथासीत् ( त्किमासीत् ) यतो ( यदी ); कासं. १८।२ ( १२ ) दधिष्ठानमारम्भणं ( दारम्भणमधिष्ठानं ) यतो भूमिं ( यदिद्भूमिं ), मैसं. २।१०।२ ( १७ ); शुसं. १७।१८.

**यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥**

पूर्वमन्त्रे जगत्प्रलयकाले संहृत्य पश्चात्सिसृक्षाया सर्वं सृष्ट्वा तत्र प्रविष्टः इत्युक्तम्। अत्र तस्य द्वितीयस्याधिष्ठानजगदुपादानकारणाद्यसंभवात् सृष्टिरनुपपन्नेत्याक्षिपति। लोके हि घटं चिकीर्षुः कुलालो गृहादिकं किंचित्स्थानमधिष्ठाय मृद्रूपेणारम्भद्रव्येण चक्रादिरूपैरुपकरणैर्घटं निष्पादयति। तद्वदीश्वरस्य जगदाश्रयद्यावापृथिव्योरुत्पादनवेलाया अधिष्ठानं किं स्विदासीत् किं नामाभूत्। न किंचिदित्यर्थः। तथा तयोरारम्भणं कतमत्स्वित्। आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणम्। तदपि कतमद्भवेत्। तदपि नेत्यर्थः। यद्यपि संभवेदारम्भणं कथासीत् कथमभूत्। किं स्वयं सदसद्वा भवेदित्यर्थः। उभयमपि नोपपद्यते। सच्चेत् अद्वैतभङ्गप्रसङ्गः। असच्चेत् सदात्मकयोर्द्यावापृथिव्योरुपादानानर्हत्वात् 'नान्यत्किंचन मिषत्' (ऐउ. १।१।१) इति श्रुतेश्चेत्यभिप्रायः। यतः यस्मादधिष्ठानादारम्भणाच्च विश्वचक्षाः सर्वद्रष्टा विश्वकर्मा परमेश्वरः भूमिं जनयन् वर्तते तथा द्यां दिवं वि और्णोत् व्यवृणोत् सृष्टवान् महिना स्वमहत्त्वेन। किं स्विदासीदिति। ऋसा.

[1]**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।**
**सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥**

अनया सर्वात्मकत्वेन कुलालादिविलक्षणत्वादधिष्ठानाद्यभावेऽपि स्रष्टुं शक्नोतीत्याह। विश्वतश्चक्षुः सर्वतो व्याप्तचक्षुः। उतापि च विश्वतोमुखः। तथा विश्वतोबाहुः। उतापि च विश्वतस्पात्। स एवंविधः परमेश्वरः स्वस्मिंस्त्रैलोक्यमुत्पादयतीत्यर्थः। कथमिति उच्यते। बाहुभ्यां दिवं सं धमति। धमतिर्गतिकर्मा। सम्यक् प्रेरयति। तथा पतत्रैः गमनशीलैः पादैः पृथिवीं सं धमतीति। उभयोरेव श्रवणं प्राधान्याभिप्रायम्। एवं द्यावाभूमी जनयन् दिवं च पृथिवीं चोत्पादयन् देवः द्योतमानः स्वयंप्रकाशः परमेश्वरः एकः असहाय एव वर्तते। ऋसा.

[ ओ यो विश्वचक्षुरुत इति विश्वचक्षुर्वै देवाना भवति। विश्वतोमुख इति विश्वमुखान् दर्शयति। विश्वतोहस्त इति विश्वहस्त उत्तमा भवति। उत विश्वतस्पादिति विश्वतस्पाद्दाधार। स बाहुभ्यामिति सर्वं बाहुर्वै नमते नमस्कुर्याङ्कुर्वन्ति। स यजत्रैरिति सर्वस्य जित्यै। द्यावापृथिवी इति द्यावापृथिव्योर्धारयति। जनयन् देव एक इति जनमिति जनाना जनपतिर्जन्तूनामात्मा वै सर्वं ध्यायन्ति देव एको भवति स देवेभ्यो रक्षांसि भवति य एवं वेद ॥

कब्रा. १६ (पृ. ७३) ]

[1]**किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।**
**मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥**

पूर्वस्यामृच्युक्तं ब्रह्मैव भूम्यादिकारणमिति। तदेवानया प्रश्नकथनव्याजेनोच्यते। लोके हि प्रौढं प्रासादं निर्मिमाणः कस्मिंश्चित्प्रौढे वने कंचिन्महान्तं वृक्षं छित्त्वा तक्षणादिना स्तम्भादिकं संपादयति। इह तु परमेश्वरप्रेरिताः जगत्स्रष्टारः यतः यस्माद्वनाद्यं वृक्षमादाय द्यावापृथिवी निष्टतक्षुः तक्षणेन द्यावापृथिव्यौ निष्पादितवन्तः तत् वनं किं स्वित् किं नाम स्यात्। तथा क उ स वृक्ष आस कस्तादृशो महान्वृक्षोऽभूत्। हे मनीषिणः मनस ईश्वराः तदुभयं मनसा जिज्ञासायुक्तेन पृच्छतेदु

(१) ऋसं. १०।८१।३; असं. १३।२।२६ पूर्वार्धे (यो विश्वचर्षणिरुत विश्वतोमुखो यो विश्वतस्पाणिरुत विश्वतस्पृथः) धमति (भरति) भूमी (पृथिवी); तैसं. ४।६।२।४ बाहुरुत (हस्त उत) धमति (नमति) भूमी (पृथिवी); कासं. १८।२ (१३) विश्वतश्चक्षु (यो विश्वचक्षु) बाहुरुत (हस्त उत) धमति...भूमी (नमते सं यजत्रैर्द्यावापृथिवी), मैसं. २।१०।२ (१८) पूर्वार्धं कासंवत्, धमति (अधमत्), शुसं. १७।१९; कब्रा. १६ (पृ. ७३) (यो विश्वचक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात्। सं बाहुभ्या नमते सं यजत्रैर्द्यावापृथिवी जनयन् देव एक. ॥); नाउ. १।३ तैसंवत्; श्वेउ. ३।३.

(१) ऋसं. १०।८१।४; तैसं. ४।६।२।५ आस (आसीत्); कासं. १८।२ (११) तैसंवत्; मैसं. २।१०।२ (१६) तैसंवत्, शुसं. १७।२०, तैब्रा. २।८।९।६.

पृच्छतैव । किंच ईश्वरः भुवनानि धारयन् यत्स्थानमध्यतिष्ठत् तदपि पृच्छत । एतस्य सर्वस्याप्युत्तर 'ब्रह्म स वृक्ष आसीत्' (तैब्रा. २।८।९।६) इत्यादिकमुत्तरम् । ऋसा.

**या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।**
**शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः ॥**

अनया भौवनो विश्वकर्मा जगत्कारण विश्वकर्मदेव स्तौति । हे विश्वकर्मन् या यानि ते तव परमाणि धामानि शरीराणि सन्ति, या यानि च मध्यमा मध्यमानि शरीराणि सन्ति, उतापि च या यानि अवमा अवमानि शरीराणि सन्ति, उतापि च तानीमानि सर्वाणि शरीराणि सखिभ्यः अस्मभ्य यष्टु हविषि मयि हविर्भूते सति शिक्ष देहि । हे स्वधावः हविर्लक्षणान्नवन् स्वयमेव त्व तन्वं स्वकीय पूर्वोक्त त्रिविध शरीर वृधानः हविषा वर्धमानः सन् । अनेन धामत्रैविध्योपन्यासेनोत्तमभूतानि देवादिशरीराणि मध्यमभूतानि मनुष्यादिशरीराणि निकृष्टभूतानि कृमिकीटादिशरीराणि च परिगृहीतानि । किं बहुना सर्व जगदुपात्त भवति । उक्तव्यतिरेकेण निरवयवस्य परमेश्वरस्य विग्रहाभावात् 'तदैक्षत बहु स्या प्रजायेय' (छाउ. ६।२।३) इत्यादिश्रुतिभ्यः परमेश्वरस्यैव देवादिभेदेन बहुभावावगमात् । ऋसा.

[2]**विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।**
**मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥**

हे विश्वकर्मन् विश्वविषयकर्मन् एतन्नामक परमेश्वर हविषा हविर्भूतेन मया विश्वकर्मणा मया दत्तेन वा हविषा वावृधानः वर्धमानः । 'विश्वकर्मा सर्वाणि भूतानि जुहवाञ्चकार स आत्मानमप्यन्ततो जुहवाञ्चकार' इति हि निरुक्त पूर्वमुदाहृतम् । स्वयमेव पृथिवी उतापि च द्या दिवं च स्वसृष्टे द्यावापृथिव्यौ स्वयं प्रवृद्धः सन् यजस्व पूजय । अन्ये मत्तोऽन्ये जनासः जनाः अयष्टारोऽस्मद्यागविरोधिनो वा मुह्यन्तु मुग्धा भवन्तु अभितः सर्वतः । अथ परोक्षकृतः । इह अस्मिन्यागे अस्माक मघवा अस्मत्प्रत्तेन हविर्लक्षणेन धनेन धनवान् सः सूरिः स्वर्गादिफलस्य प्रेरकः अस्तु भवतु । अत्र 'विश्वकर्मन् हविषा वर्धमानः' (नि. १०।२७) इत्यादि निरुक्तमनुसधेयम् । ऋसा.

**वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।**
**स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ॥**

वाचस्पतिं मन्त्रात्मकस्य वचसः स्वामिन विश्वकर्माणं विश्वकर्तार मनोजुव मनोवेगगमन देवं वाजे यज्ञे अद्य अस्मिन् दिने ऊतये तर्पणाय हुवेम आह्वयाम । सः देवः नः अस्माक विश्वानि सर्वाणि हवनानि जोषत् सेवताम् । किमर्थम् । अवसे अस्माक रक्षणाय । स विशेष्यते । विश्वशम्भूः विश्वस्य सुखस्योत्पादकः साधुकर्मा च । ऋसा.

मनसा द्यावापृथिव्योर्जनक, ज्योतीरूप, परमो द्रष्टा, एकोऽद्वैत, देवाना नामधाता, अस्मत्पिता, सर्वज्ञः, भूतैर्जिज्ञास्य., ऋषिभिः स्तोतव्य, भूतजातस्य जनक, द्युभूमिदेवासुरेभ्य. परः, विश्वबीजं, अजः, देवाना संगमः, विश्वस्य नाभि आधारश्च, विश्वस्य जनकः, स्तोतृभिरज्ञेयः

[2]**चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।**

(१) ऋसं. १०।८१।५; तैसं. ४।६।२।५ तन्वं वृधान (तनुवं जुषाण.), कासं. १८।२ (१४) हविषि (हविषा) वृधान (जुषाण.); मैसं २।१०।२ (१९); शुसं. १७।२१.

(२) ऋसं. १०।८१।६; सासं. २।९।६।२ पृथिवीमुत द्याम् (तन्वं स्वा हि ते), तैसं. ४।३।१३।८ पृथिवीमुत द्याम् (तनुवं जुषाण.) तो जनास (तः सपत्ना), कासं. १८।२ (१६) पृथिवीमुत द्याम् (तन्व९ स्वाहिते), २३।१३ (५७), मैसं. २।१०।२ (२१); शुसं. १८।२२ तो जनास (तः सपत्ना); नि. १०।२७।१.

(१) ऋसं. १०।८१।७, तैसं. ४।६।२।५ मनोजुवं (मनोयुजं) विश्वानि (नेदिष्ठा) जोषद्वि (जोषते वि), कासं. १८।२ (१७) मनोजुवं (मनोयुजं) विश्वानि (नेदिष्ठं) नि जोषद्वि (न्यागमद्वि), २३।१३ (५८) विश्वानि (नेदिष्ठं); मैसं. २।१०।२ (२२) मनोजुवं (मनोयुज९) विश्वा ... षद्वि (नेदिष्ठा हवना जुजोष वि), शुसं. १७।२३; शब्रा. ४।६।४।५.

(२) ऋसं. १०।८२।१, तैसं. ४।६।२।४ नम्र (नम्र)

**यदेदन्ता अददृहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम् ॥**

चक्षुषः चक्षुरुपलक्षितस्येन्द्रियसघात्मकस्य शरीरस्य पिता उत्पादयिता । यद्वा । चक्षुः ख्यापक तेजः, तस्योत्पादयिता । मनसा न हि मत्समोऽस्ति कश्चिदिति बुद्ध्या हि खलु धीरः धृष्टः विश्वकर्मा प्रथम घृत उदकं अजनत् अजनयत् । 'आपो वा इदमग्रे' (तैस. ७।१।५।१) 'अप एव ससर्जादौ' (मस्मृ. १।८) इत्यादिश्रुतिस्मृती स्याताम् । पश्चात् एने द्यावापृथिव्यौ नम्नमाने तस्मिन्नुदके इतस्ततश्चलन्त्यौ योऽजनयत् । अथ यदेत् यदैव अन्ताः पर्यन्तप्रदेशाः पूर्वे पुराणाः द्यावापृथिव्योः सबन्धिनः अददृहन्त दृढा अभवन् । विश्वकर्मणा दृढाः संपादिता इत्यर्थः । आदित् अनन्तरमेव द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां यथाकामं प्रथिते अभूताम् । ऋसा.

[१]**विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् ।**
**तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन् पर एकमाहुः ॥**

अय मन्त्रोऽधियज्ञाध्यात्मयोर्भेदेन द्विधा व्याख्येयः । तत्र प्रथमं दैवतमधिकृत्योच्यते । विश्वकर्मा बहुविधप्रकाशवृष्टिप्रदानादिकर्मणां कर्ता आदित्यः स च विमनाः विभूतमनाः । आत् इत्यनर्थकः सर्वतः इत्यर्थे वा । विहायः विविधमाता महानित्यर्थः । धाता वृष्ट्यादिकर्ता च विधाता जगतः कर्ता च परमा परमः सदृक् संद्रष्टा च भूतानाम् । तेषां सप्तर्षीणाम् । ज्योतिषा रश्मीनामित्यर्थः । चरमपादे वक्ष्यमाणत्वात् । इष्टानि स्थानानि शरीराणि वा इषा उदकेन सं मदन्ति समोदन्ते यत्र यस्मिन्नादित्ये त देव सप्तर्षीन् सप्तर्षिभ्य इत्यर्थः । तेभ्यः परः परस्तादेकमेवादित्यमाहुर्मन्त्रविदः । अध्यात्मपक्षे उच्यते । विश्वकर्मा यः परमात्मा प्राणप्रकाशाभ्यामुपेतः सन् बहुकर्मा भवति । स च विमना विभूतमना विहाया वस्तुतो महान् विशेषेण सुकृतदुष्कृतफलस्याप्ता धाता विधाता च परमोत सदृक् परमश्च सद्रष्टेन्द्रियाणाम् । तेषां सप्तर्षीणा द्रष्टॄणामिन्द्रियाणामिष्टानि स्वरूपाणि इषान्नेन सह स मदन्ति समोदन्ते यत्र यस्मिन्नात्मनि तमात्मान सप्तर्षीन् सप्तसख्याकेभ्यः सर्पणस्वभावेभ्यो वा परः परस्ताद्वर्तमानमिन्द्रियाद्यतीतमेकं परमात्मानमाहुस्तत्त्वविदः । अत्र 'विश्वकर्मा विभूतमना व्याप्ता' (नि. १०।२६) इत्यादि निरुक्तमनुसधेयम् । ऋसा.

[१]**यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।**
**यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या ॥**

यः विश्वकर्मा नः अस्माकं पिता पालयिता । न केवलं पालकः किन्तु जनिता उत्पादकः । किमनेनास्माकं उत्पादक इति सकोचेन । यो विधाता सर्वस्य जगत उत्पादको यो विश्वकर्मा नोऽस्माकमुत्पन्नानि धामानि देवानां तेजःस्थानानि वेद वेत्ति । कि बहुना । विश्वा विश्वानि भुवना भूतजातानि वेद वेत्ति । यश्च देवानां अग्निवाय्वादीना नामधाः नाम्नां धाता इन्द्रादीन्निर्माय तेषामिन्द्रादि नाम कृत्वा तत्तत्पदेषु स्थापयिता एक एव । तं देवं अन्या अन्यानि भुवना भूतजातानि प्रश्न कः परमेश्वर इति पृच्छां यन्ति प्राप्नुवन्ति । ऋसा.

[२]**तं आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।**

दृहन्त (दृह्हन्त); कासं. १८।२ (१०) उत्तरार्धे (यदिद्द्यावापृथिवी अप्रथेतामादिदन्ता अददृहन्त पूर्वे); मैसं. २।१०।३ (२३) पूर्व (पूर्वा), शुसं. १७।२५.

(१) ऋसं १०।८२।२, तैसं. ४।६।२।१ आद्वि (यद्वि) यत्रा सप्तऋषीन् (यत्र सप्तर्षीन्); कासं. १८।१ (३) आद्विहाया (यो व्योमा) मोत संदृक् (मो न संदृक्) उत्तरार्धे (सं नो महानि समिषो महन्ता यत्र सप्तर्षीन् पर एकमाहुः), मैसं. २।१०।३ (२४) विमना...विधाता (विममे यो विहाया धर्ता विधर्ता); शुसं. १७।२६; नि. १०।२६।१.

(१) ऋसं. १०।८२।३; तैसं. ४।६।२।१ धामानि...विश्वा (यो न. सतो अभ्या सज्जजान), कासं. १८।१ (५) धामानि...विश्वा (यो न सतो अभ्या सन्निनाय) एक एव (एको अस्ति), मैसं. २।१०।३ (२६) विधाता (विधर्ता) शेषं तैसंवत् ; शुसं. १७।२७.

(२) ऋसं. १०।८२।४; तैसं. ४।६।२।२ असूर्ते...निषत्ते (असूर्ता सूर्ता रजसो विमाने); कासं. १८।१ (४) द्रविणं (द्रविणा) जरितारो न (जनिमानि) असूर्ते

**असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥**

ते पूर्वे ऋषयः अस्मै विश्वकर्मणे द्रविण चरुपुरोडाशादिलक्षण धन स सम्यगायजन्त सर्वतो यजन्ते । जरितारो न भूना स्तोतारो यथा भूम्ना महता स्तोत्रेण यजान्ति तद्वत् । ये महर्षयः असूर्ते सरणवर्जिते सूर्ते सरणसहिते स्थावरजङ्गमात्मके रजसि लोके निषत्ते निषण्णे निश्चलमवस्थिते इमानि भूतानि भुवनानि । प्राणिनः इत्यर्थः । समकृण्वन् सम्यग्धनादिनाऽपूजयन् । अथवा अयमर्थः । ये स्थावरजङ्गमात्मके जगति वर्तमानानेतान् प्राणिनस्तेजसा समकृण्वन् ते पूर्वे ऋषयो द्रष्टारो रश्मयोऽस्मै आदित्यात्मकाय विश्वकर्मणे द्रविण तेजः आयजन्त । ऋसा.

**परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।**

**कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे ॥**

यदीश्वरतत्त्व दिवा परः द्युलोकादपि परस्ताद्वर्तमान तथा एना अस्याः पृथिव्याः परः परस्ताद्वर्तमान तथा देवेभिर्देवैः परस्ताद्वर्तमान असुरैः परस्ताद्वर्तमान च यदस्ति तद्गुहायामवस्थित क स्विद्गर्भ गर्भवत्सर्वस्य ग्राहक तत्त्व आपः प्रथमं दध्रे धृतवत्यः । यत्र यस्मिन् गर्भे देवाः इन्द्रादयः विश्वे सर्वेऽपि समपश्यन्त सगताः परस्पर पश्यन्ति । एव जानन्नेव कश्चित्तत्त्ववित्प्रश्न करोति ।

ऋसा.

**तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।**

**अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ॥**

अनया पूर्वमन्त्रोक्तस्य प्रश्नस्योत्तरमभिधीयते । तमित् तमेव विश्वकर्माण गर्भं गर्भस्थानीय प्रथम इतरसृष्टेः पूर्व आपः दध्रे धृतवत्यः । यत्र गर्भे विश्वे सर्वे देवाः इन्द्रादयः समगच्छन्त सगताः भवन्ति । तस्य अजस्य नाभावधि नाभौ । अधीति सप्तम्यर्थानुवादी । एकमर्पितमित्यण्डाभिप्रायेणोक्तम् । अण्डं हि प्राक्सर्गान्नाभिस्थाने तिष्ठति । यस्मिन्नण्डे विश्वानि भुवनानि सर्वाणि भूतजातानि तस्थुः तिष्ठन्ति । अथवा अजस्य जन्मरहितस्य ब्रह्मणः स्वसृष्टे जले शयानस्य नाभौ सर्वजगद्बन्धके उदके एक ब्रह्माण्डमर्पित स्थापितम् । शिष्ट समानम् । अथास्मिन्नर्थे स्मृतिः—'अप एव ससर्जादौ तासु वीर्यमवाकिरत् । तदण्डमभवद्धैम सूर्यकोटिसमप्रभम् ॥' (मस्मृ. १।८,९ ) इति । ऋसा.

**न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।**

**नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥**

हे नराः त विश्वकर्माणं न विदाथ न जानीथ य इमा इमानि भूतानि जजान उत्पादितवान् । देवदत्तोऽहं यज्ञदत्तोऽहमिति वयमात्मान विश्वकर्माणं जानीम इति यदुच्येत तदसत्, न ह्यहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य तत्त्व, किंतु युष्माकं अहंप्रत्ययगम्याना जीवानां अन्तरं अन्यत् अहंप्रत्ययगम्यादतिरिक्तं सर्ववेदान्तवेद्यमीश्वरतत्त्व बभूव भवति विद्यते । जीवरूपवत्तदपि कुतो न विद्म इति चेत् श्रूयताम् । नीहारेण प्रावृताः यूयं नीहारसदृशेनाज्ञानेनाच्छन्नाः । अतो न जानीथ । यथा नीहारो नात्यन्तमसन् दृष्टेरावरकत्वात्, नाप्यत्यन्तं सन् काष्ठपाषाणादिरूपान्तरेण संबन्धुमयोग्यत्वात्, एवमज्ञानमपि

---

( असूर्ता ) निषत्ते ( न सत्ता ); मैसं. २।१०।३ ( २५ ) द्रविणं समस्मा ( द्रविणा समास्मिन् ) असूर्ते ( असूर्ता ) निषत्ते ( निषत्ता ), शुसं. १७।२८.

(१) ऋसं. १०।८२।५; तैसं. ४।६।२।२ यदस्ति ( गुहा यत् ) पश्यन्त ( गच्छन्त ), कासं. १८।१ ( ८ ); मैसं. २।१०।३ ( ८ ), शुसं. १७।२९ विश्वे ( पूर्वे ).

(२) ऋसं. १०।८२।६; तैसं. ४।६।२।३ विश्वानि भुवनानि तस्थु: ( विश्वं भुवनमधि श्रितम् ); कासं. १८।१ ( ९ ) गच्छन्त ( पश्यन्त ) वध्येक ( अध्येक ) यस्मिन्... तस्थु: ( तत्रेदं विश्वं भुवनमधि श्रितम् ); मैसं. २।१०।३ ( २८ ) दध्र ( दध्रा ) गच्छन्त ( पश्यन्त ) वध्येक ( अध्येक ) विश्वानि भुवनानि ( विश्वा भुवनाधि ); शुसं. १७।३०.

(१) ऋसं. १०।८२।७, तैसं ४।६।२।२ य इमा ( य इदं ) बभूव ( भवाति ), कासं. १८।१ ( ६ ) इमा ( इदं ), मैसं. २।१०।३ ( ३० ), शुसं. १७।३१.

नात्यन्तमसत् ईश्वरतत्त्वावरकत्वात्, नापि सत् बोधमात्र-निवर्त्यत्वात् । ईदृशेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः । न केवलं प्रावृतत्वं किंतु जल्प्या च देवोऽहं मनुष्योऽहमित्याद्यनृतजल्पनेन प्रावृताः । किं च असुतृपः केनाप्युपायेन असून् प्राणांस्तृप्यन्तः उदरम्भरा इत्यर्थः । न तु पारमेश्वरं तत्त्वं विचारितवन्तः । न केवलमिहलोकभोगमात्रतृप्ताः उक्थशासः नानाविधेषु यज्ञेषु उक्थं प्रउगनिष्केवल्यादिकं शसन्तः चरन्ति पृथिव्यां वर्तन्ते । केवलमैहिकामुष्मिकभोगपरा वर्तध्वे अतो विश्वकर्माणं देवं न जानीथेत्यर्थः । ऋसा.

[1]विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः ।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥

ब्रह्माण्डमध्यगतानामुत्पत्तिरुच्यते—अण्डमध्ये प्रथमं विश्वकर्मा देवतिर्यगादिविश्वभेदस्य कर्ता सत्यलोकनिवासी चतुर्मुखो देवः अजनिष्ट उत्पन्नः । आदित् अनन्तरमेव तदपेक्षया द्वितीयो गन्धर्वः अभवत् उत्पन्नः । तत ऊर्ध्वमोषधीनां पिता पालको जनिता उत्पादकः सोमः पूर्वोक्तद्वयापेक्षया तृतीयोऽभवत् । तदेवमपां गर्भं ब्रह्माण्डं परमेश्वरः पुरुत्रा व्यदधात् बहुधा व्यक्तं कृतवान् । तैसा.

---

## ब्रह्मणस्पतिः

गणपतिः, कवीनां कविः, ब्रह्मणां ज्येष्ठराजः, ब्रह्मणां जनिता, ऋतात्मकरथस्याधिष्ठाता, जनानां सुमतिभिन्दाना, पथिकृत्, ब्रह्मद्विषां देवनिन्दकानां अदेवमनसां च निबर्हणं, दृष्टवीर्यं, ऋतप्रजातः, सामपराणां रक्षकः, सूक्तस्य यन्ता

[2]गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

हे ब्रह्मणस्पते ब्रह्मणोऽन्नस्य परिवृढस्य कर्मणो वा पते पालयितः गणानां देवादिगणानां संबन्धिनं गणपतिं स्वीयानां पतिम् । कवीनां क्रान्तदर्शिनां कविम् । उपमश्रवस्तमम् । उपमीयते अनयेत्युपमा । सर्वेषामन्नानामुपमानं श्रवोऽन्नं यस्य स तथोक्तः । अतिशयेनोपमश्रवाः उपमश्रवस्तमः । ज्येष्ठराजं, ज्येष्ठाः प्रशस्यतमाः, तेषां मध्ये राजन्तं ब्रह्मणां मन्त्राणां स्वामिनं त्वां त्वां हवामहे अस्मिन्कर्मण्याह्वयामः । किंच नः अस्माकं स्तुतीः शृण्वन् त्वं ऊतिभिः पालनैर्हेतुभूतैः सादनम् । सीदन्त्यस्मिन्निति सदनं यज्ञगृहं आ सीद उपविश । ऋसा.

[1]देवाश्चित्ते असुर्य प्रचेतसो बृहस्पते यज्ञियं भागमानशुः ।
उस्राइव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि ॥

असुर्य असुराणां हन्तः हे बृहस्पते प्रचेतसः प्रकृष्टज्ञानाः ते त्वदीयाः देवाश्चित् देवा अपि यज्ञियं यज्ञार्हं भागं आनशुः प्राप्नुवन् । यद्वा प्रचेतस इति बृहस्पतेर्विशेषणम् । प्रकृष्टज्ञानवतस्ते तव संबन्धिनो देवा इति योजनीयम् । यद्वा, प्रचेतसः प्रचेतसि त्वयि सति देवा यज्ञियं भागमानशिरे । कर्मविघ्नकारिणामसुराणां रक्षोघ्नमन्त्रैरपाकरणात् । 'न वै ब्रह्मण्वद्रिष्यति' ( ऐब्रा १।१३ ) इति श्रवणात् । ज्योतिषा तेजसा महः मंहनीयः सूर्यः उस्राइव । उस्राः किरणाः । यथा किरणान् जनयति तथा विश्वेषां सर्वेषां ब्रह्मणां मन्त्राणां जनिता जनयितैव असि । ऋसा.

[2]आ विबाध्या परिरापस्तमांसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि ।
बृहस्पते भीमममित्रदम्भनं रक्षोहणं गोत्रभिदं स्वर्विदम् ॥

हे बृहस्पते परिरपः, परितो रपः पापरूपं रक्षः ।

(१) तैसं. ४।६।२।३, कासं. १८।१ (७) ह्यज (चेदज); मैसं. २।१०।३ (२९) ह्यज (चेदज) व्यदधात् (न्यदधुः); शुसं. १७।३२.

(२) ऋसं. २।२३।१, तैसं. २।३।१४।३; कासं. १०।१३ (४४); ऐब्रा. ४।४।१; शाब्रा. ८।५,९।६.

(१) ऋसं. २।२३।२.

(२) ऋसं. २।२३।३; कासं. २६।११ (३५).

यद्वा परिवदतो निन्दकान् तमांसि च विबाध्य तेजसा निराकृत्य ज्योतिष्मन्तं ज्योतिषा तद्वन्तं ऋतस्य यज्ञस्य प्रापक भीम शत्रूणां भयकर अमित्रदम्भन शत्रूणा हिंसकम्। तदेवाह—रक्षोहण रक्षसा हन्तार गोत्रभिद मेघाना भेत्तार स्वर्विद स्वर्गस्य लम्भकं रथ आ तिष्ठसि अधितिष्ठसि। ऋसा.

**[१]सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत्।**
**ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत्ते महित्वनम्॥**

हे बृहस्पते सुनीतिभिः शोभन नीतयः येषु ते सुनीतयः सन्मार्गाः, तैः जन नयसि अपेक्षितफल प्रापयसि। त्रायसे जनमापद्भ्यो रक्षसि च। यः यजमानः तुभ्य हविर्लक्षणमन्नं दाशात् प्रयच्छेत् त अहः पापं पापरूप दारिद्य वा न अश्नवत् न प्राप्नुयात्। ब्रह्मद्विषः ब्राह्मणाना मन्त्राणां वा द्वेष्टुः तपनः तापकः असि। किंच मन्युमीः मन्योः क्रोधस्य परेषा ज्ञानस्य वा हिंसकोऽसि। ते तव तत् तादृग महि महत् प्रभूत महित्वन माहात्म्यमस्ति। ऋसा.

**[२]न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः।**
**विश्वा इदस्माद्ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते॥**

हे ब्रह्मणस्पते सुगोपाः सुष्ठु पालयिता त्व य जनं रक्षसि पालयसि त जन अहः आहन्तव्य दुःख न बाधते। दुरितं तत्कारणं पाप च न बाधते। अरातयः हिंसकास्त जनं कुतश्चन सर्वासु दिक्षु न तितिरुः न हिंसन्ति। तथा द्वयाविनः, मनस्यन्यत्क्रियाया चान्यदित्येवद्द्वय येषामस्ति ते द्वयाविनो वञ्चकाः। तेऽपि तं जन न बाधन्ते। किंच ध्वरसः हिंसिकाः विश्वाः सर्वाः सेनास्तदर्थ वि बाधसे विशेषेण बाधसे एव। ऋसा.

**[३]त्वं नो गोपाः पथिकृद्विचक्षणस्तव व्रताय मतिभिर्जरामहे।**
**बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वती॥**

हे बृहस्पते त्व नः अस्माक गोपाः पालयिता पथिकृत् सन्मार्गकृच्च भवसि। विचक्षणः विशेषेण द्रष्टा सर्वज्ञस्त्वम्। तव व्रताय त्वत्सबन्धिने यज्ञाय मतिभिः स्तोत्रैः जरामहे स्तुमः। यः पुमान् नः अस्मान् अभि अभिलक्ष्य ह्वरः कौटिल्य दधे विदधाति त स्वा स्वीया दुच्छुना दुर्बुद्धिः हरस्वती वेगवती सती मर्मर्तु मोचयतु। ऋसा.

**[१]उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृकः।**
**बृहस्पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधि॥**

उत वा अपि च हे बृहस्पते अरातीवा अभिमुखमागमनवान् सानुकः समुच्छ्रितः। 'सानु समुच्छ्रितम्' (नि. २।२४) इति यास्कः। वृकः धनादीनामादाता यः मर्तः मनुष्यः अनागसः अपराधहीनान् नः अस्मान् मर्चयात् हिंस्यात् त मर्त पथः वैदिकान्मार्गात् अप वर्तय निवर्तय। नः अस्माक अस्यै देववीतये देवाना वीतिः सोमभक्षणं अत्रेति देववीतिर्यज्ञः। अस्यै देववीतये असै यज्ञाय नोऽस्माकं सुग सुष्ठु गन्तव्य मार्ग कृधि कुरु। यज्ञानुष्ठानाय सुमतिं देहीत्यर्थः। ऋसा.

**[२]त्रातारं त्वा तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुम्।**
**बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन्॥**

अवस्पर्तः उपद्रवेभ्यः पारयितः। यद्वा, अवसा रक्षणेनापद्भ्यः पारयितः हे बृहस्पते तनूना अङ्गानां पुत्रादीना वा त्रातारं पालयितार अधिवक्तार अस्मासु पक्षपातेन अधिक वक्तारं अस्मयु हविष्प्रदानस्मान् कामयमानं त्वा त्वां हवामहे अस्मिन्कर्मण्याह्वयामः। किंच देवनिदः देवनिन्दकानसुरान् नि बर्हय विनाशय। दुरेवाः दुष्टगमनाः दुर्बुद्धयः शत्रवः उत्तर उत्कृष्टतर सुम्न सुखं मा उन्नशन् मा व्याप्नुवन्तु। ऋसा.

(१) ऋसं. २।२३।४. (२) ऋसं. २।२३।५.
(३) ऋसं. २।२३।६.

(१) ऋसं. २।२३।७.
(२) ऋसं. २।२३।८.

[1]त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि ।
या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥

हे ब्रह्मणस्पते सुवृधा सुष्ठु वर्धयित्रा त्वया हेतुना वयं स्पार्हा स्पृहणीयानि वसु धनानि मनुष्या मनुष्येभ्यः दातृभ्यः आ ददीमहि गृह्णीमहि । दूरे दूरदेशे याः अरातयः याः च तळितः अन्तिके अरातयः नः अस्मान् अभि सन्ति अभि भवन्ति अनप्नसः कर्महीनान् ताः अरातीस्तान् शत्रून् जम्भय नाशय । अत्र निरुक्तम्—'त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि याश्च नो दूरे तळितो याश्चान्तिकेऽरातयोऽदानकर्माणो वाऽदानप्रज्ञा वा जम्भय ता अनप्नसोऽप्न इति रूपनाम' (नि. ३।११) इति । ऋसा.

[2]अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति ।
बृहस्पते मा प्रणक्तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतः ॥

यः पुमान् अदेवेन देवानमन्यमानेन । यद्वा आसुरवृत्तिविशिष्टेन मनसा अस्मान् रिषण्यति हिनस्ति । यश्च उग्रः पापचित्तः मन्यमानः आत्मानं बहु मन्यमानः पुमान् शासां उक्थस्य शंसितारम् । यद्वा अस्माकमाशंसाम् । शासां शासितॄणामुग्रः इति वा योजनीयम् । अस्मान् जिघांसति हन्तुमिच्छति । हे बृहस्पते तस्य वधः । वध्यतेऽनेनेति वधः आयुधम् । नः अस्मान् मा प्रणक् । पृची संपर्के । किंच दुरेवस्य दुष्टगमनस्य शर्धतः बलवतः । यद्वा दुष्टाभिसंधेर्वेगं कुर्वतः तस्य मन्युं क्रोधं ज्ञानं वा नि कर्म त्वत्प्रसादान्निराकुर्मश्च । ऋसा.

[3]तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यम् ।
आविस्तत्कृष्व यदसत्त उक्थ्यं बृहस्पते वि परिरापो अर्दय ॥

हे बृहस्पते तेजिष्ठया अतिशयेन तिग्मया तपनी तापकारिण्या हेत्या रक्षसः राक्षसान् तप तापय । ये राक्षसाः दृष्टवीर्यं युद्धेषु दृष्टपराक्रमं त्वां निदे निन्दाया विषयं दधिरे कृतवन्तः तान् तापयेति समन्वयः । ते तव उक्थ्यं सर्वैः प्रशंसनीयं यत् वीर्यं असत् पूर्वमासीत् तत् अधुना आविः कृष्व प्रकटीकुरु । तेन च वीर्येण परिरापः परिवदतः निन्दकानसुरान् वि अर्दय विशेषेण बाधस्व । ऋसा.

[1]बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥

ऋतप्रजात सत्येनोत्पन्न हे बृहस्पते अर्यः श्रेष्ठो ब्राह्मणः सर्वान् कामानतीत्य यत् ब्रह्मवर्चसं तेजः अर्हात् पूजयेत् । जनेषु ब्राह्मणेषु द्युमत् दीप्तियुक्तं क्रतुमत् ज्ञानोपेतं यद्ब्रह्मवर्चसं विभाति विशेषेण दीप्यते । यत् च शवसा बलेन स्वाश्रयं जनं दीदयत् दीपयति । चित्रं चायनीयं तत् ब्रह्मवर्चसरूपं द्रविणं अस्मासु धेहि निधेहि । यद्वा । अर्यः उदारोऽपि त्वया दत्तं धनं अतीव अर्हात् श्रद्दधीत । यच्च त्वद्दत्तं धनं जनेषु तव स्तोत्रं कुर्वाणेषु दीप्तियुक्तं कर्मसाधनं च विभाति यच्च धनं शवसा अन्नादिसमृद्ध्या दीदयत् स्वाश्रयं दीपयति तादृशं धनमस्मासु धेहि । तथा च ब्राह्मणम्—'बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात्तेजस्कामो ब्रह्मवर्चसकामोऽतीव वान्यान्ब्रह्मवर्चसमर्हति द्युमदिति द्युमदिव वै ब्रह्मवर्चसं विभातीति वीव वै ब्रह्मवर्चसं भाति यद्दीदयच्छवस ऋतप्रजातेति दीदायेव वै ब्रह्मवर्चसं तदस्मासु द्रविणं धेहि चित्रमिति चित्रमिव वै ब्रह्मवर्चसं ब्रह्मवर्चसी ब्रह्मयशसी भवति' (ऐब्रा. १७।५।६,७) इति । ऋसा.

[2]मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।

(१) ऋसं. २।२३।९; नि. ३।११.
(२) ऋसं. २।२३।१२; कासं. ४।१६ (१२३).
(३) ऋसं. २।२३।१४.

(१) ऋसं. २।२३।१५; तैसं. १।८।२२।२; कासं. ४।१६ (१२५), ४०।११ (८२); मैसं. ४।१४।४ (५०); शुसं. २६।३; ऐब्रा. १७।५।६.
(२) ऋसं. २।२३।१६.

प्रतिचक्ष्य पूर्वोक्तप्रकारेण दृष्ट्वा अतः अस्मात् स्थानात् पुनः आजिगमिषवः महस्पथः महतो मार्गान्प्रति आ तस्थुः अवतस्थिरे। अवतिष्ठमानाश्च ते बाहुभ्यां हस्ताभ्या धमित मथनोत्पादितं प्रज्वालितं अग्निं अश्मनि पणीना निवासभूते शिलोच्चये जहुर्हि दग्धु त्यक्तवन्तः खलु। अरणः अरमयिता दाहेन दुःखकारी सः अग्निः पूर्व तत्र नकिः अस्ति न विद्यते। अविद्यमानमग्निं स्वसामर्थ्यात् उत्पाद्य तत्र प्रचिक्षिपुरित्यर्थः। ऋसा.

**[1]ऋतज्येन क्षिप्रेण ब्रह्मणस्पतिर्यत्र वष्टि प्र तदश्नोति धन्वना।**
**तस्य साध्वीरिषवो याभिरस्यति नृचक्षसो दृशये कर्णयोनयः॥**

ऋतं सत्यमेव ज्या यस्य तेन क्षिप्रेण इषूणा क्षेपकेण धन्वना धरणभूतेन धनुषा ब्रह्मणस्पतिः ब्रह्मणो मन्त्रस्य पालयिता देवः यत्र यस्मिन्विषये वष्टि कामयते तत् प्र अश्नोति प्रकर्षेण व्याप्नोति। तस्य धनुषः साध्वीः साधिकास्ताः इषवः भवन्ति याभिः इषुभिः ब्रह्मणस्पतिः अस्यति राक्षसादीन् क्षिपति। कीदृश्यस्ताः। नृचक्षसः नॄन् पश्यतः। उपलक्षणमेतत्। सर्वज्ञस्य ब्रह्मणस्पतेः दृशये दर्शनाय ज्ञानाय जाताः कर्णयोनयः श्रोत्रेन्द्रियेण ग्राह्याः मन्त्रभूताः आकर्णकृष्टाः वा बाणाः। ब्रह्मणस्पतिर्मन्त्रैरेव सर्व साधयतीति भावः। ऋसा.

**[2]स संनयः स विनयः पुरोहितः स सुष्टुतः स युधि ब्रह्मणस्पतिः।**
**चाक्ष्मो यद्वाज भरते मती धनादित्सूर्यस्तपति तप्यतुर्वृथा॥**

पुरोहितः देवैः पुरतोऽत्र स्थापितः स ब्रह्मणस्पतिः संनयः विश्लिष्टानां मन्त्रैः संगमयिता भवति। विनयः संगताना विविधं नेता पृथक्कर्ताऽपि सः एव। तथा स सुष्टुतः शोभन स्तोतृभिः स्तुतश्च भवति। तथा युधि संग्रामे सः स्तोतॄणामनुग्रहाय प्रादुर्भवतीति शेषः। यत् यदा चाक्ष्मः। सर्वस्य द्रष्टा सर्वसहो वा ब्रह्मणस्पतिः वाज अन्न मती मननीयं प्रशस्तं धना धन च स्तोतॄणामर्थाय भरते बिभर्ति वृष्टिद्वारा पोषयति। आदित् अनन्तरमेव तप्यतुः तापकः सूर्यः वृथा। अनायासवचनमेतत्। अनायासेन तपति दीप्यते। ब्रह्मणस्पतिना दत्तैरन्नैर्धनैश्च यज्ञस्य सिद्धत्वात् स्वय केवल हवींषि भुञ्जान एव वर्तते इत्यर्थः। ऋसा.

**[1]विभु प्रभु प्रथमं मेहनावतो बृहस्पतेः सुविदत्राणि राध्या।**
**इमा सातानि वेन्यस्य वाजिनो येन जना उभये भुञ्जते विशः॥**

विभु विभूनि व्याप्तानि प्रभु प्रभूणि प्रौढानि प्रथम प्रथमानि मुख्यानि एवभूतानि मेहनावतः वर्षणवतो वृष्टिप्रदस्य बृहस्पतेः बृहतो मन्त्रस्य पालयितुः सबन्धीनि सुविदत्राणि सुष्ठु लब्धव्यानि। 'सुविदत्र धन भवति' (नि.७।९) इति यास्कः। राध्या राध्यानि सम्यक् साधनीयानि प्राप्तव्यानीति यावत्। इमा सातानि इमानि धनानि वेन्यस्य कमनीयस्य वाजिनः अन्नवतो ब्रह्मणस्पतेः ब्रह्मणस्पतिना दत्तानि। येन धनेन उभये उभयविधाः जनाः स्तोतारो यजमानाश्च देवाः मनुष्याश्च वा विशः निविष्टाः सन्तः भुञ्जते भोगान् लभन्ते। तत्सर्व ब्रह्मणस्पतिना दत्तमित्यर्थः। ऋसा.

**[2]योऽवरे वृजने विश्वथा विभुर्महामु रण्वः शवसा ववक्षिथ।**
**स देवो देवान्प्रति पप्रथे पृथु विश्वेदु ता परिभूर्ब्रह्मणस्पतिः॥**

विश्वथा सर्वप्रकारेण विभुः व्याप्तः रण्वः रमयिता स्तोतव्यो वा यः ब्रह्मणस्पतिः अवरे निकृष्टे वृजने वर्जनहेतुभूते बले वर्तमानम्। दुर्बलमिति यावत्। महामु महान्त च उभयविध स्तोतार शवसा आत्मीयेन बलेन ववक्षिथ वोढुमिच्छति। सर्वदा वहतीति यावत्। सः देवः दानादिगुणयुक्तः देवान्प्रति सर्वेषां देवानां प्रतिनिधिः सन् पृथु पप्रथे अत्यन्तं प्रथते। यशसा विस्तीर्णो भवतीति यावत्। यस्मादेवं तस्मात् विश्वेदु सर्वाण्येव ता तानि सर्वाणि भूतजातानि परिभूः परिभवन् अभिभवन् वर्तते इति शेषः। ऋसा.

(१) ऋसं. २।२४।८.
(२) ऋसं. २।२४।९.

(१) ऋसं. २।२४।१०.
(२) ऋसं. २।२४।११.

भक्तसखः

[1]तस्मा इद्विश्वे धुनयन्त सिन्धवोऽच्छिद्रा शर्म दधिरे पुरूणि।
देवानां सुम्ने सुभगः स एधते युंयं युजं कृणुते ब्रह्मणस्पतिः॥

तस्मा इत् तस्मै एव यजमानाय विश्वे सिन्धवः सर्वाः स्यन्दनशीला नद्यः धुनयन्त चलयन्ति। एतदभीष्टफलसिद्ध्यर्थ प्रवहन्तीत्यर्थः। तथा अच्छिद्रा अच्छिद्राणि छिद्ररहितानि सततानि पुरूणि बहूनि शर्म शर्माणि सुखानि दधिरे तस्मा एव धार्यन्ते। यद्वा शर्मेति गृहनाम। छिद्ररहितानि बहूनि सदनानि धार्यन्ते। सुभगः शोभनधनः देवाना सुम्ने देवैः प्रत्ते सुखे वर्तमानः सन् एधते वर्धते। यय यजमानं ब्रह्मणस्पतिः स्तोत्रहविषोः स्वीकरणेन युजं सखाय कृणुते कुरुते सः समान एव भवतीत्यर्थः। ऋसा.

ऋजुरक्षकः, देवपिता

[2]ऋजुरिच्छंसो वनवद्वनुष्यतो देवयन्निददेवयन्तमभ्यसत्।
सुप्रावीरिद्वनवत्पृत्सु दुष्टरं यज्वेदयज्योर्वि भजाति भोजनम्॥

ऋजुरित् आर्जवयुक्त एव। यद्वा ऋञ्जतिः प्रसाधनकर्मा। स्तोत्राणा प्रसाधक एव शसः ब्रह्मणस्पतेः स्तोता वनुष्यतः हिंसतः शत्रून् वनवत् वनुयात् हिंस्यात्। तथा देवयन्नित् देवं दानादिगुणयुक्तं ब्रह्मणस्पतिमात्मन इच्छन्नेव अदेवयन्त तद्विपरीत पुरुप अभ्यसत् अभिभवेत्। तथा सुप्रावीरित् सुष्ठु प्रकर्षेण ब्रह्मणस्पतेस्तर्पयितैव पृत्सु पृतनासु सग्रामेषु दुस्तरं तरीतुमशक्य वनवत् हिंस्यात्। तथा यज्वेत् ब्रह्मणस्पति हविषा इष्टवानेव अयज्योः अयज्वनः भोजनं भोगसाधनं वि भजाति विशेषेण भजेत इत्यर्थः। ऋसा.

[3]स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः।
देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम्॥

यः यजमानः श्रद्धामनाः श्रद्धा मनसि यस्य तादृशः सन् देवानां पितर पालयितार ब्रह्मणस्पतिं हविषा चरुपुरोडाशादिना आविवासति परिचरति। स इत् स एव यजमानः जनेन जातेन सर्वेण लोकेन वाज अन्न भरते बिभर्ति संभरति वा। सः एव विशा प्रजया आत्मीयेन बन्धुजनेन वाजं भरते। स एव पुत्रैः आत्मीयैरपत्यैः वाज भरते। तथा नृभिः नेतृभिरन्यैः परिचारकैः धना धनानि भरते बिभर्ति संपादयति वा। ब्रह्मणस्पतिमिष्टवतो यजमानस्य सर्वतो जना अन्नधनयोः साधका भवन्तीति यावत्। ऋसा.

---

## प्रजापतिः

द्यावापृथिव्योः कुशलो जनकः धीमान् प्रेरकश्च

[1]स इत्स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान।
उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत्॥

स इत् स एव स्वपाः शोभनकर्मा सन् भुवनेषु आस आस्ते। य इमे द्यावापृथिवी द्यावापृथिव्यौ जजान उत्पादितवान्। यश्च प्रजापतिः उर्वी उर्व्यौ विस्तीर्णे गभीरे अविचले सुमेके शोभनरूपे अवंशे उत्पत्तिरहिते अनाधारे वा अन्तरिक्षे धीरः धीमान् शच्या कुशलकर्मणा समैरत् सम्यक् प्रेरितवान्। स एव स्वपा इति। ऋसा.

द्यावापृथिव्योर्धारकः, सूर्यवाताग्नीना कर्मकर्ता, मित्रावरुणयोः स्थाने स्थितः

[2]किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।
संतस्थाने अजरे इतऊती अहानि पूर्वीरुषसो जरन्त॥

यतः यस्मात् वृक्षात् द्यावापृथिवी द्यावापृथिव्यौ

---

(१) ऋसं. २।२५।५.

(२) ऋसं. २।२६।१.

(३) ऋसं. २।२६।३, तैसं. २।३।१४।३; मैसं. ४।१४।१० (१३८); तैब्रा. २।८।५।३.

(१) ऋसं. ४।५६।३; मैसं. ४।१४।७ (८८), तैब्रा. २।८।४।७.

(२) ऋसं. १०।३१।७.

निष्टतक्षुः देवाः निःशेषेण कृतवन्तः सः तादृशः वृक्षः क उ आस कीदृक् वा बभूव । तदुत्पादकं वनं अरण्यं किं स्वित् । संतस्थाने सम्यक्तिष्ठन्त्यौ अजरे जरावर्जिते इतऊती इत एतेभ्यो देवेभ्यो रक्षणं ययोस्ते । किंच अहानि सर्वाणि दिनानि पूर्वीः बह्वीः उषसश्च देवा निष्टतक्षुः । एवभूतान् देवान् जरन्त स्तोतारः स्तुवन्ति । ऋसा.

[1]नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति ।
त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहन्ति ॥

द्यावापृथिव्योर्निर्माणरूपं एतावत् देवजातं सामर्थ्येन युक्तमिति न, अपि तु एना एतेभ्यो देवेभ्यः परः उत्कृष्टः अन्यत् अन्यो हिरण्यगर्भः अस्ति । उक्षा सेक्ता । प्रजाना स्रष्टेत्यर्थः । हिरण्यगर्भः परमसूक्ष्मो वायुरूपो लिङ्गात्मा अपः प्रविश्य द्यावापृथिवी द्यावापृथिव्यौ बिभर्ति धारयति । किंच स्वधावान् बलवानन्नवान् वा स हिरण्यगर्भः पवित्रं पवित्रमयं त्वचं आत्मीयं शरीरं दीप्तं मन्त्रं वा कृणुत करोति । कदेति उच्यते । यत् यदा ईं इमां त्वचं हरितः अश्वाः सूर्यं न वहन्ति न प्रापयन्ति तदेति । सृष्टेः प्रागित्यर्थः । ऋसा.

[2]स्तेगो न क्षामत्येति पृथ्वीं मिहं न वातो वि ह वाति भूम ।
मित्रो यत्र वरुणो अज्यमानोऽग्निर्वने न व्यसृष्ट शोकम् ॥

स्तेगः रश्मिसंघाती आदित्यः पृथ्वीं विस्तीर्णां क्षां भूमिं तेजसा नात्येति नातिगच्छति । मर्यादया तिष्ठतीत्येवमादित्यः स्तूयते । वातः वायुरपि खलु भूम भूमिं मिहं वृष्टिं न वि वाति समर्थोऽपि सन् विविधं न गमयति । भूमिं प्रति सावशेषमेव वर्षयतीति वातः स्तूयते । यत्र यस्मिन् प्रजापतौ मित्रः देवः अज्यमानः व्यज्यमानः व्यक्तीभवन् उत्पद्यमान इत्यर्थः । शोकं स्वीयां दीप्तिं व्यसृष्ट विसृजति सर्वतो विक्षिपति, तथा वरुणश्च व्यक्तीभवन् स्वदीप्तिं विक्षिपति । तत्र दृष्टान्तः । अग्निः देवः वने न यथा वृक्षसंघाते स्वदीप्तिं सर्वतो विसृजति तद्वत् । तादृशं प्रजापतिं स्तौमीति शेषः । ऋसा.

सृष्टेः पूर्वभावी, हविषा यजनीयो जिज्ञास्यो देवः, हिरण्यगर्भः, भूतपतिः, द्युपृथिव्याकाशस्वर्गाणामाधारः,
आत्मदो बलदो देवाना शास्ता सर्वेषामुपास्यः,
अमृतमृत्युच्छायः, जगतो राजा, ईशानः, हिमवन्नदीसमुद्रपतिः, दिग्बाहुः, रक्षकः, विश्वगर्भधारिणीभ्योऽग्निजननीभ्योऽद्भ्यः समुद्भूतः, देवानामसुः, देवानामेकेश्वरः,
अपां द्रष्टा, द्युपृथिव्यपां जनकः
सत्यधर्मा एक एव विश्वव्यापकः प्रजापतिः

[1]हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

हिरण्यगर्भः हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिः हिरण्यगर्भः । तथा च तैत्तिरीयकम्– ‘ प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय ’ ( तैसं. ५।५।१।२ ) इति । यद्वा हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते । अग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत । मायाध्यक्षात्सिसृक्षोः परमात्मनः सकाशात् समजायत । यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपाधिभूतानां वियदादीना सूक्ष्मभूतानां ब्रह्मण उत्पत्तेस्तदुपाहितोऽप्युत्पन्न इत्युच्यते । स च जातः जातमात्र एव एकः अद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिः ईश्वरः आसीत् । न केवलं पतिरासीदेव अपि तर्हि स हिरण्यगर्भः पृथिवीं विस्तीर्णां

(१) ऋसं. १०।३१।८.

(२) ऋसं. १०।३१।९; असं. १८।१।३९ ( स्तेगो न क्षामत्येषि पृथिवीं मही नो वाता इह वान्तु भूमौ । मित्रो नो अत्र वरुणो युज्यमानो अग्निर्वने न व्यसृष्ट शोकम् ॥ ).

(१) ऋसं. १०।१२१।१, असं. ४।२।७ द्यामुतेमां ( उत द्यां ), तैसं. ४।१।८।३; कासं. १६।१५ ( १८४ ), ४०।१(१); मैसं. २।७।१५ (१९८), २।१३।२३ (११० ), ३।१२।१६ ( १८ ), शुसं. १३।४, २३।१, २५।१०; ताब्रा. ९।९।१२; शब्रा. ७।४।१।१९, १३।५।२।२३; नि. १०।२३।१.

द्यां दिवं उत अपि च इमा अस्माभिर्दृश्यमानां पुरो वर्तिनीमिमा भूमिम् । यद्वा पृथिवीत्यन्तरिक्षनाम। अन्तरिक्ष दिवं भूमिं च दाधार धारयति । कस्मै । अत्र किंशब्दोऽनिर्ज्ञातस्वरूपत्वात्प्रजापतौ वर्तते । यद्वा । सृष्ट्यर्थं कामयते इति कः । यद्वा । कं सुख तद्रूपत्वात्क इत्युच्यते । अथवेन्द्रेण पृष्टः प्रजापतिर्मदीयं महत्त्व तुभ्य प्रदायाहं कः कीदृशः स्यामित्युक्तवान् । स इन्द्रः प्रत्यूचे यदीदं ब्रवीष्यहं कः स्यामिति तदेव त्व भवेति । अतः कारणात्क इति प्रजापतिराख्यायते । ' इन्द्रो वै वृत्र हत्वा सर्वा विजितीर्विजित्याब्रवीत् ' (ऐब्रा.१२।१०।१) इत्यादिकं ब्राह्मणमत्रानुसधेयम् । कं प्रजापतिं देवाय देव दानादिगुणयुक्त हविषा प्राजापत्यस्य पशोर्वपारूपेणैक-कपालात्मकेन पुरोडाशेन वा विधेम वयमृत्विजः परि-चरेम ।

ऋसा.

यं आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥

यः प्रजापतिः आत्मदाः आत्मना दाता । आत्मानो हि सर्वे तस्मात्परमात्मन उत्पद्यन्ते । यथाग्नेः सकाशाद्वि-स्फुलिङ्गाः जायन्ते तद्वत् । यद्वा आत्मना शोधयिता । बलदाः बलस्य च दाता शोधयिता वा । यस्य च प्रशिष प्रकृष्ट शासनमाज्ञां विश्वे सर्वे प्राणिनः उपासते प्रार्थयन्ते सेवन्ते वा । तथा देवाः अपि यस्य प्रशासन-मुपासते । अपि च अमृत अमृतत्वम् । भावप्रधानो निर्देशः । यद्वा अमृत, मरण नास्त्यस्मिन्निन्त्यमृत सुधा । तदपि यस्य प्रजापतेः छाया छायेव वर्ति भवति । मृत्यु-र्यमश्च प्राणापहारी छायेव भवति । तस्मै कस्मै देवाये-त्यादि समानं पूर्वेण, हविषा पुरोडाशात्मनेति तु विशेपः।

ऋसा.

(१) ऋसं १०।१२१।२; असं. ४।२।१ पू, ४।२।२ उत्त ; तैसं. ४।१।८।४, ७।५।१७।१, कासं. ४०।१ (३) आत्मदा ( ओजोदा ); मैसं. २।१३।२३ (११२) कासं-वत् ; शुसं. २५।१३.

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥

यः हिरण्यगर्भः प्राणतः प्रश्वसतः निमिषतः अक्षिपक्ष्म-चलन कुर्वतः जगतः जङ्गमस्य प्राणिजातस्य महित्वा महत्त्वेन माहात्म्येन एक इत् अद्वितीय एव सन् राजा बभूव ईश्वरो भवति । अस्य परिदृश्यमानस्य द्विपदः पादद्वययुक्तस्य मनुष्यादेः चतुष्पदः गवाश्वादेश्च यः प्रजा-पतिः ईशे ईष्टे । द्वौ पादौ यस्य स द्विपात् । ईदृशो यः प्रजापतिस्तस्मै, कस्मै इत्यादि सुबोध, हविषा हृदया-द्यात्मनेत्ययमत्र विशेपः । ऋसा.

येस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥

हिमाः अस्मिन्सन्तीति हिमवान् । तेन बहुवचनान्तेन सर्वे पर्वताः लक्ष्यन्ते । यथा छत्रिणो गच्छन्तीति । हिम-वन्तः हिमवदुपलक्षिताः इमे दृश्यमानाः सर्वे पर्वताः यस्य प्रजापतेः महित्वा महत्त्वं माहात्म्यमैश्वर्यमित्याहुः । तेन सृष्टत्वात्तद्रूपेणावस्थानाद्वा । तथा रसया । रसो जल तद्वती रसा नदी । जातावेकवचनम् । रसाभि-र्नदीभिः सह समुद्रम् । पूर्ववदेकवचनम् । सर्वान् समु-द्रान् यस्य महाभाग्यमित्याहुः कथयन्ति सृष्ट्यभिज्ञाः । यस्य च इमाः प्रदिशः प्राच्यारम्भाः आग्नेयाद्याः कोण-

(१) ऋसं. १०।१२१।३; असं ४।२।२ त्वैक इद्राजा ( त्वैको राजा ) पू., ४।२।१ य ईशे .. ष्पदः ( योऽस्येशे द्विपदो यश्चतुष्पद. ) उत्त., तैसं. ४।१।८।४, ७।५।१६।१; कासं. ४०।१ ( २ ) षतो महित्वैक इद्राजा ( षतश्च राजा पतिर्विश्वस्य ) य ईशे ( ईशे यो ), मैसं. २।१३।२३ ( १११ ) कासंवत्; शुसं. २३।३, शब्रा. १३।५।३।७.

(२) ऋसं. १०।१२१।४, असं. ४।२।५ पूर्वार्धे ( यस्य विश्वे हिमवन्तो महित्वा समुद्रे यस्य रसामिदाहुः ) यस्येमाः ( इमाश्च ), तैसं. ४।१।८।४ सहाहु. ( सह आहु ); कासं. ४०।१ ( ६ ) ( यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहु । दिशो यस्य प्रदिश. पञ्च देवीः कस्मै० ॥ ); मैसं. २।१३।२३ ( ११३ ) कासंवत् ; शुसं. २५।१२.

दिशः ईशितव्याः । तथा बाहू । वचनव्यत्ययः । बाहवो भुजाः । भुजवत्प्राधान्ययुक्ताः प्रदिशश्च यस्य स्वभूताः । तस्मै कस्मै इत्यादि समानं पूर्वेण ।

ऋसा.

[1]येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥

येन प्रजापतिना द्यौः अन्तरिक्षं उग्रा उद्गूर्णविशेषा गहनरूपा वा । पृथिवी भूमिः च दृळ्हा येन स्थिरीकृता । स्वः स्वर्गश्च येन स्तभितं स्तब्ध कृतम् । यथाधो न पतति तथोपर्यवस्थापितमित्यर्थः । तथा नाकः आदित्यश्च येनान्तरिक्षे स्तभितः । यश्चान्तरिक्षे रजसः उदकस्य विमानः निर्माता । तस्मै कस्मै इत्यादि गतम् ।

ऋसा.

[2]यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥

क्रन्दितवान् रोदितवाननयोः प्रजापतिरिति क्रन्दसी द्यावापृथिव्यौ । श्रूयते हि– ' यदरोदीत्तदनयो रोदस्त्वम् ' (तैब्रा.२।२।९।४) इति । ते अवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं तस्तभाने प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ य प्रजापतिं मनसा बुद्ध्या अभ्यैक्षेता आवयोर्महत्त्वमनेनेत्यभ्यपश्येताम् । कीदृश्यौ द्यावापृथिव्यौ । रेजमाने राजमाने दीप्यमाने । यत्राधि यस्मिन्नाधारभूते प्रजापतौ सूरः सूर्यः उदितः उदयं प्राप्तः सन् विभाति प्रकाशते । तस्मै कस्मै इत्यादि सुज्ञानम् । ऋसा.

[1]आपो ह यद्बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥

बृहतीः बृहत्यो महत्यः । अग्निं, उपलक्षणमेतत्, अग्न्युपलक्षित सर्वं वियदादिभूतजातं जनयन्तीः जनयन्त्यः तदर्थं गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधानाः धारयन्त्यः आपो ह आप एव विश्वमायन् सर्वं जगत् व्याप्नुवन् यत् यस्मात्, ततः तस्माद्धेतोः देवाना देवादीना सर्वेषा प्राणिनां असुः प्राणभूतः एकः प्रजापतिः समवर्तत समजायत । यद्वा यत् यं गर्भं दधाना आपो विश्वात्मनाऽवस्थिताः ततो गर्भभूतात्प्रजापतेर्देवादीना प्राणात्मको वायुरजायत । अथवा । यत् । लिङ्गवचनयोर्व्यत्ययः । उक्तलक्षणा या आपो विश्वमावृत्य स्थिताः ततस्ताभ्योऽद्भ्यः सकाशादेकोऽद्वितीयोऽसुः प्राणात्मकः प्रजापतिः समवर्तत निश्चक्राम । तस्मै कस्मै इत्यादि गतम् । ऋसा.

[2]यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥

यज्ञ यज्ञोपलक्षितं विकारजातं जनयन्तीः उत्पादयन्तीः तदर्थं दक्षं प्रपञ्चात्मना वर्धिष्णु प्रजापतिमात्मनि

(१) ऋसं. १०।१२१।५; असं. ४।२।४ (यस्य द्यौरुर्वी पृथिवी च मही यस्याद उर्वन्तरिक्षम् । यस्यासौ सूरो विततो महित्वा कस्मै०॥ ), तैसं. ४।१।८।५ दृळ्हा येन स्वः (दृढे येन सुव.); कासं. ४०।१ (४) नाकः (नाकम्) रिक्षे रजसो विमानः ( रिक्षं विममे वरीयः ); मैसं. २।१३।२३ (११४) उत्तरार्धं कासंवत्; शुसं. ३२।६ येन स्वः (येन स्व ).

(२) ऋसं. १०।१२१।६; असं. ४।२।३ ( यं क्रन्दसी अवतश्चस्कभाने भियसाने रोदसी अह्वयेथाम् । यस्यासौ पन्था रजसो विमान. कस्मै० ॥ ), तैसं. ४।१।८।५ उदितो विभाति ( उदितौ व्येति ); कासं. ४०।१ (५) (य इमे द्यावापृथिवी तस्तभाने अधारयद् रोदसी रेजमाने । यस्मिन्नधि वितत सूर एति कस्मै० ॥ ), मैसं. २।१३।२३ (११५) सूर ( सूरा ) शेषं कासंवत्; शुसं. ३२।७.

(१) ऋसं. १०।१२१।७; असं. ४।२।६ (आपो अग्रे विश्वमावन् गर्भं दधाना अमृता ऋतज्ञा. ) पू.; तैसं. ४।१।८।५ यद्...गर्भं (यन्महतीर्विश्वमायन् दक्षं) समवर्ते (निरवर्त ); कासं. ४०।१ (७) बृहती (महती) समवर्ते (निरवर्त ); मैसं. २।१३।२३ (११६) (एकः० ) शेषं कासंवत्; शुसं. २७।२५.

(२) ऋसं. १०।१२१।८; असं. ४।२।६ यो ...आसीत् (यासु देवीष्वधि देव आसीत् ); तैसं. ४।१।८।६; शुसं. २७।२६.

दधानाः धारयित्रीः। ईदृशीः आपः। व्यत्ययेन प्रथमा। अपः प्रलयकालीनाः महिना महिम्ना स्वमाहात्म्येन यश्चित् यश्च प्रजापतिः पर्यपश्यत् परितो दृष्टवान् यश्च देवेष्वधि देवेषु मध्ये देवः तेषामपीश्वरः सन् एकः अद्वितीयः आसीत् भवति। तस्मै कस्मै इत्यादि गतम्। ऋसा.

**[१]मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान।**
**यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम॥**

सः प्रजापतिः नः अस्मान् मा हिंसीत् मा बाधताम्। यः पृथिव्याः भूमेः जनिता जनयिता स्रष्टा। यो वा यश्च सत्यधर्मा सत्यमवितथ धर्म जगतो धारणं यस्य स तादृशः प्रजापतिः दिव अन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान जनयामास। यश्च बृहतीः महतीः चन्द्राः आल्हादिनीः अपः उदकानि जजान जनयामास। तस्मै कस्मै इत्यादि गतम्। ऋसा.

**[२]प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥**

हे प्रजापते त्वत् त्वत्तोऽन्यः कश्चित् एतानि इदानी वर्तमानानि विश्वा विश्वानि सर्वाणि जातानि प्रथम-विकारभाञ्जि ता तानि सर्वाणि भूतजातानि न परि बभूव न परिगृह्णाति न व्याप्नोति। त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषीति भावः। परिपूर्वो भवतिः परिग्रहार्थः। वयं च यत्कामाः यत्फलं कामयमानास्ते तुभ्यं जुहुमः हवींषि प्रयच्छामः तत्फल नः अस्माकमस्तु भवतु। तथा वय च रयीणां धनानां पतयः ईश्वराः स्याम भवेम। ऋसा.

प्रथमोद्भूतं ब्रह्म, देवाना जन्मज्ञ., बन्धु, ब्रह्मणा त्र्यथाख्यब्रह्मोद्धर्ता, द्यावापृथि-व्योराधार.

**[१]ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः।**
**स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः॥**

'सत्यं ज्ञानमनन्तं ब्रह्म' (तैउ. २।१) इति त्र्यन्तप्रसिद्धं सच्चित्सुखात्मकमपरिच्छिन्नं सर्वजगत्कारणं यत्परं ब्रह्म तत् पुरस्तात् पूर्वस्मिन्काले सृष्ट्यादौ प्रथमं प्रथमकार्यं हिरण्यगर्भरूपं सूर्यात्मक जज्ञानं जातं उत्पन्नम्। उक्त हि–'स वै शरीरी प्रथमः स वै पुरुष उच्यते' इति। यद्वा, उक्तलक्षण सूर्यात्मकं पर ब्रह्म प्रत्यह पुरस्तात् पूर्वस्या दिशि प्रथम जज्ञानं पूर्वमाविर्भूतं सत्पश्चात् स्वतेजसा कृत्स्न जगत् व्याप्नोतीत्यर्थः। अथ वा प्रथम मुख्य सर्वतेजसां प्रधानभूतम्। तच्च पूर्वस्या दिशि प्रादुर्भूत हैरण्यगर्भ सूर्यात्मकं परमं तेजो वेनः कान्तः मध्यमस्थानः प्रकाशप्रवर्षणादिहेतुर्देवः। तत्स्वरूप 'वेनस्तत्पश्यत्' (असं. २।१।१) इत्यत्र विस्तरेणोक्तम्। स च दीप्यमानः परब्रह्मात्मको वेनः सीमतः सीमभ्यः लोकमर्यादाभ्यो दिक्प्रान्तदेशेभ्यः आरभ्य सुरुचः शोभनाः दीप्तीः स्वकीयाः सुष्ठु रोचमानान् लोकान्वा वि आवः विवृणोति विशेषेण आवृणोति।

(१) ऋसं. १०।१२१।८; तैसं. ४।२।७।१; कासं. १६।१४ (१७०) यो वा दिवं (यो दिवं) जजान (व्यानट्) बृहतीर्ज (प्रथमो ज), मैसं. २।७।१४ (१८४) कासंवत्; शुसं. १२।१०२ मा नो (मा मा) जजान (व्यानट्) बृहतीर्ज (प्रथमो ज); शब्रा. ७।३।१।२०.

(२) ऋसं. १०।१२१।१०; असं. ७।८६।३ जातानि परि ता बभूव (रूपाणि परिभूर्जजान), तैसं. १।८।१४।२, ३।२।५।६; कासं. १५।८ (२७,२८) न त्वदेतान्यन्यो (नहि त्वदन्य एता) अस्तु+ (असा अमुष्य पुत्रोऽमुष्यासौ पुत्र॰); मैसं. २।६।१२ (४१–४३) यत्कामास्ते (यस्मै कं) अस्तु+ (असा अमुष्य पुत्रोऽमुष्यासौ पुत्र॰), शुसं. २३।६५; तैब्रा. १।७।८।७, २।८।१।२, ३।५।७।१; शब्रा. ५।४।२।९, १३।५।२।२३, १४।९।३।३, षब्रा. १।६।१९, नि. १०।४३।१.

(१) असं ४।१।१, ५।६।१, सासं. १।३।९; तैसं. ४।२।८।२ बुध्न्या (बुध्निया), कासं. १६।१५ (१८३), ३८।१४ (१५७), मैसं २।७।१५ (१९७), ३।२।६ (८); शुसं. १३।३; ऐब्रा. ४।२।१; शाब्रा. ८।४; तैब्रा. २।८।८। ८, ३।१२।१।१ तैसंवत्; शब्रा. ७।४।१।१४, १४।१।३।३; तैआ. १।१३।३; नाउ. १।१० तैसंवत्.

प्रभामण्डलेन अन्धतमसं निराकृत्य सर्वं जगच्छादयतीत्यर्थः। न केवल पार्थिवानेव लोकानावृणोति, आन्तरिक्षानपीत्याह—स इति। स च सूर्यात्मको वेनः बुध्न्याः बुध्न अन्तरिक्ष, तत्र भवा बुध्न्याः। अस्य कारणभूतस्य ब्रह्मणस्तेजसा उपमाः उपमीयमानाः परिच्छिद्यमानाः विष्ठाः विविधमवस्थिताः। ईदृशानान्तरिक्षानपि लोकान् व्यावरिति सबन्धः। यद्वा, अस्य प्रपञ्चस्य विष्ठाः विविधाः अवस्थितीः वियदादिभूतभौतिकात्मिकाः व्यावृणोति। किं बहुना, सतश्च विद्यमानस्य अभिव्यक्तनामरूपप्रपञ्चस्य योनिं कारण, असतश्च अव्याकृतावस्थस्य अनभिव्यक्तनामरूपात्मकस्य प्रपञ्चस्य योनिं कारणभूता सत्त्वरजस्तमोगुणात्मिका मूलप्रकृति वि वः विवृणोति व्याप्नोति। यद्वा, सच्छब्देन चक्षुर्ग्राह्य पृथिव्यप्तेजोलक्षण भूतत्रयमुच्यते। असच्छब्देन च परोक्षं वाय्वाकाशलक्षणं भूतद्वयमुच्यते। एतच्च प्रत्यक्षपरोक्षभेदेन द्वैविध्यमन्यत्राम्नातम्—'सच्च त्यच्चाभवत्' (तैउ. २।६) इति। एतदुक्त भवति—उदीरितलक्षण परं ब्रह्म स्वमायाशक्तिवशेन आदित्यापरपर्यायो वेनो भूत्वा स्वतेजसा भूतभौतिकात्मक जगत्सकारणक व्याप्नोतीति।

असा.

**[१] इयं पित्र्या राष्ट्र्येत्वग्रे प्रथमाय जनुषे भुवनेष्ठाः।**
**तस्मा एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्तु प्रथमाय धास्यवे॥**

पित्र्या। पिता कृत्स्नस्य जगतः उत्पादयिता प्रजापतिः। तत आगता। भुवनेष्ठाः, भुवने भूतजाते नादात्मना व्याप्य तिष्ठतीति भुवनेष्ठाः। उक्तं हि आचार्यैः शब्दब्रह्मप्रकरणे—'स तु सर्वत्र संस्यूतो जाते भूताकरे पुनः। आविर्भवति देहेषु प्राणिनामर्थविस्तृतः॥' इति। इय परिदृश्यमाना शब्दब्रह्मात्मिका वाग्देवता राष्ट्री। ईश्वरनामैतत्। राज्ञी सर्वजगद्व्यवहारस्य ईश्वरा नियन्त्री प्रथमाय प्रथमशब्दवाच्याय प्रागुक्ताय ब्रह्मणे जनुषे सूर्यात्मना जायमानाय जायमानं प्रथम मुख्यमादित्यात्मक ब्रह्म अग्रे पूर्वं एतु स्तुतिरूपेण व्याप्नोतु। यद्वा, इयं भूमिः पित्र्या पितुः कश्यपात् आगता राष्ट्री स्वाश्रितस्य जगतो नियन्त्री प्रथमाय स्वर्गादिभोगयोग्याय जनुषे जन्मने तदर्थं अग्रे प्रथमं एतु प्रवर्ग्याधिष्ठानता प्राप्नोतु। यः प्रवर्ग्यात्मकः आदित्यः भुवनेष्ठाः भुवनशब्दवाच्यं लोकत्रय व्याप्य स्थितः। तस्मै तादृशाय प्रथमाय धास्यवे। धासिरित्यन्ननाम। हविर्लक्षणमन्नमिच्छते देवाय सुरुचं सुष्ठु रोचमान ह्वार कुटिलं वर्तमानम्। यद्वा, ह्वर्यते कौटिल्येन प्राप्यते इति ह्वारः। अह्य गन्तव्यं सुकृतविशेषैः प्राप्यम्। यद्वा, अहनि भवः अह्यः। एवगुणविशिष्टमेत घर्मं प्रवर्ग्यं हविः श्रीणन्तु ऋत्विजः पयसा सस्कुर्वन्तु। यद्वा, पचन्तु तपन्तु।

असा.

**[१] प्र यो जज्ञे विद्वानस्य बन्धुर्विश्वा देवानां जनिमा विवक्ति।**
**ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचैरुच्चैः स्वधा अभि प्र तस्थौ॥**

अस्य प्रपञ्चस्य बन्धुः बन्धकः कारणभूतः। यद्वा, बन्धुवद्धितकारी। विद्वान् निरावरणज्ञानेन सर्वं जगज्जानन् यो देवः प्र जज्ञे प्रथममुत्पन्नः। यद्वा, प्र जज्ञे प्रजानीते। स प्रथमजो देवः देवानामन्येषामिन्द्रादीना विश्वा विश्वानि सर्वाणि जनिमा जन्मानि विवक्ति अन्येभ्यः कथयति। स च ब्रह्मणः कारणभूतात्परब्रह्मणः सकाशात् त्रयीरूप ब्रह्म मध्यात् मध्यभागात्, नीचैः अधोभागात्, उच्चैः उपरिभागाच्च उत् जभार उज्जहार उद्धृतवान्। एवं वेदस्य उद्धरणे सति स्वधाः। अन्ननामैतत्। चरुपुरोडाशहविर्लक्षणानि अन्नानि अभिलक्ष्य अग्न्यादिर्देवः प्र तस्थौ प्रास्थितवान्। यद्वा, वेदवाक्यविहितानि हवींषि ऋत्विग्भिर्दत्तानि देवानभिलक्ष्य प्र तस्थौ प्रतस्थिरे।

असा.

**[२] स हि दिवः स पृथिव्या ऋतस्था मही क्षेमं रोदसी अस्कभायत्।**

(१) असं. ४।१।२; ऐब्रा. ४।२।२; गोब्रा. २।२।६ राष्ट्र्येत्वग्रे (राष्ट्रे त्वग्रे).

(१) असं. ४।१।३, तैसं. २।३।१४।६ बन्धुर्विश्वा देवाना (बन्धुं विश्वानि देवो) उत्तरार्धे (ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाऽभि प्र तस्थौ), कासं. १०।१३ (४२) बन्धुर्वि (बन्धुं वि).

(२) असं. ४।१।४.

महान्मही अस्कभायद्वि जातो द्यां सद्म पार्थिवं च रजः ॥

स हि स खलु सूर्यात्मकः प्रथमजो देवः दिवः द्युलोकस्य ऋतस्थाः कारणभूत यत् ऋतशब्दवाच्य पर ब्रह्म तदात्मना स्थितः । तथा स एव पृथिव्याः सम्बन्धिऋतस्थाः सत्यरूपेण स्थितः । अतो मही महत्यौ रोदसी रोदस्यौ द्यावापृथिव्यौ क्षेम अस्कभायत् अविनाशो यथा भवति तथा अस्कभ्नात् स्वस्थाने स्थापितवान् । एतदेव विवृणोति—महान् अधिकः द्यावापृथिव्यौ व्याप्य वर्तमानः मही महत्यौ द्यावापृथिव्यौ अस्कभायत् अस्कभ्नात् । तथा जातः तयोर्मध्ये सूर्यात्मना प्रादुर्भूतः सन् द्या द्युलोकात्मक सद्म सदन पार्थिव पृथिवीसंबन्धि च रजः लोकं स्वतेजसा व्याप्नोदित्यर्थः । असा.

स[1] बुध्न्यादाष्ट्र जनुषोऽभ्यग्रं बृहस्पतिर्देवता तस्य सम्राट् ।
अहर्यच्छुक्रं ज्योतिषो जनिष्टाथ द्युमन्तो वि वसन्तु विप्राः ॥

सः परब्रह्मात्मकः प्रथमजो देवः जनुषो जनिमतो लोकस्य बुध्न्यात् । बुध्न मूलम् । तत्संबन्धिदेशाद्रसातलादिलक्षणादारभ्य तस्यैव लोकस्याग्र उपरिभागमभिलक्ष्य आष्ट आश्नुत व्याप्नोत् । अपि च देवता देवो दानादिगुणयुक्तो बृहस्पतिः तस्य जनिमतो लोकस्य सम्राट् सम्यक् राजमानोऽधिपतिः । यद्वा, तस्य प्रथमजस्य देवस्य प्रसादात्सम्राट् सम्यग्राजमानः अतिशयितदीप्तियुक्तः वर्तते इत्यर्थः । यत् यदा शुक्रं दीप्यमानं अहः ज्योतिषो जनिष्ट द्योतमानात्सूर्याद्रुत्पन्नमभूत् । अथ अनन्तरं द्युमन्तो दीप्तिमन्तो विप्राः मेधाविनः ऋत्विजः वि वसन्तु स्वस्वव्यापारेषु विविधं वर्तन्ताम् । यद्वा, विवसतिः परिचरणकर्मा । वि वसन्तु हविर्भिर्देवान्परिचरन्तु ।

असा.

नूनं[2] तदस्य काव्यो हिनोति महो देवस्य पूर्व्यस्य धाम ।
एष जज्ञे बहुभिः साकमित्था पूर्वे अर्धे विषिते ससन्नु ॥

काव्यः । कवयः ऋत्विजः, तत्संबन्धी यज्ञः काव्यः । स च अस्य दृश्यमानस्य महः महतः पूर्वस्य सर्वदेवेभ्यः प्रथममुत्पन्नस्य देवस्य तत् धाम तेजोरूप मण्डलात्मकं स्थान नून निश्चयं हिनोति प्रेरयति उदयाद्रिं प्रापयतीत्यर्थः । एष च सूर्यः बहुभिः सहस्रसंख्याकैः रश्मिभिः साकं सार्ध इत्था अनेन प्रकारेण पूर्वे पूर्वदिक्संबन्धिनि विषिते विशेषेण सबद्धे अर्धे देशे ससम् । अन्ननामैतत् । हविर्लक्षणमन्नमुद्दिश्य नु क्षिप्र जज्ञे जायते । उदेतीत्यर्थः ।

असा.

यो[1]ऽथर्वाणं पितरं देवबन्धुं बृहस्पतिं नमसाऽव च गच्छात् ।
त्वं विश्वेषां जनिता यथासः कविर्देवो न दभायत्स्वधावान् ॥

यो देवो बृहस्पतिः अथर्वाणं प्रजापतिम् । 'अथर्वा वै प्रजापतिः' (गोब्रा. १।४) इति श्रुतेः । पितरं लोकस्योत्पादक देवबन्धुं देवाना बन्धुं कारणभूतम् । यद्वा, अथर्वाण महर्षि पितर अस्माकं पितृभूतं देवबन्धुं देवा इन्द्रादयो बन्धवो बान्धवाः यस्य तथाविध नमसा अन्नेन तथा अव गच्छात् अवगच्छेत् जानीयात् यथा येन प्रकारेण त्वं विश्वेषां सर्वेषां स्थावरजङ्गमात्मकानां भावानां जनिता जनयिता असः भवेः । कविः क्रान्तदर्शी स देवो बृहस्पतिः स्वधावान् अन्नवान् हविर्लक्षणेन अन्नेन युक्तः सन् न दभायत् न दभ्नोति न हिनस्ति । सर्वमनुगृह्णातीत्यर्थः ।

असा.

वीर्येषु ज्येष्ठं भुजनकं निरुपमं ब्रह्म, भूतप्रथमजो ब्रह्मा

ब्रह्म[2]ज्येष्ठा संभृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवमा ततान ।
भूतानां ब्रह्मा प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ॥

अन्त्ययर्चा पूर्वमन्त्रप्रतिपादितस्य ब्रह्मणः सर्वाभिभाव-

---

(१) असं. ४।१।५; तैसं. २।३।१४।६ (स बुध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट्) पू.; कासं. १०।१३ (४३) (स बुध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पतिर्देवता तस्य सम्राट्) उत्त. (२) असं. ४।१।६.

(१) असं. ४।१।७.
(२) असं. १९।२२।२१, १९।२३।३०; तैब्रा. २।४।७।१० संभृता वीर्याणि (वीर्या संभृतानि) भूतानां ब्रह्मा (ऋतस्य ब्रह्म).

कत्व प्रतिपाद्यते। वीर्याणि वीरकर्माणि ब्रह्मज्येष्ठा ब्रह्मज्येष्ठानि ब्रह्मा पूर्वोक्तो ज्येष्ठः प्रशस्यतमो येषा तानि। यद्वा ज्येष्ठेन ब्रह्मणा सभृता संभृतानि। सर्वस्मादयमेव वीर्यवान् इत्यर्थः। अग्रे सृष्टयादौ ज्येष्ठ ब्रह्म दिव द्युलोक आततान विस्तारितवान्। तथा ब्रह्मा भूतानां सृज्यमानाना प्रथमः पूर्वभावी जज्ञे उत्पन्नः। तेन कारणेन ब्रह्मणा स्पर्धितुं स्पर्धा कर्तुं कः अन्यो देवो मनुष्यो वा अर्हति समर्थो भवति। अधिकतरवीर्यवत्त्वात् सर्वोत्कृष्टस्थाननिवासित्वात् सर्वेषा आदिभूतत्वाच्च ब्रह्मणः समानो नास्तीत्यर्थः। असा.

सत्यानृतरूपयोर्व्याकर्ता

[१]दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः।
अश्रद्धामनृतेऽदधाच्छ्रद्धाꣳ सत्ये प्रजापतिः॥

सर्वस्यैको व्यापक, ऋतस्य प्रथमज., बृहन्, पुराणः, देवाना पिता, विश्वपतिः

[२]प्रजापते नहि त्वत्तान्यन्यो विश्वा जातानि परि ता बभूव।
यस्मै कं जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम्॥ *

[३]रयीणां पतिꣳ यजतं बृहन्तमस्मिन्भरे नृतमꣳ वाजसातौ।
प्रजापतिं प्रथमजामृतस्य यजाम देवमधि नो ब्रवीतु॥

ध्रियते सपाद्यते हविरत्रेति भरो यज्ञः। अस्मिन्भरे प्रजापतिं देव वय यजाम। कीदृशं देव रयीणा पतिं धनस्वामिनम्। यजत यजनीयम्। बृहन्त महान्तम्। नृतममतिशयेन पुरुषं पुरुषेषूत्तममित्यर्थः। ऋतस्य यज्ञस्य प्रथमजां प्रथममेव जनयितारं 'प्रजापतिर्यज्ञानसृजत' इत्यन्यत्र श्रवणात्। कीदृशे भरे वाजसातौ वाजस्यान्नस्य सातिर्दान यस्मिन्यज्ञे सोऽय वाजसातिरतस्मिन्। सोऽयमस्माभिरिष्टः प्रजापतिर्देवेषु मध्ये नोऽस्मानधिकान् ब्रवीतु। तैब्रासा. २।८।१।२

[१]प्रजापते त्वं निधिपाः पुराणो देवानां पिता जनिता प्रजानाम्।
पतिर्विश्वस्य जगतः परस्पा हविर्नो देव विहवे जुषस्व॥

हे प्रजापते त्व निधिपाः शङ्खपद्मादीना निधीना पालकः। पुराणो जगतः स्रष्टृत्वादनादिः। देवाना पिता पालकः। प्रजाना मनुष्यादीना जनितोत्पादयिता। विश्वस्य सर्वस्य जगतः पतिः स्वामी। परस्पा अतिशयेन पालयिता। हे देव विशेषेण हूयन्ते देवा अत्रेति विहवो यज्ञस्तस्मिन् विहवे नोऽस्मदीय हविर्जुषस्व।

तैब्रासा. २।८।१।३

[२]तवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च।
प्रजापते विश्वसृग् जीवधन्य इदं नो देव प्रतिहर्य हव्यम्॥

हे प्रजापते, इमे लोका भूरादयो याश्च प्रदिशः प्रधानभूताः प्राच्याद्याः या अप्यन्या आग्नेयाद्याः दिशस्तत्सर्व तवैवाधीनम्। लोका विशेष्यन्ते। परावतो दूरदेशस्था द्वीपान्तरादयः। निवतो न्यग्भूताः पातालादयः। उद्वतश्चोर्ध्ववर्तिनः स्वर्गादयोऽपि। हे देव त्वं विश्वसृद्विश्वस्य स्रष्टा पाता वा। जीवेषु प्राणिषु धन्य ईश्वरो जीवधन्यस्तादृशो भूत्वा नोऽस्मदीयमिदं हव्यं प्रतिहर्य प्रतिगृहाण। तैब्रासा. २।८।१।३

[३]प्रजापतिं प्रथमꣳ यज्ञियानां देवानामग्रे यजतꣳ यजध्वम्।
स नो ददातु श्रवणं पितॄणां तस्मै ते देव हविषा विधेम॥

यज्ञियाना यज्ञयोग्यानां देवाना मध्ये प्रथमं मुख्य

* व्याख्यानं (१९७ पृष्ठे) द्रष्टव्यम्.

(१) कासं. ९।८।१ (७); मैसं ३।११।६ (४५); शुसं. १९।७७; तैब्रा. २।६।२।३.

(२) मैसं. ४।१४।१ (११); तैब्रा. २।८।१।२. अन्यस्थलादिनिर्देशः असिन्नेव मन्त्रे (१९७ पृष्ठे) द्रष्टव्यः।

(३) मैसं. ४।१४।१ (१२); तैब्रा. २।८।१।३.

(१) मैसं ४।१४।१ (१३); तैब्रा. २।८।१।३.

(२) मैसं. ४।१४।१ (१४), तैब्रा. २।८।१।३,४.

(३) मैसं. ४।१४।१ (१५), तैब्रा. २।८।१।४ उत्तरार्धे (स नो ददातु द्रविणं सुवीर्यम्। रायस्पोषं विष्यतु नाभिमस्मे॥);

प्रजापतिं यजतं यजनीयमग्रे यजध्वम् । हे ऋत्विजः आदौ पूजयत । स प्रजापतिर्नोऽस्मभ्यं द्रविणं धनं रायस्पोषं धनपुष्टिं सुवीर्यं शोभनसामर्थ्यं च ददातु प्रयच्छतु । नाभि नह्यन दारिद्र्यादिबन्धनमस्मे विष्यतु अस्मत्तः शिथिलयतु । तैब्रासा. २।८।१।४

[1]यो राय ईशे शतदाय उक्थ्यो यः पशूना५ रक्षिता विष्ठितानाम् ।
प्रजापतिः प्रथमजा ऋतस्य सहस्रधामा जुषता५ हविर्नः ॥

यः प्रजापतिः शतदायः शतसंख्याकधनप्रदः उक्थ्यः स्तुत्यः सन् राय ईशे धनस्येश्वरो भवति । यश्च प्रजापतिर्विष्ठिताना विविधमवस्थिताना गोमहिषादीना पशूना रक्षिता वर्तते । स प्रजापतिर्ऋतस्य यज्ञस्य प्रथमजाः प्रथममुत्पादकः । सहस्रधामा सहस्रसख्याकस्थानयुक्तः सन्नोऽस्मदीय हविर्जुषताम् । तैब्रासा. २।८।१।४

सर्वेषा कर्मसु प्रवर्तकः

[2]कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति ।
कर्मणे वां वेषाय वाम् ॥

अत्र मन्त्रं प्रयुञ्जानोऽध्वर्युर्यज्ञारम्भकर्मण्यात्मनः कर्तृत्वमपनीय प्रजापतेर्यज्ञकर्तृत्वं प्रश्नोत्तररूपाभ्यां मन्त्रवाक्याभ्यां प्रतिपादयति । प्रणीतानामपां धारक हे पात्र, त्वां कः पुरुषो युनक्ति आहवनीयस्योत्तरभागे स्थापयतीति प्रश्नः । तच्छब्दः प्रसिद्धार्थवाची । सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति सः एव परमेश्वरः हे पात्र, त्वां युनक्ति इत्युत्तरम् । पुनरपि कस्मै प्रयोजनाय त्वा युनक्ति इति प्रश्नः । तस्मै प्रजापतये तत्प्रीत्यर्थं त्वा युनक्ति इत्युत्तरम् । सर्वकर्माणि परमेश्वरप्रीत्यर्थमनुष्ठेयानि इति भगवद्गीतास्वर्जुन प्रति भगवतोक्तम्–' सर्वकर्माण्यपि सदा ' ( १८।५६ ) ' ब्रह्मार्पण ' ( ४।२४ ) इति च । कर्मणे हे अग्निहोत्रहवणि, हे शूर्प, वा युवा कर्मार्थमहमाददे इति शेषः । वेषाय च । वेपो व्याप्तिः । सूचितकर्मसु व्याप्त्यर्थं च वां युवामहमाददे । शुम.

(१) मैसं. ४।१४।१ ( १६ ); तैब्रा. २।८।१।४.

(२) शुसं. १।६, शब्रा. १।१।१।१३.

[1]कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति ॥

व्याख्यातो मन्त्रः प्रजापतिर्दैवतः ( ' कस्त्वा युनक्ति ' इत्यत्र ) । तत्र यज्ञयोगे नियुक्तः । अत्र तु यज्ञविमोके । शुम.

सर्वेभ्यः पर. सर्वेषु प्रविष्टः

[2]यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी ॥

परब्रह्मरूपेण षोडशी स्तूयते । यस्मात्पुरुषादन्यो व्यतिरिक्तः परः उत्कृष्टो देवादिर्जातः सभूतो नास्ति न विद्यते, यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आविवेश अन्तर्यामिरूपेण प्रविष्टवान्सः प्रजापतिः स्वोत्पन्नप्रजापालकस्त्रीणि ज्योतीषि अग्निवायुसूर्यलक्षणानि तेजासि विषयज्ञापकानि सचते सेवते । स्वतेजसा तज्ज्योतिषामुज्जीवनं करोतीत्यर्थः । 'येन सूर्यस्तपति तेजसेद्धः' इत्यादिश्रुतेः । ' यदादित्यगत तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ ' ( भ. गी. १५।१२ ) इति स्मृतेश्च । किंभूतः प्रजापतिः । प्रजया सरराणः प्रजारूपेण सम्यग्रममाणः । तथा षोडशी षोडशकलात्मकलिङ्गशरीरोपहितः स एव सर्वव्यवहाराश्रय इत्यर्थः । ' यः सर्वेषु भूतेषु तिष्ठन् ' इत्यादिश्रुतेः । शुम.

यजमानरूपः

[3]कोऽसि कतमोऽसि कस्मै त्वा काय त्वा । सुश्लोक सुमङ्गल सत्यराजन् ॥

हे यजमान, त्व कः प्रजापतिः असि । अत्यन्त कः कतमः श्रेष्ठः प्रजापतिरसि । प्रजापतयो बहवः, तत्रोत्तमो-

(१) शुसं. २।२३; शब्रा. १।९।२।३३.

(२) शुसं. ८।३६, तैब्रा. ३।७।९।५ संरराणः ( संविदान ), ताब्रा. १२।१३।३२ पूर्वार्धे ( यस्मादन्यो न परो अस्ति जातो य आबभूव भुवनानि विश्वा. ) संरराणः ( संविदानः ); जैब्रा. १।२०५.

(३) शुसं. २०।४, तैब्रा २।६।५।३ उत्तरार्धे ( सुश्लोकाँ सुमङ्गलाँ सत्यराजान् । ).

ऽसि। कस्मै प्रजापतिपदप्राप्तये त्वामहमभिषिक्तवानिति शेषः। काय प्रजापतिभावाय चाभिषिक्तवान्। 'सुश्लोके-त्यालब्धो ह्वयति' (का. १९।४।२०)। अध्वर्युणा स्पृष्टो यजमानः सुश्लोकादिसंज्ञान्नरानाह्वयति। हे सुश्लोक, एहीति शेषः। शोभनः श्लोकः कीर्तिर्यस्य। शोभन मङ्गलमुदयो यस्य स सुमङ्गलः। हे सुमङ्गल, त्वमेहि। हे सत्यराजन्, एहि। सत्योऽविनाशी राजा प्रभुर्यस्य सः।

शुम.

आदित्यरूप

**[१]एकविंशो वै प्रजापतिर्द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः॥**

**उत्तमा प्रतिष्ठा तद्दैवं क्षत्रं सा श्रीस्तदाधिपत्यं तद्ब्रध्नस्य विष्टपं तत्प्रजापतेरायतनं तत्स्वाराज्यम्॥**

उक्तसंख्याप्रशंसार्थमेकविंशतिसंख्यापूरणे आदित्ये बहून् गुणान् दर्शयति—उत्तमेति। योऽयमादित्योऽसावुत्तमा प्रतिष्ठा। तल्लोकाना स्थैर्येणावस्थानात्। तदादित्यस्वरूपमेव दैवं क्षत्रं देवसबन्धिनी क्षत्रजातिः। 'आदित्यो वै दैवं क्षत्रम्' इत्यन्यत्राभिधानात्। सा श्रीरादित्यप्राप्तिरेव भोग्यवस्तुसंपत्तिः। तदादित्यमण्डलमाधिपत्यं स्वामित्वप्रापकम्। 'आदित्य एषां भूतानामधिपतिः' इति श्रवणात्। तन्मण्डल ब्रध्नस्य आदित्यस्य विष्टपं स्थानभूतं तदेव मण्डल प्रजापतेरायतन स्थानम्। आदित्यमण्डले प्रजापत्युपासनस्याभिधानात्। तदेव मण्डल स्वाराज्य पारतन्त्र्याभावात्।

ऐब्रासा.

अपरिमितः

**[२]अपरिमित उ वै प्रजापतिः। कस्तं मातुमर्हेदित्येषा हैव स्थितिः॥**

अनन्तः, परिमण्डलस्वरूपः, आदित्यपृथिव्यादीना परिमण्डलत्वं यदनुकृतिः

**[३]स एष प्रजापतिरग्निष्टोमः। परिमण्डलो भूत्वाऽनन्तो भूत्वा शये। तदनुकृतिमप्यन्या देवताः परिमण्डलाः। परिमण्डल आदित्यः परिमण्डलश्चन्द्रमाः परिमण्डला द्यौः परिमण्डलमन्तरिक्षं परिमण्डलेयं पृथिवी। अपि यदिदं पुरुषे दिव्यं तत्परिमण्डलम्। एतस्यैव न्यङ्गमनुन्यङ्गानः परिमण्डलां महतीमनन्तां श्रियं जयति य एवं वेद॥**

(१) ऐब्रा. ५।४।२९,३०.
(२) शाब्रा. ११।७.
(३) जैब्रा. १।२५६,२५७.

सर्वात्मक, सर्वदेवस्वरूप, सर्वादिः

**[१]प्रजापतिर्वा इदमग्र आसीत्। सोऽकामयताहमेवेदं सर्वं स्यामहमिदमभिभवेयमिति। सोऽग्निरेव भूत्वा पृतना असहत। भूमिर्भूत्वा भूतं भव्यमभवत्। आपो भूत्वा सर्वमाप्नोत्। मनो भूत्वा सर्वममनुत। वाग्भूत्वा सर्वं व्यभवत्। चक्षुर्भूत्वा सर्वं व्यपश्यत्। श्रोत्रं भूत्वा सर्वमशृणोत्। वायुर्भूत्वा प्रजानां प्राणोऽभवत्। अन्तरिक्षं भूत्वा दिवमस्तभ्नोत्। द्यौर्भूत्वा सर्वमनुव्यभवत्। विराड्भूत्वाऽऽदित्योऽभवत्। कामो भूत्वाऽनन्तोऽभवत्। अनन्तो भूत्वा मृत्युरभवत्। संवत्सरो भूत्वा नादस्यत्। न ह दस्यति य एवं वेद। चन्द्रमा भूत्वाऽर्धमासान् पर्यगृह्णात्। पर्जन्यो भूत्वा प्रजानां जनित्रमभवत्। यज्ञो भूत्वा देवान् बिभर्ति। ता अस्येमाः प्रजाः सृष्टा न समजानत। ता नाम भूत्वाऽनुप्राविशत्। ता एता नाम्ना संजानतेऽसौ वा अयममुष्य पुत्र इति। स एष वाग्निष्टोमो य एष तपत्येष इन्द्र एष प्रजापतिरेष एवेदं सर्वमित्युपासितव्यम्॥**

यज्ञात्मकः सर्वात्मकश्च

**[२]देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे। ततोऽसुरा अतिमानेनैव 'कस्मिन्नु वयं जुहुयाम' इति स्वेष्वेवास्येषु जुह्वतश्चेरुः। तेऽतिमानेनैव पराबभूवुः। तस्मान्नातिमन्येत। पराभवस्य हैतन्मुखं यदतिमानः॥ १॥**

तत्र वाजपेयं विधातुं प्रस्तौति—देवाश्च वा असुराश्चेति। प्राजापत्याः प्रजापतिना सृष्टाः उभये द्विविधाः देवाश्च असुराश्च पस्पृधिरे स्पर्द्धाञ्चक्रुः। ततोऽसुराः स्वतोऽन्यः प्रबलो नास्तीति अतिमानेन अभिमानेन

(१) जैब्रा. १।३१४.
(२) शाब्रा. ५।१।१।१-४.

भूयिष्ठेन दर्पेण कस्मिन्नु खलु होमाधिकरणे वयं जुहुयाम होम कुर्याम इति धिक्कृत्य स्वकीयेषु आस्येषु होम चक्रुः। ते असुराः अत्यन्तगर्वेण पराजिताः। तस्मात् अद्यापि कश्चिदपि नातिमान कुर्यात्। अतिमानः अभिमानः यत् तत् पराभवस्य प्रापकमिति। शब्रासा.

**अथ देवा अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुः। तेभ्यः प्रजापतिरात्मानं प्रददौ। यज्ञो हैषामास। यज्ञो हि देवानामन्नम् ॥ २ ॥**

देवाना तद्विपर्यय दर्शयति—अथ देवा इति। देवाः खलु अन्योऽन्यस्मिन् जुहुवुः, इन्द्रः अग्नौ, अग्निः इन्द्रे इत्यादिक्रमेणेत्यर्थः। तेभ्यः देवेभ्यः अन्योऽन्यस्मिन् देवतात्वेन होमकरणात् प्रीतः प्रजापतिः आत्मान शरीरं दत्तवान्। यज्ञो हैषामिति। हि यस्मात् देवानामन्नं यज्ञः अतोऽत्रान्योऽन्यस्मिन् हविःप्रदानेनान्नसंभवात् प्रजापतिशरीर यज्ञ एव तेषामासीदित्यर्थः। यज्ञशब्देन वाजपेय उच्यते, प्रकरणबलात्। तथा च तैत्तिरीयके—'एष वाव यज्ञो यद्वाजपेयः' (तैब्रा. १।३।२।५) इति। शब्रासा.

**ते होचुः कस्य न इदं भविष्यतीति। ते मम ममेत्येव न संपादयाञ्चक्रुः। ते हासंपाद्योचुः—आजिमेवास्मिन्नजामहै, स यो न उज्जेष्यति तस्य न इदं भविष्यतीति। तथेति। तस्मिन्नाजिमाजन्त ॥ ३ ॥**

तत्र वाजपेये सर्वदेवानां पुरस्तात् वाजपेयस्यानुष्ठानेन बृहस्पतेरेव श्रैष्ठ्य वक्तुं आजिधावन दर्शयति—ते होचुरिति। ते देवाः आगच्छन्त यज्ञं दृष्ट्वा नः अस्माकं मध्ये इदं इति सामान्येन निर्देशः। अय वाजपेयः यज्ञः कस्य भविष्यति, इति ऊचुः। ततः ते सर्वेऽपि ममैवायं यज्ञो ममैवायं यज्ञ इति विवदमानाः न संपादयाञ्चक्रुः अस्यैवाय यज्ञ इति न निश्चितवन्तः। ते देवाः अस्मिन् विषये आजिं अजामहै गच्छाम इति समयं चक्रुः। नः अस्माकं मध्ये आजिधावनेन यः कश्चित् उज्जेष्यति तस्य अयं यज्ञो भवत्विति सर्वैरङ्गीकृत्य तस्मिन् वाजपेयविषये विजयार्थं आजि आजन्त अधावन्। आजिर्नाम धावनप्रदेशस्यावधिर्भूमिविशेषः (शब्रा. २।४।३।४)। शब्रासा.

**स बृहस्पतिः सवितारमेव प्रसवायोपाधावत्। सविता वै देवानां प्रसविता। इदं मे प्रसुव, त्वत्प्रसूत इदमुज्जयानीति। तदस्मै सविता प्रसविता प्रासुवत्। तत्सवितृप्रसूत उदजयत्। स इदं सर्वमभवत्। स इद सर्वमुदजयत्। प्रजापति ह्युदजयत्। सर्वमु ह्येवेदं प्रजापतिः। तेनेष्ट्वैतामेवोर्ध्वां दिशमुदक्रामत्। तस्मात् यश्च वेद, यश्च न, एषोर्ध्वा बृहस्पतेर्दिगित्येवाहुः ॥ ४ ॥**

उत्तरत्र वाजपेयस्य सकलकर्मप्रारम्भे सावित्रहोमो विधास्यते। तदर्थं बृहस्पतेरपि प्रथम सवितृविषयमुपधावन दर्शयति—स बृहस्पतिरित्यादिना। तत्राजि प्रधावन् बृहस्पतिः सवितारमेव प्रसवाय अनुज्ञानाय उपाधावत्। इतरदेववत् धावनप्रदेशमेव न लक्षीकृत्य गत इत्येवकारार्थः। सवितुरुपधावने कारणमाह—सविता वा इति। प्रसविता अनुज्ञाता। इद म इति बृहस्पतेः प्रार्थनावाक्यस्यायमर्थः—हे सवितः, मह्य इद वक्ष्यमाण कार्य प्रसुव अनुजानीहि। त्वत्प्रसूतः त्वयाऽनुज्ञातः इद उज्जयानि साधयामि। सर्वदेवेभ्यः पुरस्तात् तेनानुज्ञातः उदजयत्। यत उदजयत् ततः स इद परिदृश्यमान सर्वं जगत् अभवत्। सर्वोजयेन प्रजापतिमेव जितवान् भवति। अनेन वाजपेयस्य सर्वजगदात्मकप्रजापतिरूपप्राप्तिः फलमित्युक्तं भवति। तेनेष्ट्वेति। तेन वाजपेयेन इष्ट्वा बृहस्पतिः ऊर्ध्वां दिशमुदक्रामत्। अत एव तस्मात् यः पुमान् एतामाख्यायिका बृहस्पतिरिष्ट्वोर्ध्वां दिश प्राप्तवानित्येवरूपा वेद, यो वा न वेत्ति, ते सर्वेऽपि ऊर्ध्वा दिक् बृहस्पतेः स्वभूता इति आहुः। तथा च तैत्तिरीयके समाम्नातम्—'ऊर्ध्वां दिशां हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता' (तैस. ४।३।३।२) इति। शब्रासा.

विश्वशरीरी

**तस्यायमेव लोकः प्रतिष्ठा। अथ योऽस्मिँल्लोकेऽग्निः सोऽस्यावाङ् प्राणः। अथास्यान्तरिक्षमात्मा। अथ योऽन्तरिक्षे वायुः, य एवायमात्मन् प्राणः, सोऽस्य सः। द्यौरेवास्य शिरः। सूर्याचन्द्रमसौ चक्षुषी। यच्चक्षुरध्यशेत स चन्द्रमाः। तस्मात्स मीलिततरः। अन्नं हि तस्मादस्रवत् ॥**

(१) शब्रा. ७।१।२।७.

तस्य कीदृक् किमङ्गमिति, तदाह—तस्यायमेवेत्यादिना। अय भूलोक एव तस्य विराडात्मकस्य प्रजापतेः प्रतिष्ठा। प्रतितिष्ठत्यस्यामिति प्रतिष्ठाशब्देन पादावुच्येते। पार्थिवोऽग्निस्तस्य अवाचीनः प्राणः, येन मूत्रपुरीषादिकमुत्सृज्यते। अन्तरिक्षं द्युलोकोऽस्य प्रजापतेः आत्मा मध्यदेहः। तत्र सचरन् वायुः आत्मन् आत्मनि मध्यदेहेऽवस्थितः प्राणः। सोऽस्य स इति। स वायुरेवास्य प्राण इत्यर्थः। द्यौरेवास्येति। द्युलोकोऽस्य प्रजापतेर्मूर्द्धा। तत्रत्यौ सूर्याचन्द्रमसौ चक्षुषी। तयोर्मध्ये यच्चक्षुरध्यशेत यस्मिन् चक्षुषि ज्योतिश्चक्षुरवस्थितमभवत्, तच्चक्षुः चन्द्रमाः। तदुपपादयति—तस्मादिति। हि यस्मात् तस्मात् चक्षुषः अन्नमस्रवत्, तस्मात् कारणात् तच्चक्षूरूपः चन्द्रमाः मीलिततरः अतिशयेन मीलितः, सूर्यादल्पप्रकाशो दृश्यते इत्यर्थः। शब्रासा.

ब्रह्मज॰, मनोमय, विश्वशरीरी, विश्वस्रष्टा

**ब्रह्म ह वा इदमग्र आसीत्। तस्य तेजो रसोऽत्यरिच्यत। स ब्रह्मा समभवत्। स तूष्णीं मनसाऽध्यायत्। तस्य यन्मन आसीत् स प्रजापतिरभवत्। तस्मात्प्राजापत्यां मनसा जुह्वति। मनो हि प्रजापतिः। तस्य द्यौः शिर आसीदुरोऽन्तरिक्षं मध्यं समुद्रः पृथिवी पादौ ॥**

तत्रादौ तावत्प्रजापतिः कृत्स्नं भूतजातं सृष्ट्वा तस्य सामोपजीवनं प्रायच्छदिति प्रतिपादयिष्यमाणत्वात्तदुपजीव्यभूतप्रपञ्चसृष्टिप्रतिपादनाय तत्प्रागवस्थामाह—ब्रह्म हेति। इदं नामरूपात्मकं प्रतीयमानं प्रपञ्चजातं अग्रे सृष्टेः पूर्वं प्रलयावस्थायां ब्रह्म वै आसीत्। ह प्रसिद्धौ। सा च 'सदेव सोम्येदमग्र आसीत्' (छाउ. ६।२।१) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐउ. १।१।१) इत्यादिश्रुत्यन्तरापेक्षया। वै इत्येवकारार्थे। अत्र यः स्थाणुः स पुरुष इतिवदिदं ब्रह्म आसीदिति बाधाया सामानाधिकरण्यम्। इदं सर्वं कारणरूपं ब्रह्मैवासीत्, न कार्यं किंचिदपीत्यर्थः। नात्र ब्रह्मशब्देन कूटस्थं चैतन्यं विवक्षितं, तस्याविकारित्वेन पुनः प्राणिकर्मपरिपाकवेलायां ततो जगदुत्पत्त्यसंभवात्। तस्मान्मायोपाधिकमेव चैतन्यं विवक्ष्यते। अतोऽयमर्थः—इदं नामरूपघटितं जगत् पूर्वं तत्तायःपिण्डवन्माययाऽविभागापन्नं कारणरूपे ब्रह्मणि अव्याकृतनामरूपं सत् आस्थितमित्यर्थः।

अथ ब्रह्मणः सकाशात् हिरण्यगर्भोत्पत्तिमाह—तस्येति। तस्य उक्तलक्षणस्य सिसृक्षोर्ब्रह्मणोऽत्र रसः सारभूतं तेजोमयाधिष्ठानभूतं स्रष्टव्यविषयसामर्थ्योपेतं सत्त्वाख्यं विज्ञानं अत्यरिच्यत रजस्तमसी अभिभूय स्वयमेवातिरिक्तोऽभवत्। सः अतिरिक्तः सत्त्वगुणो मायांशो ब्रह्मा व्यष्टिसमष्ट्यात्मना परिवृढः प्राणहिरण्यगर्भसूत्रात्मादिसंज्ञकः समभवत् सम्यगुत्पन्नोऽभूत्।

अथ तस्माद्विराडुत्पत्तिमाह—स तूष्णीमिति। सः हिरण्यगर्भाख्यो ब्रह्मा तूष्णी उपरतसमस्तव्यापारः मनसा केवलेन निर्विषयेण अध्यायत् स्रष्टव्यविषयचिन्तामकरोत्। तस्य ध्यायमानस्य ब्रह्मणः यन्मनः यन्मानसं आसीत् स्रष्टव्योपायविषया करणशक्तिरस्ति सः सैव मनोरूपा शक्तिः प्रजापतिः प्रजाना स्रष्टा एतन्नामकोऽपि ब्रह्मादिसंज्ञया व्यवह्रियमाणः अभवत् संभूतः। अत्र ब्रह्मप्रजापत्योर्यद्यपि सृष्टिरूपकार्यैकत्वादेकत्वं, तथापि ब्रह्मणः स्थूलसूक्ष्मकार्यशरीरोपाधिभेदेन भेदनिर्देशः। अस्ति च श्रुतिषु सर्वत्र भेदेन निर्देशः। तथा हि—'त्वं रुद्रस्त्वं ब्रह्म त्वं प्रजापतिः' इत्यादिषु। तथोपरिष्टादपि 'कृष्टः प्राजापत्यो ब्राह्मो वा वैश्वदेवो वा' इति भेदेन निर्देक्ष्यते।

अथ प्रजापतेर्मनःसबन्धित्वात् प्रसङ्गेन तदीये कर्मणि कञ्चिद्विशेषमाह—तस्मादिति। यस्मात्प्रजापतिर्ब्रह्मणो मनोरूपोऽभूत्, तस्मात् प्राजापत्या प्रजापतिदेवताकामाहुतिं मनसा मानसेन मन्त्रमनुच्चारयन्त एवं जुह्वति। अस्य मनोरूपत्व प्रसिद्धमेवेत्याह—प्रजापतिः मनो हि ब्रह्मणो मनोरूपः खलु। हिशब्दः 'मन इव हि प्रजापतिः' इत्यादिश्रुत्यन्तरप्रसिद्धिद्योतनार्थः। अथ तत्प्रजापतेः कृत्स्नप्रपञ्चमयशरीरात्मकतामाह—तस्येति। तस्य विराडाख्यस्य प्रजापतेः शिरः उत्तमाङ्गं द्यौः द्युलोकः आसीत्। तथा उरः वक्षः तदुपलक्षितो मध्यदेशः अन्तरिक्षं एतदाख्यो द्यावापृथिव्योर्मध्यभाग आसीत्। 'अन्तरा क्षान्तं भवति' इति निरुक्तम्। तथा मध्यं मध्यमागान्तःप्रदेशवर्ति मूत्रोदकं, आश्रयिणि आश्रयशब्दः। तत् समुद्रः आसीत्। तथा पृथिवी प्रथिता पादौ पादद्वय-

(१) साब्रा. १।१।१.

स्थानीया आसीत्। एतावता तस्य लोकत्रयात्मकत्व-मुक्तम्। अस्य द्योशिरस्त्वाद्यवयवरूपत्वं उपनिषदि वैश्वानरविद्यायां 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः' (छाउ. ५।१८।२) इत्यादिना श्रुतम्। सासा.

**स वा इदं विश्वं भूतमसृजत। तस्य सामोपजीवनं प्रायच्छत्। उपजीवनीयो भवति य एवं वेद ॥**

उक्तलोकत्रयात्मकत्वसिद्धये तत एव जगत्सृष्टिं, सृष्टस्योपजीवनाय सामप्रदान चाह—स वै इति। वैशब्दः प्रसिद्धौ। सः खलु प्रजापतिः इद प्रतीयमान विश्व भूत कृत्स्नदेवतिर्यङ्मनुष्यादि भूनजातं असृजत सृष्टवान्। सृष्टस्य तस्य उपजीवन जीवनसाधनं साम प्रायच्छत् प्रकर्षेण दत्तवान्। अथ वेदितुः फलमाह—उपेति। यः पुमान् एव जगतः उपजीवनप्रदान वेद जानाति, सः सर्वैः उपजीवनीयो भवति। एन सर्वे उपजीवन्तीत्यर्थः। धनकनकादिभिराढ्यो भवतीति यावत्। सासा.×

---

## परमात्मा*

द्यावापृथिव्योर्जनकः कर्मवतां श्रेष्ठः

**+अयं देवानामपसामपस्तमो यो जजान रोदसी विश्वशंभुवा।**
**वि यो ममे रजसी सुक्रतूययाऽजरेभिः स्कम्भनेभिः समानृचे ॥**

पूर्वं पुत्रमाहात्म्येनैते प्रशस्य इदानीं स्वोत्पादकस्तुत्या प्रशंसति। अय देवाना मध्ये देवतमः अपसामपस्तमः। अप इति कर्मनाम। तेन तद्वान् लक्ष्यते। कर्मवता मध्ये प्रकृष्टकर्मा। अयमित्युक्तं, क इत्याह—यः देवः विश्वशंभुवा सर्वप्रकारेण भूताना सुखस्य भावयित्र्यौ रोदसी द्यावापृथिव्यौ महानुभावे जजान उत्पादितवान्। न केवलमुत्पादनमात्रं, अपि तु यः देवः रजसी रञ्जनात्मिके द्यावापृथिव्यौ। रजसी इति द्यावापृथिव्योर्नाम, 'रजसी सदसी' (नि. ३।३०।८) इति तन्नामसु पाठात्। उक्तरूपे वि ममे विशेषेण परिच्छिनत्ति। किं स्वोपभोगाय, नेत्याह। सुक्रतूयया शोभनकर्मेच्छया। येन कर्मणा प्राणिनां सुख सभवति तादृक्कर्मेच्छया। अथवा एतदुत्तरत्र सबध्यते। सुक्रतूयया उक्तेन निमित्तेन इमे द्यावापृथिव्यौ अजरेभिः अजीर्णैर्दृढतरैः स्कम्भनेभिः गतिप्रतिबन्धसाधनैः शङ्कुभिः समानृचे सम्यक् सर्वतः पूजितवान् स्थापितवानित्यर्थः। यस्मादेवं तस्मादयमेव देवः अयमेव अपस्तमः इत्येवंमहानुभावेन परमेश्वरेणोत्पन्ने इति स्तुतिः। ऋसा.

---

इत्युभयोर्भिन्नत्वमनुसंधाय सायणाचार्येण तथा व्याख्यानं कृतम्। पूर्वमन्त्रो (ऋसं. १।१६०।३) यथा—

**स वह्निः पुत्रः पित्रोः पवित्रवान्पुनाति धीरो भुवनानि मायया।**
**धेनुं च पृश्निं वृषभं सुरेतसं विश्वाहा शुक्रं पयो अस्य दुक्षत ॥**

पित्रोः मातापित्रोर्द्यावापृथिव्योः। पुत्रः पुरुत्राता पुत्रस्थानीयः आदित्यः पवित्रवान् पावनरश्मियुक्तः धीरः धीमान् सः वह्निः फलस्य वोढा धारकः सन् मायया प्रज्ञया स्वकीयया भुवनानि भूतजातानि पुनाति पावयति प्रकाशयतीत्यर्थः। किंच स एव पुत्रः पृश्निं शुक्लवर्णां धेनुं प्रीणयित्रीं भूमिं सुरेतसं शोभनसामर्थ्यं शोभनोदकं वा वृषभं सेक्तारं द्युलोकं च मायया पुनाति प्रकाशयतीत्यर्थः। कदा। विश्वाहा सर्वाण्यप्यहानि सर्वकालमित्यर्थः। किंच अस्य द्युलोकस्य। यद्वा, इमं द्युलोकं शुक्रं पयः दीप्तं पयःसदृशमुदकं धुक्षत दोग्धि। ईदृशो महानुभाव आदित्यस्तयोः पुत्र इति द्यावापृथिव्योः स्तुतिः। ऋसा.

---

× प्रजापतिपरा आम्नायाः परमात्मसृष्टियज्ञप्रकरणेष्वपि द्रष्टव्याः।

* विश्वकर्मा, प्रजापतिः, परमात्मा, सृष्टिः, यज्ञः इत्येतेषु प्रकरणेषु केवलपरमात्मपराणा आम्नायानामुद्धार कृतः। यत प्रकरणस्थदेवतायाः विभूतिरूपविमोकेन शुद्धस्वरूपपरमात्मपर्यवसायित्वं द्योत्यते तैः।

+अस्मादव्यवहितपूर्वमन्त्रस्य सूर्यपरत्वादस्यापि सूर्यरूपपरमेश्वरपरत्वं स्पष्टं भातीति सवितुः प्रकरणे एवास्योद्धारः समुचितस्तथापि सायणाचार्येण केवलपरमेश्वरपरत्वेनास्य व्याख्यातत्वादत्रोद्धारः कृतः। पूर्वमन्त्रे आम्नातः सूर्यः द्यावापृथिव्योः पुत्रत्वेन। अत्र तु द्यावापृथिव्योर्जनकः कथ्यते

(१) साब्रा. १।१।२. (२) ऋसं. १।१६०।४.

भ्रातृत्रयमध्ये दृष्टः विश्पतिः, सर्वभुवनाधिष्ठानभूतमजरं संवत्सरस्वरूपम्

*** अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।**
**तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥**

अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषण योग्यक्रियार्थसंबद्धो यच्छब्दोऽध्याहार्यः । योऽय दिवि द्योतते तस्य अस्य वामस्य वननीयस्य सभजनीयस्य आरोग्यार्थिभिः सर्वैः सेवनीयस्य पलितस्य पालयितुः प्रकाशवृष्ट्यादिप्रदानेन पालकस्य तथा योऽय दिवि द्योतते तस्य अस्य होतुः ह्वातव्यस्य आह्वानार्हस्यादित्यस्य मध्यमः मध्यमस्थानः । मध्ये भवो वायुरुच्यते । आदित्याग्नी अपेक्ष्य अस्य मध्यमत्वम् । स च अश्नः सर्वत्र व्याप्तः । न हि वायुरहितः कश्चित्प्रदेशोऽस्ति । तादृशः भ्राता अस्ति भ्रातृस्थानीयो भवति । यथा लोके भ्राता पितृधनस्य भाग हरति तद्वत् । मध्यस्थानं अन्तरिक्षलोक हरतीति वा । वृष्ट्यर्थ रश्मिभिराहृताना भौमाना रसाना हरणाद्वा भ्रातेत्युच्यते । पित्र्येण धनेन स्वार्जितेन वा भर्तव्यः भवतीति भ्राता । मध्यमो वायुरपि वृष्ट्यर्थ रसैः भक्तव्यः भवति । किच घृतपृष्ठः घृतमाहुतिलक्षण पृष्ठे यस्य तादृशः भ्राता तस्य तृतीयः अस्ति भवति । त्रयाणां पूरणस्तृतीयः । उक्तोभयापेक्षया तृतीयत्वम् । भ्रातृत्व प्रतिपादितप्रकारेण अत्रापि द्रष्टव्यम् । रात्रौ सवितुस्तेजोभागस्य हरणात् दिवा स्वकीयतेजसो भागस्य तदर्थमेव भक्तव्यत्वात् वा भ्रातृत्वम् । अत्र एषु भ्रातृषु मध्ये पुरोदेशे वा विश्पतिं विशा प्रजाना पालयितार सप्तपुत्र सर्पणरश्मिपुत्रोपेतम् । ऐतिहासिकपक्षे 'अदितिः पुत्रकामा' (तैब्रा. १।१।९।१) इति प्रस्तुते मित्रावरुणादिषु अदितिपुत्रेषु अस्य आदित्यस्य सप्तमपुत्रत्वम् । ईदृश महानुभावमादित्य अपश्य अद्राक्ष भावनया आत्मत्वेन साक्षात्करोमीत्यर्थः । 'तद्योऽहं सोऽसौ योऽसौ सोऽहं' (ऐआ. २।२।४) इति श्रुतिः । एव वा । अस्य वामस्य विश्वस्योद्वरितुः स्रष्टुरित्यर्थः । पलितस्य पालयितुः स्वसृष्टजगत्पालनशीलस्य होतुरादातुः स्वस्मिन् संहर्तुरित्यर्थः । परमेश्वरस्य सृष्ट्यादिकर्तृत्व श्रुतिस्मृतिपुराणादिषु प्रसिद्धम् । तस्य तादृशस्य परमेश्वरस्य भ्राता तद्भागहारी तदशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानोऽस्ति जगद्धारकत्वेन वर्तते । स च अश्नः व्यापनशीलः । 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सदृब्धानि' (बृउ. ३।७।२) इति श्रुतेः । वक्ष्यमाणविराडपेक्षया वा मध्यमत्वम् । किंच अस्य परमेश्वरस्य तृतीयो घृतपृष्ठः । घृतमित्युदकनाम । तेन तत्कार्य शरीरमुच्यते । तदेव पृष्ठं स्पर्शक वा यस्य स तादृशः । 'पृष्ठं स्पृशतेः' (नि. ४।३) इति निरुक्तम् । यद्वा प्रदीप्तपृष्ठः । पृष्ठशब्दः कृत्स्नशरीरोपलक्षकः । प्रकाशितशरीराभिमानीत्यर्थः । न त्वय सूक्ष्मशरीराभिमानिसूत्रात्मवत् स्पर्शनाविषयो भवति । अत्र एषु मध्ये विश्पतिं विशा प्रजाना पतिम् । उपलक्षणमेतत् । सर्वस्य पतिमित्यर्थः । 'सर्वस्य पतिः सर्वस्येशानः' (बृउ. ४।४।२२) इति श्रुतेः । सप्तपुत्रं सप्त लोकाः पुत्रा यस्य तादृशम् । स्वमायया सृष्टसर्वलोकमित्यर्थः । अपश्यं पश्येय साक्षात्करोमीत्यर्थः । अयमर्थः । स्वाधीनमायो जगत्कारणभूतः परमेश्वरः एकः । तत उत्पन्नौ स्थूलसूक्ष्मशरीराभिमानिनौ द्वौ विराट्सूत्रात्मानौ । तेषु मध्ये द्वयोः साक्षात्कारेण मोक्षाभावात् सृष्ट्यादिकारण परमेश्वरं ज्ञेयत्वेन प्रसिद्धं श्रवणमननादिसाधनेन साक्षात्करोमीत्यर्थः । एवमुत्तरत्रापि अध्यात्मपरतया योजयितुं शक्यम् । तथाऽपि स्वरसत्वाभा-

---

* एतत्सूक्तं औपनिषदार्थपरतया प्रसिद्धम् । अस्मिन् सूक्ते 'को ददर्श प्रथमं' (४), 'आचिकित्वान्' (६), 'तिस्रो मातॄन्' (१०), 'अवः परेण' (१८), 'द्वा सुपर्णा' (२०), 'यत्रा सुपर्णा' (२१), 'अनच्छये तुरगातु' (३०), 'य ईं चकार' (३२), 'न वि जानामि' (३७), 'अपाङ् प्राङेति' (३८), 'ऋचो अक्षरे' (३९), 'गौरीर्मिमाय' (४१), 'तस्याः समुद्रा' (४२), 'चत्वारि वाक्' (४५), 'इन्द्रं मित्रं' (४६) इत्येतेषा मन्त्राणा औपनिषदार्थप्रतिपादकता प्रतीयते । इतरेषां तु बहूनां गूढार्थत्वेऽपि औपनिषदार्थत्वं न गोचरं भवति । तेषां तु संग्रहः पूर्वापरसंगतिजिज्ञासायास्तृप्त्यर्थं कृतः ।

(१) ऋसं. १।१६४।१; असं. ९।१४।१; ऐआ. १।५।३।१७; नि. ४।२६.

त्वात् ग्रन्थविस्तरभयाच्च न लिख्यते। यत्र 'द्वा सुपर्णा' (ऋस. १।१६४।२०) इत्यादौ स्फुटं आध्यात्मिको ह्यर्थः प्रतीयते तत्र तत्र प्रतिपादयामः। अथ मन्त्रो यास्केन व्याख्यातः– 'अस्य वामस्य वननीयस्य पलितस्य पालयितुः' (नि. ४।२६) इत्यादिना। तच्च व्याख्यानमत्रानुसधेयम्। ऋसा.

**सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।**
**त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः॥**

एकचक्र एकरथाङ्गोपेतम्। यद्यपि त्रीणि चक्राणि, तथापि तेषा एकरूपत्वात् एकचक्रमित्युच्यते। रथं रहणस्वभावं सूर्यस्य सबन्धिन सप्त एतत्सख्याका अश्वाः युञ्जन्ति अनुबध्नन्ति वहन्ति अहोरात्रनिर्वाहाय। किं वस्तुतः सप्त, नेत्याह। एकः अश्वः सप्तनामा एक एव सप्ताभिधानः सप्तधा नमनप्रकारो वा। एक एव वायुः सप्तरूप धृत्वा वहतीत्यर्थः। वाय्वधीनत्वात् अन्तरिक्षसंचारस्य। एकचक्रमित्युक्त, कीदृश तदित्यत आह। त्रिनाभि वलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रत्रयेपेत अजरं अमरणधर्मकं अनर्वं अशिथिलम्। पुनस्तदेव विशेष्यते। यत्र यस्मिन् चक्रे इमा विश्वा भुवना इमानि प्रसिद्धानि सर्वाणि भूतजातानि अधि आश्रित्य तस्थुः तिष्ठन्ति। यद्वा। एकचक्र एकचारिण असाहाय्येन संचरन्तं रथ आदित्यमण्डलं सप्त युञ्जन्ति। सर्पणस्वभावाः सप्तसंख्या वा रश्मयः सप्तप्रकारकार्याः असाधारणाः परस्परविलक्षणाः षड्तवः। एकः साधारणः इत्येवम्। अथवा मासद्वयात्मकाः षट्, अपरः अधिकमासात्मकः इत्येवं सप्तर्तवो युञ्जन्ति। एतस्य कार्यं निर्वहन्तीत्यर्थः। स चैकः असहायः अश्वो व्यापनशीलः आदित्यः सप्तनामा सप्त रसाना सनमयितारो रश्मयो यस्य तादृशः सप्तर्षिभिः स्तूयमानो वा आदित्यो वहति धारयति भ्रमयतीत्यर्थः। किम्। त्रिनाभि चक्रम्। तिस्रो नाभिस्थानीयाः सध्याः सबद्धा वा त्रय ऋतवो यस्य तत्तादृशम्। के ते। ग्रीष्मवर्षाहेमन्ताख्याः। यद्वा। भूतभविष्यद्वर्तमानाख्यास्त्रयः कालाः त्रिनाभयः। तद्विशिष्ट चक्र चक्रवत् पुनः पुनः परिभ्रममाणं संवत्सराख्य चक्र अजरं मरणरहितम्। नहि कदाचिदपि कालो म्रियते 'अनादिनिधनः कालः' इति स्मृतेः। अनर्वं अप्रतिहतम्। ईदृश संवत्सराख्य चक्र नानाकालावयवोपेत अयमादित्यः पुनरावर्तयति। सवत्सरादर्वाचीनाना तत्रैवान्तर्भावात् ततः युगादीना तदावृत्तिसाध्यत्वात् सवत्सरस्य चक्रत्वेन निरूपणम्। पुनः कीदृशं तत्। यत्र यस्मिन् चक्रे इमा विश्वा भुवना इमानि सर्वाणि भूतानि अधितस्थुः आश्रित्य तिष्ठन्ति, कालाधीनत्वात् सर्वस्य स्थितेः। ईदृगस्य कालस्य कारणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात्। 'ज्ञानमोक्षाक्षरप्रशसा च' इत्यनुक्रमण्यामुक्तम्। अयमपि मन्त्रो यास्केन 'सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम्' (नि. ४।२७) इत्यादिना व्याख्यातः। तदत्राप्यनुसधेयम्। ऋसा.

**इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः।**
**सप्त स्वसारो अभि सं नवन्ते यत्र गवां निहिता सप्त नाम॥**

इमं उक्तस्वरूपमादित्यमण्डलाख्य सवत्सराख्य वा रथं ये सप्त रश्मयः अधि तस्थुः अधिष्ठिताः। सवत्सरपक्षे अयनर्तुमासपक्षदिवसरात्रिमुहूर्ताख्याः सप्तावयवाः अधितिष्ठन्ति। कीदृश रथम्। सप्तचक्र चकनाच्चरणात् क्रमणाद्वा चक्राणि रश्मयः, ते सप्त यस्य रथस्य तादृशमुभयविधं रथं पूर्वोक्ताः अधिष्ठिताः अश्वाः व्यापनशीलाः सप्त वहन्ति निर्वहन्ति च। तादृशं रथ सप्त स्वसारः स्वयसरणाः। स्वरादित्यः, तेन सारिताः परस्परं स्वसृभूता वा सप्तसंख्याकाः रश्मयः ऋतवश्च अभि सं नवन्ते आभिमुख्येन संगच्छन्ते। असाधारणाः परस्परविलक्षणकार्याः षड्तवः सर्वसाधारणः एकः इति सप्तत्वम्। यद्वा, उक्तरूपाः मासद्वयात्मकाः षट् त्रयोदशमासात्मकः सप्तमः इति सप्तत्वम्। कीदृशो रथ इति तदुच्यते। यत्र यस्मिन् रथे उभयविधे गवा वाचा स्तुति-

(१) ऋसं. १।१६४।२; असं. ९।१४।२; तैआ.३।११।८ यत्रेमा विश्वा भुवनाधि (येनेमा विश्वा भुवनानि), नि. ४।२८.

(१) ऋसं. १।१६४।३; असं. ९।१४।३ नवन्ते (नवन्त) नाम (नामा).

रूपाणां सप्त सप्तविधानि नाम नमनानि सप्तस्वररूपाणि निहितानि। सप्तस्वरोपेतैः सामभिः स्तुत्यं रथमित्यर्थः। यद्वा। गवामुदकाना सप्त सर्पणस्वभावानि नाम नमनानि। यत्र यासु स्वसृषु निहिता स्वसारः परस्परस्वसृभूताः देवनद्योऽभि सं नवन्ते। ऋसा.

शरीरधरः प्राणरूपोऽशरीर आत्मा

[१]को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति।
भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुप गात्प्रष्टुमेतत् ॥

एवं प्रपञ्चस्य कालायत्तता प्रतिपाद्य तस्य कारणभूतस्य परमेश्वरस्य अविषयत्वमाह। कः ददर्श को द्रष्टु शक्नुयात्। कदा। प्रथमं सृष्टेः पूर्वं, अव्याकृतावस्थायामित्यर्थः। किम्। जायमान प्रथमभावविकारमापन्नम्। उत्पद्यमान प्रपञ्चमित्यर्थः। दुर्ज्ञेयत्वे हेतुमाह— यत् यस्मात् अस्थन्वन्त अस्थिमन्तं सशरीर, उपलक्षणमेतत्। कार्यभावमापन्नमित्यर्थः। अनस्था अस्थिरहिता अशरीरा साङ्ख्यप्रसिद्धा प्रकृतिः वेदान्तप्रसिद्धा ईश्वरायत्ता माया बिभर्ति गर्भवदन्तर्धारयति। अव्याकृतावस्थाया अनस्थः अशरीरः परमेश्वरो बिभर्ति। यदा केवलः परमेश्वरो मायाशबलितः सन्निद जगन्निर्मितवान् उत्पत्तिसमये देहादिसहितस्य कस्यचिदभावात् को ददर्श। तदानी मनो नित्यं आत्मा च नित्यः तत्संयोगात् कश्चिदात्मा जानातीति चेत् सोऽपि न सभवतीत्यत आह। भूम्याः सबन्धि पार्थिव स्थूलशरीरं असुः प्राणः तदुपलक्षितं सूक्ष्मशरीरं असृक् शोणितम्। एतत्सप्तधातूपलक्षकम्। यद्यपि शरीर पञ्चभूतात्मकं तथापि भूतद्वयप्रत्यक्षत्वात् तदपेक्षया उक्तम्। आत्मा तैः संबद्धश्चेतनः क्व स्वित् कुत्रास्ते। न कश्चिदस्तीत्यर्थः। 'नान्यत्किंचन मिषत्' (ऐउ. १।१।१) इति श्रुतेः। विद्वांस जगत्कारणविषयज्ञानवन्तमन्यं गुर्वादिक एतत् कारण प्रष्टुं कः शिष्योऽल्पमतिः उप गात् उपगच्छति। तादृशो देहेन्द्रियसघातरूपः आत्मा तस्मिन् समये कुत्रास्ति। प्रष्टा प्रतिवक्ता च उभावपि नास्तीत्यर्थः, 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' (बृउ. ४।३।२३) इति श्रुतेः। यद्वा। प्रथम प्रथमभाविन जगतः कारणभूतं को ददर्श कः साक्षात्करोति। जायमानमस्थन्वन्त मनुष्य अनस्थिकः परमेश्वरः सशरीरमशरीरः यत् यस्मात् बिभर्ति। द्रष्टुरपि तत्कार्यत्वात् इति भावः। शिष्टं समानम्। ऋसा.

(१) ऋसं. १।१६४।४; असं. ९।१४।४.

देवाना गूढानि स्थानानि

[१]पाकः पृच्छामि मनसाऽविजानन्देवानामेना निहिता पदानि।
वत्से बष्कयेऽधि सप्त तन्तून्वि तत्निरे कवय ओतवा उ ॥

पाकः पक्तव्यः अपक्वमतिः अह मनसा असस्कृतेनाविजानन् अतिगहन तत्त्व विशेषेण ज्ञातुमशक्नुवन् पृच्छामि प्रश्न करोमि। अज्ञाने कारणमाह—एना एनानि पदानि सदेहास्पदानि तत्त्वानि देवानां निहितानि देवानामपि गूढानीत्यर्थः। यद्वा। देवाना पदानि तत्त्वानि निधिवद्गोपयित्वा स्थापितानि। अतः पृच्छामि तत्त्वज्ञानोपयोगायेति शेषः। तानि कानीति उच्यते। वत्से सर्वस्य निवासभूते बष्कये। बडिति सत्यनाम। तत् कपतीति बष्कयः आदित्यः। यद्वा। बष्कयो नाम एकहायनो वत्सः। पुनरपि वत्सशब्दस्य पृथक् निर्देशात् बष्कयशब्देन तत्कालमात्र लक्ष्यते। तस्मिन्नादित्ये अधि अधिकं सप्त तन्तून् तायमानान् सप्त सोमसस्थान् कवयः मेधाविनो यजमानाः ओतवै जगद्रूपतिर्यक्तन्तून् वेतु वि तत्निरे वितन्वन्ति। यद्वा। सप्त तन्तवः सप्त छन्दासि। तानि वितन्वन्ति। किमर्थम्। ओतवै सप्तसोमसंस्थारूपतिर्यक्तन्तुसतानाय यज्ञनिर्माणायेत्यर्थः। यज्ञाना स्थितेः सूर्याधीनत्वात् इति भावः। ईदृशं तत्त्व पृच्छामीत्यर्थः। ऋसा.

षण्णा लोकाना धारकस्य अजस्य एकत्विधरूपं जिज्ञास्यम्

[२]अचिकित्वाञ्चिकितुषश्चिदत्र कवीन्पृच्छामि विद्मने न विद्वान्।
वि यस्तस्तम्भ षळिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥

(१) ऋसं. १।१६४।५; असं. ९।१४।६.

(२) ऋसं. १।१६४।६, असं. ९।१४।७ त्वाञ्चिकि (त्वाश्चिकि) विद्मने (विद्मनो).

अचिकित्वान् देवतातत्त्वमजानन्नह चिकितुषः विशेषेण तत्त्व जानतः कवीन् क्रान्तदर्शिनः अधिगतपरमार्थान् अत्र अस्मिन् तत्त्वविषये पृच्छामि। किमर्थम्। विद्मने वेदनाय परमार्थज्ञानाय। किं जानन्नेव पराभवाद्यर्थ, नेत्याह। विद्वान् न पृच्छामि अपि तु अज्ञानादेव। यः परमेश्वरः तस्तम्भ स्तम्भितवान् नियमितवान्। 'अथ य आत्मा स सेतुर्विधृतिरेषा लोकानामसभेदाय' (छाउ. ८।४।१) इति श्रुतेः। किम्। इमा इमानि षट् रजासि लोकान् रञ्जनात्मकान्। 'लोका रजास्युच्यन्ते' (नि. ४।१९) इति निरुक्तम्। यद्यपि लोकाः सप्त तथापि सत्यलोकस्य कर्मिणां सर्वेषा साधारणत्वाभावात् षडित्युक्तम्। ननु षडेवोक्ताः, सप्तमः किमिति न निर्दिष्टः इति। उच्यते। अजस्य जननादिरहितस्य चतुर्मुखस्य ब्रह्मणः रूपे स्वरूपे एक सत्यलोकाख्यं पुनरावृत्तिरहित स्थान किमपि स्वित् किं स्विदेव। तन्न केनाप्यधिगन्तु शक्यमित्यर्थः। कैश्चिदेवोपासकैः, अर्चिरादिमार्गेण गन्तव्यत्वात् इति भावः। यद्वा। षड्जासि विलक्षणाः षड्तवः। तान्यस्तम्भयत्तत्त्वम्। अजस्य गमनशीलस्य जन्मरहितस्य वा आदित्यस्य रूपे रूप्यमाणे दृश्यमाने मण्डले एकमद्वितीयं किमपि स्वित्। यत्किंचिदवाङ्मनसगम्य तत्त्वमस्ति तत्पृच्छामि। 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छाउ. १।६।६) इत्यादिश्रुतिप्रतिपादित तत्त्वमित्यर्थः। अथवा षडिमानि रजांसि त्रिविधान् भूलोकाश्च यस्तस्तम्भ। 'तिस्रो भूमीर्धारयन् त्रीरुत द्यून्' (ऋसं. २।२७।८) इति निगमः। तस्याजस्य परब्रह्मणो रूपे नानाविकारभाजि जगति किमपि स्वित् एकं एकात्मकमस्तीति प्रश्नः। अविशेषमस्तिनाममात्र एकरूपमस्तीत्युत्तरविवक्षया प्रश्नः। 'अस्तीत्येवोपलब्धव्यः' (काउ. ६।१३) इति श्रुतेः। ऋसा.

द्यावापृथिव्यो पुत्रस्य आदित्यस्य गूढ पदम्

**इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः।**
**शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥**

इह इदानी ई एतद्वक्ष्यमाण तत्त्वं अङ्ग क्षिप्रमविचारेण ब्रवीतु। कः। यः वेद सः। कीदृशं तत्। अस्य पुरतो दृश्यमानस्य वामस्य वननीयस्य वेः गन्तुः आदित्यस्य पद सर्वैः गन्तव्य स्वरूप निहित गूढं वर्तते। किंच अस्य आदित्यस्य शीर्ष्णः शिरोवदुन्नतस्य सर्वेषामुत्कृष्टस्य वा गावः केचन वर्षकालीनाः रश्मयः क्षीर उदक दुह्रते क्षरन्ति। वव्रि रूपनामैतत्। रूप वसानाः आच्छादयन्तः अतिविस्तरेण तेजसा तपन्तः केचन अस्य गावो रश्मयः उदक स्वसृष्टं पदा सृष्टेनैव मार्गेण अपुः पिबन्ति भूमि निरुदका कुर्वन्तीत्यर्थः। तस्य स्वरूपं ब्रवीतु इत्यन्वयः। ऋसा-

**माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे।**
**सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥**

माता सर्वस्य निर्मात्री पृथिवी पितर पालकं द्युलोकं तत्स्थ द्युलोकस्थमादित्यमित्यर्थः। तं आ बभाज आभजते। किमर्थम्। ऋते उदके यज्ञे वा निमित्तभूते सति। केन द्वारेण। धीती धीत्या कर्मणा यागादिरूपेण। स्वकीयेन आज्यसोमादिहविषा तर्पयतीत्यर्थः। अग्रे ततः पूर्व पिता च मनसा अस्या अभिप्रायवता चेतसा स जग्मे हि सश्लिष्टो वर्तते खलु वृष्टिमकरोदित्यर्थः। अनन्तर सा माता बीभत्सुः गर्भबन्धनेच्छावती गर्भरसा गर्भरसेन गर्भोत्पत्तिनिमित्तेन रसेन निविद्धा नितरां विद्धा आसीत्। यद्वा। गर्भे रसः औषध्याद्युत्पादनसमर्थमुदक यस्याः सा तादृशी उदकेनात्यन्तं क्लिन्ना निविद्धा कृषीवलैर्हलमुखेन नितरा विदारिता भवति बीजावापार्थम्। अत्राय समाधिः— या काचन योषिदपत्यार्थ स्वपति युवान यौति, स च तस्यामनुरागयुक्तः सगतो भवति, सा चान्तर्वत्नी सती पुत्रान् जनयतीति तद्वदत्रापि। अनन्तर नमस्वन्तः इत् भाविव्रीहिप्रियङ्ग्वाद्यन्नवन्तः एव उपवाक उपेत्य वचनं परस्पर सम्यगभिवृद्धानि सस्यानीति वचन ईयुः प्राप्नुवन्ति। यद्वा। हविर्लक्षणान्नवन्तः उपेत्य वचन प्रैषादिरूपमीयुः। वृष्टौ सत्यां सस्यादिद्वारा यागमनुतिष्ठेयुः इत्यर्थः। ऋसा.

(१) ऋसं. १।१६४।७; असं. ९।१४।५.

(१) ऋसं. १।१६४।८, असं. ९।१४।८

**युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः।**
**अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥**

माता निर्मीयन्ते अस्मिन् भूतानीति माता द्यौः। दक्षिणायाः अभिमतपूरणसमर्थायाः पृथिव्याः धुरि निर्वहणे युक्ता आसीत् वर्षणाय समर्थाऽभूदित्यर्थः। कथमिति तदुच्यते। गर्भः गर्भस्थानीयः उदकसघः वृजनीषु उदकवत्सु मेघपङ्क्तिषु अन्तः मध्ये अतिष्ठत् तिष्ठति। अनन्तरं वत्सः पुत्रस्थानीयः उदकसंघः त्रिषु योजनेषु मेघरश्मिवायुषु सयुक्तेषु सत्सु अमीमेत् वर्षणसमये शब्दयति। अनन्तर विश्वरूप्य विश्वरूपवती गां अनु अपश्यत् अनुक्रमेण पश्यति वर्षतीत्यर्थः। यद्वा। त्रिषु योजनेषु सत्सु वत्सो मेघो वर्षणाय गा भूमिं प्रति अमीमेत्। अनन्तरं सर्वो जनोऽनुक्रमेण विश्वरूप्यं सस्यादिभिर्नानारूपवती भूमि अपश्यत् पश्यति।

ऋसा.

षण्णा लोकानां एको धारकः

[2]**तिस्रो मातॄस्त्रीन्पितॄन्बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति।**
**मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम् ॥**

एकः प्रधानभूतः असहायो वा पुत्रस्थानीयः आदित्यः सवत्सराख्यः कालो वा तिस्रः मातॄः सस्यवृष्ट्याद्युत्पादयित्रीः। क्षित्यादिलोकत्रय इत्यर्थः। तथा त्रीन् पितॄन् जगतां पालयितॄन् लोकत्रयाभिमानिनः अग्निवायुसूर्याख्यान् बिभ्रत् सन् ऊर्ध्वः तस्थौ उन्नतः अत्यन्तदीर्घस्तिष्ठति भूतभविष्यदाद्यात्मना। सूर्यपक्षे, सर्वेभ्य उन्नतः। ईं एन न अव ग्लपयन्ति ग्लानिं नैव कुर्वन्ति। न हि कालः आदित्यो वा अन्येन पराभूयते। दिवः पृष्ठे द्युलोकस्य उपरि अन्तरिक्षे मन्त्रयन्ते गुप्त परस्परं भाषन्ते देवाः। किम्। विश्वविद विश्ववेदनसमर्थां विश्वैर्वेदनीयां वा अविश्वमिन्वा असर्वव्यापिनीं वाच गर्जितलक्षणां अमुष्य आदित्यस्य सबन्धिनीं मन्त्रयन्ते इत्यर्थः।

ऋसा.

विश्वाधिष्ठानं ऋतस्य संवत्सररूपमजरं चक्रं,
स एव संवत्सरः पिता सूर्योपाधिः

**द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य।**
**आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥**

ऋतस्य उदकस्य सत्यात्मकस्य वा आदित्यस्य चक्रं पुनः पुनः क्रमणशील मण्डलाख्य रथचक्र वा वर्वर्ति पुनः पुनर्वर्तते संचरति। कुत्र। द्या परि द्युलोकस्यान्तरिक्षस्य परितः। कीदृश तत्। द्वादशार द्वादशसख्याकमेषादिराश्यात्मकैः मासात्मकैर्वा अरैः रथाङ्गावयवैर्युक्तम्। किंच तत् चक्र नहि जराय नैव खलु जरायै भवति। हे अग्ने सर्वदा गमनयुक्त आदित्य। यद्वा। अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वात् असावप्यग्निरित्युच्यते। अत्र अस्मिन् त्वदीये चक्रे मिथुनासः स्त्रीपुंसरूपेण परस्परं मिथुनभूताः सप्त शतानि विंशतिश्च विंशत्युत्तरसप्तशतसख्याकाः पुत्राः पुत्रवदुत्पद्यमानाः प्राणिना दुःखात् त्रातारो वा अहोरात्ररूपाः तस्थुः तिष्ठन्ति निष्पद्यन्ते। षष्ट्यधिकशतत्रयसंख्याकानि अहानि, तावत्यः एव रात्रयः इत्येवं तद्विभागः। 'सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहःसंमानः' (ऐआ. ३।२।१) इत्यारण्यकम्।

ऋसा.

[2]**पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम्।**
**अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥**

पञ्चपादं पञ्चसंख्याकर्त्वात्मकपादोपेतम्। एतत् हेमन्तशिशिरयोः एकत्वाभिप्रायम्। पितरं सर्वस्य प्रीणयितारं द्वादशाकृतिं द्वादश मासा एवाकृतयो यस्य तादृशं

(१) ऋसं. १।१६४।९, असं. ९।१४।९.

(२) ऋसं. १।१६४।१०; असं. ९।१४।१० ग्लापयन्ति (ग्लापयन्त) विश्व...मिन्वाम् (विश्वविदो वाचमविश्वविन्नाम्).

(१) ऋसं. १।१६४।११; असं. ९।१४।१३, नि ४।२७.

(२) ऋसं. १।१६४।१२; असं. ९।१४।१२ विचक्षणं (विचक्षणे).

परस्तात् तत्कारणभूतमग्निमपश्यम्। अहं यजमान इत्यर्थः। किंच उक्षाणं फलस्य सेक्तारं पृश्निं शुक्लवर्णम्। प्राश्नुते तेन फलमिति स्वयं प्राश्नुते इति वा पृश्निर्वल्लीरूपः सोमः। तं वीराः वीर्यविधेरणकुशला ऋत्विजः अपचन्त। अत्र धात्वर्थानादरेण तिङ्प्रत्ययः करोत्यर्थः। स च क्रियासामान्यवचनः। अत्र औचित्यात् अभिषवेण संपादितवन्त इत्यर्थः। तानि तत्साधनानि धर्माणि अनुष्ठानानि प्रथमानि प्रतमानि प्रकृष्टानि फलपर्यवसायीनि आसन् संपादितान्यभवन्। यद्वा। 'सोमः उक्षाऽभवत् पूर्वं तं देवाः शक्तापचन्। यज्ञार्थे तद्भवो धूमो मेघ आसीत् तदुच्यते॥' तत्परत्वेन वा मन्त्रो व्याख्येयो विचक्षणैः।

ऋसा.

अग्निवाय्वादित्याः

**त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम्।**
**विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम्॥**

केशस्थानीयप्रकृष्टरश्मियुक्ताः त्रयः अग्न्यादित्यवायवः। ते च ऋतुथा कालेकाले वि चक्षते विविधलक्षणां भूमिं पश्यन्ति। तेषां पृथक्पृथक्कार्यमाह। एषां मध्ये एकः अग्निः संवत्सरे अतीते सति संवत्सरं वपते दाहेन केशस्थानीयौषधिवनस्पत्यादिकं छेदनं नापितकार्यं करोति। एकः अन्यः आदित्यः विश्वं सर्वं जगत् शचीभिः स्वकीयैः प्रकाशवृष्ट्यादिकर्मभिः अभि चष्टे सर्वतः पश्यति। एकस्य वायोः ध्राजिः गतिः ददृशे दृश्यते सर्वैः न रूपं, अप्रत्यक्षत्वात्। स्पर्शशब्दधृतिकम्पलिङ्गैः गम्यते इति हि न्यायविदो वदन्ति। अयमपि मन्त्रो यास्केन एव व्याख्यातः— 'त्रयः केशिन ऋतुथा विचक्षते काले कालेऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिविपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य' (नि. १२।२७) इति।

ऋसा.

(१) ऋसं. १।१६४।४४, असं. ९।१५।२६ विश्वमेको (विश्वमन्यो); नि. १२।२७.

चतुष्पदा वाक्

**चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥**

वाक् वाचः कृत्स्नायाः पदानि चत्वारि परिमिता परिमितानि। लोके या वागस्ति सा चतुर्विधा विभक्तेत्यर्थः। तानि पदानि ब्राह्मणाः वेदविदः मनीषिणः मनस ईषिणो मेधाविनः विदुः जानन्ति। तेषां मध्ये त्रीणि गुहा गुहायां निहिता स्थापितानि नेङ्गयन्ति न चेष्टन्ते न प्रकाशन्ते इत्यर्थः। वाचः तुरीयं पदं मनुष्याः अज्ञाः तज्ज्ञाश्च वदन्ति व्यक्तमुच्चारयन्ति व्यवहरन्ति। कानि तानि चत्वारि इत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति। सर्ववैदिकवाग्जालस्य संग्रहरूपाः भूरादयस्तिस्रो व्याहृतयः प्रणव एक इति वेदत्रयसारत्वात् तासां व्याहृतीनामेव सारसंग्रहभूतत्वात् अकाराद्यात्मकस्य प्रणवस्येति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन वेदवादिनो वदन्ति। अपरे व्याकरणमतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन। क्रियाप्रधानमाख्यातम्। द्रव्यप्रधानं नाम। प्रागुपसृज्यंते आख्यातपदस्येत्युपसर्गः प्रादिः। उच्चावचेष्वर्थेषु निपतनान्निपातः 'अपि तु च' इत्यादिः। एतेष्वेव सर्वा वाक् परिमितेत्यखण्डायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात्। 'वाग्वै पराच्यव्याकृताऽवदत् तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते' (तैसं. ६।४।७।३) इति श्रुतेः। अन्ये तु याज्ञिकाः मन्त्राः कल्पो ब्राह्मणं चतुर्थी लौकिकीति। याज्ञिकैः समाख्यातोऽनुष्ठेयार्थप्रकाशको वेदभागो मन्त्राः। मन्त्रविधानप्रतिपादको वेदभागः 'इति मन्त्राः। कल्पोऽत ऊर्ध्वम्' (तैआ. १।३१।२) इत्यादिनोक्तः कल्पः। मन्त्रतात्पर्यार्थप्रकाशको वेदभागो ब्राह्मणम्। भोगविषया गामानय इत्यादिरूपा व्यावहारिकी। एष्वेव सर्वा वाक् नियमितेति याज्ञिकाः। ऋग्यजुःसामानि चतुर्थी व्यावहारिकीति नैरुक्ताः।

(१) ऋसं. १।१६४।४५; असं. ९।१५।२७, तैब्रा. २।८।८।५, शब्रा. ४।१।३।१७; जैउब्रा. १।७।३, ४०।१; नि. १३।९.

सर्पाणां वाक् वयसां क्षुद्रसरीसृपस्य च चतुर्थी व्यावहारिकीत्यैतिहासिकाः । पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मवादिनः । अपरे मातृकाः प्रकारान्तरेण प्रतिपादयन्ति । परा पश्यन्ती मध्यमा वैखरीति चत्वारीति । एकैव नादात्मिका वाक् मूलाधारादुदिता सती परेत्युच्यते । नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्तीत्युच्यते योगिभिर्द्रष्टुं शक्यत्वात् । सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते । मध्ये हृदयाख्ये उदीयमानत्वात् मध्यमायाः । अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते । एव चत्वारि वाचः पदानि परिमितानि । मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणाः खाख्यस्य शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विदुः जानन्ति । तेषु मध्ये त्रीणि परादीनि गुहा निहितानि हृदयान्तर्वर्तित्वात् । तुरीयं तु पद वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति । व्याकरणप्रसिद्धनामाख्यातादिपक्षे मनीषिणो ब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञाः वाग्योगविदस्तानि पदानि जानन्ति । अवाग्योगविदः पामरा वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदन्ति व्यवहरन्ति अर्थप्रकाशनाय प्रयुञ्जते । अय मन्त्रो निरुक्ते व्याख्यातः सोऽत्राप्यनुसधेयः– 'अथापि ब्राह्मणं भवति । सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयम् । या पृथिव्या साऽग्नौ सा रथन्तरे । याऽन्तरिक्षे सा वायौ सा वामदेव्ये । या दिवि साऽऽदित्ये सा बृहति सा स्तनयित्नावथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः । तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम् ' ( नि. १३।९ ) इति । ऋऽसा

एकं सत् सर्वदेवात्मकम्

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥**

अमुमादित्य ऐश्वर्यविशिष्ट इन्द्रं आहुः । तथा मित्रं प्रमीतेर्मरणात् त्रातारमहरभिमानिनमेतन्नामकं देवं तमाहुः । वरुण पापस्य निवारकं रात्र्यभिमानिनं देवमाहुः । तथा अग्निं अङ्गनादिगुणविशिष्ट एतन्नामकमाहुः । अथो अपि च अयमेव दिव्यः दिवि भवः सुपर्णः सुपतनः गरुत्मान् गरणवान् पक्षवान्वा । एतन्नामको यः पक्ष्यस्ति सः अप्ययमेव । कथमेकस्य नानात्वमिति । उच्यते । अमुमेवादित्य एक एव वस्तुतः सन्त विप्राः मेधाविनो देवतातत्त्वविदः बहुधा वदन्ति । तत्तत्कार्यकारणेन इन्द्राद्यात्मानं वदन्ति । ' एकैव वा महानात्मा देवता स सूर्य इत्याचक्षते ' इत्युक्तत्वात् । किंच तमेव वृष्ट्यादिकारण वैद्युताग्नि यम नियन्तार मातरिश्वान अन्तरिक्षे श्वसन्त वायु आहुः । सूर्यस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति । अत्र ये केचित् ' अग्निः सर्वा देवताः ' ( ऐब्रा. २।३ ) इत्यादिश्रुतितोऽयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वा अग्नेः एव सार्वात्म्यप्रतिपादकोऽय मन्त्र इति वदन्ति । तत्पक्षे प्रथमः अग्निशब्दः उद्देश्यः । तमग्निमुद्दिश्य इन्द्राद्यात्मकत्वकथनम् । अयं मन्त्रो निरुक्ते एवं व्याख्यातः– 'इममेवाग्निं महान्तमात्मान एकमात्मान बहुधा मेधाविनो वदन्ति इन्द्र मित्रं वरुणमग्नि दिव्यं च गरुत्मन्तम् । दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा ' ( नि. ७।१८ ) इति । ऋसा.

ऋतस्य सदनम्

**कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।**
**त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥**

कृष्णं कृष्णवर्णं नियान नियमेन गच्छन्तं मेघ हरयः उदकस्य हर्तारः सुपर्णाः शोभनपतना रश्मयः अपः

---

(१) ऋसं. १।१६४।४६, असं. ९।१५।२८; नि. ७।१८, १४।१.

(१) ऋसं. १।१६४।४७; असं ६।२२।१, ९।१५।२२ वी व्युद्यते ( वी व्यूदु ), तैसं. ३।१।११।४ ( असितवर्णा हरयः सुपर्णा मिहो वसाना दिवमुत्पतन्नि । त आववृत्रन्त्सदनानि कृत्वाऽऽदित्पृथिवी घृतैर्व्युद्यते ॥ ), कासं. ११।९ ( २८ ) उत्तरार्धे ( त आववृत्रन् सदनानि रात्वी घृतेन द्यावापृथिवी व्युन्दन् ) ११।१३ (६०), मैसं. ४।१२।५ (१४०), नि. ७।२४.

वसानाः उदकानि वासयन्तो मेघेषु । अद्भिर्मेघान्पूरयन्त इत्यर्थः । अन्तर्भावितण्यर्थत्वात् द्विकर्मकत्वम् । यद्वा । कृष्णं नियान नियमन रात्रिः । देवाना हि रात्रिर्दक्षिणायन, तत्प्रति । तस्मिन्वर्षकाले इत्यर्थः । एवं कुर्वन्तः दिव द्युलोक तदाश्रितमादित्य वा उद्दिश्य उत्पतन्ति ऊर्ध्वं गच्छन्ति । ते रश्मयः ऋतस्य सदनात् उदकस्य स्थानात् आदित्यमण्डलात् आववृत्रन् आवर्तन्ते अर्वाञ्च आगच्छन्ति । आदित् अनन्तरमेव यदा अर्वाग्गच्छन्ति तदानीमेव घृतेन उदकेन पृथिवी व्युद्यते विविधं क्लिद्यते । ' कृष्णं निरयण रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मयः ' ( नि. ७।२४ ) इत्यादि निरुक्त द्रष्टव्यम् । ऋसा.

एकं संवत्सरात्मकं चक्रम्

**द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।**
**तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥**

द्वादश एतत्संख्याकाः प्रधयः परिधयः प्रहिता वर्तन्ते । तत्स्थानीया द्वादश मासाः एक अद्वितीयं चक्र क्रमणस्वभाव सवत्सराख्यं चक्रमाश्रिताः । तथा त्रीणि त्रिसख्याकानि नभ्यानि नाभ्याश्रयाणि फलकानि तत्स्थानीयानि ग्रीष्मवर्षाहेमन्ताख्यान्याश्रितानि । यथा सूर्यरथचक्रस्य द्वादश परिधयः नाभ्यर्हाणि त्रीणि फलकानि सन्ति तद्वत्कालचक्रस्यापि । क उ कोऽपि महान् तच्चक्र चिकेत जानाति । तस्मिन् चक्रे साकं सह शङ्कवः न शङ्कवः इव । अत्र पुरस्तादुपचारोऽपि नशब्दः सामर्थ्यादुपमार्थीयः । तस्मिन्नपि संवत्सरचक्रे त्रिशताः एतत्सख्याकाः षष्टिर्न । नशब्दः चार्थे । षष्टिश्च अरा अरस्थानीयान्यहानि अर्पिताः अर्पितानि । कीदृशानि तानि । चलाचलासः, एकश्चलशब्दो द्विर्भावप्रासः । चलाः चलनस्वभावानीत्यर्थः । ' षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहानि ' ( शब्रा. ९।१।१। ४३ ) इति ब्राह्मणम् । ' द्वादश प्रधयश्चक्रमेकमिति मासाना मासा मानात् ' ( नि. ४।२७ ) इत्यादि निरुक्तम् । ऋसा.

सरस्वती

**यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।**
**यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः ॥**

हे सरस्वति ते तव सबन्धी यः स्तनः स्तनवच्छिशुस्थानीयाना प्राणिनामाप्यायनकारी लौकिकवैदिकसुशब्दरूपः स्तनः शशयः शयानः तव देहे वर्तमानः । यः च स्तनः मयोभूः रसास्वादिना सुखस्य भावयिता । येन स्तनेन विश्वा सर्वाणि वार्याणि वरणीयान्यभिमतरूपाणि धनानि पुष्यसि भोक्तृभ्यः । यः च स्तनः रत्नधाः बहुविधरमणीयरसाना धारयिता वसुवित् वसूना वासयितृणा धनाना वेत्ता लब्धा वेदयिता वा । किंच यः स्तनः सुदत्रः शोभनदानः । ' सुदत्रः कल्याणदानः ' ( नि. ६।१४ ) इति निरुक्तम् । अत्र असकृत् यच्छब्दश्रवणं स्तनस्य अतिप्रशस्तत्वज्ञापनार्थम् । हे देवि तं तादृशं सर्वप्राण्युपकारकं सूक्तमय स्तनं इह अस्मिन् कर्मणि इदानीं वा धातवे अस्माभिर्धातुं पातु पानाय कः कुरु । ऋसा.

यज्ञरूपा प्रथमे धर्माः

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**

---

(१) ऋसं. ११६४।४८, असं. १०।८।४ उत्तरार्धे ( तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये ); नि. ४।२७.

(१) ऋसं. ११६४।४९, असं. ७।१०।१ ( यस्ते स्तनः शशयुर्यो मयोभूर्यः सुम्नयु सुहवो य सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे कः ॥ ); मैसं. ४।९।७ (१०२) पू.: ४।१४।३ (४५); शुसं. ३८।५ ( यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः ॥ ); ऐब्रा. ४।५।२; तैब्रा. २।८।२।८, शब्रा. १४।२।१।१५, १४।९।४।२८ शुसंवत्, तैआ. ४।८।२, ५।७।३; बृउ. ६।४।२७.

(२) ऋसं. ११६४।५०, १०।९०।१६; असं. ७।५।१; तैसं. ३।५।११।५ सचन्त ( सचन्ते ); कासं. १५।१२ (६४); मैसं. ४।१०।३ ( ७१ ), ४।१४।२ (३२);

**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥**

देवाः व्यवहर्तारो यजमानाः यज्ञेन निर्मथ्याग्निना यज्ञ होमसाधनमाहवनीयं अयजन्त पूजितवन्तः अनुष्ठानाय संयोजितवन्तः इत्यर्थः । 'अग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्य क्रियते' ( तैस. ६।२।१।७ ) इति हि तैत्तिरीयकम् । तानि धर्माणि अग्निसाधनानि कर्माणि प्रथमानि । प्रथम इति मुख्यनाम । प्रतमानि प्रकृष्टतमानि आसन् फलप्रसवसमर्थान्यभवन्नित्यर्थः । ते ह ते च यजमानाः नाकम् । नास्मिन् अकं अस्तीति नाकः स्वर्गः । तं महिमानः माहात्म्ययुक्ताः सचन्त संगताः । कीदृग नाकम् । यत्र यस्मिन्नाके पूर्वे पूर्वतनाः साध्याः साधनाः यज्ञादिसाधनवन्तः । कर्मदेवा इत्यर्थः । ते सन्ति निवसन्ति त सचन्त। तस्मादिदानीमपि मनुष्यैः एव कर्तव्यमित्यर्थः । यद्वा । देवा इदानी देवभागमापन्नाः पूर्वं यज्ञेनाग्निना पशुभूतेन यज्ञ यष्टव्यमग्निमयजन्त पूजितवन्तः । अग्नेरेव मूर्तिभेदेन देवत्वं च पशुत्व च द्रष्टव्यम् । 'अग्निः पशुरासीत्तमालभन्त तेनायजन्त' ( तैस. ५।७।२६।१ ) इति श्रुतेः । शिष्टं पूर्ववत् । यत्र यस्मिन् स्वर्गे निमित्तभूते सति पूर्वे पूर्वतनाः साध्याः देवाः साधनाः छन्दोऽभिमानिनः । आदित्या अङ्गिरसश्च साध्या देवा उच्यन्ते । 'छन्दासि वै साध्या देवास्तेऽग्रेऽग्निनाग्निमयजन्त ते स्वर्ग लोकमायन्नादित्याश्चैवेहासन्नङ्गिरसश्च' 'तेऽग्रेऽग्निनाग्निमयजन्त ते स्वर्ग लोकमायन्' ( ऐब्रा. १।१६ ) इति ब्राह्मणम् । एते देवाः स्वर्गे सन्ति भवन्ति स्वर्गप्राप्ता इत्यर्थः । यद्वा । यज्ञेन ज्ञानादियज्ञेन यज्ञ विष्णुमयजन्त पूजयन्ति । ते नाकं विष्णुलोकं महानुभावाः सचन्त संगच्छन्ते । यत्र पूर्वे साध्यादयो देवाः सन्ति तत्स्थानम् । 'अग्निनाऽग्निमयजन्त देवाः' ( नि. १२।४१ ) इत्यादि निरुक्तमनुसधेयम् ।

ऋसा.

---

शुसं. ३१।१६, ऐब्रा. ३।५।३५, शाब्रा. ८।२, शब्रा. १०।२।२।२; कब्रा. १८ (पृ. १०१), तैब्रा. ३।१२।७ तैसंवत्; नि. १२।४१.

एकमुदकमिहामुत्र च

**समानमेतदुदकमुच्चैत्यव चाहभिः ।**
**भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥**

एतत्प्रसिद्ध उदक समान एकरूपमित्यर्थः । अहभिः कैश्चिदहोभिः ग्रीष्मकालीनैः उत् च एति ऊर्ध्वं गच्छति । तथा अहभिः वर्षकालीनैरेव तदुदक अव च एति अवाङ्मुख च गच्छति । रश्मिनाड्यैव भूमिं प्राप्नोति । तदेवोच्यते । पर्जन्याः प्रीणयितारो मेघाः भूमिं जिन्वन्ति उदकसस्त्यायेन सस्याद्युत्पादनद्वारा भूमिष्ठान् प्रीणयन्ति । तथा अग्नयः आहवनीयाद्याः स्वे हुते आहुत्या दिव द्युलोकस्थान् देवान् जिन्वन्ति प्रीणयन्ति ।

ऋसा.

सरस्वान् दिव्य सुपर्ण.

**दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोपधीनाम् ।**
**अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि ॥**

दिव्य दिवि भव सुपर्ण शोभनगमनं वायस गमनशील बृहन्त महान्त अपा गर्भ वृष्ट्युदकाना गर्भवदुत्पादकम् । ओषधीना ओषधीः दर्शत दर्शनाय । दर्शयन्तमित्यर्थः । यद्वा । ओषधीना गर्भ दर्शतमिति पृथग्विशेषणम् । किंच अभीपतः आनुकूल्येन वृष्टिभिस्तर्पयन्तं जगत्प्रीणयन्तम् । यद्वा । अभीपतः अभिगमनवतः सलिलाधारास्तटाकादींस्तर्पयन्तम् । अथवा अभिगन्ताऽहम् । सरस्वन्तं उदकवन्तम् । सर इत्युदकनाम । देवं सूर्यं वा अवसे रक्षणाय जोहवीमि पुनःपुनः आह्वयामि ।

ऋसा.

---

( १ ) ऋसं. १।१६४।५१, तैब्रा. १।९।५; नि. ७।२३.

(२) ऋसं. १।१६४।५२; असं. ७।३९।१ ( दिव्यं सुपर्णं पयसं बृहन्तमपा गर्भ वृषभमोषधीनाम् । अभीपतो वृष्ट्या तर्पयन्तमा नो गोष्ठे रयिष्ठां स्थापयाति ॥ ), तैसं. ३।१।११।३ ( दिव्य९ सुपर्ण वयसं बृहन्तमपा गर्भं वृषभमोषधीनाम् । अभीपतो वृष्ट्या तर्पयन्तं त९ सरस्वन्तमवसे हुवेम ॥ ), कासं. १९।१४ (४१) गर्भं ...... स्तर्पयन्तं ( पति वृषभमोषधीनाम् । अभीपतो वृष्ण्या तर्पयन्तं ).

मृतस्योज्जीवनं देवसामर्थ्यम्

[1]विधुं दद्राणं सलिलस्य पृष्ठे युवानं सन्तं पलितो जगार।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान॥

अनया कालात्मक इन्द्रः स्तूयते। विधु विधातार सर्वस्य युद्धादेः कर्तारम्। तथा समने। अनन अनः प्राणनम्। सम्यगनननोपेते संग्रामे बहूना शत्रूणा दद्राणं द्रावकं ईदृक्सामर्थ्योपेत युवान सन्त पुरुष पलितः जरा जगार निगिरतीन्द्राज्ञया। एवमुक्तलक्षण वक्ष्यमाणलक्षणं च देवस्य कालात्मकस्येन्द्रस्य महित्वा महत्त्वेनोपेत काव्य सामर्थ्य पश्य पश्यत हे जनाः। तथा जरसा प्राप्तः अद्य ममार म्रियते। स ह्यः परेद्युः समान सम्यक्चेष्टते। पुनः जन्मान्तरे प्रादुर्भवतीत्यर्थः। तदेव चत्वारि नामानि शरीराण्युक्तानि। ऋसा. १०।५५।५

ऋषयो मन्त्रकर्तारो विश्वं ऋचि कल्पयन्ति, तेषा ब्रह्मैव विश्वजीवनम्

[2]ऋचः पदं मात्रया कल्पयन्तोऽर्धर्चेन चाक्लृपुर्विश्वमेजत्।
त्रिपाद्ब्रह्म पुरुरूपं वि तष्ठे तेन जीवन्ति प्रदिशश्चतस्रः॥

आदित्यजननी

[3]अपादेति प्रथमा पद्वतीनां कस्तद्वां मित्रावरुणा चिकेत।
गर्भो भारं भरत्या चिदस्या ऋतं पिपर्त्यनृतं नि पाति॥

हे मित्रावरुणा मित्रावरुणौ पद्वतीनां पादवतीनां मनुष्यादीना प्रजाना प्रथमा प्रथमभाविनी अपात् पादरहिता उषाः। प्रतिदिन सूर्यचन्द्रादिवत् स्वस्याः परिभ्रमणाभावात् सूर्यगमनेनैव स्वगमनात् अपात् इति च एति इति च उपचर्यते। तत् तादृश वा युवयोः प्रसिद्ध कर्म कः आ चिकेत कः आभिमुख्येन जानाति। तत्स्तुत्यमित्यर्थः। मित्रावरुणयोरहोरात्रदेवत्वात् अहोरात्रयोः अन्तरालस्यैव उषस्त्वात् एतत्कर्मत्वम्। किं च अस्य लोकस्य भार निर्वाह गर्भः युवयोर्गर्भस्थानीयः शिशुरादित्यः। अहोरात्रयोर्मध्यकाले उत्पत्तेः ताभ्यामेव मित्रावरुणत्वात्। 'अहोरात्रे वै मित्रावरुणौ' (तैस. २।४।१०।१) इति श्रुतेः। स आहरति चित् समन्तान्निर्वहत्येव। हरति वा अस्य भारं जाड्यम्। चित् इत्यवधारणे। तत्कथमिति तदुच्यते। ऋतं सत्यं जगतः प्रकाशगमनादिरूपं पिपर्ति पूरयति। अनृत उक्तविलक्षणमन्धकारं गमनादिनिरोध च नि तारीत् नितरति निमज्जयति नाशयतीत्यर्थः। शिशोर्जगद्भारवहनरूपं कर्म युष्मत्सामर्थ्यादिति। ऋसा. १।१५२।३

विश्वात्मिका विराट्

[1]विराड्वाग्विराट् पृथिवी विराडन्तरिक्षं विराट् प्रजापतिः।
विराण्मृत्युः साध्यानामधिराजो बभूव तस्य भूतं भव्यं वशे स मे भूतं भव्यं वशे कृणोतु॥

अपरिमितः पुरुषः सर्वातिशायी, सर्वात्मा, अमृतत्वस्वामी, अमृतत्रिपात्, एकांशेन जगद्रूपः, विराड्जनकः विराड्जन्यश्च, हविः सर्वमेधस्य देवकृतस्य त्रयीकारणस्य, चातुर्वर्ण्यात्मकावयवसंपन्नः, स्वाङ्गेभ्यः चन्द्रमसूर्येन्द्राग्निवाय्वन्तरिक्षद्युभूमिदिशा जनकः

[2]सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्॥

सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः

---

* एते चत्वारो मन्त्रा अथर्वसंहितायामुद्धृते 'अस्यवामीय' सूक्ते उपलभ्यन्ते इत्यतोऽत्र संगृहीता।

(१) ऋसं. १०।५५।५ सलिलस्य पृष्ठे (समने बहूनां); अस. ९।१५।९, सासं. १।३।१०, २।२०।२ ऋसंवत्; मैसं. ४।९।१२ (१९७) (विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगाद। देवस्य पश्य काव्यं महित्वाद्या ममार स ह्य. समान॥), ऐआ ५।३।१।२ ऋसंवत्; तैआ. ४।२०।१ ऋसंवत्; नि. १४।१८ ऋसंवत्.

(२) अस ९।१५।१९.

(३) ऋसं. १।१५२।३ दस्या (दस्य) नि पाति (नि तारीत्), अस. ९।१५।२३.

(१) अस. ९।१५।२४.

(२) ऋसं १०।९०।१, अस. १९।६।१ सशीर्षा (सबाहु.), सासं. १।६।३ शीर्षा (शीर्षा.) विश्वतो (सर्वतो), शुसं. ३१।१ विश्वतो वृत्वा (सर्वत. स्पृत्वा); शब्रा. १३।६।२।१२; कब्रा. १ (पृ. १००), तैआ. ३।१२।१; श्वेउ. ३।१४.

पुरुषः सोऽयं सहस्रशीर्षा । सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्तः इत्यर्थः । यानि सर्वप्राणिना शिरासि तानि सर्वाणि तद्देहान्तःपातित्वात् तदीयान्येवेति सहस्रशीर्षत्वम् । एव सहस्राक्षित्वं सहस्रपादत्व च । स पुरुषो भूमिं ब्रह्माण्डगोलकरूपा विश्वतः सर्वतो वृत्वा परिवेष्टय दशाङ्गुल दशाङ्गुलपरिमित देशमत्यतिष्ठत् अतिक्रम्य व्यवस्थितः । दशाङ्गुलमित्युपलक्षणम् । ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः । ऋसा.

[1]पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥

यत् इद वर्तमान जगत् तत्सर्व पुरुष एव । यच्च भूतं अतीत जगत् यच्च भव्य भविष्यज्जगत् तदपि पुरुष एव । यथा अस्मिन्कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैव अतीतागामिनोरपि कल्पयोर्द्रष्टव्य इत्यभिप्रायः । उत अपि च अमृतत्वस्य देवत्वस्य अयमीशानः स्वामी । यत् यस्मात्कारणात् अन्नेन प्राणिनां भोग्येन अन्नेन निमित्तभूतेन अतिरोहति स्वकीया कारणावस्थां अतिक्रम्य परिदृश्यमाना जगदवस्था प्राप्नोति, तस्मात् प्राणिना कर्मफलभोगाय जगदवस्थास्वीकारान्नेद तस्य वस्तुत्वमित्यर्थः । ऋसा.

[2]एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥

अतीतानागतवर्तमानरूपं जगत् यावदस्ति एतावान् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः । न तु तस्य वास्तवस्वरूपम् । वास्तवस्तु पुरुषः अतो महिम्नोऽपि ज्यायान् अतिशयेनाधिकः । एतच्चोभय स्पष्टीक्रियते । अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादः चतुर्थोऽशः । अस्य पुरुषस्य अवशिष्ट त्रिपात्स्वरूपं अमृतं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे व्यवतिष्ठते इति शेषः । यद्यपि ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तैउ. २।१ ) इत्याम्नातस्य परब्रह्मणः इयत्ताऽभावात् पादचतुष्टयं निरूपयितु अशक्यं, तथापि जगदिद ब्रह्मस्वरूपापेक्षया अल्पमिति विवक्षितत्वात्पादत्वोपन्यासः । ऋसा.

[1]त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥

योऽयं त्रिपात् पुरुषः ससाररहितः ब्रह्मस्वरूपः सोऽयं ऊर्ध्वः उदैत् । अस्मादज्ञानकार्यात्संसाराद्बहिर्भूतः अत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान् । तस्य अस्य सोऽयं पादो लेशः सोऽयं इह मायाया पुनः अभवत् सृष्टिसंहाराभ्या पुनःपुनरागच्छति । अस्य सर्वस्य जगतः परमात्मलेशत्व भगवताऽप्युक्तम्– ' विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ' ( भ. गी. १०।४२ ) इति । ततो मायायामागत्य अनन्तर विष्वङ् देवमनुष्यतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान् । किं कृत्वा । साशनानशने अभिलक्ष्य । साशनं भोजनादिव्यवहारोपेत चेतन प्राणिजात, अनशन तद्रहितमचेतनं गिरिनद्यादिकम् । तदुभयं यथा स्यात् तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः । ऋसा.

[2]तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥

विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्च्यते । तस्मात् आदिपुरुषात् विराट् ब्रह्माण्डदेहः अजायत उत्पन्नः । विविधानि राजन्ते वस्तून्यत्रेति विराट् । विराजोऽधि विराड्देहस्योपरि त एव देहं अधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित्पुमान् अजायत । सोऽयं

(१) ऋस. १०।९०।२. असं. १९।६।४ भव्यम् ( भाव्यम् ) उत्तरार्धे (उतामृतत्वस्येश्वरो यदन्येनाभवत्सह), सासं. १।६।३ भव्यम् ( भाव्यम् ), शुसं ३१।२ सासंवत्; कब्रा. २ (पृ. १०० ), तैआ ३।१२।१, श्वेउ. ३।१५.

(२) ऋसं. १०।९०।३, असं. १९।६।३ पूर्वार्धे ( तावन्तो अस्य महिमानस्ततो ज्यायाश्च पूरुष. ), सासं. १।६।३ पूर्वार्धे ( तावानस्य महिमा ततो ज्यायाश्च पूरुष. ) विश्वा ( सर्वा ); शुसं. ३१।३, कब्रा. ३ (पृ. १०० ); तैआ. ३।१२।१, छाउ. ३।१२।६ सासंवत्.

(१) ऋसं. १०।९०।४; असं. १९।६।२ ( त्रिभिः पद्भिर्द्यामरोहत्पादस्येहाभवत्पुन. । तथा व्यक्रामद्विष्वङशनानशने अनु ॥ ), सासं. १।६।३ उत्तरार्धे ( तथा विष्वङ् व्यक्रामदशनानशने अभि ); शुसं. ३१।४; कब्रा. ४ (पृ. १०० ); तैआ. ३।१२।२ वत्पुनः ( वाँत्पुनः ).

(२) ऋसं. १०।९०।५; असं. १९।६।९ तस्माद्विराळजायत ( विराडग्रे समभवत् ); सासं. १।६।३ तस्माद्वि ( ततो वि ) शुसं. ३१।५ सासंवत्; कब्रा. ५ (पृ. १०० ), तैआ. ३।१२।२.

सर्ववेदान्तवेद्यः परमात्मा स्वयमेव स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवः अभवत्। एतच्च आथर्वणिका उत्तरतापनीये विस्पष्टमामनन्ति— ' स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्य अमूढः मूढ इव व्यवहरन्नास्ते माययैव ' ( नृ. उ. ता. १।९ ) इति । स जातो विराट् पुरुषः अत्यरिच्यत अतिरिक्तोऽभूत् । विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् । पश्चात् देवादिजीवभावादूर्ध्वं भूमिं ससर्ज इति शेषः । अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज । पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि । ऋसा.

[1]यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥

यत् यदा पूर्वोक्तक्रमेणैव शरीरेषूत्पन्नेषु सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासंभवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञं अतन्वत अन्वतिष्ठन्, तदानीं अस्य यज्ञस्य वसन्तः वसन्तर्तुरेव आज्यं आसीत् अभूत् । तमेवाज्यत्वेन सकल्पितवन्त इत्यर्थः । एवं ग्रीष्म इध्मः आसीत् । तमेवेध्मत्वेन संकल्पितवन्त इत्यर्थः । तथा शरद्धविः आसीत् । तामेव पुरोडाशादिहविष्ट्वेन संकल्पितवन्त इत्यर्थः । पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः । अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन संकल्प इति द्रष्टव्यम् । ऋसा.

[2]तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः । कीदृशमित्यत्राह— अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम् । एतच्च प्रागेवोक्तं ' तस्माद्विराळजायत विराजो अधि पूरुषः ' इति । तेन पुरुषरूपेण पशुना देवा अयजन्त मानसयागं निष्पादितवन्त इत्यर्थः । के ते देवा इत्यत्राह— साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूलाः ऋषयो मन्त्रद्रष्टारश्च ये सन्ति । ते सर्वेऽपि अयजन्तेत्यर्थः । ऋसा.

[1]तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥

सर्वहुतः सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत् । तादृशात् तस्मात् पूर्वोक्तात् मानसात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितम् । दधि चाज्यं चेत्येवमादिभोग्यजातं सर्वं संपादितमित्यर्थः । तथा वायव्यान् वायुदेवताकान् लोकप्रसिद्धान् आरण्यान् पशून् चक्रे उत्पादितवान् । आरण्या हरिणादयः । तथा ये च ग्राम्याः गवाश्वादयः तानपि चक्रे । पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते— ' वायवः स्थेत्याह । वायुर्वा अन्तरिक्षस्याध्यक्षाः । अन्तरिक्षदेवत्याः खलु वै पशवः । वायव एवैनान्परिददाति ' ( तैब्रा. ३।२।१।३ ) इति । ऋसा.

[2]तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥

सर्वहुतः तस्मात् पूर्वोक्तात् यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नाः । तस्माद्यज्ञात् छन्दांसि गायत्र्यादीनि जज्ञिरे । तस्माद्यज्ञात् यजुरपि अजायत । ऋसा.

[3]तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥

तस्मात् पूर्वोक्ताद्यज्ञात् अश्वा अजायन्त उत्पन्नाः ।

---

(१) ऋसं १०।९०।६; असं. १९।६।१०, शुसं. ३१।१४ न्तो अस्या ( न्तोऽस्या ), कब्रा. ६ ( पृ. १०० ), तैआ. ३।१२।३.

(२) ऋसं १०।९०।७; असं. १९।६।११ पूर्वार्धे ( तं यज्ञं प्रावृषा प्रौक्षन्पुरुषं जातमग्रशः ) ऋषयश्च ( वसवश्च ), शुसं. ३१।९; कब्रा. ७ ( पृ. १०० ); तैआ. ३।१२।३.

(१) ऋसं. १०।९०।८; असं. १९।६।१४; शुसं. ३१।८; कब्रा. ८ ( पृ. १०० ), तैआ. ३।१२।५.

(२) ऋसं. १०।९०।९; असं. १९।६।१३ छन्दांसि ( छन्दो ह ); शुसं. ३१।७; कब्रा. ९ ( पृ. १०० ); तैआ. ३।१२।४.

(३) ऋसं. १०।९०।१०; असं. १९।६।१२ ये के ( ये च के ); शुसं. ३१।८; कब्रा. १० ( पृ.१०० ); तैआ. ३।१२।५.

तथा ये के च अश्वव्यतिरिक्ता गर्दभा अश्वतराश्च उभयादतः ऊर्ध्वाधोभागयोरुभयोर्दन्तयुक्ताः सन्ति तेऽपि अजायन्त । तथा, तस्माद्यज्ञात् गावश्च जज्ञिरे । किंच तस्माद्यज्ञात् अजावयश्च जाताः । ऋसा.

[1]यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तु ब्रह्मवादिना प्रश्ना उच्यन्ते । प्रजापतेः प्राणरूपा देवाः यत् यदा पुरुष विराड्रूप व्यदधुः सकल्पेनोत्पादितवन्तः, तदानी कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः । अस्य पुरुषस्य मुख किमासीत् । कौ बाहू अभूताम् । का ऊरू कौ च पादौ उच्येते । प्रथम सामान्यरूपः प्रश्नः, पश्चान्मुख किमित्यादिना विशेषविषयाः प्रश्नाः । ऋसा.

[2]ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥

इदानी पूर्वोक्ताना प्रश्नाना उत्तराणि दर्शयति । अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषो मुख आसीत् । मुखादुत्पन्न इत्यर्थः । योऽय राजन्यः क्षत्रियत्वजातिमान्पुरुषः सः बाहू कृतः बाहुत्वेन निष्पादितः । बाहुभ्यामुत्पादित इत्यर्थः । तत् तदानी अस्य प्रजापतेः यत् यौ ऊरू तद्रूपो वैश्यः सपन्नः ऊरुभ्यामुत्पन्न इत्यर्थः । तथा अस्य पद्भ्या पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषः अजायत । इय च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः यजुःसहिताया सप्तमकाण्डे– ‘ स मुखतस्त्रिवृतं निरमिमीत ’ ( तैस. ७।१।१।४ ) इत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये । ऋसा.

(१) ऋसं. १०।९०।११; असं. १९।६।५ कौ बाहू का ऊरू ( कि बाहू किमूरू ); शुसं. ३१।१० उत्तरार्धे ( मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते ), कब्रा. ११ ( पृ. १०१ ), तैआ. ३।१२।५ का ...... उच्येते ( कावूरू पादावुच्येते ).

(२) ऋसं. १०।९०।१२; असं. १९।६।६ न्यः कृत. ( न्योऽभवत् ) ऊरू ( मध्यं ), शुसं. ३१।११, कब्रा. १२ ( पृ. १०१ ), तैआ. ३।१२।५.

[1]चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥

यथा दध्याज्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदाः ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः, एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह– प्रजापतेः मनसः सकाशात् चन्द्रमाः जातः । चक्षोश्च चक्षुषः सूर्योऽपि अजायत । अस्य मुखात् इन्द्रश्च अग्निश्च देवौ उत्पन्नौ । अस्य प्राणात् वायुरजायत । ऋसा.

[2]नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥

यथा चन्द्रादीन् प्रजापतेर्मनःप्रभृतिभ्यः अकल्पयन्, तथा अन्तरिक्षादीन् लोकान् प्रजापतेर्नाभ्यादिभ्यो देवाः अकल्पयन् उत्पादितवन्तः । एतदेव दर्शयति– नाभ्याः प्रजापतेर्नाभेः अन्तरिक्षमासीत् । शीर्ष्णः शिरसो द्यौः समवर्तत उत्पन्ना । अस्य पद्भ्या पादाभ्या भूमिरुत्पन्ना । अस्य श्रोत्रात् दिशः उत्पन्नाः । ऋसा.

[3]सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥

अस्य साकल्पिकयज्ञस्य गायत्र्यादीनि सप्त छन्दांसि परिधयः आसन् । ऐष्टिकस्याहवनीयस्य त्रयः परिधयः, उत्तरवेदिकाः त्रयः, आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः । अत एव आम्नायते–‘ न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षास्यपहन्ति ’ ( तैसं. २।६।६।३ ) इति । तत एते आदित्यसहिताः सप्त परिधयः अत्र सप्त छन्दोरूपाः । तथा समिधस्त्रिः सप्त त्रिगुणीकृतसप्तसख्याकाः एकविंशतिः कृताः । ‘ द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ’ ( तैस. ५।१।१०।३ ) इति श्रुताः पदार्था एकविंशतिदारुयुक्ते-

(१) ऋसं. १०।९०।१३; असं. १९।६।७; शुसं. ३१।१२ उत्तरार्धे ( श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ), कब्रा. १३ ( पृ. १०१ ), तैआ. ३।१२।६.

(२) ऋसं. १०।९०।१४, असं. १९।६।८; शुस ३१।१३; कब्रा. १४ ( पृ. १०१ ), तैआ. ३।१२।६.

(३) ऋसं. १०।९०।१५, असं. १९।६।१५; शुसं. ३१।१५; कब्रा. १५ ( पृ. १०१ ); तैआ. ३।१२।३.

ध्मत्वेन भाविताः। यत् यः पुरुषः वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानस यज्ञं तन्वानाः कुर्वाणाः पशुं अबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेव अभिप्रेत्य पूर्वत्र 'यत्पुरुषेण हविषा' इत्युक्तम्। ऋसा.

[1]यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥

पूर्वं प्रपञ्चेनोक्तमर्थं सक्षिप्य अत्र दर्शयति—देवाः प्रजापतिप्राणरूपाः यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञ यथोक्तयज्ञस्वरूप प्रजापतिं अयजन्त पूजितवन्तः। तस्मात् पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि आसन्। एतावता सृष्टिप्रतिपादकसूक्तभागार्थः सगृहीतः। अथोपासनतत्फलानुवादकभागार्थः संगृह्यते। यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातनाः विराडुपास्तिसाधकाः देवाः सन्ति तिष्ठन्ति तत् नाकं विराट्प्राप्तिरूप स्वर्गं ते महिमानः तदुपासका महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति। ऋसा.

धारकौ मातरिश्वना सहितौ घर्मौ सुपर्णौ, वस्तुत. एक एव सुपर्णः ऋषिभिः बहुधा कल्पितः यज्ञियः

[2]*घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम।
दिवस्पयो दिधिषाणा अवेषन्विदुर्देवाः सहसामानमर्कम्॥

समन्ता समन्तौ संव्याप्तदिगन्तौ घर्मा। घृ क्षरणदीप्त्योः। घर्मौ दीप्यमानावग्न्यादित्यौ त्रिवृतम्। 'त्रयो वा इमे त्रिवृतो लोकाः' ( ऐआ. १।१।२ ) इत्याम्नानात्। त्रैलोक्य व्यापतुः स्वतेजोभिर्व्याप्तवन्तौ। मातरिश्वा अन्तरिक्षे वर्तमानो वायुः तयोरग्न्यादित्ययोः जुष्टिं प्रीतिं जगाम गतवान्। यदा सहसामानम्। सामशब्द उपलक्षकः। वेदत्रयतेजःसहितम्। 'सर्वं तेजः सामरूप्यं ह शश्वत्' ( तैब्रा. ३।१२।९।२ ) इत्याम्नानात्। ईदृशं अर्कं अर्चनीयं सूर्यं देवाः दीप्यमानाः स्वरश्मयो विदुः विविदुः लेभिरे प्रापुः तदा दिधिषाणाः लोकधारणशीलास्ते दिवः द्युलोकस्य संबन्धि पयः उदकं अवेषन् व्याप्तवन्तः ववर्षुरित्यर्थः। यद्वा। समन्तौ संगतौ घर्मौ स्वयं दीप्यमानौ जीवेश्वरौ त्रिवृतं सत्त्वरजस्तमोगुणात्मिकां माया व्यापतुः। नियन्तृनियन्तव्यभावेन मातरिश्वा परमात्मा तयोर्जुष्टिं सभोक्तव्यपदार्थैः संजातां प्रीतिं जगाम गतवान्। तं परमात्मानं वेदमयं इम सूर्यमिति देवा जानन्ति।

ऋसा.

[1]तिस्रो देष्ट्राय निर्ऋतीरुपासते दीर्घश्रुतो वि हि जानन्ति वह्नयः।
तासां नि चिक्युः कवयो निदानं परेषु या गुह्येषु व्रतेषु॥

निर्ऋतीः, पृथिवीनामैतत्। अनेनेतरलोकावुपलक्ष्येते। तत्र अधिष्ठितास्तिस्रः अग्न्यादिदेवताः देष्ट्राय हविषां प्रदानाय उपासते यजमाना उपासनं कुर्वते। ततो दीर्घश्रुतः प्रभूतकीर्तयो वह्नयः जगतः प्रापिकास्ता देवता वि जानन्ति। एतैः कृतामुपासनां मन्वत एव। यद्वा। निर्ऋतीः, निःशेषेण ऋच्छन्ति गच्छन्तीति निर्ऋतयः। ताः तिस्रः सृष्टिस्थितिसहृतीः देष्ट्राय आत्मनः कर्मभोगदानाय उपासते ते दीर्घश्रुतो दीर्घं ससारे शृण्वन्तो मन्तव्यदृश्यादिपदार्थं जानन्तः मन्त्रद्रष्ट्यादिरूपमजानन्त इत्यर्थः। अत एव वह्नयः संसारस्य वोढारः ता न जानन्ति। कवयः क्रान्तदर्शिनस्तु तासा सृष्ट्यादीनां अग्न्यादीना वा निदान मूलकारण परमात्मानं नि चिक्युः नितरां चिन्वन्ति जानन्ति। परेषु उत्कृष्टेषु वा गुह्येषु वा गोप्तव्येषु कर्मसु यमनियमादिषु व्रतेषु याः प्रवृत्तयः सन्ति तासा निदान नि चिक्युः जानन्ति। ऋसा.

---

* अस्य सूक्तस्य परमात्मपरता न स्पष्टतया प्रतीयते। तथापि सायणाचार्येण तथा व्याख्यानादत्र संगृहीतं, 'एकं सन्तं बहुधा कल्पयन्ति' इति लिङ्गाच्च। वस्तुतस्तु सूर्याग्निपरता अस्य सूक्तस्य स्यात्।

(१) ऋसं. १०।९०।१६. अन्यस्थलादिनिर्देशः (२२८) पृष्ठे अस्मिन्नेव मन्त्रे द्रष्टव्य..

(२) ऋसं. १०।११४।१.

(१) ऋसं. १०।११४।२.

**[1]चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।**
**तस्यां सुपर्णा वृषणा नि षेदतुर्यत्र देवा दधिरे भागधेयम् ॥**

चतुष्कपर्दा, चतुष्कोणा युवतिः स्त्रीरूपा सुपेशाः शोभनालङ्कारा घृतप्रतीका घृतप्रमुखहविष्का एतादृशी वेदिः वयुनानि ज्ञातव्यानि पदार्थजातानि कर्माणि स्तोत्राणि वा वस्ते आच्छादयति । तस्यां वेद्या वृषणा वृषणौ हविषा वर्षितारौ सुपर्णा सुपर्णौ सुपतनौ जायापती यजमानब्रह्माणौ वा नि षेदतुः निषण्णौ भवतः। यत्र यस्या वेद्या देवा अग्न्यादयो भागधेयं स्वस्वभाग हविः दधिरे धारयन्ति। यद्वा। चतुष्कपर्दा नामाख्यातोपसर्गनिपाताश्चत्वारः कपर्दस्थानीया यस्याः सा युवतिस्तरुणी नित्या घृतप्रतीका दीप्यमानवर्णावयवा एषा औपनिषदी वाक् वयुनानि ज्ञानानि वस्ते आच्छादयति। तस्या वाचि सुपर्णा सुपर्णौ जीवपरमात्मानौ निषण्णौ भवतः। यत्र यया वाचा देवा भाग धारयन्ति ।

ऋसा.

**[2]एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे।**
**तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥**

एकः सर्वकार्येष्वसहायः सुपर्णः सुपतनः मध्यमस्थानो देवः समुद्र अन्तरिक्ष आ विवेश आविशति । आविश्य च स इद विश्व सर्व भुवनं भूतजात वि चष्टे । अनुग्राह्यतया अभिपश्यति । त एवरूपं देव पाकेन परिपक्केन मनसा अन्तितः समीपे अहं अपश्यं अदर्शम् । किंच, माता उदकानां निर्मात्री माध्यमिका वाक् ता रेळ्हि आस्वादयति । उपजीवनमात्र अत्र लक्ष्यते। स उ सः खलु मातर वाचं रेळ्हि लेढि तामेवोपजीवति । लिह आस्वादने । यद्वा । सुपर्णः पक्षवान् निराधारसचारी एकः प्राणवायुः परमात्मा वा समुद्रम् । समुद्द्रवन्त्यापोऽस्मादिति समुद्र अन्तरिक्षम्। यद्वा । समुद्द्रवण सर्वतो गमन, तच्छील प्रपञ्चजातमाविष्टवान् । 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तैउ. २।६) इति श्रुतेः । वायुपक्षे वाय्वादिरूपेण आ विवेश । स इद विश्व सर्व लोक वि चष्टे विशेषेण ख्यापयति । सति हि प्राणे परमात्मनि वा जीवन्तः पुरुषा लोक विख्यातं कुर्वन्ति । तं देवं उपासकः अह पाकेन परिपक्कज्ञानेन मनसा अन्तितः । अन्तिकशब्दात्तसिः। अन्तिके समीपे स्वहृदये अपश्यम्। त प्राण माता वाक् रेळ्हि, वाक् प्राणे अन्तर्भवतीत्यर्थः। स्वापे हि वाग्व्यापारः न दृश्यते प्राणव्यापारस्तु दृश्यते इति ।

ऋसा.

**[1]सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति ।**
**छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश ॥**

विप्राः मेधाविनः कवयः क्रान्तप्रज्ञाः मनुष्याः सुपर्ण सुपतन एकं सन्तं परमात्मान वचोभिः स्तुतिलक्षणैर्वचनैः बहुधा बहुप्रकार कल्पयन्ति कुर्वन्ति । किंच, त एव कवयः अध्वरेषु यज्ञेषु छन्दासि गायत्र्यादीनि सप्त छन्दांसि दधतः स्तोत्रशस्त्रादिना धारयन्तः द्वादशसख्याकान् सोमस्य ग्रहान् ग्रहणसाधनानि पात्राणि उपांश्वन्तर्यामादीनि मिमते निर्मिमते । ग्रहान्, गृह्यते एभिरिति ग्रहाः ।

ऋसा.

**[2]षट्त्रिंशांश्च चतुरः कल्पयन्तश्छन्दांसि च दधत आद्वादशम् ।**
**यज्ञं विमाय कवयो मनीष ऋक्सामाभ्यां प्र रथं वर्तयन्ति ॥**

पूर्व सामान्येन यज्ञग्रहानुक्त्वा इदानीं सर्वग्रहादिपूर्वकः यज्ञः अभिधीयते । षट्त्रिंशान्। द्वावुपांश्वन्तर्यामौ। ऐन्द्रवायवादयस्त्रयो द्विदेवत्यग्रहाः । द्वौ शुक्रामन्थिनौ । आग्रयण उक्थ्यो ध्रुवश्चेति त्रयः । ऋतुग्रहा द्वादश । ऐन्द्राग्नो वैश्वदेवश्च द्वौ । त्रयो मरुत्वतीयाः । एको

(१) ऋसं. १०।११४।३, तैब्रा. ३।७।७।१४ (चतुःशिखण्डा युवतिः सुपेशाः । घृतप्रतीका भुवनस्य मध्ये । तस्या सुपर्णावधि यौ निविष्टौ । तयोर्देवानामधि भागधेयम्॥).

(२) ऋसं. १०।११४।४; ऐआ. ३।१।६।१५; नि. १०।४६.

(१) ऋसं. १०।११४।५.

(२) ऋसं. १०।११४।६.

माहेन्द्रः । आदित्यसावित्रौ द्वौ । वैश्वदेवः पात्नीवतो हारियोजन इति त्रयो ग्रहाः । एव षट्त्रिंशत् भवन्ति । अत्यग्निष्टोमे पूर्वे षट्त्रिंशद्ग्रहाः द्वौ अस्वदाभ्यौ दधिग्रहः षोडशी इति च इति चत्वारः । एतान् चत्वारिंशत्सख्याकान् ग्रहान् कल्पयन्तः सोमेन पूरयन्तः । किंच आद्वादश द्वादशसंख्याकप्रउगादिशस्त्रसमाप्तिपर्यन्तं छन्दांसि गायत्र्यादीनि दधतः स्तुतशस्त्रादिरूपेण धारयन्तः कवयो मनीषा । तृतीयाया आकारः । मनीषया बुद्ध्या एवं यज्ञ विमाय निर्माय रथम् । रमन्त्यत्रेति रथो यज्ञः । तं रथ यज्ञं ऋक्सामाभ्या प्र वर्तयन्ति प्रकर्षेण सपादयन्ति । ऋसा.

चतुर्दशान्ये महिमानो अस्य तं धीरा वाचा प्र णयन्ति सप्त ।
आप्रानं तीर्थं क इह प्र वोचद्येन पथा प्रपिबन्ते सुतस्य ॥(१)

अस्य यज्ञरूपस्य परमात्मनः अन्ये चतुर्दश चतुर्दशसंख्याका महिमानो विभूतयो भवन्ति । तं यज्ञ सप्त सप्तसंख्याकाः धीराः धीमन्तो होत्रादयो वाचा शस्त्ररूपया प्र णयन्ति प्रकर्षेण नयन्ति । आप्नान व्यापनशील तीर्थं पापोत्तारणसमर्थं चात्वालोत्करमध्यदेश इह अस्मिन्यज्ञे कः प्र वोचत् को वक्ति । न कोऽपीत्यर्थः । येन पथा येन यज्ञमार्गेण सुतस्य अभिषुतं सोम प्रपिबन्ते देवा अतिशयेन पिबन्ति । ऋसा.

सहस्रधा पञ्चदशान्युक्था यावद्द्यावापृथिवी तावदित्तत् ।
सहस्रधा महिमानः सहस्रं यावद्ब्रह्म विष्ठितं तावती वाक् ॥(२)

सहस्रधा सहस्रसंख्याकेपु ब्रह्मादिस्तम्बपर्यन्तेषु देहेपु पञ्चदशानि । चक्षुः श्रोत्र मनो वाक् प्राण इत्येतानि पञ्च । तदाधारत्वेन मातापित्रोः सकाशादागतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि भूतानि मिलितानि दश । एवं पञ्चदशसख्याकानि उक्था उक्थानि उत्कृष्टान्यङ्गानि विद्यन्ते प्राणिदेहेषु जातेषु । द्यावापृथिवी द्यावापृथिव्योर्यावद्यत्परिमाणमस्ति तावत् इत् तत् परिमाणमेव आत्माधिष्ठित प्राणिदेहजातं भवति । किंच, सहस्रधा सहस्रसख्याकेषु सहस्र महिमानः सहस्रसख्याका महान्तो व्यवहारविशेषा भवन्ति* । प्रतिविषय प्रतिक्षण दर्शनश्रवणादिव्यवहारनिष्पत्तेः । ब्रह्म जगत्कारण वस्तु यावन्नानाविधप्राणिदेहरूपेण यावत्परिमाणं भूत्वा विष्ठित विशेषेण स्थित वाक् तावती तत्परिमाणा भवति । एकैकस्याभिधेयार्थस्यैकैकनामापेक्षणात् । अन्यत्रापि श्रूयते—' सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन्यदास्ते ' ( तैआ. ३।१२।७ ) इति । 'सहस्रधा पञ्चदशान्युक्था इति पञ्च हि दशतो भवन्ति ' ( ऐआ. १।३।८ ) इत्यादिकमारण्यकमत्रानुसधेयम् । ऋसा.

कश्छन्दसां योगमा वेद धीरः को धिष्ण्यां प्रति वाचं पपाद ।
कमृत्विजामष्टमं शूरमाहुर्हरी इन्द्रस्य नि चिकाय कः स्वित् ॥(१)

धीरो धीमान् कः मानुषः छन्दसां गायत्र्यादीना योग स्तुतशस्त्रात्मना नियोग आ वेद आजानाति । कः वा धिष्ण्या, धिष्ण्यानि होत्रादीना सप्त स्थानानि । तदर्हां वाच प्रति पपाद प्रतिपादयति करोति । किंच ऋत्विजा होत्रादीना सप्ताना अष्टमं अष्टसख्यापूरक शूर स्वतन्त्रं कं आहुः वदन्ति । कः स्वित् कः खलु इन्द्रस्य हरी ऋक्सामरूपौ द्वावश्वौ । ' ऋक्सामे वा इन्द्रस्य हरी ' ( तैसं. ६।५।९।२ ) इत्याम्नायते । तादृशौ हरी नि चिकाय नितरा पूजयति जानाति । वेदिता प्रतिपादयिता अष्टसख्यापूरकस्य देवस्य ज्ञाता वा परमात्मनोऽन्यः नास्तीत्यर्थः । ऋसा.

ज्येष्ठं ' तत् ' इति निर्दिष्टं इन्द्रस्य जनकम्

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥(२)

(१) ऋसं. १०।११४।७.
(२) ऋसं. १०।११४।८; ऐआ. १।३।८।६.

(१) ऋसं. १०।११४।९.
(२) ऋसं. १०।१२०।१, असं. ५।२।१, २०।१०७।४ यं विश्वे मदन्त्यूमाः ( यदेनं मदन्ति विश्व ऊमा. ); सासं. २।१३।६; शुसं. ३३।८०; शाब्रा. १९।९, २५।११, ऐआ. १।३।४।१, ५।१।६।१, ५।१।६।५; नि. १४।२४.

तत् जगत्कारणत्वेन सर्ववेदान्तप्रसिद्धम् । इच्छब्दोऽवधारणे । भुवनेषु सत्सु पृथिव्यादिषु लोकेषु मध्ये जगत्कारण ब्रह्मैव ज्येष्ठं प्रशस्ततम आस बभूव । तस्य परमार्थत्वात् तव्यतिरिक्ताना व्यावहारिकत्वाच्च । यद्वा । ज्येष्ठ वृद्धतम जगत्कारणत्वेन सर्वेषामादिभूत बभूव । यद्वा । वृद्ध तदेव ब्रह्म स्वप्रकाशतया आस दिदीपे । यतः उपादानभूतात् यस्माद्ब्रह्मणः उग्रः उद्गूर्णः त्वेषनृम्णः प्रदीप्तबलः सूर्यात्मक इन्द्रो जज्ञे जातो बभूव । श्रूयते हि –'चक्षोः सूर्यो अजायत' ( ऋस. १०।९०।१३ ) इति । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' ( ऋस. १०।१९०।३ ) इति च । स च जज्ञानो जायमान एव सद्यः शीघ्र शत्रून् शातयितॄन् मन्देहादीन् राक्षसान् नि रिणाति निहिनस्ति । यद्वा । उपासकाना पापरूपान् शत्रून् निहन्ति । तथा च ब्राह्मणम्–'सद्यो ह्येष जातः पाप्मानमपाहत' ( ऐआ. १।३।४ ) इति । विश्वे सर्वे ऊमाः । अवन्ति रक्षन्तीत्यूमाः प्राणिनः । सर्वे प्राणिनो यं सूर्यात्मकं उद्यन्तं इन्द्रं अनुलक्ष्य मदर्थमुदगान्मदर्थमुदगादिति मदन्ति हृष्यन्ति । तथा च ब्राह्मणम् –'भूतानि वै विश्व ऊमास्त एनमनुमदन्त्युदगादुदगादिति' ( ऐआ. १।३।४ ) इति । तैत्तिरीयक च –'तस्मात्सर्व एव मन्यते मा प्रत्युदगादिति' ( तैस. ६।५।४।२ ) इति । यद्वा । यं स्तुत्यादिभिः माद्यन्तं अनु पश्चात् सर्वे प्राणिनः अभीष्टप्राप्त्या हृष्यन्ति । स इन्द्रो जज्ञे इत्यन्वयः । ऋसा.

अहमादिष्टा सर्वात्मरूपा वाक्, रुद्रवस्वादित्यविश्वदेवरूपेण संचरन्ती, मित्रवरुणेन्द्राग्न्यश्विसोमत्वष्टृपूषभगधारिणी, ईश्वरी, यजमानायर्थद्रविणधर्त्री, यज्ञियानां प्रथमा, भूतजातेषु आत्मानं प्रवेशयन्ती, दर्शनश्रवणभुक्तिजीवनव्यापारप्रयोक्त्री, यदज्ञानादुपक्षयः अज्ञानिना, देवमनुष्यप्रियवाचा वक्त्री, ऋषित्वक्षत्रब्रह्ममेधाना विधात्री, रुद्रस्यापि प्रेरयित्री, द्यावापृथिव्योराविष्टा, द्युजननी, सर्वभूतास्थिता भूतजननी, द्यावापृथिव्योः परा

**अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।**
**अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥**

(१) ऋसं. १०।१२५।१, असं. ४।३०।१.

अहं सूक्तस्य द्रष्ट्री वागाम्भृणी यद्ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभिः रुद्रैरेकादशभिः तदात्मना चरामि। एव वसुभिरित्यादौ तत्तदात्मना चरामीति योज्यम् । तथा मित्रावरुणा मित्र च वरुण च उभा उभौ अहं एव ब्रह्मीभूता बिभर्मि धारयामि । इन्द्राग्नी अप्यहमेव धारयामि । उभा उभौ अश्विना अश्विनावपि अहमेव धारयामि । मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं सत् दृश्यते । माया च जगदाकारेण विवर्तते । तादृश्या मायाया आधारत्वेन असङ्गस्यापि ब्रह्मणः उक्तस्य सर्वस्योत्पत्तिः । ऋसा.

**अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।**
**अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते ॥**

आहनसं आहन्तव्यं अभिषोतव्यं सोमम् । यद्वा । शत्रूणामाहन्तार दिवि वर्तमान देवतात्मान सोममहमेव बिभर्मि । तथा त्वष्टारं उतापि च पूषण भग चाहमेव बिभर्मि । तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविर्देवाना प्रापयित्रे तर्पयित्रे सुन्वते सोमाभिषव कुर्वते ईदृशाय यजमानाय द्रविणं धन यागफलरूप अहं एव दधामि धारयामि । एतच्च ब्रह्मणः फलदातृत्वं 'फलमत उपपत्तेः' ( ब्रसू. ३।२।३८ ) इत्यधिकरणे भगवता भाष्यकारेण समर्थितम् । ऋसा.

**अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।**
**तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥**

अहं राष्ट्री । ईश्वरनामैतत् । सर्वस्य जगतः ईश्वरी । तथा वसूनां धनानां सगमनी सगमयित्री उपासकानां प्रापयित्री । चिकितुषी यत् साक्षात् कर्तव्यं परं ब्रह्म तज्ज्ञातवती स्वात्मतया साक्षात्कृतवती । अत एव यज्ञियानां यज्ञार्हाणा प्रथमा मुख्या । या एवगुणविशिष्टा अहं ता मां

(१) ऋसं. १०।१२५।२; असं. ४।३०।६ द्रविण ( द्रविणा ) प्राव्ये ( प्राव्या ).

(२) ऋसं. १०।१२५।३; असं. ४।३०।२ शयन्तीम् ( शयन्तः ).

भूरिस्थात्रां बहुभावेन प्रपञ्चात्मनाऽवतिष्ठमाना भूरि भूरीणि बहूनि भूतजातान्यावेशयन्तीं जीवभावेनात्मान प्रवेशयन्ती ईदृशी मा पुरुत्रा बहुषु देशेषु व्यदधुः देवा विदधति कुर्वन्ति । उक्तप्रकारेण वैश्वरूप्येणावस्थानात्। यद्यत् कुर्वन्ति तत्सर्व मामेव कुर्वन्ति इत्यर्थः । ऋसा.

**मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्।**
**अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥**

यः अन्नमत्ति सः भोक्तृशक्तिरूपया मयैव अन्नमत्ति। यश्च विपश्यति आलोकयतीत्यर्थः । यश्च प्राणिति श्वासोच्छ्वासरूप व्यापार करोति सोऽपि मयैव। यश्च उक्तं शृणोति । ये ईदृशी अन्तर्यामिरूपेण स्थिता मां न जानन्ति ते अमन्तवः अमन्यमानाः अजानन्तः उप क्षियन्ति उपक्षीणाः ससारेण हीना भवन्ति। यद्वा। मा अमन्तवो मद्विषयज्ञानरहिता इत्यर्थः । हे श्रुत विश्रुत सखे श्रुधि मया वक्ष्यमाणं शृणु । किं तत् श्रोतव्यम्। श्रद्धिव, श्रद्धिः श्रद्धा, तया युक्तं श्रद्धायत्नेन लभ्यमित्यर्थः। ईदृशं ब्रह्मात्मक वस्तु ते तुभ्यं वदामि उपदिशामि । ऋसा.

**अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।**
**यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥**

अहं स्वयमेव इद वस्तु ब्रह्मात्मक वदामि उपदिशामि । देवेभिः देवैः इन्द्रादिभिः अपि जुष्ट सेवितम्। उतापि च मानुषेभिः मनुष्यैः अपि जुष्टम्। ईदृग्वस्त्वात्मिकाऽह यं कामये यं पुरुष रक्षितुमहं वाञ्छामि, तंत पुरुष उग्रं कृणोमि सर्वेभ्यः अधिक करोमि। तमेव ब्रह्माण स्रष्टार करोमि । तमेव ऋषिं अतीन्द्रियार्थदर्शिन करोमि । तमेव सुमेधा शोभनप्रज्ञ च करोमि। ऋसा.

(१) ऋसं. १०।१२५।४; असं. ४।३०।४ सो अन्न ( सोऽन्न ) श्रद्धिवं ( श्रद्धेयं ).

(२) ऋसं. १०।१२५।५, असं. ४।३०।३ देवेभिरुत मानुषेभि· ( देवानामुत मानुषाणाम् ).

**अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।**
**अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥**

पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य महादेवस्य धनुः चाप अहं आ तनोमि ज्यया आतत करोमि । किमर्थम् । ब्रह्मद्विषे ब्राह्मणाना द्वेष्टार शरवे शरु हिंसक त्रिपुरनिवासिनमसुर हन्तवै हन्तु हिंसितुम्। उशब्दः पूरकः। अहमेव समदं, समान माद्यन्त्यस्मिन्निति समत् सग्रामः। स्तोतृजनार्थं शत्रुभिः सह सग्राम अहमेव कृणोमि करोमि। तथा द्यावापृथिवी दिवं च पृथिवी च अन्तर्यामितया अहमेव आ विवेश प्रविष्टवती । ऋसा.

**अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे ।**
**ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥**

'द्यौः पिता' (तैब्रा. ३।७।५।४) इति श्रुतेः पिता द्यौः। पितरं दिव अहं सुवे प्रसुवे जनयामि। 'आत्मन आकाशः सभूतः' ( तैउ. २।१ ) इति श्रुतेः । कुत्रेति तदाह । अस्य परमात्मनो मूर्धन् मूर्धन्युपरि । कारणभूते तस्मिन् हि वियदादिकार्यजात सर्वं वर्तते तन्तुषु पट इव । मम च योनिः कारण समुद्रे। समुद्द्रवन्त्यस्माद्भूतजातानीति समुद्रः परमात्मा । तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिषु अन्तः मध्ये यद्ब्रह्म चैतन्य तन्मम कारणमित्यर्थः। यतः ईदृग्भूताऽहं अस्मि ततो हेतोः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अनु प्रविश्य वि तिष्ठे विविधं व्याप्य तिष्ठामि । उत अपि च अमू द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम्। उपलक्षणमेतत्। एतदुपलक्षित कृत्स्न विकारजात वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उप स्पृशामि । यद्वा। अस्य भूलोकस्य मूर्धन् मूर्धन्युपरि अहं पितरमाकाश सुवे। समुद्रे जलधौ अप्सु उदकेषु अन्तः मध्ये मम

(१) ऋसं. १०।१२५।६; असं. ४।३०।५.

(२) ऋसं. १०।१२५।७; असं. ४।३०।७ भुवनानु ( भुवनानि ).

योनिः कारणभूतः अम्भृणाख्य ऋषिः वर्तते। यद्वा। समुद्रे अन्तरिक्षे अप्सु अम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्म चैतन्य वर्तते। ततः अहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि। अन्यत् समानम्।

ऋसा.

**अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा।**
**परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव॥**

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव प्र वामि प्रवर्ते वातइव। यथा वातः परेण अप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत्। उक्तं सर्वं निगमयति। परो दिवा। पर इति सकारान्त परस्तादित्यर्थे वर्तते यथा अधः इत्यधस्तादर्थे। दिवः आकाशस्य परस्तात्। एना पृथिव्या अस्याः पृथिव्याः परः परस्तात्। द्यावापृथिव्योरुपादानमुपलक्षणम्। एतदुपलक्षितात्सर्वस्मात् विकारजातात्परस्तात् वर्तमाना असङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपा अहं महिना महिम्ना एतावती स बभूव। एतच्छब्देनोक्त सर्वं परामृश्यते। एतत्परिमाणमस्याः। सर्वजगदात्मना अहं संभूताऽस्मि।

ऋसा.

सदसत्परं, रजसो व्योम्नश्चातीतं, अम्भसा विरहितं, अनावरकमावरणीयाभावात्, अमृतमृत्युशून्यं अहोरात्रविवर्जितं परममेकमेव अवातं चेतनं, अलक्षणं तमोरूपं गूढं, सलिलात्मक विभु तपसा जन्मशीलं, कामात्मकसद्बीजधरं, विततरश्मिधराणा रेतोधराणां महता जन्मदं, ऐहिकभोगामुष्मिकप्रयाणकरं, देवानामप्यर्वाचीनत्वादविज्ञेयं विसृष्टिकारणं, परमव्योमाध्यक्षस्याप्रमेयसर्गस्थिति

**नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।**
**किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्॥**

'तपसस्तन्महिनाजायतैक' (ऋस. १०।१२९।३) इत्यादिना अग्रे सृष्टिः प्रतिपादयिष्यते। अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते। तदानीं प्रलयदशायां अवस्थित यदस्य जगतो मूलकारण तत् असत् शशविषाणवन्निरुपाख्यं नासीत्। न हि तादृशात्कारणात् अस्य सतो जगत उत्पत्तिः संभवति। तथा नो सत् नैव सदात्मवत् सत्त्वेन निर्वाच्यमासीत्। यद्यपि सदसदात्मकं प्रत्येक विलक्षण भवति तथापि भावाभावयोः सहावस्थानमपि संभवति। कुतस्तयोस्तादात्म्यमिति उभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः। ननु नो सदिति पारमार्थिकसत्त्वस्य निषेधः। तर्हि आत्मनोऽपि अनिर्वाच्यत्वप्रसङ्गः। अथोच्येत। न। आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते। परिशेषान्मायाया एव अत्र सत्त्व निषिध्यते इति। एवमपि तदानीमिति विशेषणानर्थक्यं, व्यवहारदशायामपि तस्याः पारमार्थिकसत्त्वाभावात्। अथ व्यावहारिकसता पृथिव्यादीना भावाना विद्यमानत्वात्कथ नो सदिति निषेधः। तत्राह—नासीद्रजः इत्यादि। 'लोका रजास्युच्यन्ते' (नि. ४।१९) इति यास्कः। अत्र च सामान्यापेक्षमेकवचनम्। व्योम्नो वक्ष्यमाणत्वात्तस्याधस्तनाः पातालादयः पृथिव्यन्ता नासन्नित्यर्थः। तथा व्योम अन्तरिक्षं तदपि नो नैवासीत्। पर इति सकारान्त परस्तादित्यर्थे वर्तते। परो व्योम्नः परस्तादुपरिदेशे द्युलोकप्रभृतिसत्यलोकान्तं यदस्ति तदपि नासीदित्यर्थः। अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति। अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेश तदावरणनिमित्त च आक्षेपमुखेन क्रमेण निषेधयति किमावरीवरिति। किं आवरणीय तत्त्वं आवरकभूतजातं आवरीवः अत्यन्तमावृणुयात्। आवार्याभावात् तदा आवरकमपि नासीदित्यर्थः। यद्वा। किमिति प्रथमैव। किं तत्त्वमावरकमावृणुयात्। आवार्यभावात् आव्रियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः। आवृण्वत् तत्तत्त्वं कुह कुत्र देशेऽवस्थाय आवृणोति। आधारभूतः तादृशो देशोऽपि नासीदित्यर्थः। कस्य शर्मन्

(१) ऋसं. १०।१२५।८, असं. ४।३०।८ महिना (महिम्ना).

(२) ऋसं. १०।१२९।१, तैब्रा. २।८।९।३; शब्रा. १०।५।३।२.

कस्य वा भोक्तुर्जीवस्य शर्मणि सुखदुःखसाक्षात्कारलक्षणे भोगे निमित्तभूते सति तदावरकं तत्त्वमावृणुयात्। जीवानामुपभोगार्था हि सृष्टिः। तस्यां हि सत्या ब्रह्माण्डस्य भूतैरावरण प्रलयदशायां च भोक्तारो जीवा उपाधिविलयात्प्रलीना इति कस्य कश्चिदपि भोक्ता न सम्भवतीत्यावरणस्य निमित्ताभावादपि तन्न घटते इत्यर्थः। एतेन भोग्यप्रपञ्चवत् भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति। यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गत अप्सत्त्वमपि निराकृतं तथापि 'आपो वा इदमग्रे सलिलमासीत्' (तैसं. ७।१।५।१) इत्यादिश्रुत्या कश्चिदपा सद्भावमाशङ्केत तं प्रत्याचष्टे अम्भः किमासीदिति। गहन दुष्प्रवेश गभीरं दुरवस्थानमत्यगाध ईदृशं अम्भः किमासीत्। तदपि नैवासीदित्यर्थः। श्रुतिस्त्ववान्तरप्रलयविषया। ऋसा.

**न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।**
**आनीदवातं स्वधया तदेकं तस्माद्धान्यं न परः किं चनास॥**

ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युर्विद्यते इत्यत आह— न मृत्युरासीदिति। ननु यदि स नासीत् तर्हि तदभावकृतं अमृतं अमरण प्राणिनामवस्थान तदानीमपि स्यात्तत्राह—अमृतं न तर्हीति। तर्हि तस्मिन्प्रतिहारसमये। अय भावः। सर्वेषां प्राणिना परिपक्व भोगहेतुभूतं सर्व कर्म यदा उपभुक्तमासीत् तदा भोगाभावात् निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि संजिहीर्षा जायते। तथैव स मृत्युः सर्व जगत् संहरते इति किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादिति। एतदेवाभिप्रेत्य कठैराम्नायते—'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः॥' (काउ.२।२५) इति। ननु एतस्य सर्वस्याधिकरणभूतः कालो विद्यते इत्यत आह न रात्र्याः इति। रात्र्याः अह्नश्च प्रकेतः प्रज्ञान न आसीत्। तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात्। एतेन अहोरात्रनिषेधेन तदात्मको मासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः। कथ तर्हि नो सदासीत्तदानीमिति कालवाची प्रत्ययः। उपचारादिति ब्रूमः। यथा इदानीतननिषेधस्य कालोऽवच्छेदकः तथा मायापि तदवच्छेदहेतुः इत्यवच्छेदकत्वसाम्येन अकालेऽपि कालवाची प्रत्ययः। यदवादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वक्ष्यते इति तत् इदानीं दर्शयति—आनीदिति। तत् सकलवेदान्तप्रसिद्ध ब्रह्मतत्त्व आनीत् प्राणितवत्। ननु एव प्राणनकर्तुः जीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात् न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः। 'अप्राणो ह्यमनाः शुद्धः' (मुउ. १।२।२) इति तस्य प्राणसंबन्धाभावात्, तत्राह—आनीदवातमिति। अयमाशयः। आनीदित्यत्र धात्वर्थक्रिया तत्कर्ता तस्य च भूतकालसंबन्ध इति त्रयोऽर्थाः प्रतीयन्ते। तत्र समुदायो न विधीयते यथा 'आग्नेयोऽष्टाकपालः' इति येन ब्रह्मणः सत्त्वं न स्यात्। किं तर्हि। अनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणो गुणो विधीयते 'दध्ना जुहोति' इतिवाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुणविधानम्। तत्रापि अनेन कर्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते, तन्निषेधानुपपत्तिप्रसङ्गात्। अतः अनेन कर्तृत्वेन इदानीतनेन उपलक्षितं यन्निरुपाधिकं पर ब्रह्म तस्यैव भूतकालसत्ता विधीयते इति न कश्चिद्दोष इति। ननु ईदृशस्य ब्रह्मणो मायया सह संबन्धासंभवात् सांख्याभिमता स्वतन्त्रा सद्रूपा सत्त्वरजस्तमोगुणात्मिका मूलप्रकृतिरेव अभिमता इति कथ नो सदिति निषेधः। तत्राह — स्वधयेति। स्वस्मिन्धीयते ध्रियते आश्रित्य वर्तते इति स्वधा माया। तया तद्ब्रह्म एक अविभागापन्नमासीत्। अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातन्त्र्यं निवार्यते। यद्यपि असङ्गस्य ब्रह्मणः तया सह संबन्धो न संभवति तथापि तस्मिन् अविद्यया तत्स्वरूपमिव संबन्धोऽप्यध्यस्यते यथा शुक्तिकाया रजतस्य। एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम्। ननु यदि माया ब्रह्मणा सह अविभागापन्ना तर्हि तस्या अनिर्वाच्यत्वात् ब्रह्मणोऽपि तत्प्रसङ्ग इति कथ तस्य सत्त्वमुक्तं आनीदवातमिति। ब्रह्मणो वा सत्त्वात् तस्या अपि सत्त्वप्रसङ्ग इति कथ नो सदासीदिति सत्त्वप्रतिषेधः। मैवम्। अयुक्तिदृष्टत्वै-

(१) ऋसं. १०।१२९।२, तैब्रा. २।८।९।४ पूर्वार्धे (न मृत्युरमृत तर्हि न। रात्रिया अह्न आसीत्प्रकेतः), नि. ७।३।५.

क्याबभासेऽपि युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं ब्रह्मणः सत्त्वं च प्रतिपादितम्। ननु दृग्दृश्याविति द्वावेव पदार्थौ, आनीदवातं स्वधयेति तौ चेदङ्गीक्रियेते तत्किमपरमवशिष्यते यन्नासीद्रज इत्यादिना प्रतिषिध्येत, तत्राह—तस्मादिति। तस्मात् ह तस्मात् खलु पूर्वोक्तात् मायासहितात् ब्रह्मणः अन्यत्किं चन किमपि वस्तु भूतभौतिकात्मक जगत् न आस न बभूव। ननु तदानीमन्यस्य सत्त्वनिषेधो न शङ्क्यः। असत्त्वे चाप्रसक्तत्वात् न निषेधोपयोगः इत्यत आह—पर इति। परः परस्तात् सृष्टेरूर्ध्वं वर्तमानमिदं जगत्तदानी न बभूवेत्यर्थः। अन्यथा उक्तरीत्या क्वचिदपि निषेधो न स्यादिति भावः। ऋसा.

तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाऽजायतैकम्॥

ननु उक्तप्रकारेण यदि पूर्वमिद जगन्नासीत् कथं तर्हि तस्य जन्म। जायमानस्य जनिक्रियाया कर्तृत्वेन कारकत्वात्, कारकं च कारणावान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्य अवश्यभावात्। अथ एतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते, कथं तस्य जन्म, अत आह—तमसा गूळ्हमग्रे इति। अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिक सर्वं जगत् तमसा गूळ्हम्। यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत् आत्मतत्त्वस्यावरकत्वात् मायापरसञ्ज्ञं भावरूपाज्ञानं अत्र तम इत्युच्यते। तेन तमसा निगूढ संवृत कारणभूतेन तेनाच्छादितं भवति। आच्छादकात् तस्मात् तमसो नामरूपाभ्या यत् आविर्भवनं तदेव तस्य जन्म इत्युच्यते। एतेन कारणावस्थायां असदेव कार्यमुत्पद्यते इत्यसद्वादिनः असत्कार्यवादिनः ये मन्यन्ते ते प्रत्याख्याताः। ननु कारणे तमसि तत् जगदात्मकं कार्यं विद्यते चेत् कथं नासीद्रज इत्यादिनिषेधः, तत्राह—तम आसीदिति। तमः भावरूपाज्ञान मूलकारणम्। तद्रूपता तदात्मनाम्। यतः सर्वं जगत् प्राक् तम आसीदतो निषिध्यते इत्यर्थः। ननु आवरकत्वादावरकं तमः कर्तृ, आवार्यत्वाज्जगत्कर्म। कथं तयोः कर्मकर्त्रोस्तादात्म्यं, तत्राह—अप्रकेतमिति। अप्रकेतं अप्रज्ञायमानम्। अयमर्थः—यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते तथापि व्यवहारदशायामिव तस्यां दशाया नामरूपाभ्या विस्पष्ट न ज्ञायते इति तादात्म्यवर्णनम्। अत एव मनुना स्मर्यते — 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमनिर्देश्य प्रसुप्तमिव सर्वतः॥' (मस्मृ. १।५) इति। कुतो वा न प्रज्ञायते, तत्राह—सलिलम्। इदं दृश्यमान सर्वं जगत् सलिलं कारणेन सगतं अविभागापन्न आः आसीत्। यद्वा सलिलमिति लुप्तोपमम्। सलिलमिव। यथा क्षीरेण अविभागापन्न नीरं दुर्विज्ञान तथा तमसा अविभागापन्न जगत् न शक्यविज्ञानमित्यर्थः। ननु विविधविचित्ररूपभूयसः प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येव अभिभवः। तथा तमोऽपि क्षीरवद्बलवदित्येवोच्यते। तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवसभव इत्यत आह—तुच्छयेनेति। आ समन्तात् भवनीति आभु तुच्छयेन तुच्छेन तुच्छकल्पनेन सदसद्विलक्षणेन भावरूपाज्ञानेन अपिहितं छादितमासीत्। एक एकीभूत कारणेन तमसा अविभागतां प्राप्तमपि तत्कार्यजात तपसः स्रष्टव्यपर्यालोचनरूपस्य महिना माहात्म्येन अजायत उत्पन्नम्। तपसः स्रष्टव्यपर्यालोचनरूपत्वं चान्यत्राम्नायते—'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमय तपः' (मुड. १।१।९) इति। ऋसा.

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा॥

ननु उक्तरीत्या यत् ईश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारण तदेव किंनिबन्धनं इत्यत आह—कामस्तदग्र इति। अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थाया परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत सिसृक्षा

(१) ऋसं १०।१२९।३, तैब्रा. २।८।९।४ तपसस्त (तमसस्त); नि. ७।३।५.

(१) ऋसं. १०।१२९।४; असं. १९।५२।१ (अधि०) पू.; तैब्रा. २।४।१।१०, २।८।९।४, ३।१२।१।१; तैआ. १।२३।१.

जाता इत्यर्थः। ईश्वरस्य सिसृक्षा वा किंहेतुका इत्यत आह—मनस इति। मनसः अन्तःकरणस्य सम्बन्धि वासनाशेषेण मायाया विलीनेऽन्तःकरणे समवेतम्। सामान्यापेक्षमेकवचनम्। सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः। एतेन आत्मनो गुणाधारत्वं प्रत्याख्यातम्। तादृश रेतः भाविनः प्रपञ्चस्य बीजभूत प्रथम अतीते कल्पे प्राणिभिः कृत पुण्यात्मक कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवत्। भूष्णु वर्धिष्णु अजायत परिपक्व सत् फलोन्मुखमासीदित्यर्थः। तत् ततः हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः। तस्या च जातायां स्रष्टव्य पर्यालोच्य ततः सर्वं जगत् सृजति। तथा चाम्नायते—'सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा इद९ सर्वमसृजत। यदिद किंच' (तैउ. २।६) इति श्रुतिः। आत्मना इत्थमवगमितेऽर्थे विद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति—सत इति। सतः सत्त्वेन इदानीमनुभूयमानस्य सर्वस्य जगतो बन्धु बन्धक हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूह कवयः क्रान्तदर्शना अतीतानागतवर्तमानाभिज्ञा योगिनो हृदि हृदये निरुद्धया मनीषा मनीषया बुद्ध्या प्रतीष्य विचार्य असति सद्विलक्षणे अव्याकृते कारणे निरविन्दन् निष्कृष्यालभन्त विविच्याजानन्नित्यर्थः। ऋसा.

[1]तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३-
दुपरि स्विदासी३त्।
रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्र-
यतिः परस्तात्॥

एवं अविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि। अधुना तेषां स्वकार्यजनने शैघ्र्य प्रतिपाद्यते। येयं नासदासीदित्यविद्या प्रतिपादिता, यश्च कामस्तदग्रे इति कामः, मनसो रेतः प्रथमं यदासीदिति यत्कर्म एषा अविद्याकामकर्मणा वियदादिभूतजातानि सृजता रश्मिः रश्मिसदृशो यथा सूर्यरश्मिरुदयानन्तर निमेषमात्रेण युगपत्सर्व जगत् व्याप्नोति तथा शीघ्र सर्वत्र व्याप्नुवन् यः कार्यवर्गो विततो विस्तृतः आसीत्। स्विदासीदिति वक्ष्यमाणमत्रापि संबध्यते। स्विदिति वितर्के। स कार्यवर्गः प्रथमतः किं तिरश्चीनः तिर्यगवस्थितो मध्ये स्थित आसीत् किंवा अधः अधस्तादासीत् आहोस्वित् उपरि उपरिष्टात् किमासीत्। 'आत्मन आकाशः सभूतः। आकाशात् वायुः। वायोरग्निः' (तैउ. २।१) इत्यादिकया पञ्चमीश्रुत्या, 'तत उद्गातार ततो होतारम्' इतिवत्क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत् सर्गस्य शीघ्रव्यापनेन तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते। एवं नाम शीघ्र सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः। एतदेव विभजते। सृष्टेषु कार्येषु मध्ये केचिद्भावाः रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवाः आसन् अन्ये भावाः महिमानः महान्तो वियदादयो भोग्या आसन्। एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वय चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभाग कृतवानित्यर्थः। अयमेवार्थस्तैत्तिरीयके 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तैउ. २।६) इत्यारभ्य प्रतिपाद्यते। तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा। अन्ननामैतत्। भोग्यप्रपञ्चः अवस्तात् अवरः निकृष्टः आसीत्। प्रयतिः प्रयतिता भोक्ता परस्तात् पर उत्कृष्ट आसीत्। भोग्यप्रपञ्च भोक्तृप्रपञ्चस्य शेषभूत कृतवानित्यर्थः। ऋसा.

[1]को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत
इयं विसृष्टिः।
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत
आबभूव॥

एवं भोक्तृभोग्यरूपेण सृष्टिः सग्रहेण प्रतिपादिता। 'एतावद्वा इदमन्न चैवान्नादश्च सोम एवान्नमग्निरन्नादः' (बृउ. १।४।६) इतिवत्। अथ इदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेण अभिहिता इत्याह—को अद्धेति। कः पुरुषः अद्धा पारमार्थ्येन वेद जानाति। को वा इह अस्मिन् लोके प्र वोचत् प्रब्रूयात्। इयं दृश्यमाना विसृष्टिः विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्मादुपादानकारणात्, कुतः

(१) ऋसं. १०।१२९।५; शुसं. ३३।७४; तैब्रा. २।८।९।५ अधः स्वि (अधस्वि).

(१) ऋसं. १०।१२९।६, मैसं ४।१२।१ (१९) वोचत्कुत (वोचत्कुता); तैब्रा. २।८।९।५ सर्जनेन (सर्जनाय).

कस्माच्च निमित्तकारणात् आजाता समन्ताजाता प्रादुर्भूता ।-एतदुभय सम्यक् को वेद को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः । ननु देवा अजानन्तः। सर्वज्ञास्ते ज्ञास्यन्ति वक्तु च शक्नुवन्ति इत्यत आह—अर्वागिति । देवांश्च अस्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनन्तर विविध यद्भौतिकं सर्जन सृष्टिः तेन अर्वाक् अर्वाचीनाः कृताः भूतसृष्टेः पश्चात् जाता इत्यर्थः । तथाविधास्ते कथ स्वोत्पत्तेः पूर्वकालीना सृष्टि जानीयुः । अजानन्तो वा कथं प्रब्रूयुः। उक्त दुर्विज्ञानत्व निगमयति। अथ एव सति देवा अपि न जानन्ति किल । तद्व्यतिरिक्तः को नाम मनुष्यादिः वेद तत् जगत्कारण जानाति यतः कारणात् कृत्स्न जगत् आबभूव अजायत । ऋसा.

**इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।**
**यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥**

उक्तप्रकारेण यथा इद जगत्सर्जन दुर्विज्ञान एव सृष्ट तज्जगत् दुर्धरमपीत्याह—इयमिति । यतः उपादानभूतात् परमात्मनः इय विसृष्टिः विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिः आबभूव आजाता सोऽपि किल यदि वा दधे धारयति यदि वा न धारयति । एवं च को नाम अन्यो धर्तु शक्नुयात् । यदि धारयेत् ईश्वर एव धारयेत् नान्य इत्यर्थः । एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मणः उपादानकारणत्व उक्तं भवति । तथा च पारमर्ष सूत्रम् – ‘ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ’ ( ब्रसू. १।४।२३ ) इति । यद्वा । अनेन अर्धर्चेन पूर्वोक्तं सृष्टेर्दुर्ज्ञानत्वमेव द्रढयति । को वेद इत्यनुवर्तते । इय विविधा सृष्टिः यत आबभूव आ समन्तात् अजायतेति को वेद । न कोऽपि । नास्त्येव जगतो जन्म ‘ न कदाचिदनीदृशं जगत् ’ इति बहवो भ्रान्ता भवन्त्यपि । यतः यस्मात्परमात्मन उपादानभूतात् आबभूव त परमात्मान को वेद । न कोऽपि । प्रकृतितः परमाणुभ्यो वा जगज्जन्म इति हि बहवो भ्रान्ताः। तथा स एव उपादानभूतः परमात्मा स्वयमेव निमित्तभूतोऽपि सन् यदि वा दधे विदधे इद जगत् ससर्ज यदि वा न ससर्ज। असदिग्धे सदिग्धवचनमेतच्छास्त्राणि चेत्प्रमाण स्युरिति यथा । स एव विदधे । त को वेद । अजानन्तोऽपि बहवो जडात्प्रधानात् अकर्तृकमेवेद जगत्स्वयमजायतेति विपरीत प्रतिपन्ना विदधतो विधानमजानन्तोऽपि । स एवोपादानभूतः इत्यपि को वेद। न कोऽपि । उपादानादन्यः तटस्थ एवेश्वरो विदधे इति हि बहवः प्रतिपन्नाः । देवा अपि यन्न जानन्ति तदर्वाचीनानामेषा तत्परिज्ञाने कैव कथा इत्यर्थः । यद्येव जगत्सृष्टिः अत्यन्तदुरवबोधा न तर्हि सा प्रमाणपद्धतिमव्याप्ते इत्याशङ्क्य तत्सद्भावे ईश्वरमेव प्रमाणयति—यो अस्य इति । अस्य भूतभौतिकात्मकस्य जगतो यः अध्यक्षः ईश्वरः परमे उत्कृष्टे सत्यभूते व्योमन् व्योमनि आकाशे आकाशवन्निर्मले स्वप्रकाशे । यद्वा । व्योमनि विशेषेण तृप्ते, निरतिशयानन्दस्वरूपे इत्यर्थः। यद्वा व्योमनि विशेषेण गते व्याप्ते, देशकालवस्तुभिरपरिच्छिन्ने इत्यर्थः । अथवा । व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि । ईदृशे स्वात्मनि प्रतिष्ठितः । श्रूयते हि सनत्कुमारनारदयोः सवादे–‘ स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि ’ ( छाउ. ७।२४।१ ) इति । ईदृशो यः परमेश्वरः सो अङ्ग । अङ्गेति प्रसिद्धौ । सोऽपि नाम वेद जानाति । यदि वा न वेद न जानाति । को नाम अन्यो जानीयात् । सर्वज्ञ ईश्वर एव ता सृष्टिं जानीयात् नान्य इत्यर्थः । ऋसा.

अहमादिष्टः, जलसूर्यविश्वदेवकर्मणा संप्रदानं, विश्वविवेककर्ता, सर्वकर्ता

**मह्यमापो मधुमदेरयन्तां मह्यं सूरो अभरज्ज्योतिषे कम् ।**
**मह्यं देवा उत विश्वे तपोजा मह्यं देवः सविता व्यचो धात् ॥**

आपः उदकानि तदभिमानिदेवताः मधुमत् माधुर्योपेत आत्मीयं रस मह्य मदर्थे एरयन्ता आगमयन्तु । तथा सुरः सर्वस्य प्रेरक आदित्यः मह्य मदर्थ क सुखकर आत्मीय तेजः ज्योतिषे विषयप्रकाशनाय अभरत् अह-

(१) ऋसं. १०।१२९।७, मैसं. ४।१२।१ (२०); तैब्रा. २।८।९।६.

(१) असं. ६।६१।१.

रत् उत्पादितवानित्यर्थः । यद्वा, ज्योतिषे इति कर्मणि चतुर्थी । ज्योतिः आत्मीयं प्रकाश अहरत् प्रापयतीत्यर्थः । अस्मिन्पक्षे कमिति पदपूरणः । उत अपि च तपोजाः ब्रह्मणस्तपसो जाताः विश्वे सर्वे देवाः मह्यं इष्टफल प्रयच्छन्तु इति शेषः । सविता सर्वस्य प्रेरको देवः व्यचः व्यापन इष्टफलप्रापणं मह्य धात् दधातु विदधातु करोतु प्रयच्छतु वा । असा.

[1]अहं विवेच पृथिवीमुत द्यामहमृतूंरजनयं सप्त साकम् ।
अहं सत्यमनृतं यद्वदाम्यहं दैवीं परि वाचं विशश्च ॥

मन्त्रद्रष्टा स्वात्मनः सर्वगतब्रह्मात्मभावमनुसदधानः सर्वकर्तृत्वमाविष्करोति । पृथिवीं द्यां च अह विवेच परस्परविविक्ते असकीर्णरूपे कृतवानस्मि । तथा अहमेव सप्तसख्याकान्, वसन्ताद्याः षट्, ससर्पांहस्पतिसंज्ञकाधिमासाख्यः सप्तमः, एतान्सप्तसंख्याकान् ऋतून्साक सह परस्परसंहतान् अजनय उत्पादितवानस्मि । सत्य यथार्थम् । अनृत अयथार्थम् । सत्यानृतभेदेन यत् लोके प्रसिद्ध वाक्यजात तदहमेव वदामि उच्चारयामि । तथा दैवीं देवसम्बन्धिनी वाचं अहमेव परि विश परिप्राप्तवानस्मि । असा.

[2]अहं जजान पृथिवीमुत द्यामहमृतूंरजनयं सप्त सिन्धून् ।
अहं सत्यमनृतं यद्वदामि यो अग्नीषोमावजुषे सखाया ॥

पूर्ववद्योजना । इयास्तु विशेषः । जजान उत्पादितवानस्मि । सिन्धून्, सिन्धवः स्यन्दनशीला गङ्गाद्याः सप्त नद्यः सप्त समुद्रा वा, तानपि अहमुत्पादितवानस्मि । स्वात्मनस्तादृक्सामर्थ्यप्राप्तिमुपपादयति— यो अग्नीषोमाविति । अग्नीषोमात्मकं हीद सर्व जगत् । श्रूयते हि— ‘ एतावद्वा इदमन्न चैवान्नादश्च सोम एवान्नमग्निरन्नादः ’ ( बृउ. १।४।६ ) इति । एवं भोक्तृभोग्यात्मकस्य अखिलजगतः कारणभूतौ अग्नीषोमौ योऽहं ब्रह्मात्मभावेन सखाया सखायौ समानख्यानौ जगन्निर्माणे सहायभूतौ अजुषे सेवितवानस्मि । तादृशस्य मम द्यावापृथिव्यादिसर्जनमुपपन्नमित्यर्थः । असा.

(१) असं. ६।६१।२.
(२) असं. ६।६१।३.

पुरुषशरीरावयवानां विचित्रसंनिवेशस्य कर्ता, पुरुषस्य
प्रियाप्रियानन्दार्तिमत्यमतिसत्यानृतादिवृत्तीना प्रेरक.,
धमनीगतरसनामरूपकर्मप्राणायुर्बलजवरेतोमेधायज्ञ-
श्रद्धाऽमृतमृत्युमनसामाधाता, पुरुषभोग्यजला-
होरात्र्युष.सायंभवाना दाता, द्युभूमिपर्वत-
पर्जन्यसोमेषु पुरुषकर्मसु च वर्तमान.
जिज्ञास्यो देवः

[1]केन पार्ष्णी आभृते पूरुषस्य केन मांसं संभृतं केन गुल्फौ ।
केनाङ्गुलीः पेशनीः केन खानि केनोच्छ्लङ्खौ मध्यतः कः प्रतिष्ठाम् ॥
कस्मान्नु गुल्फावधरावकृण्वन्नष्ठीवन्तावुत्तरौ पूरुषस्य ।
जङ्घे निर्ऋत्य न्यदधुः क स्विज्जानुनोः संधी क उ तच्चिकेत ॥
चतुष्टयं युज्यते संहितान्तं जानुभ्यामूर्ध्वं शिथिरं कबन्धम् ।
श्रोणी यदूरू क उ तज्जजान याभ्यां कुसिन्धं सुदृढं बभूव ॥
कति देवाः कतमे त आसन्य उरो ग्रीवाश्चिक्युः पूरुषस्य ।
कति स्तनौ व्यदधुः कः कफोडौ कति स्कन्धान्कति पृष्टीरचिन्वन् ॥
को अस्य बाहू समभरद्वीर्यं करवादिति ।
अंसौ को अस्य तद्देवः कुसिन्धे अध्या दधौ ॥
कः सप्त खानि वि ततर्द शीर्षणि कर्णाविमौ नासिके चक्षणी मुखम् ।
येषां पुरुत्रा विजयस्य मह्मनि चतुष्पादो द्विपदो यन्ति यामम् ॥
हन्वोर्हि जिह्वामदधात्पुरूचीमधा महीमधि शिश्राय वाचम् ।
स आ वरीवर्ति भुवनेष्वन्तरपो वसानः क उ तच्चिकेत ॥

(१) असं. १०।२।१–२८.

मस्तिष्कमस्य यतमो ललाटं ककाटिकां प्रथमो यः कपालम् ।
चित्वा चित्यं हन्वोः पूरुषस्य दिवं रुरोह कतमः स देवः ॥
प्रियाप्रियाणि बहुला स्वप्नं संबाधतन्द्र्यः ।
आनन्दानुग्रो नन्दांश्च कस्माद्वहति पूरुषः ॥
आर्तिरवर्तिर्निर्ऋतिः कुतो नु पुरुषेऽमतिः ।
राद्धिः समृद्धिरव्यृद्धिर्मतिरुदितयः कुतः ॥
को अस्मिन्नापो व्यदधाद्विषूवृतः पुरूवृतः सिन्धुसृत्याय जाताः ।
तीव्रा अरुणा लोहिनीस्ताम्रधूम्रा ऊर्ध्वा अवाचीः पुरुषे तिरश्चीः ॥
को अस्मिन्रूपमदधात्को मह्मानं च नाम च ।
गातुं को अस्मिन्कः केतुं कश्चरित्राणि पूरुषे ॥
को अस्मिन्प्राणमवयत्को अपानं व्यानमु ।
समानमस्मिन्को देवोऽधि शिश्राय पूरुषे ॥
को अस्मिन्यज्ञमदधादेको देवोऽधि पूरुषे ।
को अस्मिन्त्सत्यं कोऽनृतं कुतो मृत्युः कुतोऽमृतम् ॥
को अस्मै वासः पर्यदधात्को अस्यायुरकल्पयत् ।
बलं को अस्मै प्रायच्छत्को अस्याकल्पयज्जवम् ॥
केनापो अन्वतनुत केनाहरकरोद्रुचे ।
उषसं केनान्वैन्द्ध केन सायंभवं ददे ॥
को अस्मिन्रेतो न्यदधात्तन्तुरा तायतामिति ।
मेधां को अस्मिन्नध्यौहत्को बाणं को नृतो दधौ ॥
केनेमां भूमिमौर्णोत्केन पर्यभवद्दिवम् ।
केनाभि मह्ना पर्वतान्केन कर्माणि पूरुषः ॥
केन पर्जन्यमन्वेति केन सोमं विचक्षणम् ।
केन यज्ञं च श्रद्धां च केनास्मिन्निहितं मनः ॥

श्रोत्रियपरमेष्ठ्यग्नीना पुरुष प्रति प्रापक संवत्सरप्रमातृबुद्धिदं पुरुषात्मकं द्युभूमिविधातृ अन्तरिक्षस्वरूपं सर्वतः स्थितं ब्रह्मैव जिज्ञासाविषयः

केन श्रोत्रियमाप्नोति केनेमं परमेष्ठिनम् ।
केनेममग्निं पूरुषः केन संवत्सरं ममे ॥
ब्रह्म श्रोत्रियमाप्नोति ब्रह्मेमं परमेष्ठिनम् ।
ब्रह्मेममग्निं पूरुषो ब्रह्म संवत्सरं ममे ॥
केन देवाँ अनु क्षियति केन दैवजनीर्विशः ।
केनेदमन्यन्नक्षत्रं केन सत्क्षत्रमुच्यते ॥
ब्रह्म देवाँ अनु क्षियति ब्रह्म दैवजनीर्विशः ।
ब्रह्मेदमन्यन्नक्षत्रं ब्रह्म सत्क्षत्रमुच्यते ॥
केनेयं भूमिर्विहिता केन द्यौरुत्तरा हिता ।
केनेदमूर्ध्वं तिर्यक् चान्तरिक्षं व्यचो हितम् ॥
ब्रह्मणा भूमिर्विहिता ब्रह्म द्यौरुत्तरा हिता ।
ब्रह्मेदमूर्ध्वं तिर्यक् चान्तरिक्षं व्यचो हितम् ॥

मूर्धहृदयसंयोजकः अथर्वाख्य. पवमान. शीर्ष्ण उपरि इन्द्रियप्रेरकः

मूर्धानमस्य संसीव्याथर्वा हृदयं च यत् ।
मस्तिष्कादूर्ध्वः प्रैरयत्पवमानोऽधि शीर्षतः ॥

आथर्वणस्य देवकोशस्य शिरसोऽन्नस्य मनसश्च रक्षिता प्राण

तद्वा अथर्वणः शिरो देवकोशः समुब्जितः ।
तत्प्राणो अभि रक्षति शिरो अन्नमथो मनः ॥

अमृतावृताया पुरः अधिष्ठातृ विभुपुरुषात्मकं दीर्घायुष्ट्वाव्यङ्गत्वादिफलकज्ञानविषयो ब्रह्म

ऊर्ध्वो नु सृष्टा३स्तिर्यङ् नु सृष्टा३ः सर्वा दिशः पुरुष आ बभूवाँ३ ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥
[1] यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम् ।
तस्मै ब्रह्म च ब्राह्माश्च चक्षुः प्राणं प्रजां ददुः ॥
[2] न वै तं चक्षुर्जहाति न प्राणो जरसः पुरा ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥

अष्टचक्रनवद्वारदेवपुरि प्रतिष्ठिते हिरण्मयस्वर्गरूपे ज्योतिरावृते देवकोशे स्थितं यक्षरूपं ब्रह्मविद्गम्यं ब्रह्म

[3] अष्टाचक्रा नवद्वारा देवानां पूरयोध्या ।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषाऽऽवृतः ॥
[4] तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते ।

(१) असं. १०।२।२९, तैआ. १।२७।३ पुरम् (पुरीम्) उत्तरार्धे ( तस्मै ब्रह्म च ब्रह्मा च । आयुः कीर्तिं प्रजा ददुः ).
(२) असं. १०।२।३०.
(३) असं. १०।२।३१; तैआ. १।२७।२ उत्तरार्धे ( तस्यां हिरण्मय. कोशः । स्वर्गो लोको ज्योतिषावृतः ).
(४) असं. १०।२।३२.

तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः ॥
[१]प्रभ्राजमानां हरिणीं यशसा संपरीवृताम् ।
पुरं हिरण्ययीं ब्रह्माऽऽविवेशापराजिताम् ॥

तपसः ऋतस्य श्रद्धाया सत्यस्य चाश्रयभूतानि, अग्नेर्मातरिश्वनश्चन्द्रमसश्चोद्भवस्थानानि, भूम्यन्तरिक्षद्युतदुत्तरभागाधारभूतानि च यस्याङ्गानि जिज्ञास्यानि स., अग्नेर्मातरिश्वनः अपा च गमनस्यान्येषा परिवर्तनानां च प्रेप्साविषय., अहोरात्रार्धमासमासर्तुसंवत्सराणां गते. प्रेप्सागोचर., प्रजापतेराश्रय प्रजापतिना सृष्टेपु अधममध्यमपरमेपु विश्वरूपेषु प्रविष्ट', सहस्रधा भविष्णुः एकोंऽशः अप्रविष्टश्च एकोऽश यस्य जिज्ञास्यः स', लोककोशब्रह्मजलसदसन्ति यदन्त.-स्थितानि स., तपोव्रतर्तश्रद्धाजलब्रह्मणामाधार , भूम्यन्तरिक्षद्युसूर्याग्निवायुचन्द्रमसामधिष्ठानं, त्रयस्त्रिंशद्देवाश्रिताङ्ग., ऋक्सामयजूषि मही प्रथमजर्षय एकर्षिश्च यत्रार्पिताः स., अमृतस्य मृत्योश्चाश्रयः समुद्रनाडीयुक्त प्रदिग्रूपप्रथमनाड्याश्रय' यज्ञाधारः पुरुष , पुरुषाश्रितब्रह्मज्ञानाधीनपरमेष्ठिज्ञानाधीनप्रजापतिज्ञानाधीनज्येष्ठब्रह्मज्ञानाधीनज्ञान' , वैश्वानरशिरा' अङ्गिरश्चक्षु. यातुरूपाङ्गः, ब्रह्ममुख मधुकशाजिह्वः विराड्रूपोधा., ऋग्यजुषा जन्माधार' सामलोमा अथर्वाङ्गिरोमुखः, जनोपास्यासत्सद्रूपशाख', आदित्यरुद्रवसूनां भूतभव्याना सर्वलोकानां च प्रतिष्ठा, त्रयस्त्रिंशद्देवरक्ष्यानिधे. जिज्ञास्य' पतिः, येषा प्रत्यक्षज्ञानेन ब्रह्मवित्त्वं तैर्ब्रह्मविद्देवैरुपास्यं ज्येष्ठं ब्रह्म, बृहद्देवाना जनकासत्स्वरूपाङ्गवान्, ब्रह्मविज्ज्ञेयत्रयस्त्रिंशद्देवानामाश्रय. पुराणाङ्गधर. स्कम्भ., सर्वव्यापकपरमहिरण्यगर्भीयाहिरण्यस्य लोके प्रसिञ्चनकरः, लोकाना तपसः ऋतस्य चाधारः इन्द्र., नाममात्रगम्यः पूर्व. सूर्यादुषसश्च प्रथमज. स्वराज्यगः भूतेभ्यः परः अजः, भूमिप्रमं( पादं )अन्तरिक्षोदरं द्युमूर्धं सूर्यचन्द्रमश्चक्षु. अग्निरूपास्यं वातरूपप्राणापानं अङ्गिरश्चक्षु. दिग्रूपप्रज्ञानकरणं ज्येष्ठं ब्रह्म, द्यावापृथिव्यन्तरिक्षप्रदिशा धर्ता विश्वभुवनाविष्टः, तपोजात एव प्राप्तलोकस्वाम्य', अविरतगमनै' वायुमनोजलैः प्राप्तव्यं जिज्ञास्यं सत्यं, सलिलपृष्ठे स्थितं तप.कर्तृ भुवनमध्ये वर्तमानं महद्यक्षं, परितो व्याप्तशाखः सर्वदेवाश्रयो वृक्ष , देवैर्बलिना सदा पूजित , विमिते स्थितोऽमित' प्रजापतिज्योतिषामाश्रय', अपहततमाः व्यावृत्तपाप्मा स्कम्भ. ज्येष्ठं ब्रह्म

(१) असं. १०।२।३३, तैआ. १।२७।३ प्रभ्राज ( विभ्राज ) रण्ययीं ( रण्मयीं ) जिताम् ( जिता ).

* कस्मिन्नङ्गे तपो अस्याधि तिष्ठति कस्मिन्नङ्ग ऋतमस्याध्याहितम् ।
क्व व्रतं क्व श्रद्धाऽस्य तिष्ठति कस्मिन्नङ्गे सत्यमस्य प्रतिष्ठितम् ॥
कस्मादङ्गाद्दीप्यते अग्निरस्य कस्मादङ्गात्पवते मातरिश्वा ।
कस्मादङ्गाद्वि मिमीतेऽधि चन्द्रमा मह स्कम्भस्य मिमानो अङ्गम् ॥
कस्मिन्नङ्गे तिष्ठति भूमिरस्य कस्मिन्नङ्गे तिष्ठत्यन्तरिक्षम् ।
कस्मिन्नङ्गे तिष्ठत्याहिता द्यौः कस्मिन्नङ्गे तिष्ठत्युत्तरं दिवः ॥
क्व प्रेप्सन्दीप्यत ऊर्ध्वो अग्निः क्व प्रेप्सन्पवते मातरिश्वा ।
यत्र प्रेप्सन्तीरभियन्त्यावृतः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
क्वार्धमासाः क्व यन्ति मासाः संवत्सरेण सह संविदानाः ।

* इदं अव्यवहितोत्तर च सूक्तं कर्मस्वविनियुक्तम् ।

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।
कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥

[ इयं ऋक् ( ऋसं. ४।१३।५ ) अत्र उध्दृतं स्कम्भब्रह्म अथर्ववेदाम्नातं द्योतयति, अत अत्रोध्दृता विदुषां विमर्शाय। स्कम्भतत्त्वस्य सूचिकाः अन्या अपि ऋचः ( ऋसं. ८।४१।१०; ९।७४।२, ८६।४६ ) द्रष्टव्या. । ].

आयतशब्दो दूरवाची । तद्विपरीत अनायत. आसीनः सन् अयं प्रत्यक्षेणोपलभ्यमानो मण्डलाभिमानी सूर्यः अनिबद्ध केनापि बद्धो न क्रियते । अपि चायं सूर्यः न्यङ् अवाङ्मुख सन् केनाचित् कथा कथं न अव पद्यते न हिस्यते । किचायं उत्तानः ऊर्ध्वमुखत्वेन तिष्ठन् कया स्वधया केन बलेन याति गच्छति । स्वधाशब्दोऽन्नवाची अत्र तत्कार्य बलं लक्षयति । अपि च दिव. द्युलोकस्य स्कम्भ. स्तम्भ. समृत. नाकेन समवेतः सूर्यः नाकं स्वर्ग पाति पालयति । को ददर्श तत्त्वत. कः पश्यति । न कोऽपि जानातीत्यर्थ. ।
ऋसा. ४।१३।५

(१) असं. १०।७।१-४४

यत्र यन्त्यृतवो यत्रार्तवाः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
क्व प्रेप्सन्ती युवती विरूपे अहोरात्रे द्रवतः संविदाने ।
यत्र प्रेप्सन्तीरभियन्त्यापः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यस्मिन्स्तब्ध्वा प्रजापतिर्लोकान्सर्वाँ अधारयत् ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यत्परममवमं यच्च मध्यमं प्रजापतिः ससृजे विश्वरूपम् ।
कियता स्कम्भः प्र विवेश तत्र यन्न प्राविशत्कियत्तद्बभूव ॥
कियता स्कभः प्र विवेश भूतं कियद्भविष्यदन्वाशयेऽस्य ।
एकं यदङ्गमकृणोत्सहस्रधा कियता स्कम्भः प्र विवेश तत्र ॥
यत्र लोकांश्च कोशांश्चापो ब्रह्म जना विदुः ।
असच्च यत्र सच्चान्त स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यत्र तपः पराक्रम्य व्रतं धारयत्युत्तरम् ।
ऋतं च यत्र श्रद्धा चापो ब्रह्म समाहिताः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यस्मिन्भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता ।
यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यार्पिताः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यस्य त्रयस्त्रिंशद्देवा अङ्गे सर्वे समाहिताः ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यत्र ऋषयः प्रथमजा ऋचः साम यजुर्मही ।
एकर्षिर्यस्मिन्नार्पितः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यत्रामृतं च मृत्युश्च पुरुषेऽधि समाहिते ।
समुद्रो यस्य नाड्यः पुरुषेऽधि समाहिताः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यस्य चतस्रः प्रदिशो नाड्यस्तिष्ठन्ति प्रथमाः ।
यज्ञो यत्र पराक्रान्तः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम् ।
यो वेद परमेष्ठिनं यश्च वेद प्रजापतिम् ।
ज्येष्ठं ये ब्राह्मणं विदुस्ते स्कम्भमनुसंविदुः ॥
यस्य शिरो वैश्वानरश्चक्षुरङ्गिरसोऽभवन् ।
अङ्गानि यस्य यातवः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यस्य ब्रह्म मुखमाहुर्जिह्वां मधुकशामुत ।
विराजमूधो यस्याहुः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यस्मादृचो अपातक्षन्यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखं स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
असच्छाखां प्रतिष्ठन्तीं परममिव जना विदुः ।
उतो सन्मन्यन्तेऽवरे ये ते शाखामुपासते ॥
यत्रादित्याश्च रुद्राश्च वसवश्च समाहिताः ।
भूतं च यत्र भव्यं च सर्वे लोकाः प्रतिष्ठिताः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
यस्य त्रयस्त्रिंशद्देवा निधिं रक्षन्ति सर्वदा ।
निधिं तमद्य को वेद यं देवा अभिरक्षथ ॥
यत्र देवा ब्रह्मविदो ब्रह्म ज्येष्ठमुपासते ।
यो वै तान्विद्यात्प्रत्यक्षं स ब्रह्मा वेदिता स्यात् ॥
बृहन्तो नाम ते देवा येऽसतः परि जज्ञिरे ।
एकं तदङ्गं स्कम्भस्यासदाहुः परो जनाः ॥
यत्र स्कम्भः प्रजनयन्पुराणं व्यवर्तयत् ।
एकं तदङ्गं स्कम्भस्य पुराणमनुसंविदुः ॥
यस्य त्रयस्त्रिंशद्देवा अङ्गे गात्रा विभेजिरे ।
तान्वै त्रयस्त्रिंशद्देवानेके ब्रह्मविदो विदुः ॥
हिरण्यगर्भं परममनत्युद्यं जना विदुः ।
स्कम्भस्तदग्रे प्रासिञ्चद्धिरण्यं लोके अन्तरा ॥
स्कम्भे लोकाः स्कम्भे तपः स्कम्भेऽध्यृतमाहितम् ।
स्कम्भ त्वा वेद प्रत्यक्षमिन्द्रे सर्वं समाहितम् ॥
इन्द्रे लोका इन्द्रे तप इन्द्रेऽध्यृतमाहितम् ।
इन्द्रं त्वा वेद प्रत्यक्षं स्कम्भे सर्वं प्रतिष्ठितम् ॥
नाम नाम्ना जोहवीति पुरा सूर्यात्पुरोषसः ।
यदजः प्रथमं संबभूव स ह तत्स्वराज्यमियाय यस्मान्नान्यत्परमस्ति भूतम् ॥

यस्य भूमिः प्रमाऽन्तरिक्षमुतोदरम् ।
दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥
यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः ।
अग्निं यश्चक्र आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥
यस्य वातः प्राणापानौ चक्षुरङ्गिरसोऽभवन् ।
दिशो यश्चक्रे प्रज्ञानीस्तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥
स्कम्भो दाधार द्यावापृथिवी उभे इमे स्कम्भो दाधारोर्वन्तरिक्षम् ।
स्कम्भो दाधार प्रदिशः षडुर्वीः स्कम्भ इदं विश्वं भुवनमा विवेश ॥
यः श्रमात्तपसो जातो लोकान्त्सर्वान्त्समानशे ।
सोमं यश्चक्रे केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥
कथं वातो नेलयति कथं न रमते मनः ।
किमापः सत्यं प्रेप्सन्तीर्नेलयन्ति कदा चन ॥
महद्यक्षं भुवनस्य मध्ये तपसि क्रान्तं सलिलस्य पृष्ठे ।
तस्मिन्छ्रयन्ते य उ के च देवा वृक्षस्य स्कन्धः परित इव शाखाः ॥
यस्मै हस्ताभ्यां पादाभ्यां वाचा श्रोत्रेण चक्षुषा ।
यस्मै देवाः सदा बलिं प्रयच्छन्ति विमितेऽमितं स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
अप तस्य हतं तमो व्यावृत्तः स पाप्मना ।
सर्वाणि तस्मिन् ज्योतींषि यानि त्रीणि प्रजापतौ ॥
यो वेतसं हिरण्ययं तिष्ठन्तं सलिले वेद ।
स वै गुह्यः प्रजापतिः ॥
*तन्त्रमेके युवती विरूपे अभ्याक्रामं वयतः षण्मयूखम् ।
प्रान्या तन्तूंस्तिरते धत्ते अन्या नाप वृञ्जाते न गमातो अन्तम् ॥
तयोरहं परिनृत्यन्त्योरिव न वि जानामि यतरा परस्तात् ।

* सूक्तविषयसंगत्यभावेऽपि संगृहीताः सूक्तान्तर्भावेनाम्नानात् । पैप्पलादशाखायां नैते संगृहीता अस्मिन्सूक्ते ।

पुमानेनद्वयत्युद्गृणत्ति पुमानेनद्वि जभाराधि नाके ॥
इमे मयूखा उप तस्तभुर्दिवं सामानि चक्रुस्तसराणि वातवे ॥

भूतभव्याधिष्ठाता स्वर्गस्य एक एव स्वामी ज्येष्ठो ब्रह्मा, द्यावापृथिव्योर्विष्टम्भक. सर्वप्राण्याश्रयः स्कम्भ., प्रजाश्रयः अर्कः रजसो विमानः बृहन् दिक्षु प्रविष्टः हरितः, संवत्सररूपः, आविष्कृतरूपोऽपि गूढः, प्राण्याश्रयं महत्पदं, भुवनजनकव्यक्तार्धं गूढार्धं च चक्र, अदृष्टगमनः दृष्टस्थितिः पञ्चवाही ( प्राणः ? ), संनिधपरस्वरूप. असंनिधापरस्वरूपः, सप्तर्षिभिर्गुप्त ऊर्ध्वबुघ्नो विश्वरूपयशोनिधानभूतश्चमस., यज्ञे सर्वत्रप्रयुक्ता ऋक् ( प्रणव. ? ), चराचरजीवन्नजीवद्भूतरूपं विश्वरूपं पृथ्वीधरं एकात्मकं तत्त्वं, अनन्तान्तवद्विवेककर्ता भूतभव्यज्ञो नाकपालः, गर्भस्थोऽदृश्य. बहुधा जायमानः विश्वजनकार्धांशः जिज्ञास्यगूढार्धांश· प्रजापति·, चक्षुषा सर्वैर्दृष्टोऽपि मनसाऽविज्ञातः उदकहर. ( सूर्य· ? ), सर्वराष्ट्रभृत्पूज्यं पूर्णरूपेण सत् ऊनरूपेणासत् महद्यक्ष, सर्वातिशायि सूर्योदयास्तावधि ज्येष्ठं, सर्वभुवनद्रष्टा देवाश्रय· स्वर्गगः हरिहंस., सत्येन ब्रह्मणा प्राणेन च सहितः ज्येष्ठाश्रय., अपाद्रूपेण संभूतः चतुष्पाद्भूत. भोग्यो भोक्ता च, असंख्येयस्य स्वस्य आधार. सनातनो देवः, केशादपि सूक्ष्मेऽदृश्यस्थाने स्थिता कल्याणी अजरामरा मर्त्यगृहवर्तिनो प्रिया देवता, स्त्रीपुंकुमारजीर्णादिरूपैर्जातो विश्वरूपः, पितापुत्रज्येष्ठकनिष्ठरूपोऽपि मनसि प्रविष्ट एको देव., कार्यकारणरूपत्वेऽपि पूर्णः, ऋतेन परिवृता सर्वजीवरूपेण पश्यन्ती देवी ( उषाः ), अजरामरा अवि, वाचा प्रेरकं विषयभूतं च महद्ब्राह्मणं, देवमनुष्याश्रिते उदकपुष्पे मायया स्थितं किमपि, सर्वदेवरूप प्रजासु ओत महत्सूत्रं, विश्वप्रलयस्थितः बृहन्, वसूनां सङ्गमनः सत्यधर्मा, त्रिगुणावृतनवद्वारपुण्डरीके स्थितं महद्यक्षं, अकामो धीरः पूर्णः अमृत· स्वयम्भूः आत्मा यज्ज्ञानान्मृत्युभयमोक्ष·

[1]यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति ।
स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥

(१) असं. १०।८।१.

स्कम्भेनेमे विष्टभिते द्यौश्च भूमिश्च तिष्ठतः।
स्कम्भ इदं सर्वमात्मन्वद्यत्प्राणन्निमिषच्च यत् ॥
[2]तिस्रो ह प्रजा अत्यायमायन् न्यन्या अर्कमभितोऽविशन्त।
बृहन् ह तस्थौ रजसो विमानो हरितो हरिणीरा विवेश ॥
[3]द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत।
तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये ॥
[4]इदं सवितर्वि जानीहि षड्यमा एक एकजः।
तस्मिन्हापित्वमिच्छन्ते य एषामेक एकजः ॥
[5]आविः संनिहितं गुहा जरन्नाम महत्पदम्।
तत्रेदं सर्वमार्पितमेजत्प्राणत्प्रतिष्ठितम् ॥
[6]एकचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं क्व तद्बभूव ॥
[7]पञ्चवाही वहत्यग्रमेषां प्रष्टयो युक्ता अनुसंवहन्ति।
अयातमस्य ददृशे न यातं परं नेदीयोऽवरं दवीयः ॥

(१) असं. १०।८।२.

(२) ऋसं. ८।१०१।१४ ( प्रजा ह तिस्रो अत्यायमीयुर्न्यन्या अर्कमभितो विविश्रे। बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेश ॥); असं.१०।८।३; शब्रा.२।५।१।४ बृहन् ह ( महद्ध ) शेषं ऋसंवत्, जैब्रा. २।२२९; ऐआ. २।१।१।४, २।१।१।५ ऋसंवत्.

(३) असं. १०।८।४. अन्यस्थलादिनिर्देशः अस्मिन्नेव प्रकरणे ( पृ. २२८ ) द्रष्टव्यः.

(४) असं. १०।८।५.

(५) असं. १०।८।६; मुउ. २।२।१ ( आविः संनिहितं गुहाचरन्नाम महत्पदमत्रैतत्समर्पितम्। एजत्प्राणन्निमिषच यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ ).

(६) असं. १०।८।७· ११।४।२२ एकचक्रं ( अष्टाचक्रं ) क्व तद्बभूव ( कतम· स केतु ).

(७) असं १०।८।८.



[1]तिर्यग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम्।
तदासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥
[2]या पुरस्ताद्युज्यते या च पश्चाद्या विश्वतो युज्यते या च सर्वतः।
यया यज्ञः प्राङ् तायते तां त्वा पृच्छामि कतमा सर्चाम् ॥
[3]यदेजति पतति यच्च तिष्ठति प्राणदप्राणन्निमिषच्च यद्भुवत्।
तद्दाधार पृथिवीं विश्वरूपं तत्संभूय भवत्येकमेव ॥
अनन्तं विततं पुरुत्रानन्तमन्तवच्चा समन्ते।
ते नाकपालश्चरति विचिन्वन् विद्वान्भूतमुत भव्यमस्य ॥
[4]प्रजापतिश्चरति गर्भे अन्तरदृश्यमानो बहुधा वि जायते।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं कतमः स केतुः ॥
ऊर्ध्वं भरन्तमुदकं कुम्भेनेवोदहार्यम्।
पश्यन्ति सर्वे चक्षुषा न सर्वे मनसा विदुः ॥
दूरे पूर्णेन वसति दूर ऊनेन हीयते।
महद्यक्षं भुवनस्य मध्ये तस्मै बलिं राष्ट्रभृतो भरन्ति ॥
यतः सूर्य उदेत्यस्तं यत्र च गच्छति।
तदेव मन्येऽहं ज्येष्ठं तदु नात्येति किं चन ॥
[5]ये अर्वाङ् मध्य उत वा पुराणं वेदं विद्वांसमभितो वदन्ति।

(१) असं. १०।८।९; बृउ. २।२।३ तिर्यग्बिल ( अर्वाग्बिल ) उत्तरार्धे ( तस्यासत ऋषय· सप्त तीरे वागष्टमी ब्रह्मणा संविदाना ), नि. १२।३८ तस्मिन्य ( यस्मिन्य ) तदासत ( अत्रासत ).

(२) असं. १०।८।१०, गोब्रा. १।१।२२.

(३) असं. १०।८।११–१५.

(४) असं. १०।८।१६, बृउ. १।५।२३ पू; काउ.४।९.

(५) असं. १०।८।१७; कब्रा. १५ ( पृ. ८३ ), तैआ. २।१५ ये अर्वाङ् मध्य उत वा पुराणं ( ये अर्वाङुत वा पुराणे ) त्रिवृतं ( तृतीयं ).

आदित्यमेव ते परि वदन्ति सर्वे अग्निं द्वितीयं त्रिवृतं च हंसम् ॥
[1]सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन्याति भुवनानि विश्वा ॥
सत्येनोर्ध्वस्तपति ब्रह्मणाऽर्वाङ् वि पश्यति ।
प्राणेन तिर्यङ् प्राणति यस्मिन् ज्येष्ठमधि श्रितम् ॥
यो वै ते विद्यादरणी याभ्यां निर्मथ्यते वसु ।
स विद्वान् ज्येष्ठं मन्येत स विद्याद्ब्राह्मणं महत् ॥
अपादग्रे समभवत्सो अग्रे स्वराभरत् ।
चतुष्पाद्भूत्वा भोग्यः सर्वमादत्त भोजनम् ॥
भोग्यो भवदथो अन्नमदद्बहु ।
यो देवमुत्तरावन्तमुपासातै सनातनम् ॥
सनातनमेनमाहुरुताद्य स्यात्पुनर्णवः ।
अहोरात्रे प्र जायेते अन्यो अन्यस्य रूपयोः ॥
शतं सहस्रमयुतं न्यर्बुदमसंख्येयं स्वमस्मिन्निविष्टम् ।
तदस्य घ्नन्त्यभिपश्यत एव तस्माद्देवो रोचत एष एतत् ॥
बालादेकमणीयस्कमुतैकं नेव दृश्यते ।
ततः परिष्वजीयसी देवता सा मम प्रिया ॥
इयं कल्याण्यजरा मर्त्यस्यामृता गृहे ।
यस्मै कृता शये स यश्चकार जजार सः ॥
[3]त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥
[4]उतैषां पितोत वा पुत्र एषामुतैषां ज्येष्ठ उत वा कनिष्ठः ।
एको ह देवो मनसि प्रविष्टः प्रथमो जातः स उ गर्भे अन्तः ॥

(१) असं. १०।८।१८, १३।२।३८, १३।३।१४.
(२) असं. १०।८।१९-२६.
(३) असं. १०।८।२७; श्वेउ. ४।३.
(४) असं. १०।८।२८; जैउब्रा. ३।१०।१२.

[1]पूर्णात्पूर्णमुदचति पूर्णं पूर्णेन सिच्यते ।
उतो तदद्य विद्याम यतस्तत्परिषिच्यते ॥
एषा सनत्नी सनमेव जातैषा पुराणी परि सर्वं बभूव ।
मही देव्युषसो विभाती सैकेनैकेन मिषता वि चष्टे ॥
अविर्वै नाम देवतर्तेनास्ते परीवृता ।
तस्या रूपेणेमे वृक्षा हरिता हरितस्रजः ॥
अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति ।
देवस्य पश्य काव्यं न ममार न जीर्यति ॥
अपूर्वेणेषिता वाचस्ता वदन्ति यथायथम् ।
वदन्तीर्यत्र गच्छन्ति तदाहुर्ब्राह्मणं महत् ॥
यत्र देवाश्च मनुष्याश्चारा नाभाविव श्रिताः ।
अपां त्वा पुष्पं पृच्छामि यत्र तन्मायया हितम् ॥
[2]येभिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशः सध्रीचीः ।
य आहुतिमत्यमन्यन्त देवा अपां नेतारः कतमे त आसन् ॥
[3]इमामेषां पृथिवीं वस्त एकोऽन्तरिक्षं पर्येको बभूव ।
दिवमेषां ददते यो विधर्ता विश्वा आशाः प्रति रक्षन्त्येके ॥
[4]यो विद्यात्सूत्रं विततं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्य यो विद्यात्स विद्याद्ब्राह्मणं महत् ॥
वेदाहं सूत्रं विततं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्याहं वेदाथो यद्ब्राह्मणं महत् ॥
यदन्तरा द्यावापृथिवी अग्निरैत्प्रदहन्विश्वदाव्यः ।
यत्रातिष्ठन्नेकपत्नीः परस्तात्केवासीन्मातरिश्वा तदानीम् ॥

(१) असं १०।८।२९-३४.
(२) असं. १०।८।३५; जैउब्रा. १।३४।६.
(३) असं. १०।८।३६; जैउब्रा. १।३४।७-८.
(४) असं. १०।८।३७-३९.

[१]अप्स्वासीन्मातरिश्वा प्रविष्टः प्रविष्टा देवाः सलिलान्यासन् ।
बृहन्ह तस्थौ रजसो विमानः पवमानो हरित आ विवेश ॥
[२]उत्तरेणेव गायत्रीममृतेऽधि वि चक्रमे ।
साम्ना ये साम संविदुरजस्तद्ददृशे क्व ॥
[३]निवेशनः संगमनो वसूनां देव इव सविता सत्यधर्मा ।
इन्द्रो न तस्थौ समरे धनानाम् ॥
[४]पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम् ।
तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः ॥
[५]अकामो धीरो अमृतः स्वयंभू रसेन तृप्तो न कुतश्चनोनः ।
तमेव विद्वान्न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ॥

बृहत. देवस्य सोमस्य जनक' पुरुष.

[६]मूर्ध्नो देवस्य बृहतो अंशवः सप्त सप्ततीः ।
राज्ञः सोमस्याजायन्त जातस्य पुरुषादधि ॥

सर्वस्य यज्ञस्य सोमसाध्यत्वात् अत्रापि यज्ञे परपरया सोमसबन्ध दर्शयितु सोमः अनया प्रस्तूयते । पुरुषात् यज्ञात्मनः वैराजात् वा । अधिशब्दः पञ्चम्यर्थानुवादी । जातस्य निष्पन्नस्य सोमस्य राज्ञः सप्त सप्तगुणिताः सप्ततीः सप्ततयः सप्तगुणितसप्ततिसख्याकाः अंशवः किरणाः बृहतः महतो देवस्य द्योतनात्मकस्य 'सहस्रबाहुः पुरुषः' ( असं. १९।६।१ ) इत्यादिना निरूपितस्य आदिपुरुषस्य मूर्ध्नः सकाशात् अजायन्त उद्भूताः । अयमर्थः–द्विविधो हि सोमः वल्लीरूपो देवतारूपश्चेति । तत्र लतारूपस्य सोमस्य स्वसाध्याः प्रकृतिविकृत्यादिभेदेन नानासख्याकाः प्रकृतिरूपाः अग्निष्टोमादिसप्तसस्थाः नानासख्याका विकृतिभेदेन ( च क्रतवः ) पुरुषमेधक्रतुनिर्वर्तकनारायणपुरुषस्य शिरसः सकाशात् उद्भूता इति । कलारूपस्य तु सोमस्य द्युलोके सप्तगुणितसप्ततिसख्याकाः किरणा निष्पन्नाः । सूर्यस्य तु सहस्रकिरणाः सोमस्य तु दशोनपञ्चशतसख्याकाः किरणाः देवस्य मूर्ध्नोऽजायन्त इति । असा.

वीर्येषु ज्येष्ठं, अग्रे दिवो वितानकृत्, भूताना प्रथमजं, देवैरुपास्य, द्यावापृथिवीसप्तसिन्धुप्राणिजातहोतृयज्ञक्षुगृषभगोराजन्यसभासभ्यानुशासनराजन्यासनदासदाशकितवस्त्रीपुपर्वतवीरधादिसर्वसद्रूप, ऋषिब्रह्मराजन्यादीना जनयितृ सर्वकारकरूपं सर्वव्यापि ब्रह्म

[१]ब्रह्मज्येष्ठा संभृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवमा ततान ।
भूतानां ब्रह्म प्रथमोऽधि जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ॥
[२]ब्रह्मेमे द्यावापृथिवी ब्रह्मेमें सप्त सिन्धवः ।
ब्रह्मेमे सर्व आदित्या ब्रह्म देवा उपासते ॥
[३]ब्रह्म ब्राह्मणो वदति ब्रह्म रात्री नि वसते ।
सावित्रं ब्रह्मणो जातं ब्रह्मणाग्निर्वि रोचते ॥
[४]ब्रह्मौषधयोऽनु तिष्ठन्ति ब्रह्म वर्षन्तु वृष्टयः ।
ब्रह्मेदं सर्वमात्मन्वद्यावत्सूर्यो विपश्यति ॥

---

(१) ऋसं. ८।१०१।१४ ( बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेश ) उत्त.; असं. १०।८।४०; ऐआ. २।१।१।४–५ ऋसंवत्, उत्त..

(२) असं. १०।८।४१.

(३) ऋसं. १०।१३९।३ ( रायो बुध्न. संगमनो वसूनां विश्वा रूपाभि चष्टे शचीभि । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे धनानाम् ॥ ), असं. १०।८।४२, तैसं. ४।२।५।४, ५।२।४।४ ( निवेशनः संगमनो वसूना विश्वा रूपाऽभि चष्टे शचीभि· । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥ ), कासं. १६।१२ (१४३) तैसंवत्, मैसं. २।७।१२ (९१), ३।२।४ (६) रूपाभि (रूपाण्यभि ) शेषं तैसंवत्; शुसं. १२।६६ तैसंवत्, शब्रा. ७।२।१।२० तैसंवत्.

(४) असं. १०।८।४३. (५) असं. १०।८।४४.

(६) असं. १९।६।१६.

(१) पैसं. ८।९।१ ज्येष्ठा ( ज्येष्ठाः ) ततान ( ततान. ) प्रथमोऽधि ( प्रथमो ह ) स्पर्धितुं ( स्पर्धत्ति ).

(२) पैसं. ८।९।२ ब्रह्मेमे सर्व आदित्या ( ब्रह्ममे सर्वदादित्या ).

(३) पैसं. ८।९।३ ब्राह्मणो वदति ( ब्रह्माणो वदन्ति ) वदति ( वदति ) सावित्रं ( सावित्रे ).

(४) पैसं. ८।९।४ ब्रह्मौषधयोऽनु ( ब्रह्म ओषधयो न, ब्रह्मौषधयो नि ) वर्षन्तु ( वर्षन्ति ).

[1] ब्रह्म होता ब्रह्म यज्ञो ब्रह्मणा स्वरवो मिताः ।
अध्वर्युर्ब्रह्मणो जातो ब्रह्मणोऽन्तर्हितं हविः ॥
[2] ब्रह्म स्रुचो घृतवतीर्ब्रह्म ऋषभो भद्ररेता ब्रह्म गावो हविष्कृतः ।
ब्रह्म रथस्य दैवस्य युजे याति स्वरंकृतम् ॥
[3] ब्रह्मणा सार्दं वनति ब्रह्मणा युज्यते रथः ।
ब्रह्मणा पुरुषोऽभ्यपानं व्यथते चरन् ॥
[4] ब्रह्मणो जाता ऋषयो ब्रह्मणो राजन्या उत ।
ब्रह्मेदं ब्रह्मणो जातं ब्रह्मणो विश्यन्नम् ॥
[5] ब्रह्म सभा राजन्यानां ब्रह्मैषामुत शिक्षितम् ।
ब्रह्मैषां भद्रं सादनं ब्रह्मणैषां सभासदः ॥
* [6] ब्रह्म दासा ब्रह्म दाशा ब्रह्मेमे कितवा उत ।

* 'अशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' ( ब्रसू. २।३।४३ ) । अन्यथा चापीति । न च नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः । किं तर्ह्यन्यथा चापि व्यपदेशो भवत्यनानात्वस्य प्रतिपादकः । तथाह्येके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्ति आथर्वणिका ब्रह्मसूक्ते—'ब्रह्म दासा ब्रह्म दाशा ब्रह्मेमे कितवाः' इत्यादिना । ( ब्रशांकर २।३।४३ )

'ब्रह्मेमे द्यावापृथिवी' इति प्रकृत्य–'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत । स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान् ॥' इत्याथर्वणिकाना संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च । ( रामानुज. १।१।४ )

(१) पैसं. ८।९।५ स्वरवो मिताः ( स्रुरो मिता ) ब्रह्मणो जातो ब्रह्मणोऽन्तर्हितं ( ब्रह्मणो थो ब्रह्मणोत् तिरते ) ब्रह्मणोऽन्तर्हितं ( ब्रह्मणेत् तिरते, ब्रह्मणो अन्तर्हिते ).

(२) पैसं. ८।९।६ स्रुचो ( मृचो ) भद्ररेता ( भद्ररेताः ) हविष्कृतः ( हविष्कृत ) दैवस्य युजे ( देवस्य युञ्जे ) स्वरंकृतम् ( स्वरंकृता ).

(३) पैसं. ८।९।७ भ्यपानं ( भ्य अपानं ) चरन् ( चरम् ).

(४) पैसं. ८।९।८ विश्यन्नम् ( विष्यन्नम्, विष्यन्नं अन्नम् ).

(५) पैसं. ८।९।९ सभा ( शूद्रा, शुभा ) शिक्षितम् ( चिक्षतः ) सर्भासदः ( सभा सदा, सभासदाम् ).

(६) पैसं. ८।९।१० ब्रह्म दासा ब्रह्म दाशा ( ब्रह्म दासद् ब्रह्म दासाद्, ब्रह्म च सद् ब्रह्म चासद् ) ब्रह्मेमे ( ब्रह्मेसे ) ब्रह्मोत वा पुमान् ( ब्रह्मोथ वावना, ब्रह्मोत वावान ).

स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान् ॥
[1] ब्रह्मोद्वतो निवतो ब्रह्म सर्वतो
वानस्पत्याः पर्वता वीरुधो ब्रह्मेदं सर्वमन्तरा
उतैनदन्तरा द्यावापृथिवी उभे ॥
[2] ब्रह्मैवाभवदुत्तरं जातवेदो * अदद्भ्रो यातुधानं महाबलम् ।
भवाशर्वौ तपुर्षी हेतिमस्मै नि संशितौ वि सृजतां वधाय ॥

× अब्रूपब्रह्मसूक्तम् ॥

सवितृबृहस्पतिचतुष्टोमरूपं ब्रह्म

[3] ब्रह्म वै देवः सविता । ब्रह्म बृहस्पतिः । ब्रह्म चतुष्टोमः ॥

प्रातःसन्ध्यादौ ब्राह्मणैरुपास्यमानत्वात्सवितुर्ब्रह्मत्वम् । बृहस्पतेर्ब्राह्मणजात्यभिमानित्वाद्ब्रह्मत्वम् । तच्च 'ब्रह्म वै देवाना बृहस्पतिः' इति श्रुत्यन्तरादवगम्यते । चतुष्टोमस्य शास्त्रसिद्ध ब्रह्मत्वम् ।

तैसा. ४।३।९।२ ( पृ. २९०३ )

व्याहृतित्रयं ब्रह्म

[4] भूर्भुवः स्वः । इति पुरस्ताद्धोतोर्वदेत् । एतद्वै ब्रह्म । एतत्सत्यम् । एतदृतम् । न वा एतस्मादृते यज्ञोऽस्ति । तस्मादेवं वदितव्यम् ॥

लोकाश्रयः भूताधिपो महतो महान्

[5] यो भूतानामधिपतिर्यस्मिँल्लोका अधिश्रिताः ।
य ईशे महतो महाँस्तेन गृह्णामि त्वामहं मयि गृह्णामि त्वामहम् ॥

यः परमात्मा भूताना जराय्वादिभूताना चतुर्विधानामधिपतिः अधिक पालकः । यस्मिन्नात्मनि लोकाः भूरादयः अधिश्रिताः आश्रिताः । लोका यदाधारा

* इत उत्तरोंऽशो विसङ्गतो दृश्यते पूर्वमन्त्रैः ।

(१) पैसं. ८।९।११ ब्रह्मोद्वतो ( ब्रह्मोभ्यतो ) सर्वतो ( शर्वं सर्वतो ) वानस्पत्याः ( वानस्पत्या ) उतैनदन्तरा ( उतानामन्तरा, भूतानामन्तरा ).

(२) पैसं. ८।९।१२ भवाशर्वौ तपुषी ( भवशर्वौ उपुषियं ) नि संशितौ ( नयसितौ ).

× अब्रूपब्रह्मसूक्तम् ( अप्नूपब्रह्मसूक्तम् ).

(३) तैसं. ५।३।४।४.

(४) मैसं. १।८।५ (९). (५) शुसं. २०।३२.

इत्यर्थः । महान् सर्वोत्कृष्टो यो महतो महत्तत्त्वप्रमुखस्य तत्त्वगणस्य ईशे ईष्टे नियन्ता वर्तते । हे ग्रह, अह तेन परमात्मना कृत्वा त्वा त्वा गृह्णामि । मयि परमात्मभावमापन्ने मयि विषये अहं त्वां गृह्णामि । शुम.

सूर्यसमं ज्योतिर्ब्रह्म

[1]**कि५ स्वित्सूर्यसमं ज्योतिः कि५ समुद्रसम५ सरः ।**
**कि५ स्वित्पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ॥**

अध्वर्युः होतार पृच्छति । हे होतः, स्विदिति तर्के । सूर्यसम सूर्यमण्डलतुल्य ज्योतिः तेजः कि तत् ब्रूहि । समुद्रसम सरः कि स्वित् । पृथिव्यै पृथिव्याः सकाशात् वर्षीयः महत्तर किं स्वित् । कस्य मात्रा परिमाण न विद्यते । शुम.

[2]**ब्रह्म सूर्यसमं ज्योतिर्द्यौः समुद्रसम५ सरः ।**
**इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ॥**

होता प्रत्याह । सूर्यसम ज्योतिर्ब्रह्म त्रयीलक्षण पर च । समुद्रसमं सरो द्यौः अन्तरिक्ष यतो वृष्टिर्भवति । पृथिव्यै पृथिव्याः सकाशात् इन्द्रः वर्षीयान् वृद्धतरः । तु पुनः गोः धेनोः मात्रा न विद्यते, यज्ञधारकत्वात् । शुम.

पञ्चसु अन्त प्रविष्ट· पञ्चव्यापकश्च पुरुष·

[3]**केष्वन्तः पुरुष आविवेश कान्यन्तः पुरुषे अर्पितानि ।**
**एतद्ब्रह्मन्नुप वल्हामसि त्वा कि५ स्विन्नः प्रति वोचास्यत्र ॥**

उद्गाता ब्रह्माणं पृच्छति । हे ब्रह्मन्, पुरुषः केषु पदार्थेषु अन्तर्मध्ये आविवेश प्रविष्टः । पुरुषे अन्तः पुरुषमध्ये कानि वस्तूनि अर्पितानि स्थापितानि । एतत् त्वा त्वा वय उपवल्हामसि उपवल्हामः स्पर्धया पृच्छामः । अत्र प्रश्ने किं स्वित्त्वं प्रतिवोचासि प्रतिवदसि ।

शुम.

[4]**पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुषे अर्पितानि ।**
**एतत्त्वात्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मत् ॥**

ब्रह्मा प्रत्याह । पुरुषः आत्मा पञ्चसु प्राणेषु अन्तः प्राणमध्ये आविवेश प्रविष्टः । तानि प्रसिद्धानि श्रोत्राधिकरणानि पुरुषे अन्तः मध्ये अर्पितानि । प्राणात्मनामन्योन्यापेक्षा सिद्धिरित्यर्थः । 'न चात्मानमन्तरेण प्राणाः ख्यायन्ते न प्राणानन्तरेणात्मा' इति बह्वृचश्रुतेः । यद्वा, पञ्चसु भूतेषु भूम्यादिषु आत्मा प्रविष्टः, तानि चात्मनि प्रविष्टानि, 'तत् सृष्ट्वा तदेवानुप्राविशत्' (तैउ. २।६) इति श्रुतेः । उद्गातः, अहमत्र प्रश्ने त्वा त्वा प्रति एतदुत्तर प्रतिमन्वानः प्रतिजानानोऽस्मि । एवमुत्तर ददामीत्यर्थः । किंच मायया बुद्ध्या मत् मत्तः उत्तरोऽधिकस्त्व न भवसि । मत्तो बुद्धिमान्नासीत्यर्थः । शुम.

प्रजापतिपिता महत्यर्णवे स्थित स्वयंभूः

**सुभूः स्वयंभूः प्रथमोऽन्तर्महत्यर्णवे ।**
**दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः ॥**

ह इति प्रसिद्धम् । प्रथमः सर्वस्यादिः अनादिनिधनः पुरुषः महति अर्णवे कल्पान्तकालीने समुद्रे अन्तः मध्ये गर्भ दधे स्थापितवान् । कीदृशः । सुष्ठु भूः उत्पत्तिर्यस्मात्स सुभूः विश्वोत्पादकः । स्वय भवतीति स्वयभूः स्वेच्छाधृतशरीरः । कीदृशं गर्भम् । ऋत्वियं ऋतुः प्राप्तो यस्य, प्राप्तकालम् । यतो गर्भात् प्रजापतिः ब्रह्मा जातः उत्पन्नः । शुम.

मर्त्यस्य देवत्वम्

**अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे ।**
**तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥**

---

(१) शुसं. २३।४७, शब्रा. १३।५।२।१३.
(२) शुसं. २३।४८, शब्रा १३।५।२।१३.
(३) शुसं. २३।५१, शब्रा. १३।५।२।१५.
(४) शुसं. २३।५२; शब्रा. १३।५।२।१५.

(१) शुसं. २३।६३; शब्रा. १३।५।२।२३.
(२) कासं. ३९।२ (२१) पूर्वार्धे (अद्भ्य· संभृतः पृथिव्या रसो विश्वकर्मणः समवर्तताधि ) देवत्वमा (देवमा ); मैसं. २।७।१५ ( १९९ ) पृथिव्यै ( पृथिव्याः ) ताग्रे (ताधि) तन्मर्त्यस्य देवत्वमा (तत्पुरुषस्य देवमा); शुसं. ३१।१७; कब्रा. १९ (पृष्ठ १०२ ), तैब्रा. ३।१३।१ संभृतः ( संभृत. ) ताग्रे ( ताधि ) तन्मर्त्यस्य देवत्वमा ( तत्पुरुषस्य विश्वमा ); नाउ. १।३ तैआवत्.

योऽयं विराड्रूपो नारायणाख्यः पुरुषः सोऽय अद्भ्यः सभूतः। सर्वत्र व्याप्तेषु जलेषु क्षीरमध्ये मण्डवत् ब्रह्माण्डगोलकमुत्पन्नम् । न केवलमद्भ्य एव, किन्तु पृथिव्यै रसाच्च भूम्याः संबन्धी योऽय रसः सारस्तस्मादप्युत्पन्नः । ‘ मण्डस्य योऽय घनीभावः स पार्थिवः, ये च तन्मध्ये द्रवाशास्त आप्याः, यत्काठिनं सा पृथिवी, यद्द्रवं तदापः ’ इत्यादिश्रुतेः । विश्वकर्मणः जगत्कर्तुः परमेश्वरात् अधिसमवर्तत आधिक्येन निष्पन्नो योऽयं ब्रह्माण्डाभिमानी चेतनः पुमान् सोऽयमीश्वरांशः तस्य विराट्पुरुषस्य रूप चतुर्दशलोकरूपावयवसंस्थान विदधत् निष्पादयन् त्वष्टा विश्वकर्मा जगदीश्वरः एति प्रवर्तते । पुरुषस्य विराडाख्यस्य संबन्धि तत् विश्व प्रसिद्धं देवमनुष्यादिरूपं सर्व जगत् अग्रे सृष्ट्यादौ आजानं सर्वतः उत्पन्नम् ।

तैआसा. ३।१३।१

षट् कण्डिका उत्तरनारायणम् । पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते । अद्भ्यः जलात् पृथिव्याः सकाशाच्च । पृथिव्यपां ग्रहण भूतपञ्चकोपलक्षकम् । भूतपञ्चकात् यो रसः सभृतः पुष्टः । तथा विश्वं कर्म यस्य विश्वकर्मण कालस्य रसात्प्रीतेः यो रसः अग्रे प्रथमं समवर्तत समभवत् । भूतपञ्चकस्य कालस्य च सर्व प्रति कारणत्वात् पुरुषमधेयाजिनो लिङ्गशरीरे पञ्च भूतानि तुष्टानि कालश्च । ततस्तुष्टेभ्यः कश्चिद्रसविशेषफलरूपः उत्तमजन्मप्रदः उत्पन्न इत्यर्थः । तस्य रसस्य रूपं विदधत् धारयन् त्वष्टा आदित्यः एति प्रत्यहमुदयं करोति । अग्रे प्रथमं मर्त्यस्य मनुष्यस्य सतः तस्य पुरुषमेधयाजिनः आजानदेवत्वं मुख्य देवत्व सूर्यरूपेण । द्विविधा देवाः कर्मदेवा आजानदेवाश्च । कर्मणोत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः । सृष्ट्यादावुत्पन्नाः आजानदेवाः । ते कर्मदेवेभ्यः श्रेष्ठाः ‘ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दः ’ ( बृउ. ४।३।३३ ) इति श्रुतेः । सूर्यादयः आजानदेवाः ।

शुम.

तमसः परस्तात् स्थितः अमरत्वप्रदज्ञानविषय· महान् पुरुष ,
बहुधा विजायमानः प्रजापति· धीरदृष्ट·, अज. श्रीलक्ष्मी-
पतिः सर्वलोकप्रदः नक्षत्ररूपशाली अश्विमुखः

[1]वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥

एत महान्त सर्वोत्कृष्टं पुरुषं सूर्यमण्डलस्थमह वेद जानामि इति ऋषेर्वचनम् । कीदृशम् । आदित्यवर्ण आदित्यस्येव वर्णो यस्य तम् । उपमान्तराभावात्स्वोपमम् । तथा तमसः परस्तात् दूरतर तमोरहितमित्यर्थः । तमःशब्देन अविद्या उच्यते । तमेवादित्य विदित्वा ज्ञात्वा मृत्युं अति एति अतिक्रामति पर ब्रह्म गच्छति । अयनाय आश्रयाय अन्यः पन्था मार्गः न विद्यते । सूर्यमण्डलान्तःपुरुष आत्मरूपं ज्ञात्वैव मुक्तिः ।

शुम.

[2]प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा वि जायते ।
तस्य योनिं परि पश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥

यः सर्वात्मा प्रजापतिः अन्तर्हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति । यश्च अजायमानः अनुत्पद्यमानो नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्चरूपेण उत्पद्यते । धीराः ब्रह्मविदः तस्य प्रजापतेः योनिं स्थान स्वरूप परिपश्यन्ति अह ब्रह्मास्मीति जानन्ति । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन् ह तस्मिन्नेव कारणात्मनि ब्रह्मणि तस्थुः स्थितानि । सर्व तदात्मकमेवेत्यर्थः ।

शुम.

[3]यो देवेभ्य आतपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥

(१) शुसं. ३१।१८; कब्रा. २ ( पृष्ठ १०३ ); तैआ. ३।१३।१ तमेव . मेति ( तमेवं विद्वानमृत इह भवति ), श्वेउ ३।८.

(२) शुसं. ३१।१९; कब्रा. १ ( पृष्ठ १०३ ), तैआ. ३।१३।१ उत्तरार्धे ( तस्य धीराः परिजानन्ति योनिम् । मरीचीना पदमिच्छान्ति वेधस । ).

(३) शुसं. ३१।२०; कब्रा. ३ ( पृष्ठ १०३ ) तैआ. ३।१३।२.

यः प्रजापतिः आदित्यरूपः देवेभ्यः अर्थाय आतपति द्योतते । यश्च देवाना पुरोहितः सर्वकार्येष्वग्रे नीतः । यश्च देवेभ्यः सकाशात् पूर्वः जातः प्रथममुत्पन्नः तस्मै आदित्याय नमः । कीदृशाय । रोचते असौ रुचः तस्मै दीप्यमानाय । तथा ब्राह्मये ब्रह्मणः अपत्य ब्राह्मिः । ब्रह्मावयवभूताय वा । शुम.

[1]**रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।**
**यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥**

देवाः दीप्यमानाः प्राणाः रुच शोभन ब्राह्म ब्रह्मणः अपत्य आदित्य जनयन्तः उत्पादयन्तः अग्रे प्रथम तत् वचः अब्रुवन् ऊचुः । तत्किं, अत आह– यो ब्राह्मणः हे आदित्य, त्वा त्वा एव उक्तविधिना उत्पन्न विद्यात् जानीयात्, तस्य ब्राह्मणस्य देवा वशे असन् वश्या भवन्ति । आदित्योपासिता जगत्पूज्यो भवतीत्यर्थः । शुम.

[2]**श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।**
**इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥**

ऋषिः आदित्य स्तुत्वा प्रार्थयते । हे आदित्य, श्रीः लक्ष्मीश्च ते तव पत्न्यौ जायास्थानीये त्वद्वश्ये इत्यर्थः। यया सर्वजनाश्रयणीयो भवति सा श्रीः, श्रीयते अनया श्रीः सपदित्यर्थः। यया लक्ष्यते दृश्यते जनैः सा लक्ष्मीः सौन्दर्यमित्यर्थः। अहोरात्रे तव पार्श्वे पार्श्वस्थानीये । नक्षत्राणि गगनगाः ताराः तव रूपम् । तवैव तेजसा भासमानत्वात् 'तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलकाः' इति ज्योतिःशास्त्रोक्तेः । अश्विनौ द्यावापृथिव्यौ तव व्यात्त विकासितमुखस्थानीये अश्नुवाते व्याप्नुतः तौ अश्विनौ 'अश्विनौ द्यावापृथिव्यौ इमे हीद९ सर्वमश्नुवाताम्' इति श्रुतेः । य ईदृशः त त्वा याचे । इष्णन् कर्मफलमिच्छन् सन् इषाण इच्छ । किं एषणीय, तत्र आह– अमु परलोक मे मम इषाण मम परलोकः समीचीनः अस्तु इतीच्छ । अमोघेच्छत्वात् इष्टं भवतीत्यर्थः। सर्वं मे मम इषाण सर्वलोकात्मकोऽहं भवेयं इतीच्छ इत्यर्थः । मुक्तो भवेयमित्यर्थः । 'सर्वं खल्विदं ब्रह्म' (छाउ. ३।१४।१) इति सामश्रुतेः । शुम.

अग्न्यादित्यवायुचन्द्रम शुक्राप्प्रजापतिब्रह्मरूपः सर्वनिमेषजनकोऽग्राह्यो विद्युत्पुरुषः

[1]**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।**
**तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ॥**

विज्ञानात्मा परेणात्मना विशिष्टोऽग्न्यादिष्वोतप्रोतत्वेनोपास्योऽभिधीयते । अग्निः तदेव कारण ब्रह्मैव, आदित्यस्तदेव, वायुस्तदेव, चद्रमास्तत्तदेव । उ एवार्थे । शुक्र शुक्लं तत्प्रसिद्धम् । ब्रह्म त्रयीलक्षण, तद्ब्रह्मैव । ताः प्रसिद्धा आपो जलानि, स प्रसिद्धः प्रजापतिरपि तदेव ब्रह्म । शुमं.

[2]**सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।**
**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परि जग्रभत् ॥**

सर्वे निमेषाः त्रुटिकाष्ठाघट्यादयः कालविशेषाः पुरुषादधि पुरुषसकाशाज्जज्ञिरे । कीदृशात्पुरुषात् । विद्युतः, विशेषेण द्योतते विद्युत्, तस्मात् । किञ्च कश्चिदपि एन पुरुषं ऊर्ध्वं उपरिभागे न परिजग्रभत् परिगृह्णाति । एन तिर्यञ्चं चतुर्दिक्षु न परिगृह्णाति । मध्ये मध्यदेशेऽपि न गृह्णाति । न ह्यसौ प्रत्यक्षादीनां विषय इत्यर्थः । 'स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते' (बृउ. ४।४।२२) इति श्रुतेः । शुम.

प्रतिमारहितो महद्यशाः हिरण्यगर्भेत्यादिसूक्तप्रतिपाद्य, सर्वादिः प्रजारति. प्रजापतिः, विभू प्रजासु ओतप्रोत.

[3]**न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ।**
**हिरण्यगर्भ इत्येष मा मा हिꣳसीदित्येषा यस्मान्न जात इत्येषः ॥**

(१) शुसं. ३१।२१; कब्रा. ४ (पृष्ठ १०३), तैआ. ३।१३।२.

(२) शुसं. ३१।२२; कब्रा. ५ (पृष्ठ १०३) तैआ. ३।१३।२ श्रीश्च (ह्रीश्च) उत्तरार्धे (इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ।).

(१) शुसं ३२।१, कब्रा ६ (पृष्ठ १०४), नाउ. १।२ (तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः । तदेव शुक्रममृतं तद्ब्रह्म तदाप. स प्रजापति.॥); श्वेउ. ४।२ ता आपः स प्रजापतिः (तदापस्तत्प्रजापतिः).

(२) शुसं. ३२।२; नाउ. १।२; श्वेउ. ४।१९ उत्त. कब्रा. ७ (पृष्ठ १०४)

(३) शुसं. ३२।३, श्वेउ. ४।१९ पू.

तस्य पुरुषस्य प्रतिमा प्रतिमानमुपमानं किञ्चिद्वस्तु नास्ति। अत एव नाम प्रसिद्ध महद्यशः यस्यास्ति। सर्वातिरिक्तयशा इत्यर्थः। 'हिरण्यगर्भः' इत्येषोऽनुवाकः चतुर्ऋचः 'हिरण्यगर्भः' 'यः प्राणतः' 'यस्येमे' 'य आत्मदाः' (शुस. २५।१०–१३) इति। 'मा मा हिंसीज्जनिता' (शुस. १२।१०२) इत्येका एषा। 'यस्मान्न जातः' 'इन्द्रश्च सम्राट्' (शुस. ८।३६–३७) इति द्वृचोऽनुवाकः। एताः प्रतीकचोदिताः पूर्वं पठितत्वादादिमात्रेणोक्ताः ब्रह्मयज्ञे जपे च सर्वा अध्येयाः। एवं सर्वत्र। शुम.

**[1]एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः।**
**स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः॥**

ह प्रसिद्धम्। एषो ह देवः सर्वाः प्रदिशः अनुतिष्ठति व्याप्य स्थितः। हे जनाः, ह प्रसिद्ध, एषः पूर्वः प्रथमो जातः उत्पन्नः। गर्भे अन्तः गर्भमध्ये स उ स एव तिष्ठति। जातोऽपि स एव। जनिष्यमाणः उत्पत्स्यमानोऽपि स एव। प्रत्यङ् प्रतिपदार्थमञ्चति प्रत्यङ्। सर्वतोमुखः सर्वतो मुखाद्यवयवा यस्य। अचिन्त्यशक्तिरित्यर्थः। शुम.

**[2]यस्माज्जातं न पुरा किं चनैव य आबभूव भुवनानि विश्वा।**
**प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी॥**

यस्मात्पुरा किञ्चन किमपि न जातमेव। यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आबभूव समन्ताद्भावयामास। स षोडशी षोडशावयवलिङ्गशरीरी प्रजापतिः प्रजया संरराणः रममाणः त्रीणि ज्योतींषि रवीन्द्वग्निरूपाणि सचते सेवते। शुम.

**[1]येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः।**
**यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम॥**

येन पुरुषेण द्यौरुग्रा उद्गूर्णा। वृष्टिदा कृतेति शेषः। पृथिवी च येन दृढा कृता। सर्वप्राणिधारण वृष्टिग्रहणमन्ननिष्पादनं चेति भूमेर्दार्ढ्यम्। येन स्वः आदित्यमण्डल स्तभित स्तम्भितम्। येन नाकः स्वर्गोऽपि स्तम्भितः। यः अन्तरिक्षे नभसि रजसो जलस्य वृष्टिरूपस्य विमानः विमिमीते निर्माता। त विहाय कस्मै देवाय हविषा विधेम हविर्दद्मः। न कस्मैचिदित्यर्थः। शुम.

**[2]यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।**
**यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम॥**

**[3]आपो ह यद्बृहतीर्यश्चिदापः॥**

क्रन्दसी द्यावापृथिव्यौ य पुरुष मनसा अभ्यैक्षेता साधु कृतमित्यपश्यताम्। किंदृश्यौ क्रन्दसी। अवसा हविर्लक्षणेनान्नेन वृष्टिजनकेन तस्तभाने प्राणिजात स्तम्भयन्त्यौ, रेजमाने शोभमाने। सूरः सूर्यः यत्र द्यावापृथिव्योरुदितः सन् अधि विभाति अधिक शोभते वित्रासयति वा, त विहाय कस्मै हविर्दद्मः। 'आपो ह यद्बृहतीः' 'यश्चिदापः' (शुसं. २७।२५, २६) द्वे प्रतीकोक्ते जपादावध्येये। शुम.

**[4]वेनस्तत्पश्यन्निहितं गुहा सद्यत्र विश्वं भवत्येकनीडम्।**

(१) शुसं. ३२।४, नाउ १।३ एषो ह (एष हि) ह जात· (हि जातः) उत्तरार्धे (स विजायमान स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुख.), श्वेउ. २।१६.

(२) शुसं. ८।३६ पूर्वार्धे (यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा) ३२।५; तैब्रा. ३।७।९।५ संरराण· (संविदान.) पूर्वार्धं शुसं(८।३६)वत्.

(१) शुसं. ३२।६. अन्यस्थलादिनिर्देशः प्रजापतिप्रकरणे (पृ. १९६) द्रष्टव्यः।

(२) शुसं. ३२।७. अन्यस्थलादिनिर्देशः प्रजापतिप्रकरणे (पृ १९६) द्रष्टव्य·।

(३) शुसं. ३२।७.

(४) असं. २।१।१ (वेनस्तत्पश्यत्परमं गुहा यद्यत्र विश्वं भवत्येकरूपम्) पू.; शुसं. ३२।८, कब्रा. १५ (पृ. १०५), नाउ. १।१।३ वेन.. गुहा सत् (वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान्) तस्मिन्नि (यस्मिन्नि) विभू (विभु·).

**तस्मिन्निदँ सं च वि चैति सर्वँ स ओतः प्रोतश्च विभूः प्रजासु ॥**

वेनः पण्डितो विदितवेदान्तरहस्यः तत् ब्रह्म पश्यत् पश्यति जानातीत्यर्थः । कीदृश तत् । गुहा गुहाया रहःस्थाने निहितं स्थापितम् । दुर्ज्ञेयमित्यर्थः । सत् नित्यम् । यत्र ब्रह्मणि विश्व कार्यजात एकनीड भवति । एकमेव नीडमाश्रयो यस्य तत् । अविभक्तमविशेष कारणमेव भवतीत्यर्थः । तस्मिन्ब्रह्मणि इदं सर्व भूतजात समेति च संगच्छते सहारकाले, व्येति च निर्गच्छति सर्गकाले । स परमात्मा प्रजासु ओतः प्रोतश्च, ऊर्ध्वतन्तुषु पट इव शरीरभावेन ओतः, तिर्यक्तन्तुषु पट इव शरीरिभावेन प्रोतश्च । कीदृशः । विभूः, कार्यकारणरूपेण विविध भवतीति विभूः । सर्व स एवेत्यर्थः । शुम.

गूढत्रिपदोऽमृतविद्गन्धर्वे, यस्य ज्ञानेन ज्ञाता पितुरपि पिता भवति

**[1]प्र तद्वोचेदमृतं नु विद्वान्गन्धर्वो धाम विभृतं गुहा सत् ।**
**त्रीणि पदानि निहिता गुहाऽस्य यस्तानि वेद स पितुः पितासत् ॥**

गा वेदवाचं धारयति विचारयतीति गन्धर्वः वेदान्तवेत्ता विद्वान् पण्डितः नु क्षिप्र अमृतं शाश्वत तत् ब्रह्म प्रवोचेत्प्रब्रूयात् । गुहा गुहायां सत् विद्यमान धाम स्वरूप विभृत विहृत सर्गस्थितिप्रलयरूपैर्विभक्तम् । किञ्च अस्यामृतस्य त्रीणि पदानि स्वरूपाणि गुहा गुहायां निहिता निहितानि । पदानि सर्गस्थितिप्रलयाः वेदाः काला वा ब्रह्मान्तर्यामिविज्ञानात्मानो वा । किञ्च यस्तानि पदानि वेद जानाति स पितुः ब्रह्मणोऽपि पिता परमात्मा असत् भवति । परं ब्रह्मैव भवतीत्यर्थः । शुम.

भक्तबन्धु. सर्वधामज्ञः

**[2]स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।**
**यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥**

स परमात्मा नः अस्माकं बन्धुः बन्धुवन्मान्यः । जनिता जनयिता । स च विधाता धारयिता । सः विश्वा सर्वाणि भुवनानि भूतजातानि धामानि स्थानानि च वेद । देवा अग्न्यादयस्तृतीये धामन् धामनि स्थाने स्वर्गरूपे अध्यैरयन्त स्वेच्छया वर्तन्ते । कीदृशा देवाः । अमृत मोक्षप्रापक ज्ञानं यत्र ब्रह्मणि आनशानाः व्याप्नुवानाः । अश्नुवते इति आनशानाः । ब्रह्मनिष्ठ ज्ञान प्राप्ताः सन्तः स्वर्गे देवा मोदन्ते इति भावः । शुम.

यज्ञद्वारा जीवाधिगम्यो जीवान्तरात्मा विभु.

**[1]परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च ।**
**उपस्थाय प्रथमजामृतस्यात्मनात्मानमभि सं विवेश ॥**

इदानी सर्वभूतेष्वहमस्मि, सर्वाणि भूतानि मयीति ज्ञानवतः सर्वमेधयाजिनो मुक्तिरुच्यते । किंच सर्वमेधग्रहोऽपि न, ज्ञानं प्रधानम् । ब्रह्मज्ञानवतो यजमानस्याग्निहोत्रादयोऽपि यज्ञाः सर्वमेधा एवेत्याह—परीत्य भूतानीति कण्डिकाभ्याम् । एव ज्ञानवान् सर्वमेधयाजी आत्मना जीवरूपेण ऋतस्य यज्ञस्य आत्मान यज्ञाधिष्ठातार परमात्मानमभिसविवेश प्रविशति । ब्रह्मैव भवतीत्यर्थः । किं कृत्वा । भूतानि परीत्य सर्वभूतानि ब्रह्मत्वेन विज्ञाय । लोकान्भूरादीन्परीत्य ब्रह्मरूपान् ज्ञात्वा । सर्वाः प्रदिशः विदिशः दिशश्च परीत्य तद्रूपा ज्ञात्वा । प्रथमजां प्रथमोत्पन्ना त्रयीरूपा वाचमुपस्थाय ससेव्य । यज्ञादि कृत्वेत्यर्थः । ‘अपि हि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यत’ इति श्रुतेः प्रथमजा वाक् वेदरूपा । शुम.

**[2]परि द्यावापृथिवी सद्य इत्वा परि लोकान्परि दिशः परि स्वः ।**

(१) असं. २।१।१ पूर्वार्धे ( प्र तद्वोचेदमृतस्य विद्वान्गन्धर्वो धाम परमं गुहा यत् ); शुसं. ३२।९, कब्रा. १६ ( पृष्ठ १०५ ), नाउ १।१।३ ( प्र तद्वोचे अमृतं नु विद्वान्गन्धर्वो नाम निहितं गुहासु । त्रीणि पदा निहिता गुहासु यस्तद्वेद स पितुः पितासत् ).

(२) शुसं. ३२।१०, कब्रा. १७ (पृष्ठ १०५); नाउ. १।१।४ धामन्नध्यै ( धामान्यध्यै ).

(१) शुसं. ३२।११; कब्रा. १८ ( पृष्ठ १०५ ), नाउ. १।१।४ ( परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्यात्मनाऽऽत्मानमभिसंबभूव ॥ ).

(२) शुसं. ३२।१२, कब्रा. १९ ( पृ १०५ ), नाउ १।१।४ पूर्वार्धे ( परि द्यावापृथिवी यन्ति सद्य परि लोकान्परि दिशः परि सुव ) वत्तदासीत् ( वत्प्रजासु ).

ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तदा-
सीत् ॥

परीत्युपसर्गः इत्वेत्यनेन सम्बध्यते । सर्वमेधयाजी तत् ब्रह्म अपश्यत् पश्यति, तदभवत् भवति, तदासीत् वस्तुगत्या तदेवास्ति । अज्ञाननिवृत्तिरेव दर्शन भवन चेति भावः । किं कृत्वा । द्यावापृथिवी सद्यः परि इत्वा परीत्य तद्रूपेण ज्ञात्वा । लोकान्परीत्य दिशः परी[illegible] स्वः आदित्य च परीत्य । गुह्यं वस्तु पुनःपुनः क[illegible] चित्तमारोहतीति पुनरुक्तिः । ऋतस्य यज्ञस्य तन्तुं इतिक[illegible] व्यतां विततं प्रसारितं यथा तथा विचृत्य समाप्य यज्ञं कृत्वेत्यर्थः । ' तदेव सन्तस्तदु तद्भवाम ' इति श्रुतेः, ' ब्रह्मैव सन्ब्रह्माऽप्येति ' ( बृउ. ४।४।६ ) इति श्रुतेश्च ब्रह्मरूपस्य जीवस्याज्ञाननिवृत्तिरेव ब्रह्मात्तिरित्यर्थः । शुम.

संभृतज्येष्ठवीर्यरूपं अग्रे द्युवितानकृत् ऋते प्रथमजं
कस्यापि स्पर्धाया अविषय स्रुक्स्वरुयज्ञ-
र्त्विग्रूपं ब्रह्म

[1]ब्रह्म ज्येष्ठा वीर्या संभृतानि । ब्रह्माग्रे ज्येष्ठं
दिवमाततान ।
ऋतस्य ब्रह्म प्रथमोत जज्ञे । तेनार्हति ब्रह्मणा
स्पर्धितुं कः ॥

हे ज्येष्ठाः वृद्धतमाः प्रजापतिप्रभृतयः शृणुत यानि वीर्याणि ज्ञानैश्वर्यादीनि युष्मासु सभृतानि सपादितानि सर्वाणि ब्रह्मैव । अत एव स्मर्यते– ' यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्व मम तेजोऽशसभवम् ॥ ' (भ. गी. १० । ४१) इति । किंच ज्येष्ठं लोके वृद्धतम ब्रह्म अग्रे प्रथममादिकाले दिवमाततान द्युलोकं विस्तारयति स्म । किं बहुना यद्दत सत्यं सर्वकारणकारणं वस्तु तस्यापि ब्रह्म प्रथम जज्ञे प्रादुरभूत् । स्वस्य स्वयमेव आविर्बभूव स्वप्रकाशत्वेन भासते इत्यर्थः । तेन एवंभूतेन ब्रह्मणा कोऽन्यः पुमान् स्पर्धितुं शक्नोति ।
तैब्रासा.

(१) असं. १९।२२।२१ वीर्या संभृतानि ( संभृता वीर्याणि ) ऋतस्य . . जज्ञे ( भूताना ब्रह्मा प्रथमोत जज्ञे ); तैब्रा. २।४।७।१०.

[1]ब्रह्म स्रुचो घृतवतीः । ब्रह्मणा स्वरवो मिताः ।
ब्रह्म यज्ञस्य तन्तवः । ऋत्विजो ये हविष्कृतः ॥

घृतवतीर्घृतसंपूर्णाः स्रुचोऽपि ब्रह्मैव । मिताः यूपे प्रक्षिप्ताः स्वरवः शकलविशेषा अपि ब्रह्मैव । यज्ञस्य तन्तवो विस्तारा अपि ब्रह्मैव । हविष्कृतो हविःसंपादका ये ऋत्विजः सन्ति तेऽपि ब्रह्मैव । तैब्रासा.

प्रथमजं बुध्न्याविभक्तृ सदसद्योनिविवृतिकृत् विश्वरूपादि-
त्यात्मकं देवाना जगत क्षत्रस्य च जनकं
ब्राह्मणरूपं ब्रह्म

[illegible] जज्ञानं प्रथमं पुरस्तात् । वि सीमतः सुरुचो
[illegible] वेन आवः ।
स बुध्निया उपमा अस्य विष्ठाः । सतश्च
योनिमसतश्च विवः ॥

[3]पिता विराजामृषभो रयीणाम् । अन्तरिक्षं
विश्वरूप आविवेश ।
तमर्कैरभ्यर्चन्ति वत्सम् । ब्रह्म सन्तं ब्रह्मणा
वर्धयन्तः ॥

योऽय वेन आदित्यः पूर्वमुक्तः सोऽय विराजा विशेषेण राजमानाना रयीणा धनाना पिता पालयिता, ऋषभः श्रेष्ठो विश्वरूपः पूर्वाह्णादिषु वसन्तादिषु कालविशेषेषु च बहुरूपः, तादृशोऽयमिद अन्तरिक्षमाविवेश प्रतिदिन प्रविशति । ब्रह्म सन्त परब्रह्मस्वरूप एव भूत्वाऽवस्थित त आदित्यं ब्रह्मणा मन्त्रेण वर्धयन्तो ब्राह्मणा अर्कैरर्चनीयैरभ्यर्चन्ति अभितः पूजयन्ति । तत्र दृष्टान्तः, वत्स यथा दोग्धुकामाः पुरुषा वत्समुपलालयन्त्येवं फलकामा आदित्यमभ्यर्चन्ति । तैब्रासा.

[4]ब्रह्म देवानजनयत् । ब्रह्म विश्वमिदं जगत् ।
ब्रह्मणः क्षत्रं निर्मितम् । ब्रह्म ब्राह्मण आत्मना ॥

(१) असं. १९।४२।२ स्वरवो मिता ( वेदिरुद्धिता ) तन्तव ( तत्त्वं च ), तैब्रा. २।४।७।११.

(२) तैब्रा. २।८।८।८. व्याख्यानं अन्यस्थलादिनिर्देशश्च प्रजापतिप्रकरणे ( पृ. १९७ ) द्रष्टव्यः ।

(३) असं. १३।१।३३ ( वत्सो विराजो वृषभो मतीनामा रुरोह शुक्रपृष्ठोऽन्तरिक्षम् । घृतेनार्कमभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्ति ॥ ), तैब्रा. २।८।८।९, ३।१२।९।१.

(४) तैब्रा. २।८।८।९.

यज्जगत्कारण ब्रह्म तदेव देवानिन्द्रादीनजनयत्। तथैव तद्ब्रह्म अन्यदपि विश्व सर्वमिद जगदजनयत्। ब्रह्मणः सकाशात्क्षत्र निर्मित क्षत्रियजातिर्निर्मिता। यत्पर ब्रह्म तत् आत्मना स्वस्वरूपेणैव ब्राह्मणोऽभवत्। अस्ति हि ब्राह्मणशरीरे परब्रह्मणः आविर्भावविशेषः। अत एवाध्यापनादावधिक्रियते। तैब्रासा.

यस्मिन्नन्त· सर्वे लोका सर्वे देवा विश्वं जगत् भूतानि च समाहितानि तत्कस्यापि स्पर्धाया अगोचरः ज्येष्ठं ब्रह्म आहुतिप्रकाशकम्

[1]अन्तरस्मिन्निमे लोकाः। अन्तर्विश्वमिदं जगत्।
ब्रह्मैव भूतानां ज्येष्ठम्। तेन कोऽर्हति स्पर्धितुम्॥

अस्मिन्ब्रह्मणि अन्तः मध्ये इमे भूरादयो लोकाः अवस्थिताः। तथैवान्तर्मध्ये विश्व सर्वमिद जगत् स्थावरजङ्गमरूपमवस्थितम्। तस्मात्कारणाद्ब्रह्मैव भूताना आकाशादिपञ्चमहाभूताना प्राणिनां च मध्ये ज्येष्ठ अतिशयेन ज्येष्ठ (वृद्ध), प्रशस्त च। तेन तादृशेन ब्रह्मणा को नाम अन्यः पुरुषः स्पर्धितुमर्हति। तत्समानस्य स्पर्धा युक्ता। न चास्ति कश्चित्समानः। अत एव श्वेताश्वतरशाखायामभिधीयते 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वेउ. ६।८) इति। तैब्रासा.

[2]ब्रह्मन्देवास्त्रयस्त्रिꣳशत्। ब्रह्मन्निन्द्रप्रजापती।
ब्रह्मन्ह विश्वा भूतानि। नावीवान्तः समाहिता॥

ब्रह्मन् यथोक्ते ब्रह्मणि त्रयस्त्रिंशद्देवाः 'ये देवा दिव्येकादश स्थ' ( तैस. १।४।१०।१ ) इति मन्त्रोक्ताः समाहिताः। तथा ब्रह्मन् परब्रह्मण्येव देवस्वामिनौ इन्द्रप्रजापती समाहितौ। तथा ब्रह्मण्येव विश्वा भूतानि सर्वाणि स्थावरजङ्गमानि अन्तः समाहितानि सम्यगवस्थितानि। तत्र दृष्टान्तो नावीवेति। यथा समुद्रनद्यादितरणवेलाया चेतनाचेतनानि वस्तूनि नौमध्येऽवस्थाप्यन्ते तद्वत्। तैब्रासा.

[3]चतस्र आशाः प्रचरन्त्वग्नयः। इमं नो यज्ञं नयतु प्रजानन्।
घृतं पिन्वन्नजरꣳ सुवीरम्। ब्रह्म समिद्भवत्याहुतीनाम्॥

(१) तैब्रा. २।८।८।९. (२) तैब्रा. २।८।८।१०.
(३) तैसं. ५।७।८।२, तैब्रा. २।८।८।१०.

यथोक्ते ब्रह्मणि चतस्र आशाः चतुर्विधाः प्राच्यादिदिशः प्रति अग्नयः आहवनीयाद्याः प्रचरन्तु प्रकर्षेण वर्तन्ताम्। पूर्वस्या दिश्याहवनीयो दक्षिणस्यां दिश्यन्वाहार्यपचनः पश्चिमाया दिशि गार्हपत्यः उदीच्या दिश्याग्नीध्रीयः। तथाविधः सर्वाधारपरमात्मा नः अस्मदीयमिम यज्ञं प्रजानन् प्रकर्षेणानुसंदधानो नयतु समाप्ति प्रापयतु। किं कुर्वन्। अजरमविनश्वरं सुवीरं शोभनापत्यहेतुभूतमिद घृत आहुतिरूप पिन्वन्पिबन्। किं बहुना, आहुतीनां अस्माभिरनुष्ठीयमानाना ब्रह्म समिद्भवति परब्रह्मैव सम्यक् प्रकाशक भवति। तैब्रासा.

द्यावापृथिव्योरुपादानकारणं गृहप्रयोजनकवनवृक्षोभयस्थानीयं भुवनधारकमधिष्ठातृ ब्रह्म

[1]किꣳ स्विद्वनं क उ स वृक्ष आसीत्। यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा पृच्छतेदु तत्। यदध्यतिष्ठद्भुवनानि धारयन्॥

लोके हि गृह चिकीर्षुः पुमान् वन गत्वा तत्र कंचिद्वृक्ष छित्वा तदीयैः काष्ठैर्गृह निर्मिमीते। तद्दृष्टान्तेन अत्रापि यतो यस्मात् वनजन्याद्वृक्षात् द्यावापृथिवी द्युलोकभूलोकौ निष्टतक्षुः तक्षणेन निर्मातारो निर्मितवन्तः। तादृश वन किंस्विद्भवेत्। कश्च तादृशः स वृक्ष आसीत्। हे मनीषिणो बुद्धिमन्तो मनसा स्वकीयेन विचार्य तदिदमर्थद्वय आचार्यसमीपे पृच्छत। किंच यत् कारणभूतं वस्तु भुवनानि सर्वान् लोकान् स्वात्मनि धारयन्नध्यतिष्ठत् नियमनमकरोत् तत् इदु तदपि वस्तु पृच्छत। तैब्रासा.

[2]ब्रह्म वनं ब्रह्म स वृक्ष आसीत्। यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा विब्रवीमि वः। ब्रह्माध्यतिष्ठद्भुवनानि धारयन्॥

(१) ऋसं. १०।३१।७ आसीत् (आस) पू: १०।८१।४ आसीत् (आस), तैसं. ४।६।२।५, कासं. १८।२ (११); मैसं. २।१०।२ (१६), शुसं. १७।२० ऋसंवत्, तैब्रा २।८।९।६.
(२) तैब्रा. २।८।९।६.

यदुक्त मनीषिणा प्रश्नत्रय तस्य आचार्यः उत्तर ब्रूते । यस्मात् वनजन्याद्वृक्षात् द्यावापृथिव्यौ निर्मिते तत् वनस्थानीय तत् वृक्षस्थानीयं ब्रह्मैव, तस्य सर्वशक्तित्वात् । यस्य उत्पाद्यस्य या सामग्री अपेक्षिता सा सर्वा तस्मिन् विद्यते । तदेव ब्रह्म सर्वाणि भुवनानि स्वस्मिन् धारयति नियमयति च । हे मनीषिणः आचार्योऽहं मनसा निश्चित्य वः युष्मभ्यं विब्रवीमि विविधमुत्तर ब्रवीमि । तैब्रासा.

अहंव्यपदेश्यजीवाश्रयभूताऽमृताश्रय. ब्रह्म

**मन्द्राऽभिभूतिः केतुर्यज्ञानां वाक् । असावेहि । अन्धो जागृविः प्राण । असावेहि । बधिर आक्रन्दयितरपान । असावेहि । अहस्तोस्त्वा चक्षुः । असावेहि । अपादाशो मनः । असावेहि । कवे विप्रचित्ते श्रोत्र । असावेहि । सुहस्तः सुवासाः । शूपो नामास्यमृतो मर्त्येषु । तं त्वाऽहं तथा वेद । असावेहि ॥**

येय वाक् अस्माभिर्वक्ष्यमाणा मन्त्ररूपा सेय मन्द्रा हर्षहेतुः, अभिभूतिर्विरोधिनामभिभवहेतुः, यज्ञाना केतुर्ज्ञानहेतुः । हे वाग्देवि, असौ पूर्वोक्तमन्द्रादिगुणवती भूत्वा एहि समागच्छ । योऽय प्राणवायुर्मुखनासिकावर्ती दर्शनशक्त्यभावादन्धः, उच्छ्वासक्रियायामप्रमत्तत्वात् जागृविः । हे प्राण, असावेहि तादृशो भूत्वा समागच्छ । एवं सर्वत्र द्रष्टव्यम् । अपानवायुः श्रवणशक्त्यभावाद्बधिरः, उदरमध्ये क्रन्दनस्य ध्वनिविशेषस्य हेतुत्वादाक्रन्दयिता । हे अपानवायो, तादृशः सन्नागच्छ । यदिदं चक्षुरिन्द्रियं तत् अहस्तोः" । आदानशक्तिराहित्यादहस्तम् । हे चक्षुरिन्द्रिय, तादृशं त्वामाह्वयामि, तथाविधः सन्नेहि । यदिद मनोऽस्ति तत् अपादाशो गमनशक्त्यभावात्पादरहित, सर्वगोचरत्वाद्व्यापकम् । हे मनः, तथाविध भूत्वा समागच्छ । श्रोत्रेन्द्रियं शब्दवेदनसद्भावात्कविरूपं, तच्च शब्दान्विविच्य प्रकर्षेण चेतयते इति विप्रचित्तिः । तादृश हे श्रोत्र, तथाविधं भूत्वा समागच्छ । योऽयं सर्वेन्द्रियस्वामी जीवात्मा सोऽय हस्तस्वामित्वात्सुहस्तः, सुष्ठु देहे वसनात्सुवासाः, मर्त्येषु मरणयुक्तेषु देहेष्वमृतो मरणरहितः सन् वर्तते । तादृश जीव, त्वं शूपो नामाऽसि सर्वव्यापारसमर्थत्वात्प्रबल इत्येतादृशनामधार्यसि । तादृश त्वामह तथैव जानामि । त्वं तादृशो भूत्वाऽस्मिन्नेव शरीरे समागच्छ । तैब्रासा.

**अग्निर्मे वाचि श्रितः । वाग्घृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । वायुर्मे प्राणे श्रितः । प्राणो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । सूर्यो मे चक्षुषि श्रितः । चक्षुर्हृदये । हृदय मयि । अहममृते । अमृतं ब्रह्मणि । चन्द्रमा मे मनसि श्रितः । मनो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । दिशो मे श्रोत्रे श्रिताः । श्रोत्रꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आपो मे रेतसि श्रिताः । रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पृथिवी मे शरीरे श्रिता । शरीरꣳ हृदये । हृदय मयि । अहममृते । अमृतं ब्रह्मणि । ओषधिवनस्पतयो मे लोमसु श्रिताः । लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । इन्द्रो मे बले श्रितः । बलꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पर्जन्यो मे मूर्ध्नि श्रितः । मूर्धा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ईशानो मे मन्यौ श्रितः । मन्युर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आत्मा म आत्मनि श्रितः । आत्मा हृदये । हृदय मयि । अहममृते । अमृतं ब्रह्मणि ॥**

वागिन्द्रियस्याग्निरभिमानिदेवता । अत एव शाखान्तरे श्रूयते — 'अग्निर्वाग्भूत्वा मुख प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐआ. २।४।२।४) इत्यादि । सोऽग्निर्मम वागिन्द्रिये श्रितो भवतु । सा च वाङ्मदीये हृदये अन्तःकरणे श्रिता भवतु । तच्च हृदयं मयि अहङ्कर्तरि जीवात्मनि श्रित भवतु । अहं चामृते विनाशरहिते जगत्कारणे मायाऽविद्याशक्त्यव्याकृतादिशब्दैर्वेदेषु श्रूयमाणे प्रधाने श्रितो भवानि । तच्चाऽमृतं अव्याकृतं ब्रह्मणि 'सत्यं ज्ञानमनन्तम्' (तैउ. २।१) इत्यादिश्रुतिप्रतिपाद्ये वस्तुनि श्रितं भवतु । एवं वायुर्मे .

---

(१) तैब्रा. ३।१०।८।२-४.

(१) तैब्रा. ३।१०।८।४-९.

प्राणे श्रित इत्यादिपर्याया व्याख्येयाः। अन्तिमे पर्याये प्रथम आत्मशब्दो ब्रह्माण्डरूपविराड्देहवर्तिनमिन्द्रवाय्वादिदेवतासमूहमाचष्टे। द्वितीय आत्मशब्दोऽनुष्ठातृदेहवर्तिन वाक्प्राणादिसंघातमाचष्टे। अन्यत्पूर्ववद्व्याख्येयम्। तैब्रासा.

पुनर्मे[1] आत्मा पुनरायुरागात्। पुनः प्राणः पुनराकूतमागात्। वैश्वानरो रश्मिभिर्वावृधानः। अन्तस्तिष्ठत्वमृतस्य गोपाः ॥

योऽयं मृत्युग्रहमील्या पलायितुमुद्युक्तो मदीय आत्मा देहः स पुनरागच्छतु। प्राणोऽपि पुनरागच्छतु। आकूतं मनसः संकल्पः, सोऽपि पुनरागच्छतु। योऽयं वैश्वानरो जाठराग्निः सोऽयमपि रश्मिभिर्वर्धमानः अमृतस्य अन्नस्य गोपाः रक्षकः सन् मदीयशरीरस्यान्तस्तिष्ठतु। तैब्रासा.

सत्यमित्युपास्यं आत्मस्वरूपं विभु सर्वोपेतं
अन्तरात्मनि स्थितं भारूपं ब्रह्म

सत्यं[2] ब्रह्मेत्युपासीत। अथ खलु क्रतुमयोऽयं पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैति। एवंक्रतुर्हामुं लोकं प्रेत्याऽभिसंभवति ॥[1]

तृतीये शाण्डिल्यविद्योच्यते—सत्यं ब्रह्मेत्युपासीतेति। सत्यं अबाध्यं नित्यं ब्रह्मेति वक्ष्यमाणैर्मनोमयत्वादिभिर्गुणैरुपेतमात्मानमुपासीत। ब्रह्म बृहतः सकलजगतः सृष्टिस्थितिसंहृतिहेतुभूतम्। तथा च छान्दोग्ये शाण्डिल्यविद्यामेव प्रस्तोतुमाम्नायते—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छाउ. ३।१४।१) इति। तदुपासनप्रतिपादनाय अथ खल्वित्यादिग्रन्थः। अथ खल्विति हेत्वर्थः। अथ खलु यस्मात् क्रतुमयः, क्रतुर्निश्चयोऽध्यवसायः एवमेव नान्यथेत्यविचलितप्रत्ययः, तदात्मकः स पुरुषो जीवो यावत्क्रतुः यादृशक्रतुः यथाध्यवसायो यादृङ्निश्चयोऽस्मिँल्लोके जीवत्पुरुषो भवति, तथाऽयं क्रतुरस्माल्लोकात्प्रेत्य मृत्वा अमुं लोकमभिसंभवति क्रत्वनुरूपफलात्मको भवतीत्यर्थः। एवं चैतच्छास्त्रतो दृष्टं 'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः' (भ. गी. ८।६) इति। यतः क्रत्वनुरूपं फलमुक्तं, ब्रह्मात्मविषयः क्रतुः कर्तव्य इत्यभिप्रायः। शब्रासा.

स[1] आत्मानमुपासीत। मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसंकल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा अनु दिशः प्रभूतं सर्वमिदमभ्याप्तमवाक्कमनादरम्। यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा। एवमयमन्तरात्मन् पुरुषो हिरण्मयः। यथा ज्योतिरधूममेवम्। ज्यायान्दिवः। ज्यायानाकाशात्। ज्यायानस्यै पृथिव्यै। ज्यायान्त्सर्वेभ्यो भूतेभ्यः। स प्राणस्यात्मा। एष म आत्मा। एतमित आत्मानं प्रेत्याऽभिसंभविष्यामीति यस्य स्यात्। अद्धा न विचिकित्साऽस्ति इति ह स्माऽऽह शाण्डिल्यः। एवमेतदिति ॥

कथं क्रतुकरणमिति तत्राह—स आत्मानमुपासीत मनोमयमित्यादि। सत्यं ब्रह्म मनोमयत्वादिगुणविशिष्टमात्मानमुपासीत। एतदेव क्रतुकरणम्। मनोमयं मनःप्रायम्। मनुते अनेनेति मनः, यस्य प्रवृत्त्या विषयेषु प्रवृत्तो भवति। तेन मनसा तन्मयः, तत्प्रवृत्तौ प्रवृत्त इव तदपाये निवृत्त इव। अत एव मनोमयम्। प्राणशरीरं, प्राणः शरीरं यस्य। प्राणो लिङ्गात्मा विज्ञानक्रियाशक्तिद्वयसमूर्च्छितः। 'यो वै प्राणः स प्रज्ञा या वा प्रज्ञा स प्राणः' (कौउ. ३।३) इति, 'स एष प्राण एव प्रज्ञात्मा' (कौउ. ४।२०) इति, 'यस्य प्राणः शरीरम्' (बृउ. ३।७।१६) इति श्रुतेः। 'अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति' (बृउ. १।४।७) इति च श्रुतेः। भारूपं, भा दीप्तिश्चैतन्यात्मलक्षणा रूपं यस्य तम्। आकाशात्मानं, आकाश इव आत्मा स्वरूपं (यस्य), सर्वगतत्वसूक्ष्मत्वरूपादिविहीनत्वादिना आकाशतुल्यम्। कामरूपिणं सर्वकामात्मकम्। मनोजवसं मनोवेगम्। सत्यसंकल्पं अवितथसंकल्पम्। संसारिणोऽनैकान्तिकफलः संकल्पः, नैवमीश्वरस्येत्यर्थः। सत्यधृतिं यथार्थधारणम्। सर्वगन्धं, सर्वे गन्धाः सुखकरा अस्य। 'पुण्यो गन्धः पृथिव्यां च' (भ. गी. ७।९)

(१) तैब्रा. ३।१०।८।९.
(२) शब्रा. १०।६।३।१.

(१) शब्रा. १०।६।३।२.

इति स्मृतेः। सर्वरस, तथा रसा अपि विज्ञेयाः। अपुण्यगन्धरसग्रहणस्य पाप्मसंबन्ध( न्धि ? )निमित्तत्व( त्वश्र ? )श्रवणात्। 'तस्मात्तेनोभय जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः' इति श्रुतेः। न च पाप्मसंसर्गः ईश्वरस्य, अविद्याश्ले( शे ? )षानुपपत्तेः। सर्वा अनु दिशः प्रभूत सर्वा दिशोऽनु प्रभूतं 'सर्वतो ब्रह्म' इति श्रुतेः। सर्वमिदमभ्यास सर्वमिदं जगदभ्यासम्। अवाक्क वाचा रहितम्। पूर्व गन्धरसादिश्रवणेनेश्वरस्य प्राप्तानि घ्राणादीनि गन्धादिग्रहणाय, अतो वाक्प्रतिषेधेन तानि प्रतिषिध्यन्ते। 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्य न च तस्याऽस्ति वेत्ता तमाहुरग्र्यं पुरुष महान्तम्॥' (श्वेउ. ३।१९) इति मन्त्रवर्णात्। अनादर असम्भ्रमम्। अप्राप्तौ अतिसम्भ्रमः स्यादनाप्तकामस्य, न तु नित्यतृप्तस्येश्वरस्य सम्भ्रमोऽस्ति। एवगुणकमात्मानमुपासीतेत्यन्वयः। तस्यैवाणुत्वज्यायस्त्वपरिमाण दर्शयति — यथा व्रीहिर्वा यवो वेति। व्रीह्याद्युपन्यासोऽत्यन्तसूक्ष्मत्वप्रदर्शनार्थः। श्यामाकतण्डुलो वा यथा सूक्ष्मः एव यथोक्तगुणोऽय अन्तरात्मन् अन्तर्देहे अयं पुण्डरीकमध्ये हिरण्मयः सुवर्णसमानतेजाः पुरुषोऽणीयानित्यर्थः। 'आप्रणखात्सर्व एव सुवर्णः' (छाउ. १।६।६) इति श्रुतेः। अणुश्च न सर्व एव सुवर्णसमानकेवलज्योतीरूप इत्याह (?) —यथा ज्योतिरधूममेवमिति। यथा धूमवर्जितं ज्योतिर्दीप्यते एव हिरण्मयः पुरुषो हृदयमध्ये दीप्यते। व्रीहियवश्यामाकतण्डुलवदणीयानित्युक्तेरणुपरिमाणत्व प्राप्तमाशङ्क्य तत्प्रतिषेधायारभते—ज्यायानिति। ज्यायःपरिमाणाज्ज्यायस्त्वं दर्शयन्ननन्तपरिमाण दर्शयति—ज्यायान्सर्वेभ्यो भूतेभ्य इति। यथोक्तगुणलक्षण ईश्वरो ध्येयः। अत एव 'तत्त्वमसि' (छाउ. ६।८।७) 'आत्मैवेद सर्वम्' इति तत्तादात्म्यमात्रप्रतिपादने तात्पर्यम्। एप म आत्मैतमित आत्मान प्रेत्याभिसभविष्यामीति लिङ्गादात्मशब्देन प्रत्यगात्मैवोच्यते। मे इति षष्ठ्याः सबन्धार्थप्रत्यायकत्वात्, एतमभिसभविष्यामीति च कर्मकर्तृविरोधात्। अत उक्तगुणः प्राणस्यात्मा, प्राणरूपस्य मे मम आत्मा। इतोऽस्माच्छरीरात्प्रेत्य पूतमात्मानं क्रत्वनुरूपफलात्मकमभिसभविष्यामि सपत्स्ये इति निश्चिता बुद्धिः यस्य एव विदित स्याद्भवेत् अद्धा अपरोक्षेण च न विचिकित्साऽस्ति एतस्मिन्क्रतुफलसबन्धे, तथैवेश्वरभावं प्रतिपद्यते इत्येवमेतदाह स्म उक्तवान् शाण्डिल्यो नाम ऋषिरिति। शब्रासा.

तदिति निर्देश्यं सर्ववेदप्रतिपाद्यं महद्भूतं ब्रह्मज्ञरूपं ब्रह्म

**तदिति वा एतस्य महतो भूतस्य नाम भवति। योऽस्यैतदेवं नाम वेद ब्रह्म भवति ब्रह्म भवति॥**

उक्तनियमेनाध्ययने फलमाह—इति वै पूर्वोक्तेनैव नियमेनाधीत तत् कृत्स्नस्वाध्यायवाक्य महाव्रतवाक्यं वा एतस्य प्रकृतस्य कृत्स्नवेदप्रतिपाद्यस्य महतः सर्वगतस्य भूतस्य नित्यसिद्धस्य परमात्मनो नाम भवति। कृत्स्नस्य वेदस्य परमात्मप्रतिपादकत्वात्तन्नामत्व युक्तम्। तत्प्रतिपादकत्व च कठैराम्नायते— 'सर्वे वेदा यत्पदमामनन्ति' (काउ. २।१५) इति। विदन्त्यनेन परमात्मानमिति व्युत्पत्त्या वेदशब्दोऽपि तत्प्रतिपादकमेव ग्रन्थमाचष्टे। अतः कृत्स्नवेदस्य परमात्मनामत्वेन अत्यन्तरहस्यमन्त्ररूपत्वाद्बहुविधनियमपुरःसरमध्ययन युक्तम्। यः पुमानेतत्स्वाध्यायवाक्य सर्वमेवमुक्तेनाऽस्य परमात्मनो नामेति वेद, विदित्वा च नियमेनैवाऽधीते स पुमानधीतवेदमुखेन परमात्मानं विदित्वा स्वस्य ब्रह्मत्वावा( धा )रकाज्ञाननिवृत्त्या स ब्रह्म भवति। ऐआसा.

विभु भूतकृतं स्त्रीपुंनपुंसकस्थावरजङ्गमात्मकं सर्वयजमानरूपमक्षरं अहंव्यपदेश्यम्

**यदक्षरं[२] भूतकृतम्। विश्वे देवा उपासते। महर्षिमस्य गोप्तारम्। जमदग्निमकुर्वत॥**

न क्षरति न विनश्यति कदाचिदपीत्यक्षर यत्परं ब्रह्म वस्तु भूतकृतं आकाशादिभूतरूपेण निष्पन्नम्। अत एवोपनिषद्याम्नायते—'तदात्मान स्वयमकुरुत' (तैउ. २।७) इति। तादृश विश्वे सर्वेऽपि देवा उपासते। अस्याक्षरस्य गोप्तारं रक्षितार जमदग्न्याख्य महर्षिमकुर्वत। देवा इन्द्रादयः स्वपुरुषार्थसिद्ध्यर्थं स्वयमुपासते। मनुष्याणामनुग्रहार्थं जमदग्निप्रभृतिक महर्षिसघ अस्य अक्षर-

(१) ऐआ. ५।३।३.
(२) तैआ. १।९।६.

रुशोपदेष्टारमकुर्वत । ऋषयो हि तत्तद्वेदप्रवर्तनेन मनुष्येभ्योऽक्षरमुपदिश्य तत्सप्रदाय परिपालयन्ति ।

तैआसा.

**नाम नामैव नाम मे । नपुंसकं पुमाँस्त्र्यस्मि ।**
**स्थावरोऽस्म्यथ जङ्गमः । यजेऽयक्षि यष्टाहे च ॥**

यथा पूर्वेषु मन्त्रेषु सूर्यनक्षत्रादिरूपेणेष्टका स्तोतु तत्तद्वस्तुमहिमा वर्णितः, एवमत्रापि परमात्मरूपेण स्तोतु परमात्मनः सार्वात्म्यमुच्यते । तदेतन्मन्त्रद्रष्टुर्ब्रह्मविदो वचनम् । अत्र आद्यौ द्वौ नामशब्दौ नकारान्तौ नामधेयमाचक्षाते । तृतीयो नामशब्दः प्रसिद्धिवाचकमव्ययम् । तत्र ब्रह्मवित्पुमान्स्वानुभवं प्रकटयति – मे मम ब्रह्मात्मभूतस्य पूर्वमज्ञानदशाया देवो मनुष्यो गौरश्व इत्येवं तत्तज्जन्मसु यन्नाम व्यवह्रियते तत्सर्वं नामैव नाम शब्दमात्र एव खलु, न तु तत्र परस्परविलक्षणः कश्चिदर्थोऽस्ति । अत एव छन्दोगा उपनिषद्येवमामनन्ति – 'वाचारम्भणं विकारो नामधेयम्' ( छाउ. ६।१।४ ) इति योऽय विकारः शरीरादिर्दृश्यते स सर्वोऽपि वाङ्निष्पाद्य नाममात्रमेव न तु वास्तवः कश्चिद्विकारोऽस्तीति तस्यार्थः । देवतिर्यङ्मनुष्यादिशरीरभेदस्य तत्तन्नामव्यतिरेकेण वास्तवत्वाभावे सति किं तद्वास्तव स्वरूपमिति चेत्तदुच्यते–सर्वेष्वपि वस्तुषु यदनुगत सर्वाधिष्ठानकारणरूपं ब्रह्म तदेव ब्रह्मविदो वास्तवं स्वरूपमित्यभिधीयते । लोके यन्नपुंसक शरीरं यश्च पुमान्या च स्त्री तत्सर्वमहमेवाऽस्मि । यश्च स्थावरो वृक्षादिर्योऽपि जङ्गमो मनुष्यपश्वादिस्तदुभयमप्यहमेवाऽस्मि । तथा वर्तमानयजमानरूपेण यजे यजन करोमि, अतीतयजमानरूपेण अयक्षि यागं कृतवानस्मि, भविष्यद्यजमानरूपेण यष्टाहे याग करिष्यामि । सर्ववस्तुष्वनुगतं सच्चिदानन्दरूपमेकाकार यद्ब्रह्म वस्तु तदेवाहमित्येव स्वानुभवो मन्त्रदर्शिना प्रकटीकृतः । तैआसा.

**मया भूतान्ययक्षत । पशवो मम भूतानि ।**
**अनूबन्ध्योऽस्म्यहं विभुः ॥**

मया मद्रूपेणैव भूतानि सर्वे प्राणिनः अयक्षत याग कृतवन्तः । अहमेव यजमानशरीरेषु जीवरूपेण प्रविश्य तं तं यागमकार्षमित्यर्थः । मम भूतानि मया सृष्टत्वेन मदीयानि पृथिव्यादीनि पञ्च भूतानि पशवो द्विपादश्चतुष्पादः सपन्नाः । अहं ब्रह्मचैतन्यरूपेण विभुः व्याप्त एव सन् अनूबन्ध्योऽस्मि, तत्तच्छरीरेषु प्रविश्य तदात्मत्वाभिमान कृत्वाऽनुबन्धवान् सबन्धवानस्मि । तैआसा.

**स्त्रियः सतीः । ता उ मे पुंस आहुः । पश्यदक्षण्वान्न विचेतदन्धः ।**
**कविर्यः पुत्रः स इमा चिकेत । यस्ता विजानात्सवितुः पिता सत् ॥**

या लोके प्रसिद्धाः स्त्रियः सतीः सद्रूपाः गुरुकटाक्षेण 'सदेव सोम्येदमग्र आसीत्' ( छाउ. ६।२।१ ) इत्यादिश्रुत्युक्त सद्वस्तु बुद्ध्वा तदनुभवेन तद्रूपा वर्तन्ते, ता उ ता अपि स्त्रियो मे मते पुस आहुः ब्रह्मविदः पुरुषान् कथयन्ति । यद्यपि शरीरे स्तनवृद्ध्यादि स्त्रीलक्षणं दृश्यते, तथापि पुरुषस्योचित तत्त्वज्ञानमस्तीति पुरुषलक्षणसद्भावात्पुरुषत्व तासामभिज्ञाः कथयन्ति । ये तु शरीरे श्मश्रुप्रभृतिभिः पुरुषलक्षणैर्युक्ता अपि पुरुषस्योचित तत्त्वज्ञान न सपादयन्ति, ते स्त्रीणामुचितेन मोहेनोपेतत्वात् स्त्रिय एवेत्यभिप्रायः । यथा स्त्रीपुरुषविभागो लोकविपरीतः एवमन्धाऽनन्धविभागोऽपि द्रष्टव्यः । अक्षण्वान् चक्षुरिन्द्रिययुक्तः पश्यन् नीलपीतादिरूप पश्यन्नपि न विचेतत् विवेकेन सद्वस्तुतत्त्व न जानाति चेत्सोऽयं अन्ध एव । मासदृष्टिरहितोऽपि स्वरूपतत्त्वाभिज्ञश्चेत्सोऽय चक्षुष्मानेवेत्यपि द्रष्टव्यम् । यथाऽयमलौकिकान्धाऽनन्धविभागः, एव पितृपुत्रविभागोऽप्यलौकिकः कश्चिद्द्रष्टव्यः । लोके यत्र पिता न जानाति, पुत्रस्तु कविः वेदशास्त्रपारगतः, तत्र स पुत्रः इमा एतानि दृश्यमानानि सर्वाणि भूतानि विवेकेन स्वात्मत्वेन जानाति । तदानी यः पुत्रस्ता विजानात् तानि सर्वाणि भूतानि स्वात्मतया जानाति स पुत्रः सवितुः उत्पादकस्यापि पिता सत् पिता भवति । ज्ञानोपदेशेन पालयितु समर्थत्वात् । किं बहुना, तत्त्वज्ञानमेव प्रशस्त, अज्ञान निकृष्टमिति तात्पर्यार्थः ।

तैआसा.

अनिन्द्रियोऽपि इन्द्रियव्यापारकर्ता

**अन्धो मणिमविन्दत् । तमनङ्गुलिरावयत् ।**
**अग्रीवः प्रत्यमुञ्चत् । तमजिह्वा असश्चत ॥**

(१) तैआ. १।११।३-७.

लोके हि पुरुषश्चक्षुषा मणिं दृष्ट्वा तमङ्गुलिभिरादाय ग्रीवायां प्रतिमुच्य जिह्वया प्रशंसति। चिद्रूप आत्मा तु चक्षुरङ्गुलिग्रीवाजिह्वावर्जित एव सन्नचिन्त्यशक्तित्वात्तान्सर्वान्व्यापारान्करोति। तथा च श्वेताश्वतरा बाह्यसाधनरहितस्यैव सर्वव्यापारकर्तृत्वमामनन्ति—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वेउ. ३।१९) इति। आत्मा ह्युपाधिभेदाद्द्विविधः, जीवः ईश्वरश्चेति। तथा च सिद्धान्तरहस्याभिज्ञा आहुः—'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति। कार्यं देहेन्द्रियादिसंघातरूपं, कारणमचिन्त्यशक्तिः। तत्र कार्योपाधिर्जीवः स्वतो निरुपाधित्वेन सर्वसाधनशून्य एव सन्नज्ञानेन देहेन्द्रियतादात्म्यं स्वस्मिन्नारोप्य भ्रान्त्या सर्वमिदं करोतीति लक्ष्यते, ईश्वरस्तु भ्रान्तिरहितोऽप्यचिन्त्यशक्तियुक्तत्वाच्चक्षुरादिसाधनहीन एव सन् संकल्पमात्रेण सर्वव्यापारं करोति, तदुभयमभिप्रेत्याऽयं मन्त्रः प्रवृत्तः। अथ वा, योगाभ्यासेन चक्षुरादीन्द्रियं निरुध्य नीलपीतादिष्वन्धः सन् मणिमिव स्वयंप्रकाशमात्मानं समाधिना पश्यति। तस्य च दृष्टस्य वस्तुनः स्वस्वरूपत्वेन निश्चयः स्वीकारः। अतोऽङ्गुलिव्यापाररहितोऽपि स्वीकरोतीत्युच्यते। तस्मिन् वस्तुनि स्थैर्यं प्रत्यमुञ्चदित्युच्यते। कृतकृत्योऽस्मीत्यादि भाषणं जिह्वया प्रशंसेत्युच्यते। तैआसा.

ऊर्ध्वमूलावाक्शाखो वृक्षः

**ऊर्ध्वमूलमवाक्छाखम्। वृक्षं यो वेद संप्रति। न स जातु जनः श्रद्दध्यात्। मृत्युर्मा मारयादिति॥**

लौकिकस्य हि वृक्षस्याधोभागे मूलमूर्ध्वभागे शाखाश्च। संसारवृक्षस्य तद्वैपरीत्यम्। ऊर्ध्वं सर्वोत्कृष्टं ब्रह्म मूलं, अवाञ्चोऽधमाः ब्रह्मादिस्तम्बान्ताः देहाः शाखाः। अयं च संसारो व्रश्चनयोग्यत्वाद्वृक्षः। तत्त्वज्ञानेन हि सोऽयमज्ञानजन्यो वृक्षश्छिद्यते। तमीदृशं वृक्षं यः पुमान्गुरुशास्त्रमुखाद्वेद स जनः संप्रति तदानीमेव न श्रद्दध्यान्न विश्वस्यात्। किंविषयोऽयमविश्वास इति तदुच्यते—जातु कदाचिदपि मृत्युर्मा मारयात् मा हन्यादिति। अयमर्थः—सर्वो ह्यज्ञानेन जन्तुः कदाचिन्मृत्युर्मां मारयिष्यतीति विश्वासं कृत्वैव वर्तते। अयं तु ब्रह्मज्ञानी ब्रह्मरूपस्य स्वस्य जन्ममरणाभावं निश्चित्य तस्मिन्नेव क्षणे स्वकीयमरणविश्वासं परित्यजति। आत्मनो मरणाभावाद्देहस्य च स्वव्यतिरिक्तत्वान्मृत्योर्न बिभेतीत्यर्थः। तैआसा.

हसितरुदितादिक्रियायुक्तः मृतसजीवाद्यङ्गयुक्तः विदेहः सतृष्णोऽतृष्णोऽचेतनश्चेतनः

**हसितꣳ रुदितं गीतम्। वीणा पणवलासितम्। मृतं जीवं च यत्किंचित्। अङ्गानि स्नेव विद्धि तत्॥**

अत्र शरीरस्याऽऽत्मत्वशङ्कां वारयितुं तदीया विकारा उपन्यस्यन्ते—हसितं कदाचिन्मुखे हासो दृश्यते, कदाचिद्रोदनं, कदाचिदुत्साहेन गानं, कदाचिद्धस्ते वाद्यमाना वीणा, कदाचित्पणवस्य मृदङ्गस्य लासितं वादनरूपो विनोदः, कदाचिच्छरीरं मृतं दृश्यते, कदाचिज्जीवनोपेतं, एवमन्यदपि यत्किञ्चिद्विकारजातमस्ति तत्सर्वमङ्गानि स्नेव विद्धि। यथा हस्तपादाद्यङ्गानि शरीरगतानि, स्नाशब्देन स्नायवोऽभिधीयन्ते, यथा वा स्नायवः शरीरगताः एवमेता हसितादिविकाराः शरीरादिगता न त्वात्मनो योग्या इति हे विवेकिन् त्वं विजानीहि। तैआसा.

**अतृष्यꣳस्तृष्य ध्यायत्। अस्माज्जाता मे मिथूचरन्। पुत्रो निर्ऋत्या वैदेहः। अचेता यश्च चेतनः॥**

अत्र पूर्वोक्तेन हसितादिगुणयुक्तेन शरीरादिना सह चिदात्मनस्तादात्म्याध्यासो वर्ण्यते। अयं चिदात्मा स्वयमतृष्यन्नेव (तृष्य) तृष्यस्तृषां प्राप्नोति। तृषाया जडधर्मत्वेन स्वस्मिन्नसंभवेऽपि जडतादात्म्यभ्रमेण तृषां प्राप्नोतीव लक्ष्यते। तथा ध्यायत् ध्यायतीव, स्वयं ध्यानरहितोऽपि ध्यानयुक्तेन मनसा सह तादात्म्यभ्रमात्स्वयं ध्यायतीव लक्ष्यते। अस्माद्दृश्याज्जडदेहाज्जाता हसितादिविकाराः मे मदीया इति भ्रान्त्या ध्यायतीति शेषः। मिथूशब्दो मिथःशब्दपर्यायः सन् चिज्जडयोः परस्परमेलनं ब्रूते, तेन मेलनेन चरन् मदीयमिति वृथाऽभिमन्यते। कोऽसावेवमभिमन्यते इति तदुच्यते—निर्ऋत्या निर्ऋतिवत्प्रतिकूलाया मायायाः पुत्रोऽहंकारो विदेहस्य शरीररहितस्य चिदात्मनः संबन्धी वैदेहश्चैतन्यच्छायायुक्त इत्यर्थः। तदेव स्पष्टीक्रियते—योऽहंकार अचेताः स्वयमचेतनः संश्चेतनश्च

चैतन्यच्छायायोगेन चेतनोऽपि भवति, तादृशः पदार्थः। देहेन्द्रियादिधर्मानात्मन्यारोप्य तदारोपेण सुखध्यानादिधर्माः आत्मनि प्रतिभासन्ते। तैआसा.

निरवयवोऽप्यवयवकर्मकर्ता

**स तं मणिमविन्दत्। सोऽनङ्गुलिरावयत्। सोऽग्रीवः प्रत्यमुञ्चत्। सोऽजिह्वो असश्चत॥**

यः पूर्वोक्तश्चेतनाऽचेतनयोः अन्योन्यतादात्म्याध्यासेन निष्पन्नः ससारी स एव त मणि अतीते 'अन्धो मणिम्' इत्यादिमन्त्रे प्रोक्त मण्याद्युपलक्षितमाभरण चक्षुषा दृष्टवान्। स एव स्वतोऽङ्गुलिरहितोऽपि देहतादात्म्याध्यासेन तदीयैरङ्गुलिभिरावयत्स्वीकृतवान्। तथा स्वतो ग्रीवारहितोऽपि शरीरगताया ग्रीवाया प्रत्यमुञ्चत्। तथा स एव स्वतो जिह्वारहितोऽपि शरीरगतया जिह्वया असश्चत प्रशसा कृतवान्। तैआसा.

तत्त्वविदो व्रतम्

**नैतमृषिं विदित्वा नगरं प्रविशेत्। यदि प्रविशेत्। मिथौ चरित्वा प्रविशेत्। तत्संभवस्य व्रतम्॥**

अथ ब्राह्मणमाह। एतमृषि पूर्वोक्त विवेकप्रतिपादक मन्त्रसंघ विदित्वा मन्त्रप्रतिपाद्यं परमार्थतत्त्वमवगत्य नगर जनसमर्दयुक्त न प्रविशेत्। यद्वा, नगरोपलक्षितं देहं न प्रविशेत्, देहे तादात्म्यभ्रमं न कुर्यादित्यर्थः। यदि कथचित्पूर्ववासनाबलात्प्रविशेत् देहे तादात्म्यबुद्धिं कुर्यात् तदानीं मिथौ चरित्वा शास्त्रार्थपर्यालोचनया मिथ्येदमिति निश्चित्य प्रविशेत् तादात्म्यभ्रमरहितेन देहेन प्रारब्धभोगाय लोकव्यवहार कुर्यात्। तदेतत्सभवनाम्न ऋषेर्व्रतं आचारः, स ह्येवमाचरितवान्। तैआसा.

सर्वकामप्रापकं पितृयमवरुणाश्विमरुतामालम्बनं सनातनं ब्रह्म ध्यातृध्येयोभयरूपम्

**अदो यद्ब्रह्म विलबम्। पितॄणां च यमस्य च। वरुणस्याश्विनोरग्नेः। मरुतां च विहायसाम्॥**

पूर्वोक्त जगत्कारणमस्ति, अदो ब्रह्म पित्रादीना सर्वेषां विलबं विशेषेणाऽऽलम्बनम्। विहायसामित्यनेन आकाशवर्तिनो यक्षगन्धर्वादय उच्यन्ते। तैआसा.

**कामप्रयवणं मे अस्तु। स ह्येवाऽस्मि सनातनः। इति नाको ब्रह्मिश्रवो रायो धनम्। पुत्रानापो देवीरिहाऽऽहिता॥**

प्रकर्षेण यवनं मिश्रीकरण प्रयवण, कामाना प्रयवण येन ब्रह्मणा भवति तत्कामप्रयवण, मे मम ब्रह्म प्रकामप्रापकमस्तु। हि यस्मात्, अतः सनातनः अनादिसिद्धः स एव परमात्मैवाऽस्मि। इति अतः कारणान्नाको दुःखरहितस्थानविशेषः, ब्रह्मिश्रवो ब्रह्मविषयवाक्यश्रवण, रायो हिरण्यादयः, धन प्रीतिसाधन स्त्रीपुत्रादि चेत्येतत्सर्वं ममास्त्विति शेषः। देवीर्देवनशिला आपो यूयमभीष्टकाः इह अस्मिन्वर्मणि पुत्रान् आहिता आधत्त सपादयत। तैआसा.

प्राप्य चतुर्जालो मृत्योरगोचरो देवाना अमृतस्य च स्थानं ब्रह्मकोश

**भूः प्रपद्ये। भुवः प्रपद्ये। स्वः प्रपद्ये। भूर्भुवः स्वः प्रपद्ये। ब्रह्म प्रपद्ये। ब्रह्मकोशं प्रपद्ये। अमृतं प्रपद्ये। अमृतकोशं प्रपद्ये। चतुर्जालं ब्रह्मकोशं यं मृत्युर्नावपश्यति तं प्रपद्ये। देवान्प्रपद्ये। देवपुरं प्रपद्ये। परीवृतो वरीवृतो ब्रह्मणा वर्मणाऽहं तेजसा कश्यपस्य॥**

सायकालीनसंध्यावन्दनादूर्ध्वं ध्रुवमण्डले परब्रह्मोपस्थानार्थं मन्त्रमाह। य एते पृथिव्यादयस्त्रयो लोका यश्चैषा लोकाना संघः तत्सर्वं प्रपद्ये प्राप्नोमि। ब्रह्मशब्देन चतुर्मुखस्य शरीरमुच्यते। तस्य कोशस्थानीयो ब्रह्मलोकः। अमृतशब्देन विराट्कारणभूतः सूत्रात्मोच्यते, तस्य कोशस्थानीयमव्यक्तम्। एतच्चतुर्विधं प्रपद्ये भजामीत्यर्थः। चतुर्जालं चतुर्विधाः अन्नमयप्राणमयमनोमयविज्ञानमयाः कोशाः जालवदावरकाः यस्य पञ्चमकोशस्य त चतुर्जालं परब्रह्मणः कोश यमानन्दमय मृत्युर्नावपश्यति, नहि तस्य कारणरूपस्य कार्यवद्विनाशोऽस्ति, तादृश कोशमहं प्रपद्ये। देवानिन्द्रादीन्, तेषा पुरं देवपुरं च प्रपद्ये। अहं तेन ब्रह्मणा, वर्मणा कवचरूपेण परमात्मना परीवृतः परितो वेष्टितः वरीवृतः पुनःपुनर्वेष्टितः तथा कश्यपस्य तेजसा, कश्यपस्य प्रेक्षकस्य 'कश्यपः पश्यको भवति' (तैआ. १।८।८) इति न्यायेन सर्वसाक्षिणः ईश्वरस्य तेजसा परि-

(१) तैआ. १।२७।६.

(१) तैआ. २।१९.

वृतः। अहमीदृगः,रक्षकोऽयं ब्रह्मा, तदुपस्थानेन मृत्युं तरामीत्यर्थः। तैआसा.

शिशुकुमाराख्यः सर्वदेवरूपावयवशाली भूतपति नमस्य

**यस्मै नमस्तच्छिरः। धर्मो मूर्धानम्। ब्रह्मोत्तरा हनुः। यज्ञोऽधरा। विष्णुर्हृदयम्। संवत्सरः प्रजननम्। अश्विनौ पूर्वपादौ। अत्रिर्मध्यम्। मित्रावरुणावपरपादौ। अग्निः पुच्छस्य प्रथमं काण्डम्। तत इन्द्रः। ततः प्रजापतिः। अभयं चतुर्थम्॥**

ब्रह्मोपस्थानकाले सर्वात्मकस्य परमेश्वरस्य शिशुमाराख्यजलग्राहरूपत्व ध्यानार्थं दर्शयति। यस्मै परब्रह्मणे नमः सर्वैर्नमस्कारः क्रियते तत्परं ब्रह्म अत्र शिशुमाराख्यध्यातव्यस्य जलग्राहस्य शिरः उत्तमाङ्गस्थानम्। योऽयमनुष्ठेयो धर्मः स मूर्धानं मूर्धस्थानीयः। शिरसो मूर्ध्नश्चैकस्मिन्नेवाऽऽयतने ऊर्ध्वाधोभागभेदेन भिदा। योऽयं चतुर्मुखो ब्रह्मा सोऽय तस्य ग्राहस्योत्तरा हनुः। यो यज्ञः सोऽधरा हनुः। यो विष्णुः सोऽयं हृदयस्थानीयः। यः सवत्सरः सोऽय प्रजननेन्द्रियस्थानीयः। यावश्विनौ तौ तस्य ग्राहस्य पूर्वपादौ। योऽयमत्रिमुनिः सोऽय मध्यशरीरम्। यौ मित्रावरुणौ देवौ तावपरपादौ। शिशुमारस्य पुच्छे बहवो भागाः। तत्राऽग्निः पुच्छस्य प्रथम काण्डं प्रथमो भागः। ततस्तदूर्ध्वमिन्द्रो द्वितीयो भागः। ततोऽप्यूर्ध्व प्रजापतिस्तृतीयो भागः। ततोऽपि परतः अभय भयरहित पर ब्रह्म चतुर्थो भागः। तैआसा.

**स वा एष दिव्यः शाक्वरः शिशुमारः। तꣳह य एवं वेद। अप पुनर्मृत्युं जयति। जयति स्वर्गं लोकम्। नाऽध्वनि प्रमीयते। नाऽग्नौ प्रमीयते। नाऽप्सु प्रमीयते। नाऽनपत्यः प्रमीयते। लघ्वान्नो भवति॥**

'एवं ध्यातव्यानवयवान् संपाद्यावयविन दर्शयति। 'यस्मै नमस्तच्छिरः' इत्यादिना 'अभयं चतुर्थम्' इत्यन्तेन वाक्येन योऽयं निरूपितः स एष दिव्यो दिवि भवः, शाक्वरोऽत्यन्तशक्तिमान्, शिशून् मारयति मुखेन निगिरतीति शिशुमारो जलग्राहविशेषः। स हि जलमध्ये अत्यन्तविवृतेन मुखेन मनुष्यान् गृह्णातीति। एवं ध्यातव्यो ग्राहो निरूपितः, तद्ध्यानं तत्फलं च दर्शयति—यः पुमान्दिव्यं शिशुमार वेद मनसा ध्यायति स पुनरपमृत्युं जयति मार्गादिमरणरूपोऽपमृत्युविशेषश्च न भवति। दुर्मरण तस्य न भवतीत्यर्थः। लघ्वान्नः लब्धान्नः सर्वत्र सुलभान्नो भवति। तैआसा.

**ध्रुवस्त्वमसि। ध्रुवस्य क्षितमसि। त्वं भूतानामधिपतिरसि। त्वं भूतानाꣳ श्रेष्ठोऽसि। त्वां भूतान्युपपर्यावर्तन्ते। नमस्ते नमः सर्वं ते नमः। नमः शिशुकुमाराय नमः॥**

अथ ध्यानानन्तरमनुमन्त्रणमाह—अनेन मन्त्रेणोदङ्मुखो भूत्वा ध्रुवमण्डलं पश्यन् शिशुमाररूपेण तमुपतिष्ठेत। हे शिशुमार, त्व ध्रुवोऽसि विनाशरहितोऽसि। तथा ध्रुवस्य जगतः आकाशादेः क्षितं निवासस्थानमसि। भूतानां सर्वेषा प्राणिना त्वमधिपतिरसि। अत एव भूताना मध्ये श्रेष्ठोऽसि। भूतानि सर्वाणि त्वामुपेत्य परितः सेवन्ते। तस्मात्ते तुभ्य नमोऽस्तु। यत्सर्वं जगत्तवाधीन तथा सति नमः सर्व त्वदीयाय सर्वस्मै नमः। तथा ते नमः सर्वस्य स्वामिने तुभ्यमपि नमः। किं बहुना, नमः शिशुकुमाराय नमः, शिशुकुमारस्य जलग्राहविशेषस्य कुमारो बालकस्तदाकारो यो ध्रुवस्तस्मै नमस्कारोऽस्तु। उभयतोनमस्कारोऽय मन्त्रः, तच्च नमस्कारद्वयमादरार्थम्। तैआसा.

जनानामिन्द्रस्य चात्मा मनसा चरन् जनानामन्तः प्रविष्टः शास्ता मानसीनः सर्वात्मा

**सुवर्णं घर्मं परिवेद वेनम्। इन्द्रस्याऽऽत्मानं दशधा चरन्तम्।**
**अन्तः समुद्रे मनसा चरन्तम्। ब्रह्माऽन्वविन्दद्दशहोतारमर्णे॥**
**अन्तः प्रविष्टः शास्ता जनानाम्। एकः सन्बहुधा विचारः॥**
**शतꣳशुक्राणि यत्रैकं भवन्ति। सर्वे वेदा यत्रैकं भवन्ति।**
**सर्वे होतारो यत्रैकं भवन्ति। स मानसीन आत्मा जनानाम्॥**
**अन्तः प्रविष्टः शास्ता जनानाꣳ सर्वात्मा। सर्वाः प्रजा यत्रैकं भवन्ति।**

(१) तैआ. ३।११।१-१२.

**चतुर्होतारो यत्र संपदं गच्छन्ति देवैः । स मानसीन आत्मा जनानाम् ॥**

'चित्तिः स्रुक्' ( तैआ ३।१ ) इत्यादीना होतृमन्त्राणां हृदय रहस्य तत्त्व परमात्मस्वरूप प्रतिपादयतीत्ययमनुवाको हृदयमित्युच्यते । तत्रानेन मन्त्रेण दशहोतृहृदय परमात्मतत्त्वमुच्यते । अह मन्त्रद्रष्टा इन्द्रस्य परमेश्वरस्य आत्मान निजस्वरूप परिवेद परितः सर्वत्राऽवस्थितं जानामि । कीदृशमात्मानम् । सुवर्ण सुवर्णसदृश, यथा सुवर्ण स्वत एव प्रकाशमान भवति तथा स्वयप्रकाशम् । घर्म अन्यस्य वस्तुनो दीपक 'तस्य भासा सर्वमिद विभाति' (मुउ.२।२।१०) इति श्रुतेः । वेनं कान्त, सर्वदुःखराहित्येन तस्य कमनीयत्वम् । दशधा 'चित्तिः स्रुक्'इत्यादिदशहोतृमन्त्रे प्रतिपादितैराकारैः चरन्त लोके व्यवहरन्तम् । अन्तः समुद्रे ब्रह्माण्डसृष्टेः पुरा सर्वत्र व्याप्याऽवस्थितो योऽय जलसघः सोऽय समुद्रः, तस्य मध्ये मनसा चरन्त इद सर्व जगत्सृजेयेत्येवरूपेण मनोवृत्तिविशेषेण सह प्रवर्तमानम् । अत एवाऽन्यत्रोक्त— 'आपो वा इदमासन्सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्याऽन्तर्मनसि कामः समवर्तत । इद सृजेयमिति'(तैआ.१।२३।१) इति । ब्रह्मा चतुर्मुखः प्रजापतिः अर्णे अर्णवे यथोक्तसमुद्रे दशहोतार दशहोतृमन्त्र तत्प्रतिपाद्यरूपेणाविर्भूत परमात्मानमन्वाविन्दत् सृष्टिसाधनत्वेनान्विष्य लब्धवान् । तथा च ब्राह्मणे समाम्नात—'प्रजापतिरकामयत प्रजाः सृजेयेति । स एत दशहोतारमपश्यत्' ( तैब्रा. २।२।१।१ ) इति । सोऽयमेवविधः परमात्मा जनाना सर्वेषा शास्ता अन्तर्यामिरूपेण नियामकः सन्हृदये प्रविश्याऽवस्थितः । तथा च स्मर्यते – 'ईश्वरः सर्वभूताना हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥' ( भ. गी. १८।६१ ) इति । स चान्तर्यामी स्वकीयेनेश्वररूपेण एक एव सन् पुनर्जीवरूपेण बहुधा भूत्वा विचारो विविधचरणवान् भवति । अत एवाऽन्यत्रोपनिषदि श्रूयते—'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' इति । शत शुक्राणि शतसख्योपलक्षितान्यनन्तानि सूर्यचन्द्रनक्षत्ररूपाणि ज्योतीषि यत्र यस्मिन् परमात्मनि एकं भवन्ति एकत्वं प्राप्नुवन्ति । तथा सर्वे वेदा ऋग्वेदप्रभृतयश्चत्वारो वेदाः नानाविधशाखोपेताः विलीय यस्मिन्नेकीभवन्ति । होतारश्च होमकर्तारः सर्वे यजमानाः दशहोत्रादिमन्त्रा वा यस्मिन् परमात्मन्येकत्वं प्राप्नुवन्ति । यथा बुद्बुदा जलमध्ये समुत्पद्य कचित्कालमवस्थाय विलीयमाना जले एवैक्य प्राप्नुवन्ति, तथा सर्वे भावाः परब्रह्मण एवोत्पद्य तत्रैव स्थित्वा विलीयमाना एकतां गच्छन्ति । अत एवोपनिषदि श्रूयते— 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' (तैउ. ३।१) इति । स तादृश ईश्वरः सर्वेषा जनानामात्मा स्वरूपभूतः सन् मानसीनो योगयुक्तेन मनसोपलभ्यो भवति । तथा च कठा अधीयते— 'मनसैवेदमाप्तव्यं नेह नानाऽस्ति किंचन' ( काउ. ४।११) इति । ततो योगिना मानसप्रत्यक्षगम्यत्वात् अन्तः प्रविष्टः शास्ता जनानामिति योऽयमुक्तः सोऽयं सर्वात्मा सर्वेषां प्राणिनामात्मा स्वरूपभूतः । त हि जना योगेन निरुद्धचित्ताः सन्तो जगदीश्वरं स्वस्वरूपत्वेनैव साक्षात्कुर्वन्ति न तु भेदेन पश्यन्ति, अतः पूर्वोक्तः सर्वोऽप्यर्थ उपपन्नः इत्युपसाह्रियते—सर्वाः प्रजाः देवमनुष्यादयो यत्र यस्मिन् योगिप्रत्यक्षगम्ये चैतन्यैकरसे परमात्मन्येकीभवन्ति, चतुर्होतृमन्त्राश्च सर्वे यस्मिन्स्वप्रतिपाद्यैः देवैः सह यस्मिन्ब्रह्मणि संपदं सम्यगेकीभाव प्राप्नुवन्ति, स तादृशो ब्रह्मस्वरूपो मानसीनो मानसप्रत्यक्षः सर्वेषा जनानामात्मा । ऋचां भेदादपुनरुक्तिर्द्रष्टव्या । द्वितीया द्विपदा, इतरास्तिस्रश्चतुष्पदाः इत्यृचां विवेकः । अत्र चतुर्होतृशब्देन दशहोत्रादयः सर्वेऽपि मन्त्रा विवक्ष्यन्ते । तैआसा.

ब्रह्मणा तपसा लब्धः, अग्नीन्द्रसवितृबृहस्पतित्वष्टृयज्ञात्मकः, अमृतप्राण , विपश्चित्, अन्त. प्रविष्ट· कर्ता

**ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिव आत्मानँ सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तम् । वाचो वीर्यं तपसाऽन्वविन्दत् ॥**

तदेव दशहोतृहृदयाख्यो मन्त्रोऽभिहितः । अथ चतुर्होतृहृदयाख्यो मन्त्रोऽभिधीयते । तत्र तिस्रः ऋचः । ब्रह्मा चतुर्मुखः इन्द्रं परमैश्वर्ययुक्तं परमात्मान तपसा

अन्वविन्दत् अन्विष्य लब्धवान्। दर्शपूर्णमासयष्टिसाधनं किमिति विचार्य चतुर्होतृमन्त्ररूपेणाऽवस्थित परमात्मान निश्चितवानित्यर्थः। तथा च ब्राह्मणे आम्नायते—'प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति। स एत चतुर्होतारमपश्यत्' (तैब्रा. २।२।३।१) इति। कीदृशमिन्द्रम्। जगतः प्रतिष्ठा, अग्निं सर्वस्य जगतः आधाररूपो योऽय चातुर्होत्रियचितिरूपोऽग्निस्तत्स्वरूप, दिव आत्मान सवितारं द्युलोकस्य प्रकाशकत्वेनाऽऽत्मवदवस्थितो यः सविता तद्रूपं, तथा बृहस्पतिं योऽय देवगुरुस्तद्रूपेणाऽवस्थितं, प्रदिशः सर्वान्प्रदेशाननुक्लृप्तं सर्वेषु प्रदेशेष्ववस्थित, चतुर्होतारं 'पृथिवी होता' (तैआ. ३।२) इत्यादिमन्त्रस्वरूपं, वाचो वीर्यं सर्वस्व वेदरूपाया वाचः सारभूतम्। तैआसा.

**अन्तः प्रविष्टं कर्तारमेतम्। त्वष्टारꣳ रूपाणि विकुर्वन्तं विपश्चिम्।**
**अमृतस्य प्राणं यज्ञमेतम्। चतुर्होतृणामात्मानं कवयो निचिक्युः॥**

कवयो विद्वांसो वेदशास्त्रपारंगताः चतुर्होतृणा चतुर्होतृशब्देनाभिधीयमानाना सर्वेषां होतृमन्त्राणामात्मानं स्वरूपभूतं परमेश्वरं निचिक्युः निश्चितवन्तः। कीदृशमात्मानम्। अन्तः प्रविष्टं जीवरूपेण शरीरेषु प्रविश्याऽवस्थितम्। अत एवाम्नायते—'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' (छाउ. ६।३।२) इति। कर्तारमेतमित्यनेन मानसप्रत्यक्षेण प्रतीयमान लौकिकवैदिकसर्वक्रियानिष्पादकम्'। एतच्चान्यत्राऽऽम्नातम्—'एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' (प्रउ. ४।९) इति। रूपाणि विकुर्वन्त त्वष्टारं गर्भेषु देवतिर्यङ्मनुष्यादिरूपाणि विविध निष्पादयन्त त्वष्टृदेवस्वरूपम्। एतदप्याम्नात—'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायते' इति। 'विपश्चिं विपश्चितं तत्तद्रूपनिर्माणप्रकाराभिज्ञ, अमृतस्य प्राण मरणरहितस्य परमात्मनो व्यवहारहेतुभूतप्राणोपाधिस्वरूपम्। एतदप्याथर्वणिका आमनन्ति—'कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति। स प्राणमसृजत' (प्रउ. ६।३-४) इति। यज्ञ सर्वैरनुष्ठीयमानत्वेन दृश्यमानमेतं दर्शपूर्णमासयज्ञस्वरूपम्। चतुर्होतृमन्त्रस्य तद्यज्ञयष्टिसाधनत्वात्तद्रूपत्व युक्तम्। तद्यज्ञसाधनत्व ब्राह्मणे समाम्नातं—'स एत चतुर्होतारमपश्यत्। त मनसाऽनुद्रुत्याऽऽहवनीयेऽजुहोत्। ततो वै स दर्शपूर्णमासावसृजत' (तैब्रा. २।२।३।१) इति। तैआसा.

**अन्तः प्रविष्टं कर्तारमेतम्। देवानां बन्धु निहितं गुहासु।**
**अमृतेन क्लृप्तं यज्ञमेतम्। चतुर्होतृणामात्मानं कवयो निचिक्युः॥**

योऽयं परमात्मा सोऽयं देवानां बन्धुवत्प्रियस्तादृशम्। तेषु देवेषु पक्षपातेन विजयहेतुत्व तलवकारा आमनन्ति—'ब्रह्म ह देवेभ्यो विजिग्ये' (केउ. ३।१) इति। गुहासु बुद्धिषु निहित साक्षित्वेनावस्थितम्। 'यो वेद निहितं गुहायाम्' (तैउ. २।१) इत्यादिश्रुतेः। अमृतेन स्वर्गफलनिमित्तेन क्लृप्त सपादितम्। एत यज्ञमित्यादि पूर्ववत्। तैआसा.

विश्ववारः, देवामृतं, प्रजायुः, वायोरात्मा, रश्मि, ऋतस्य पदे स्थित, कविगम्य

**शतं नियुतः परिवेद विश्वा विश्ववारः। विश्वमिदं वृणाति।**
**इन्द्रस्याऽऽत्मा निहितः पञ्चहोता। अमृतं देवानामायुः प्रजानाम्॥**

'तदेवमृक्त्रयरूप चतुर्होतृहृदयमुक्तम्। अथ पञ्चहोतृहृदयाख्यो मन्त्रोऽभिधीयते। तत्र तिस्रः ऋचः। पञ्चहोता 'अग्निर्होता' (तैआ. ३।३) इत्यादिपञ्चहोतृमन्त्ररूप आत्मा। स च विश्ववारः सर्वैर्वरणीयो वायुरूपः सन् शतं नियुतः शतसंख्याकान् स्वकीयान् अश्वान् (विश्वा) परिवेद परितः सचारित्वेन जानाति। अत एवेदं विश्वं जगत् वृणाति व्याप्नोति। सोऽय इन्द्रस्यात्मा परमेश्वरस्य स्वरूपभूतः सन् निहितः सर्वत्रावस्थितः। स च देवानाममृतं प्रजाना चायुः प्रयच्छतीति शेषः। तैआसा.

**इन्द्रꣳ राजानꣳ सवितारमेतम्। वायोरात्मानं कवयो निचिक्युः।**
**रश्मिꣳ रश्मीनां मध्ये तपन्तम्। ऋतस्य पदे कवयो निपान्ति॥**

एव पञ्चहोतृदेव कवयः पण्डिता निचिक्युः विनिश्चितवन्तः। कीदृशम्। इन्द्र परमैश्वर्ययुक्तं, राजान दीप्यमान, सवितार प्रेरक , वायोरात्मानं स्वरूपभूतम् । ते कवयः एतं पञ्चहोतृदेव ऋतस्य पदे ब्रह्मणः स्थाने निपान्ति नितरा पालयन्ति तद्रूपत्वेन पश्यन्तीत्यर्थः। कीदृशम्। रश्मीना दृश्यमानानां किरणानां मध्ये स्थित्वा तपन्त जगतस्ताप कुर्वन्त, रश्मिं प्रौढरश्मिरूप, आदित्यमित्यर्थः। तैआसा.

अण्डकोशे स्थित्वा भुवनस्य धारयिता, मनसा चन्द्रमसि चरन्, इन्द्रस्यात्मा शतधा चरन्

**य आण्डकोशे भुवनं बिभर्ति । अनिर्भिण्णः सन्नथ लोकान्विचष्टे।**
**यस्याऽऽण्डकोशꣳ शुष्ममाहुः प्राणमुल्बम्। तेन क्लृप्तोऽमृतेनाहमस्मि ॥**

यः पञ्चहोतृदेवः आण्डकोशे ब्रह्माण्डमध्ये अनिर्भिण्णः सन् अभेदेनाऽवस्थितः सन् भुवनं कृत्स्न भूतजातं बिभर्ति धारयति। अथ ब्रह्माण्डभेदानन्तर तदन्तःस्थितान्भूरादिलोकान्विचष्टे विशेषेण प्रख्यापयति। यस्य पञ्चहोतृरूपस्य परमात्मनः शुष्ममाण्डकोशं प्रबलं ब्रह्माण्डावकाशस्थ प्राण वायुविशेष उल्बं आहुः गर्भवेष्टनस्थानीयमाहुः। यथा लोके गर्भः उल्बेन वेष्ट्यते तथा सूत्रात्मशरीरं प्राणवायुना ब्रह्माण्डस्थेन वेष्टितं भवति। तेनामृतेन पञ्चहोतृरूपेण परमात्मनाऽहं क्लृप्तो व्यवहारसमर्थत्वेनोत्पादितोऽस्मि। तैआसा.

**सुवर्णं कोशꣳ रजसा परीवृतम् । देवानां वसुधानीं विराजम्।**
**अमृतस्य पूर्णां तामु कलां विचक्षते। पादꣳ षड्ढोतुर्न किलाऽऽविवित्से ॥**

अथ षड्ढोतृहृदयमन्त्रः। तत्र तिस्र ऋचः। 'वाग्घोता' (तैआ. ३।६) इति मन्त्रोऽत्र षड्ढोता। स च ब्रह्माण्डकोशमध्ये चन्द्ररूपेणावस्थितः। तं चन्द्ररूप षड्ढोतृदेव कवयोऽभिज्ञाः सुवर्णत्वादिगुणयुक्तमाचक्षते। सुवर्ण शोभनवर्णोपेतम्। चन्द्रमण्डलं हिरण्मयवर्णोपेत भासते। कोश ब्रह्माण्डकोशमध्यगम्। रजसा रञ्जनात्मकेन अमृतेन परीवृतं सर्वतो व्याप्तम्। तथाविध चन्द्रं तामु कला तादृशीमेव भागरूपा विचक्षते आचक्षते। कीदृशीमिति तदुच्यते—देवानां वसुधानी वह्निरव्यादीनां देवतानामपेक्षित यद्वसु अमृतरूप, तस्य धारयित्रीम्। अत एव स्मर्यते—'प्रथमा पिबते वह्निर्द्वितीया पिबते रविः' इत्यादि। विराज विशेषेण राजमानाम्। अमृतस्य पूर्णा पीयूषेण पूरिताम्। एवरूपं षड्ढोतृदेवं अभिज्ञा आचक्षते। प्राकृतस्तु जनः षड्ढोतुः पाद षड्ढोतृदेवस्याग्भूत चन्द्र न किलाविवित्से नैव जानाति। तैआसा.

**येनर्तवः पञ्चधोत क्लृप्ताः। उत वा षड्धा मनसोत क्लृप्ताः।**
**तꣳ षड्ढोतारमृतुभिः कल्पमानम्। ऋतस्य पदे कवयो निपान्ति ॥**

येन चन्द्ररूपेण षड्ढोतृदेवेन वसन्ताद्यृतवः पञ्चप्रकाराः क्लृप्ताः संपादिताः। हेमन्तशिशिरयोः समासेन पञ्चत्वम्। उत वा षड्धा, अथवा हेमन्तशिशिरयोर्विभागेन षट्प्रकाराः क्लृप्ताः। उत अपि च मनसा क्लृप्ताः संकल्पमात्रेण सपादिताः। त चन्द्ररूपं षड्ढोतृदेवं ऋतुभिः कल्पमान पञ्चधा षोढा वा भिन्नैर्वसन्तादिभिः सर्वव्यवहारसमर्थ ऋतस्य पदे सत्यस्य परब्रह्मणः स्थाने कवयो वेदरहस्याभिज्ञाः निपान्ति नितरां पालयन्ति। परब्रह्मैवाय चन्द्ररूपः षड्ढोतेत्येवमुपासते इत्यर्थः। तैआसा.

**अन्तः प्रविष्टं कर्तारमेतम्। अन्तश्चन्द्रमसि मनसा चरन्तम्।**
**सहैव सन्तं न विजानन्ति देवाः। इन्द्रस्याऽऽत्मानꣳ शतधा चरन्तम् ॥**

देवाः सर्वे सहैव सन्तं स्वकीयहृदये स्वेन जीवात्मना सहैवावस्थित एत षड्ढोतृदेव परमात्मानं न विजानन्ति, वेदान्ताभ्यासमन्तरेण हृदयेऽवस्थितोऽय परमात्मैवेति विशेषेण न जानन्ति। कीदृशं परमात्मानम्। अन्तः प्रविष्ट अन्तर्यामिरूपेण सर्वेषां पृथिव्यादिपदार्थाना मध्येऽवस्थितम्। एतच्च वाजसनेयिनोऽन्तर्यामिब्राह्मणे—'यः पृथिव्या तिष्ठन्' (बृउ. ३।७।३) इत्यादिना बहुप्रपञ्चेनामनन्ति। कर्तार नियामकत्वेन सर्वस्य निष्पादकम्। अन्तश्चन्द्रमसि चन्द्रमण्डलमध्ये

मनसा संकल्पमात्रेण चरन्तम्। एतच्चोपलक्षणम्। सर्वेष्वपि वस्तुषु चरन्तमित्यर्थः। एतदेव स्पष्टीकर्तुं शतधा चरन्तमित्युक्तम्। इन्द्रस्य परमैश्वर्ययुक्तस्य देवादेरात्मानं स्वरूपभूतम्। तैआसा.

जगतः ईशान॰, अन्तरादित्ये मनसा चरन्,
देवहृदयरूप. इन्द्रः प्रजापतिः

**इन्द्रो राजा जगतो य ईशे। सप्त होता सप्तधा विक्लृप्तः॥**

अथ सप्तहोतृहृदयाख्यो मन्त्रः। 'महाहविर्होता' (तैआ. ३।५) इत्ययं मन्त्रः सप्तहोता। स च सप्तधा विक्लृप्तः। होत्रध्वर्युप्रमुखैः सप्तभिः प्रकारैः संपादितः। स किंरूप इति तदुच्यते—इन्द्रः परमैश्वर्ययुक्तः, राजा दीप्यमानः। यः परमात्मा जगतः ईशे स्वामी भवति, स एवाय सप्तहोतृरूप इत्यर्थः। तैआसा.

**परेण तन्तुं परिषिच्यमानम्। अन्तरादित्ये मनसा चरन्तम्।**
**देवानाꣳ हृदयं ब्रह्माऽन्वविन्दत्॥**

ब्रह्मा प्रजापतिः देवानां इन्द्रादीनां हृदय हृदयस्थितं परमात्मानं अन्वविन्दत् अन्विष्य लब्धवान्। कीदृशम्। तन्तु परेण अविच्छिन्नस्य यज्ञस्य परस्तात्फलदशाया परिषिच्यमानं वृष्टिरूपेण परितः सिच्यमानम्। अन्तरादित्ये आदित्यमण्डलमध्ये मनसा सकल्पमात्रेण चरन्तम्। तैआसा.

**ब्रह्मैतद्ब्रह्मण उज्जभार। अर्कꣳ श्चोतन्तꣳ सरिरस्य मध्ये॥**

ब्रह्मा चतुर्मुखः प्रजापतिर्ब्रह्मणो वेदस्य सकाशात् एतत् सप्तहोतृस्वरूप उज्जभार सारत्वेनोद्धृतवान्। कीदृशम्। अर्कं सूर्यरूपेणाऽवस्थित, सरिरस्य मेघस्थजलस्य मध्ये रश्मिद्वारा प्रविश्य श्चोतन्तं वर्षयन्तम्। तैआसा.

**आ यस्मिन्त्सप्त पेरवः। मेहन्ति बहुलाꣳ श्रियम्। बह्वश्वामिन्द्र गोमतीम्॥**

यस्मिन्सप्तहोतृरूपे आदित्ये पेरवो वृष्टिप्रदानेन लोकस्य पातारः सप्तसंख्याका रश्मय आश्रिताः। रश्मिसप्तकं च 'साकंजानाꣳ सप्तथमाहुरेकजम्' (तैआ. १।३।१) इत्यत्र प्रपञ्चितम्। ते च सप्त रश्मयो बहुलां श्रिय प्रभूता सस्यादिसपद मेहन्ति वृष्टिसेचनद्वारेण सपादयन्ति। हे इन्द्र सप्तहोतृदेवरूप परमेश्वर, बह्वश्वां बहुभिरश्वैरुपेता गोमती बहुभिर्गोभिरुपेतां तां श्रियं प्रयच्छ इति शेषः। तैआसा.

**अच्युतां बहुलाꣳ श्रियम्। स हरिर्वसुवित्तमः। पेरुरिन्द्राय पिन्वते॥**

स देवः सप्तहोत्राख्यः इन्द्राय कर्मस्वामिने यजमानाय श्रिय पिन्वते सिञ्चति प्रयच्छतीत्यर्थः। कीदृशः स देवः। हरिः पापहरणशीलः, वसुवित्तमः अतिशयेन धनस्य लब्धा, पेरुः पालकः। कीदृशी श्रियम्। अच्युता विनाशरहितां, बहुलां गवाश्वादिभिः प्रभूताम्। तैआसा.

**बह्वश्वामिन्द्र गोमतीम्। अच्युतां बहुलाꣳ श्रियम्।**
**मह्यमिन्द्रो नियच्छतु॥**

इन्द्रः परमैश्वर्ययुक्तः सप्तहोतृदेवः। स्पष्टमन्यत्। तैआसा.

**शतꣳ शता अस्य युक्ता हरीणाम्। अर्वाङायातु वसुभी रश्मिरिन्द्रः।**
**प्रमꣳहमाणो बहुलाꣳ श्रियम्। रश्मिरिन्द्रः सविता मे नियच्छतु॥**

अस्य आदित्यरूपस्य सप्तहोतृदेवस्य हरीणा अन्धकारहरणशीलाना रश्मीना शत शता शतसख्याकानि शतानि, अयुतसख्याकानीत्यर्थः। युक्ता युक्तानि सपादितानि। इन्द्रः परमैश्वर्ययुक्तः रश्मिर्बहुविधरश्मियुक्तः आदित्यो वसुभिर्धनैः सह अर्वाङायातु आभिमुख्येनाऽऽगच्छतु। आगतश्च सविता बहुला श्रियं प्रभूता धनादिसपद मे मह्यं नियच्छतु नितरां ददातु। कीदृशः सविता। प्रमंहमाणः अस्मदीयस्तुतिभिः प्रकर्षेण वर्धमानः, रश्मिर्बहुविधरश्मियुक्तः, इन्द्रः परमैश्वर्ययुक्तः। तैआसा.

**घृतं तेजो मधुमदिन्द्रियम्। मय्ययमग्निर्दधातु॥**

अय सप्तहोतृदेवोऽग्न्यात्मकः सन् मयि यजमाने मधुमत् घृतं मधुररसोपेत घृतादिद्रव्यं, तेजः कान्तिं, इन्द्रिय चक्षुरादिसामर्थ्य च दधातु संपादयतु। तैआसा.

**हरिः पतङ्गः पटरी सुपर्णः । दिविक्षयो नभसा य एति ।**
**स न इन्द्रः कामवरं ददातु ॥**

हरिः अन्धकारहरणशीलः, पतङ्गः सूर्यरूपः, पटरी तेजःपटलवान्, सुपर्णः पक्षिसदृशः, दिविक्षयः स्वर्गनिवासी यः सप्तहोतृदेवो नभसा आकाशमार्गेण एति गच्छति । स देवो नः अस्माक कामवरं कामाना मध्ये श्रेष्ठ ददातु । तैआसा.

**पञ्चारं चक्रं परिवर्तते पृथु । हिरण्यज्योतिः सरिरस्य मध्ये ।**
**अजस्रं ज्योतिर्नभसा सर्पदेति । स न इन्द्रः कामवरं ददातु ॥**

ऋतुपञ्चकात्मका अरा यस्य कालचक्रस्य तत्पञ्चार, पृथु विस्तृत चक्र संवत्सरात्मक कालचक्र परिवर्तते परितः प्रवर्तते । सरिरस्य मध्ये मेघवर्तिजलस्य मध्ये हिरण्यज्योतिः रश्मिसचारेण विद्युद्रूपपरिणामे सति सुवर्णसमान ज्योतिर्यस्य मण्डलस्य तद्धिरण्यज्योतिः, तादृश ज्योतिरादित्यमण्डल संवत्सरचक्रनिष्पादक अजस्र निरन्तर नभसा आकाशमार्गेण सर्पदेति शनैः सञ्चरमाण गच्छति । स ज्योतिर्मण्डलात्मा नोऽस्माकं कामवर ददातु । तैआसा.

**सप्त युञ्जन्ति रथमेकचक्रम् । एको अश्वो वहति सप्तनामा ।**
**त्रिनाभि चक्रमजरमनर्वम् । येनेमा विश्वा भुवनानि तस्थुः ॥**

सप्तसंख्याकाः 'साकंजानाम्' (तैआ. १।३।१) इत्यत्रोक्ताः मुख्यरश्मिविशेषाः अश्वसदृशाः एकचक्रं एकप्रकारपरिवर्त कालचक्र युञ्जन्ति प्रवर्तयन्ति । तदेव स्पष्टीक्रियते—सप्तनामा सप्तसंख्यानि नामानि नमनयोग्यानि वश्यानि रश्मिरूपाणि यस्य असौ सप्तनामा । अश्वो व्यापकः एकः सूर्यः तत् कालचक्रं वहति । कीदृश चक्रम् । त्रिनाभि तिस्रः सत्त्वरजस्तमोगुणरूपाः भूतभविष्यद्वर्तमानरूपाः वा नाभयो यस्य तत्त्रिनाभि । अजरं विनाशरहितम् । न हि कालः ससारमध्ये कदाचिद्विनश्यति । अनर्व, अर्वा विरोधी विनाशकः 'भ्रातृव्यो वा अर्वा' इति श्रुतेः । तद्रहितम् । न हि कालचक्रस्य कश्चिद्विनाशकोऽस्ति । येन कालचक्रेण इमा विश्वा भुवनानि दृश्यमानानि सर्वाणि भूतजातानि तस्थुः तिष्ठन्ति सुखेन वर्तन्ते, तस्य कालचक्रस्य निर्वाहकोऽय सप्तहोतृदेव आदित्यः । तैआसा.

**भद्रं पश्यन्त उपसेदुरग्रे । तपो दीक्षामृषयः सुवर्विदः ।**
**ततः क्षत्रं बलमोजश्च जातम् । तदस्मै देवा अभिसंनमन्तु ॥**

सुवर्विदः स्वर्गमार्गाभिज्ञा ऋषयो भद्रं कल्याण सप्तहोतृरूपमादित्य पश्यन्तः प्राप्यत्वेन निश्चिन्वानाः तपः अनशनादिरूप दीक्षा नियमविशेष च उपसेदुः अनुष्ठितवन्तः । ततः आदित्यसकाशात् क्षत्र क्षतात्त्राणं अनिष्टनिवारणं, बल शरीरशक्तिः, ओजः कान्तिश्चेत्येतत्सर्व जातं सपन्नम् । तत्क्षत्रादित्रयं अस्मै यजमानाय देवाः अभिसनमन्तु अभितः सपादयन्तु । तैआसा.

**श्वेत॑ रश्मिं बोभुज्यमानम् । अपां नेतारं भुवनस्य गोपाम् ।**
**इन्द्रं निचिक्युः परमे व्योमन् ॥**

परमे व्योमन्नुत्कृष्टे हृदयाकाशे इन्द्र परमैश्वर्ययुक्तं सप्तहोतृदेवमादित्य निचिक्युः निश्चितवन्तः, ध्यातवन्त इत्यर्थः । कीदृशमिन्द्रम् । श्वेत प्रकाशरूपत्वेन शुक्लवर्ण, रश्मिं रश्मियुक्त, बोभुज्यमान सर्वैः प्राणिभिर्वृष्टिद्वारेण पुनःपुनर्भुज्यमानम् । एतदेव स्पष्टीक्रियते—अपा नेतार, 'आदित्याज्जायते वृष्टिः' इति स्मृत्या सूर्यो जलस्य नेता, तादृशम् । भुवनस्य गोपा भुवनस्य पालकम् । तैआसा.

**रोहिणीः पिङ्गला एकरूपाः । क्षरन्तीः पिङ्गला एकरूपाः ।**
**शत॑ सहस्राणि प्रयुतानि नाव्यानाम् ॥**

रोहिणीः रोहितवर्णाः, पिङ्गलाः पिङ्गलवर्णाश्च या आपस्तत्तद्भूमिसबन्धेन बहुविधा दृश्यन्ते, ताः सर्वा अपि सप्तहोतृरूपस्यादित्यस्य रश्मिसबन्धे सति मेघेषु नानारूपत्व परित्यज्यैकरूपा भवन्ति । तथा क्षरन्तीः वृष्टिरूपेण भूमौ पतन्त्यः ताः पिङ्गलादिवर्णा आपः एकरूपा भवन्ति । वृष्टिबाहुल्येन भूमौ नाव्याना नावा तरणीयानामपा शतं

सहस्राणि प्रयुतानि शतसख्या बहुविधसहस्रसंख्या बहुविधलक्षसंख्या च सपद्यते। वृष्टिकाले तत्रतत्राऽनेकप्रवाहा भवन्ति। तदेतत्सर्व सप्तहोतृमाहात्म्यम्।

तैआसा.

**अयं यः श्वेतो रश्मिः। परि सर्वमिदं जगत्।**
**प्रजां पशून्धनानि। अस्माकं ददातु॥**

अयमादित्यः श्वेतः श्वेतवर्णो रश्मिः रश्मियुक्तोऽस्ति, सोऽयं सर्वमिद जगत्परिव्याप्य वर्तमानोऽस्माकं प्रजादिकं ददातु। तैआसा.

**श्वेतो रश्मिः परि सर्वं बभूव। सुवन्मह्यं पशून्विश्वरूपान्॥**

श्वेतः शुक्लवर्णो रश्मिः रश्मियुक्तः आदित्यः सर्व जगत् परिबभूव परितो व्याप्तवान्। तादृशः आदित्यो मह्य विश्वरूपान् गोमहिष्यादिरूपेण बहुविधान् पशून्सुवत् सौतु प्रेरयत्वित्यर्थः। तैआसा.

**पतङ्गमक्तमसुरस्य मायया। हृदा पश्यन्ति मनसा मनीषिणः।**
**समुद्रे अन्तः कवयो विचक्षते। मरीचीनां पदमिच्छन्ति वेधसः॥**

असून् प्राणान् राति ददातीत्यसुरः परमात्मा, तस्य मायया अचिन्त्यशक्त्या अक्तं अभिव्यक्तं पतङ्गमादित्यं हृदा मनसा हृत्पुण्डरीकगतेन नियमितेनाऽन्तःकरणेन मनीषिणो वेदशास्त्राभिज्ञा महर्षयः पश्यन्ति ध्यात्वा साक्षात्कुर्वन्ति। कवयो लौकिकवार्ताभिज्ञाः पुरुपाः समुद्रे अन्तः समुद्रसमानेऽन्तरिक्षमध्ये विचक्षते विशेषेण कथयन्ति। अयमादित्यः उदितो मध्याह्ने समागतः इत्यादिव्यवहार कुर्वन्ति। वेधसो विधातारोऽनुष्ठानकुशलाः केचिद्यजमानाः मरीचीना पद रश्मीनां स्थानमादित्यमिच्छन्ति। आदित्यसायुज्यप्राप्त्यर्थमनुतिष्ठन्तीत्यर्थः।

तैआसा.

**पतङ्गो वाचं मनसा बिभर्ति। तां गन्धर्वोऽवदद्गर्भे अन्तः।**
**तां द्योतमानाꣳ स्वर्यं मनीषाम्। ऋतस्य पदे कवयो निपान्ति॥**

पतङ्गः आदित्यो मनसा स्वकीयेन प्राणिनां वाच बिभर्ति धारयति, अन्तर्यामिरूपेण वाचं प्रेरयतीत्यर्थः। तथा च पौराणिका आहुः—'योऽन्तः प्रविश्य मम वाचमिमा प्रसुतां सजीवयत्यखिलशक्तिधरः स्वधाम्ना' (भा. पु. ४।९।६) इति। तामादित्यप्रेरिता वाच गर्भे अन्तः शरीरस्य मध्ये गन्धर्वनामको वायुः अवदत् उच्चारयति। गन्धान्वहतीति व्युत्पत्त्या गन्धर्वशब्दो वायुमाचष्टे। वायुर्हि ताल्वादिसयुक्तो वाचमुच्चारयति। तां वायुनोच्चारिता द्योतमाना प्रकाशमाना, स्वर्यं स्वर्गस्य हेतुभूतां, मनीषां मनस ईशित्री आह्लादकरीमित्यर्थः। तादृशी वाच कवयः शास्त्राभिज्ञाः ऋतस्य पदे सत्यस्य परब्रह्मणः स्थाने निपान्ति नितरा पालयन्ति। परब्रह्मविषयाणि वेदवाक्यानि सर्वदा पठन्तीत्यर्थः। तदेतत्सर्वं वाचः प्रेरकस्याऽऽदित्यस्य माहात्म्यम्। तैआसा.

**ये ग्राम्याः पशवो विश्वरूपाः। विरूपाः सन्तो बहुधैकरूपाः।**
**अग्निस्ताꣳ अग्रे प्रमुमोक्तु देवः। प्रजापतिः प्रजया संविदानः॥**

ये पशवो ग्राम्याः ग्रामे भवाः गवाश्वादयो विश्वरूपाः जातिभेदैर्बहुविधाः, विरूपाः वर्णादिभेदेन विविधाकाराः, एव बहुधा दृश्यमानाः सन्तोऽपि पुनः पशुत्वाकारेणैकरूपाः। तान्सर्वानग्निरूपः सप्तहोतृदेवोऽग्रे प्रमुमोक्तु प्रथमं तत्तत्स्थानात्प्रमुञ्चतु, प्रमुच्याऽस्मभ्य ददात्वित्यर्थः। प्रजापतिश्च स्वकीयया प्रजया सविदानः ऐकमत्य गतः अस्मभ्य पशून् ददात्विति शेषः। तैआसा.

**वीतꣳ स्तुके स्तुके। युवमस्मासु नियच्छतम्।**
**प्र प्र यज्ञपतिं तिर॥**

हे अग्निप्रजापती, युवं उभौ युवा स्तुके स्तुके तत्तद्गवाद्यपत्ये वीतं प्रजननं उत्पत्ति अस्मासु नियच्छतं नियमेन संपादयतम्। यज्ञपतिं यजमान प्रप्रतिर अत्यन्तं प्रकर्षेण वर्धयतम्। तैआसा.

**ये ग्राम्याः पशवो विश्वरूपाः। विरूपाः सन्तो बहुधैकरूपाः।**
**तेषाꣳ सप्तानामिह रन्तिरस्तु। रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय॥**

ग्राम्यादिशब्दाः पूर्ववद्योज्याः। तेषा ग्राम्यपशूनां सप्ताना गोऽश्वाजाविपुरुषगर्दभोष्ट्ररूपाणा सप्तसख्याकानामिहास्मद्गृहे रन्तिः क्रीडा अस्तु। तच्च धनपुष्टिशोभनापत्यशोभनवीर्यार्थं संपद्यते। तैआसा.

ये आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः ।
वायुस्ताꣳ अग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः ॥

अरण्ये भवा आरण्याः द्विखुराः श्वापदादयः, तान् अरण्याधिपतिर्वायुः प्रमुमोक्तु । अन्यत्पूर्ववत् ।

तैआसा.

इडायै सृप्तं घृतवच्चराचरम् । देवा अन्वविन्दन् गुहाहितम् ॥

इडायै गोसपादनार्थं सृतं प्राप्तं घृतवत् घृतयुक्तं घृताकारमित्यर्थः । तादृशं चराचरं स्थावरजङ्गमरूपं जगदनुग्रहीतुं गुहाहितं प्राणिनां बुद्धाववस्थितं सप्तहोतृदेवं देवा अन्वविन्दन् अन्विष्य लब्धवन्तः ।

तैआसा.

ये आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः ।
तेषाꣳ सप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥

सप्तानां द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेयानाम् । अन्यत्पूर्ववत् । तैआसा.

तमसः पारे स्थितः आदित्यवर्णः नामरूपव्याकर्ता धीरः विदुषा शक्रेण धात्रा च प्रदिष्टः महान् पुरुषः, यज्ज्ञानादेवात्र अमृतत्वप्राप्तिः

[1]वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते ॥

(१) कब्रा. १६ ( पृष्ठ १०१ ); तैआ. ३।१२।७.

यथोक्तविराट्पुरुषध्यानमत्र प्रतिपाद्यते । तत्र मन्त्रद्रष्टा स्वकीयं ध्यानानुभवं प्रकटयति । यत् यः पुरुषः सर्वाणि रूपाणि देवमनुष्यशरीराणि विचित्य विशेषेण निष्पाद्य नामानि च देवोऽयं मनुष्योऽयं पशुरयमित्यादीनि कृत्वा अभिवदन् तैर्नामभिः अभितो व्यवहरन् आस्ते । एतं पुरुषं विराजं महान्तं सर्वगुणैरधिकं आदित्यवर्णं आदित्यवत्प्रकाशमानं वेद अहं जानामि ध्यानेन सर्वदा अनुभवामीत्यर्थः । स च पुरुषः तमसः पारे अज्ञानात्परस्तात् वर्तते । अतो गुरुशास्त्रोपदेशरहितैर्मूढैः अनुभवितुमशक्य इत्यर्थः । तैआसा.

[1]धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥

धाता प्रजापतिः यं विराट्पुरुषं उदाजहार ध्यातॄणामुपकारार्थं प्रख्यापितवान् । चतस्रः प्रदिशः चतुर्दिक्षु वर्तिनः सर्वान्प्राणिनः प्रविद्वान् प्रकर्षेण जानन् शक्रः इन्द्रः तदनुग्रहार्थं प्रख्यापितवान् । धातुरिन्द्रस्योपदेशात् तं विराट्पुरुषं एवं उक्तप्रकारेण विद्वान् साक्षात्कुर्वन् इह अस्मिन्नेव जन्मनि अमृतः मरणरहितो भवति । यदा विराट्पुरुषोऽहमिति साक्षात्करोति तदानीं वर्तमानदेहस्य तत्स्वरूपत्वाभावात् तन्मरणेन अयमुपासको न म्रियते । अयनाय अमृतत्वप्राप्तये अन्यः पन्थाः यथोक्तविराट्पुरुषसाक्षात्कारमन्तरेण अन्यो मार्गो न विद्यते । न हि कर्मसहस्रैरपि अमृतत्वं संपादयितुं शक्यते । 'न कर्मणा न प्रजया धनेन'(नाउ.१२।३) इत्यादिशास्त्रात् ।

तैआसा.

(१) कब्रा. १७ ( पृष्ठ १०१ ); तैआ. ३।१२।७.



## सृष्टिः *

एकस्मादेव सर्वसृष्टि.

**[१]एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनु प्रभूतः ।**
**एकैवोषाः सर्वमिदं वि भात्येकं वा इदं वि बभूव सर्वम् ॥**

एकः केवल एव अग्निः दानादिगुणयुक्तो देवः बहुधा वाडववैद्युताद्यनेकप्रकारेण समिद्धः सम्यक् दीप्तो भवति । तथा एकः एकाकी सूर्यः प्राणिनां सुष्ठु कर्मस्वीरयिता देवः विश्वं सर्वं जगत् अनु अनुप्रविश्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तैउ. २।६ ) इति श्रुतेः । प्रभूतः अनेकात्मतया प्रादुर्भूतोऽस्ति । 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋस. १।११५।१ ) इति श्रुतेः । किंच एका एकाकिन्येव उषाः तमो विवासयन्ती देवी सर्वं समस्तमिदं दृश्यमानं जगत् वि भाति विशेषेण दीपयति । तस्मात् एकं वै एकमेवाद्वितीयं ब्रह्म इदं आब्रह्मस्तम्बपर्यन्तं जगत् वि बभूव विशेषेणाभवदिति युक्तमिति शेषः । यदाऽग्न्यादयो देवाः अप्येकाकिनः सन्तः अनेकभवनसमर्थास्तदा परं ब्रह्म एकं सदनेकं भवेदिति किमु वक्तव्यमित्यभिप्रायः ।

वालखिल्यभाष्यम्

अदितेरुपस्थे दक्षस्य जन्मनि सति सदसतो· संभव.
वृषभस्याऽग्नेश्च प्रथमजस्य

**[२]असच्च सच्च परमे व्योमन्दक्षस्य जन्मन्नदितेरुपस्थे ।**
**अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः ॥**

असत् अव्याकृतं सच्च व्याकृतम् । 'असदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत्' ( छाउ. ३।१९।१ ) इति श्रुतेः । सदसदात्मकं जगत्सर्वं परमे उत्तमे ज्ञानसहिते व्योमन् व्योमनि कारणात्मनि जातमभूत्सदा । अदितेः पृथिव्याः उपस्थे उपस्थाने समीपे दक्षस्य प्रजापतेः । यद्वा, दक्षस्य 'स त्रेधात्मानं व्यभजतादित्यं तृतीयं वायुं तृतीयम्' (शब्रा. १०।६।५।३ ) इति श्रुतेः तृतीयस्य द्युलोकस्याधिष्ठातृत्वादादित्यस्य । जन्मन् जन्मनि । ततः एवं सति मनुष्यस्य सृष्टिक्रमात्पूर्वं अग्निर्ह अग्निरेव ऋतस्य कर्मफलस्य भोक्तृणा नः अस्माकं प्रथमजाः प्रथममेव जातः समुत्पन्नः । 'तेजो रसो निरवर्तताग्निः' ( बृउ. १।२।२ ) इति श्रवणात् । पश्चात्तत्प्रकरणे 'ततो मनुष्या अजायन्त' इति प्रथमत एव मनुष्यसृष्टेरभिहितत्वात् अनन्तरं पूर्वे उत्तरसृष्टिमपेक्ष्य पूर्वस्मिन् आयुनि कालेऽयमग्निरेव वृषभश्चासीत् । धेनुश्चाभवत् । स्त्रीपुंसवत् स्त्रीपुंसात्मकोऽभवदित्यर्थः । ऋसा.

ब्रह्मणस्पतिः कर्मार इव देवाना जनक । किंच असतः
सत्, सत. आशा जाता·, आशाभ्य उत्तानपदः ।
किंच उत्तानपदः भूर्जाता, भुवः आशाः ।
किंच अदितेर्दक्ष , दक्षाच्चादितिः,
अदितेर्देवाः मर्त्यप्रजाना पति.
मार्तण्डश्च जाताः

**[१]देवानां नु वयं जाना प्र वोचाम विपन्यया ।**
**उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे ॥**

अदितिर्दाक्षायणी अनेन सूक्तेन स्वय यथाऽऽदित्यानजनयत्तद्ब्रवीति । बृहस्पत्यृषिपक्षे स ऋषिरदितेः सकाशादादित्योत्पत्तिप्रकारमाह— वय देवानामादित्याना जाना जन्मानि प्र वोचाम प्रकथयाम । विपन्यया विस्पष्टया वाचा । वयमिति वोचामेति चोभयत्र पूजार्थं बहुवचनम् । अथैकवदाह । यो देवाना गणः पूर्वे युगे उत्पन्नोऽपि उक्थेषु शस्यमानेषु यागे शस्त्रेष्वनुष्ठीयमानेषु उत्तरे युगे वर्तमानं स्तुवन्तं स्तोतारं पश्यात् पश्यति । अनेकेष्वपि युगेषु गतेषु कर्मसु स्तूयमानो वर्तते इत्यर्थः ।

ऋसा.

**[२]ब्रह्मणस्पतिरेता सं कर्मारइवाऽधमत् ।**
**देवानां पूर्व्ये युगेऽसतः सदजायत ॥**

ब्रह्मणः अन्नस्य पतिः अदितिः एता एतानि देवानां जन्मानि कर्मारइव स यथा भस्त्रयाऽग्निमुपधमति प्रज्वलनार्थं एव सं अधमत् उदपादयदित्यर्थः । देवाना पूर्व्ये युगे आदिसृष्टावित्यर्थः । तेषामुपादानकारणात् असतः

* सृष्टिप्रकरणसंगतो वचनसंग्रह· 'आपः' 'विश्वकर्मा' 'प्रजापतिः' 'परमात्मा' इत्येतेषु प्रकरणेष्वपि द्रष्टव्यः ।

(१) ऋसं. ८।५८।२.
(२) ऋसं. १०।५।७.

(१) ऋसं. १०।७२।१.
(२) ऋसं. १०।७२।२.

नामरूपवर्जितत्वेनासत्समानाद्ब्रह्मणः सकाशात् सत् नामरूपविशिष्टं देवादिकं अजायत प्रादुरभूत्। 'असद्वा इदमग्र आसीत्। ततो वै सदजायत' (तैउ. २।७)इति हि श्रुतिः। न सदात्मकस्य प्रपञ्चस्यासत्कारणत्वं युक्तमिति वाच्यम्। छन्दोगैः 'कथमसतः सज्जायेत' इति असत्कारणत्वमाक्षिप्य 'सत्त्वेव सोम्येदमग्र आसीत्' (छाउ. ६।२।२) इत्यवधारितत्वात्। तर्ह्यसत्कारणप्रतिपादकवाक्याना का गतिरिति चेत्, तेषामव्याकृतत्वाभिप्रायत्वात्। 'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृउ. १।४।७) इति श्रुतेः। यद्येव तर्ह्यदितेः सकाशात्कथ देवाद्युत्पत्तिः। 'वायोरग्निः' (तैउ. २।१) इत्यादिवत् अधिष्ठानसकाशादुत्पत्तेः। यद्वा। देवानां कारणभूत सत् असतो ब्रह्मणः सकाशादुत्पन्नमिति योजनादुक्तन्यायोऽस्मिन्पक्षेऽपि समान एव। ऋसा.

**[1]देवानां युगे प्रथमेऽसतः सदजायत।**
**तदाशा अन्वजायन्त तदुत्तानपदस्परि॥**

पूर्वार्धमुक्तम्। तत् अनु आशाः दिशः अजायन्त। तत् परि तदन्वित्यर्थः। उत्तानपदः, उत्तान ऊर्ध्वतान पद्यन्ते इत्युत्तानपदो वृक्षाः। तेऽजायन्त प्रादुरभवन्। ऋसा.

**[2]भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त।**
**अदितेर्दक्षो अजायत दक्षाद्वदितिः परि॥**

भूः उत्तानपदो वृक्षाज्जज्ञे। तथा भुवः सकाशात् आशाः अजायन्त। तथा अदितेः दक्षः अजायत उत्पन्नः। दक्षादु दक्षादपि अदितिः परि अजायत। न स्वोत्पन्नं कार्यं स्वस्यैव कारणमपि भवतीति विप्रतिषिद्धमिति वाच्यम्। यास्काचार्य इदमेव वाक्यमुदाहृत्य विरोधमाशङ्क्य पर्यहरत्। तथा हि– 'अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति च। तत्कथमुपपद्येत। समानजन्मानौ स्यातामिति। अपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती' (नि. ११।२३) इति। ऋसा.

**[3]अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव।**
**तां देवा अन्वजायन्त भद्रा अमृतबन्धवः॥**

(१) ऋसं. १०।७२।३.
(२) ऋसं. १०।७२।४.
(३). ऋसं. १०।७२।५.

हे दक्ष तव या दुहिता अभूत् सा अदितिः अजनिष्ट हि पुत्रानादित्यान्। तदेवाह – ता देवा अन्वजायन्त भद्राः स्तुत्याः भजनीयाः अमृतबन्धवः अमरणबन्धनाः। ऋसा.

**[1]यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत।**
**अत्रा वो नृत्यतामिव तीव्रो रेणुरपायत॥**

अनया उत्तरेण चादित्याः स्तूयन्ते। यत् यदा हे देवाः अदः अमुष्मिन्सलिले यूयं सुसंरब्धाः सुष्ठु लब्धात्मानः अतिष्ठत स्थितवन्तः। 'आपो वा इद सर्वम्' (नाउ. २९), 'अप एव ससर्जादौ' इति श्रुतिस्मृती। अत्र अस्मिन्सलिले नृत्यतामिव वः युष्माक सबन्धी तीव्रो दुःसहो रेणुः अग्नभूतः एकः अपायत अपागच्छत् दिवं प्रति गत इति सूर्याभिप्रायम्। 'परा मार्ताण्डमास्यत्' (ऋस. १०।७२।८) इति वक्ष्यति। ऋसा.

**[2]यद्देवा यतयो यथा भुवनान्यपिन्वत।**
**अत्रा समुद्र आ गूळ्हमा सूर्यमजभर्तन॥**

यत् यदा हे देवाः यतयो यथा। वृष्ट्या नियमयन्तीति वा वर्षणेन यातयन्तीति वा यतयो मेघाः। ते यथा उदकैः भुवनानि लोक पूरयन्ति तद्वत्स्वतेजोभिः अपिन्वत पूरितवन्तः। अत्र समुद्रे अप्सु आ गूळ्ह निगूढ सूर्यं प्रातरुदयाय आ अजभर्तन आहृतवन्तः। ऋसा.

**[3]अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि।**
**देवाँ उप प्रैत्सप्तभिः परा मार्ताण्डमास्यत्॥**

अष्टौ पुत्रासः पुत्राः मित्रादयः अदितेर्भवन्ति, ये अदितेः तन्वः परि शरीरात् जाताः उत्पन्नाः। अदितेरष्टौ पुत्राः अध्वर्युब्राह्मणे परिगणिताः। तथा हि– 'ताननुक्रमिष्यामः। मित्रश्च वरुणश्च। धाता चार्यमा च। अंशश्च भगश्च। इन्द्रश्च विवस्वाᳺश्चेत्येते' (तैआ. १।१३।३) इति। तथा तत्रैव प्रदेशान्तरेऽदिति प्रस्तुत्याम्नातम्– 'तस्या उच्छेषणमददुस्तत्प्राश्नात् सा रेतोऽधत्त तस्यै

(१) ऋसं. १०।७२।६.
(२) ऋसं. १०।७२।७.
(३) ऋसं. १०।७२।८; मैसं. ४।६।९ (५८) देवाँ (देवं); ताब्रा. २४।१२।६ न्वस्परि (न्वं परि) मार्ता (मार्त), शब्रा. ३।१।३।२; तैआ. १।१३।२ न्वस्परि (न्वः परि).

चत्वार आदित्या अजायन्त सा द्वितीयमपचत्' (तैस. ६।५।६।१) इत्यादिना अष्टानामादित्यानामुत्पत्तिर्वर्णिता। सा अदितिः सप्तभिः पुत्रैः देवान् उप प्रैत् उपागच्छत्। अष्टम पुत्र मार्ताण्ड सूर्यं परा आस्यत् उपरि प्राक्षिपदित्यर्थः। ऋसा.

¹सप्तभिः पुत्रैरदितिरुप प्रैत्पूर्व्यं युगम्।
प्रजायै मृत्यवे त्वत्पुनर्मार्ताण्डमाभरत्॥

पूर्वमन्त्रोक्त एवार्थः पुनरत्रोच्यते। सप्तभिः मार्ताण्डव्यतिरिक्तैः मित्रादिभिरदितिः पूर्व्यं पुराण युगं उप प्रैत् उपगता। अथ प्रजायै प्राणिनामुत्पत्तये मृत्यवे तेषां मरणाय मार्ताण्डं मृतात् व्यृद्धादण्डाज्जातं मार्ताण्डनामानं सूर्यं पुनः आभरत् आहरत् द्युलोकेऽधारयत्। प्राणिमरणजननादीनां सूर्योदयास्तमयायत्तता स्फुटा। 'तस्यै व्यृद्धमाण्डमजायत' (तैस. ६।५।६।१) इत्यादि ब्राह्मणम्। ऋसा.

सदसत्परममृतमृत्युरहितमद्वितीयमलक्षणमेकं सलिलरूपं प्रथमम्, तस्मात् तपःसहकृतात् विश्वमहिमा प्रादुर्भूतः, वस्तुतः सृष्टिस्थितिकारणमप्रज्ञातमेव

*²नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्॥
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास॥
तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाऽजायतैकम्॥
कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।
सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्या कवयो मनीषा॥
तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त्।
रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात्॥
को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत इयं विसृष्टिः।
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव॥
इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद॥

पुरुषकृतात् यज्ञात् ऋषीणां मनुष्याणां च सृष्टि

¹यो यज्ञो विश्वतस्तन्तुभिस्तत एकशतं देवकर्मेभिरायतः।
इमे वयन्ति पितरो य आययुः प्र वयाप वयेत्यासते तते॥

तन्तुभिः तनितृभिः विस्तारयितृभिः वियदादिभूतैः यः सर्गात्मको यज्ञो विश्वतः सर्वतः ततो विस्तृतः। तथा एकशतं एक च शतं च एकशत, एकोत्तरशतमित्यर्थः। ब्रह्मा येषु शतसंख्येष्वात्मीयसवत्सरेषु जीवति तदभिप्रायेणात्र शतसंख्या। जीवता तेन प्रजापतिना सार्धमेकशतमित्युच्यते। यथा 'शतायुर्वै पुरुषः शतवीर्यः। आत्मैकशतः' (तैब्रा. १।७।६।४) इति। ब्रह्मणः शतसंवत्सरपर्यन्तं देवकर्मेभिः देवानुद्दिश्य मोक्तृभिः कृतैः कर्मभिः आयतः दीर्घीभूतः तावत्कालावस्थायी। एवमायामविस्तारवान् यः उक्तः सर्गात्मको यज्ञः तं यज्ञं इमे पितरः पालकाः प्रजापतेः प्राणभूता विश्वसृजो देवाः वयन्ति निर्मिमते। ये देवा आययुः स्रष्टव्य सर्वं जगत् सर्जनेन व्यापुः। अपि च प्र वयाप वयेति। प्रवाणं नाम प्रकृष्टस्य चेतनस्य भोक्तृप्रपञ्चस्य सर्जनम्। अपवानं नाम अपकृष्टस्य निकृष्टस्य

* व्याख्यानं स्थलादिनिर्देशश्च परमात्मप्रकरणे (पृ. २३९-२४३) द्रष्टव्यः।

(१) ऋसं. १०।७२।९; तैआ. १।१३।३ त्वत्पुनर्मार्ता (तत् परा मार्ता).

(२) ऋसं. १०।१२९।१-७.

(१) ऋसं. १०।१३०।१.

अचेतनस्य भोग्यप्रपञ्चस्य सर्जनम् । प्र वयाप वयेति वयन्तः प्रवाणमपवान च कुर्वन्तः इत्यर्थः । एवभूताः सन्तस्ते विश्वसृजः तते विस्तृते सत्यलोके आसते प्राणरूपेण प्रजापतिमुपासते । यद्वा । ज्योतिष्टोमादिर्यज्ञ एवंरूपकत्वेन पटात्मना वर्ण्यते । यो यज्ञो ज्योतिष्टोमादिः तन्तुभिः तन्तुस्थानीयैः अग्निष्टोमात्यग्निष्टोमादिसस्थाभेदैः सप्तभिश्छन्दोभिर्वा विश्वतः सर्वतः ततः विस्तृतः । तथैकशत एकाधिकेनाभिचयनेन युक्तैर्देवकर्मभिः गवामयनप्रभृतिकैर्विश्वसृजामयनान्तैरेकाहादिसत्रात्मकैर्वा आयतो दीर्घीभूतः । एवमायामविस्तारवान् यज्ञात्मकोऽय पटः प्रजापतिना सृष्टः । त पट पितरोऽस्माक पितृभूता इमेऽङ्गिरसो वयन्ति । तस्य पटस्य प्राचीनतन्तुस्थानीयानि स्तुतशस्त्राणि प्र वय त्व कुरु, अप वय तिरश्चीनतन्तुस्थानीयानि यजूंपि त्व कुरु इत्येवं परस्पर नियुञ्जाना आसते नियुञ्जन्ति । एवं विस्तृतस्य यज्ञस्य प्रजापतेः सकाशादुत्पत्तिरुत्तरया प्रतिपाद्यते ।

ऋसा.

**पुँमाँ एनं तनुत उत्कृणत्ति पुमान्वि तत्ने अधि नाके अस्मिन् ।**
**इमे मयूखा उप सेदुरू सदः सामानि चक्रुस्तसराण्योतवे ॥**

पुमान् पुरुषः आदिपुरुषः प्रजापतिः एनं यज्ञ तनुते विस्तारयति सृष्टवानित्यर्थः । तथा च ब्राह्मणम्–' स प्रजापतिर्यज्ञमतनुत तमाहरत् तेनायजत ' (ऐब्रा.५।३२) इति । ' प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येताम्' (ऐब्रा. ७।१९) इति च । स एव पुमान् सृष्ट तं यज्ञ उत्कृणत्ति उद्वेष्टयति । स एव पुमान् प्रजापतिः अस्मिन्भूलोके, नाके । अकं दुःख नास्त्यस्मिन्निति नाकः स्वर्गलोकः । तत्र च वि तत्ने इम यज्ञ विस्तारयति । मयूखाः रश्मिभूतास्तस्य प्रजापतेः प्राणात्मकाः इमे विश्वसृजो देवाः सदः सदन देवयजनस्थान उप सेदुः । विश्वसर्जनहेतुभूतं विश्वसृजामयनाख्य यज्ञं कर्तुमुपसीदन्ति । उपसद्य च सामानि रथन्तरादीनि ओतवे वयनाय

(१) ऋसं. १०।१३०।२; असं. १०।७।४३-४४ ( पुमानेनद्वयत्युद्‌गृणात्ति पुमानेनद्वि जभाराधि नाके ॥ इमे मयूखा उप तस्तभुर्दिवं सामानि चक्रुस्तसराणि वातवे । ).

यज्ञाख्य वस्त्रमोतुं तसराणि तिर्यक्सराणि तिरश्चीनसूत्राणि चक्रुः । ऋसा.

**कासीत्प्रमा प्रतिमा किं निदानमाज्यं किमासीत्परिधिः क आसीत् ।**
**छन्दः किमासीत्प्रउगं किमुक्थं यद्देवा देवमयजन्त विश्वे ॥**

विश्वसर्जनोपायत्वेन प्रजापतिना सृष्टे यज्ञे विश्वस्य स्रष्टारो विश्वसृजो देवाः विश्वसर्जनाय त यज्ञमन्वतिष्ठन् । तस्मिन्समये जगतोऽनुत्पत्तेर्जगदन्तःपातिनो यागोपकरणभूताः पदार्थाः कथमासन्नित्यनया प्रश्नः क्रियते । यत् यदा विश्वे सर्वे साध्याः देवाः देवं प्रजापतिं अयजन्त तदानीं तस्य यज्ञस्य प्रमा प्रमाण इयत्ता का कथभूता आसीत् । तथा प्रतिमा । हविष्प्रतियोगित्वेन मीयते निर्मीयते इति प्रतिमा देवता । सा च तस्य यज्ञस्य का आसीत् । तथा निदान आदिकारण यागे अप्रवृत्तस्य प्रवर्तकं फल किमासीत् । तथा आज्य घृतं एतदुपलक्षितं हविर्वा तस्य यज्ञस्य किमासीत् । तथा परिधिः । परितो धीयन्ते इति त्रयः परिधयो बाहुमात्राः पलाशादिवृक्षजन्याः परिधयः के आसन्नित्यर्थः । तथा तस्य यज्ञस्य गायत्र्यादिक छन्दः किमासीत् । तथा प्रउग उक्थम् । उपलक्षणमेतत् । आज्यप्रउगादीन्युक्थानि शस्त्राणि वा कान्यासन् । ऋसा.

**अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहया सविता सं बभूव ।**
**अनुष्टुभा सोम उक्थैर्महस्वान्बृहस्पतेर्बृहती वाचमावत् ॥**

एतेषु प्रश्नेषु त्रयाणामुत्तरं द्वृचेनाह । सयुग्वा सहयुक्ता अग्नेः सहायभूता गायत्र्यभवत् यष्टव्यात्प्रजापतेर्मुखादजायत । देवतासु मध्ये अग्निः छन्दसुः गायत्री चोभावप्यजायेतामित्यर्थः । तथा च तैत्तिरीयकं– 'प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दः' ( तैसं. ७।१।१।४ ) इति । उष्णिहया उष्णिक्छन्दसा सह सविता देवः सं बभूव तस्मात्प्रजापतेर्जज्ञे । तथा महस्वान् तेजस्वी सोमः

(१) ऋसं. १०।१३०।३.
(२) ऋसं. १०।१३०।४; ऐब्रा. ३।७।६।७.

उक्थैः स्तुतशस्त्रैः अनुष्टुभा अनुष्टुप्छन्दसा च सार्धं तस्मादेव प्रजापतेरजायत । तथा बृहस्पतेर्देवस्य वाचं वाक्यं बृहतीच्छन्दः आवत् अरक्षत् अगच्छद्वा । बृहत्या सार्धं बृहस्पतिरपि तस्मात्प्रजापतेर्जज्ञे इत्यर्थः । ऋसा.

**[1]विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबिह भागो अह्नः ।**
**विश्वान्देवाञ्जगत्या विवेश तेन चाक्लृप्र ऋषयो मनुष्याः ॥**

अपि च मित्रावरुणयोः देवयोः विराट् छन्दः अभिश्रीः अभिश्रिता आश्रिता आसीत् । विराजा सह मित्रावरुणावपि प्रजापतेः सकाशादजायेतामित्यर्थः । इह अस्मिन्यज्ञे अह्नः सवनत्रयरूपस्य भागो मध्यन्दिनसवनाख्यः अंशः त्रिष्टुप्छन्दश्च इन्द्रस्य अभिश्रयणीयौ आस्ताम् । ताविन्द्रश्च प्रजापतेः सकाशादजायन्तेत्यर्थः । तथा च तैत्तिरीयकम्–'उरसो बाहुभ्या पञ्चदश निरमिमीत तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप्छन्दो बृहत्साम' (तैस. ७।१।१।४) इति । तथा विश्वान् सर्वान् देवान् जगती छन्दः आ विवेश प्रविष्टवती । विश्वे देवाः जगती च प्रजापतेरजायन्तेत्यर्थः । तथा च तैत्तिरीयकम्–'तं विश्वे देवा देवता अन्वसृज्यन्त जगती छन्दो वैरूपं साम' (तैस. ७।१।१।५) इति । उक्तेन प्रकारेण प्रतिमा का आसीत्, छन्दः किमासीत्, प्रउग किमुक्थ इति त्रयाणामुत्तरं जातम् । आज्य किमासीत्, परिधिः क आसीदित्यनयोरुत्तर पुरुषसूक्ते द्रष्टव्यम् । तत्र ह्येवमाम्नायते–'देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥' 'सप्तास्यासन्परिधयः त्रिः सप्त समिधः कृताः' (ऋसं. १०।९०।६,१५) इति। अयमर्थः–सर्वरसोत्पादको वसन्तः तस्य जगत्सर्जनसाधनस्य यज्ञस्य आज्यमासीत् । आज्यदध्यादिभिः रसैः सार्धं तादृशो वसन्तोऽजायतेत्यर्थः । सर्वरसानां शोषको ग्रीष्म ऋतुः इध्म आसीत् । शुष्कैः काष्ठैः सार्धं ग्रीष्मोऽजायतेत्यर्थः । पच्यमानव्रीहियुक्तः शरदृतुस्तस्य यज्ञस्य हविरासीत् । सप्त छन्दांसि त्रिः सप्त एकविंशतिधा भूत्वा अष्टादश समिधः त्रयः परिधयश्च आसन् । 'कासीत् प्रमा (प्रतिमा?) किं निदानम्' इत्यनयोरपि प्रश्नयोरप्येवमुत्तरम्–'पूर्वे विश्वसृजोऽमृताः । शत वर्षसहस्राणि । दीक्षिताः सत्रमासत' इति 'एतेन वै विश्वसृज इद विश्वमसृजन्त' (तैब्रा. ३।१२।९।२,८) इति च तैत्तिरीयके समाम्नायते। अतस्तस्य यज्ञस्य सहस्रसंवत्सरपरिमितः कालः प्रमाणम् । विश्वस्य जगतः सर्जनमादिकारण प्रवर्तक फलमित्यर्थः । एतदुक्तं भवति–यदा विश्वसृजो देवाः देव प्रजापतिं विश्वसृजामयनाख्येन यागेनायजन् तदा उक्ताः सर्वयागोपकरणाः प्रजापतेः सकाशादजायन्तेति । यतोऽग्न्यादिदेवताभिः सह गायत्र्यादीनि सप्त छन्दांसि जातानि, अतो हेतोस्तेषा छन्दसामग्न्यादयो देवता इति । छन्दोविचितौ सूत्रित च–'अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वे देवा देवताः' (पि. सू. ३।६३) इति । एव प्राजापत्यो यज्ञोऽनुष्ठितः । तेन यज्ञेन ऋषयो मनुष्याश्च चाक्लृप्रे चक्लृपिरे क्लृप्ताः सृष्टा आसन् । तनैव यज्ञेन सर्व जगदसृजन्नित्यर्थः । ऋसा.

**[1]चाक्लृप्रे तेन ऋषयो मनुष्या यज्ञे जाते पितरो नः पुराणे ।**
**पश्यन्मन्ये मनसा चक्षसा तान्य इमं यज्ञमयजन्त पूर्वे ॥**

पुराणे चिरतने अस्मिन् यज्ञे जाते विश्वसृड्भिर्देवैः सम्यगनुष्ठिते सति तेन यज्ञेन ऋषयो मनुष्याः नः अस्माक पितरः पूर्वपुरुषाश्च चाक्लृप्रे अकल्पयन्त असृज्यन्त । इमं ईदृशं यज्ञं ये पूर्वे साध्या देवाः प्रजापतेः प्राणभूताः अयजन्त अन्वातिष्ठन्, तान्देवान्प्राणात्मना सर्वत्र वर्तमानान् चक्षसा दर्शनहेतुना मनसा पश्यन् जानन् मन्ये तानेव विश्वस्रष्टॄन् देवान् स्तौमि । ऋसा.

**[2]सहस्तोमाः सहछन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः ।**
**पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन् ॥**

स्तोमैः त्रिवृत्पञ्चदशादिभिः सह वर्तमानाः सहस्तोमाः । सहछन्दसः गायत्र्यादिभिश्छन्दोभिः सह वर्तमानाः । आवृतः आवर्तमानाः । सहप्रमाः, प्रमितिः प्रमा

(१) ऋसं. १०।१३०।५.

(१) ऋसं. १०।१३०।६.
(२) ऋसं. १०।१३०।७; शुसं. ३४।४९.

यज्ञस्येयत्तापरिज्ञानं, तेन सह वर्तमानाः । दैव्याः देवस्य प्रजापतेः सबन्धिनः । यद्वा, देवाना यष्टव्याना संबन्धिनः । ऋषयो द्रष्टारः सप्तसंख्याकाः शीर्षण्याः । यद्वा । मरीचिप्रमुखाः सप्तर्षयो होत्रादयः सप्त वषट्कर्तारो वा । एवंविधा एते पूर्वेषा पूर्वपुरुषाणामङ्गिरःप्रभृतीना विश्वसृजा देवानां वा पन्था पन्थानं अनुष्ठानमार्गं अनुदृश्य क्रमेण ज्ञात्वा धीराः धीमन्तः सन्तः अन्वालेभिरे अनुक्रमेणारब्धवन्तः । यागानुष्ठाने प्रवृत्ता इत्यर्थः । रथ्यो न यथा रथिनो रथेन युक्ता रथस्य नेतारः सूताः रश्मीन् अश्वनियोजनार्थान् प्रग्रहान् सम्यग्रथस्य नयनाय हस्तेनान्वारभन्ते, अन्वारभ्य च सम्यक् त रथ प्रवर्तयन्ति, एवमेतेऽप्यनुष्ठानमार्गं श्रुतितोऽवगम्य सम्यगन्वतिष्ठन्नित्यर्थः । ऋसा.

अहमादिष्ट आत्मा एव प्रजाजनक·

**अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः ।**
**अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥**

अह होता ओषधीषु शाल्यादिषु फलार्थं गर्भमदधा धारयामि । विश्वेषु सर्वेष्वन्येष्वपि भुवनेषु भूतजातेषु अन्तः मध्ये अहमेव गर्भं धारयामि । तथा पृथिव्या भूम्या प्रजाः सर्वान् मनुष्यान् अह अजनयं जनयामि । जानिभ्यः जायाभ्यः अपरीषु अन्यास्वपि स्त्रीषु पुत्रान् अह अजनय जनयामि । मत्साध्येन यागेन सर्वस्योत्पत्तेरहं सर्वजननहेतुर्भवामीत्यर्थः । ऋसा.

धातुस्तपस· ऋतसत्य, तस्माद्रात्री समुद्रश्च, तस्मात्सवत्सरः जगत· ईशानः जातः, धातुः द्युपृथिव्यन्तरिक्षस्वर्गसूर्यचन्द्रमसा जन्म

**ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।**
**ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥**

ऋतमिति सत्यनाम । ऋतं मानसं यथार्थसंकल्पन, सत्यं वाचिकं यथार्थभाषणम् । चकाराभ्यामन्यदपि शास्त्रीयं धर्मजात समुच्चीयते । तत्सर्वं अभीद्धात् अभितःसाद्धाह्मणा पुरा सृष्ट्यर्थं कृतात्तपसः अधि । अध्युपर्यर्थे । उपर्यजायत उदपद्यत । 'तपस्तप्त्वेदं सर्वमसृजत' (तैउ. २।६) इति श्रुतेः । तपश्चात्र स्रष्टव्यपर्यालोचनलक्षणम् । 'यस्य ज्ञानमयं तपः' (मुउ. १।१।९) इति श्रुत्यन्तरात् । यद्वा । अभीद्धादभितः प्रकाशमानात्परमात्मनो मायाधिष्ठानरूपादुपादानभूताद्दत सत्यं चाजायत । ततः तस्मादेवेश्वरात् रात्री । उपलक्षणमेतत् अहोऽपि । अहश्च रात्रिश्च अजायत । ततः तस्मादेवेश्वरात् अर्णवः अर्णसोदकेन युक्तः समुद्रश्च अजायत । समुद्रशब्दोऽन्तरिक्षोदध्योः साधारणः इत्यभिमतार्थस्य प्रकाशनायार्णवशब्देन विशेष्यते । ऋसा.

**समुद्रादर्णवादधि संवत्सरो अजायत ।**
**अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥**

अर्णवात् समुद्रात् सृष्टात् अधि ऊर्ध्वं संवत्सरः सवत्सरोपलक्षितः सर्वः कालः अजायत । श्रूयते हि– 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । कला मुहूर्ताः काष्ठाश्च' (नाउ. १।२) इति । स चेश्वरः अहोरात्राणि, एतदुपलक्षितानि सर्वाणि भूतजातानि विदधत् कुर्वन् सृजन् मिषतो निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते । ऋसा.

**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।**
**दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥**

सूर्याचन्द्रमसौ कालस्य ध्वजभूतौ दिव च पृथिवीं चान्तरिक्षं च इत्थ त्रिभुवनं स्वः । स्वःशब्दः सुखवाची दिवो विशेषणम् । सुखरूपां दिवम् । तदेतत्सर्वं धाता विधाता यथापूर्वं पूर्वस्मिन्काले अकल्पयत् सृष्टवान् । तथैवागामिन्यपि कल्पे कल्पयिष्यतीत्यर्थः । ऋसा.

जलं ब्रह्म, तत्स्थानमन्तरिक्षं, द्यावापृथिव्योस्तदुत्पन्नम्

**इदं जनासो विदथ महद्ब्रह्म वदिष्यति ।**
**न तत्पृथिव्यां नो दिवि येन प्राणन्ति वीरुधः ॥**

जनासः हे जनाः, ज्ञातुकामा यूय इद वक्ष्यमाणं वस्तु विदथ जानीथ । किं तत् इत्यत आह–मन्त्रद्रष्टा

(१) ऋसं. १०।१८३।२.

(२) ऋसं. १०।१९०।१; नाउ. १।१३ रात्र्यजा (रात्रिरजा).

(१) ऋसं. १०।१९०।२; नाउ. १।१४ विदध (मिदध).

(२) ऋसं. १०।१९०।३; नाउ. १।१४ स्वः (सुव.).

(३) असं. १।३२।१.

ऋषिः महत् महत्त्वगुणयुक्त व्यापक ब्रह्म ब्रह्मणः प्रथमकार्यम्। श्रूयते हि—'आपो वा इदमग्रे सलिलमासीत्' (तैस. ७।१।५।१) इति। स्मर्यते च—'अप एव ससर्जादौ तासु वीर्यमपाकिरत्' (मस्मृ. १।८) इति। तादृशं ब्रह्म वदिष्यति कथयिष्यति। तस्योदकस्य प्रतिनियतं निवासस्थानं वक्तु लोकप्रतीतिसिद्ध स्थानमपवदति— तत् उदकात्मक ब्रह्म पृथिव्या भूमौ न। तिष्ठतीति शेषः। वृष्ट्यूर्ध्वभाविनो जलस्यैव भूमौ अवस्थानम्। ननु लोकप्रतीतिसिद्ध द्युलोके एवेत्यत आह— नो नैव दिवि द्युलोके। तिष्ठतीति शेषः। तर्हि सभाविता लोकद्वये अविद्यमानस्य तस्य खपुष्पकल्पनेत्यत आह—येन उक्तेन उदकेन वीरुधः विरोहणशीलाश्च कौशिकेनोक्ताश्चित्याद्या अन्याश्चौषधयः प्राणन्ति जीवन्ति। उदकमन्तरेण अनुपपद्यमान वीरुधा जीवन तत्सत्तायाः कल्पकमिति तस्य नासत्त्वमित्यर्थः। असा.

[1]अन्तरिक्ष आसां स्थाम श्रान्तसदामिव।
आस्थानमस्य भूतस्य विदुष्टद्वेधसो न वा॥

पूर्वं प्रतिपादितप्रकारेण उदकसत्ताया अवश्यभावात् लब्धसत्ताकस्य च वस्तुनः क्वचिदवस्थाननियमादस्यापि केनचिन्निवासस्थानेन भवितव्यमित्याशङ्क्य विवक्षितमसाधारण स्थानं दर्शयति— अन्तरिक्ष इति। आसां वीरुधां स्थाम स्थान स्थितिहेतुभूतमुदक अन्तरिक्षे द्यावापृथिव्योर्मध्यवर्तिनि लोके। वर्तते इति शेषः। यद्वा, आसां वीरुज्जीवनहेतुभूतानामपा स्थाम स्थान अन्तरिक्षे अन्तरिक्षलोके। आह च भगवान्पतञ्जलिर्महाभाष्ये—'अन्तरिक्षे महत्समुद्रं विततमस्ति' इति। श्रूयते च—'अस्मिन्महत्यर्णवेऽन्तरिक्षे' (तैस. ४।५।११।१) इति। तत्र दृष्टान्तः— श्रान्तसदामिव। तपसा कृच्छ्रचान्द्रायणादिना श्रान्ताः सन्तः सीदन्ति निवसन्ति सुखोपभोगार्थमिति श्रान्तसदः यक्षगन्धर्वादयः। तेषां यथा अन्तरिक्षं स्थान, 'यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षम्' (नृपूता. १) इति श्रुतेः, तथेति पूर्वेण संबन्धः। लोकान्तरगतत्वेन तत् उदकं भूलोकनिवासिनां अनुपकारकमित्याशङ्क्याह—आस्थानमिति। अस्य अस्मिँल्लोके परिदृश्यमानस्य भूतस्य लब्धसत्ताकस्य स्थावरजङ्गमात्मकस्य जगतः आस्थानम्। आ समन्तात् तिष्ठन्ति जीवन्ति अनेनेति आस्थानम्। वृष्टिद्वारा जगज्जीवनकारणमित्यर्थः। तस्य दुर्ज्ञानत्वमाह— तत् कारणभूतमुदकं वेधसः विधातारो मन्वादयः विदुः जानन्ति, न वा विदुः न वा जानन्ति। सर्वस्रष्टृणा तेषामपि सदिग्धं किल तत्, किमु वक्तव्यमर्वाचीनाना मनुष्याणा दुर्ज्ञेयमितीत्यर्थः। असा.

[2]यद्रोदसी रेजमाने भूमिश्च निरतक्षतम्।
आर्द्रं तदद्य सर्वदा समुद्रस्येव स्रोत्याः॥

तस्योदकस्य उत्पत्तिप्रकारमाह — रोदसी हे द्यावापृथिव्यौ, रेजमाने कम्पमाने जलमुत्पादयितुं व्याप्रियमाणे भूमिः चकारात् द्यौश्च युवा यत्प्रागुदीरितमुदक निरतक्षतं उदपादयतम्। सृष्टस्योदकस्य सर्वदा धारणात्प्राधान्यं सूचयितुं भूमेः अवयुत्यापि निर्देशः। तत् उदकं अद्य इदानीं वर्तमानकाले सर्वदा सर्वस्मिन्काले आर्द्रं आर्द्रगुणयुक्त शोषरहितम्। वर्तते इति शेषः। वृष्टिद्वारा उदके निर्गतेऽपि पुनरपि अन्तरिक्षगतमुदक अनुपक्षीणं वर्तते इत्यर्थः। तत्र दृष्टान्तः — समुद्रस्येव स्रोत्याः। यथा समुद्रगामिन्यो नद्यः अक्षीणोदका वर्तन्ते तद्वदित्यर्थः। असा.

[3]विश्वमन्यामभीवार तदन्यस्यामधिश्रितम्।
दिवे च विश्ववेदसे पृथिव्यै चाकरं नमः॥

विशिष्टकारणजन्यत्वेन आप्य श्रैष्ठ्य सूचयितु कारणत्वेन उक्ते द्यावापृथिव्यौ प्रशसति — विश्व विश्वस्य अन्यां अन्या द्यौः अभीवारः अभितो वरणं छादनम्। भवतीति शेषः। अथ वा विश्व कृत्स्नं जगत् अन्या अन्यया दिवा अभीवारः अभिवृतं आच्छन्नमित्यर्थः। यद्वा, विश्वं कर्तृभूत जगत् अन्या दिवं उद्दिश्य अभीवारः अभितः संभजनयुक्तं वृष्टिविषयप्रार्थनायुक्त अभूत्। तत् उक्त विश्वं अन्यस्यां पृथिव्यां अधिश्रित आश्रितं वर्तते। दिवे उक्तलक्षणाय द्युलोकाय विश्ववेदसे। वेद इति धननाम। विश्वस्य जगतो धनभूताय। वृष्टिप्रदानेन सर्वधनहेतुत्वात् धनात्मकत्वम्। यद्वा, वेद इति

(१) असं. ११३२।२.

(२) असं. ११३२।३.

(३) असं. ११३२।४; तैब्रा. ३।७।१०।३ न्यामभीवार (न्याभिवावृधे) श्ववेदसे (श्वकर्मणे).

ज्ञाननाम। विश्वं विश्वविषयं ज्ञान यस्याः सा तथोक्ता, तस्यै। तथा पृथिव्यै विश्वाधारभूतायै। परस्परसमुच्चयार्थौ चकारौ। नमः। अन्ननामैतत्। हविर्लक्षणमन्नं नमस्कार वा अकर करोमि। असा.

अब्रूपसलिले सृष्टिपूर्वकालिके स्थितो वातरूपः प्रजापतिः पृथिवीं सृष्टवान्

**आपो वा इदमग्रे सलिलमासीत्। स प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलायत्। स प्रतिष्ठां नाविन्दत। स एतदपां कुलायमपश्यत्। तस्मिन्नग्निमचिनुत। तदियमभवत्। ततो वै स प्रत्यतिष्ठत् * ॥**

ज्येष्ठः प्रजापतिः ज्येष्ठयज्ञेनाग्निष्टोमेन देववेदचातुर्वर्ण्यपशून् सृष्टवान्

**य एवं विद्वानग्निष्टोमेन यजते। प्राजाताः प्रजा जनयति। परि प्रजाता गृह्णाति। तस्मादाहुर्ज्येष्ठयज्ञ इति। प्रजापतिर्वाव ज्येष्ठः। स ह्येतेनाग्रेऽयजत॥**

अग्निष्टोमयाजी पूर्वमनुत्पन्नाः प्रजाः उत्पादयितुमुत्पन्नाश्च स्वाधीनत्वेन परिग्रहीतु समर्थो भवति। यस्मात्सर्वेषां देवानां मध्ये ज्येष्ठः प्रजापतिः सृष्टिसाधनत्वेनाग्रे एतेनायजत तस्माज्ज्येष्ठेनेष्टत्वात्प्रथममिष्टत्वाच्चायमग्निष्टोमो ज्येष्ठयज्ञः सर्वेषामुक्थ्यादीना मूलप्रकृतिभूतः इत्यर्थः। अग्निविषयेण 'यज्ञायज्ञा वो अग्नये' (सास. २।१।६) इति मन्त्रेण सपाद्यमानो योऽयमेकविंशः स्तोमस्तेन समाप्यमानत्वादयमग्निष्टोमः इत्युच्यते। तैसा.

**प्रजापतिरकामयत प्र जायेयेति। स मुखतस्त्रिवृतं निरमिमीत। तमग्निर्देवताऽन्वसृज्यत। गायत्री छन्दो रथन्तरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनाम्। तस्मात्ते मुख्याः। मुखतो ह्यसृज्यन्त॥**

तस्य च प्रजोत्पादनसाधनत्व यत्पूर्वमुक्त 'अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत' इति, तदिद मुखादिस्थानचतुष्टयेन प्रपञ्चयितु मुखजन्या सृष्टि दर्शयति—सिसृक्षुः प्रजापतिस्तत्साधनत्वेनाग्निष्टोममनुष्ठाय तत्सामर्थ्येन सत्यसकल्पः सन् स्वकीयान्मुखात्त्रिवृदादयः उत्पद्यन्तामिति सकल्प्य तथैव निर्मितः सन् आदौ त्रिवृत्स्तोमः सृष्टः। तमनु देवताना मध्येऽग्निः। तमग्न्यनु छन्दसा मध्ये गायत्री सृष्टा। तामग्न्यनु साम्ना मध्ये रथन्तर सृष्टम्। तदग्न्यनु मनुष्याणा मध्ये ब्राह्मणः सृष्टः। तमग्न्यनु पशूना मध्ये अजः सृष्टः। यस्मादेते मुखतः सृष्टाः तस्मान्मुख्याः वक्ष्यमाणेभ्यः श्रेष्ठाः। तैसा.

**उरसो बाहुभ्यां पञ्चदशं निरमिमीत। तमिन्द्रो देवताऽन्वसृज्यत। त्रिष्टुप् छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनाम्। तस्मात्ते वीर्यावन्तः। वीर्याद्ध्यसृज्यन्त॥**

अथ द्वितीयस्थानादुत्पत्तिं दर्शयति—उरस इति। पूर्ववद्व्याख्येयम्। वीर्ययुक्ताद्बाहुदेशादुत्पन्नत्वात्तेषामपि सामर्थ्याधिक्यम्। तैसा.

**मध्यतः सप्तदशं निरमिमीत। तं विश्वे देवा देवता अन्वसृज्यन्त। जगती छन्दो वैरूपꣳ साम वैश्यो मनुष्याणां गावः पशूनाम्। तस्मात्त आद्याः। अन्नधानाद्ध्यसृज्यन्त। तस्माद्भूयाꣳसोऽन्येभ्यः। भूयिष्ठा हि देवता अन्वसृज्यन्त॥**

अथ तृतीयस्थानादुत्पत्तिं दर्शयति— मध्यत इति। मध्यतः उदरप्रदेशात्। यस्मादन्नाधारादुदरादसृज्यन्त तस्मादाद्याः भोग्याः। वैश्याः वाणिज्येन धनसंपादकत्वाद्भोग्याः। गावश्च क्षीरादिसपादनेन भोग्याः। यस्मादतिबहून् विश्वान्देवान् अन्वेते वैश्याः सृष्टाः तस्माद्वाणिज्यकर्तारो लोके भूयासः। तैसा.

**पत्त एकविꣳशं निरमिमीत। तमनुष्टुप् छन्दोऽन्वसृज्यत। वैराजꣳ साम शूद्रो मनुष्याणामश्वः पशूनाम्। तस्मात्तौ भूतसंक्रामिणावश्वश्च शूद्रश्च। तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः। न हि देवता अन्वसृज्यत। तस्मात्पादावुप जीवतः। पत्तो ह्यसृज्येताम्॥**

अथ चतुर्थस्थानादुत्पत्तिं दर्शयति—पत्त इति। पत्तः पादतः। भूताना पूर्वोत्पन्नाना ब्राह्मणादीना संक्रामः सम्यगाक्रमण तदधीनत्वेनावस्थानमित्यर्थः। सोऽयं भूतसंक्रामो ययोरश्वशूद्रयोस्तावुभौ भूतसंक्रामिणौ। शूद्राणां

* व्याख्यान 'आप' इत्यस्मिन् प्रकरणे १५७ पृष्ठे द्रष्टव्यम्।

(१) तैसं. ५।६।४।२–३.

(२) तैसं. ७।१।१।३–६.

वर्णत्रयपरिचर्यामुख्यत्वेन तदधीनत्वम् । अश्वानां च वहनेन तदधीनत्वम् । अत्र पूर्वस्थानेभ्यः इव पादतो न काचिद्देवता सृष्टा । तस्माद्देवतामनु सृज्यत्वाभावाच्छूद्रो यज्ञे प्रवर्तितु न योग्यः । यस्मादश्वशूद्रौ पादत उत्पन्नौ तस्मात्पादावेव तयोर्जीवनसाधनम् । शूद्रो हि ब्राह्मणाद्याज्ञया पद्भ्या यत्र क्वापि गमनागमने कुर्वन् जीवति । अश्वश्च ब्राह्मणादिवाही पादैर्यत्र क्वापि गच्छन् खाद्य लभते । तैसा.

प्राणा वै त्रिवृत् । अर्धमासाः पञ्चदशः । प्रजापतिः सप्तदशः । त्रय इमे लोकाः । असावादित्य एकविꣳशः । एतस्मिन्वा एते श्रिताः । एतस्मिन्प्रतिष्ठिताः । य एवं वेदैतस्मिन्नेव श्रयत एतस्मिन्प्रति तिष्ठति ॥

एवं सृष्टिसाधनमग्निष्टोम प्रशसितु सृष्टिं प्रपञ्च्य तत्र प्रकृतोपयुक्तान् स्तोमान् विशेषतः प्रशसति—प्राणा इति । बहिष्पवमानस्तोत्रे सूक्ताना त्रित्वादेकैकस्मिन्सूक्ते भक्तीना त्रित्वाच्च तदीयस्य स्तोमस्य त्रिवृत्त्वम् । प्राणापानव्यानाना चोर्ध्वाधोमध्यवर्तिनां त्रित्वात्तत्साम्यम् । अर्धमासगतानां रात्रीणां संख्यया पञ्चदशस्तोमसाम्यम् । प्रजापतिरूपाणामाश्रावयेत्यादीनामक्षराणा सख्यया सप्तदशस्तोमसाम्यम् । आदित्यस्य संख्ययैकविंशस्तोमसाम्यं वक्तुं 'त्रय इमे लोकाः' इत्यनेन ब्राह्मणान्तरं प्रत्यभिज्ञाप्यते । तच्च ब्राह्मणान्तरमेवमाम्नातम्—'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इति । एतस्मिन्नेकविंशस्तोमे पूर्वोक्तास्त्रिवृदादय आश्रिताः । अधिकसख्यायामल्पसंख्यान्तर्भावात् । किंचैतस्मिन्नेव स्तोमाः प्रतिष्ठिताः समाप्ताः । नह्येकविंशादूर्ध्वमग्निष्टोमे कश्चिदधिकः स्तोमो विद्यते । य एवमेतस्य महिमान वेद स एतस्मिन्नाश्रितः प्रतिष्ठितो भवति । अग्निष्टोममनुष्ठातुं फल प्राप्तुं च योग्यो भवतीत्यर्थः । तैसा.

अब्रूपसलिले वातरूप. प्रजापति. भुवः देवाना च स्रष्टा

* आपो वा इदमग्रे सलिलमासीत् । तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत् । स इमामपश्यत् । तां वराहो भूत्वाऽहरत् । तां विश्वकर्मा भूत्वा व्यमार्ट् । साऽप्रथत । सा पृथिव्यभवत् । तत्पृथिव्यै पृथिवित्वम् । तस्यामश्राम्यत्प्रजापतिः । स देवानसृजत वसून् रुद्रानादित्यान् ॥

वागूरूपाभ्यो व्याहृतिभ्यः सर्वस्योत्पत्तिः

वाचा वै सह मनुष्या अजायन्त [1] । ते वाचो देवाश्चासुराश्च । ते यन्मनुष्या अवदन् । तद्देवाभवन् । ते देवाश्चासुराश्च प्रजापतिमब्रुवन् । इमे वावेदमभूवन्निति । स वाचः सत्यं निरमिमीत । भूर्भुवस्स्वरिति । यत्तुरीयमनृतं तन्मनुष्येषु न्यदधात् । एतद्वै वाचोऽनृतं यन्मनुष्या वदन्ति । भूरितीमामसृजताग्निं रथन्तरं त्रिवृतं गायत्रीम् । भुवरित्यन्तरिक्षं वातं वामदेव्यं त्रिष्टुभं पञ्चदश । स्वरिति दिवं सूर्यं बृहदेकविंशं जगतीम् । भूर्भुवस्स्वरग्नौ ज्योतिर्ज्योतिरग्ना इत्यग्निहोत्रं जुहुयात् । एतद्वै वाचस्सत्यम् । एतन्मिथुनम् । एतद्ब्रह्म । तेनैव जुहोति । इमा एवैतदिष्टका उपधत्ते । इमा एवैतदिष्टका उपधायोत्तमं नाकं रोहति । उत्तमः समानानां भवति यस्यैवमग्निहोत्रं हूयते ॥

एकस्मात्प्रजापते त्रैलोक्यादिप्रणवान्तसृष्टि

[2] प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति । स तपोऽतप्यत । स तपस्तप्त्वेमाँल्लोकानसृजत । पृथिवीमन्तरिक्षं दिवम् । ताँल्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्त । अग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवः । तानि ज्योतींष्यभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त । ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात् । तान् वेदानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त । भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात्स्वरिति सामवेदात् ॥

अथ व्याहृतित्रयस्य सृष्टिं वक्तुमुपक्रमते । पुरा प्रजापतिरेको भूत्वा प्रजोत्पादनेन बहुविधः स्यामिति कामयित्वा तत्सिद्ध्यर्थं तपः पर्यालोचन अकरोत् । इद

* व्याख्यानं 'आपः' इत्यस्मिन् प्रकरणे १५७ पृष्ठे द्रष्टव्यम् ।

(१) तैसं. ७।१।५।१.

(१) कासं. ६।७ (१३).

(२) ऐब्रा. २५।७।१.

वस्तु ईदृशमिति पर्यालोचनरूपं तपः कृत्वा पर्यालोचितप्रकारेणोत्पद्यतामिति सकल्प्य तेन सकल्पेन लोकत्रयमसृजत। तॉल्लोकान्पुनरप्यभितः पर्यालोचितवान्। किमेषु लोकेषु सारभूतं सपादनीयामिति पर्यालोचनम्। तथा पर्यालोचितेभ्यो लोकेभ्यः प्रजापतिः सकल्पानुसारेणाग्निवाय्वादित्यरूपाणि ज्योतीषि अजायन्त। तत्रापि सारं पर्यालोच्य त्रिभ्यो ज्योतिभ्यो वेदत्रयमुत्पादितवान्। तेभ्यश्च वेदेभ्यो व्याहृतित्रयरूपाणि शुक्राणि ज्योतीपि पापाख्यतमोनिवारणसमर्थान्यजायन्त। ऐब्रासा.

[1]**तानि शुक्राण्यभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त अकार उकारो मकार इति। तानेकधा समभरत् तदेतदोमिति। तस्मादोमोमिति प्रणौति। ओमिति वै स्वर्गो लोकः। ओमित्यसौ योऽसौ तपति॥**

एव व्याहृतित्रयस्योत्पत्तिमुक्त्वा प्रणवस्योत्पत्तिमाह— तानीति। तानि शुक्राणि व्याहृतित्रयरूपाणि ज्योतीषि सारोत्पादनाय पर्यालोचितवान्। तेभ्यः पर्यालोचितभ्यः प्रजापतिसकल्पाद्वर्णत्रयमजायत। तच्च त्रयमेकधा सयोजितवान्। तदेतदेकीभूत वर्णत्रयमोमित्येव सपन्नम्। तस्मात्सर्वसारत्वाद्धोता यः(य) प्रयोगमध्ये ओमिति प्रणवं करोति। सर्वप्रयोगसंग्रहार्था वीप्सा। सोऽयमोकारः स्वर्गप्राप्तिहेतुत्वात्तदात्मकः। तथा योऽसावादित्यस्तपत्यसावप्योकारस्वरूपः। आदित्यप्राप्तेरप्योकारसाधनत्वात्। ओकारस्य सर्वफलहेतुत्व कठा आमनन्ति— 'एतद्ध्येवाक्षर ज्ञात्वा यो यदिच्छति तस्य तत्' (काउ. २।१६) इति। ऐब्रासा.

प्रजापतेः पुरुषरूपाद्देवचातुर्वर्ण्यवेदर्तूनां सृष्टिः

[2]**सोऽकामयत यज्ञं सृजेयेति। स मुखत एव त्रिवृतमसृजत। तं गायत्री छन्दोऽन्वसृज्यताग्निर्देवता ब्राह्मणो मनुष्यो वसन्त ऋतुः। तस्मात्त्रिवृत् स्तोमानां मुखम्। गायत्री छन्दसामग्निर्देवतानां ब्राह्मणो मनुष्याणां वसन्त ऋतूनाम्। तस्माद्ब्राह्मणो मुखेन वीर्यं करोति। मुखतो हि सृष्टः॥**

प्रजापतिः प्रजासृष्टिसाधनत्वेन अग्निष्टोममपश्यत्, तेन प्रजा असृजत इति योऽग्निष्टोम उक्तः तस्य त्रिवृदादिभिः स्तोमैः गायत्र्यादिभिः छन्दोभिः अग्न्यादिभिर्देवैः अन्यैर्ब्राह्मणादिभिः साध्यत्वात्तेषा सृष्टिं क्रमेण विवक्षुरादौ त्रिवृद्गायत्र्यादिसपाद्यां सृष्टिमाह — सः प्रजापतिरकामयत। किमिति। सर्वसाधकं यज्ञ सृजेयेति। 'स एतमग्निष्टोममपश्यत् तमाहरत्' इत्युक्तस्यैवेद विवरणम्। सः प्रजापतिः मुखतः आत्मनो मुखादेव त्रिवृत त्रिवार आवृत्तित्रयसाध्य एतन्नामक स्तोममसृजत। त त्रिवृतमनु पश्चाद्गायत्री छन्दः गायत्रं नाम छन्दोऽसृज्यत। तदनु अग्निर्देवताऽन्वसृज्यत। तमनु मनुष्यो ब्राह्मणोऽन्वसृज्यत। तथा तमनु वसन्ताख्यश्च ऋतुरसृज्यत। यस्माद्येते मुखत एव सृष्टाः तस्मादेते त्रिवृदादयः स्वस्वजातीयाना मध्ये मुख्या अभवन्। त्रिवृदादीना मुख्याना मध्ये ब्राह्मणस्य मुख्यत्वप्रयुक्त वीर्यं लोकसिद्ध दर्शयति — तस्मान्मुखसृष्टत्वेन मुख्यत्वात् ब्राह्मणो मुखेनेदानीमपि वीर्यं स्वाध्यायप्रवचनादिजन्य सामर्थ्य करोति। तस्मादित्युक्त विवृणोति— हि यस्माद्ब्राह्मणो मुखतः सृष्टस्तस्मादित्यर्थः। ताब्रा.

**करोति मुखेन वीर्यं य एवं वेद॥**

उक्तार्थविदुषः फलमाह — एवमुक्तमर्थ यो वेद सोऽपि मुखेन वीर्य करोति। मुखसाध्येन स्वाध्यायप्रवचनादिनैवाभीष्ट साधयति इत्यर्थः। ताब्रा.

**स उरस्त एव बाहुभ्यां पञ्चदशमसृजत। तं त्रिष्टुप् छन्दोऽन्वसृज्यतेन्द्रो देवता राजन्यो मनुष्यो ग्रीष्म ऋतुः। तस्माद्राजन्यस्य पञ्चदशः स्तोमस्त्रिष्टुप् छन्द इन्द्रो देवता ग्रीष्म ऋतुः। तस्मादु बाहुवीर्यः। बाहुभ्यां हि सृष्टः॥**

अथ पञ्चदशस्तोमत्रिष्टुबादीना सृष्टिमाह— सः प्रजापतिरुरस्त एव। तस्यैव च व्याख्यानं बाहुभ्यामिति। पञ्चदशस्तोम तृचगतानां तिसृणामृचा त्रिष्वपि पर्यायेषु पञ्चवारावृत्तिसाध्य पञ्चदशस्तोममसृजत। एवमुत्तरत्र सप्तदशादीनामावृत्तिप्रयुक्तसंख्यावत्त्वमिति द्रष्टव्यम्। तमनु त्रिष्टुप् छन्द इत्यादिः ग्रीष्म ऋतुरित्यन्तः पूर्ववद्योज्यः। तस्माद्यस्मात् पञ्चदशादीनां राजन्येन सहोत्पत्तिः तस्माद्राजन्यस्य पञ्चदशादयो भवन्ति। तेषा पञ्चदशादीना राजन्यसंबन्धः श्रुतिषु प्रसिद्धः—'वसन्ते हि ब्राह्मणमुपनयीत' 'ग्रीष्मे राजन्यः अग्नीनादधीत'।

(१) ऐब्रा. २५।७।२. (२) ताब्रा. ६।१।६–१३.

'ग्रीष्मे राजन्यः' इत्यादिना राजन्यसंबन्धः । एवं प्रथमेऽपि पर्याये ब्राह्मणस्य त्रिवृद्गायत्र्यादीना विशेषसबन्धोऽवगतः । तस्माद् बाहुवीर्य इत्यादि स्पष्टम् । तासा.

**करोति बाहुभ्यां वीर्यं य एवं वेद ॥**

अथ विदुष' फलमाह — करोतीति । ऋज्वर्थः । तासा.

**स मध्यत एव प्रजननात्सप्तदशमसृजत । तं जगती छन्दोऽन्वसृज्यत विश्वे देवा देवता वैश्यो मनुष्यो वर्षा ऋतुः । तस्माद्वैश्योऽद्यमानो न क्षीयते । प्रजननाद्धि सृष्टः । तस्माद् बहुपशुः । वैश्वदेवो हि जागतो वर्षा ह्यस्यर्तुः । तस्माद्ब्राह्मणस्य च राजन्यस्य चाद्यः । अधरो हि सृष्टः ॥**

अथ सप्तदशादिसृष्टिमाह — स प्रजापतिः मध्यतो मध्यदेशादेव । तस्यैव व्याख्यानम् — प्रजननात् सप्तदशं स्तोममसृजत । तमनु जगती छन्दोऽन्वसृज्यत । तदनु क्रमेण विश्वे देवा देवता वैश्यो मनुष्यो वर्षा ऋतुश्चान्वसृज्यत । तस्मात्प्रजोत्पादकप्रजननादुत्पन्नत्वात् वैश्यजातीय अद्यमानो भक्ष्यमाणो राजादिभिर्धनैरपह्रियमाणोऽपि न क्षीयते, किंतु पशुपालनादिना समृद्धो भवत्येव । तत्र हेतुः— प्रजननाद्धि सृष्ट इति । तस्माद् तस्मादेव कारणात् स वैश्यो बहुपशुर्भवति । तत्रोपपत्तिरुच्यते— वैश्वदेवो हि जागतः । विश्वैर्देवैः सह सृष्टत्वात् असावपि वैश्वदेवस्तस्मादित्यर्थः । वैश्वदेवत्वमस्य बहुपशुत्वे हेतुः । जागतः जगत्या सहोत्पन्नत्वात् असौ जगतीसबद्धो भवति । वर्षा ह्यस्यर्तुरित्ययमपि बहुपशुत्वे हेतुः । एतत् स्तोमसंबन्धस्योपलक्षणम् । अनेन वैश्यस्य सप्तदशस्तोमजगतीछन्दःप्रभृतीनां च विशेषसंबन्ध उक्तो भवति । तस्मादयं पूर्वसृष्टस्य ब्राह्मणस्य च राजन्यस्य च आद्यः अदनीयः उपजीवनीयो भवति । तस्मादिति हेतुं विवृणोति— हि यस्मादधरः पश्चाद्भावी निकृष्टः सृष्टः तस्मादित्यन्वयः । तासा.

**स पत्त एव प्रतिष्ठाया एकविंशमसृजत । तमनुष्टुप् छन्दोऽन्वसृज्यत । न काचन देवता । शूद्रो मनुष्यः । तस्माच्छूद्र उत बहुपशुरयज्ञियः । विदेवो हि । न हि तं काचन देवताऽन्वसृज्यत । तस्मात् पादावनेज्यं नाति वर्धते । पत्तो हि सृष्टः । तस्मादेकविंशः स्तोमानां प्रतिष्ठा । प्रतिष्ठाया हि सृष्टः । तस्मादनुष्टुभं छन्दांसि नानु व्यूहन्ति ॥**

अथैकविंशस्तोमादिसृष्टिमाह— सः प्रजापतिः । पत्त एव प्रतिष्ठाया इति परस्परं सामानाधिकरण्यम् । पादयोः प्रतिष्ठाहेतुत्वं स्पष्टम् । प्रतिष्ठारूपाभ्यां पादाभ्या एकविंशं स्तोममसृजत । तमनु अनुष्टुप् छन्दोऽन्वसृज्यत । तदनु इतरेष्विव चात्र काचन देवता न सृष्टा, किन्तु शूद्रो मनुष्योऽन्वसृज्यत । तस्मात्पूर्वं देवसृष्ट्यभावात् शूद्र उत बहुपशुः पशुबहुत्वोपेतोऽपि अयज्ञियो यज्ञानर्होऽभूत् । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तैस. ७।१।१।६) इति हि श्रुत्यन्तरम् । तस्मादित्युक्त कस्मादित्याह—विदेवो देवरहितः खल्वयम् । एतदपि कुत इत्यत आह— तं शूद्रमनु नहि काचन देवता असृज्यत । यस्मात् विदेवः तस्माच्छूद्रः पादावनेज्यं त्रैवर्णिकाना पादप्रक्षालनरूपं कर्मातिक्रम्य न वर्धते । एतदितरशुश्रूषोपलक्षणम् । द्विजातिशुश्रूषातिरिक्त किञ्चिदपि धर्मं नानुतिष्ठेदित्यर्थः । तथा च स्मर्यते—' शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते । अन्यथा कुरुते किंचिद्भवेत्तस्य निष्फलम् ॥ ' इति । तत्रोपपत्तिरुच्यते—हि यस्मादयं पत्तः सृष्टः । किंच तस्मात्प्रजापतिः प्रतिष्ठारूपपादतः सृष्टत्वादयमेकविंशस्तोमः इतरस्तोमाना मध्ये प्रतिष्ठा भवति । एकविशस्तोमकेन यज्ञायज्ञीयेनाग्निष्टोमस्य समाप्तेरस्य प्रतिष्ठात्वम् । हि यस्मादेकविंशः प्रतिष्ठायाः सृष्टः अत इत्यर्थः । तस्मात्पादतो निकृष्टप्रदेशादुत्पन्नत्वात् अनुष्टुभ छन्दांसि अनु अनुसवनप्रयुक्तैर्गायत्र्यादिछन्दोभिः सह न व्यूहन्ति । पृष्ठ्यादिषु छन्दसा व्यूहे क्रियमाणे स्वस्थान एवानुष्टुभ प्रयुञ्जते, न तस्य स्थानेऽन्यद्गायत्र्यादिक छन्दः, तेषा वा स्थानेऽनुष्टुभ प्रयुञ्जते इत्यर्थः । तासा.

**पापवसीयसो विधृत्यै ॥**

किमर्थमेवमिति तत्राह—पापं अधरस्थानादुत्पन्नं अनुष्टुप्छन्दः, वसीयः पुण्यं मुखाद्युत्तमस्थानोत्पन्न गायत्र्यादिक, तदुभयस्य विधृत्यै विधरणाय असांकर्यायेत्यर्थः । तासा.

**विधृतिः पापवसीयसो भवति य एवं वेद ॥**

अथ वेदितुः फलमाह – यदुक्तमर्थज्ञानातिशयाय पुण्यद्वयस्य विधृतिः विवेचको भवति । तस्मिन्नुभे समानाश्रयणे स्तः इत्यर्थः । तासा.

प्रजापतेर्ज्योति- जातं प्रथमम्

**प्रजापतिर्वा इदमेक आसीत् । नाहरासीत् । न रात्रिरासीत् । सोऽस्मिन्नन्धे तमसि प्रासर्पत् । स ऐच्छत् । स एतमभ्यपद्यत । ततो वै तस्मै व्यौच्छत् । व्युष्टिर्वा एष आह्रियते । यद्वै तज्ज्योतिरभवत् तत् ज्योतिषो ज्योतिष्ट्वम् ॥**

प्रजापतिः प्रजानामधिपतिः सर्वकारणभूतः स्रष्टा इद दृश्यमान यज्जगदस्ति एतदात्मकः एक एव पुरा आसीत् । पुरातनस्य प्रपञ्चस्य प्रविलीनत्वात् अद्यतनस्य वा असृष्टत्वात् अद्वितीयः प्रजापतिरेकः एवावर्तत इत्यर्थः । एवं चाहोरात्रविभागहेतोः सूर्यस्याप्यभावात् अहोरात्रविभागोऽपि नासीत् । एव प्रकाशाभावात् स प्रजापतिः अस्मिन्नन्धे तमसि अन्धत्वापादके दृष्ट्याच्छादके अन्धकारे प्रासर्पत् प्रावर्तत । स च तमोनिरोधकं तेज ऐच्छत् अकामयत । स च कामयमानः एतं ज्योतिराख्यं यज्ञमभ्यपद्यत अभिप्राप्नोत् । ततोऽनन्तरं तस्मै प्रजापतये व्यौच्छत् तमोऽपागच्छत् । तस्मात् व्युष्टिर्विवासन तमसो निवृत्तिः, एतदात्मक एव एष क्रतुराह्रियते । यस्मात्तदानी ज्योतिः तमोनिवर्तकं तेजः अभवत्, तस्मादस्य ज्योतिषः ज्योतिराख्यस्य क्रतोः ज्योतिष्ट्वं ज्योतिःसंज्ञकत्वं, ज्योतिर्नाम सपन्नमित्यर्थः । एवं च 'स स्वर्गः स्यात् सर्वान्प्रत्यविशिष्टत्वात्' इति न्यायेन स्वर्गकामः एतेन ज्योतिषा एकाहेन यजेतेति विधिरुन्नेतव्यः । प्रकृतिभूतस्य ज्योतिष्टोमस्य प्रकरणादन्यत्राम्नातत्वादेतत् ज्योतिःसंज्ञ कर्मान्तरम् । यथा कुण्डपायिनामयने 'मासमग्निहोत्र जुहुति' इति मासाग्निहोत्र नित्याग्निहोत्रात् कर्मान्तर, तथेति द्रष्टव्यम् । तासा.

प्रजापतेर्वाच सर्वस्यास्य सृष्टि

**प्रजापतिर्वा इदमेक आसीत् । तस्य वागेव स्वमासीत् । वाक् द्वितीया । स ऐक्षत । इमामेव वाचं विसृजै । इयं वा इदं सर्वं विभवन्त्येष्यतीति । स वाचं व्यसृजत । सेदं सर्वं विभवन्त्यैत् । सोर्ध्वोदातनोत् । यथाऽपां धारा संततैवम् । तस्याः एति तृतीयमच्छिनत् । तद्भूमिरभवत् । अभूदिव वा इदमिति । तद्भूमेर्भूमित्वम् । केति तृतीयमच्छिनत् । तदन्तरिक्षमभवत् । अन्तरेव वा इदमिति । तदन्तरिक्षस्यान्तरिक्षत्वम् । ह्रो इति तृतीयमूर्ध्वमुदास्यत् । तत् द्यौरभवत् । अद्युतदिव वा अद इति । तद्दिवो दिवत्वम् ॥**

इद प्रतीयमानं जगत् शब्दरूपमर्थरूपं च तयोः शब्दार्थयोः सृष्टेः पुरा प्रजापतिर्वा एक आसीत् । प्रजापतिशब्देनात्र चिदेकरसरूपो मायाशक्तियुक्तः परमेश्वर उच्यते । स एवैकस्तदानीमासीत् । स एवैक आसीत् ततः स परमेश्वरः एकः स्वामी । तस्य प्रभुत्वे द्वितीया, इत्येवं स्वस्वामिरूप द्वयमासीत् । तदानी परमेश्वरः ऐक्षत मनसि विचारितवान् । कथ विचारितवानिति चेत् तदुच्यते । इमामेव मम स्वभूता द्वितीया वाचं विसृजै विविधत्वेन सृजामि । ततः इयमेव वाक् मनःसकल्पवशादिद प्रतीयमानं सर्व जगत् विभवन्ती विशेषेण भवन्तीति सर्वजगदाकारेण भासमाना सती मामेष्यति प्राप्स्यतीति स इत्थं विचार्य शब्दसामान्यरूपा वाचं व्यसृजत विविधत्वेन सृष्टवान् । ततः सा शब्दसामान्यरूपा वाक् इदं सर्वं शब्दजात विशेषेण भवन्ती प्रजापति ऐत् प्राप्नोत् । ततः सा वाक् ऊर्ध्वा मायाविशिष्टादव्यक्तादुद्गता सती स्वतस्तच्छब्दविशेषेण रूपेणोदातनोत् उत्कर्षेण समन्ताद्विस्तृताऽभवत् । तत्र दृष्टान्तः—यथा वृष्टावपां धारा मेघादुद्गता सतता भूमौ सर्वतो व्याप्ता भवति, तद्वत् वेदशास्त्रलौकिकभाषारूपेण या वाक् संतता तस्याः सकाशाद्वक्तॄणां गानभागमनपेक्ष्य तृतीय भाग स प्रजापतिरच्छिनत् पृथक्कृतवान् । स भागः 'एति' इत्युच्चार्य प्रदर्श्यते । अकार इतिशब्दपरः सन् एतीति निर्दिश्यते । अकारस्तृतीयो भाग इत्यर्थः । तदकारस्वरूपं चात्र वाक्यार्थरूपा भूमिरभवत् । तदानी प्रजापतिः स्वमनस्येवं चिन्तयामास—इद पृथिवीरूपमभूदिव वै पूर्वमविद्यमान सदिदानी विद्यमानमेवासीत् इति । एवं यस्माच्चिन्तितवान् तत् तस्मात्कारणात् अस्याः भूमेः अभूदिति व्युत्पत्त्या भूमिनाम सपन्नम् । ओमित्यस्मिन् वाग्व्यवहारे योऽयमादिरकारः सोऽय वाचकः, भूमिर्वाच्याऽभू-

(१) ताब्रा. १६।१।१. (२) ताब्रा. २०।१४।२.

दिति तात्पर्यार्थः। स प्रजापतिर्वाचः प्रसादकर तृतीयभाग सृष्ट्वा पुनः के( तीती )त्यन्त तृतीयभागमच्छिनत् पृथक् कृतवान्। तत् कशब्दरूपवाचक भूत्वा पुनर्वाच्यमन्तरिक्षमभवत्। तदानी प्रजापतिरेष चिन्तितवान्—इद प्रतीयमानं अन्तरिक्षाख्यमन्तरा द्यावापृथिव्योर्मध्ये इव वै स्थितमेवेत्यर्थः। यस्मादेव चिन्तितवान् तत् तस्मादन्तरिक्षलोकस्यान्तरवस्थितमिति व्युत्पत्त्या अन्तरिक्षनाम संपन्नम्। तस्मिन्नाम्नि षकारात् पूर्वं कोऽस्ति, तस्मादसावन्तरिक्षवाचक इत्यभिप्रायः। भूम्यन्तरिक्षवाचकाव-(धार?) कशब्दौ निर्माय तदपेक्षया तृतीय वाचो भाग हो इति शब्दमूर्ध्वमुदास्यत् ऊर्ध्वदेशमुद्दिश्य तद्वाचकत्वेन उत्कर्षेण प्रक्षिप्तवान् उच्चारितवानित्यर्थः। तदुच्चारणं हो इति शब्दरूपमूर्ध्वदेशवाचक भूत्वा द्यौरभवत्। तदा प्रजापतिरेवं चिन्तितवान्—अहो द्युलोकरूप वस्तु अद्युतदिव चन्द्रसूर्यादिप्रकाशो (शात्?) द्योतमानमेवेति। यस्मादेवं तस्मात् द्युलोकस्य दिवत्व द्युनामकत्वं संपन्नम्। तासा.

प्रजापतेः पुरुषरूपात् देववेदचातुर्वर्ण्यपशूना सृष्टि.

प्रजापतिर्वा वेदमग्र आसीत्। जनो ह वै प्रजापतिर्देवता। सोऽकामयत बहु स्यां प्रजायेय भूमानं गच्छेयमिति। स शीर्षत एव मुखतस्त्रिवृतं स्तोममसृजत गायत्रीं छन्दो रथन्तरं सामाग्निं देवतां ब्राह्मणं मनुष्यमजं पशुम्। तस्माद्ब्राह्मणो गायत्रीछन्दा आग्नेयो देवतया। तस्मादु मुखं प्रजानाम्। मुखाद्ध्येनमसृजत। सोऽकामयत प्रैव जायेयेति। स बाहुभ्यामेवोरसः पञ्चदशं स्तोममसृजत त्रिष्टुभं छन्दो बृहत्सामेन्द्रं देवतां राजन्यं मनुष्यमश्वं पशुम्। तस्माद्राजन्यस्त्रिष्टुप्छन्दा ऐन्द्रो देवतया। तस्मादु बाहुभ्यां वीर्यं करोति। बाहुभ्यां ह्येनमुरसो वीर्यादसृजत। सोऽकामयत प्रैव जायेयेति॥

स उदरादेव मध्यतः सप्तदशं स्तोममसृजत जगतीं छन्दो वामदेव्यं साम विश्वान्देवान् देवतां वैश्यं मनुष्यं गां पशुम्। तस्माद्वैश्यो जगतीछन्दा वैश्वदेवो देवतया। तस्मादु प्रजनिष्णुः। उदराद्ध्येनं प्रजननादसृजत। सोऽकामयत प्रैव जायेयेति। स पद्भ्यामेव प्रतिष्ठाया एकविंशं स्तोममसृजतानुष्टुभं छन्दो यज्ञायज्ञीयं साम न कां चन देवतां शूद्रं मनुष्यमविं पशुम्। तस्माच्छूद्रोऽनुष्टुप्छन्दा वेश्मपतिदेवः। तस्मादु पादावनेज्येनैव जिजीविषति। पद्भ्यां ह्येनं प्रतिष्ठाया असृजत। एतया वै सृष्ट्या प्रजापतिः प्रजा असृजत। स य एतदेवं वेद भूमानमेव प्रजया पशुभिर्गच्छति। तस्माद्धैतं यज्ञं भूयिष्ठं प्रशंसन्ति यदग्निष्टोमम्। प्रजापतियज्ञो ह्येषः॥

प्रजापते त्रैलोक्यादिव्याहृत्यन्ता सृष्टिः

अथ प्रजापतिः प्राजिजनिषत। स तपोऽतप्यत। स ऐक्षत। हन्त नु प्रतिष्ठां जनये। ततो याः प्रजाः स्रक्ष्ये तामेतदेव प्रतिष्ठास्यन्ति। नाप्रतिष्ठिताश्चरन्तीः प्रदार्ष्यन्त इति। स इमं लोकमजनयदन्तरिक्षलोकममुं लोकमिति। तानिमांस्त्रीन् लोकान् जनयित्वाऽभ्यश्राम्यत्। तान्समतपत्। तेभ्यः संतप्तेभ्यस्त्रीणि शुक्राण्युदायन्नग्निः पृथिव्या वायुरन्तरिक्षादादित्यो दिवः। स एतानि शुक्राणि पुनरभ्येवातपत्। तेभ्यः संतप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्नृग्वेद एवाग्नेर्यजुर्वेदो वायोः सामवेद आदित्यात्। स एतानि शुक्राणि पुनरभ्येवातपत्। तेभ्यः संतप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्भूरित्येवर्ग्वेदाद्भुव इति यजुर्वेदात्स्वरिति सामवेदात्। तद्ध वै त्रय्यै विद्यायै शुक्रम्। एतावदिदं सर्वम्। स यो वै त्रयीं विद्यां विदुषो लोकः सोऽस्य लोको भवति य एवं वेद॥

प्रजापते पृथिव्या उत्पत्तिः

आपो वा इदमग्रे सलिलमासीत्। तेन प्रजापतिरश्राम्यत्। कथमिद॰ स्यादिति। सोऽपश्यत्पुष्करपर्णं तिष्ठत्। सोऽमन्यत। अस्ति वै तत्। यस्मिन्निदमधितिष्ठतीति। स वराहो रूपं कृत्वोपन्यमज्जत्। स पृथिवीमध आर्च्छत्। तस्या

(१) जैब्रा. १।६८.
(२) जैब्रा. १।६९.
(१) जैब्रा. १।३५७.
(२) तैब्रा. १।१।३।५-७.

**उपहत्योदमज्जत्। तत्पुष्करपर्णेऽप्रथयत्। यदप्रथयत्। तत्पृथिव्यै पृथिवित्वम् ॥**

इदमिदानीं दृश्यमान गिरिनदीसमुद्रादिक स्थावर मनुष्यगवादिक जङ्गमं च सृष्टेः पूर्वमीदृश नाऽऽसीत्। किं तु सलिलरूपमासीत्। इद दृश्यमान जगत्सलिल कारणेन सगतमविभागापन्नम्। यद्वा ‘इमे वै लोकाः सरिरम्’ इति श्रुतेः सरिरशब्देन लोका उच्यन्ते। रलयोरभेदात्सलिलरूपमासीत्। तत्रापि आप एव न तु भूमिस्वरूपम्। तदानीं प्रजापतिस्तेन सिसृक्षितजगन्निमित्तेनाश्राम्यत् पर्यालोचनरूप तपोऽकुरुत कथ नामेद सर्व जगद्भवेदिति। विचार्य च तस्य सलिलस्य मध्ये दीर्घनालाग्रेऽवस्थितमेक पद्मपत्रमपश्यत्। तच्च दृष्ट्वा मनस्येवमतर्कयत्—यस्मिन्नाधारे इद सनाल पद्मपत्रमधिश्रित्य तिष्ठति, तद्वस्तु किंचिदधस्तादस्त्येवेति। तर्कयित्वा च स प्रजापतिर्वराहो भूत्वा तदीय रूप च सम्यक्कृत्वा तस्य पद्मपत्रनालस्य समीपे जलमध्ये निमग्नोऽभूत्। मग्नश्चासावधस्ताद्भूमिं प्राप्तवान्। तस्याः भूमेः सकाशात्कियतीमार्द्रां मृद स्वदंष्ट्र्या पृथक्कृत्य सलिलस्योपर्युन्मज्जन कृतवान्। तच्च मृद्रूप तस्मिन्पुष्करपर्णे प्रसारितवान्। यस्मादियं मृत्तिका प्रथिता तस्मात्पृथिवीनाम सपन्नम्। तैब्रासा.

आदिभूतसलिले नक्षत्राणामाविर्भावः

**सलिलं वा इदमन्तरासीत्। यदतरन्। तत्तारकाणां तारकत्वम्। यो वा इह यजते। अमुं स लोकं नक्षते। तन्नक्षत्राणां नक्षत्रत्वम्। देवगृहा वै नक्षत्राणि। य एवं वेद। गृह्येव भवति ॥**

द्यावापृथिव्योरन्तर्मध्ये यदिद स्थावरजङ्गमात्मकं जगत् दृश्यते तत्सर्व पुरा प्रलयकाले सलिलमेवासीत्। तदानीं कृत्तिकाद्याः सलिलं तीर्त्वा लोकान्तरेषु गताः। तस्मात्तरन्तीति व्युत्पत्त्या तारकत्वं संपन्नम्। यो यजमानः इह नक्षत्रयुक्ते काले याग करोति स यजमानः अमुं स्वर्ग लोकं नक्षते प्राप्नोति। किंच देवतागृहसदृशान्येतानि नक्षत्राणि। यथा मनुष्या गृहेषु दीपप्रकाशेन व्यवहरन्त्येवं देवा नक्षत्रप्रकाशेन व्यवहरन्ति। अतः प्रशस्तानि नक्षत्राणि। एव वेदिता प्रशस्तगृहो बहुगृहो वा भवति। तैब्रासा.

**यानि वा इमानि पृथिव्याश्चित्राणि। तानि नक्षत्राणि। तस्मादश्लीलनाम५ श्चित्रे। नावस्येन्न यजेत। यथा पापाहे कुरुते। तादृगेव तत् ॥**

पृथिव्याः सबन्धीनि चित्राणि विविधानि ग्रामनगरादीनि स्थानानि यानि सन्ति तानि नक्षत्रसदृशानि। यथा द्युलोके नक्षत्राणि विविधान्युपकारकाणि च दृश्यन्ते तद्वद्ग्रामादीन्यपि। तस्मात् भूसंबन्धिचित्ररूप यत्स्थानमश्लीलनामक प्रतिकूलनक्षत्रसदृशं निन्दितं स्थानं म्लेच्छजनभूयिष्ठ तस्मिन्नश्लीलनाम्नि ग्रामे निवास यागाद्यनुष्ठानं च न कुर्यात्। यथा पापाहे निषिद्धदिने कृतं नोपकारकं तथा निषिद्धदेशेऽपि कृत तादृशमेव भवति। तैब्रासा.

प्रजापतेर्नामरूपयोः सृष्टिः तस्याः प्रयोजनं इन्द्रजन्म च

**प्रजापतिः प्रजा असृजत। ताः सृष्टाः समश्लिष्यन्। ता रूपेणानु प्राविशत्। तस्मादाहुः। रूपं वै प्रजापतिरिति। ता नाम्नाऽनु प्राविशत्। तस्मादाहुः। नाम वै प्रजापतिरिति। तस्मादप्यामित्रौ संगत्य। नाम्ना चेद्ध्वयेते। मित्रमेव भवतः ॥**

प्रजापतिना याः प्रजाः सृष्टास्ताः सर्वाः संश्लिष्टा अभवन्। रूपविशेषस्य नामविशेषस्य चासृष्टत्वादेकविधैव भूत्वा देवोऽय मनुष्योऽयं पशुरयमित्येव विशेषव्यवहारयोग्या नाभूवन्। तदा प्रजापतिर्विचार्य स्वयमेव रूपविशेषाकारेण नामविशेषाकारेण तासु प्रजासु प्रविष्टः। अत एव शास्त्रज्ञा नामरूपयोः सर्ववस्तुव्याप्तिं दृष्ट्वा प्रजापत्यात्मकत्व तयोराहुः। यस्मान्नाम प्रजापतिरेव तस्मात्पूर्वममित्रावपि द्वौ पुरुषौ कदाचिन्मार्गे ग्रामान्तरे वा सगत्य भो देवदत्त भो यज्ञदत्तेत्येवं तत्तन्नाम्ना परस्परमाह्वयेते चेत्तदानीमेव मित्रौ (त्रे) भवतः। प्रजापतेः सर्वभित्रत्वेन तदात्मकस्य नाम्नो मित्रत्वसपादकत्व युक्तम्। अत एव लौकिकाः साप्तपदीन सख्यमित्याहुः। तैब्रासा.

(१) तैब्रा. १।५।२।५–६

(१) तैब्रा. २।२।७।१–२.

प्रजापतिर्देवासुरानसृजत । स इन्द्रमपि नासृजत । तं देवा अब्रुवन् । इन्द्रं नो जनयेति । स आत्मन्निन्द्रमपश्यत् । तमसृजत ॥

नामरूपसृष्टिमुक्त्वा विशेषाकारेण इन्द्रसृष्टिमाह—यदा देवानसुरांश्चासृजत तदा प्रजापतिर्देवस्वामिनमिन्द्र अपिशब्दादसुरस्वामिन च नासृजत । ततो देवैः प्रार्थितः स्वात्मन्येवावस्थितमिन्द्रं दृष्ट्वा तं बहिरसृजत । तैब्रासा.

असतः तप संयुक्तादेव सृष्टि·

इदं वा अग्रे नैव किंचनाऽऽसीत् । न द्यौरासीत् । न पृथिवी । नान्तरिक्षम् । तदसदेव सन्मनोऽकुरुत स्यामिति । तदतप्यत । तस्मात्तेपानाद्धूमोऽजायत । तद्भूयोऽतप्यत । तस्मात्तेपानादग्निरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानाज्ज्योतिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानादर्चिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानान्मरीचयोऽजायन्त । तद्भूयोऽतप्यत । तस्मात्तेपानादुदारा अजायन्त । तद्भूयोऽतप्यत । तदभ्रमिव समहन्यत ॥

अथ होतृमन्त्रोत्पत्तिकथनप्रसङ्गेन जगत्सृष्टिर्नवमेऽभिधीयते—इद वेति । यदिद स्थावरजङ्गमरूप भूलोकादिरूप च जगदिदानी दृश्यते तत् किमपि सृष्टेः पूर्व नैव आसीत् । तत्तादृशमसद्रूपमेव वर्तमान सद्रूपता प्राप्नुयामित्येतादृश मनोऽकुरुत । तथा चोपनिषदि पूर्वमसद्रूपं पश्चात्सद्रूपतोत्पत्तिश्च विस्पष्टमाम्नायते—'असद्वा इदमग्र आसीत् । ततो वै सदजायत' (तैउ. २।७) इति । अत्रासच्छब्देन न शशविषाणादिसमान शून्यत्वं विवक्षितम् । किं तर्हि, अनभिव्यक्तनामरूपत्वम् । अत एव वाजसनेयिनः समामनन्ति—' तद्धेद तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत' ( बृउ. १।४।७ ) इति । भूमिराप इत्यादिक नाम । काठिन्यद्रवादिकं रूपम् । तत्तद्भूत (स्य भूत)-त्रयाकारेण विस्पष्टमासमन्तान्निष्पादन व्याकरणम् । तद्रहितत्वेनाविस्पष्टदशापन्नत्वमव्याकृतत्वम् । तदेवं मनुना स्मर्यते—'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेय प्रसुप्तमिव सर्वतः ॥ ' (मस्मृ. १।५ ) इति । शून्यत्वविवक्षायां छन्दोगश्रुतिर्विरुध्येत । छन्दोगा ह्येवमामनन्ति—' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' ( छाउ. ६।२।१ ) इति । पुनरपि ' तद्धैक आहुरसदेवेदमग्र आसीत् ' इति शून्यत्वपक्षमुपन्यस्य तन्निराकरणमेवमामनन्ति—' कुतस्तु खलु सोम्येदं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' इति । ऐतरेयिणस्त्वधीयते—'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत् ' ( ऐउ. १।१ ) इति । तस्मान्नैव किंचन आसीदित्ययं निषेधः परमात्मनिर्मितनामरूपात्मकजगद्विषयो न तु कृत्स्नविषयः । नामरूपरहितत्वेनासच्छब्दवाच्यं सदेवावस्थितं परमात्मतत्त्व स्वात्मन्यन्तर्हितप्राणिकर्मप्रेरितं सत् नामरूपाकारेणाऽऽविर्भवेयमिति पर्यालोचनरूप मनोऽकुरुत । यथा गाढनिद्रा प्राप्तस्य पुरुषस्य कर्मफलभोगाय प्रबोध उत्पद्यते तथा सर्वान्प्राणिनः स्वस्वकर्मफलं भोजयितुमीदृशो विचारः परमात्मनः प्रादुरभूत् । तथाविधविचारयुक्तं तत्परमात्मतत्त्वरूप नामरूपसृष्टिसाधनरूपं तपोऽकुरुत । नात्र तपः कृच्छ्रचान्द्रायणादिरूपम् । किंतु स्रष्टव्यपदार्थविशेषविषयं पर्यालोचनम् । अत एवाथर्वणिका आमनन्ति—' यः सर्वज्ञः सर्वविद्यस्य ज्ञानमय तपः' ( मुउ. १।१।९) इति । कृच्छ्रादिरूपत्वाभावादशरीरस्यापि सर्वशक्तियुक्तस्य पर्यालोचनमुपपन्नम् । तादृशीं शक्तिं च श्वेताश्वतरा आमनन्ति—' पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ' ( श्वेउ. ६।८ ) इति । तच्छक्तिवशादेवेन्द्रियनिरपेक्षव्यवहार चात एवाऽऽमनन्ति – ' अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ' ( श्वेउ. ३।१९ ) इति । तस्मादचिन्त्यशक्तिपरमेश्वरस्य लीलाविशेषो यथावचनमवबोद्धव्यः । वचन चात्राऽऽरण्यके आम्नायते—' स तं मणिमविन्दत् । सोऽनङ्गुलिरावयत् । सोऽग्रीवः प्रत्यमुञ्चत् ' ( तैआ. १।११।६ ) इति । तेन मानसं तपः कृतवानित्यर्थः । तादृशात्तस्मात्परमेश्वरात्स्वसंकल्पानुसारेण कश्चिद्धूम उदपद्यत । एवमग्न्यादयोऽपि सकल्पादुत्पन्नाः । अग्निरङ्गारवान् । ज्योतिरङ्गारनिष्ठप्रकाशः । अर्चिर्ज्वाला । मरीचयः सर्वत्र प्रसृतप्रभाद्रव्यम् । उदाराः उल्बणज्वालाः । तत्सर्व धूमज्वालादिकं संघातरूपं कठिनमभूत् । यथा ' धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः '

(१) तैब्रा. २।२।९।१-१०.

इति तद्वत् । तच्च घनीभूतं वस्तु परमात्मनो बस्तिस्थानमासीत् । बस्तिशब्दार्थश्च आत्रेयैर्दर्शितः– 'मूत्राशयो धनुर्वक्रो बस्तिरित्याभिधीयते ' इति । तैब्रासा.

**तद्बस्तिमभिनत् । स समुद्रोऽभवत् । तस्मात्समुद्रस्य न पिबन्ति । प्रजननमिव हि मन्यन्ते । तस्मात्पशोर्जायमानादापः पुरस्ताद्यन्ति ॥**

अथ समुद्रोत्पत्तिं दर्शयति–तदिति । यदेतत्समुद्रपर्यन्तस्य वस्तुनः स्रष्टुः परमात्मनो रूप बस्तिस्थानीय, तस्य भेदमकरोत् । परितो मूत्राशये पूर्णे सति यथा लोके मेहनद्वारात् मुञ्चति तद्वत् । स च प्रभिन्नबस्तिगतो जलसघः समुद्ररूपेण प्रादुरभूत् । यस्मात्समुद्रस्य जल प्रजननमिव गर्भाशयगतमुदकमिवास्पृश्य मन्यन्ते, तस्माच्छिष्टाः समुद्रस्य जल न पिबन्ति । यस्मादस्ति प्रजनने गर्भाशये जल तस्माल्लोके जायमानात्पशोः पुरस्तादाप एव निर्गच्छन्ति । तैब्रासा.

**तद्दशहोताऽन्वसृज्यत । प्रजापतिर्वै दशहोता ॥**

ततस्तत्समुद्रपर्यन्त सृष्ट जगत्तत्पश्चात् 'चित्तिः स्रुक्' इत्यादिर्दशहोताऽसृज्यत । तन्मन्त्रप्रतिपाद्याकारयुक्तप्रजापतिरेवात्र दशहोता । तैब्रासा.

**य एवं तपसो वीर्यं विद्वाꣳस्तप्यते । भवत्येव ॥**

यथोक्तस्य परमात्मतपसो वेदन प्रशसति–य इति । पूर्वोक्तस्य तपसः सामर्थ्यं विद्वान्यः स्वयं तपः करोति सोऽयमैश्वर्यं प्राप्नोत्येव । तैब्रासा.

आदिसलिलस्थप्रथमजप्रजापते अहोरात्रान्ता सृष्टिः

**तद्वा इदमापः सलिलमासीत् । सोऽरोदीत्प्रजापतिः । स कस्मा अज्ञि । यद्यस्या अप्रतिष्ठाया इति । यदप्स्ववापद्यत । सा पृथिव्यभवत् । यद्व्यमृष्ट । तदन्तरिक्षमभवत् । यदूर्ध्वमुदमृष्ट । सा द्यौरभवत् । यदरोदीत् । तदनयो रोदस्त्वम् । य एवं वेद । नास्य गृहे रुदन्ति । एतद्वा एषां लोकानां जन्म । य एवमेषां लोकानां जन्म वेद । नैषु लोकेष्वार्तिमार्च्छति । स इमां प्रतिष्ठामविन्दत ॥**

अथ लोकत्रयसृष्टिं दर्शयति– तदिद परमात्मना सृष्टं जगत् समुद्ररूपेण सलिलमासीत् । तस्मिन्सलिले पृथिवीमिश्रण वारयितुमाप इत्युक्तम् । केवल जलमेव आसीदित्यर्थः । तदिद निरन्तर जलं दृष्ट्वा दशहोतृरूपः स प्रजापतिररोदीत् । रुदतस्तस्यायमभिप्रायः– यद्यहमप्रतिष्ठाया अवस्थातुमयोग्याया अविद्यमानायाः अस्याः पृथिव्याः सकाशात्किमपि प्राणिजात स्रष्टु न शक्नोमि तर्हि तादृशः सोऽह कस्मा अज्ञि किमर्थमुत्पादितोऽस्मीति । रुदतस्तस्य यन्नेत्रजलादिक समुद्ररूपास्वप्सु पतित तत् घनीभूत पृथिव्यभवत् । तस्याः पृथिव्या उपर्युच्चावचभाव वारयितु विविध मार्जन कृतवान् । तच्च सृष्टं स्थानमन्तरिक्षमभूत् । ततो हस्तमूर्ध्व प्रसार्य यत्स्थानममृष्ट सा द्यौरभवत् । यस्मात्प्रजापतिररोदीत्तेन च रोदनेन द्यावापृथिव्यावुत्पन्नौ, तस्माद्रोदःशब्दाभिधेयत्व तयोः सपन्नम् । त प्रकार वेदितुः गृहे बन्धुमरणाभावान्न केऽपि रुदन्ति । योऽय लोकत्रयजन्मप्रकारं वेद तद्वेत्ता लोकत्रये नाश न प्राप्नोति । स प्रजापतिरिमा पृथिवी प्रतिष्ठा स्रक्ष्यमाणप्राण्याधारभूतामलभत । तैब्रासा.

**स इमां प्रतिष्ठां वित्त्वाऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स जघनादसुरानसृजत । तेभ्यो मृन्मये पात्रेऽन्नमदुहत् । याऽस्य सा तनूरासीत् । तामपाहत । सा तमिस्राऽभवत् ॥**

अथ तस्यां पृथिव्यामसुरसृष्टिं दर्शयति– स इति । प्रजापतिरिमां भूमि स्रक्ष्यमाणप्राण्याधारयोग्या लब्ध्वा प्रजोत्पादन कामयमानस्तदुपायपर्यालोचनरूप तपः कृत्वा स्वयमेव देहान्तरेण गर्भवानभूत् । तस्य गर्भयुक्तस्य जघनभागादसुरानसृजत । तेभ्यः कस्मिंश्चिन्मृत्पात्रे भोजनार्थमन्न प्रक्षिप्य दत्तवान् । ततोऽसुराणामुत्पादिका या स्वकीया तनूस्ता विनाशितवन्न् । सा तनूः शरीराकार परित्यज्य तमोयुक्ता रात्रिरभवत् । तैब्रासा.

**सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स प्रजननादेव प्रजा असृजत । तस्मादिमा भूयिष्ठाः । प्रजननाद्ध्येना असृजत । ताभ्यो दारुमये पात्रे पयोऽदुहत् । याऽस्य सा तनूरासीत् । तामपाहत । सा जोत्स्नाऽभवत् ॥**

अथ मनुष्यादिसृष्टिं दर्शयति–स इति । प्रजननात्प्रजोत्पादनसमर्थात् द्वारात् । हि यस्मादुत्पादनसामर्थ्यं कारण तस्मात्प्रजाः अत्यन्तबहुलाः । ज्योत्स्ना चन्द्रप्रकाशः । अन्यत्पूर्ववद्व्याख्येयम् । तैब्रासा.

**सोऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स उपपक्षाभ्यामेवर्तूनसृजत। तेभ्यो रजते पात्रे घृतमदुहत्। याऽस्य सा तनूरासीत्। तामपाहत। सोऽहोरात्रयोः संधिरभवत्॥**

अथ वसन्तादिकालाभिमानिपुरुषस्य सृष्टिं दर्शयति—स इति। पूर्ववद्व्याख्येयम्। तैब्रासा.

**सोऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स मुखाद्देवानसृजत। तेभ्यो हरिते पात्रे सोममदुहत्। याऽस्य सा तनूरासीत्। तामपाहत। तदहरभवत्॥**

अथ देवसृष्टिं दर्शयति—स इति। पूर्ववद्व्याख्येयम्। तैब्रासा.

**एते वै प्रजापतेर्दोहाः। य एवं वेद। दुह एव प्रजाः॥**

अथोक्तानां अन्नपयोघृतसोमानां वेदनं प्रशंसति—एते वै इति। गोभ्यः क्षीरमिव प्रजाभ्यो धनं लभते इत्यर्थः। तैब्रासा.

**दिवा वै नोऽभूदिति। तद्देवानां देवत्वम्। य एवं देवानां देवत्वं वेद। देववानेव भवति॥**

देवतावेदनं प्रशंसति—दिवेति। देवानामुत्पादिका या प्रजापतेस्तनूः सेयमहोरूपेण निष्पन्ना। अतो देवा हर्षादस्माकं दिवैवाभूदित्युच्चारितवन्तः। अतो दिवायोगेन देवत्वं संपन्नम्। तद्वेदिता देववान् प्रकाशवान् भवति। तैब्रासा.

**एतद्वा अहोरात्राणां जन्म। य एवमहोरात्राणां जन्म वेद। नाहोरात्रेष्वार्तिमार्च्छति॥**

त(य)देतद्देवासुरोत्पादकतनूभ्या अहोरात्रयोर्जन्म, तस्य वेदनं प्रशंसति—एतद्वेति। तैब्रासा.

सृष्ट्यादौ प्रथमं असत्, असत. मनः, मनसः प्रजापतिः, प्रजापतेः प्रजा.

**असतोऽधि मनोऽसृज्यत। मनः प्रजापतिमसृजत। प्रजापतिः प्रजा असृजत। तद्वा इदं मनस्येव परमं प्रतिष्ठितम्। यदिदं किंच। तदेतच्छ्वोवस्यसं नाम ब्रह्म॥**

'तदसदेव सन्मनोऽकुरुत स्यामिति'(तैब्रा. २।२।९।१) इति प्रथमभावि परमात्मनो यन्मनः पूर्वमुक्तं तदेतन्मनः प्रशंसति—असत इति। यत्किंचिदिदं जगदिदानीं दृश्यते तदिदं सर्वं मूलकारणे परमात्ममनस्येव सम्यक् प्रतिष्ठितम्। सत्सङ्कल्पाधीना असतः सृष्टिस्थितिप्रलयाः। तदेतत्सकल्पितार्थं मनः श्वोवस्यसनामकं ब्रह्म। यदुत्तरोत्तरदिने वसीयः अतिशयेन श्रेष्ठं श्वोवस्यसम्। द्विविधं हि ब्रह्म। 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवलक्षणं सजातीयविजातीयस्वगतभेदरहितत्वान्निजस्वरूपमात्रे पर्यवसितं सर्वजनैकरूपमेकं ब्रह्म। अत एव तदेतच्छ्वोवस्यसं न भवति। निर्विकारत्वेन तस्य स्रष्टृत्वाभावात्। तदेव सर्वसृष्टिगोचरशक्तियुक्तं सत् सोपाधिकत्वेनान्यद्ब्रह्म भवति। सकल्पपरम्परया प्रतिक्षणमुत्तरोत्तराधिकजगत्स्रष्टृत्वादीदृग्ब्रह्मरूपत्वान्मनः प्रशस्तम्। तैब्रासा.

**व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी व्युच्छति। प्रजायते प्रजया पशुभिः। प्र परमेष्ठिनो मात्रामाप्नोति। य एवं वेद॥**

तदेतद्वृत्तान्तवेदनं प्रशंसति—व्युच्छन्ती इति। यथोक्तं ब्रह्म सृष्टिप्रकारं विदित्वोपास्ते अस्मै वेदित्रे प्रतिदिनं प्रभातं कुर्वती देवता पुनरधिकश्रेयस्करा सती प्रभातं करोति। दिनेदिने श्रेयो वर्धते इत्यर्थः। इह लोके प्रजापशुसंपन्नः परलोके परमेष्ठिनः प्रजापतेरैश्वर्यस्य या मात्रा परिच्छित्तिः तां सर्वामपि प्राप्नोति। तैब्रासा.

सृष्ट्यादौ असत्, सप्तप्राणात्मकं इन्द्राख्यमध्यमप्राणसहितं, ततः सप्त पुरुषा जाताः, ततः एकः पुरुषः प्रजापतिः चयनाग्निरूपः, ततः त्रयी ब्रह्म आपश्च, ततः अप्सु अण्डं, अण्डादग्निः अश्वः रासभश्च, तथा तस्मादेवाण्डात् पृथिवी अग्न्यात्मिका जलसहिता, तस्मिन्नेव जले फेनः, फेनादेव मृदादयो नव सृष्टयः

**असद्वा इदमग्र आसीत्। तदाहुः किं तदसदासीदिति। ऋषयो वाव तेऽग्रेऽसदासीत्। तदाहुः के ते ऋषय इति। प्राणा वा ऋषयः। ते यत्पुराऽस्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसाऽऽरिषन्। तस्मादृषयः॥ १ ॥**

हिरण्यगर्भकर्तृकैव सृष्टिराम्नाता—असद्वा इदमग्र आसीदिति। अग्रे प्रपञ्चसृष्टेः पुरा इदं जगत् असत्

(१) शब्रा. ६।१।१।१–१५.

अव्यक्तनामरूप आसीत् । श्रुतिः स्वयमेव ब्रह्मवादिविचारमुखेन असदर्थं निरूपयति–तदाहुः किं तदसदासीदिति । तत् तदानीं किं असत् आसीत् इति इदानींतनाना ब्रह्मवादिना विचारः । अग्रे सृष्टेः पुरा असत् ते प्रसिद्धाः ऋषयो वाव ऋषय एव आसीत् । ऋषिशब्दार्थं प्रश्नोत्तराभ्यामाह–तदाहुः के त ऋषय इतीति । ऋषयः प्राणा वै अतः सृष्टेरग्रे एव असत् आसन् । केवललिङ्गशरीरमेवासीदित्यर्थः । प्राणानामृषिशब्दवाच्यत्वे प्रवृत्तिनिमित्त दर्शयति–ते यत्पुरेति । यत् यस्मात् कारणात् अस्मात् जगतः पुरा इद स्वसेव्य जगत् इच्छन्तः श्रमेण तपसा तपोरूपेण क्लेशेन पर्यालोचनेन आरिषन् आर्षन् । तस्मादृषय इत्युच्यन्ते । 'ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः' (नि २।३।३) इति हि यास्कः । शब्रासा.

**स योऽयं मध्ये प्राणः एष एवेन्द्रः । तानेष प्राणान्मध्यत इन्द्रियेणैन्द्ध । यदैन्द्ध तस्मादिन्धः । इन्धो ह वै तमिन्द्र इत्याचक्षते परोक्षम् । परोक्षकामा हि देवाः । त इद्धाः सप्त नाना पुरुषानसृजन्त ॥ २ ॥**

मध्यमप्राणस्य सर्वेन्द्रियपोषणद्वारा इन्द्रशब्दवाच्यत्वमाह–स योऽयमिति । एतेषा प्राणाना मध्ये यः प्राणः एष एव इन्द्रः इत्युच्यते । तत्र प्रवृत्तिनिमित्तप्रदर्शनम्–तानेष प्राणान्मध्यत इति । मध्यप्रदेशे स्थितः प्राणः इन्द्रियेण इन्द्रशब्दवाच्येन स्वबलेन ऐन्ध स्वबलप्रकाशेन स्वस्वव्यापारसमर्थानकरोदित्यर्थः । तस्मात् इन्धनसबन्धात् इन्द्र इति उच्यते देवाना परोक्षनामप्रियत्वात् । प्राणस्य हि वागादीन्द्रियेषु स्वाशसद्भावः । एतस्यैव पोषकत्व चान्यत्राम्नातम्—'या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि । या च मनसि सतता शिवा ता कुरु मोत्क्रमीः ॥' (प्रउ. २।१२) इति । त इद्धाः प्राणाः सप्त नाना नानाविधान् पुरुषान् शरीराणि स्वाश्रयत्वेन असृजन्त । शब्रासा.

**तेऽब्रुवन् । न वा इत्थं सन्तः शक्ष्यामः प्रजनयितुम् । इमान्त्सप्तपुरुषानेकं पुरुषं करवामेति । त एतान्त्सप्त पुरुषानेकं पुरुषमकुर्वन् । यदूर्ध्वं नाभेस्तौ द्वौ समौब्जन् । यदवाङ् नाभेस्तौ द्वौ । पक्षः पुरुषः । पक्षः पुरुषः । प्रतिष्ठैक आसीत् ॥ ३ ॥**

तेऽब्रुवन्निति । ते ऋषयः एकैकस्वस्वाश्रयप्रधानानि सप्तशरीराणि सृष्ट्वा परस्पर अब्रुवन् । इत्थ एकैकप्रधानशरीराः सन्तः इद स्थूल जगदुत्पादयितु न शक्ष्यामः न समर्था भवामः । अवचनस्य वचनव्यापाराभावात् । अचक्षुषो दर्शनाभावात् । एवमिन्द्रियाणा प्रतिनियतव्यापारत्वाद्भिन्नशरीरत्वे कर्मकर्तृत्व नोपपद्यते इति । अतः एक पुरुष सर्वेन्द्रियाश्रयं करवामेति समालोच्य एतान् सप्त पुरुषान् एक एव पुरुषं अकुर्वन् अकार्षुः । एकस्मिन् पुरुषे सप्तपुरुषसनिवेश दर्शयति—यदूर्ध्वमिति । नाभेरूर्ध्वं यत् अस्ति तत्र द्वौ पुरुषौ समौब्जन् अर्जितवन्तः स्थापितवन्तः । नाभेः अवाङ् अधस्तन, तत्र द्वौ पुरुषौ समौब्जन् । इति मध्ये देहे चत्वारः पुरुषाः सपन्नाः । द्वौ पुरुषौ दक्षिणोत्तरपक्षौ सपन्नौ । एकः पुरुषः प्रतिष्ठा पुच्छमासीत् । एव सप्तभिः पुरुषैः शिरोवर्जितस्य एकपुरुषस्य निष्पादनम् । शब्रासा.

**अथ यैतेषां सप्तानां पुरुषाणां श्रीः यो रस आसीत् तमूर्ध्वं समुदौहन् । तदस्य शिरोऽभवत् । यच्छ्रियं समुदौहंस्तस्माच्छिरः । तस्मिन्नेतस्मिन् प्राणा अश्रयन्त । तस्माद्वेवैतच्छिरः । अथ यत्प्राणा अश्रयन्त तस्मादु प्राणाः श्रियः । अथ यत्सर्वस्मिन्नश्रयन्त तस्मादु शरीरम् ॥ ४ ॥**

शिरसो जनन दर्शयति–अथ यैतेषामिति । एतेषां पुरुषाणा श्रीः श्रीभूतः यः रसः सारः आसीत् तं ऊर्ध्वं उपरिभागे समुदौहन् समुदितमकार्षुः । स एकीभूतः सारः अस्य पुरुषस्य शिरः अभवत् । तस्मात् श्रीसमुदूहनात् शिरःइतिशब्दनिष्पत्तिः । प्रकारान्तरेण शिरःशब्दनिर्वचनमाह–तस्मिन्निति । तस्मिन् श्रीसमुदूहनेन निष्पादिते शिरसि प्राणाः चक्षुरादीन्द्रियाणि अश्रयन्त श्रितानि । तस्मात् प्राणसश्रयणात् शिरः इत्युच्यते । यस्माच्छिरसि प्राणा अश्रयन्त तस्मात् प्राणानामपि श्रीत्वम् । यत् यस्माच्च एतस्मिन्सर्वस्मिन्देहे ते सर्वेऽपि अश्रयन्त तस्माद्देहोऽपि शरीरं उच्यते । अत्र पूर्वोक्ताद्धेतोः शरीरशब्दव्युत्पत्तिः कार्या । शब्रासा.

**स एव पुरुषः प्रजापतिरभवत्। स यः स पुरुषः प्रजापतिरभवदयमेव सः। योऽयमग्निश्चीयते॥ ५॥**

य एव पुरुष इति। सः एषः सप्तभिः पुरुषैर्निष्पन्न एकः पुरुषः प्रजापतिः विराट् अभूत्। एव लिङ्गशरीराभिमानिहिरण्यगर्भकर्तृका विराडुत्पत्तिरुक्ता, तस्य विराजोऽग्निरूपतामाह—स यः पुरुष इति। सः प्रजापतिः एव अय चीयमानः अग्निः इत्यर्थः। शब्रासा.

**स वै सप्तपुरुषो भवति। सप्तपुरुषो ह्ययं पुरुषः। यच्चत्वार आत्मा त्रयः पक्षपुच्छानि। चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छानि। अथ यदेकेन पुरुषेणात्मानं वर्धयति तेन वीर्येणायमात्मा पक्षपुच्छान्युद्यच्छति॥ ६॥**

तदेव साम्यमाविष्करोति—स वै सप्तेति। सः चीयमानः अग्निः सप्तपुरुषसमितो भवति। हि यस्मादय पुरुषः प्रजापतिः सप्तपुरुषात्मकः। तस्य सप्तपुरुषात्मकत्वमिदानीमुक्त, तच्चीयमानाग्नावपि स्फोरयति—यच्चत्वार इत्यादिना। 'हिरण्मयः शकुनिर्ब्रह्मनाम' (तैब्रा. ३।१२।९।६) इति पक्षित्वेन निरूपणात् पुच्छशब्दव्यवहारः। चित्याग्नेः सप्तपुरुषीयपुच्छत्व दशमे वक्ष्यते (शब्रा. १०।२।२।५)। आपस्तम्बेनाप्युक्तम्—'चतुर आत्मानि पुरुषान्मिमीते पुरुष दक्षिणे पक्षे पुरुष पुच्छे पुरुषमुत्तर इति। तदु ह वै सप्तविधमेव चिन्वीत सप्तविधो वाव प्राकृतोऽग्निः' (आप. श्रौ. सू. १६।१७) इति। अथ यदेकेनेत्यादेरयमर्थः—यत् यस्मात् आत्मानं मध्यदिशं पक्षपुच्छेभ्यः पुरुषत्रयसमितेभ्योऽपि एकेन पुरुषेण वर्धयति तस्मात् अयमात्मा चतुःपुरुषसंमितत्वात् स्वेन वीर्येण पक्षपुच्छान् प्रयच्छति खलु। शब्रासा.

**अथ यश्चितेऽग्निर्निधीयते, यैवैतेषां सप्तानां पुरुषाणां श्रीः, यो रसः। तमेतदूर्ध्वं समुदूहन्ति। तदस्यैतच्छिरः। तस्मिन्नेतस्मिन्त्सर्वे देवाः श्रिताः। अत्र हि सर्वेभ्यो देवेभ्यो जुह्वति। तस्माद्वेवैतच्छिरः॥ ७॥**

एवं विराडात्मकस्य सप्तपुरुषसंमितस्य चित्याग्नेः शिरो दर्शयितुमाह—अथ यश्चितेऽग्निर्निधीयत इत्यादि। चिते ऐष्टके चितेऽग्नौ अग्निः आहवनीयो निधीयते, या वा एतेषा सप्तानां पुरुषाणा श्रीः, यः च रसः स एवायमग्निरित्यध्याहारः। एतत् अस्मिंश्चित्याग्नौ त आहवनीयं ऊर्ध्वं समुदूहन्ति। चित्याग्नेरण्डात्मकत्वात् तत्र निधीयमानस्याग्नेर्हिरण्यगर्भात्मत्वमित्यर्थः। एतच्चैतरेयिणः समामनन्ति—'एत ह्येव बह्वृचा महत्युक्थे मीमासन्ते, एतमग्नावध्वर्यवः, एत महाव्रते छन्दोगाः' (ऐआ. ३।२।३) इति। आहवनीयस्य शिरोरूपत्वमिदानीमाह—तदस्यैतच्छिर इति। अस्य चित्याग्नेः एषः आहवनीयः शिर इत्यर्थः। अत्र शिरःशब्दस्य प्रवृत्तिमाह—तस्मिन्नेतस्मिन् सर्वे देवाः श्रिता इति। तस्मिन् शिरोरूपे आहवनीये सर्वे देवाः श्रिताः। अत्र कथ देवाना श्रयण तदाह—अत्र हीति। अत्र अग्नौ सर्वेभ्यो देवेभ्यः जुह्वति। तस्मात् अग्निः श्रयणाश्रयत्वात् अस्य शिर इत्यर्थः। शब्रासा.

**सोऽयं पुरुषः प्रजापतिरकामयत भूयान्त्स्यां प्रजायेयेति। सोऽश्राम्यत्। स तपोऽतप्यत। स श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याम्। सैवास्मै प्रतिष्ठाऽभवत्। तस्मादाहुर्ब्रह्मास्य सर्वस्य प्रतिष्ठेति। तस्मादनूच्य प्रतितिष्ठति। प्रतिष्ठा ह्येषा यद्ब्रह्म। तस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यत॥ ८॥**

एव विराडुत्पत्तिं तस्यैव चित्याग्निरूपत्वं चोक्त्वा तत्कर्तृकां चयनोपयुक्तां सृष्टिमाह—सोऽयमिति। स पुरुषः प्रजापतिः एक एव सन् एवं अकामयत अहमेव भूयान् स्या भवेयमिति। भवन उत्पत्तिः अग्निना न घटते इति तदाह—प्रजायेय स्वयमेवोत्पद्यमानो भवेयम्। इति कामयित्वा सः अश्राम्यत्। स तपोऽतप्यत, कथमुत्पद्येयेति विचारितवानित्यर्थः। तपःपर्यालोचनेन सः ब्रह्मैव प्रथम सृष्टवान्। तेपानः इति तपेर्लिटः कानचि रूपम्। ब्रह्मशब्दार्थमाह — त्रयीमिति। सैव त्रयी विद्या अस्मै प्रजापतेः प्रतिष्ठा जाता। उत्तरसृष्टेरालम्बन जातमित्यर्थः। प्रतिष्ठारूपत्वमेव विशदयति—तस्मादाहुरिति। यतः सर्वस्य त्रयी विद्या प्रतिष्ठा तस्मात् त्रयी अनूच्य अधीत्य अनुष्ठाय च प्रतितिष्ठति। तस्यां प्रतिष्ठायामित्यादि स्पष्टम्। शब्रासा.

सोऽपोऽसृजत वाच एव लोकात् । वागेवास्य साऽसृज्यत । सेदं सर्वमाप्नोद्यदिदं किंच । यदाप्नोत्तस्मादापः । यदवृणोत्तस्माद्वाः ॥ ९ ॥

सोऽप इति । अथ स प्रजापतिः स्वयमेवोत्पद्य पुनः पर्यालोच्य वाचो लोकात् उच्चारकात् मुखात् अपः अबुपलक्षितानि पञ्च स्थूलभूतानि सृष्टवान् । विद्याध्ययनस्थानादुद्भूतत्वात् वागेव सृष्टेत्यर्थः । अनेनापा वाक्छब्दव्यवहार्यत्वमुक्तमिति मन्तव्यम् । अप्शब्दनिर्वचनमाह—सेदमिति । सा वाक् सर्वव्यापकत्वात् आपः उच्यन्ते, जगदावरणाच्चासा वाःशब्दवाच्यत्वम् । शब्रा.सा.

सोऽकामयत आभ्योऽद्भ्योऽधि प्रजायेयेति । सोऽनया त्रय्या विद्यया सहापः प्राविशत् । तत आण्डं समवर्तत । तदभ्यमृशदस्त्वित्ति । अस्तु भूयोऽस्त्वित्येव तदब्रवीत् । ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव विद्या । तस्मादाहुर्ब्रह्मास्य सर्वस्य प्रथमजमिति । अपि हि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यत । तदस्य तन्मुखमेवासृज्यत । तस्मादनूचानमाहुरग्निकल्प इति । मुखं ह्येतदग्नेर्यद्ब्रह्म ॥ १० ॥

सोऽकामयतेति । आभ्योऽद्भ्योऽधि प्रजायेयेति विचार्य त्रय्या विद्यया सह सृष्टाः अपः प्रविष्टवान् । ततः आण्ड समवर्तत । तत् अस्तु इति अभ्यमृशत् । अस्त्वितिशब्दो वक्ष्यमाणसृष्टिनिर्देशार्थः । अस्तु इति वक्ष्यमाणप्रकारेण भवतु भूयः बहुल च अस्त्विति त्रिवार प्रजापतिरेतदण्डमभिलक्ष्याब्रवीत् । यस्मात् प्रथम मुखात् वागुच्चारिता तस्मात् ब्रह्म वेदः प्रथममुत्पन्नः । अतः प्रथमोत्पन्न वेदं योऽधीते तदर्थमनुतिष्ठति च त अनूचानमग्निकल्प इत्याहुः । हि यस्मात् अग्नेः चित्याग्निरूपस्य प्रजापतेः ब्रह्म वेदो मुख भवति । शब्रासा.

अथ यो गर्भोऽन्तरासीत्सोऽग्निरसृज्यत । स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्निः । अग्रिर्ह वै तमग्निरित्याचक्षते परोक्षम् । परोक्षकामा हि देवाः । अथ यदश्रु संक्षरितमासीत् सोऽश्रुरभवत् । अश्रुर्ह वै तमश्व इत्याचक्षते परोक्षम् । परोक्षकामा हि देवाः । अथ यदरसदिव स रासभोऽभवत् । अथ यः कपाले रसो लिप्त आसीत् सोऽजोऽभवत् । अथ यत्कपालमासीत् सा पृथिव्यभवत् ॥ ११ ॥

अथ यो गर्भ इति । ततः यः जातगर्भः सः अग्निः असृज्यत । तस्मात्सर्वस्य स्थूलप्रपञ्चस्य अग्रं आदौ सृष्टत्वात् अग्नि(ग्रि)रित्युच्यते । त अग्निं(ग्रिं)इदानीन्तना अग्निनाम्ना व्यवहार कुर्वन्ति । तत्र गर्भे यत् यदा अश्रु सक्षरित, गर्भनिर्गमनकाले हि जल स्रवति, सः अश्रुः । त अश्व इति आचक्षते । यदा गर्भः अरसत् ध्वनिमकरोत् तदा रासभोऽभवत् । रसतेः ध्वन्यर्थादुत्पन्नो रासभशब्दः । कपाले अण्डकपाले विलिप्तः संसृष्टो रसः सः अजो नाम पशुः अभवत् । भिन्नकपालमेव पृथिवी आसीत् । एवमण्डादुत्पन्नानामेषाऽग्न्यश्वरासभाजानां पशूना सृष्टिरुक्ता । शब्रासा.

सोऽकामयत आभ्योऽद्भ्योऽधीमां प्रजनयेयमिति । तां संक्लिश्याप्सु प्राविध्यत । तस्यै यः पराङ् रसोऽत्यक्षरत् स कूर्मोऽभवत् । अथ यदूर्ध्वमुदौक्ष्यतेदं तद्यदिदमूर्ध्वमद्भ्योऽधिजायते । सेयं सर्वाप एवानुव्यैत् । तदिदमेकमेव रूपं समदृश्यत । आप एव ॥ १२ ॥

अथ कपालं पृथिव्यभवदिति यदुक्त, तस्मात् बहुधा उत्पत्तिं वक्तुमाह—सोऽकामयतेति । पुनः प्रजापतिः अद्भ्यः अधि अप्सु उदकेषु इमा भूमिं प्रजनयेयं विशेषेणोत्पादयेयं इति विचार्य ता पृथिवीं सक्लिश्य चूर्णीकृत्य अप्सु प्राविध्यत् आलोडयामास । तस्यै पृथिव्याः यः रसः पराङ् अत्यक्षरत् स कूर्मोऽभवत् । यत् ऊर्ध्वं समूहितो रसः तत् इदं अब्रूप अभवत् । यस्मात् भूमिरुदकेषु प्रविद्धा तस्मात् एकं रूपमेव, भेदो न दृश्यते । आप एव केवल दृश्यन्ते ।

शब्रासा.

सोऽकामयत भूय एव स्यात् प्रजायेयेति । सोऽश्राम्यत् । स तपोऽतप्यत । स श्रान्तस्तेपानः फेनमसृजत । सोऽवेदन्यद्वा एतद्रूपम् । भूयो वै भवति । श्राम्याण्येवेति । स श्रान्तस्तेपानो मृदं शुष्कापमूषसिकतं शर्करामश्मानमयो हिरण्यमोषधिवनस्पत्यसृजत । तेनेमां पृथिवीं प्राच्छादयत् ॥ १३ ॥

सोऽकामयत भूय इति । ततः प्रजापतिरियं पृथिवी भूयः स्यात् बहुधोत्पद्येतेति विचार्य ताभ्योऽद्भ्यः फेन सृष्टवान्। पुनरपि विदित्वा शुष्कार्द्रभावेन द्विविधा मृत्तिका, (ऊष) सिकत वालुकाः, शर्कराः अल्पपाषाणान्, अश्मान स्थूलपाषाण, अयः, हिरण्य सुवर्ण, ओषधयश्च वनस्पतयश्च । एकवद्भावान्नपुंसक ओषधिवनस्पति इति । एतैः शुष्कार्द्रमृदादिभिर्नवभिः इमा भूमिमाच्छादितवान् । शब्रासा.

ता वा एता नव सृष्टय इयमसृज्यत । तस्मादाहुस्त्रिवृदग्निरिति । इयं ह्यग्निः । अस्यै हि सर्वोऽग्निश्चीयते ॥ १४ ॥

ता वा एता इति । एता एव शुष्कमृदादिभिर्नव सृष्टय एव इय भूमिः । तस्मादेता त्रिवृदग्निरित्याहुः । स्तोत्रियात्मकस्य स्तोत्रस्य त्रिवृदिति सज्ञा । अत्र तु संख्यामात्रवाचि । अस्यां भूमौ अग्नेर्वासात् आधाराधेययोरभेदोपचारेण अस्यै अस्याः अग्निः इयं नवसृष्ट्यात्मिका प्रतिष्ठा भूमिरित्युच्यते ।

शब्रासा.

अभूद्वा इयं प्रतिष्ठेति तद्भूमिरभवत् । तामप्रथयत् । सा पृथिव्यभवत् । सेयं सर्वा कृत्स्ना मन्यमानाऽगायत्। यदगायत्तस्मादियं गायत्री । अथो आहुः । अग्निरेवास्यै पृष्ठे सर्वः कृत्स्नो मन्यमानोऽगायत्। यदगायत्तस्मादग्निर्गायत्र इति । तस्माद्रु हैतद्यः सर्वः कृत्स्नो मन्यते गायति वैव गीते वा रमते ॥ १५ ॥

अभूद्वा इति । भवतेर्हि भूमिशब्दनिष्पत्तिः । तस्याः प्रथनात् बहुधा विस्तरणात् पृथिवीत्वम् । सेय भूमिः कृत्स्ना स्वय सपूर्णाऽजनिषीति मन्यमाना अगायत् गानमकरोत् । अतो गानादेव भूमेर्गायत्रीत्वम् । तत्र अस्या भूमौ अग्निरपि स्वय सपूर्णः स्थितः इति मन्यमानोऽगायत्, अतस्तस्याप्यग्नेः गायत्र इति नाम सपन्नम् । अतः एतत् इदानीं लोके यः कश्चन पुरुषो धनपश्वादिभिः कृत्स्नः अहमिति मन्यते सः परकृते गीते रमते वा गायति वा स्वयं गायति चेत्यर्थः । तस्मात् संपूर्णत्वेनाभिमन्यमानाया भूमेरग्नेश्च गायत्रत्वं सपन्नमिति तात्पर्यम् । शब्रासा.

प्रजापतेः विविधान्यण्डानि जातानि ,तेभ्यो वाय्वादित्यचन्द्रमसा अन्तरिक्षद्युदिगादीना चोत्पत्ति

[१]सोऽकामयत प्रजापतिर्भूय एव स्यात् प्रजायेतेति । सोऽग्निना पृथिवीं मिथुनं समभवत् । तत आण्डं समवर्तत । तदभ्यमृशत् पुष्यत्विति । पुष्यतु भूयोऽस्त्वित्येव तदब्रवीत् ॥ १ ॥

द्वितीये ब्राह्मणे वाय्वन्तरिक्षादिसृष्टिः प्रजापतेश्चित्याग्निरूपता चोच्यते—सोऽकामयतेति । भूमिसृष्टेरनन्तर प्रजापतिरिद जगदधिक भवेदिति कामयित्वा अग्निना पृथिवी मिथुनत्वेन समयोजयत् । तयोः सयोगेन अण्ड जातम् । तदभ्यमृशत् नानात्वेन पुष्ट भवत्विति त्रिवारमण्डमभिलक्ष्य प्रजापतिः अब्रवीत् । शब्रासा.

स यो गर्भोऽन्तरासीत् स वायुरसृज्यत । अथ यदश्रु संक्षरितमासीत्तानि वयांस्यभवन् । अथ यः कपाले रसो लिप्त आसीत्ता मरीचयोऽभवन् । अथ यत्कपालमासीत्तदन्तरिक्षमभवत् ॥ २ ॥

तत्राहुः—स यो गर्भोऽन्तरासीदिति । यो गर्भोऽन्तर्जातः स वायुत्वेन सृष्टः । अथ गर्भोदक–कपाललिप्तरस–तत्कपालानि त्रीणि च पक्षिमरीच्यन्तरिक्षलोकात्मकानि अभूवन् । शब्रासा.

सोऽकामयत भूय एव स्यात्प्रजायेतेति । स वायुनाऽन्तरिक्षं मिथुनं समभवत् । तत आण्डं समवर्तत । तदभ्यमृशद्यशो बिभृहीति । ततोऽसावादित्योऽसृज्यत । एष वै यशः । अथ यदश्रु संक्षरितमासीत् सोऽश्मा पृश्निरभवत् । अश्रुर्ह वै तमश्मेत्याचक्षते परोक्षम् । परोक्षकामा हि देवाः । अथ यः कपाले रसो लिप्त आसीत् ते रश्मयोऽभवन् । अथ यत्कपालमासीत् सा द्यौरभवत् ॥३॥

सोऽकामयतेत्यादेरयमर्थः— वाय्वन्तरिक्षयोर्मिथुनत्वेन सङ्गादेकमण्डमुत्पन्नम् । तस्मादादित्य उत्पन्नः । स एष आदित्यो यशः । 'यशो बिभृहि' इति यशोरूपत्वेन धारणार्थं प्रजापतिना अण्डस्यावमृष्टत्वात्तत उत्पन्न आदित्यो यश इत्युच्यते । पूर्ववत् गर्भोकादीनि त्रीणि मेघरश्मिद्युलोकात्मकानि जातानि । तदा पृश्निः

(१) शब्रा. ६।१।२।१–११.

नानावर्णः अश्मा आकाशाच्छादको मेघः। 'अश्नोतेरश्मा' इति नैरुक्ताः। शब्रासा.

सोऽकामयत भूय एव स्यात् प्रजायेतेति। स आदित्येन दिवं मिथुनं समभवत्। तत आण्डं समवर्तत। तदभ्यमृशद्रेतो बिभृहीति। ततश्चन्द्रमा असृज्यत। एष वै रेतः। अथ यदश्रु संक्षरितमासीत् तानि नक्षत्राण्यभवन्। अथ यः कपाले रसो लिप्त आसीत् ता अवान्तरदिशोऽभवन्। अथ यत्कपालमासीत् ता दिशोऽभवन्॥ ४॥

अथ तृतीयपर्याये आदित्यद्युलोकयोर्मिथुनत्वेन गर्भः समजनि। त प्रजापतिः 'रेतो बिभृहि' इति रेतोरूपत्वेन धारयेति गर्भमवमृष्टवान्। ततोऽण्डात् यत् इमाः सृष्टाः (चन्द्रमाः सृष्टः।) अत एव तस्य रेतस्त्वं सुधास्रवणात्। अत्रापि पूर्ववत् गर्भोदककपाललिप्तरसतत्कपालानि नक्षत्रावान्तरदिङ्महादिगात्मकानि सपन्नानि। शब्रासा.

प्रजापतेः वाङ्मनसरूपमिथुनात्मकात् देवतासृष्टिः

स इमाँल्लोकान्त्सृष्ट्वाऽकामयत। ताः प्रजाः सृजेय या म एषु लोकेषु स्युरिति॥ ५॥

स मनसा वाचं मिथुनं समभवत्। सोऽष्टौ द्रप्सान्गर्भ्यभवत्। तेऽष्टौ वसवोऽसृज्यन्त। तानस्यामुपादधात्॥ ६॥

स मनसैव वाचं मिथुनं समभवत्। स एकादश द्रप्सान्गर्भ्यभवत्। त एकादश रुद्रा असृज्यन्त। तानन्तरिक्ष उपादधात्॥ ७॥

स मनसैव वाचं मिथुनं समभवत्। स द्वादश द्रप्सान् गर्भ्यभवत्। ते द्वादशादित्या असृज्यन्त। तान्दिव्युपादधात्॥ ८॥

स मनसैव वाचं मिथुनं समभवत्। स गर्भ्यभवत्। स विश्वान्देवानसृजत। तान्दिक्षूपादधात्॥ ९॥

स इमाँल्लोकान्त्सृष्ट्वेत्यादि। पुनश्च प्रजापतिः एषु लोकेषु प्रजाः सृजेयमिति विचार्य स्वकीयवाङ्मनसयोर्मिथुनीभवनेन स्वयमष्टद्रप्सरूपगर्भवानभवत्। ततः अष्टभ्यो द्रप्सेभ्यः अष्टौ वसवः संजाताः। तान् वसून् अस्या भूमौ उपादधात् निहितवान्। पुनश्च वाङ्मनसयोः युग्मेन एकादश रुद्रान् सृष्ट्वा तान् अन्तरिक्षे स्थापितवान्। द्वादशादित्यांश्च सृष्ट्वा तान् द्युलोके उपदधाति स्म। विश्वान् देवान् दिक्षु निहितवान्। शब्रासा.

अथो आहुः। अग्निमेव सृष्टं वसवोऽन्वसृज्यन्त। तानस्यामुपादधात्। वायुं रुद्राः। तानन्तरिक्षे। आदित्यमादित्याः। तान्दिवि। विश्वेदेवाश्चन्द्रमसम्। तान् दिक्षूपादधादिति॥ १०॥

अत्र केचित् वसुरुद्रादित्यविश्वेदेवानामुत्पत्तिमग्निपूर्वां दर्शयन्ति—अथो आहुरग्निमेव सृष्टं वसवोऽन्वसृज्यन्तेति। इतिशब्दः एकीयपक्षसमाप्त्यर्थः। शब्रासा.

अथो आहुः। प्रजापतिरेवेमाँल्लोकान्सृष्ट्वा पृथिव्यां प्रत्यतिष्ठत्। तस्मा इमा ओषधयोऽन्नमपच्यन्त। तदाश्नात्। स गर्भ्यभवत्। स ऊर्ध्वेभ्य एव प्राणेभ्यो देवानसृजत। येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजा इति। अतो यतमथाऽसृजत तथाऽसृजत। प्रजापतिस्त्वेवेदं सर्वमसृजत यदिदं किंच॥ ११॥

अथो आहुः प्रजापतिरेवेत्यादेरयमर्थः—अथो अपरे ब्रह्मवादिनः एवमाहुः। प्रजापतिरेव लोकत्रयं सृष्ट्वा पृथिव्यां प्रतिष्ठितः सन् पक्वाः अन्नरूपाः ओषधीः प्राश्य गर्भी भूत्वा सः ऊर्ध्वेभ्यः प्राणेभ्यः देवान् सृष्टवान्। अवाचीनेभ्यः प्राणेभ्यः मर्त्याः प्रजा इति। सृष्टौ यद्यपि प्रकारविशेषोऽस्ति, तथापि स्थावरजङ्गमात्मकस्य जगतः प्रजापतिसृष्टत्वं निश्चितमिति श्रुतिः स्वमतं निरूपयति—अतो यतमथेति। यतमथा येन प्रकारेण सृष्टवान् तेनैव प्रकारेण सृष्टिरस्तु। सर्वात्मना प्रजापतिरेवेदं सर्वमसृजदिति सत्यमित्यर्थः। शब्रासा.

प्रजापतेः भूतपतिः संवत्सरः जातः, तस्मात् अग्निः कुमारो रुद्राख्यः, तस्य शर्वादीनि अष्ट नामानि

प्रजापतिर्वा इदमग्र आसीदेक एव। सोऽकामयत स्यां प्रजायेयेति। सोऽश्राम्यत्[1] स तपोऽतप्यत। तस्माच्छ्रान्तात्तेपानादापोऽसृज्यन्त। तस्मात्पुरुषात्तप्तादापो जायन्ते॥ १॥

(१) शब्रा. ६।१।३।१–२०.

आपोऽब्रुवन् क्व वयं भवामेति । तप्यध्वमित्यब्रवीत् । ता अतप्यन्त । ताः फेनमसृजन्त । तस्मादपां तप्तानां फेनो जायते ॥ २ ॥

फेनोऽब्रवीत् काहं भवानीति । तप्यस्वेत्यब्रवीत् । सोऽतप्यत । स मृदमसृजत । एतद्वै फेनस्तप्यते यदप्स्वावेष्टमानः प्लवते । स यदोपहन्यते मृदेव भवति ॥ ३ ॥

मृदब्रवीत् काहं भवानीति । तप्यस्वेत्यब्रवीत् । साऽतप्यत । सा सिकता असृजत । एतद्वै मृत्तप्यते यदेनां विकृषन्ति । तस्माद्यद्यपि सुमार्त्स्नं विकृषन्ति सैकतमिवैव भवति । एतावन्नु तद्यत् काहं भवानि काहं भवानीति ॥ ४ ॥

सिकताभ्यः शर्करामसृजत । तस्मात् सिकताः शर्करैवान्ततो भवति । शर्कराया अश्मानम् । तस्माच्छर्कराऽश्मैवान्ततो भवति । अश्मनोऽयः । तस्मादश्मनोऽयो धमन्ति । अयसो हिरण्यम् । तस्मादयो बहुध्मातं हिरण्यसंकाशमिवैव भवति ॥ ५ ॥

तद्यदसृज्यताक्षरत्तत् । यदक्षरत् तस्मादक्षरम् । यदष्टौ कृत्वोऽक्षरत् सैवाष्टाक्षरा गायत्र्यभवत् ॥ ६ ॥

अभूद्वा इयं प्रतिष्ठेति । तद्भूमिरभवत् । तामप्रथयत् । सा पृथिव्यभवत् । तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरायादीक्षन्त । भूतानां पतिर्गृहपतिरासीत् । उषाः पत्नी ॥ ७ ॥

तद्यानि तानि भूतानि ऋतवस्ते । अथ यः स भूतानां पतिः संवत्सरः सः । अथ या सोषाः पत्न्यौषसी सा । तानीमानि भूतानि च भूतानां च पतिः संवत्सर उषसि रेतोऽसिञ्चन् । स संवत्सरे कुमारोऽजायत । सोऽरोदीत् ॥ ८ ॥

तं प्रजापतिरब्रवीत् । कुमार किं रोदिषि । यच्छ्रमात्तपसोऽधि जातोऽसीति । सोऽब्रवीत् । अनपहतपाप्मा वा अस्म्यहितनामा । नाम मे धेहीति । तस्मात्पुत्रस्य जातस्य नाम कुर्यात् । पाप्मानमेवास्य तदपहन्ति । अपि द्वितीयम् । अपि तृतीयम् । अभिपूर्वमेवास्य तत् पाप्मानमपहन्ति ॥ ९ ॥

तमब्रवीत् रुद्रोऽसीति । तद्यदस्य तन्नामाकरोदग्निस्तद्रूपमभवत् । अग्निर्वै रुद्रः । यदरोदीत् तस्माद्रुद्रः । सोऽब्रवीत् ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति ॥ १० ॥

तमब्रवीत् शर्वोऽसीति । तद्यदस्य तन्नामाककरोदापस्तद्रूपमभवन् । आपो वै सर्वः । अद्भ्यो हीदं सर्वं जायते । सोऽब्रवीत् ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति ॥ ११ ॥

तमब्रवीत्पशुपतिरसीति । तद्यदस्य तन्नामाकरोदोषधयस्तद्रूपमभवन् । ओषधयो वै पशुपतिः । तस्माद्यदा पशव ओषधीर्लभन्ते अथ पतीयन्ति । सोऽब्रवीत् ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति ॥ १२ ॥

तमब्रवीदुग्रोऽसीति । तद्यदस्य तन्नामाऽकरोद्वायुस्तद्रूपमभवत् । वायुर्वा उग्रः । तस्माद्यदा बलवद्वात्युग्रो वातीत्याहुः । सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति ॥ १३ ॥

तमब्रवीदशनिरसीति । तद्यदस्य तन्नामाकरोद्विद्युत्तद्रूपमभवत् । विद्युद्वा अशनिः । तस्माद्यं विद्युद्धन्त्यशनिरवधीदित्याहुः । सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति ॥ १४ ॥

तमब्रवीद्भवोऽसीति । तद्यदस्य तन्नामाकरोत्पर्जन्यस्तद्रूपमभवत् । पर्जन्यो वै भवः । पर्जन्याद्धीदं सर्वं भवति । सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति ॥ १५ ॥

तमब्रवीन्महान्देवोऽसीति । तद्यदस्य तन्नामाकरोच्चन्द्रमास्तद्रूपमभवत् । प्रजापतिर्वै चन्द्रमाः । प्रजापतिर्वै महान्देवः । सोऽब्रवीज्ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति ॥ १६ ॥

तमब्रवीदीशानोऽसीति । तद्यदस्य तन्नामाकरोदादित्यस्तद्रूपमभवत् । आदित्यो वा ईशानः । आदित्यो ह्यस्य सर्वस्येष्टे । सोऽब्रवीदेतावान्वा अस्मि मामेतः परो नाम धा इति ॥ १७ ॥

तान्येतान्यष्टावग्निरूपाणि । कुमारो नवमः सैवाग्नेस्त्रिवृत्ता ॥ १८ ॥

यद्वेवाष्टावग्निरूपाणि । अष्टाक्षरा गायत्री । तस्मादाहुर्गायत्रोऽग्निरिति । सोऽयं कुमारो रूपाण्यनुप्राविशत् । न वा अग्नि कुमारमिव पश्यन्ति । एतान्येवास्य रूपाणि पश्यन्ति । एतानि हि रूपाण्यनुप्राविशत् ॥ १९ ॥

तमेतं संवत्सर एव चिनुयात् । संवत्सरेऽनुब्रूयात् । द्वयोरित्यु हैक आहुः । संवत्सरे वै तद्रेतोऽसिञ्चन् । स संवत्सरे कुमारोऽजायत । तस्माद्द्वयोरेव चिनुयाद्द्वयोरनुब्रूयादिति । संवत्सरे त्वेव चिनुयात् संवत्सरेऽनुब्रूयात् । यद्वाव रेतः सिक्तं तदेव जायते । तत्ततो विक्रियमाणमेव वर्धमानं शेते । तस्मात्संवत्सर एव चिनुयात् संवत्सरेऽनुब्रूयात् । तस्य चितस्य नाम करोति पाप्मानमेवास्य तदपहन्ति । चित्रनामानं करोति चित्रोऽसीति । सर्वाणि हि चित्राण्यग्निः ॥ २० ॥

प्रजापते प्राणेभ्य. पुरुषादिपशुसृष्टि

यद्वेव पशुशीर्षाण्युपदधाति । प्रजापतिर्वा इदमग्र आसीदेक एव । सोऽकामयतान्नं सृजेय प्रजायेयेति । स प्राणेभ्य एवाधि पशून् निरमिमीत मनसः पुरुषं चक्षुषोऽश्वं प्राणाद्गां श्रोत्राद्अविं वाचोऽजम् । तद्यदेनान् प्राणेभ्योऽधि निरमिमीत तस्मादाहुः प्राणाः पशव इति । मनो वै प्राणानां प्रथमम् । तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः प्रथमः पशूनां वीर्यवत्तम इति । मनो वै सर्वे प्राणाः । मनसि हि सर्वे प्राणाः प्रतिष्ठिताः । तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः सर्वे पशव इति । पुरुषस्य ह्येवैते सर्वे भवन्ति ॥

उखाया पशुशीर्षाणामुपधाने प्राजापत्युदरेऽन्नं दधातीति दर्शयितुमाख्यायिकामवतारयति–यद्वेवेति । 'पशुशीर्षाण्युपदधाति' इति यत्, तत्कारणमुच्यते इत्यर्थः । सृष्टेः पूर्वं प्रजापतिः एकः एवासीत् खलु । स प्रजापतिः अन्नं सृजेय प्रजारूपेण प्रजायेयेति अकामयत । प्रजायेयेति अन्नसृष्ट्युपायप्रदर्शनम् । स एवजातेच्छः प्रजापतिः प्राणेभ्य एव पशून्निरमिमीत । तदेव विवृणोति–मनसः पुरुषमिति । प्राणात् इति प्राणसञ्चारस्थानत्वात् घ्राणेन्द्रियमुच्यते । यतः एतान् पशून् प्राणेभ्यो निर्मितवान् तस्मात् लोके प्राणाः पशवः इति आहुः जनाः । किञ्च सर्वेषामिन्द्रियाणा मनः खलु प्रथम श्रेष्ठम् । तदुपधानादेव सर्वेषा स्वस्वव्यापारक्षमत्वात् । अतश्च मनसः पुरुषस्य निर्माणाल्लोके पुरुपः पशूनां मध्ये श्रेष्ठः वीर्यवत्तम इति आहुः । अपि च मनसि एव सर्वे प्राणाः प्रतिष्ठिताः इति तदेव खलु सर्वे प्राणाः । अतश्च सर्वप्राणात्मकत्वात् मनसः पुरुष निरमिमीत इति यत् तस्मादाहुः पुरुपः सर्वे पशवः इति । यतः पुरुपस्य ह्येवैते सर्वे पशवो भवन्ति, सर्वपशुसपादनक्षमत्वात्पुरुपस्य । अतः पुरुषः सर्वे पशव इति आहुः । सर्वेन्द्रियप्रतिष्ठारूपान्मनसः सकाशात्पुरुपस्य निर्माणेन तस्य पशुसपादनक्षमत्वात् पुरुपः सर्वे पशव इत्याहुरित्यर्थः । शब्रासा.

(१) शब्रा. ७।५।२।६.

सृष्ट्यादौ आप, अद्भ्यो हिरण्मयमण्डं जातं, तस्मात् पुरुषः प्रजापतिः, तदीयवाच· भूमिरन्तरिक्षं द्यौश्च, तदुत्तरं स सहस्रायु· संपन्नः, ततो देवान् असुरांश्चात्मन. स सृष्टवान्, ततः अहोरात्रद्वन्द्वं संवत्सरं चात्मप्रतिमा, तत· अग्नि इन्द्रं सोमं प्राजापत्यं परमेष्ठिनं च

ओंआपो ह वा इदमग्रे सलिलमेवास । ता अकामयन्त । कथं नु प्रजायेमहीति । ता अश्राम्यन् । तास्तपोऽतप्यन्त । तासु तपस्तप्यमानासु हिरण्मयमाण्डं संबभूव । अजातो ह तर्हि संवत्सर आस । तदिदं हिरण्मयमाण्डं यावत्संवत्सरस्य वेला तावत्पर्यप्लवत ॥ १ ॥

अथ दर्शपूर्णमासयोः सर्वात्मकलक्षणवैराजपदप्राप्तिसाधनता वक्ष्यन् तदुपोद्घातत्वेनाख्यायिकया सृष्टिं प्रतिपादयति–आपो ह वा इदमित्यादि । इद दृश्यमानं सर्व जगत् आपः एव अबात्मकमेव, तत्कार्यत्वात् । कथमिति चेत्, उच्यते । अग्रे सृष्टेः पूर्वं सर्वात्मकमिदं सर्व सलिलमेव उदकपरिशेष बभूव । आपः अकामयन्त । अभिमानिदेवतापेक्षया अचेतनानामपा कामयितृत्वम् । कथं नु केन प्रकारेण विविधजगदात्मना प्रकर्षेण जायेम-

(१) शब्रा. ११।१।६।१–१९.

हीति । ताः कामयमानाः अश्राम्यन् खिन्ना अभूवन् । ताः श्रान्ताः आपः तपोऽतप्यन्त स्रष्टव्यपर्यालोचनरूपं तपः कृतवत्यः । अखिलजगत्कारणमयस्य प्रजापतेरुपादानस्याण्डस्योत्पत्तिमाह—तासु तपस्तप्यमानास्विति । हिरण्मयं हिरण्यनिर्मितमण्डं अप्सु प्रथमं मयूरकुक्कुटाण्डवत् सम्बभूव उत्पन्नमभूत् । तर्हि तस्मिन् समये संवत्सराख्यः कालोऽपि अजातः अनुत्पन्न एव बभूव । अतः संवत्सराभावात् यावती संवत्सरस्य वेला प्रान्तः सम्भाव्यते तावत् पर्यप्लवत तदण्डं परिप्लुतमपामुपरि स्थितमासीत् । शब्रासा.

**ततः संवत्सरे पुरुषः समभवत् । स प्रजापतिः । तस्मादु संवत्सर एव स्त्री वा गौर्वा वडवा वा विजायते । संवत्सरे हि प्रजापतिरजायत । स इदं हिरण्मयमाण्डं व्यरुजत् । नाह तर्हि काचन प्रतिष्ठाऽऽस । तदेनमिदमेव हिरण्मयमाण्डं यावत्संवत्सरस्य वेलाऽऽसीत्तावद्बिभ्रत्पर्यप्लवत ॥ २ ॥**

ततस्तस्मादण्डात् संवत्सरकाले गते सति पुरुषः शरीरी कश्चित् समभवत् उदपद्यत । सः पुरुषः प्रजापतिः । लोके शरीरिण उत्पत्तिः अत एव हेतोः संवत्सरकालसाध्या दृश्यते इत्याह—तस्मादु संवत्सर एवेति । यस्मात् प्रजापतिसृष्टिरुक्तविधा तस्मात् लोकेऽपि स्त्र्यादिः संवत्सरपर्यन्तं गर्भाशयस्थाने अण्डरूपेण गर्भं धृत्वा तदवसाने विजायते विविध शरीरद्वयरूपेण उत्पद्यते । संवत्सरे हीत्युक्तस्य कारणस्य पुनर्योजनम् । स इदं हिरण्मयमित्यादि । सः उत्पन्नः प्रजापतिः इदं हिरण्मयं स्वाश्रयभूतमाण्डं व्यरुजत् भग्नं कृतवान् । तर्हि तस्मिन् संवत्सरमये समये आश्रयभूतस्य आण्डस्य विरुग्णत्वात् तस्य प्रजापतेः प्रतिष्ठा आस्पदं काचन किमपि नैवास न बभूव । स च निराधारत्वात् स्थातुमशक्नुवन् इदमेव भिन्नं हिरण्मयमाण्डं पुनः संवत्सरपर्यन्तं बिभ्रद्धारयन् तास्वेव अप्सु पर्यप्लवत । शब्रासा.

**स संवत्सरे व्याजिहीर्षत् । स भूरिति व्याहरत् । सेयं पृथिव्यभवत् । भुव इति । तदिदमन्तरिक्षमभवत् । स्वरिति । साऽसौ द्यौरभवत् । तस्मादु संवत्सर एव कुमारो व्याजिहीर्षति । संवत्सरे हि प्रजापतिर्व्याहरत् ॥ ३ ॥**

सः प्रजापतिरुत्पत्त्यनन्तरं संवत्सरे गते सति व्याजिहीर्षत् व्याहर्तुं भाषितुमैच्छत् । प्रथमं लोकत्रयसृष्टिमाह—भूरिति व्याहरदित्यादिना । भूर्भुवः स्वरित्येतत्पदत्रयं क्रमेण व्याहृतं सत् स्ववाच्यपृथिव्याद्यात्मना जातमित्यर्थः । भुव इति स्वरिति उभयत्र व्याहरदित्यनुषङ्गः । तस्मादिति पूर्ववल्लोकप्रसिद्धेरुपपादनम् । शब्रासा.

**स वा एकाक्षरद्व्यक्षराण्येव प्रथमं वदन् प्रजापतिरवदत् । तस्मादेकाक्षरद्व्यक्षराण्येव प्रथमं वदन् कुमारो वदति ॥ ४ ॥**

प्रजापत्युक्तेः कुमारोक्तेश्चान्यदपि साम्यं कार्यकारणभावेन प्रतिपादयति—स वा इति । भूरित्येकाक्षरं ततो भुवः स्वरिति च अक्षरद्वयात्मकमेव प्रथमं वदन् भाषमाणः सः प्रजापतिरवदत् अन्यत्सर्वमुक्तवान् । तस्मादेव कारणात् कुमारोऽपि तात इत्येवंरूपाणि एकाक्षरद्व्यक्षराण्येव पदानि प्रथमं भाषमाणः वदति । शब्रासा.

**तानि वा एतानि पञ्चाक्षराणि । तान्पञ्चर्तूनकुरुत । त इमे पञ्चर्तवः । स एवमिमान् लोकाञ्जातान् संवत्सरे प्रजापतिरभ्युदतिष्ठत् । तस्मादु संवत्सर एव कुमार उत्तिष्ठासति । संवत्सरे हि प्रजापतिरुदतिष्ठत् ॥ ५ ॥**

ऋतुसृष्टिमाह—तानि वा इति । भूर्भुवः स्वरिति तान्येतानि पञ्चाक्षराणि । तान् प्रसिद्धान् वसन्ताद्यान् पञ्च ऋतूनकुरुत । हेमन्तशिशिरयोः समासाभिप्रायेण पञ्चसंख्या । अतस्तैः पञ्चभिरक्षरैः सृष्टाः त एव प्रसिद्धा वसन्ताद्याः पञ्चर्तवः पूर्वसृष्टेषु त्रिषु लोकेषु वर्तन्ते । सः परिप्लवमानः प्रजापतिः एकस्मिन् संवत्सरे गते सति आण्डं विहाय इमान् सृष्टान् पृथिव्यादिलोकान् अवलम्ब्य उदतिष्ठत् ऊर्ध्वं स्थितवान् । यस्मादेव प्रजापतिः, तस्मादेव कारणात् जन्मानन्तरं संवत्सरकाले गते एव कुमारः बालः उत्तिष्ठासति उत्थातुमिच्छति । संवत्सरे हीत्युक्तेऽर्थे कारणयोजनम् । शब्रासा.

**स सहस्रायुर्जज्ञे । स यथा नद्यै पारं परापश्येदेवं स्वस्यायुषः पारं पराचख्यौ ॥ ६ ॥**

स सहस्रायुरित्यादि । सः प्रजापतिः सहस्रायुः सहस्रसंवत्सरजीवनोपेतः जज्ञे जातो बभूव । यथा दूरदर्शी अत्यन्तं

विस्तृतायाः नद्याः पारं परतीरं परापश्यति, एवं प्रजापतिरपि सहस्रसंवत्सररूपस्य स्वकीयस्यायुषः पारमवसानं पराचख्यौ परागतेन दूरगमनशीलेन मनसा ददर्श।

शब्रासा.

**सोऽर्चन् श्राम्यंश्चचार प्रजाकामः। स आत्मन्येव प्रजापतिमधत्त। स आस्येनैव देवानसृजत। ते देवा दिवमभिपद्यासृज्यन्त। तद्देवानां देवत्वं यद्दिवमभिपद्यासृज्यन्त। तस्मै ससृजानाय दिवेवाऽऽस। तद्वेव देवानां देवत्वं यदस्मै ससृजानाय दिवेवाऽऽस॥ ७॥**

ततः स प्रजापतिः स्वकीयस्यायुषः परिच्छेदं जानन् ततः प्रागेव प्रजासर्जनरूपं कृत्स्नं स्वकार्यं निर्वर्तयितुकामः अर्चन् स्वकर्तव्यं परामृशन् श्राम्यन् तच्चिन्तनेन श्रान्तश्च सन् चचार वर्तते। ततः स आत्मनि स्वशरीरे एव प्रजापतिं प्रजोत्पत्तिसाधनं योनिं अधत्त। ततः स आस्येन मुखेनैव देवानसृजत। ते देवाः दिवं द्युलोकमभिपद्य अवष्टभ्य असृज्यन्त सृष्टा अभवन्। यस्माद्दिवमभिपन्नास्ते तस्मात् द्युसंबन्धात् तेषां देवानां देवत्वं देवशब्दाभिधेयता संपन्ना। यस्मादेव दिवोऽभिपदनात्। ससृजानाय देवान् सृष्टवते तस्मै प्रजापतये सा देवसृष्टिः दिवेव आस प्रकाश इव बभूव।

शब्रासा.

**अथ योऽयमवाङ्प्राणस्तेनासुरानसृजत। त इमामेव पृथिवीमभिपद्यासृज्यन्त। तस्मै ससृजानाय तम इवास॥ ८॥**

असुरसृष्टिमाह–अथ योऽयमिति। अथ देवसृष्ट्यनन्तरं योऽयमवाङ्मुखो गुदाख्यः प्राणः तेनासुरान् प्रजापतिरसृजत। ते सृज्यमानाः इमां पृथिवीमेव अभिपद्य अभिप्राप्य असृज्यन्त। तस्मै ससृजानाय असुरान् सृष्टवते प्रजापतये सा असुरसृष्टिः तम इव अन्धकार इव बभूव।

शब्रासा.

**सोऽवेत्। पाप्मानं वा असृक्षि। यस्मै मे ससृजानाय तम इवाभूदिति। तांस्तत एव पाप्मना अविध्यत्। ते तत एव पराभवन्। तस्मादाहुः। नैतदस्ति यद्दैवासुरम्। यदिदमन्वाख्याने त्वत्। उद्यत इतिहासे त्वत्। ततो ह्येव तान्प्रजापतिः पाप्मना अविध्यत्। ते तत एव पराभवन्निति॥९॥**

ततः सः प्रजापतिः अवेत् अजानात्। पापमेव खलु अहमसृक्षि सृष्टवानस्मि, यस्मै सृष्टवते मे इयमसुरसृष्टिस्तम इवाभूत् अन्धकार इव सर्वस्यावरणशीला अभूदिति। एवं पर्यालोच्य तानसुरान् तत एव तेनैव तमोरूपेण पाप्मना अविध्यत् विद्धास्ताडितान् अकुरुत। ते असुरास्तत एव तमसा विद्धाः पराभवं प्राप्ताः। यत एवं प्रजापतिना सृष्टिसमय एव निराकृता असुराः, तस्मात् कारणात् आहुः अभिज्ञाः कथयन्ति–नैतदस्तीत्यादि। यद्दैवासुरं देवाश्चासुराश्चाधिकृत्य प्रवृत्तं युद्धादिकं यदस्ति तन्नैवास्ति। कुत्र तर्हि दैवासुरस्य व्यापारस्य प्रतिपादनमिति। अन्वाख्याने सृष्ट्यनुक्रमकथनरूपेऽस्मिन्ब्राह्मणे यदिदं देवैः सार्धं असुरसृष्टिप्रतिपादनम्। त्वत् एकं तावत् इदमन्यत्राप्युपपद्यते। अत्र प्रवृत्ते इतिहासे यत् दैवासुरादिप्रतिपादनम्। त्वत् एकमिदम्। तदुभयं नैवास्तीत्यत्र उक्तमर्थं हेतुत्वेन योजयति–ततो ह्येव तानिति। सृष्टिसमय एव पापवेधेन तेषां पराभूतत्वादित्यर्थः।

शब्रासा.

**तस्मादेतदृषिणाऽभ्यनूक्तम्। न त्वं युयुत्से कतमच्चनाहर्न तेऽमित्रो मघवन् कश्चनास्ति। मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रून्ननु पुरा युयुत्स इति॥ १०॥**

उक्तार्थदार्ढ्याय ऋचमपि संवादयति–तस्मादेतदृषिणाऽभ्यनूक्तमिति। ऋषिर्मन्त्रः। स च 'न त्वं युयुत्से' इत्यादिका ऋक्। हे इन्द्र त्वं न युयुत्से युद्धं न कृतवान्, त्वत्प्रतिभटानामसुराणामभावात्। कतमच्च किमपि शत्रुसैन्यं नाहः नावधीः। हे मघवन् इन्द्र, ते तव प्रकृतसृष्टिः(ष्टौ) अमित्रः शत्रुः कश्चन कोऽपि नास्ति। वृत्रादिभिरसुरैः सह यानि तव युद्धान्याहुः, सा मायेत्। इच्छब्दोऽवधारणे। तत् मायामात्रं, न पारमार्थिकम्। तत्कुत इति चेत्, उच्यते। अद्यास्मिन्काले पुरा पूर्वकालेऽपि त्वं शत्रून् न युयुत्से न प्रहृतवानसि।

शब्रासा.

**स यदस्मै देवान् ससृजानाय दिवेवाऽऽस तदहरकुरुत। अथ यदस्मा असुरान्त्ससृजानाय तम इवास तां रात्रिमकुरुत। ते अहोरात्रे॥ ११॥**

अथ प्रकृतसृष्टिमनुसरति—स यदस्मा इति। देवान् सृष्टवते अस्मै प्रजापतये यद्दिवेव प्रकाश इव बभूव सः प्रजापतिः तदहरकुरुत। असुरसृष्टिसमये यत्तमः आसीत् तां रात्रिमकुरुत। एवं देवासुरसृष्टिभ्यामेव ते अहोरात्रे सृष्टे भवत इत्यर्थः। शब्रासा.

**स ऐक्षत प्रजापतिः सर्वं वा अत्सारिषं य इमा देवता असृक्षीति। स सर्वत्सरोऽभवत्। सर्वत्सरो ह वै नामैतद्यत्संवत्सर इति। स यो हैवमेतत्संवत्सरस्य सर्वत्सरत्वं वेद। यो हैनं पाप्मा मायया त्सरति न हैनं सोऽभिभवति। अथ यमभिचरत्यभि हैवैनं भवति य एवमेतत्संवत्सरस्य सर्वत्सरत्वं वेद॥ १२॥**

अहोरात्रसमुदायरूपस्य संवत्सरस्य सृष्टिमाह—स ऐक्षतेति। ईक्षणप्रकारमाह—सर्वं वा इति। यः अहं इमा देवताः असृक्षि सृष्टवानस्मि सोऽहं सर्वं स्रष्टव्यं कृत्स्नं जगत् अत्सारिषं छद्मगत्या प्राप्तवानस्मि। यस्मादेव सर्वं वा अत्सारिषं इत्यवबोधयत् तस्मात् सः प्रजापतिः सर्वत्सरः अभवत्। स एव हि परोक्षवृत्त्या संवत्सर इत्युच्यते। एतद्वेदनस्य फलमाह—स यो हैवमिति। एवं उक्तप्रकारेण। यो हैनमित्यादि। यः खलु एनं वेदितारं पाप्मा पापरूपया मायया मिथ्याकरणशक्त्या त्सरति कौटिल्येन गच्छति, स एनं वेदितारं नैवाभिभवति बाधितुं शक्नोति। अथ वेदिता यं शत्रुं बाधितुमिच्छति, तमेनं शत्रुं स्वयमभिभवत्येव। य एवमेतदिति प्रतिज्ञातार्थनिगमनम्। शब्रासा.

**स ऐक्षत प्रजापतिरिमं वा आत्मनः प्रतिमामसृक्षि यत्संवत्सरमिति। तस्मादाहुः प्रजापतिः संवत्सर इति। आत्मनो ह्येतं प्रतिमामसृजत। यद्वेव चतुरक्षरः संवत्सरः। चतुरक्षरः प्रजापतिः। तेनो हैवास्यैष प्रतिमा॥ १३॥**

संवत्सरप्रजापत्योरैकात्म्यं प्रतिपादयति—स ऐक्षतेत्यादिना। इमं खलु संवत्सरात्मनो मदीयशरीरस्य प्रतिमा प्रतिकृतिं असृक्षि सृष्टवानस्मि यत्संवत्सरमिति। इति यस्मात् ऐक्षत पर्यालोचितवान् तस्मात्संवत्सरस्य प्रजापतिरूपप्रकृतित्वात् प्रजापतिः संवत्सरः इति तादात्म्यमाहुः। आत्मनो ह्येतमिति प्रागुक्ततादात्म्यकारणयोजनम्। कथमसौ प्रजापतेः प्रतिमेति तत्राह—यद्वेवेति। यस्मादेव कारणात् तदुभयवाचकयोः संवत्सरप्रजापतिशब्दयोः चतुरक्षरत्वलक्षणं साम्यमस्ति, तेनैव कारणेनास्य प्रजापतेः एषः संवत्सरः प्रतिमा प्रतिबिम्बम्। शब्रासा.

**ता वा एताः प्रजापतेरधिदेवता असृज्यन्त। अग्निरिन्द्रः सोमः परमेष्ठी प्राजापत्यः॥ १४॥**

अथाधिदेवताना सृष्टिमाह—ता वा एता इति। ताः प्रसिद्धाः एताः वक्ष्यमाणा अधिदेवताः आधिक्यगुणोपेताः सर्वोत्कृष्टा देवताः प्रजापतेरसृज्यन्त। काः पुनस्ता इति, तत्राह—अग्निरिन्द्र इति। प्राजापत्यः इति परमेष्ठिनो विशेषणम्। शब्रासा.

**ताः सहस्रायुषो जज्ञिरे। ता यथा नद्यै पारं परापश्येदेवं स्वस्यायुषः पारं पराचख्युः॥ १५॥**

ताः अपि प्रजापतिरिव सहस्रसंवत्सरजीविन्यः जज्ञिरे। प्रजापतिवत् ताः अग्न्याद्या देवता अपि नद्याः पारमिव स्वकीयस्य सहस्रसंवत्सरपरिमितस्यायुषः अवसानं ददृशुः। शब्रासा.

**ता अर्चन्त्यः श्राम्यन्त्यश्चेरुः। तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्णमासौ। ताभ्यामयजत। ताभ्यामिष्ट्वाऽकामयताहमेवेदं सर्वं स्यामिति। स आपोऽभवत्। आपो वा इदं सर्वम्। ता यत्परमे स्थाने तिष्ठन्ति। यो हीहाभिखनेदप एवाभिविन्देत्। परमाद्वा एतत्स्थानाद्वर्षति यद्दिवः। तस्मात्परमेष्ठी नाम॥१६॥**

ततस्ता देवता अपि पुरुषार्थं साधयितुमर्थयमानाः प्रजापतिवत् अर्चन्त्यः श्राम्यन्त्यः अर्चनश्रमोपेताः चेरुः वव्रतिरे। ततः अनन्तरं एतं दर्शपूर्णमासाख्यं यज्ञं प्रजापतेः पुत्रः परमेष्ठी अपश्यत्। दृष्ट्वा च ताभ्यामयजत। यागानन्तरं इदं सर्वं जगत् अहमेव स्यामिति सार्वात्म्यं अकामयत। सः प्रथमं आपः अभवत् अबात्मकः अभवत्। ननु कथमस्य सार्वात्म्यं इत्युपपादयति—आपो वा इदं सर्वमिति। इदं सर्वं जगत् अबात्मकम्। तथाहि—ता आपो यस्मात् परमे उत्कृष्टे स्थाने व्योम्नि तिष्ठन्ति। इह पृथिव्या यः खलु अभिखनति अभिखनेत् तत्रापि अप एवाभिविन्देत् अभितो लभेत। ननु कथं

परमे स्थाने अपामवस्थानमिति, तदाह–परमाद्वा इति। परमादुत्कृष्टात् सूर्यमण्डलाधिष्ठितात् व्योमरूपात् स्थानात् खलु एष पर्जन्यो वर्षति। यद्दिवः आकाशाद्वर्षति तत आपः परमे स्थाने तिष्ठन्ति। तादृग्रूपताप्राप्तेरयमपि परमेष्ठी नाम्ना सपन्नः। शब्रासा.

**स परमेष्ठी प्रजापतिं पितरमब्रवीत्। कामप्रं वा अहं यज्ञमदर्शं तेन त्वा याजयानीति। तथेति। तमयाजयत्। स इष्ट्वाऽकामयताहमेवेदं सर्वं स्यामिति। स प्राणोऽभवत्। प्राणो वा इदं सर्वम्। अयं वै प्राणो योऽयं पवते। स प्रजापतिः। तस्य दृष्टिर्यदेव वेदेत्थाद्वातीति। यद्वै किंच प्राणि स प्रजापतिः। स यो हैवमेतां प्रजापतेर्दृष्टिं वेदाऽऽविरिव हैव भवति ॥१७॥**

इत्थ परमेष्ठी स्वय सार्वात्म्यं प्राप्य पितुरपि तत्प्राप्तये एतेन अयाजयत् इत्याह–स परमेष्ठीति। कामप्र कामान् पूरयतीति कामप्रः। तेन त्वेत्यादि। स्पष्टार्थम्। प्राणो वा इद सर्वमिति। सूत्रात्मतया सर्वाधारत्वात् तस्य सर्वात्मकत्वम्। यः अयं बाह्यो वायुः अन्तरिक्षे पवते संचरति अयमेव सः प्राणः। स एव प्रजापतिः। तस्य प्रजापतेः दृष्टिः प्राणवायुः शब्दस्पर्शादिविषयसाक्षात्कारहेतुत्वात्। यदेवेत्यादि। यत्खलु वस्तु इत्थात् अनेन प्रकारेण असौ प्राणवायुः वातीति वर्तते इति वेद जानाति। किमपि तत्सर्वं प्राणि प्राणवत् भवति। अतः प्राणिसघः प्रजापतिः। वेदितुः फलमाह–स यो हैवमेतामिति। इत्थ प्राणरूपा प्रजापतेर्दृष्टिं यः वेद स आविरिव भवति, प्रकाशते एवेत्यर्थः। शब्रासा.

**स प्रजापतिरिन्द्रं पुत्रमब्रवीत्। अनेन त्वा कामप्रेण यज्ञेन याजयानि येन मामिदं परमेष्ठ्ययीयजदिति। तथेति। तमयाजयत्। स इष्ट्वाऽकामयताहमेवेदं सर्वं स्यामिति। स वागभवत्। वाग्वा इदं सर्वम्। तस्मादाहुरिन्द्रो वागिति ॥१८॥**

प्राणरूपताप्राप्तिरिव वाग्रूपताप्राप्तिरपि दर्शपूर्णमासयोः फलमित्याह–स प्रजापतिरित्यादिना। अयीयजत् याजितवान्। स्पष्टमन्यत्। स वागभवदिति। सः सर्वजगदात्मकोऽहं स्यामिति कामयमानः इन्द्रः वाग्रूपः अभवत्। वागात्मकं हि इदं सर्वं जगत्, शब्दानुविद्धतया प्रतीयमानत्वात्। तस्मादेव कारणात् इन्द्र एव वागात्मक इत्याहुः। शब्रासा.

**स इन्द्रोऽग्नीषोमौ भ्रातरावब्रवीत्। अनेन वां कामप्रेण यज्ञेन याजयानि येन मामिदं पिता प्रजापतिरयीयजदिति। तथेति। तावयाजयत्। ताविष्ट्वाऽकामयेतामावमेवेदं सर्वं स्यावेति। तयोरन्नाद एवान्यतरोऽभवत्। अन्नमन्यतरः। अन्नाद एवाग्निरभवत्। अन्नं सोमः। अन्नादश्च वा इदं सर्वमन्नं च ॥१९॥**

अन्नादादिरूपफलप्राप्तिहेतुतामाह–स इन्द्रोऽग्नीषोमावित्यादिना। स्पष्टोऽर्थः। तयोरन्नाद एवान्यतर इत्युक्तमेवार्थं विशदयति–अन्नाद एवाग्निरभवदिति। अन्नमत्तीत्यन्नादः। अग्निरेव सर्वप्राणिषु जाठररूपेण वर्तमानः सन् अन्नादः अभवत्। सोमस्तु रसात्मकत्वात् ओषधिवनस्पतिषु प्रविष्टः सन् कृत्स्नान्नरूपः अभवत्। उभयोः कृत्स्नजगदात्मकत्वमाह–अन्नादश्च वा इद सर्वमिति। शब्रासा.

सृष्ट्यादौ ब्रह्म, ततो देवा जाता१, तेन प्रत्ययार्थं अमृतत्वार्थं च नामरूपे सृष्टे

**ब्रह्म वा इदमग्र आसीत्। तद्देवानसृजत। तद्देवान् सृष्ट्वैषु लोकेषु व्यारोहयत्। अस्मिन्नेव लोकेऽग्निं वायुमन्तरिक्षे दिव्येव सूर्यम् ॥ १ ॥**

इत्थ सामिधेनीप्रसङ्गेनागतान् अनुवाक्यावषट्काराहुतिरूपान् पदार्थान् स्तुत्वा अथ सामिधेन्यनन्तरभाविनौ आघारौ नामरूपात्मना स्तोतुं तत्सृष्टिं आख्यायिकया प्रतिपादयति–ब्रह्म वा इदमिति। इदं नामरूपात्मक दृश्यं जगत् अग्रे सृष्टेः पूर्वं सत्यज्ञानादिफललक्षणं मायाशक्तिसहित अद्वितीय यज्जगत्कारणं ब्रह्म तदेव आसीत्, वटबीजे वटवृक्षवत् तदन्तर्लीनमासीदित्यर्थः। तद्ब्रह्म भूतभौतिकात्मक जगत् प्रथमं सृष्ट्वा तदधिष्ठातॄन् देवानसृजत। सृष्ट्वा च तान् एषु पृथिव्यादिलोकेषु विभज्यारोहयत्। कस्मिन् लोके कमिति तदाह–अस्मिन्नेवेति। अग्निं अस्मिन् लोके लोकाधिष्ठातृत्वेन विभज्यारोहयत्। शब्रासा.

(१) शब्रा. ११।२।३।१–६.

**अथ येऽत ऊर्ध्वा लोकाः । तद्या अत ऊर्ध्वा देवताः। तेषु ता देवता व्यारोहयत्। स यथा हैवेम आविर्लोका इमाश्च देवताः। एवमु हैव त आविर्लोकास्ताश्च देवताः। येषु ता देवता व्यारोहयत् ॥२॥**

एवमुपरितनलोकानामपि अधिष्ठातृदेवतासंबन्धसद्भावात् लोकत्रयवत् प्रकाशमानत्व साधारण इत्याह—स यथा हैवेति । सः इति लिङ्गव्यत्ययः । तद्ब्रह्मेत्यर्थः । यथैव खलु एते पृथिव्यादिलोकाः इमाः अग्न्यादयः देवताश्च आविः प्रकाशमानाः अस्माक अपरोक्षा भवन्ति, एवमेव खलु एते ऊर्ध्वादिलोकाः तदधिष्ठातृदेवताश्च आविः प्रकाशन्ते । तच्छब्दवाच्य निर्दिशति—येष्विति । शब्रासा.

**अथ ब्रह्मैव परार्द्धमगच्छत् । तत्परार्द्धं गत्वैक्षत कथं न्विमान् लोकान् प्रत्यवेयामिति । तद्द्वाभ्यामेव प्रत्यवैद्रूपेण चैव नाम्ना च । स यस्य कस्य च नामास्ति तन्नाम । यस्यो अपि नाम नास्ति, यद्वेद रूपेणेदंरूपमिति तद्रूपम् । एतावद्वा इदं यावद्रूपं चैव नाम च ॥ ३ ॥**

अथ देवताना व्यारोहणानन्तर तत् ब्रह्मैव परार्द्धं सत् उत्कृष्टं सर्वलोकावधिभूतं सत्यं सत्यलोकाख्य स्थानं अगच्छत् प्राप्नोत् । आत्मीय स्थान गत्वा ऐक्षत व्यचारयत्, केन खलु प्रकारेण इमान् पृथिव्यादीन् सर्वान् लोकान् प्रत्यवेयां प्रत्येक प्राप्नुयामिति । एव विचार्य द्वाभ्यामेव प्रत्यवैत् व्याप्नोत् । ते द्वे एव दर्शयति—रूपेण चैव नाम्ना चेति । तयोर्नामरूपयोः स्वरूपमाह—स यस्य कस्य चेति । सः इति पूर्ववत् वाक्यालङ्कारे। यस्य कस्यचित् वस्तुनः नाम अस्ति घटः पटः इत्येवमादिवाचकः शब्दो विद्यते तन्नाम । तथा यस्य वस्तुनः नाम नास्ति, तदभावे इदंरूपमिति स्वरूपेण यत् वस्तु वेद पुरुषो जानाति, तत् नामशून्य स्वरूपेण ज्ञायमान वस्तु रूपम् । इद कृत्स्न जगत् एतावदेव परिमाणतः नाम च रूपं चैव इति यावत् । तावदेव कृत्स्नं जगत्, अन्तर्भूतत्वात् । न खलु आकारशून्य नामशून्यं च वस्तु संभवतीत्यर्थः । शब्रासा.

**ते हैते ब्रह्मणो महती अभ्वे । स यो हैते ब्रह्मणो महती अभ्वे वेद महद्धैवाभ्वं भवति ॥४॥**

तयोर्नामरूपयोर्गुणं विधाय तद्वेदन प्रशंसति—ते हैते इति । जगत्कारणस्य ब्रह्मणः ते एते नामरूपे महती अभ्वे समधिकतरस्वरूपे । अभ्वमिति रूपनाम । महद्धैवाभ्वं भवतीति । अभ्वगुणस्य वेदिता स्वयमपि तादृक्ब्रह्मसबन्धि महदभ्वं व्यापकं रूपं भवति । 'त यथायथोपासते तदेव भवति' (शब्रा. १०।५।२।२०) इति श्रुतेः । शब्रासा.

**ते हैते ब्रह्मणो महती यक्ष्ये । स यो हैते ब्रह्मणो महती यक्ष्ये वेद महद्धैव यक्ष्यं भवति । तयोरन्यतरत् ज्यायो रूपमेव । यद्यपि नाम रूपमेव तत् । स यो हैतयोर्ज्यायो वेद ज्यायान् ह तस्माद्भवति यस्मात् ज्यायान् बुभूषति ॥ ५ ॥**

यक्ष्यगुणेऽप्येव योज्यम् । यक्ष्ये पूज्यस्वरूपे । 'स यो हैव महद्यक्ष्य प्रथमज वेद' (बृउ. ५।४) इत्यादौ तथैव व्याख्यानात् । तत्र रूपस्याधिक्यमाह—तयोरन्यतरज्ज्यायो रूपमिति । ज्यायः वृद्धतरम् । ज्यायस्त्व प्रतिपादयति—यद्यपि नामेति । यत् यस्यापि वस्तुनो नाम अस्ति तद्वस्तु नाम इत्युभयमपि रूपमेव भवति, साकारत्वात् । अतो नाम्नोऽपि रूपानुप्रवेशात् रूपमेव ज्याय इत्यर्थः । एतद्वेदितुः फलमाह—स यो हैतयोरिति । एतयोः नामरूपयोः । यस्मात् पुरुषः ज्यायान् बुभूषति ज्येष्ठः अधिकतरः भवितुमिच्छति । गतमन्यत् ।

शब्रासा.

**मर्त्या ह वा अग्रे देवा आसुः । स यदैव ते ब्रह्मणाऽऽपुः अथामृता आसुः । स यं मनस आधारयति । मनो वै रूपम् । मनसा हि वेदेदं रूपमिति । तेन रूपमाप्नोति । अथ यं वाच आधारयति । वाग्वै नाम । वाचा हि नाम गृह्णाति । तेनो नामाप्नोति । एतावद्वा इदं सर्वं यावद्रूपं चैव नाम च । तत्सर्वमाप्नोति । सर्वं वा अक्षय्यम् । एतेनो हास्याक्षय्यं सुकृतं भवति । अक्षय्यो लोकः ॥ ६ ॥**

एतन्नामरूपोपलक्षितव्यापकब्रह्मस्वरूपप्राप्तिरेवामृतत्वकारणमित्याह—मर्त्या ह वा इति । अग्रे नामरूपाभ्या व्यापनात्पूर्वं पृथिव्यादिलोकवर्तिनः अग्न्याद्याः देवाः मर्त्याः मरणधर्माणः आसुः बभूवुः । यदैव खलु ते ब्रह्मणा

नामरूपाभ्यां आपः व्याप्ताः, अथ अनन्तरं ते व्यापकब्रह्मस्वरूपप्राप्त्या अमृताः अमरणधर्माणः बभूवुः। अतोऽत्रापि दर्शपूर्णमासयोः ब्रह्मप्राप्त्युपायतया नामरूपात्मकौ आघारौ क्रियेते इति प्रकृतमनुसरति–स य मनस इति। यं प्रथममाघार मनसः मन्त्राहित्येन आत्मनो व्यापारमात्रेणाघारयति तेन उदीरितलक्षणं रूपमाप्नोति। एतत्सिद्धये मनसो रूपतादात्म्य प्रतिपादयति–मनो वै रूपमिति। हि यस्मात् इद वस्तु एवंरूप एवमाकारमिति मनसा वेद जानाति, तस्मात् वेद्यस्य रूपस्य तद्वेदनकरणस्य मनसः तादात्म्योपचार इत्यर्थः।

नामरूपात्मकस्य प्रपञ्चस्य मध्ये प्रथमाघारेण रूपप्राप्तिरुक्ता, तथैव नामावाप्तिरपि द्वितीयाघारेण भवतीत्याह–अथ य वाच आघारयतीति। वाचः वाङ्निर्वर्त्येन मन्त्रेण यमाघारयति, तेनैव ब्रह्मणः सम्बन्धिनामप्रपञ्चमाप्नोति। करणभूताया वाचो नाम्नश्च तादात्म्यमुक्तार्थसिद्धये प्रतिपादयति–वाग्वै नामेति। वागिन्द्रियमेव हि नाम नामधेयरूपः शब्दः। निर्वर्त्यनिर्वर्तकयोरभेदोपचारादित्यर्थः। इत्थ नामरूपावाप्तिद्वारा यजमानस्य कृत्स्नजगत्प्राप्तिरेव भवतीत्याह— एतावद्वा इति। नामरूपात्मकमेवेद कृत्स्न जगत्, अतस्तदवाप्त्या सर्व जगदाप्नोतीत्यर्थः। सर्वावाप्तिफलमाह–सर्व वा अक्षय्यमिति। यत् सर्व जगत् तदक्षय्यं क्षेतुमशक्यम्। अतः अक्षय्यसर्वजगत्प्राप्त्या यजमानस्य सुकृत पुण्यं तत्फलभूतो लोकश्च उभय क्षयरहितं भवतीत्यर्थः।

शब्रासा.

सृष्ट्यादौ ब्रह्म, ब्रह्मण आपः जाताः, अप्सु
वायुरूपो भृगु, स एवाऽथर्वाऽभवत्,
प्रजापतेरथर्वण· मन्त्रकर्तारो जाता·

ओं[1] ब्रह्म ह वा इदमग्र आसीत् स्वयं त्वेकमेव। तदैक्षत। महद्वै यक्षं तदेकमेवास्मि। हन्ताहं मदेव मन्मात्रं द्वितीयं देवं निर्मम इति। तदभ्यश्राम्यदभ्यतपत् समतपत्। तस्य श्रान्तस्य तप्तस्य संतप्तस्य ललाटे स्नेहो यदार्द्र्यमाजायत तेनानन्दत्। तदब्रवीन्महद्वै यक्षं सुवेदमविदामह इति। तद्यदब्रवीन्महद्वै यक्षं सुवेदमविदामह इति। तस्मात् सुवेदोऽभवत्। तं वा एतं सुवेदं सन्तं स्वेद इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः॥ १॥

स भूयोऽश्राम्यत्। भूयोऽतप्यत्। भूय आत्मानं समतपत्। तस्य श्रान्तस्य तप्तस्य संतप्तस्य सर्वेभ्यो रोमगर्तेभ्यः पृथक् स्वेदधाराः प्रास्यन्दन्त। ताभिरनन्दत्। तदब्रवीदाभिर्वा अहमिदं सर्वं धारयिष्यामि यदिदं किञ्च। आभिर्वा अहमिदं सर्वं जनयिष्यामि यदिदं किञ्च। आभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किञ्चेति। तद्यदब्रवीदाभिर्वा अहमिदं सर्वं धारयिष्यामि यदिदं किञ्चेति। तस्माद्धारा अभवन्। तद्धाराणां धारात्वं यच्चासु ध्रियते। तद्यदब्रवीदाभिर्वा अहमिदं सर्वं जनयिष्यामि यदिदं किञ्चेति। तस्माज्जाया अभवन्। तज्जायानां जायात्वं यच्चासु पुरुषो जायते। यच्च पुत्रः पुन्नामनरकमनेकशततारं तस्मात् त्रातीति पुत्रः। तत् पुत्रस्य पुत्रत्वम्। तद्यदब्रवीदाभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किञ्चेति। तस्मादापो अभवन्। तदपामप्त्वम्। आप्नोति वै स सर्वान् कामान् यान् कामयते॥ २॥

ता अपः सृष्ट्वाऽन्वैक्षत। तासु स्वां छायामपश्यत्। तामस्येक्षमाणस्य स्वयं रेतोऽस्कन्दत्। तदप्सु प्रत्यतिष्ठत्। तास्तत्रैवाभ्यश्राम्यदभ्यतपत् समतपत्। ताः श्रान्तास्तप्ताः संतप्ताः सार्द्धमेव रेतसा द्वैधमभवन्। तासामन्या अन्यतरा अतिलवणा अपेया अस्वाद्व्यः। ता अशान्ता रेतः समुद्रं वृत्वाऽतिष्ठन्। अथेतराः पेयाः स्वाद्व्यः शान्ताः। तास्तत्रैवाभ्यश्राम्यदभ्यतपत् समतपत्। ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः संतप्ताभ्यो यद्रेत आसीत्तदभृज्यत। यदभृज्यत तस्माद्भृगुः समभवत्। तद्भृगोर्भृगुत्वम्। भृगुरिव वै स सर्वेषु लोकेषु भाति य एवं वेद॥ ३॥

स भृगुं सृष्ट्वाऽन्तरधीयत। स भृगुः सृष्टः प्राङैजत। तं वागन्ववदद्वायो वायो इति। स न्यवर्तत। स दक्षिणां दिशमैजत। तं वागन्वव-

(१) गोब्रा. १।१।१-१२.

दन्मातरिश्वन् मातरिश्वन्निति । स न्यवर्तत । स प्रतीचीं दिशमैजत । तं वागन्ववदत्पवमान पवमानेति । स न्यवर्तत । स उदीचीं दिशमैजत । तं वागन्ववदद्वात वातेति। तमब्रवीन्नन्वविदामह इति। नहीति। अथार्वाङेनमेतास्वेवाप्स्वन्विच्छेति। तद्‍यदब्रवीदथार्वाङेनमेतास्वेवाप्स्वन्विच्छेति तदथर्वोऽभवत्। तदथर्वणोऽथर्वत्वम्। तस्य ह वा एतस्य भगवतोऽथर्वण ऋषेर्यथैव ब्रह्मणो लोमानि यथाऽङ्गानि यथा प्राण एवमेवास्य सर्व आत्मा समभवत्। तमथर्वाणं ब्रह्माऽब्रवीत् प्रजापतेः प्रजाः सृष्ट्वा पालयस्वेति । तद्यदब्रवीत् प्रजापतेः प्रजाः सृष्ट्वा पालयस्वेति तस्मात् प्रजापतिरभवत्। तत् प्रजापतेः प्रजापतित्वम् । अथर्वा वै प्रजापतिः । प्रजापतिरिव वै स सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥

तमथर्वाणमृषिमभ्यश्राम्यदभ्यतपत्समतपत् । तस्माच्छ्रान्तात्तप्तात्संतप्तादशतयानथर्वण ऋषीन्निरमिमतैकर्चान् द्व्यृचांस्तृचांश्चतुर्ऋचान् पञ्चर्चान् षड्‍ऋचान् सप्तर्चानष्टर्चान्नवर्चान्दशर्चानिति । तानथर्वण ऋषीनभ्यश्राम्यदभ्यतपत्समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यो दशतयानाथर्वणानार्षेयान्निरमिमतैकादशान् द्वादशांस्त्रयोदशांश्चतुर्दशान् पञ्चदशान् षोडशान् सप्तदशानष्टादशान्नवदशान् विंशानिति । तानथर्वण ऋषीनाथर्वणांश्चार्षेयानभ्यश्राम्यदभ्यतपत्समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यो यान् मन्त्रानपश्यत्स आथर्वणो वेदोऽभवत् । तमाथर्वणं वेदमभ्यश्राम्यदभ्यतपत्समतपत् । तस्माच्छ्रान्तात्तप्तात्संतप्तादो३मिति मन एवोर्ध्वमक्षरमुदक्रामत् । स य इच्छेत्सर्वैरेतैरथर्वभिश्चाथर्वणैश्च कुर्वीयेत्येतयैव तं महाव्याहृत्या कुर्वीत । सर्वैर्ह वा अस्यैतैरथर्वभिश्चाथर्वणैश्च कृतं भवति य एवं वेद । यश्चैवं विद्वानेवमेतया महाव्याहृत्या कुरुते ॥ ५ ॥

प्रजापतेः पुरुषरूपात्स्वाङ्गेभ्यः लोकत्रयसृष्टिः, ततो वेदा व्याहृतयश्च सृष्टाः

स भूयोऽश्राम्यद्भूयोऽतप्यद्भूय आत्मानं समतपत् । स आत्मन एव त्रीन्लोकान्निरमिमत पृथिवीमन्तरिक्षं दिवमिति । स खलु पादाभ्यामेव पृथिवीं निरमिमतोदरादन्तरिक्षं मूर्ध्नो दिवम् । स तांस्त्रीँल्लोकानभ्यश्राम्यदभ्यतपत्समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यस्त्रीन् देवान् निरमिमताग्निं वायुमादित्यमिति । स खलु पृथिव्या एवाग्निं निरमिमतान्तरिक्षाद्वायुं दिव आदित्यम् । स तांस्त्रीन् देवानभ्यश्राम्यदभ्यतपत् समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यस्त्रीन् वेदान् निरमिमत ऋग्वेदं यजुर्वेदं सामवेदमिति । अग्नेर्ऋग्वेदं वायोर्यजुर्वेदमादित्यात्सामवेदम् । स तांस्त्रीन् वेदानभ्यश्राम्यदभ्यतपत् समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यस्तिस्रो महाव्याहृतीर्निरमिमत भूर्भुवः स्वरिति । भूरित्यृग्वेदाद्भुव इति यजुर्वेदात् स्वरिति सामवेदात् । स य इच्छेत्सर्वैरेतैस्त्रिभिर्वेदैः कुर्वीयेत्येताभिरेव तं महाव्याहृतिभिः कुर्वीत । सर्वैर्ह वा अस्यैतैस्त्रिभिर्वेदैः कृतं भवति य एवं वेद । यश्चैवंविद्वानेवमेताभिर्महाव्याहृतिभिः कुरुते ॥ ६ ॥

वरुणादङ्गिरा ऋषि., तत ऋषय अङ्गिरस , तेभ्यो वेद आङ्गिरस जात.

ता या अमू रेतः समुद्रं वृत्वा अतिष्ठंस्ताः प्राच्यो दक्षिणाच्यः प्रतीच्य उदीच्यः समद्रवन्त । तद्यत्समद्रवन्त तस्मात्समुद्र उच्यते । ता भीता अब्रुवन् भगवन्तमेव वयं राजानं वृणीमह इति । यच्च वृत्वाऽतिष्ठंस्तद्वरणोऽभवत् । त वा एतं वरणं सन्तं वरुण इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । स समुद्रादमुच्यत । स मुच्युरभवत् । तं वा एतं मुच्युं सन्तं मृत्युरित्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । तं वरुणं मृत्युमभ्यश्राम्यदभ्यतपत्समतपत् । तस्य श्रान्तस्य तप्तस्य संतप्तस्य सर्वेभ्योऽङ्गेभ्यो रसोऽक्षरत् । सोऽङ्गरसोऽभवत् । तं वा एतमङ्गरसं सन्तमङ्गिरा इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः ॥ ७ ॥

तमङ्गिरसमृषिमभ्यश्राम्यदभ्यतपत्समतपत् । तस्माच्छ्रान्तात्तप्तात्संतप्ताद्विंशिनोऽङ्गिरस ऋषीन्नि-

रमिमत । तान् विंशिनोऽङ्गिरस ऋषीनभ्यश्राम्यदभ्यतपत्समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यो दशतयानाङ्गिरसानार्षेयान्निरमिमत, षोडशिनोऽष्टादशिनो द्वादशिन एकर्चांस्तृचांश्चतुर्ऋचान् पञ्चर्चान् षडृचान् द्व्यृचान् सप्तर्चानिति । तानङ्गिरस ऋषीनाङ्गिरसांश्चार्षेयानभ्यश्राम्यदभ्यतपत्समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यो यान् मन्त्रानपश्यत्स आङ्गिरसो वेदोऽभवत् । तमाङ्गिरसं वेदमभ्यश्राम्यदभ्यतपत्समतपत् । तस्माच्छ्रान्तात्तप्तात् संतप्ताज्जनदिति द्वैतमक्षरं व्यभवत् । स य इच्छेत्सर्वैरेतैरङ्गिरोभिश्चाङ्गिरसैश्च कुर्वीयेत्येतयैव तं महाव्याहृत्या कुर्वीत । सर्वैर्ह वा अस्यैतैरङ्गिरोभिश्चाङ्गिरसैश्च कृतं भवति य एवं वेद । यश्चैवं विद्वानेवमेतया महाव्याहृत्या कुरुते ॥ ८ ॥

स ऊर्ध्वोऽतिष्ठत् । स इमाँल्लोकान् व्यष्टभ्नात् । तस्मादङ्गिरसोऽधीयान ऊर्ध्वस्तिष्ठति । तद्व्रतम् । स मनसा ध्यायेद्यद्वा अहं किञ्चन मनसा ध्यास्यामि तथैव तद्भविष्यति । तद्ध स्म तथैव भवति । तदप्येतदृचोक्तम् । श्रेष्ठो ह वेदस्तपसोऽधिजातो ब्रह्मज्यानां क्षितये संबभूव । ऋच्यृग्भूतं (ऋज्यद्भूतं) यदसृज्यतेदं निवेशनमनृणं दूरमस्येति । ता वा एता अङ्गिरसां जामयो यन्मेनयः करोति मेनिभिर्वीर्यं य एवं वेद ॥ ९ ॥

वेदपञ्चकसृष्टि

स दिशोऽन्वैक्षत प्राचीं दक्षिणां प्रतीचीमुदीचीं ध्रुवामूर्ध्वामिति । तास्तत्रैवाभ्यश्राम्यदभ्यतपत्समतपत् । ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः संतप्ताभ्यः पञ्च वेदान्निरमिमत सर्पवेदं पिशाचवेदमसुरवेदमितिहासवेदं पुराणवेदमिति । स खलु प्राच्या एव दिशः सर्पवेदं निरमिमत । दक्षिणस्याः पिशाचवेदम् । प्रतीच्या असुरवेदम् । उदीच्या इतिहासवेदम् । ध्रुवायाश्चोर्ध्वायाश्च पुराणवेदम् । स तान् पञ्च वेदानभ्यश्राम्यदभ्यतपत्समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यः पञ्च महाव्याहृतीर्निरमिमत वृधत् करद्रुहन्महत् तदिति । वृधदिति सर्पवेदात् । करदिति पिशाचवेदात् । रुहदित्यसुरवेदात् । महदितीतिहासवेदात् । तदिति पुराणवेदात् । स य इच्छेत्सर्वैरेतैः पञ्चभिर्वेदैः कुर्वीयेत्येताभिरेव तं महाव्याहृतिभिः कुर्वीत । सर्वैर्ह वा अस्यैतैः पञ्चभिर्वेदैः कृतं भवति य एवं वेद । यश्चैवं विद्वानेवमेताभिर्महाव्याहृतिभिः कुरुते ॥ १० ॥

महाव्याहृतिसृष्टिः

स आवतश्च परावतश्चान्वैक्षत । तास्तत्रैवाभ्यश्राम्यदभ्यतपत्समतपत् । ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः संतप्ताभ्यः शमित्यूर्ध्वमक्षरमुदक्रामत् । स य इच्छेत्सर्वाभिरेताभिरावद्भिश्च परावद्भिश्च कुर्वीयेत्येतयैव तं महाव्याहृत्या कुर्वीत । सर्वाभिर्ह वा अस्यैताभिरावद्भिश्च परावद्भिश्च कृतं भवति य एवं वेद । यश्चैवं विद्वानेवमेतया महाव्याहृत्या कुरुते ॥ ११ ॥

प्रजापते पुरुषरूपात् चन्द्रमोनक्षत्रादीना एकविंशति-संस्थयज्ञस्य च सृष्टि.

स भूयोऽश्राम्यत् । भूयोऽतप्यत् । भूय आत्मानं समतपत् । स मनस एव चन्द्रमसं निरमिमत नखेभ्यो नक्षत्राणि लोमभ्य ओषधिवनस्पतीन् क्षुद्रेभ्यः प्राणेभ्योऽन्यान् बहून् देवान् । स भूयोऽश्राम्यत् । भूयोऽतप्यत् । भूय आत्मानं समतपत् । स एतं त्रिवृतं सप्ततन्तुमेकविंशतिसंस्थं यज्ञमपश्यत् । तदप्येतदृचोक्तम् । अग्निर्यज्ञं त्रिवृतं सप्ततन्तुमिति । अथाप्येष प्राक्रीडितः श्लोकः प्रत्यभिवदति सप्त सुत्याः सप्त च पाकयज्ञा इति ॥ १२ ॥

अप्सु प्रजापते. कामात् सर्वसृष्टि.

*आपो वा इदमासन्त्सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामः समवर्तत । इद१ँ सृजेयमिति । तस्माद्यत्पुरुषो मनसाऽभिगच्छति । तद्वाचा वदति । तत्कर्मणा करोति । तदेपाऽभ्यनूक्ता । कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति

* व्याख्यानं 'आप.' इत्यस्मिन्प्रकरणे १५८–१६१ पृष्ठेषु द्रष्टव्यम् ।

(१) तैब्रा. १।२३।१–९.

निरविन्दन्। हृदि प्रतीष्या कवयो मनीषेति। उपैनं तदुपनमति। यत्कामो भवति। य एवं वेद। स तपोऽतप्यत। स तपस्तप्त्वा। शरीरमधूनुत। तस्य यन्मा५ँसमासीत्। ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्। ये नखाः। ते वैखानसाः। ये वालाः। ते वालखिल्याः। यो रसः। सोऽपाम्। अन्तरतः कूर्मं भूत५ँ सर्पन्तम्। तमब्रवीत्। मम वै त्वङ्मा५ँसा। समभूत्। नेत्यब्रवीत्। पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुषत्वम्। स सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्। भूत्वोदतिष्ठत्। तमब्रवीत्। त्वं वै पूर्व५ँ समभूः। त्वमिदं पूर्वः कुरुष्वेति। स इत आदायापः। अञ्जलिना पुरस्तादुपादधात्। एवा ह्येवेति। तत आदित्य उदतिष्ठत्। सा प्राची दिक्। अथारुणः केतुर्दक्षिणत उपादधात्। एवा ह्यग्न इति। ततो वा अग्निरुदतिष्ठत्। सा दक्षिणा दिक्। अथारुणः केतुः पश्चादुपादधात्। एवा हि वायो इति। ततो वायुरुदतिष्ठत्। सा प्रतीची दिक्। अथारुणः केतुरुत्तरत उपादधात्। एवाहीन्द्रेति। ततो वा इन्द्र उदतिष्ठत्। सोदीची दिक्। अथारुणः केतुर्मध्य उपादधात्। एवा हि पूषन्निति। ततो वै पूषोदतिष्ठत्। सेयं दिक्। अथारुणः केतुरुपरिष्टादुपादधात्। एवा हि देवा इति। ततो देवमनुष्याः पितरः। गन्धर्वाप्सरसश्चोदतिष्ठन्। सोर्ध्वा दिक्। या विप्रुषो वि परापतन्। ताभ्योऽसुरा रक्षा५ँसि पिशाचाश्चोदतिष्ठन्। तस्मात्ते पराभवन्। विप्रुड्भ्यो हि ते समभवन्। तदेषाऽभ्यनूक्ता। आपो ह यद्बृहतीर्गर्भमायन्। दक्षं दधाना जनयन्तीः स्वयंभुम्। तत इमेऽध्यसृज्यन्त सर्गाः। अद्भ्यो वा इद५ँ समभूत्। तस्मादिद५ँ सर्वं ब्रह्म स्वयंभ्विति। तस्मादिद५ँ सर्व५ँ शिथिलमिवाध्रुवमिवाभवत्। प्रजापतिर्वाव तत्। आत्मनाऽऽत्मानं विधाय। तदेवानुप्राविशत्। तदेषाऽभ्यनूक्ता। विधाय लोकान् विधाय भूतानि। विधाय सर्वाः प्रदिशो दिशश्च। प्रजापतिः प्रथमजा ऋतस्य। आत्मनाऽऽत्मानमभिसंविवेशेति। सर्वमेवेदमाप्त्वा। सर्वमवरुध्य। तदेवानुप्रविशति। य एवं वेद॥



## शारीरम्

साङ्गं शरीरम्

चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरम् ।
द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्समम् ॥
उरश्च पृष्ठश्च करौ च बाहू जङ्घे चोरू उदरं शिरश्च ।
रोमाणि मांसं रुधिरास्थिमज्जमेतच्छरीरं जलबुद्‌बुदोपमम् ॥
भ्रुवौ ललाटे च तथा च कर्णौ हनू कपालौ छुबुकस्तथा च
ओष्ठौ च दन्ताश्च तथैव जिह्वा मे तच्छरीरं मुखरत्नकोशम् ॥

चक्षु प्राणात्मशरीररूपो भोक्ता

सूर्यो मे चक्षुर्वातः प्राणोऽन्तरिक्षमात्मा पृथिवी शरीरम् ।
अस्तृतो नामाहमयमस्मि स आत्मानं नि दधे द्यावापृथिवीभ्यां गोपीथाय ॥

प्राणापानचक्षु.श्रोत्राऽक्षितिक्षितिव्यानोदानवाङ्मनोरूपदेवाः मन्युसहकृता. संकल्पजन्याकूतिमावहन्ति ब्रह्मरूपज्येष्ठवरं प्रति, ब्रह्म च तपःकर्मभ्या सहकृतं तिष्ठति

* यन्मन्युर्जायामावहत् संकल्पस्य गृहादधि ।
क आसं जन्याः के वराः क उ ज्येष्ठवरोऽभवत् ॥

अनेन च सूक्तत्रयेण षाट्कौशिकस्य शरीरस्य मध्ये आत्मत्वेन प्रविष्ट ब्रह्म उपदेक्ष्यन्नुपलब्ध्यधिकरणभूतस्य तस्य शरीरस्य तत्साधनभूतानामिन्द्रियाणा च देवाना प्रश्नप्रतिवचनरूपेण उत्पत्तिमभिधित्सुः तदुपायभूता सृष्टिं प्रश्नप्रतिवचनाभ्यामुपोद्‌घातयति—'यन्मन्युः' इति द्व्यृचेन । स्वमहिमप्रतिष्ठस्य परब्रह्मणः सत्त्वरजस्तमोगुणात्मिकाया मायाशक्तेश्च प्राणिकर्मपरिपाकजनितसम्बन्धवशाज्जायमाना 'सोऽकामयत, बहु स्या प्रजायेय' ( तैउ. २।६ ) इत्यादिश्रुतिप्रतिपाद्या या पारमेश्वरी सिसृक्षावस्था सा लौकिकविवाहत्वेन रूप्यते । यत् यदा मन्युः । मन्यते सर्व जानातीति मन्युः निरावरणज्ञान ईश्वरः । अत एव तस्य सर्वदेवतात्मकत्वमाम्नायते—'मन्युर्भगो मन्युरेवास देवः । मन्युर्होता वरुणो विश्ववेदाः' ( तैब्रा. २।४।१।११ ) इति । स जाया आवहत् । जायतेऽस्या सर्व जगदिति जाया सिसृक्षावस्थापन्ना पारमेश्वरी मायाशक्तिः । तामाभिमुख्य प्रापयत् भार्यात्वेन अभ्यमन्यतेत्यर्थः । लोके हि जाया कस्यचित् श्वशुरस्य गृहादानीयते । तद्दर्शयति—सकल्पस्येति । 'सोऽकामयत बहु स्या प्रजायेय' इति प्राथमिक ईश्वरकृतः सकल्पः । तस्य गृहात् आवासात् । तद्वशादेव ह्येषा सिसृक्षावस्था समजायत इत्येव व्यपदिश्यते । तदा तस्मिन् जायाया आवहने जन्याः जनसबन्धिनो बान्धवा वधूवरपक्षीयाः के आसन् । सृष्टेः प्राक् कस्यचिदपि अभावादेवं प्रश्नः । के वा वराः कन्यावरणस्य कर्तारः । को नाम तस्मिन् समये ज्येष्ठवरः प्रधानभूतो वरः उद्वाहकर्ता अभवत् । अत्रा.

तपश्चैवास्तां कर्म चान्तर्महत्यर्णवे ।
त आसं जन्यास्ते वरा ब्रह्म ज्येष्ठवरोऽभवत् ॥

तस्मिन्सृष्टिसमये स्रष्टुः परमेश्वरस्य तपः स्रष्टव्यपर्यालोचनात्मकम् । 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमय तपः' ( मुउ. १।१।९ ) इति श्रुतेः । तस्य कर्म च प्राणिभिरनुष्ठित पुण्यापुण्यात्मक सुखदुःखफलोन्मुख परिपक्व कर्म च आस्ता अभवताम् । एवकारेण तदुभयव्यतिरिक्तस्य सत्ता निवार्यते । तपःकर्मणी एव सम्यगुपकरणत्वेन तस्मिन्समयेऽवस्थिते इत्यर्थः । श्रूयते हि—'तपसा चीयते ब्रह्म' ( मुउ. १।१।८ ), 'स तपोऽतप्यत, स तपस्तप्त्वा इद सर्वमसृजत' ( तैउ. २।६ ) इति । तपःकर्मणोः सत्ताया आधार निर्दिशति—महति प्रभूते अर्णवे समुद्रे प्रलयकालीने अन्तः मध्ये । 'आपो वा इदमग्रे सलिलमासीत्' ( तैब्रा. १।१।३।५ ) इति हि ब्राह्मणम् । अर्णांसि उदकानि विद्यन्ते अस्मिन्नि-

---

* इद सूक्तं निगूढार्थं दुरधिगम्य प्रतीयते । शरीरस्वरूपप्रतिपादकत्वं तु स्पष्टमस्य । शरीरनिरूपणपर अन्यदपि सूक्तं अस. १०।२ ( पृ. २४४ ) अत्रानुसंधेयम् ।

(१) ऋसं. ( खिल ) २।१२.

(२) असं. ५।९।७; कासं. ३७।१५ (४४) ( सूर्यो मे चक्षुर्वातो मे प्राणोऽस्तृतो नामाहमस्मि स इदं द्यावापृथिव्योरात्मान परिददे ॥ ).

(३) असं. ११।१०।१-३४.

त्यर्णवः। अनयोरेव तपःकर्मणोर्वस्त्वन्तराभावात् व्यक्तिबाहुल्यबहुत्वमुपचर्य कृतस्य प्रश्नस्य प्रतिवचन— त आस जन्या इति। तास्तपःकर्मव्यक्तयो जन्याः विवाहप्रवृत्ता बन्धुजना आसन्। त एव वरा वरयितारश्च आसन्। यत्सिसृक्षावस्थ जगत्कारण ब्रह्म मायाशक्तिरूपाया जायाया आवहने स एव ज्येष्ठवरः अभवत्। प्रधानभूतः उद्वाहकर्ताऽभवदित्यर्थः। असा.

**दश साकमजायन्त देवा देवेभ्यः पुरा।**
**यो वै तान्विद्यात्प्रत्यक्षं स वा अद्य महद्वदेत्॥**

यद्ब्रह्म सशक्तिकमभवदित्युक्त, तस्मात्सकाशात् देवेभ्यः अधिष्ठातृभ्योऽग्न्यादिभ्यः पुरा तेषामुत्पत्तेः प्रागेव दशसंख्याका देवाः। दीव्यन्ति स्वस्वविषय प्रकाशयन्तीति देवा ज्ञानकर्मेन्द्रियाणि। यद्वा, सप्त शीर्षण्याः प्राणाः, द्वाववाञ्चौ, मुख्यः प्राण एक इति दश। अथवा 'प्राणापानौ चक्षुः श्रोत्रम्' इत्युत्तरत्र वक्ष्यमाणा दशसंख्याका देवाः साक सह अजायन्त। श्रूयते हि— 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मुउ. २।१।३) इति। यो वै यः खलु उपासकः तान् देवान् प्रत्यक्ष विद्यात् अपरोक्ष जानीयात् स खलु विद्वान् अद्य इदानी महत् देशकालकृतपरिच्छेदरहितं सर्वगत ब्रह्म वदेत् उपदिशेत्। असा.

**प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या।**
**व्यानोदानौ वाङ्मनस्ते वा आकूतिमावहन्॥**

हृदम्बुजमध्येऽवस्थितस्य क्रियाशक्त्यात्मकस्य मुख्यप्राणस्य प्राणापानाद्या वृत्तयः। चक्षुः दर्शनसाधन इन्द्रियम्। श्रोत्र शब्दग्रहणसाधनमिन्द्रियम्। अक्षितिः अक्षीयमाणा ज्ञानशक्तिः। क्षितिः क्षीयमाणा निवासहेतुभूता वा क्रियाशक्तिः। ज्ञानशक्तिर्हि आत्मस्वरूपत्वेन नित्यत्वान्न कदाचित् क्षीयते। क्रियाशक्तिस्तु अपवर्गसमये लिङ्गशरीरेण सह निवर्तते इति क्षितिशब्दाभिधेया। या एवविधा द्विविधा शक्तिः, अस्तीत्यर्थः। व्यानोदानौ। अन्तरस सर्वासु नाडीषु विविधं अनिति प्रेरयतीति व्यानः। उत् ऊर्ध्वं अनिति उद्गारादिव्यापारं करोतीति उदानः। एते प्राणस्य द्वे वृत्ती। वाक् वदनसाधनमिन्द्रियम्। मनः सर्वेन्द्रियानुग्राहकं सुखादिज्ञानसाधनमन्तःकरणम्। त एते प्राणापानादयो दश देवा आकूतिं पुरुषकृतं सकल्प आवहन् आभिमुख्येन प्रापयन्ति। पुरुषस्य अभिमतमर्थं निष्पादयन्तीत्यर्थः। असा.

प्राणादिदेवजनकधात्रादयस्त्वनादिपरम्परया स्थिताः

**अजाता आसन्नृतवोऽथो धाता बृहस्पतिः।**
**इन्द्राग्नी अश्विना तर्हि कं ते ज्येष्ठमुपासत॥**

ऋतवः वसन्ताद्याः कालविशेषास्तस्मिन् सृष्टिसमये अजाता आसन् अनुत्पन्ना अभवन्। अथो अपि च धाता एतत्सञ्ज्ञकोऽदितेः पुत्रः। बृहस्पतिः बृहता देवानां पतिः सुरगुरुः। इन्द्राग्नी अश्विना अश्विनौ एतत्सञ्ज्ञौ देवौ। एते षट् देवा ऋतूनामधिपतयः। तेऽपि तस्मिन्समये अजाता अभवन्। एव तर्हि तस्मिन्काले ते धात्रादयः स्वोत्पत्त्यर्थ ज्येष्ठ वृद्धतम कारणभूत क जनयितारं उपासते अभ्यर्थयन्ते। अस्य प्रश्नस्योत्तर अनन्तरभाविनी ऋक्। असा.

**तपश्चैवास्तां कर्म चान्तर्महत्यर्णवे।**
**तपो ह जज्ञे कर्मणस्तत्ते ज्येष्ठमुपासत॥**

पूर्वोऽर्धर्चो व्याख्यातः। तत्र जगत्स्रष्टुरीश्वरस्य स्रष्टव्यपर्यालोचनात्मक तपः कर्मणः कल्पान्तरे प्राणिभिरनुष्ठितात् पुण्यापुण्यात्मकात् परिपक्कात् कर्मणः सकाशात् जज्ञे। स्वमहिमप्रतिष्ठस्य असङ्गोदासीनस्य सृष्ट्युन्मुखत्व प्राणिकर्मपरिपाककृतमिति तदीयस्य तपसोऽपि कर्मैव कारणमित्यर्थः। अतस्ते धात्रादयो ज्येष्ठं वृद्धतमं सृष्टेः कारणभूतं परिपक्कं स्वकृतं तत् कर्म उपासते स्वोत्पादनाय प्रार्थयन्ते। देवमनुष्यादिरूपस्य सर्वस्य जगतः कर्मैव मूलकारणमित्यर्थः। असा.

**येत आसीद्भूमिः पूर्वा यामद्धातय इद्विदुः।**
**यो वै तां विद्यान्नामथा स मन्येत पुराणवित्॥**

इतः अस्याः पुरोवर्तिन्याः भूमेः पूर्वा पूर्वभाविनी अतीतकल्पस्था या भूमिः आसीत् अभवत्। यां पूर्वा भूमिं अद्धातयः, अद्धा प्रत्यक्षमतन्ति व्याप्नुवन्तीत्यद्धातयः तपःप्रभावसमासादितसार्वज्ञ्याः अतीतानागतज्ञा महर्षयः। इच्छब्दोऽवधारणे। त एव विदुः जानन्ति नान्ये। तामतीतकल्पस्थां भूमिं यो वै यः खलु नामथा नामप्रकारेण तस्यां यद्यद्वस्त्वस्ति तत्सर्वं नामग्राह विद्यात्

जानीयात्। पुराणवित् पुरातनस्यार्थस्य वेदिता स विद्वान् मन्येत इदानीतनीमपि सर्वा भूमि मन्येत जानीयात् ज्ञातु शक्नोतीत्यर्थः। अस्रा.

**कुत इन्द्रः कुतः सोमः कुतो अग्निरजायत।**
**कुतस्त्वष्टा समभवत्कुतो धाताऽजायत॥**

धात्रादयो देवा अजाता आसन्नित्युक्तम्। तेषामुत्पत्तिकारणमनया पृच्छयते। कुतः कस्मात्कारणात् इन्द्रः अजायत उदपद्यत। एवमुत्तरत्रापि योजना। एषा प्रश्नाना प्रतिवचन उत्तरया ऋचा क्रियते। अस्रा.

**इन्द्रादिन्द्रः सोमात्सोमो अग्नेरग्निरजायत।**
**त्वष्टा ह जज्ञे त्वष्टुर्धातुर्धाताऽजायत॥**

पूर्वस्मिन्कल्पे यादृग्रूपः इन्द्रस्तस्मादिन्द्रात् इदानीतन इन्द्रो जज्ञे तत्समानरूपो जात इत्यर्थः। एव सोमात्सोम इत्यादिषु योजना। पूर्वपूर्वसृष्ट्यनुसारेणैव इदानीतना अपि इन्द्रादयो देवाः सृष्टा इत्यर्थः। 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (ऋस.१०।१९०।३) इति श्रुतेः। यद्वा, इन्द्रात् इन्द्रत्वप्रापकात्कर्मणः इन्द्रो जज्ञे। इन्द्रशब्दः स्वकारणभूते कर्मण्युपचर्यते। इत्थ सोमात् सोम इत्यादावपि द्रष्टव्यम्। 'तपो ह जज्ञे कर्मणस्तत्ते ज्येष्ठमुपासते' इति हि कर्मणः सर्वजगत्कारणत्वमुक्तम्। अथ वा अधिभूतमवस्थिता ये इन्द्रादयः तेभ्यः सकाशात् अध्यात्ममवस्थिताना अधिष्ठातृदेवतानामुत्पत्तिः कथ्यते इति बोद्धव्यम्। अस्रा.

त्वष्टृसृष्टं मर्त्यं शरीरं देवगृहं स्वप्नतन्द्राऽविद्यास्तेयदुष्कृतजरादीना पाप्मरूपदेवताना सत्ययज्ञबलश्रद्धाविद्यादीना पुण्यदेवताना च स्थानम्

**ये त आसन्दश जाता देवा देवेभ्यः पुरा।**
**पुत्रेभ्यो लोकं दत्त्वा कस्मिंस्ते लोक आसते॥**

देवेभ्यः अधिष्ठातृभ्यः अग्न्यादिदेवताभ्यः पुरा पूर्वं ये ते देवाः प्रागुक्ताः प्राणापानाद्या दशसख्याका जाता आसन् ते पुत्रेभ्य आत्मजेभ्यो लोकं स्वकीय स्थान दत्त्वा कस्मिन् लोके स्थाने आसते उपविशन्ति। यथा लौकिका जनाः पुत्रानुत्पाद्य तेषा स्वकीय स्थान दत्त्वा स्थानान्तरं स्वनिवासार्थमाश्रयन्ति, एवं एषा सृष्टानामिन्द्रियाणा तदधिष्ठातॄणा च देवानां निवासाश्रयः क इति प्रश्नार्थः। अस्य प्रश्नस्य 'देवाः पुरुषमाविशन्' (असं. ११।१०।१३) इति प्रतिवचनमग्रे भविष्यति। अस्रा.

**यदा केशानस्थि स्नाव मांसं मज्जानमाभरत्।**
**शरीरं कृत्वा पादवत्क लोकमनु प्राविशत्॥**

यदा यस्मिन् सृष्टिकाले केशान् शिरोरुहान् अस्थिस्नावादिधातून् शरीरोपादानभूतान् स्रष्टा समभरत् एकत्र सभृतवान्। तत्र अस्थि प्रसिद्धम्। स्नाव अस्थ्नां सधिबन्धनार्थं सिराजालम्। मास प्रसिद्धम्। मज्जा अस्थ्यन्तर्गतो रसः। तैः सभृतैः पादवत्। उपलक्षणमेतत्। हस्तपादाद्यङ्गोपाङ्गसहित शरीर कृत्वा निर्माय तदानीं क अन्यं लोक स्थान अनु प्राविशत्। तदेव शरीरं आत्मभावेन प्राविशदित्यर्थः। 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तैउ. २।६) 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छाउ. ६।३।२) इत्यादिश्रुतेः। अस्रा.

**कुतः केशान्कुतः स्नाव कुतो अस्थीन्याभरत्।**
**अङ्गा पर्वाणि मज्जानं को मांसं कुत आभरत्॥**

केशादीन्सभृत्य ईश्वरः शरीरं सृष्टवानित्युक्तम्। अत्र केशाद्युपादानत्व स्रष्टृत्व च वस्त्वन्तरविरहात्स्वात्मन एवेति काङ्क्षा प्रतिपाद्यते। स्रष्टा ईश्वरः कुतः कस्मादुपादानकारणात् केशान् समभरत्। कि तदुपादानकारणम्। न किंचिदस्ति। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छाउ. ६।२।१) इत्यद्वितीयत्वश्रुतेर्वस्त्वन्तरस्याभावात् स्वात्मन एव केशादीन्समभरदित्यर्थः। तथा च अभिन्ननिमित्तोपादानत्वमीश्वरस्य श्रूयते 'सोऽकामयत बहु स्या प्रजायेय' (तैउ. २।६) इति। तत्र कामयितृत्वात् कुलालादिवन्निमित्तत्वम्। प्रजायेय इत्युत्तमपुरुषश्रुत्या स्वस्यैव बहुभावावस्थानप्रतिपादनादुपादानत्वम्। आह च भगवान्बादरायणः— 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्रसू. १।४।२३) इति। तथा कुतः कस्मादुपादानकारणात् स्नाव उत्पन्नम्। न कस्माच्चित्, किंतु स्वस्मादेव। एवमुत्तरत्रापि योज्यम्। अङ्गा अङ्गानि हस्तपादादीनि पर्वाणि तत्सधीन् मज्जानं अस्थ्यन्तर्गत रसम्। कर्मकर्तृभावस्य एकत्र विरोधात् केशाद्युपादानभूतादन्य एव कश्चित्संभर्ता स्यादित्या-

शङ्क्य तदनन्यत्वमपि प्रतिपादयति—क इति। कः अन्यः एतान् आभरत्। न कश्चिदस्ति। उपादानभावेन स्थित एव ईश्वरः केशादीनामाहर्तापि अभवदित्यर्थः। विचित्रशक्तियोगित्वेन एकस्यैव कर्तृत्वं कर्मत्व च न व्याहन्यते इत्यर्थः। यद्वा, कुतः केशान् इत्यादिषु सर्वत्र कारणप्रश्नमात्र क्रियते। को मास इति कर्तृप्रश्नमात्रम्। तस्य सर्वस्य प्रतिवचन उत्तरया क्रियते। असा.

**संसिचो नाम ते देवा ये संभारान्त्समभरन्।**
**सर्वं संसिच्य मर्त्यं देवाः पुरुषमाविशन्॥**

ये देवाः प्रागुक्ता ज्ञानेन्द्रियकर्मेन्द्रियात्मकाः साधिष्ठातृकाः प्राणापानाद्या वा सभारान्, सम्भ्रियन्त इति संभाराः प्रागुदीरिताः केशाद्याः, तान् समभरन् एकत्र संभृतवन्तः ते देवाः ससिचो नाम। सासिञ्चन्ति। स इति एकीभावे। तान् सभारानेकीकृत्य बन्धकेन रसेन आबध्नन्तीति ससिचः ससेचनसमर्थाः सधायका इत्यर्थः। ते मर्त्यं मरणधर्माण सर्वं शरीरं ससिच्य असृजा आर्द्रीकृत्य पुरुष पुरुषाकृतिं कृत्वा त आविशन् प्रविष्टवन्तः। यावच्छरीरे प्राणा निवसन्ति तावन्त काल प्राणाधिष्ठितं शरीर सर्वव्यवहारक्षम मवति। तस्माणत्प्रादेवाः पृथिव्यादिपञ्चभूतमात्राभ्यः समुद्भूतं प्रागुदीरितकेशास्थ्यादिधातुमयं पुरुषशरीर प्रविश्य वर्तन्ते इत्यर्थः। असा.

**ऊरू पादावष्ठीवन्तौ शिरो हस्तावथो मुखम्।**
**पृष्टीर्बर्जह्ये पार्श्वे कस्तत्समदधादृषिः॥**

ऊरू जान्वोरुपरि वर्तमानौ। पादौ तयोरधस्ताद्भागौ। अष्ठीवन्तौ ऊरुपादयोर्मध्यस्थे जानुनी। शिरः मूर्धानम्। हस्तौ बाहू। अथो अपि च मुख आस्यम्। पृष्टीः पृष्ठवंशस्य अभितो वर्तमानाः पर्शूः। बर्जह्ये एतत्सज्ञौ अवयवौ। उभे पार्श्वे। तत् अनुक्रान्तं सर्व अङ्गजात क ऋषिः सधानोपायज्ञानवान् समदधात् परस्पर सहित सश्लिष्ट कृतवान्। अस्य प्रश्नस्य प्रतिवचनमुत्तरया क्रियते। असा.

**शिरो हस्तावथो मुखं जिह्वां ग्रीवाश्च कीकसाः।**
**त्वचा प्रावृत्य सर्वं तत्संधा समदधान्मही॥**

शिरः मूर्धानम्। हस्तौ बाहू। अथो अपि च मुख आस्यम्। जिह्वा तन्मध्ये वर्तमाना रसनाम्। ग्रीवाः कन्धराः। कीकसाः कीकसान् अस्थीनि। उपलक्षणमेतत्। एतदुपलक्षितानि प्रागुदीरितानि अस्थिस्नावादीनि ऊरुपादादीनि च सर्वाण्यङ्गानि त्वचा चर्मणा प्रावृत्य प्रावृतानि आच्छन्नानि कृत्वा सर्व तदङ्गजातं मही महती सधा सधानकर्त्री देवता समदधात् सहित परस्परसश्लिष्ट स्वस्वव्यापारक्षम कृतवती। असा.

**यत्तच्छरीरमशयत्संधया संहितं महत्।**
**येनेदमद्य रोचते को अस्मिन्वर्णमाभरत्॥**

तत् उक्तप्रकार यत् शरीर सधया सधाख्या देवतया सहित कृतावयवसधान महत् प्रवृद्ध अशयत् शेते, वर्तते इत्यर्थः। इद शरीरं अद्य इदानी येन वर्णेन कृष्णगौरादिरूपेण रोचते दीप्यते, अस्मिन् शरीरे को नाम देवः त वर्ण आभरत् आहरत् सपादितवान्। अस्य प्रतिवचनमुत्तरया क्रियते। असा.

**सर्वे देवा उपाशिक्षन्तदजानाद्वधूः सती।**
**ईशा वशस्य या जाया सास्मिन्वर्णमाभरत्॥**

सर्वे इन्द्रादयो देवा उपाशिक्षन् समीपे शक्ता भवितुमैच्छन्। वधूः सती परमेश्वरेण कृतोद्वाहा भगवती आद्या परचिद्रूपिणी शक्तिः तत् देवैः कृत अजानात् ज्ञातवती। या एषा विश्वस्य सर्वस्य जगतः ईशा ईशाना नियन्त्री मायाशक्तिः। 'यन्मन्युर्जायामावहत्' (अस. ११।१०।१) इति ह्युक्तम्। सा पारमेश्वरी शक्तिरस्मिन् षाट्कौशिके शरीरे गौरपीतनीलादिवर्णं आभरत् आहरत् उदपादयत् इत्यर्थः। असा.

**यदा त्वष्टा व्यतृणत्पिता त्वष्टुर्य उत्तरः।**
**गृहं कृत्वा मर्त्यं देवाः पुरुषमाविशन्॥**

यत् पूर्वं सामान्येनोक्त 'देवाः पुरुषमाविशन्' इति, तदत्र विशेष्यते। 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायते' (तैस. १।५।९।२) इति हि श्रूयते। तत्र योऽध्यात्ममवस्थितस्त्वष्टा मनुष्यगवाश्वादिरूपाणां विकर्ता देवः, तस्य त्वष्टुः पिता उत्पादकः उत्तरः उत्कृष्टतरो यः त्वष्टा अधिदैव स्थितः विचित्रस्य जगतो निर्माता एतत्सज्ञो देवः, स यदा यस्मिन्काले व्यतृणत् विविध चक्षुःश्रोत्रादीनि छिद्राणि पुरुषशरीरे तर्दनेन अकरोत्, तदा मर्त्यं मरणधर्मक त्वष्ट्रा देवेन वितृण्ण बहुच्छिद्रं पुरुषशरीर गृह कृत्वा

आवासस्थान कृत्वा देवाः (इन्द्रियाणि) प्राणापानादयश्च त पुरुषमाविशन् प्रविष्टवन्तः । असा.

**स्वप्नो वै तन्द्रीर्निर्ऋतिः पाप्मानो नाम देवताः ।**
**जरा खालत्यं पालित्यं शरीरमनु प्राविशन् ॥**

इत्थ शरीरस्योत्पत्तिमभिधाय प्रथमसृष्टानामिन्द्रियाणा प्राणापानादीना च तत्र प्रवेश उक्तः । तावता सात्मकं सत् तच्छरीर सर्वव्यवहारक्षम जातम् । इतः पर सर्वविकाराश्रयत्वमस्य उच्यते । स्वप्नः स्वापो निद्रा । वैशब्दो लोकप्रसिद्धि द्योतयति । तन्द्री अलसता । निर्ऋतिः पापदेवता दुर्गतिः । पाप्मानः ब्रह्महत्यादिपापानि । स्वप्नादिरूपा एता देवताः पुरुषशरीर अनु प्राविशन् । तथा जरा वयोहानिकरी चरमावस्था । खालित्य चित्तस्य चक्षुरादीना च स्खलनम् । पालित्य पलितत्वम् । एतदभिमानिनो देवाश्च शरीर अनु प्राविशन् ।

असा.

**स्तेयं दुष्कृतं वृजिनं सत्यं यज्ञो यशो बृहत् ।**
**बलं च क्षत्रमोजश्च शरीरमनु प्राविशन् ॥**

स्तेय स्तैन्य तस्करत्वम् । दुष्कृतं दुष्कर्म सुरापानादिकम् । वृजिन तज्जनित दुरितम् । सत्यं-यथार्थकथनम् । यज्ञो यागः । यशः कीर्तिः । बृहत् प्रभूतम् । यशसो विशेषणमेतत् । बल प्रसिद्धमेतत् । क्षत्र क्षत्रियसबन्धि तेजः । ओजः शरीरगतो बलहेतुरष्टमो धातुः । एते सर्वे पुरुषस्य शरीरं अनु प्राविशन् । जीवच्छरीरमाश्रित्य उत्पद्यन्ते इत्यर्थः । असा.

**भूतिश्च वा अभूतिश्च रातयोऽरातयश्च याः ।**
**क्षुधश्च सर्वास्तृष्णाश्च शरीरमनु प्राविशन् ॥**

भूतिः समृद्धिः । अभूतिः असमृद्धिः । परस्परसमुच्चयार्थौ चकारौ । वैशब्दः प्रसिद्धौ । रातयो मित्राणि । अरातयः शत्रवः । या इमा भूतिप्रभृतयः । क्षुधः बुभुक्षाः अन्नाकाङ्क्षाः । तृष्णाः पिपासाः । एताश्च सर्वाः पुरुषस्य शरीरं अनु प्राविशन् आश्रित्य प्रभवन्तीत्यर्थः ।

असा.

**निन्दाश्च वा अनिन्दाश्च यच्च हन्तेति नेति च ।**
**शरीरं श्रद्धा दक्षिणाऽश्रद्धा चानु प्राविशन् ॥**

निन्दाः कुत्सनानि । अनिन्दाः अकुत्सनानि । हन्तेति हर्षे, यच्च वस्तु हर्षजनकम् । नेति, अय शब्दः सनिहितस्य हन्तार्थस्य हर्षस्य निषेधे, यच्च वस्तु हर्षाजनकम् । श्रद्धा श्रद्धान अभिलाषविशेषः । दक्षिणा, दक्ष्यते समृध्यते अनयेति दक्षिणा धनसमृद्धिः । अश्रद्धा श्रद्धानाभावः अभिलाषराहित्यम् । एतानि सर्वाणि पुरुषस्य शरीरं अनु प्राविशन् तदाश्रित्य प्रादुर्भवन्तीत्यर्थः । असा.

**विद्याश्च वा अविद्याश्च यच्चान्यदुपदेश्यम् ।**
**शरीरं ब्रह्म प्राविशदृचः सामाथो यजुः ॥**

विद्याः शास्त्रजनितज्ञानानि । अविद्याः अज्ञानानि यच्चान्यत् वस्तु उपदेश्यं उपदेशसमधिगम्य विद्याऽविद्यानामाश्रयभूत तच्छाब्द ब्रह्म पुरुषस्य शरीर प्राविशत् । परापश्यन्त्यादिरूपेण तत्रैव प्रादुर्भवतीत्यर्थः । अथो अपि च ऋक्सामयजुरात्मकास्त्रयो वेदाः पुरुषशरीर अनु प्राविशन् । यद्वा, ऋगादीना पृथगुपादानात्तदङ्गभूताः पुराणादयो विद्याशब्देन विवक्षिताः । अविद्याशब्देन च वेदविरुद्धागमाः । असा.

**आनन्दा मोदाः प्रमुदोऽभीमोदमुदश्च ये ।**
**हसो नरिष्टा नृत्तानि शरीरमनु प्राविशन् ॥**

पूर्वार्धर्चो व्याख्यातः । (आनन्दाः विषयभोगजनिताः सुखविशेषाः । मोदाः विषयदर्शनजन्या हर्षाः । प्रकृष्टाः मुदः प्रमुदः प्रकृष्टविषयलाभजन्या हर्षाः । ये च अभीमोदमुदः । आभिमुख्येन वर्तमानो मोदः अभिमोदः । अभिमोदेन मोदयन्ति हर्षयन्तीत्यभिमोदमुदः सनिहिताः सुखहेतवः पदार्थाः । (अस. ११।९।२६ )। हसः हासः । नुरिष्टाः मनुष्यस्य इच्छागोचराः शब्दस्पर्शादिविषयाः । नृत्तानि नर्तनानि भरतशास्त्रोक्तानि । एते आनन्दादयः सर्वे पुरुषस्य शरीर अनु प्राविशन् ।

असा.

**आलापाश्च प्रलापाश्चाभीलापलपश्च ये ।**
**शरीरं सर्वे प्राविशन्नायुजः प्रयुजो युजः ॥**

आलापाः आभाषणानि सार्थकानि वचनानि । प्रलापाः निरर्थकानि वचनानि । ये च अभीलापलपः । अभिलापः उक्तविधः शब्दः, तेन लपन्ति ब्रुवन्तीति अभीलापलपः शब्दस्य उच्चारयितारः । ते सर्वे आलापादयः पुरुषशरीरं प्राविशन् । आयुजः आयोजनानि । प्रयुजः प्रयोजनानि । युजः योजनानि । उपसर्गवशादमीषा-

मर्थभेदोऽवगन्तव्यः । एवमायोजनादिक्रियाः शरीरमनु प्रविशन् । असा.

**प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या ।**
**व्यानोदानौ वाङ्मनः शरीरेण त ईयन्ते ॥**

त्रयः पादाः पूर्ववद्व्याख्येयाः । (प्राणापानौ प्राणवृत्तिः अपानवृत्तिश्च । चक्षुः रूपदर्शनसाधनमिन्द्रियम् । श्रोत्र शब्दग्रहणसाधनमिन्द्रियम् । अक्षितिः क्षयाभावः । या च क्षितिः क्षयः । यद्वा, अक्षितिः अक्षीयमाणा देवता । क्षितिः क्षयाभिमानिनी । अस. ११।९।२५ ) । ते प्राणापानादयः सर्वे शरीरमनु प्रविश्य तेन सह ईयन्ते स्वस्वव्यापारेषु प्रवर्तन्ते । असा.

**आशिषश्च प्रशिषश्च संशिषो विशिषश्च याः ।**
**चित्तानि सर्वे संकल्पाः शरीरमनु प्राविशन् ॥**

आशिषः आशासनानि इष्टफलप्रार्थनानि । तथा प्रशिषः प्रशासनानि । संशिषः संशासनानि । विशिषः विविधानि शासनानि । याः एता आशीराद्याः सन्ति । चित्तानीति बहुवचनेन मनोबुद्ध्यहङ्काराः संगृह्यन्ते । तथा संकल्पा इति बहुवचनेन सर्वा अन्तःकरणवृत्तयः । एते सर्वे पुरुषस्य शरीरमनु प्राविशन् । असा.

**आस्तेयीश्च वास्तेयीश्च त्वरणाः कृपणाश्च याः ।**
**गुह्याः शुक्रा स्थूला अपस्ता बीभत्सावसादयन् ॥**

आसमन्तात्स्नान आस्नेयम् । तत्सबन्धिन्य आपः आस्नेय्यः । वाशब्दो विकल्पार्थः । विकल्पेन स्नान वास्नेय तत्सबन्धिन्य आपः । यद्वा, आसनस्य शरीरे प्राणावस्थानस्य निमित्तभूता आपः आस्नेय्यः । तथा वस्नं मूल्यद्रव्य सर्वव्यवहारास्पद शरीर, तदुपादानभूता आपः वास्नेय्यः । 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' ( छाउ. ५।३।३ ) इति श्रुतेः । तथा त्वरणाः त्वरया गच्छन्त्यः । कृपणाः कृशा अल्पाः । एवम्भूताश्च या आपः सन्ति, याश्च गुह्याः गुह्याया भवाः । शुक्राः शुक्लवर्णाः शुक्रात्मना परिणता वा । स्थूलाः स्थौल्योपेता महत्यः आपः व्यापनशीलाः नद्यादिरूपेण वर्तमानाः, ताः सर्वाः आपः बीभत्सौ बीभत्स्यमाने जुगुप्स्यमाने पुरुषशरीरे असादयन् । अथ वा ता एव आपो बीभत्सौ जुगुप्स्यमाने पुरुषे स्वकार्य शरीर असादयन्नित्यर्थः । असा.

शरीररूप पुरुष· देवयज्ञस्थानं, यत्र यज्ञे अस्थीनि
समिध रेत. आज्यं, यत्र च सूर्याय चक्षुः
वाताय प्राण· अग्नये शेषं शारीरं
प्रदीयते

**अस्थि कृत्वा समिधं तदष्टापो असादयन् ।**
**रेतः कृत्वाऽऽज्यं देवाः पुरुषमाविशन् ॥**

अस्थि प्राणिशरीरसबन्धि अस्थिजात समिध समिन्धनसाधन शरीरपरिपाकस्य निमित्त कृत्वा तत् तत्र पाट्कौशिके शरीरे अष्टसख्याका आस्नेयीश्चेत्यादिना अनुक्रान्ता अपः असादयन् । तस्य समिन्धनस्याभिवृद्धिकारण आज्य रेतः शुक्ल कृत्वा परिकल्प्य । अत्रास्थीनि पुरुषशरीरान्तर्गतानि शरीरवृद्धिहेतुत्वात्समित्त्वेन रूप्यन्ते । रेतश्च स्वशरीरवृद्धेः पुत्राद्युत्पत्तिहेतुत्वेन च आज्यत्वेन रूप्यते । अत एव तैत्तिरीयकेऽग्न्याधेयप्रकरणे आधीयमानासु समित्सु अस्थित्व, तदञ्जनसाधने आज्ये रेतस्त्व च आरोप्य स्तूयते–'अस्थि वा एतत् । यत्समिधः एतद्रेतः । यदाज्यम्' ( तैब्रा. १।१।९।४ ) इति । इत्थ कृत्वा देवाः इन्द्रियाणि तदधिष्ठातारः अग्न्यादयो वा पुरुषशरीर प्राविशन् । असा.

**या आपो याश्च देवता या विराड्ब्रह्मणा सह ।**
**शरीरं ब्रह्म प्राविशच्छरीरेऽधि प्रजापतिः ॥**

याः प्रागुदीरिता आपः, याश्च देवताः इन्द्रियाभिमानिन्यः, या च 'विराड्वा इदमग्र आसीत्' ( असं. ८।१०।१ ) इत्यादिना सार्वात्म्येन उक्ता विराट् संज्ञा देवता ब्रह्मणा ब्राह्मणतेजसा सह वर्तमाना, ताः सर्वाः शरीरं प्राविशन् । तदनन्तर यज्जगत्कारण परं ब्रह्म, तदपि अन्तर्यामिरूपेण तच्छरीर प्राविशत् । तस्मिन् शरीरे अधि प्रजापतिः प्रजाना पालयिता पुत्राद्युत्पादको जीवो वर्तते । असा.

**सूर्यश्चक्षुर्वातः प्राणं पुरुषस्य वि भेजिरे ।**
**अथास्येतरमात्मानं देवाः प्रायच्छन्नग्नये ॥**

'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' ( ऐउ. १।२।४ ) इति श्रुतेः । सूर्यः चक्षुरभिमानी देवः । स च पुरुषस्य सबन्धि चक्षुरिन्द्रियमात्मीयभागत्वेन स्वीकृतवान् । वातः वायुः प्राणं घ्राणेन्द्रियं भागत्वेन स्वीचकार । 'वायुः प्राणो भूत्वा नासिके प्राविशत्'

( ऐउ. १।२।४ ) इति श्रुतेः । उपलक्षणमेतत् । एवमन्यान्यपि इन्द्रियाणि पुरुषसबन्धीनि तत्तदधिदेवता विभेजिरे विभज्य स्वीकृतवत्यः । अथ अनन्तर इतरं प्राणेन्द्रियव्यतिरिक्तमात्मान षाट्कौशिक स्थूलशरीर अग्नये सर्वे देवा भागत्वेन प्रायच्छन् । अग्निना मरणानन्तर स्थूलशरीरमेव केवल दह्यते । 'ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि । वायवः पञ्च बुद्धिश्च मनः सप्तदशं विदुः ॥' इति यत्सप्तदशात्मक लिङ्गशरीरमुक्त, तस्य मुक्तिपर्यन्त विनाशाभावात्तत्तद्देवतारूपेण अवस्थानमेवेत्यर्थः । असा.

**तस्माद्वै विद्वान्पुरुषमिदं ब्रह्मेति मन्यते ।**
**सर्वा ह्यस्मिन्देवता गावो गोष्ठ इवासते ॥**

तस्मात्खलु कारणात् विद्वान् उक्तप्रकार सर्व जानन् पुरुष पुरुषशरीर इद अपरोक्ष अन्तर्बहिर्व्याप्यावस्थित ब्रह्मेति मन्यते जानाति । कुत इत्यत आह– हि यस्मात् सर्वा देवताः प्राणापानादिवायवः सर्वेन्द्रियाणि तदधिष्ठातारोऽग्न्यादयश्च अस्मिन् शरीरे आसते निवसन्ति । तत्र दृष्टान्तः गावो गोष्ठ इव । यथा गावः स्वकीये गोष्ठे स्थाने विस्रम्भेण निवसन्ति, तथेत्यर्थः । तस्मात्सर्वाभिः देवताभिराश्रित जीवरूपेणान्तर्यामिरूपेण च ब्रह्मणा प्रविष्टं पुरुषशरीरं तत्तादात्म्येन विद्वान् साक्षात्करोतीत्यर्थः । असा.

**प्रथमेन प्रमारेण त्रेधा विष्वङ् वि गच्छति ।**
**अद एकेन गच्छत्यद एकेन गच्छतीहैकेन नि षेवते ॥**

शरीरमभिमन्यमानो जीवात्मा तेन शरीरेण तत्र प्रविष्टैरिन्द्रियैश्च पुण्यापुण्यात्मकानि कर्माणि अनुष्ठाय तत्फलोपभोगार्थं मरणानन्तर स्वर्गनरकादीनि स्थानानि प्राप्नोति । तदत्र निरूप्यते । प्रथमेन प्रथमभाविना स्थूलशरीरेण प्रमारेण प्रमृतेन भोगायतनस्य शरीरस्य तदारम्भककर्मक्षयेण त्यागाद्धेतोरित्यर्थः । त्यक्तशरीरः स जीवात्मा त्रेधा त्रिप्रकारं विष्वङ् नाना नि गच्छति नियमेन प्रयाति । अदः विप्रकृष्ट स्वर्गाख्य स्थान एकेन पुण्येन कर्मणा गच्छति प्राप्नोति । अदः विप्रकृष्ट नरकाख्यं स्थानं एकेन पापेन कर्मणा गच्छति प्राप्नोति । तथा इह अस्मिन्भूलोके एकेन पुण्यपापात्मकेन मिश्रितेन कर्मणा नि षेवते नितरा सुखदुःखात्मकान्भोगान् सेवते । श्रूयते हि–'पुण्येन पुण्यलोक नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्' ( प्रउ. ३।७ ) इति । असा.

**अप्सु स्तीमासु वृद्धासु शरीरमन्तरा हितम् ।**
**तस्मिञ्छवोऽध्यन्तरा तस्माच्छवोऽध्युच्यते ॥**

स्तीमासु अनार्द्रं सर्व जगदार्द्रं कुर्वतीषु वृद्धासु प्रवृद्धासु अप्सु उदकेषु अन्तरा मध्ये शरीर ब्रह्माण्डात्मक समष्टिभूत हित निहित वर्तते । स्मर्यते हि– 'अप एव ससर्जादौ तासु वीर्यमवाकिरत् । तदण्डमभवद्धैम कोटिसूर्यसमप्रभम् ॥' ( मस्मृ. १।९ ) इति । तस्मिन्ब्रह्माण्डशरीरे अधि उपरि अन्तरा मध्ये च शवः बलात्मकः सूत्रात्मा सर्वाधारभूतवस्त्वात्मकः परमेश्वरो वर्तते । तस्मात्समष्टिशरीरादधिकत्वेन स शवः बलात्मकः सूत्रात्मा उच्यते । श्रूयते हि–'वायुर्वै गौतम तत्सूत्रं, वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति' ( बृउ. ३।७।२) इति । असा.

अस्मत्प्रत्ययगोचर आत्मेन्द्रियप्राणसंयुक्त

**अयुतोऽहमयुतो म आत्माऽयुतं मे चक्षुरयुतं मे श्रोत्रमयुतो मे प्राणोऽयुतो मेऽपानोऽयुतो मे व्यानोऽयुतोऽहं सर्वः ॥**

अहं साङ्गशरीराभिमानी कर्मानुतिष्ठासुः अहं अयुतः संपूर्णः । मे मम आत्मा जीवः अयुतः सपूर्णः । अथ वा आत्मशब्देन शरीरमुच्यते, 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इति अभिधातृभिः शरीरवाचकत्वेन प्रयुक्तत्वात् । तथा चक्षुः सर्वपदार्थविषयज्ञानसाधनं चक्षुरिन्द्रियम् । श्रोत्र वैदिकमन्त्रश्रवणसाधनं श्रवणेन्द्रियम् । प्राणः हृदयादारभ्य नासिकारन्ध्रान्निर्गच्छद्वायुः प्राण इत्युच्यते । अपानः पायुद्वारान्निर्गच्छद्वायुः, अपानिति अवाङ्मुख चेष्टते इति व्युत्पत्तेः । व्यानः प्राणापानसंधिरूपो वायुः । केचिच्छरीरवायोः प्राणादिपञ्चवृत्तित्वं समामनन्ति । अन्ये तु वृत्तित्रयवत्त्वम् । अयुतोऽहं सर्वं इति उक्तानुक्तावयवेन्द्रियसाकल्याय उक्तम् । असा.

(१) असं. १९।५१।१.

वलं आत्मा वेदज्ञानं वा पुरुषादपगच्छति पुनरागच्छति च

[1]पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च ।
पुनरग्नयो धिष्ण्या यथास्थाम कल्पयन्तामिहैव ॥

इन्द्रिय इन्द्रियेण दत्त वीर्यम् । यद्वा, इन्द्रियमिति जातौ एकवचनम् । चक्षुरादीन्द्रियाणि । मा मा पुनरैतु पुनरागच्छतु । आत्मा देहाभिमानी, पुनरैतु इत्यनुषङ्गः । द्रविण प्रतिग्राह्यं धन, मामैतु इत्यनुषङ्गः । तथा ब्राह्मणं मन्त्रब्राह्मणात्मको वेदश्च, पुनरैतु इति संबन्धः । तथा धिष्ण्याः होत्रादिधिष्ण्येषु विहृता अग्नयः इहैव अस्मिन्नेव विहृतप्रदेशे यथास्थाम यथास्थान इत्यर्थः । पुनः कल्पयन्तां समर्थाः प्रवृद्धा भवन्तु ।

असा.

सर्वशरीरावयवाना तत्तच्छ्रेयोविशेषकरत्वेन प्रशस्तता

[2]शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि ।
राजा मे प्राणो अमृतं सम्राट् चक्षुर्विराट् श्रोत्रम् ॥
[3]जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड्भामः ।
मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥
[4]बाहू मे बलमिन्द्रियँ हस्तौ मे कर्म वीर्यम् ।
आत्मा क्षत्रमुरो मम ॥
[5]पृष्टीर्मे राष्ट्रमुदरमँसौ ग्रीवाश्च श्रोण्यौ ।
ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥

(१) असं ७।६९।१; तैब्रा. १।३०।१ ( पुनर्मामैत्विन्द्रियम् । पुनरायुः पुनर्भगः । पुनर्ब्राह्मणमैतु मा । पुनर्द्रविणमैतु मा ॥ ); बृउ ६।४।५ ( पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भग । पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्ताम् ॥ ).

(२) कासं. ३८।४ ( ४६ ); मैसं. ३।११।८ ( ६४ ); शुसं. २०।५, तैब्रा. २।६।५।३ णो अमृ ( णोऽमृ ).

(३) कासं. ३८।४ ( ४७ ); मैसं. ३।११।८ ( ६५ ); शुसं. २०।६, तैब्रा. २।६।५।४ मित्रं मे ( चित्तं मे ).

(४) कासं. ३८।४ ( ४८ ); मैसं. ३।११।८ ( ६६ ); शुसं. २०।७; तैब्रा. २।६।५।५.

(५) कासं. ३८।४ ( ४९ ); मैसं. ३।११।८ ( ६७ ); शुसं. २०।८ पृष्टीर्मे ( पृष्ठीर्मे ) श्रोण्यौ ( श्रोणी ); तैब्रा. २।६।५।५.

[1]नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत् ।
आनन्दनन्दा अण्डौ मे भगः सौभाग्यं पसः ॥

मदीय शिरः श्रियो हेतुत्वेन श्रीरूपमस्तु । मुख यशोहेतुः अस्तु । केशाः श्मश्रूणि च कान्तिहेतवः सन्तु । मदीयः प्राणः सर्वेन्द्रियाणा राजा सन् अमृतहेतुरस्तु । चक्षुरिन्द्रिय दूरसूक्ष्मादिदर्शनेन सम्यग्राजमानमस्तु । श्रोत्रेन्द्रिय दूरशब्दमन्दध्वनिश्रवणेन विविध राजमानमस्तु । मदीया जिह्वा विविधरसज्ञानेन कल्याणभोगहेतुरस्तु । वागिन्द्रिय सभारञ्जनेन पूजाहेतुरस्तु । मदीय मनो धर्मकार्यमननहेतुरस्तु । मदीयो भामः क्रोधो भ्रातृव्यनिराकरणेन स्वयमेव राजाऽस्तु । अङ्गुलयो मोदा हर्षहेतवः सन्तु । अङ्गान्यनुक्तावयवाः प्रमोदाः प्रकृष्टहर्षहेतवः सन्तु । मदीय चित्त स्तुतिनिन्दादिसहनहेतुरस्तु । मनश्चित्तयोर्वृत्तिभेदेन भेदः । मदीयौ बाहू मणिबन्धस्य मूलभागौ प्रबलशक्तिहेतू स्ताम् । हस्तौ मणिबन्धस्याग्रभागौ वीर्यवद्व्यापारहेतू स्ताम् । मदीय आत्मा मध्यशरीरमुरश्च क्षत्र बलहेतुरस्तु । पृष्ट्यादयो जान्वन्ता अवयवा राष्ट्रहेतवः सन्तु । पृष्टयः पायोरुपरिस्थान्यस्थीनि । उदरादयः प्रसिद्धाः । ग्रीवा गळावयवाः । अरत्नी प्रकोष्ठौ । विशो मनुष्याः । ममाङ्गानीव सर्वतो विधेयाः सन्तु । मदीयो नाभिश्चित्त चैतन्यहेतुरस्तु । पायुर्विज्ञान विसर्गज्ञानकुशलोऽस्तु । भसन्मे मम उपस्थेन्द्रियमपचितिर्नियतत्वेन बहुमानहेतुरस्तु । मदीयावाण्डौ वृषणौ आनन्दनन्दयोर्हेतू स्ताम् । पुसः सुखमानन्दः । स्त्रियाः सुख नन्दः । पसः प्रजननं भगसौभाग्यहेतुरस्तु । भगः ऐश्वर्यम् । सौभाग्य देहशोभा । तैब्रासा. २।६।५।३–६

[2]जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः ।
प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु ॥

(१) कासं. ३८।४ ( ५० ), मैसं. ३।११।८ ( ६८ ) अण्डौ ( आण्डौ ), शुसं. २०।९ नन्दा अण्डौ ( नन्दावाण्डौ ); तैब्रा. २।६।५।५ शुसंवत्.

(२) कासं ३८।४ ( ५१ ); मैसं. ३।११।८ ( ७० ) धर्मोऽस्मि ( धीरोऽस्मि ) प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे ( प्रति ब्रह्मन्प्रति तिष्ठामि क्षत्रे ); शुसं. २०।९–१०, तैब्रा. २।६।५।६, शब्रा. १२।८।३।२२.

[1]प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन्प्रति प्राणेषु प्रतितिष्ठामि पुष्टे।
प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे ॥

जानुभ्यामधोभागौ जङ्घे, ताभ्या पादाभ्या च धर्मो देहस्य धारयिता अस्मि । विशि प्रजाया प्रतिष्ठितः स्थैर्येणावस्थितो राजा अस्मि । क्षत्रादिषु यज्ञान्तेषु प्रतितिष्ठामि स्थैर्येणावस्थितोऽस्मि । क्षत्रं बल क्षत्रियादिर्वा। राष्ट्र देशः। अश्वादयः प्रसिद्धाः। आत्मा शरीरम्। पुष्टं शरीरस्य पुष्टिः। तैब्रासा. २।६।५।६

[2]त्रयो देवा एकादश त्रयस्त्रिँशाः सुराधसः।
बृहस्पतिप्रसूता देवस्य सवितुः सवे ॥

[3]देवा देवैरवन्तु मा प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूँषि सामभिः सामान्यृग्भिर्ऋचो याज्याभिर्याज्या वषट्कारैर्वषट्कारा आहुतिभिराहुतयो मे कामान्त्समर्धयन्तु भूः स्वाहा ॥

एकादशसख्याका देवतास्त्रयास्त्रिविधाः, लोकत्रयवर्तित्वात्। तथा चाम्नातम्—'ये देवा दिव्येकादश स्थ' (तैस. १।४।१०।१) इत्यादिना। ते चैते त्रयस्त्रिंशत्सख्याका देवाः सुराधसः शोभनस्य कर्मणः साधकाः। बृहस्पतिः पुरोहितो मुख्यो येषा ते बृहस्पतिपुरोहिताः। सवितुर्देवस्य प्रसवे सति ते सर्वे मुख्याः देवाः इतरैः सह मामवन्तु । तत्र प्रथमगणस्था द्वितीयगणस्थैः सहिताः । द्वितीयगणस्थास्तृतीयगणस्थैः सहिताः। तृतीयगणस्थाः सत्येन सहिताः। सत्य च यज्ञेन सहितम् । एव यज्ञादय आहुतिपर्यन्ता उत्तरोत्तरवस्तुभिः सह तिष्ठन्ति। ताश्चाहुतयो मदीयान्कामान्समर्धयन्तु समृद्धान्कुर्वन्तु। येय भूमिस्तस्यै स्वाहा हुतमस्तु। तैब्रासा. २।६।५।७,८

शरीरावयवविशेषाणा श्रेयोविशेषकरत्वम्

[1]लोमानि प्रयतिर्मम त्वङ् म आनतिरागतिः।
माँसं म उपनतिर्वस्वस्थि मज्जा म आनतिः ॥

मदीयानि लोमानि प्रयतिः शुद्धिकराणि सन्तु। मदीया त्वक् आनतिरन्येषा प्रह्वीभावहेतुरस्तु। आगतिरन्येषां पदार्थानामागमनहेतुरस्तु। मदीय मासमुपनतिः अभिप्रेतसंपत्तिहेतुरस्तु। अस्थि च मदीय वसु धनहेतुरस्तु। मत्सबन्धिमज्जा च आनतिः अन्येषा वशीकरणहेतुरस्तु। तैब्रासा. २।६।५।८

शरीररक्षका इन्द्रियरूपाः सप्तर्षयः
प्राणापानौ देवौ च

[2]सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम्।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥

सप्त ऋषयः प्राणाः त्वक्चक्षुःश्रवणरसनाघ्राणमनोबुद्धिलक्षणाः शरीरे प्रतिहिताः व्यवस्थिताः, ते एव सप्त सदं सदाकालमप्रमादं सावधानं यथा तथा शरीरं रक्षन्ति। ते सप्त स्वपतो नरस्य लोकमात्मानमीयुः प्राप्नुवन्ति। लोकशब्देन विज्ञानात्मा हृदयाकाशप्रतिष्ठ उच्यते। किंभूताः सप्त। आपः आप्नुवन्ति व्याप्नुवन्ति देह-

(१) कासं. ३८।४ (५२), मैसं. ३।११।८ (७१) (प्रति प्रजाया प्रतितिष्ठामि पृष्ठे प्रति प्राणेषु प्रतितिष्ठाम्यात्मन्। द्यावापृथिव्यो. प्रतितिष्ठामि यज्ञे ॥), शुसं. २०।१०; तैब्रा. २।६।५।६.

(२) कासं. ३८।४ (५३), मैसं. ३।११।८ (६२) त्रयो (त्रया) स्पतिप्रसूता (स्पतिपुरोहिता); शुसं. २०।११ मैसंवत्; तैब्रा. २।६।५।७ मैसंवत्; शब्रा. १२।८।३।२९.

(३) कासं. ३८।४ (५४), मैसं. ३।११।८ (६२,६३) (देवा देवैरवन्तु त्वा । प्रथमास्त्वा द्वितीयैरभिषिञ्चन्तु द्वितीयास्त्वा तृतीयैस्तृतीयास्त्वा सत्येन सत्यं त्वा ब्रह्मणा ब्रह्म त्वा यजुर्भिर्यजूंषि त्वा सामभि· सामानि त्वा ऋग्भिर्ऋचस्त्वा पुरोनुवाक्याभि· पुरोनुवाक्यास्त्वा याज्याभिर्याज्यास्त्वा वषट्कारैर्वषट्कारास्त्वाहुतिभिरभिषिञ्चन्त्वाहुतयस्ते कामान्त्समर्धयन्त्वसा अश्विनोस्त्वा तेजसा ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यास्त्वा वीर्येण यशसेऽन्नाद्यायाभिषिञ्चामीन्द्रस्य त्वेन्द्रियेणौजसे बलायाभिषिञ्चामि भू स्वाहा ॥), शुसं २०।१२ ऋचो याज्याभि (ऋचः पुरोनुवाक्याभि पुरोनुवाक्या याज्याभि), तैब्रा. २।६।५।७; शब्रा. १२।८।३।३०.

(१) कासं. ३८।४ (५५), मैसं ३।११।८ (६९) त्वङ् म (त्वङ् मा) म उप (मा उप) मज्जा म (मज्जा मा); शुसं. २०।१३, तैब्रा. २।६।५।८,-शब्रा. १२।८।३।३१.

(२) शुसं. ३४।५५, नि. १२।३७.

मित्यापः व्यापनाः । तत्र तस्यामृषीणां लोकगमनावस्थाया देवौ दीप्यमानौ प्राणापानौ जाग्रतः जागरणं कुर्वाते । कीदृशौ । अस्वप्नजौ न स्वप्नो निद्रा जायते ययोस्तौ अस्वप्नजौ । तथा सत्रसदौ सतां जीवानां त्राणं रक्षणं सत्र, तत्र सीदतः तौ सत्रसदौ जीवितदातारावित्यर्थः। मभा.

प्राणानामात्मनश्च संधानकरमन्नम्

**[1]अन्नेन वै प्राणाश्चाऽऽत्मा च संहितः ।**

वाङ्मनसयो संबन्ध.

**[2]नमः समुद्राय नमः समुद्रस्य चक्षुष इत्याह । वाग्वै समुद्रः । मनः समुद्रस्य चक्षुः । ताभ्यामेव तन्नमस्करोति ॥**

वाचो निरवधिकत्वात् समुद्र इत्युच्यते । वाग्रूपसमुद्रस्य मनसः पूर्वरूपत्वात् समुद्रचक्षुरित्यनेन मन उच्यते । 'मनः पूर्वरूपं वागुत्तररूपम्' इति हि श्रुतिः कौषीतकिनः । तत्तथा सति अमुं भागं पठन् उद्गाता वाचो मनसश्च नमस्कारं कृतवान्भवति ।

ताब्रासा.

**[3]वाग्वा अग्निहोत्री । तस्यै मन एव वत्सः । मनसा वै वाचं प्रक्तां दुह्रे । वत्सेन वै मातरं प्रक्तां दुह्रे । तद्वा इदं मनः पूर्वम् । यत्पश्चा वागन्वेति तस्माद्वत्सं पूर्वं यन्तं पश्चा माताऽन्वेति । हृदयमेव मेथ्युपदोहनी । प्राणो रज्जुः । प्राणेनैव वाक्च मनश्चाभिहिते । रज्ज्वा वै वत्सं च मातरं चाभिदधाति ॥**

**[4]मनो हि रेतस्येति ब्रूयात् । नो मनसो बार्हीयः किं चनास्ति । अथो सर्वे प्राणा मनोऽभिसंपन्नाः ॥**

**[5]अथो द्वे एव धुरौ मनश्चैव वाक्च । मनसो हि वाक् प्रजायते । सा मनोनेत्रा वाग्भवति । तन्मनो वाचमभिप्रवहति । वागु पुनर्मन एवाभिप्रवहति । स यो मनसश्च वाचश्च स्वरो जायते स इन्द्रः । इन्द्रः सर्वे देवाः । स हैव देवलोकं गमयति य एवं विद्वानुद्गायति । अथ हान्ये गन्धर्वलोकं वा पितृलोकं वा गमयन्ति । अथो हास्यै ताभ्यामेव धूर्भ्यां सर्वा धुर उपाप्ता भवन्ति ॥**

प्राणमनोवाक्चक्षुःश्रोत्राणां कार्याणि

**[1]प्राणो रक्षति विश्वमेजत् । इर्यो भूत्वा बहुधा बहूनि । स इत्सर्वं व्यानशे ॥**

योऽयं मुखनासिकावर्ती प्राणवायुः सोऽयं बहुधा भूत्वा प्राणापानादिवृत्तिभेदेन अनेकप्रकारो भूत्वा बहूनि जीवजातानि प्रतीर्यः प्रेरकः सन् एजत्कम्पमानं जङ्गमरूपं जगद्रक्षति । स इत् स एव प्राणः सर्वं जगत् व्यानशे व्याप्तवान् । तैब्रासा.

**यो देवो देवेषु विभूरन्तः । आवृद्दूदात्क्षेत्रियध्वगद्वृषा ।**
**तमित्प्राणं मनसोपशिक्षत । अग्रं देवानामिदमत्तु नो हविः ॥**

दीप्यन्तीति देवाः प्राणचक्षुःश्रोत्रादयः, तेषु देवेषु मध्ये यो मुख्यो देवः प्राणः श्वासकर्ता सोऽयं अन्तः आवृद्दूदात् पुनःपुनरन्तर्बहिश्च आवर्तमानत्वात् । विभुः कृत्स्नदेहव्यापी, क्षेत्री क्षेत्रं शरीरं तस्य स्वामी, वृषा श्रेष्ठः । तस्य दृष्टान्तः—अध्वगत् यथा लोके अध्वगो न आलस्यगमनं करोति, एवमयं प्राणः प्रतिक्षणमुच्छ्वासनिश्वासौ करोति। तमित् तमेव प्राणं मनसोपशिक्षत भक्तिपुरःसरमुपचरत । स प्राणो देवानां मध्ये अग्रं प्रथमं नः अस्मदीयं इदं हविः अत्तु भक्षयतु । यदुक्तमैतरेयब्राह्मणे— 'चक्षुः श्रोत्रं मनो वाक्प्राणस्ता एताः पञ्च देवता इमं विश्लिष्टाः पुरुषम्' इति । तदेतन्मन्त्रद्वयं प्राणदेवताविषयं द्रष्टव्यम्। तैब्रासा.

**मनसश्चित्तेदम् । भूतं भव्यं च गुप्यते ।**
**तद्धि देवेष्वग्रियम् ॥**

यदिदं मनोऽन्तःकरणमस्ति तस्य चित्ता चित्तेन वृत्तिविशेषेण इदं दृश्यमानं भूतं भव्यं च अतीतमनागतं च सर्वं गुप्यते रक्ष्यते । यत्पूर्वं निष्पन्नं पुत्रभृत्यादिचेतनं धनधान्याद्यचेतनं (च), यच्चेतःपरं संपादनीयं चेतनमचेतनं च, तत्सर्वं मनसैव परिरक्ष्यते । तद्रक्षोपायानां

(१) शाब्रा. १३।६.
(२) ताब्रा. ६।४।७.
(३) जैब्रा. १।१९.
(४) जैब्रा. १।३१६.
(५) जैब्रा. १।३२०-३२१.

(१) तैब्रा. २।५।१।१-३.

मनसा चिन्त्यमानत्वात् । हि यस्मात्कारणात् तन्मनो देवेषु दीप्यमानेष्विन्द्रियेषु अग्रिय श्रेष्ठ तस्मात्तेन रक्षणमुचितम् । तैब्रासा.

**आ न एतु पुरश्चरम् । सह देवैरिम॑ हवम् ।**
**मनः श्रेयसि श्रेयसि । कर्मन्यज्ञपतिं दधत् ॥**

तन्मनो देवैः दीप्यमानैरन्यैरिन्द्रियैः सह पुरश्चरं स्वयमग्रगामि भूत्वा नः अस्मदीयमिम हव आह्वान प्रत्येतु आभिमुख्य प्राप्नोतु । किं कुर्वन् । श्रेयसि श्रेयसि कर्मन् तस्मिंस्तस्मिन्प्रशस्ते कर्मणि यज्ञपतिं दधत् यजमान स्थापयतु सर्वेषु पुण्यकर्मसु प्रवर्तयत्वित्यर्थः । तदेतन्मन्त्रद्वयं मनोदेवताविषय द्रष्टव्यम् । तैब्रासा.

**जुषतां मे वागिद॑हविः । विराड्देवी पुरोहिता ।**
**हव्यवाडनपायिनी ॥**

इद पुरोवर्ति मे हविः वाग्देवी सेवताम् । कीदृशी । विराट् विविध राजते इति विराट् विराजमाना देवी देवताविग्रहा पुरोहिता प्रथमतः प्रवृत्ता । यद्यपि पुरश्चरत्व मनस उक्त, तथाऽपि कायव्यापारापेक्षया पूर्वभावित्वं प्रथमप्रवृत्तिर्वचसो युक्ता । अत एव व्यवहारक्रमः अन्यत्र आम्नातः–'यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति' इति । हव्यवाट्, वाचा हि मन्त्रं उच्चार्य हविर्दीयते तस्माद्वागिय हविर्वहतीत्युपचर्यते । अनपायिनी सर्वेष्वपि व्यवहारेष्वनुगता । न हि वागिन्द्रियमन्तरेण अतीतानागतविषयो व्यवहारः संभवति । तैब्रासा.

**यया रूपाणि बहुधा वदन्ति । पेशा॑सि देवाः परमे जनित्रे ।**
**सा नो विराडनपस्फुरन्ती । वाग्देवी जुषतामिद॑ हविः ॥**

यान्येतानि देवतिर्यङ्मनुष्यादिरूपाणि यानि च नीलपीतशुक्लकृष्णादिरूपाणि, तानि सर्वाणि यया वाचा मनुष्या बहुधा वदन्ति इद समीचीनमिदमसमीचीनमित्येतादृशं बहुधा वदन्ति, तथा परमे जनित्रे उत्तमे जन्मनि वर्तमाना देवाश्च पेशासि रमणीयानि रूपाणि यया वाचा वदन्ति, सा वाग्देवी नः अस्मदीयमिद हविर्जुषताम् । कीदृशी वाक् । अर्थप्रकाशकत्वेन विविधं राजते इति विराट् । अपस्फुरणं अर्थाभिधाने कुण्ठीभावः, तद्राहित्यात् अनपस्फुरन्ती । तदिद मन्त्रद्वय वाग्देवताविषय द्रष्टव्यम् । तैब्रासा.

**चक्षुर्देवानां ज्योतिरमृते न्यक्तम् । अस्य विज्ञानाय बहुधा निधीयते ।**
**तस्य सुम्नमशीमहि । मा नो हासीद्विचक्षणम् ॥**

देवाना दीप्यमानानामिन्द्रियाणा मध्ये चक्षुरिन्द्रियं ज्योतिः विस्पष्टभासक, तच्च अमृते मरणरहिते आदित्यस्वरूपे न्यक्त निलीनम् । अत एव बह्वृचा आमनन्ति– 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' (ऐउ १।२।४) इति । तदिद चक्षुरस्य सर्वस्य नीलपीतादिरूपजातस्य बहुधा विज्ञानाय नानाविधज्ञानसिद्धये निधीयते प्रजापतिना व्यवस्थाप्यते । तस्य चक्षुरिन्द्रियस्य सुम्न सुखं तेन चक्षुरिन्द्रियेण रूपप्रकाशने सति यत्सुख जायते तत्सर्वं अशीमहि अश्नुवीमहि प्राप्नुयाम । विचक्षणं विशेषेण प्रकाशक तच्चक्षुरिन्द्रिय नः अस्मान् मा हासीत् कदाचिदपि मा परित्यजतु । तैब्रासा.

**आयुरिन्नः प्रतीर्यताम् । अनन्धाश्चक्षुषा वयम् ।**
**जीवा ज्योतिरशीमहि । सुवर्ज्योतिरुतामृतम् ॥**

चक्षुर्देवताप्रसादेन नः अस्मदीय आयुरित् प्रतीर्यतां सर्वथा वर्धताम् । अनेन चक्षुषा युक्ता वय जीवाः काप्यनन्धाः सन्तो रूपाभिव्यक्तवृत्तिलक्षण ज्योतिरशीमहि प्राप्नुयाम । उतापि च सुवः स्वर्गस्थितममृत ज्योतिर्विनाशरहित आदित्यप्रकाशं अशीमहि चक्षुषा पश्येम । तदिद मन्त्रद्वयं चक्षुर्देवताविषय द्रष्टव्यम् ।

तैब्रासा.

**श्रोत्रेण भद्रमुत शृण्वन्ति सत्यम् । श्रोत्रेण वाचं बहुधोद्यमानाम् ।**
**श्रोत्रेण मोदश्च महश्च श्रूयते । श्रोत्रेण सर्वा दिश आशृणोमि ॥**

यद्भद्र कल्याण यच्च सत्यं वचन तत्सर्वं श्रोत्रेणैव सर्वे शृण्वन्ति । येयं वाक् प्राणिभिर्बहुधोच्यते ता सर्वा वाचमनेन श्रोत्रेन्द्रियेण सर्वो जनः शृणोति । किंच योऽय मोदो हर्षविषयो वृत्तान्तो यच्च महः पूजाविषयो वृत्तान्तः स सर्वोऽपि श्रोत्रेणैव श्रूयते । किंच सर्वा दिशः सर्वदिग्विषयो वृत्तान्तः तमप्यहं श्रोत्रेण सर्वत आशृणोमि ।

तैब्रासा.

**येन प्राच्या उत दक्षिणा । प्रतीच्यै दिशः शृण्वन्त्युत्तरात् ।**
**तदिच्छ्रोत्रं बहुधोद्यमानम् । अरान्न नेमिः परि सर्वं बभूव ॥**

येन श्रोत्रेण प्राच्यादिदिग्भ्यः आगत शब्द शृण्वन्ति, तदेव श्रोत्र बहुधोद्यमान उच्यमान शब्दजात सर्व परिबभूव परिगृह्य वर्तते रथनेमिरिव सर्वान् अरान् । चक्रस्य बहिर्वलयो नेमिः । तदन्तर्वर्तिनोऽवयवाः कालसंज्ञा अराः । एतच्च मन्त्रद्वय श्रोत्रविषयं द्रष्टव्यम् ।

तैब्रासा.

अन्नसहकृता. प्राणाः इन्द्रियाख्याः आत्मनोऽधिष्ठानम्

[1]**अथाध्यात्मम् । आत्मैवाग्निः । प्राणाः शिक्यम् । प्राणैर्ह्ययमात्मा शक्नोति स्थातुम् । यच्छक्नोति तस्माच्छिक्यम् । प्राणैरेवैनमेतद्बिभर्ति । षड्द्यामं भवति । षड्ढि प्राणाः ॥**

अथाध्यात्ममिति, प्रदर्श्यते इति शेषः । आत्मैवाग्निरिति । आत्मा अत्र देहव्यतिरिक्तो मनउपाधिकः । प्राणाः शीर्षण्याः शिक्यम् । ननु निरवयवमात्मान प्रति धारकत्वेन कथं प्राणाना शिक्यत्वयोग्यतेति, तत्राह— प्राणैर्ह्ययमात्मा शक्नोति स्थातुमिति । ‘ प्राणाधिपः सचरति स्वकर्मभिः ’ ( श्वेउ. ५।७ ) इत्यादिश्रुतेः प्राणोपाधिकत्वेन देहाख्यगृहे अवस्थानसभवात् । अतः शक्नोत्यनेन अवस्थातुमिति वर्णव्यापत्त्या शिक्यशब्दो निष्पन्नः । प्राणाना चक्षुःश्रोत्रनासारन्ध्रवर्तिनां षट्सख्यायोगात् षड्ढि प्राणा इत्युक्तम् ।

शब्रासा.

**तस्य मन एव प्रतिष्ठा । मनसि ह्ययमात्मा प्रतिष्ठितः । अन्नमासञ्जनम् । अन्ने ह्ययमात्मा प्राणैरासक्तः । स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं बिभर्ति ॥**

शिक्यस्याधस्ताद्वर्तिनमवयवं दर्शयति—तस्य मन एव प्रतिष्ठेति । एतत्समर्थयते—मनसि ह्ययमात्मा प्रतिष्ठित इति । मनसा परिच्छेद्यत्वात् मनसि प्रतिष्ठितत्वम् । शिक्यस्योपर्यवयवं दर्शयति—अन्नमासञ्जनमन्ने ह्ययमात्मा प्राणैरासक्त इति । अन्नाभावे सोपाधिकस्यात्मनो भोगाभावात् प्राणद्वारेणान्नासक्तो भवति । आत्मरूपोऽग्निर्मनःसबद्धैः प्राणाख्यैरिन्द्रियैरन्न भुञ्जानो वर्तते इत्यभिप्रायः । स यो हैतदिति । एतत् अग्निशिक्यात्मकं वस्तु । एवं उक्तप्रकारेण अग्नेरात्मत्व प्राणाना शिक्यत्वाद्यात्मकता च वेद, सः एतेनेत्यादि व्याख्यातम् ।

शब्रासा.

मन. सृष्ट्यादिभूतं, तत' वाक् जाता, तत. प्राणो जात , प्राणात् चक्षु', चक्षुषः श्रोत्रं, श्रोत्रात् कर्म, कर्मण अग्नि

[1]**नेव वा इदमग्रेऽसदासीन्नेव सदासीत् । आसीदिव वा इदमग्रे नेवासीत् । तद्ध तन्मन एवास ॥१॥**

उत्तरब्राह्मणे सकलपुरुषवर्तिमनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निवृत्तिसपाद्यचित्याग्निविषया उपासना वक्ष्यन्ते । एते मनश्चिदादयोऽग्नयः क्रियानुप्रवेशिनः तच्छेषभूताः उत स्वतन्त्राः केवलविद्यात्मका इति विचार्याधिकरणमवतारितमाचार्यैः शारीरकभाष्ये । तथाहि – ‘ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ’ ( ब्रसू. ३।३।४४ ) इति । अधिकरणार्थः श्लोकद्वयेन सगृहीतः तत्त्वविद्भिरभियुक्तैः— ‘ कर्मशेषाः स्वतन्त्रा वा मनश्चित्प्रमुखाग्नयः । कर्मशेषाः प्रकरणाल्लिङ्ग त्वन्यार्थदर्शनम् ॥ उन्नेयविधिगाल्लिङ्गादेव श्रुत्या च वाक्यतः । बाध्य प्रकरण तस्मात् स्वतन्त्रं वह्निचिन्तनम् ॥ ’ इति । इदमेव ब्राह्मणं विषयवाक्यम् । तद्यथा – ‘ नेव वा इदमग्रेऽसदासीत् ’ इति प्रक्रम्य मनोऽधिकृत्याभिधीयते ‘ तत् षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान् मनश्चितः ’ ( शब्रा. १०।५।३।३ ) इत्यादि । अयमर्थः— पुरुषस्य शतसंवत्सरमिते आयुषि षट्त्रिंशत्सहस्राणि दिनानि भवन्ति ( ३६००० ) । तत्रैकैकस्मिन् दिवसे या मनोवृत्तिः तस्या एकैकाग्नित्वेन ध्याने सति ध्यातव्या अग्नयः षट्त्रिंशत्सहस्रसख्याकाः ( ३६००० ) संपद्यन्ते । ते चाग्न्यात्मस्वरूपत्वेन ध्येयाः । अत एवार्का अर्चनीया मनसा चीयन्ते संपाद्यन्ते इति मनश्चितः । एव वाक्चितः, प्राणचितः, चक्षुश्चितः, श्रोत्रचितः, कर्मचितः, अग्निचित इति । ते चाग्नयः अग्निचयनप्रकरणपठितत्वात् कर्मशेषाः, न तु स्वतन्त्रसंकल्पात्मक-

(१) शब्रा. ६।७।१।२०-२१.

(१) शब्रा. १०।५।३।१-१२.

लिङ्गबलात् स्वतन्त्रविद्यात्मका भविष्यन्ति। तथा हि अस्मिन्ब्राह्मणे एव—'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' (शब्रा. १०।५।३।३) इति। एवं वागादिपर्यायेष्वपि। 'तद्यत्किंचेमानि भूतानि वाचा वदन्ति तेषामेव सा कृतिः' इति, 'प्राणिनः प्राणन्ति' (शब्रा. १०।५।३।४,५) इत्यादिलिङ्गानि सन्ति। एषामर्थः—यत्किंच भूतानि मनसा ध्यायन्ति, वाचा वदन्ति, तैः संकल्पवदनादिभिरेव तेषामग्नीना करणमिति। तथा एतद्ब्राह्मणावसाने 'तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' (शब्रा. १०।५।३।१२) इति वाक्यशेषः पठ्यते। तस्यायमर्थः—उपासकस्य स्वपतोऽप्यग्नयोऽविच्छिन्नाः। स्वकीयमनोवागादिवृत्त्युपरमेऽपि प्रबुध्य पुरुषमनोवागादिवृत्तीना प्रवर्तमानत्वादशेषपुरुषमनोवृत्तीनामग्नित्वेन वर्णनात्। तस्मादेवंविदे स्वपतेऽपि तानेतानग्नीन् सर्वदा सर्वाणि भूतानि चिन्वन्तीति। तत्र यावज्जीवमग्नीनामविच्छेदेन नैरन्तर्यं प्रतीयते। तच्च विद्यास्वातन्त्र्यलिङ्गम्। कर्मशेषत्वे हि कर्मणो यावज्जीवं नैरन्तर्याभावात्तद्विषयाणां मनश्चिदादीनां कथं नैरन्तर्यं स्यात्। तच्च लिङ्गं प्रकारणाद्बलीयः। तस्मात् स्वतन्त्रविद्यात्मका इति। नाय दोषः। अन्यार्थदर्शनरूपत्वेन लिङ्गस्यैतस्य दुर्बलत्वात्। तथा हि—द्विविधं लिङ्ग, सामर्थ्यमन्यार्थदर्शन चेति। तत्र विध्युद्देशगत लिङ्ग सामर्थ्य, तच्च स्वातन्त्र्येण प्रमाणम्। अर्थवादगत त्वन्यशेषवाक्ये दृश्यमानत्वादन्यार्थदर्शनम्। तच्च तात्पर्यरहितत्वान्न स्वातन्त्र्येण प्रमाण, किंतु प्रमेयसाधकप्रमाणान्तरे सति केवलमुपोद्बलक भवति। एव च सति अत्रोदाहृतलिङ्गाना दुर्बलत्वात् प्रकरणादग्निशेषा मनश्चिदादय इति प्राप्ते ब्रूमः—न तावदत्र शाब्दो विधिरुपलभ्यते, लिङादेरश्रवणात्। किं तर्हि, अर्थवादसामर्थ्यादुन्नेयो विधिः। तथा च फलप्रतिपादकस्तावकवाक्याना रात्रिसत्रन्यायेन अधिकारिसमर्पणपर्यवसानात् अशेषमप्येतद्ब्राह्मण विधिरूप भविष्यति। ततो विध्युद्देशगतत्वेन लिङ्गस्य प्राबल्यम्। किंच 'ते हैते विद्याचित एव' इत्येवकारश्रुत्या कर्माङ्गत्व व्यावर्तते। तथा 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति वाक्यशेषोऽपि स्वातन्त्र्यगमकः। तस्मात् श्रुतिलिङ्गवाक्यैः प्रकरण बाधित्वा स्वतन्त्रविद्यात्मत्व मनश्चिदादीनामभ्युपगन्तव्यमित्यधिकरणार्थः। तत्र सर्वेषामिन्द्रियाणा मनसः प्रामुख्यात्तत्सपाद्यमग्निं प्रस्तोतुं मनसः स्वरूप तत्सृष्टिं चाह—नेव वा इदमग्र इति। अग्रे सृष्टेः प्राक्काले इदं जगत् नैवासदासीत् असदिव नासीत्। सदपि च नैवासीत्। सदसद्विलक्षणमासीदित्यर्थः। किं तदुभयविलक्षण तदासीत् — तद्ध तन्मन एवास इति।

शब्रासा.

**तस्मादेतदृषिणाऽभ्यनूक्तम्। नासदासीन्नो सदासीत्तदानीमिति। नेव हि सन्मनो नेवासत् ॥२॥**

सृष्टिप्राक्काले सदसद्विलक्षणसद्भाव मन्त्रसवादेन द्रढयति—तस्मादेतदृषिणाऽभ्यनूक्तम्। 'नासदासीन्नो सदासीत्तदानीम्' (ऋस. १०।१२९।१) इति प्रथमः पाद एव सवादकः। उक्तं सदसद्वैलक्षण्य मनसि दर्शयति—नेव हि सन्मन इति। मनः सद्रूपं न भवति, घटादिवद्रूपादिमत्त्वाभावात्। असच्च न भवति, प्रतीयमानत्वात्। शब्रासा.

**तदिदं मनः सृष्टमाविरबुभूषन्निरुक्ततरं मूर्ततरम्। तदात्मानमन्वैच्छत्। तत्तपोऽतप्यत। तत्प्रामूर्च्छत्। तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः। ते मनसैवाधीयन्त। मनसाऽचीयन्त। मनसैषु ग्रहा अगृह्यन्त। मनसाऽस्तुवत। मनसाऽशंसन्। यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत। तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः। तानेवादधति। तांश्चिन्वन्ति। तेषु ग्रहान् गृह्णन्ति। तेषु स्तुवते। तेषु शंसन्ति। एतावती वै मनसो विभूतिः। एतावती विसृष्टिः। एतावन्मनः। षट्त्रिंशत्सहस्राण्य(म)ग्नयोऽर्काः। तेषामेकैक एव तावान् यावानसौ पूर्वः ॥ ३ ॥**

तदिदं सृष्टं मनः आविरबुभूषत् निरुक्ततरं शब्दनिर्वाच्यं मूर्ततरं सत् आविर्भवितुमैच्छत्। तत् मनः आत्मानं स्वकारणं परमात्मान स्वस्वरूपं वा अन्वैच्छत्। तपः पर्यालोचन कृत्वा प्रामूर्च्छत् समुच्छ्रितं

बभूव। तत् मनः कर्तृ षट्त्रिंशत्सहस्राणि, अधिकरणविषयवाक्यविवरणसमये व्याख्यात, पुरुषायुषोऽह्नानि, तत्सबन्धिनीषु मनोवृत्तिषु अग्नित्वमारोप्यते इति द्रष्टव्य, एतावत्सख्याकान् अर्कान् अर्चनीयान् मनउपादानकान् मनश्चितः मनसा चीयमानान् मनःसपाद्यान् आत्मनोऽग्नीन् अपश्यत्। एतस्य मनश्चितोऽग्नेः क्रियामयाग्निप्रकरणमुपमृद्य स्वातन्त्र्य प्रतिपत्तु मनोव्यापारक्रियावयवमनुबध्नाति—ते मनसैवाधीयन्त इत्यादिना। ते अग्नयो मनसैवाधीयन्त, आधाने मनोव्यापार एव कारणमित्यर्थः। एव चयनग्रहणस्तुतशस्त्रादिकरण केवलमनोव्यापारसिद्धमित्यर्थः। सपद्द्युलोकाद्याधानवत् प्रत्यक्षाः क्रियावयवाः सपदा प्रतिष्ठापयितव्याः। तदेव विशदयति—तद्यत्किंचेमानि इति। इमानि भूतानि यत्किंच मनसा सकल्पयन्ति ध्यायन्ति, मनसा सकल्प एव तेषा अग्नीना सा कृतिः। तत्करणजनितानग्नीनेवादधति। भूतानीति सर्वत्र सबध्यते। 'तान् हैतानेवविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' (शब्रा. १०।५। ३।१२) इति वाक्यशेषोऽभिधास्यते। एतावती वै मनसः इति। मनोमयषट्त्रिंशत्सहस्रसख्याका अग्नय एव मनसः विभूतिः महिमा, विसृष्टिः विविधा विभक्ता सृष्टिरित्यर्थः। एतावन्मनः उक्तसख्याग्निरूपम्। पुनरप्यस्य मनश्चितस्याग्नेः (मनश्चितोऽग्निः ?) केवलविद्यामयत्वेन स्वातन्त्र्य वक्तु क्रियामयस्याग्नेर्माहात्म्यं मनोमयेऽतिदिशति—तेषामेकैक एव तावान्यावानसौ पूर्व इति। 'असौ पूर्वः' इति पदाभ्यामिष्टकाचितोऽग्निर्विवक्ष्यते। सः यावान् परिश्रिद्यजुष्मतीलोकम्पृणाभेदेनाहोरात्रध्यानेन च यत्परिमाणस्तेषां षट्त्रिंशत्सहस्रसमिताना अग्नीनां मध्ये एकैकोऽग्निरपि तावान् तत्परिमाणो ध्येयः। अनेन क्रियामयस्याग्नेर्माहात्म्यस्य ज्ञानमयानामग्नीनामेकैकस्मिन्नतिदेशे क्रियायामनादरो दर्शित इत्युक्त भवति। अतोऽयमग्निः केवलविद्यामय एवेति सुस्थितम्। शब्रासा.

**तन्मनो वाचमसृजत। सेयं वाक् सृष्टाऽऽविरबुभूषन्निरुक्ततरा मूर्ततरा। साऽऽत्मानमन्वैच्छत्। सा तपोऽतप्यत। सा प्रामूर्च्छत्। सा षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् वाङ्मयान् वाक्चितः। ते वाचैवाधीयन्त। वाचाऽचीयन्त। वाचैषु ग्रहा अगृह्यन्त। वाचाऽस्तुवत। वाचाऽशंसन्। यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म वाचैव तेषु तद्वाङ्मयेषु वाक्चित्सु वाङ्मयमक्रियत। तद्यत्किंचेमानि भूतानि वाचा वदन्ति तेषामेव सा कृतिः। तानेवादधति। तांश्चिन्वन्ति। तेषु ग्रहान् गृह्णन्ति। तेषु स्तुवते। तेषु शंसन्ति। एतावती वै वाचो विभूतिः। एतावती विसृष्टिः। एतावती वाक्। षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः। तेषामेकैक एव तावान् यावानसौ पूर्वः॥ ४॥**

**सा वाक् प्राणमसृजत। सोऽयं प्राणः सृष्ट आविरबुभूषन्निरुक्ततरो मूर्ततरः। स आत्मानमन्वैच्छत्। स तपोऽतप्यत। स प्रामूर्च्छत्। स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्प्राणमयान् प्राणचितः। ते प्राणेनैवाधीयन्त। प्राणेनाचीयन्त। प्राणेनैषु ग्रहा अगृह्यन्त। प्राणेनास्तुवत। प्राणेनाशंसन्। यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म प्राणेनैव तेषु तत्प्राणमयेषु प्राणचित्सु प्राणमयमक्रियत। तद्यत्किंचेमानि भूतानि प्राणेन प्राणन्ति तेषामेव सा कृतिः। तानेवादधति। तांश्चिन्वन्ति। तेषु ग्रहान् गृह्णन्ति। तेषु स्तुवते। तेषु शंसन्ति। एतावती वै प्राणस्य विभूतिः। एतावती विसृष्टिः। एतावान्प्राणः। षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः। तेषामेकैक एव तावान् यावानसौ पूर्वः॥ ५॥**

**स प्राणश्चक्षुरसृजत। तदिदं चक्षुः सृष्टमाविरबुभूषन्निरुक्ततरं मूर्ततरम्। तदात्मानमन्वैच्छत्। तत्तपोऽतप्यत। तत्प्रामूर्च्छत्। तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कांश्चक्षुर्मयांश्चक्षुश्चितः। ते चक्षुषैवाधीयन्त। चक्षुषाऽचीयन्त। चक्षुषैषु ग्रहा अगृह्यन्त। चक्षुषाऽस्तुवत। चक्षुषाऽशंसन्। यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म चक्षुषैव तेषु तच्चक्षुर्मयेषु चक्षुश्चित्सु चक्षुर्मयमक्रियत। तद्यत्किंचेमानि भूतानि चक्षुषा पश्यन्ति तेषामेव सा कृतिः। तानेवादधति। तांश्चिन्वन्ति।**

तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै चक्षुषो विभूतिः । एतावती विसृष्टिः । एतावच्चक्षुः । षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान् यावानसौ पूर्वः ॥ ६ ॥

तच्चक्षुः श्रोत्रमसृजत । तदिदं श्रोत्रं सृष्टमाविरबुभूषन्निरुक्ततरं मूर्ततरम् । तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत । तत्प्रामूर्च्छत् । तत् षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कांञ्छ्रोत्रमयान श्रोत्रचितः । ते श्रोत्रेणैवाधीयन्त । श्रोत्रेणाचीयन्त । श्रोत्रेणैषु ग्रहा अगृह्यन्त । श्रोत्रेणास्तुवत । श्रोत्रेणाशंसन् । यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म श्रोत्रेणैव तेषु तत् श्रोत्रमयेषु श्रोत्रचित्सु श्रोत्रमयमक्रियत । तद्यत्किंचेमानि भूतानि श्रोत्रेण शृण्वन्ति तेषामेव सा कृतिः । तानेवादधति । तांश्चिन्वन्ति । तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै श्रोत्रस्य विभूतिः । एतावती विसृष्टिः । एतावच्छ्रोत्रम् । षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान् यावानसौ पूर्वः ॥ ७ ॥

तच्छ्रोत्रं कर्मासृजत । तत्प्राणानभिसममूर्च्छत् । इमं संदेहमन्नसंदेहम् । अकृत्स्नं वै कर्म ऋते प्राणेभ्यः । अकृत्स्ना उ वै प्राणा ऋते कर्मणः ॥८॥

तदिदं कर्म सृष्टमाविरबुभूषन्निरुक्ततरं मूर्ततरम् । तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत । तत्प्रामूर्च्छत् । तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्कर्ममयान्कर्मचितः । ते कर्मणैवाधीयन्त । कर्मणाऽचीयन्त । कर्मणैषु ग्रहा अगृह्यन्त । कर्मणाऽस्तुवत । कर्मणाऽशंसन् । यत्किंच यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म कर्मणैव तेषु तत्कर्ममयेषु कर्मचित्सु कर्ममयमक्रियत । तद्यत्किंचेमानि भूतानि कर्म कुर्वते तेषामेव सा कृतिः । तानेवादधति । तांश्चिन्वन्ति । तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै कर्मणो विभूतिः । एतावती विसृष्टिः । एतावत्कर्म । षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान् यावानसौ पूर्वः ॥९॥

एवमुत्तरे वाक्चिदादयोऽग्निचित्पर्यन्ताः षट् पर्याया व्याख्येयाः । तत्र वागादिसंपाद्यानग्नीन् दर्शयितु तत्तत्पर्यायादौ तस्य तस्योत्पत्तिरुक्ता—तन्मनो वाचमसृजतेति । 'सा वाक् प्राणमसृजत' इत्यादेः 'तच्छ्रोत्रं कर्मासृजत तत्प्राणानभिसममूर्च्छत्' इत्यन्तस्यायमर्थः—श्रोत्रेण सृष्टं कर्म प्राणानभिसममूर्च्छत् अभिव्याप्नोत् । इम सदेघमनुप्राणाश्रय शारीरमुद्दिश्य समुच्छ्रित बभूव । स्वयमसदेघमशरीर सत् कर्म प्राणान्नयोरन्योऽन्यसाहचर्यादभिवृद्धि व्यतिरेकमुखेनाह—अकृत्स्न वै कर्म ऋते प्राणेभ्य इति । शब्रासा.

तत्कर्माग्निमसृजत । आविस्तरां वा अग्निः कर्मणः । कर्मणा ह्येनं जनयन्ति । कर्मणेन्धते ॥१०॥

सोऽयमग्निः सृष्ट आविरबुभूषन्निरुक्ततरो मूर्ततरः । स आत्मानमन्वैच्छत् । स तपोऽतप्यत । स प्रामूर्च्छत् । स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कानग्निमयानग्निचितः । तेऽग्निनैवाधीयन्त । अग्निनाऽचीयन्त । अग्निनैषु ग्रहा अगृह्यन्त । अग्निनाऽस्तुवत । अग्निनाऽशंसन् । यत्किंच यज्ञे कर्म क्रियते यत्किच यज्ञिय कर्माग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत । तद्यत्किंचेमानि भूतान्यग्निमिन्धते तेषामेव सा कृतिः । तानेवादधति । तांश्चिन्वन्ति । तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वा अग्नेर्विभूतिः । एतावती विसृष्टिः । एतावानग्निः । षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्यावानसौ पूर्वः ॥ ११ ॥

कर्मणाऽग्निसिद्धिं स्पष्टीकरोति—आविस्तरा वा अग्निः कर्मण इति । कर्मसकाशादग्नेर्जननात् समिन्धनाच्चाग्निराविस्तरां स्पष्टो दृश्यते इत्यर्थः । शब्रासा.

ते हैते विद्याचित एव । तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते । विद्यया हैवैत एवंविदश्चिता भवन्ति ॥ १२ ॥

एतेषा मनश्चित्प्रमुखाग्नीना सर्वेषा स्वतन्त्रविद्यामयत्वोपोद्बलकानि श्रुतिलिङ्गवाक्यान्युदाहरति — ते हैते विद्याचित एवेति । एते मनश्चिदादयो विद्याचित एव विद्ययैव चीयमाना भवन्ति । एवकारश्रुतिः कर्माङ्गत्वं

व्यावर्तयति । 'तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति लिङ्ग, 'विद्यया हैवैत एवंविदश्रिता भवन्ति' इति वाक्यं च स्वातन्त्र्यपक्षमुपोद्बलयति । शब्रासा.

मन प्राणचक्षुःश्रोत्रवाग्भि. प्राणाख्येन्द्रियै. संवलितः पुरुष पशवश्च

[1]देवाश्च वा असुराश्चैषु लोकेष्वस्पर्धन्त । ते देवाः प्रजापतिमुपाधावन् । . तेभ्य एतान्धुरः प्राणान् प्रायच्छन् । मनः प्रथममथ प्राणमथ चक्षुरथ श्रोत्रमथ वाचम् । ताभ्यः पञ्चभ्यो धूर्भ्यः पुरुप च पशूंश्च निरमिमीत । तेन पुरुषेणासुरानधूर्वन् । यदधूर्वंस्तद्धुरां धूस्त्वम् । धूर्वति पाप्मानं भ्रातृव्यं य एवं वेद ॥

प्रजापतिना सृष्टे पुरुपे स्थितेषु वाक्प्राणापानोदानचक्षुर्मन श्रोत्रशरीररेतोबलमन्युमूर्धात्मसु अग्निवायुविद्युत्पर्जन्यादित्यचन्द्रमोदिक्पृथिवीजलेन्द्रेशानाकाशब्रह्मणा प्रवेशः

[2]प्रजापतिर्वा इमं पुरुषमुदश्चत। तस्मिन्नेता देवता आवेशयत् । वाच्यग्निं प्राणे वायुमपाने वैद्युतमुदाने पर्जन्यं चक्षुष्यादित्यं मनसि चन्द्रमसं श्रोत्रे दिशः शरीरे पृथिवीं रेतस्यपो बल इन्द्रं मन्यावीशानं मूर्धन्याकाशमात्मनि ब्रह्म । स यथा महानमृतकुम्भः पिन्वमानस्तिष्ठेदेवं हैव समुत्तस्थौ । अथ हेमा देवता ईक्षांचक्रिरे । किमयमस्माभिः पुरुपः करिष्यति किं वा वयमनेन । हन्तास्माच्छरीरादुत्क्रमामेति । ता होचक्रमुः । अथ हेदं शरीरं रिक्तमिव परिसुषिरम् । स हेक्षांचक्रे प्रजापतिर(ती र)न्ध्रायनमर्क्ष्ं हन्ताहमिमा अशनायापिपासाभ्यामुपसृजा३ इति । ता होपसृजे । ता होपसृष्टाः सुखमलभमाना इममेव पुरुषं पुनः प्रत्याविविशुः ॥

वाङ्ममेत्यग्निराविवेश । प्राणो ममेति वायुराविवेश । अपानो ममेति वैद्युत आविवेश । उदानो ममेति पर्जन्य आविवेश । चक्षुर्ममेत्यादित्य आविवेश । मनो ममेति चन्द्रमा आविवेश । श्रोत्रमस्माकमिति दिश आविविशुः । शरीरं ममेति पृथिव्याविवेश । रेतोऽस्माकमित्याप आविविशुः । बलं ममेतीन्द्र आविवेश । मन्युर्ममेतीशान आविवेश । मूर्धा ममेत्याकाश आविवेश । आत्मा ममेति ब्रह्माऽऽविवेश । स यथा महान् वृक्ष आर्द्र उपसिक्तमूलस्तिष्ठेदेवं हैव समुत्तस्थौ ॥

पुरुष एव देवाना पू , अमृतब्रह्मस्थानं, स्वर्गलोकाश्रयः

[1]अष्टाचक्रा नवद्वारा । देवानां पूरयोध्या ।
तस्याꣳ हिरण्मयः कोशः । स्वर्गो लोको ज्योतिषावृतः ॥

पूरिति शरीरमुच्यते । देवाना इन्द्रादीना पूः अष्टाचक्रा, चक्रवदावरणभूताः त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रौजोरूपा अष्टौ धातवो यस्याः सेयमष्टाचक्रा । शिरोवर्तिभिः सप्तभिर्द्वारैरधोवर्तिभ्या द्वाराभ्यामुपेता नवद्वारा। अयोध्या कर्मगतिमन्तरेण केनापि प्रवर्तुमशक्या । तस्यां पुरि हिरण्मयः सुवर्णनिर्मितपदार्थवद्दशः कोशः अवकाशरूपः स्वर्गः सुखमयः लोकः स्थानविशेषः ज्योतिपा भासकेन जीवचैतन्येन आवृतः परिवेष्टितो वर्तते । तैआसा.

[2]यो वै तां ब्रह्मणो वेद । अमृतेनावृतां पुरीम् ।
तस्मै ब्रह्म च ब्रह्मा च । आयुः कीर्तिं प्रजां ददुः ॥

. ब्रह्मणः 'सत्य ज्ञानमनन्तं' इत्यादिश्रुतिप्रतिपादितस्य वस्तुनः सम्बन्धिनीं अमृतेन परमानन्देन आवृतां ता पुरीं यो वै यः कोऽपि पुमान् वेद, तस्मै विदुषे ब्रह्म च परमात्माऽपि ब्रह्मा च प्रजापतिरपि, चकाराभ्यामन्येऽपि सर्वे देवा आयुरादिक प्रयच्छन्ति । तैआसा.

[3]विभ्राजमानाꣳ हरिणीम् । यशसा संपरीवृताम् ।
पुरꣳ हिरण्मयीं ब्रह्मा । विवेशापराजिता ॥

(१) षब्रा. २।३.
. (२) शाआ. ११।१-२.

(१) तैआ. १।२७।२-३. अन्यस्थलादिनिर्देशः २४५ पृष्ठे द्रष्टव्यः ।

(२) तैआ. १।२७।३. अन्यस्थलादिनिर्देशः २४५ पृष्ठे द्रष्टव्यः ।

(३) तैआ. १।२७।३-४. अन्यस्थलादिनिर्देशः २४६ पृष्ठे द्रष्टव्यः ।

ब्रह्मा प्रजापतिः पुर शरीर विवेश प्रविष्टवान् । कीदृशी पुरम् । विभ्राजमानां विशेषेण राजमाना, हरिणी पापहरणशीला, यशसा जगत्स्रष्टृत्वलक्षणया कीर्त्या सपरीवृता सम्यक्परिवेष्टिता, हिरण्मयीं सुवर्णनिर्मिता, अपराजिता कदाचिदपि पराजयरहिताम् । तैआसा.

पराङेत्यज्यामयी । पराङेत्यनाशकी ।
इह चामुत्र चान्वेति । विद्वान्देवासुरानुभयान् ॥

विद्वान् परब्रह्मतत्त्ववित् पराङ् अपुनरावृत्तिरहितः एति ब्रह्मतत्त्वं प्राप्नोति । कीदृशो विद्वान् । अज्यामयी, ज्या वयोहानिः, आमयो व्याधिः, तद्वान् ज्यामयी, तदुभयराहित्यादयं अज्यामयी । नाशकः अपमृत्युः बन्धक कर्म वा, तद्योगात् नाशकी, तद्राहित्यात् अनाशकी । देहतादात्म्यभ्रमाभावात् वयोहानिव्याध्यपमृत्युरहितः पुनरावृत्तिशून्यः सन् ब्रह्म प्राप्नोति । इह च अमुत्र च लोकद्वयेऽपि देवासुरान् उभयान् अन्वेति अनुगच्छति, सर्वात्मको भवतीत्यर्थः । तैआसा.

---

## प्राणः

सर्वस्येशानः प्रतिष्ठा च, स्तनिताद्विवर्षणान्तव्यापार· पर्जन्यः, गर्भग्रहणप्रजननप्रयोजक , सर्वपश्वोषध्यादीना जन्मायुःप्रमोदकरः, गमनस्थित्यासनप्राणनादिशरीरक्रियानिर्वर्तक., रोगमृत्युद , गर्भजीवनजन्मनोः कर्ता, सर्वप्रजाव्यापकः, अन्नरूप , मातरिश्ववातस्वरूप., सर्वोपास्यः, देवपूज्यः, विराट्प्रजापतिसूर्यचन्द्रमआत्मक., सर्वेषु देवेषु प्रत्यक् स्थित·, पुन पुन जायमान., सुप्तेष्वपि जागरितः, सत्यवादिने उत्तमलोकदः, तस्मै तद्वेदित्रे च सर्वे बलिमर्पयन्ति

प्राणाय नमो यस्य सर्वमिदं वशे ।
यो भूतः सर्वस्येश्वरो यस्मिन्त्सर्वं प्रतिष्ठितम् ॥

प्राणाय, प्रकर्षेण अनिति सर्वप्राणिशरीरं व्याप्य चेष्टते इति प्राणः समष्टिशरीराभिमानी प्रथमसृष्टो हिरण्यगर्भः । 'प्राणः प्रजानामुदयत्येष सूर्यः' ( प्रउ. १।८ ) इति, 'स प्राणमसृजत' ( प्रउ. ६।४ ) इति, 'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' (प्रउ. ६।३) इत्यादिश्रुतिभ्यः ; तस्मै प्राणाय नमः नमस्कारोऽस्तु । तस्य सगुणब्रह्मात्मकत्व दर्शयति—यस्य प्राणस्य वशे सर्वमिद चराचरात्मक जगद्वर्तते । एतेन तस्य सकलजगन्नियन्तृत्वमुक्तम् । यः प्राणो भूतः भूतकालावच्छिन्नः न तु नविष्यन् । सर्वदा लब्धसत्ताक इत्यर्थः । सर्वस्य प्राणिजातस्य ईश्वरः ईशिता कर्तुमकर्तुमन्यथा वा कर्तुं शक्तः । यस्मिन् उदीरितलक्षणे प्राणे परब्रह्मात्मके सर्वं समस्तं जगत् प्रतिष्ठित, कारणभूते यस्मिन्ननवायवृत्त्या वर्तते इत्यर्थः, तस्मै प्राणाय नम इति सम्बन्धः । असा.

नमस्ते प्राण क्रन्दाय नमस्ते स्तनयित्नवे ।
नमस्ते प्राण विद्युते नमस्ते प्राण वर्षते ॥

हे प्राण क्रन्दाय क्रन्दनशीलाय ध्वनते ते तुभ्य नमः । तथा स्तनयित्नवे मेघजाल प्रविश्य स्तनित गर्जित कुर्वते ते तुभ्य नमः । हे प्राण विद्युते विद्युदात्मना विद्योतमानाय ते तुभ्यं नमः । तदनन्तर वर्षते वृष्टि कुर्वते ते तुभ्य हे प्राण नमोऽस्तु । असा.

यत्प्राण स्तनयित्नुनाभिक्रन्दत्योषधीः ।
प्र वीयन्ते गर्भान्दधतेऽथो बह्वीर्वि जायन्ते ॥

यत् यदा प्राणः जगत्प्राणभूतः सूर्यात्मको देवः स्तनयित्नुना मेघध्वनिना ओषधीः व्रीहियवाद्या ग्राम्याः आरण्याश्च वीरुधः अभिक्रन्दति अभिलक्ष्य शब्दायते । यथा गोयूथमध्ये दृप्तो वृषभः गर्भाधानेच्छु ता अभिलक्ष्य शब्द करोति तथेत्यर्थः । तदा ताः ओषधयः प्रवीयन्ते प्राणाभिक्रन्दनमात्रादेव गर्भं गृह्णन्ति । वर्षर्तुः सर्वासामोषधीना गर्भग्रहणकाल इत्यर्थः । तदानीमेव गर्भान् दधते धारयन्ति । अथो अनन्तरमेव बह्वीः बह्व्यो बहुप्रकारा वि जायन्ते विविधमुत्पद्यन्ते । असा.

यत्प्राण ऋतावागतेऽभिक्रन्दत्योषधीः ।
सर्वं तदा प्र मोदते यत्किं च भूम्यामधि ॥

प्राणो देवः ऋतावागते ऋतुकाले समागते वर्षर्तौ आगते वा यत् यदा ओषधीः अभिक्रन्दति, तदा सर्वं प्र मोदते प्रहृष्यति । भूम्यामधि उपरि यत् किं च यत् किमपि प्राणिजातं वर्तते, तत्सर्वं इत्यन्वयः ।

असा.

(१) तैआ. १।२७।४

(२) अस. ११।६।१-२६

**यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीम् ।**
**पशवस्तत्प्र मोदन्ते महो वै नो भविष्यति ॥**

यदा यस्मिन्काले प्राणो देवः मही महती पृथिवी विस्तीर्णा भूमिं वर्षेण वृष्टिकर्मणा अभ्यवर्षीत् अभितः सिक्तां करोति, तत् तदानी पशवः गवाद्याः प्र मोदन्ते प्रहृष्यन्ति । केनाभिप्रायेणेत्याह — महो वै उत्सवः खलु नः अस्माकं भविष्यति । वृष्टेरनन्तरं पृथिव्या भूयांसि सस्यान्युत्पद्यन्ते । तद्भक्षणनास्माकं पुष्टिर्भविष्यतीति प्रनृत्यन्तीत्यर्थः । असा.

**अभिवृष्टा ओषधयः प्राणेन समवादिरन् ।**
**आयुर्वै नः प्रातीतरः सर्वा नः सुरभीरकः ॥**

प्राणेन देवेन अभिवृष्टाः अभिषिक्ता ओषधयो ग्राम्या आरण्याश्च तेनैव प्राणेन समवादिरन् समवदन्त सभापणं कृतवत्यः । संवदनप्रकारमेव दर्शयति — आयुरिति । हे प्राण नः अस्माकं आयुः जीवनं त्वं प्रातीतरः प्रावर्धयः । तथा नः अस्मान् सर्वाः सुरभीः शोभनगन्धयुक्ताः अकः अकार्षीः । असा.

**नमस्ते अस्त्वायते नमो अस्तु परायते ।**
**नमस्ते प्राण तिष्ठत आसीनायोत ते नमः ॥**

हे प्राण आयते आगच्छते ते तुभ्यं नमोऽस्तु । तथा परायते पराङ्मुखं गच्छते तुभ्यं नमोऽस्तु । हे प्राण तिष्ठते यत्रक्वापि अवस्थिताय ते तुभ्यं नमोऽस्तु । आसीनाय उपविष्टाय ते तुभ्यं नमोऽस्तु । उतशब्दः अप्यर्थे । आगमनादिक्रियाः सर्वाः प्राणव्यापारनिर्वर्त्या इति तत्तदवस्थापन्नस्य नमस्कार्यत्वम् । असा.

**नमस्ते प्राण प्राणते नमो अस्त्वपानते ।**
**पराचीनाय ते नमः प्रतीचीनाय ते नमः**
**सर्वस्मै त इदं नमः ॥**

हे प्राण देव प्राणते प्राणनव्यापारं कुर्वते ते तुभ्यं नमोऽस्तु । तथा अपानते अपाननव्यापारं कुर्वते अपानवृत्त्यात्मकाय तुभ्यं नमोऽस्तु । तथा पराचीनाय पराञ्चनाय परागमनस्वभावाय देहाद्बहिरवस्थिताय ते तुभ्यं नमोऽस्तु । तथा प्रतीचीनाय प्रतिमुखमञ्चते देहमध्ये वर्तमानाय ते तुभ्यं नमोऽस्तु । किं बहुना, सर्वस्मै सर्वव्यापारकर्त्रे सर्वप्राणिशरीरान्तर्वर्तिने ते तुभ्यं इदं नमः अयं नमस्कारो भवतु । असा.

**या ते प्राण प्रिया तनूर्यो ते प्राण प्रेयसी ।**
**अथो यद्भेषजं तव तस्य नो धेहि जीवसे ॥**

हे प्राण ते तव या प्रिया प्रीतिविषया तनूः शरीरं अस्ति, तथा प्राण ते तव यौ । लिङ्गव्यत्ययः । ये प्रेयसी प्रियतमरूपे प्राणापानवृत्तिद्वयात्मके अग्नीषोमरूपे वा, अथो अपि च तव सबन्धि यत् भेषजं अमृतत्वप्रापकमौषधमस्ति, तस्य सर्वस्य प्रियतनुप्रभृतिकस्य सकाशात् नः अस्माकं जीवसे जीवनाय धेहि अमृतत्वसाधनं औषधं प्रयच्छ । असा.

**प्राणः प्रजा अनु वस्ते पिता पुत्रमिव प्रियम् ।**
**प्राणो ह सर्वस्येश्वरो यच्च प्राणति यच्च न ॥**

प्राणो देवः प्रजाः प्रजायमाना देवतिर्यङ्मनुष्याद्याः अनु वस्ते अनुक्रमेण च्छादयति । तच्छरीराणि नाडीद्वारा व्याप्य वर्तते इत्यर्थः । तत्र दृष्टान्तः—पिता पुत्रमिव । यथा पिता प्रियं स्निग्धं पुत्रं वस्त्रेण स्वकीयेन आच्छादयति, तथेत्यर्थः । यच्च जङ्गमात्मकं वस्तु प्राणत प्राणनव्यापारं करोति, यच्च स्थावरात्मकं न प्राणति प्राणनव्यापारं न करोति, किंतु आत्माविनाभूतः प्राणः स्थावरेषु निरुद्धगतिरेव अन्तर्वर्तते, तस्य सर्वस्य स्थावरजङ्गमात्मनो जगतः प्राणः खलु ईश्वरः ईशिता स्वामी । असा.

**प्राणो मृत्युः प्राणस्तक्मा प्राणं देवा उपासते ।**
**प्राणो ह सत्यवादिनमुत्तमे लोक आ दधत् ॥**

प्राण एव देवो मृत्युः स्वनिर्गमनेन सर्वप्राणिनां मरणस्य कर्ता । स एव प्राणस्तक्मा कृच्छ्रजीवनकरो ज्वरादिरोगः । तथा तं प्राणं देहमध्यवर्तिनं देवाः इन्द्रियाणि उपासते । स्वस्वविषयोपभोगाय सेवन्ते इत्यर्थः । यद्वा, प्राणं हिरण्यगर्भं समष्ट्यात्मकं अग्न्यादयो देवा उपासते । स एव प्राणः सत्यवादिनम् । सत्यं यथार्थं वदितुं शीलमस्य स तथोक्तः । सत्यवदनशील महानुभावं उत्तमे उत्कृष्टतमे लोके आ दधत् आदधाति स्थापयति । असा.

**प्राणो विराट् प्राणो देष्ट्री प्राणं सर्वे उपासते ।**
**प्राणो ह सूर्यश्चन्द्रमाः प्राणमाहुः प्रजापतिम् ॥**

प्राण एव देवो विराट् स्थूलप्रपञ्चाभिमानी ईश्वरः । तथा प्राणो देष्ट्री स्वस्वव्यापारेषु सर्वेषां प्रेरयित्री पर-

देवता। तथाविधं प्राणं सर्वे जना उपासते स्वाभिलषित-फलसिद्ध्यर्थं सेवन्ते। प्राण एव सूर्यः सर्वस्य प्रेरक आदित्यः। तथा चन्द्रमाः अमृतमयः सोमोऽपि स एव। एतेन प्राणस्य अग्नीषोमात्मकत्वमुक्तम्। तथाविधमेव प्राणं प्रजापतिं प्रजानां स्रष्टारं देवमाहुः अभिज्ञाः कथयन्ति। अस.

**प्राणापानौ व्रीहियवावनड्वान्प्राण उच्यते।**
**यवे ह प्राण आहितोऽपानो व्रीहिरुच्यते॥**

प्राणश्च अपानश्च प्राणापानौ मुख्यस्य प्राणस्य प्रधानभूतौ वृत्तिविशेषौ। तावेव व्रीहिश्च यवश्च व्रीहियवौ, प्राणापानात्मकौ तावित्यर्थः। यो वृत्तिमान्मुख्यः प्राणः सोऽनड्वानुच्यते। व्रीहियवयोः कर्षणेन उत्पादयिता बलीवर्दो वृत्तिमत्प्राणात्मना ज्ञातव्य इत्यर्थः। उक्तमेवार्थं विवृणोति—यवे ह यवे खलु प्राणः प्राणवृत्त्यात्मको वायुः आहितः स्रष्ट्रा स्थापितः। अपानवृत्त्यात्मकस्तु वायुः व्रीहिरुच्यते व्रीहिषु अवस्थानेन तदात्मकः कथ्यते इत्यर्थः। अत एव तौ व्रीहियवौ ओषधीषु मध्ये पुष्टिकरत्वेन सर्वप्राणिभिरुपजीव्यौ। अतो लोकरक्षणाय प्राण एव व्रीहियवानडुद्रूपेण कथ्यते इत्यर्थः। अस.

**अपानति प्राणति पुरुषो गर्भे अन्तरा।**
**यदा त्वं प्राण जिन्वस्यथ स जायते पुनः॥**

अन्नात्मकत्वं प्राणस्योक्तम्। तद्रसपरिणामरूपशरीरधारी पुरुषो गर्भे स्त्रिया गर्भाशये अन्तरा मध्ये अपानति हे प्राण त्वत्प्रवेशेन अपाननव्यापारं करोति, प्राणति प्राणनव्यापारं करोति च। हे प्राण शुक्रशोणितावस्थायामेव पुरुषशरीरं प्रविश्य तत्परिणामाय प्राणापानवृत्ती जनयसीत्यर्थः। हे प्राण त्वं यदा यस्मिन्काले जिन्वसि गर्भीभूतं पुरुषं मातृभुक्ताहारपरिणतान्नरसेन प्रीणयसि, पुष्यसीत्यर्थः। अथो अनन्तरमेव स पुरुषः पुनर्जायते स्वार्जितपरिपक्वपुण्यपापफलोपभोगाय पुनर्भूम्यामुत्पद्यते। प्राण एव सर्वस्योत्पादक इत्यर्थः। अस.

**प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते।**
**प्राणे ह भूतं भव्यं च प्राणे सर्वं प्रतिष्ठितम्॥**

मातरि अन्तरिक्षे श्वसिति वर्तत इति मातरिश्वा अन्तरिक्षाधिपतिर्वायुः। तं वायुं प्राणं प्राणात्मकमाहुः। 'वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐउ. १।२।४) इति श्रुतेः। उक्त एवार्थो व्यतिहारेण दृढीक्रियते—वातो ह प्राण उच्यते इति। 'सैषाऽनस्तमिता देवता यद्वायुः' (बृउ. १।५।२२) इति सर्वजगदाधारभूतः सूत्रात्मा यो वातः सदागमनशीलो वायुः स एव प्राण उच्यते। अतो नानयोर्भेद इत्यर्थः। तस्मिन्प्राणे जगदाधारभूते सूत्रात्मनि भूतं भूतकालावच्छिन्नं उत्पन्नं जगत्, भव्यं भविष्यत्कालावच्छिन्नं उत्पत्स्यमानं जगत्। तदुभयं आश्रित्य वर्तते। किं बहुना, तस्मिन्प्राणे सर्वमिदं जगत् प्रतिष्ठितं आश्रितम्। अस.

**आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजा उत।**
**ओषधयः प्र जायन्ते यदा त्वं प्राण जिन्वसि॥**

आथर्वणीः अथर्वणा महर्षिणा सृष्टाः, आङ्गिरसीः अङ्गिरोभिः सृष्टाः, दैवीः देवैः सृष्टाः, मनुष्यजाः मनुष्येभ्य उत्पन्नाः। उतशब्दः अप्यर्थे। एवं नानाविधा ओषधयः प्र जायन्ते प्रकर्षेण उत्पद्यन्ते, हे प्राण त्वं यदा यस्मिन्काले जिन्वसि वृष्टिप्रदानेन प्रीणयसि।

अस.

**यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीम्।**
**ओषधयः प्र जायन्तेऽथो याः काश्च वीरुधः॥**

पूर्वार्धर्चो व्याख्यातः (अस. ११।६।५)। ओषधयो व्रीहियवाद्याः वृष्ट्यनन्तरमेव प्र जायन्ते। अथो अपि च याः काश्च वीरुधः विरोहणशीला लतारूपा आरण्याः ता अपि सर्वाः प्र जायन्ते।

अस.

**यस्ते प्राणेदं वेद यस्मिंश्चासि प्रतिष्ठितः।**
**सर्वे तस्मै बलिं हरानमुष्मिँल्लोक उत्तमे॥**

हे प्राण ते त्वदीयं इदं उदितं माहात्म्यं यो वेद जानाति, यस्मिंश्च विदुषि त्वं प्रतिष्ठितोऽसि उदीरितमहिमोपेतत्वेन भाव्यमानो भवसि, तस्मै विदुषे सर्वे देवा अमुष्मिन् स्वर्गे उत्तमे उत्कृष्टतमे लोके बलिं अमृतमयं भागं हरान् हरन्ति। अस.

**यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः।**
**एवा तस्मै बलिं हरान्यस्त्वा शृणवत्सुश्रवः॥**

हे प्राण सर्वा इमाः प्रजा देवतिर्यङ्मनुष्याद्याः यथा येन प्रकारेण तुभ्यं त्वदर्थं बलिहृतः बलेर्भोक्तव्यस्यान्नस्य

हर्तारः उपहर्तारो भवन्ति, एव एव तस्मै विदुषे बलि हरान् हरन्तु प्रयच्छन्तु। हे शुश्रुवः शृण्वन् प्राण त्वा त्वां यः शृणवत् शृणुयात् तव माहात्म्यप्रतिपादक मन्त्र-जात श्रवणेन्द्रियेण जानीयात्, तस्मै इति सबन्धः।

असा.

**अन्तर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायते पुनः।**
**स भूतो भव्यं भविष्यत् पिता पुत्रं प्र विवेशा शचीभिः॥**

देवतासु देवेषु अन्तः मध्ये गर्भः सन् प्राणश्चरति। न केवल मनुष्यादिष्वित्यर्थः। आभूतः आसमन्तात् व्याप्तः भूतः नित्यः सन् स उ स एव प्राणः पुनर्जायते। तत्तच्छरीरेण सह पुनरुत्पद्यत इवेत्यर्थः। भूतः नित्यवर्त-मानः स प्राणः भूत भूतकालावच्छिन्नं वस्तु भविष्यत् भाविकालावच्छिन्नमुत्पत्स्यमान च वस्तु शचीभिः आत्मी-याभिः शक्तिभिः प्र विवेश। पिता पुत्रम्। लुप्तोपममे-तत्। यथा पिता स्वकीय पुत्र स्वावयवैरनुप्रविशति, तथेत्यर्थः। अथवा, प्राण एव हि सर्वस्य लोकस्य पिता जनकः। सोऽयं पुत्र स्वस्मादुत्पन्नं पुत्रभूत सर्व जगत् सात्मक कर्तुं प्रविवेशेत्यर्थः। असा.

**एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन्।**
**यदङ्ग स तमुत्खिदेन्नैवाद्य न श्वः स्यान्न रात्री नाहः स्यान्न व्युच्छेत्कदा चन॥**

हन्ति गच्छतीति हसः जगत्प्राणभूतः सूर्यः। स सलिलादुच्चरन् उद्गच्छन् उद्यन्नित्यर्थः। एक पादं नोत्खि-दति नोद्धरति। एक पाद निश्चल स्थापयित्वा एकेनैव पादेन परिभ्रमतीत्यर्थः। तथा च मन्त्र-वर्णः—'त सूर्यं देवमजमेकपादम्' (तैब्रा. ३।१।२।८) इति। अङ्ग हे देवदत्त स उच्चरन् सूर्यः यत् यदि तं निहित पादं उत्खिदेत् क्षिपेत्, तर्हि असौ द्वाभ्या पादाभ्यामस्मदादिवत् यत्रक्वापि गच्छेत् निषीदेद्वा। तथा च कालपरिच्छेदकस्य सूर्यस्य परिस्पन्दाभावात् अद्य श्वः रात्री अहः इत्येव विभिन्नव्यवहारो न स्यात्। कदा चन कदाचिदपि न व्युच्छेत्। व्युच्छन उषसः प्रादुर्भावः। सूर्यस्योदयेऽसभाव्यमाने तत्पुरोभाविनी उषा अपि नोदियात्। तथा च जगदान्ध्यमेव स्यादि-त्यर्थः। अथवा, हन्ति गच्छति कृत्स्नशरीर व्याप्य वर्तत इति हसः प्राणः। सलिलात् सलिलोपलक्षितात्पा-ञ्चभौतिकाद्देहात् उच्चरन् प्राणवृत्त्यात्मना ऊर्ध्वं गच्छन् एक पादं अपानवृत्त्यात्मक नोत्खिदति नोत्क्षिपति। यदि स प्राणस्तमपि अपानात्मक पाद उत्खिदेत् शरीरादुत्क्षिपेत्, तदा प्राणस्य कार्त्स्न्येन शरीरतो निर्ग-तत्वान्मृतशरीरस्य तस्य अद्य श्वः रात्रिः अहः इत्येव-मात्मकः कालविभागो न स्यात्। कदाचिदपि न व्युच्छेत् तमसो निवृत्तिर्न स्यात्। अतः जगत् सजीव कर्तुं एक पाद नोत्खिदतीत्यर्थः। असा.

**अष्टाचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा।**
**अर्धेन विश्वं भुवनं जजान यदस्यार्धं कतमः स केतुः॥**

अष्टाचक्रम्। त्वगसृगाद्याः सप्त धातवः, ओजो नाम अष्टमो धातुः। तेऽत्र रथात्मना वर्णनीयस्य शरीरस्य चक्रत्वेन रूप्यन्ते। अष्टौ चक्राणि यस्य तदष्टाचक्र शरीर एकनेमि एकेनैव प्राणेन नेमिनेव वेष्टितम्। लोके हि रथचक्र नेमिवेष्टितमेव प्रवर्तते। अत्र तु चक्राष्टकमपि एक एव प्राणात्मको नेमिः आवेष्ट्य (प्र)वर्तयतीत्यर्थः। सहस्राक्षर बहुभिरक्षैरुपेतम्। यद्वा, प्राणपरिस्पन्दवशेन सहस्रं बहुविधानि अक्षराणि वर्णावर्णात्मकानि शब्दरूपाणि यस्य तत् तथोक्तम्। यद्वा, अश्नोतेरौणादिकः सरप्रत्ययः, बहुविधव्याप्तिक इत्यर्थः। एवं रथात्मक शरीर पुरः पुरस्तात् पूर्वस्मिन्भागे प्र वर्तते, पश्चात् अपरभागे नि वर्तते। इत्थ महानुभावः प्राणः प्राणिशरीरं प्रविश्य तत्र प्रवृत्तिनिवृत्ती जनयतीत्यर्थः। शरीरस्य रथत्वेन रूप-णमन्यत्रापि आम्नातम्—'आत्मानं रथिन विद्धि शरीरं रथमेव तु' (काउ. २।१।३) इत्यादिना। स प्राणः सूत्रात्मभावेन स्थितः अर्धेन स्वात्मनोऽशेन एकेन विश्वं सर्व भुवन भूतजातं जजान प्राणवाय्वात्मना प्रविश्य जन-यामास। अस्य सूत्रात्मनः प्राणस्य यदन्यदर्धं प्राणरूपेणा-वस्थितादपरो भागः, तस्यापरिच्छिन्नस्य केतुः कतमः कीदृशः। परब्रह्मात्मकस्य प्राणस्य एकदेश एव कृत्स्नं जगद्वर्तते। अवशिष्टं स्वरूपमानन्त्यात् इद ईदृक् इति निर्धारयितुमशक्यमित्यर्थः। श्रूयते हि—' पादोऽस्य

'विश्वा भूतानि त्रिपादस्यामृत दिवि' (ऋस. १०।९०।३) इति । स्मृतिश्च भवति —' विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ' ( भ. गी. १०।४२ ) इति । असा.

**यो अस्य विश्वजन्मन ईशे विश्वस्य चेष्टतः ।**
**अन्येषु क्षिप्रधन्वने तस्मै प्राण नमोऽस्तु ते ॥**

यः प्राणो विश्वजन्मनः, विश्वानि सर्वाणि नानारूपाणि जन्मानि यस्य तत् तथोक्त, तस्य चेष्टतः व्याप्रियमाणस्य अस्य विश्वस्य सर्वस्य जगतः ईशे ईष्टे, अन्येषु प्राणिशरीरेषु क्षिप्रधन्वने क्षिप्र गच्छते व्याप्नुवते, हे प्राण तस्मै तथाविधाय ते तुभ्य नमोऽस्तु । असा.

**यो अस्य सर्वजन्मन ईशे सर्वस्य चेष्टतः ।**
**अतन्द्रो ब्रह्मणा धीरः प्राणो माऽनु तिष्ठतु ॥**

पूर्वोऽर्धर्चो व्याख्यातः । विश्वशब्दस्य स्थाने सर्वशब्द एव विशेषः । स जगदीश्वरः प्राणः अतन्द्रः आलस्यरहितः सर्वदा सर्वत्र सचरिष्णुः धीरः धिया ज्ञानशक्त्या युक्तः ब्रह्मणा सर्वगतब्रह्मात्मकेन अनवच्छिन्नेन रूपेण मा मां अनु तिष्ठतु अनुवर्तताम् ।

असा.

**ऊर्ध्वः सुप्तेषु जागार ननु तिर्यङ् नि पद्यते ।**
**न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन ॥**

हे प्राण त्व ऊर्ध्वः उत्थितः सन् सुप्तेषु निद्रापरवशेषु प्राणिषु जागर जागृहि तद्रक्षणार्थं निद्रारहितो वर्तस्व । जागरणे कारणमाह—नन्विति । सुप्तः प्राणी तिर्यङ् तिर्यगवस्थितः नि पद्यते निद्रापरवशः शेते । ननु इति प्रश्ने । अतस्त्व जागृहीत्यर्थः । प्राणस्यापि सुप्तिः किं न स्यादिति, तत्राह—न सुप्तमिति । प्राणिषु सुप्तेषु निद्रापरवशेषु सत्सु तच्छरीरमध्यवर्तिनः अस्य प्राणस्य सुप्त स्वाप कश्चन कोऽपि पुरुषः न अनु शुश्राव अनु पारम्पर्यक्रमेण श्रुतवान् । प्राणस्वपनस्य वक्ता श्रोता च दुर्लभ इत्यर्थः । असा.

**प्राण मा मत् पर्यावृतो न मदन्यो भविष्यसि ।**
**अपां गर्भमिव जीवसे प्राण बध्नामि त्वा मयि ॥**

हे प्राण मत् सकाशात् मा पर्यावृतः पराङ्मुखो मा भूः । पर्यावृत्त्यसभवमाह — हे प्राण त्व मत् सकाशादन्यो न भविष्यसि । मया सह तादात्म्यापन्न एव वर्तसे । अतः पर्यावृत्तिशङ्कापि न सभवतीत्यर्थः । अतो हे प्राण त्वा त्वा मयि मच्छरीरे जीवसे जीवनाय बध्नामि आसजामि । अपा गर्भमिव अपामुदकाना गर्भभूतं वैश्वानराग्निं जीवनार्थं देहमध्ये धारयन्ति, तथेत्यर्थः । अग्नेः अब्गर्भत्व मन्त्रवर्णादवगम्यते—' अपा गर्भं दर्शतमोपधीनाम् ' ( ऋस. १।१६४।५२ ), ' अग्ने विश्वस्य भूतस्याग्ने गर्भो अपामसि '( तैस. ४।२।३।३ ) इति च । असा.

शरीररूपवस्त्रधर

**प्राणो वै युवा सुवासाः । सोऽयं शरीरैः परिवृतः ॥**[1]

कदाचिदपि जरारहितत्वात्प्राणस्य युवत्वम् । प्राणवेष्टनरूपत्वात् शरीरावयवानां वस्त्ररूपत्वम् । ईदृशप्राणरूपत्वेन यूपः प्रशस्यते । ऐब्रासा.

प्राणापानव्यानरूप त्रिविधः

**स वा अयं त्रेधा विहितः प्राणः प्राणोऽपानो व्यान इति ॥**[2]

ऊर्ध्वमवाङ् प्राङ् च स्थिताना प्राणाना कार्याणि

**पदानुस्वारं पुरस्ताद्गायत्रं भवति । पदानुस्वारमुपरिष्टात्पवमानान्ते । तस्मादुभयतःप्राणाः प्रजा ऊर्ध्वाश्चावाचीश्च । द्विपाम्णी गायत्री । योऽयमवाङ् प्राण एष एव सः । तस्मादेतेन द्वयं प्राणेन करोति । भस्स च करोति वातं च । द्विषाम्णी बृहती । योऽयं प्राङ् प्राण एष एव सः । तस्मादेतेन द्वयं प्राणेन करोति । रेतश्च सिञ्चति मेहति च । एकसाम्नी त्रिष्टुप् । नाभिरेव सा । तस्यामेकं साम । तस्मादेतेनैकमेव प्राणेन करोति यदेव प्राणानुदन्तोऽनूदनिति ॥**[3]

प्राण एव प्रियतमः

**अथैतेषां महतां ब्राह्मणानां समुदितमारुणेर्जीवलस्य कारीरादेरषाढस्य सावयसस्येन्द्रद्युम्नस्य भाल्लवेयस्येति । जीवलश्च ह कारीरादिरिन्द्रद्युम्नश्च**[4]

(१) ऐब्रा. ६।२।३०.
(२) शाब्रा. ९३।९.
(३) जैब्रा. ९।९२७.
(४) जैब्रा. ९।२७९.

भाल्लवेयस्तौ हारुणेराचार्यस्य सभाग आजग्मतुः । ते हाषाढस्य गृहेषु शिश्यिरे । स होवाचाषाढ आमारुणे यत्सहैव ब्रह्मचर्यमचराव । सहान्वाब्रवीवहि । अथ केनेदं त्वमस्मानत्यनूचिषे । यदिदं त्वमियत्प्रियः कीर्तेरियत्प्रियः चक्षुष इयत्प्रियः सनेरसि केन त्वमिदं प्रापिथेति । स होवाच धूर्ष्वेवाहं तदुपास इति । किं त्वं तद्धूर्पूपास्स इति । प्रियमिति । य आसां प्रियमुपास्ते कि स भवतीति । प्रिय एव स कीर्तेः प्रियश्चक्षुषः प्रियः सनेर्भवतीति । एवमेव त्वमसीति होचुः ॥

[1]ते हारुणिमूचुः । त्वं वै न आचार्योऽसि । त्वं प्रथमो ब्रूष्वेति । स होवाच गायत्रीमेवाहं प्रियमुपास इति । प्राणो वै गायत्री । प्राणो वै प्रियम् । न वै प्राणात्प्रेयः किं चनास्ति । स य एवमेतां गायत्रीं प्रियमुपास्ते । यथा प्रिय एव प्राण आत्मन एवं प्रिय एव स कीर्तेरेवं प्रियश्चक्षुष एवं प्रियः सनेर्भवतीति ॥

प्राणो विभू रक्षकश्च

*[2]प्राणो रक्षति विश्वमेजत् । इर्यो भूत्वा बहुधा बहूनि ।
स इत्सर्वं व्यानशे ॥
यो देवो देवेषु विभूरन्तः । आवृदूदात्क्षेत्रियध्वगद्वृषा ।
तमित्प्राणं मनसोपशिक्षत । अग्रं देवानामिदमत्तु नो हविः ॥

प्राण. वायुरूप· एक एव त्रिविध

[3]एको ह्येवायं पवते । सोऽयं पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः प्राण उदानो व्यान इति ॥

स एवाय वायुः एक एव पुरुषे पुरुषस्य अन्तः प्रविष्टः प्राणादिभेदेन त्रेधा विभक्तः । शब्रासा.

एक एव प्राण वायुरूप दशधा शरीरे

[4]अयं वै प्राणो योऽयं पवते । यो वै प्राणः स आयुः । सोऽयमेक इवैव पवते । सोयं पुरुषेऽन्तः प्रविष्टो दशधा विहितः ॥

* अनयोर्व्याख्यान ३१६ पृष्ठे द्रष्टव्यम् ।

(१) जैब्रा. १।२७२. (२) तैब्रा २।५।१।१. (३) शब्रा. ३।१।३।२०. (४) शब्रा. ५।२।४।१०.

प्राणस्यायुष्ट्व शरीरधारकत्वात् । स प्राणरूपेण एकोऽपि पुरुषशरीरेऽनुप्रविष्टः सन् वृत्तिभेदाद्दशसु चक्षुःश्रोत्रादिद्वारेषु सचरन् दशधा विहितो भवति । शब्रासा.

सृष्ट्यादौ सप्त प्राणा

*[1]असद्वा इदमग्र आसीत् । तदाहुः कि तदसदासीदिति । ऋषयो वाव तेऽग्रेऽसदासीत् । तदाहुः के ते ऋषय इति । प्राणा वा ऋषयः । ते यत्पुराऽस्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसाऽऽरिषन् । तस्मादृषयः ॥

स योऽयं मध्ये प्राणः एष एवेन्द्रः । तानेष प्राणान्मध्यत इन्द्रियेणैन्द्ध । यदैन्द्ध तस्मादिन्धः । इन्धो ह वै तमिन्द्र इत्याचक्षते परोक्षम् । परोक्षकामा हि देवाः । त इद्धाः सप्त नाना पुरुषानसृजन्त ॥

त्रिविधा अवाङ्स्थिता प्राणाः

[2]तं हैके त्रिचितं चिन्वन्ति । त्रयो वा इमेऽवाञ्चः प्राणा इति । न तथा कुर्यात् । अति ते रेचयन्ति एकविंशसंपदं, अथो अनुष्टुप्संपदं, अथो बृहतीसंपदं, ये तथा कुर्वन्ति । एकं ह्येवैतद्रूपं योनिरेव प्रजातिरेव यदेतेऽवाञ्चः प्राणाः । यद्धि मूत्रं करोति यत्पुरीष प्रैव तज्जायते ॥

त्रिचितिको गार्हपत्यश्चेतव्य इत्येकीयमतमुपन्यस्यति –त हैक इति । एके शाखिनः त प्रकृत गार्हपत्य त्रिचितं उपर्युपरि चितित्रयात्मकं चिन्वन्ति । तिसृभिश्चितिभिश्चितस्त्रिचितः, तं तथाविधम् । एव चिन्वतामभिप्रायमाह–त्रयो वा इमे इति । प्रजननमूत्रपुरीषसर्गवृत्तिभेदेन त्रित्वम् । ततश्च तिसृभिश्चितिभिः त्रीण्येव प्राणायतनानि कल्पितानि भविष्यन्तीत्याशयः । वक्ष्यमाणसपत्तित्रयातिरेकात्मकदोषाभिधानेन तमेत पक्ष निराचष्टे–न तथेति । ये शाखिनः तथा त्रिचितचयन कुर्वन्ति, ते एकविंशसपद 'ता उभय्य एकविंशतिः सपद्यन्ते' ( शब्रा. ७।१।१।३४ ) इत्यादिनोक्ता एकविंशतेरिष्टकानां संपद

* अनयोर्व्याख्यानं २९० पृष्ठे द्रष्टव्यम् ।

(१) शब्रा. ६।१।१।१-२.
(२) शब्रा. ७।१।२।१५.

अतिरेचयन्ति अतिरिक्तां कुर्वन्ति । त्रिचितिके हि बहुतरा इष्टकाः स्युः । तथा आनुष्टुभेषु 'अथातः संपदेवैकविंशतिरिष्टकाः' (शब्रा. ७।१।२।१६) इत्यादिना वक्ष्यमाणायास्त्रिविधाया अपि संपद, तथा 'सैषा बृहत्येव' (शब्रा. ७।१।२।२२) इत्यादिना वक्ष्यमाणाया बृहत्याः संपदमपि अतिरेचयन्तीत्यनुषङ्गः। 'त्रयो वा इमेऽवाञ्चः प्राणाः' इति यदुक्त, तदप्यङ्गीकृत्य निराकरोति—एकं ह्येवेत्यादिना। एतस्य प्राणस्य रूपं एतद्रूप एकमेव खलु यदेतेऽवाञ्चः प्राणाः। प्रजननमूत्रपुरीषसर्गवृत्तिभेदेन त्रयोऽपि । कि पुनस्तदित्याह— योनिरेवेति । योनिः स्थान कारणम् । मूत्रपुरीषरेतसामेकमेवैतद्रूप कारणमनादृत्यापि कर्मविवक्षया आह—प्रजातिरेवेति । मूत्रपुरीषसर्गात्मना प्रजातेरेकत्वमित्यर्थः । तदेवोपपादयति— यद्धीति । यन्मूत्रं करोति, यच्च पुरीप करोति, तत् जायते एवेति प्रजातिरूपेण त्रयाणामप्येकत्व सिद्धमेवेत्यर्थः ।

शब्रासा.

आदित्येन समिद्ध उष्णः जीवलक्षणरूपः प्राण·

[१]स वै स्वयमातृण्णां लोकम्पृणया प्रच्छादयति । प्राणो वै स्वयमातृण्णा । आदित्यो लोकम्पृणा। प्राणं तदादित्येन समिन्धे । तस्मादयमुष्णः प्राणः। तया सर्वमात्मानं प्रच्छादयति । सर्वं तदात्मानमादित्येन समिन्धे । तस्मादयं सर्व एवात्मोष्णः । तद्धैतदेव जीविष्यतश्च मरिष्यतश्च विज्ञानम् । उष्ण एव जीविष्यन् शीतो मरिष्यन् ॥

यजुष्मतीरुपधाय लोकम्पृणया प्रच्छादयतीत्यनेनैव स्वयमातृण्णाया अनुवादप्रदर्शनार्थं पुनरुच्यते । तदादित्येन समिन्धे प्राणस्य समिन्धन विधीयते तैरेवैतत्प्राणवायुधारिणं वायुना इत्येतत्कायाग्निरूपेण सदा स्थापयति। तथा लोकम्पृणया सर्वमग्नेरायात सर्वं कार्यं यजुष्मत्येष्टकया अव्यतिरिक्तमपि प्रच्छादयति सपक्षपुच्छमित्यभिप्रायः। तस्मादयं सर्व एवात्मा उष्ण इति, पक्षपुच्छानामप्युष्णत्वात् । शब्रासा.

शीर्षस्थ· पञ्चविध· प्राण·

[२]पञ्चधा विहितो वा अयं शीर्षन्प्राणो मनो वाक् प्राणश्चक्षुः श्रोत्रम् ॥

(१) शब्रा. ८।७।२।११
(२) शब्रा. ९।२।२।५.



वाक् इति मुखम्। प्राण इति घ्राणम्। चक्षुर्द्वय, श्रोत्रद्वयं च द्वौ प्राणौ । मनःसहिता वागादयः शिरसि पञ्चधा विहितः प्राणः । शब्रासा.

अग्निरेव प्राणरूपः अध्यात्मं, वायुरूप. अधिदैवतम्

[१]धीरो ह शातपर्णेयो महाशालं जाबालमुपोत्ससाद । तं होवाच किं मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । वाचमिति । यस्तमग्निं वेद किं स भवतीति । वाग्मी भवतीति होवाच ।'नैनं वाग्जहातीति ॥ १ ॥

तृतीयब्राह्मणे अग्नेः सर्वदेवतासमष्टिरूपप्राणवाय्वात्मकत्व धीरमहाशालनाम्न्योर्महर्ष्योः प्रश्नप्रतिवचनाभ्या प्रतिपाद्यते । विद्याविषये गुरुशिष्यप्रतिपत्तिः कार्येति वक्तु तत्प्रतिपत्तिमादौ दर्शयति—धीरो हेति । उपोत्ससाद समीपमभ्यागतः । तस्मात् सकाशात् विद्या ग्रहीतु उपसत्तिं कृतवान् । गुरुः शिष्यस्य समीपागमनमात्र दृष्ट्वा विद्यामुपदेष्टु नार्हति, किंतु तस्य बुभुत्साविशेष परिज्ञाय वक्तुमुचितः, इति दर्शयितुं महाशालस्य वचनमाह—त होवाचेति । स जाबालो महाशालः त धीरमुपसन्न शिष्यमुवाच—हे धीर, किंविद्वान् कमर्थ जानानो मां उपोदसदः उपसन्नवानसीति । शिष्यस्योत्तरम्—अग्नि वेद जानामीति । कमग्नि वेत्थेति अग्निविशेषप्रश्नो महाशालस्य । वाचमिति वाग्रूपमग्निं वेदेति शिष्यस्योत्तरम् । अथ महाशालस्य वाग्रूपाग्निपरिज्ञाने किं फलमिति फलप्रश्नः–यस्तमग्निं वेदेति । अथ वाग्रूपफलकथन–वाग्मी भवतीत्यादिना। वाग्मी प्रशस्तवाग्भवति इत्येवमुवाच धीरः । तदेव विवृणोति—नैनमिति । एन वाग्रूपमग्निं विद्वांसं वाक् न जहाति न त्यजति । सर्वत्र प्रश्नप्रतिवचनसमाप्तिद्योतका इतिशब्दाः । शब्रासा.

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्नि वेत्थेति । चक्षुरिति । यस्तमग्निं वेद किं स भवतीति । चक्षुष्मान्भवतीति होवाच । नैनं चक्षुर्जहातीति ॥ २ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । मन

(१) शब्रा. १०।३।३।१–८.

इति। यस्तमग्निं वेद किं स भवतीति। मनस्वी भवतीति होवाच। नैनं मनो जहातीति॥ ३॥

वेत्थाग्निमिति होवाच। किमेव मा विद्वानुपोदसद इति। अग्निं वेदेति। कमग्निं वेत्थेति। श्रोत्रमिति। यस्तमग्निं वेद किं स भवतीति। श्रोत्रवान् भवतीति होवाच। नैनं श्रोत्रं जहातीति॥ ४॥

वेत्थाग्निमिति होवाचेत्यादयो जाबालस्य धीरं प्रति कृताः प्रश्नाः। एवमुत्तरत्र वागाद्यग्निविशेषविषयप्रश्नप्रतिवचनरूपाः पर्याया व्याख्येयाः। शब्रासा.

वेत्थाग्निमिति होवाच। किमेव मा विद्वानुपोदसद इति। अग्निं वेदेति। कमग्निं वेत्थेति। य एतत्सर्वमग्निस्तं वेदेति। तस्मिन्होक्त उपावरुरोहाधीहि भोस्तमग्निमिति॥ ५॥

य एतदिति। पुनः जाबालेन कीदृशमग्निं वेत्थेति प्रश्ने कृते वागादिसर्वात्मकमग्निं जानामीति धीर उक्तवान्। अथैवमुक्ते सर्वात्मकमग्निमजानानो महाशालः तस्माद्धीरात् सकाशादग्निं परिजिज्ञासितुमासनादुपावरूढ इत्याह—तस्मिन् होक्त इति। हे धीर त सर्वात्मकमग्निं मा अधीहि अध्यापयेति उपसन्न इत्यर्थः। शब्रासा.

स होवाच प्राणो वाव सोऽग्निः। यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति। प्राणं चक्षुः। प्राणं मनः। प्राणं श्रोत्रम्। यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते। इत्यध्यात्मम्॥ ६॥

उपास्याग्नेरध्यात्माधिदेवतभेदेन सर्वात्मत्व विशदयति—स होवाचेति। स धीरः त अग्निं उक्तवान्। सोऽग्निः प्राणो वाव प्राण एव। प्राणस्य सर्वात्मकत्वमाह—यदा वै पुरुषः स्वपिति सुषुप्त्यवस्थामनुभवति तदा वाक्चक्षुःश्रोत्रादीनि ज्ञानकर्मेन्द्रियाणि मनश्चान्तरमिन्द्रिय प्राणं अप्येति प्राणे एकीभवति। केवल प्राण एव वर्तते इत्यर्थः। अथ यदा पुरुषः प्रबुध्यते ज्ञानवान् भवति, तदा प्राणादेवाधि पुनरिन्द्रियाणि जायन्ते। अतः प्राणरूपोऽग्निः सर्वात्मकः। इत्यध्यात्ममित्यर्थः। शब्रासा.

अथाधिदेवतम्। या वै सा वागग्निरेव सः। यत्तच्चक्षुरसौ स आदित्यः। यत्तन्मन एष स चन्द्रमाः। यत्तच्छ्रोत्रं दिश एव तत्। अथ यः स प्राणोऽयमेव स वायुर्योऽयं पवते॥ ७॥

अधिदैवमाह—अथाधिदेवतमिति। या वै सा वागग्निरेव, 'अग्निर्वाग्भूत्वा मुख प्राविशत्' (ऐउ १।२।४) इति श्रुतेः। चक्षुर्मनःश्रोत्रप्राणानामादित्यचन्द्रादिग्वायुरूपत्व ऐतरेयके समाम्नायते— 'वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्, दिशः श्रोत्र भूत्वा कर्णौ प्राविशन्, चन्द्रमा मनो भूत्वा हृदय प्राविशत्' (ऐउ. १।२।४) इति। योऽय पवते अन्तरिक्षे प्रवहति स वायुः प्राण इत्यर्थः। शब्रासा.

यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्वाति। तस्मादेनमुदवासीदित्याहुः। वायुं ह्यनूद्वाति। यदादित्योऽस्तमेति वायुं तर्हि प्रविशति। वायुं चन्द्रमाः। वायौ दिशः प्रतिष्ठिताः। वायोरेवाधि पुनर्जायन्ते। स यदैवंविदस्माल्लोकात्प्रैति वाचैवाग्निमप्येति। चक्षुषाऽऽदित्यम्। मनसा चन्द्रम्। श्रोत्रेण दिशः। प्राणेन वायुम्। स एतन्मय एव भूत्वैतासां देवतानां यां यां कामयते सा भूत्वैलयति॥ ८॥

तेषामग्न्यादीनां वाय्वधीनता दर्शयति—यदा वेति। यदा अग्निः अनुगच्छति तदा वायु अनुलक्ष्य उद्वाति नश्यति। वायावधिक वाति सति अग्निर्विनष्टो भवति। तस्मादेन नष्टमग्नि उदवासीदित्याहुः। नष्टोऽनुगत उद्वात इति पर्याया इत्यर्थः। यदादित्य इति। अस्तमेति इति पदेन विलयो लक्ष्यते। आदित्यचन्द्रमसोर्वायौ प्रवेशः 'ज्योतिष्यापः प्रलीयन्ते तेजो वायौ प्रलीयते' इति श्रुतेरवगम्यते। वायौ सूत्रात्मनि दिशः प्रतिष्ठिताः वर्तन्ते। पुनः वायोः सकाशादेवाग्न्यादयो जायन्ते इत्यधिदेवतमर्थः। वेदितुः फलमाह—स यदेति। वेदिता यदि म्रियेत तदा वाक्चक्षुरादिभिरग्न्यादित्यादीनुपेत्य एतन्मयो देवतामयो भूत्वा एतासा देवतानां मध्ये या देवता भवामि इति स्वयमिच्छति, सा सा देवता भूत्वा एलयति सचरति चेष्टते इत्यर्थः। शब्रासा.

उपांश्वायतनः प्राण.

* तदेतद्यजुरुपांश्वनिरुक्तम्। प्राणो वै यजुः। उपांश्वायतनो वै प्राणः। तद्यदेनं निर्ब्रुवन्तं ब्रूयात्

* एतदव्यवहितपूर्वाः १४ कण्डिकाः वायुप्रकरणे १५२-१५५ पृष्ठेषु द्रष्टव्याः।

(१) शब्रा. १०।३।५।१५.

अनिरुक्तां देवतां निरवोचत्प्राण एनं हास्यतीति तथा हैव स्यात् ॥

एव वायुप्राणरूपत्वेन स्तुतस्य यजुष उपांश्वनुष्ठान विधत्ते—तदेतद्यजुरिति । इदमीदृक् क्रियते इति निर्वक्तुमनर्हं अनिरुक्त, तदेवोपांशुत्वलक्षणम् । आन्तरत्वात्प्राणस्योपांशुस्थानत्वम् । उपांशुत्वेनाननुष्ठाने दोषमाह—तद्यदेनमिति । एन प्राणरूप यजुर्मन्त्र निर्ब्रुवन्त उच्चैः पठन्त पुरुष ब्रूयात् विद्वानसौ अनिरुक्ता उच्चैर्वक्तुमनर्हा देवता उच्चैरवादीत् । एन निर्ब्रुवन्त प्राणो हास्यति त्यक्ष्यति, उपांशुत्वविघातात्, इति यत् ब्रूयात्तत् तथैव स्यादिति सबन्धः । यावन्त काल प्राण उपांशुः आन्तरो वर्तते तावन्त जीवति, स यदा ऊर्ध्व निष्क्रामति तदा मरिष्यतीत्यर्थः ।

शब्रासा.

पञ्चविधा प्राणा.

यो वाक् सोऽग्निः । यः प्राणः स वरुणः । यन्मनः स इन्द्रः । यच्चक्षुः स बृहस्पतिः । यच्छ्रोत्रं स विष्णुः । एते ह वा एतान्पञ्चभिः प्राणैः समीर्योत्थापयन् । तस्मादु ह एवैताः पञ्च देवता उक्थे शस्यन्ते ॥

वाक्चक्षुःश्रोत्रमनःप्राणना ज्येष्ठश्च श्रेष्ठश्च

ॐ तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः ॥ १ ॥

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद । ज्येष्ठश्च ह वै श्रेष्ठश्च स्वानां भवति । प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । यो ह वै वसिष्ठां वेद । वसिष्ठो ह स्वानां भवति । वाग्वै वसिष्ठा । यो ह वै प्रतिष्ठां वेद । प्रति ह तिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च । चक्षुर्हं प्रतिष्ठा । यो ह वै संपद वेद । सं हास्मै कामाः पद्यन्ते । श्रोत्रं ह वा उ संपत् । यो ह वा आयतनं वेद । आयतनो ह स्वानां भवति । मनो वा आयतनम् । अथ हेमा देवताः प्रजापतिं पितरमेत्याब्रुवन्को वै नः श्रेष्ठ इति । स होवाच प्रजापतिः । यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठमिव मन्येत स वै श्रेष्ठ इति ॥ २ ॥

सा ह वागुच्चक्राम । यथा मूका अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति ॥ ३ ॥

चक्षुर्होच्चक्राम । यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति ॥ ४ ॥

श्रोत्रं होच्चक्राम । यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति ॥ ५ ॥

मनो होच्चक्राम । यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति ॥ ६ ॥

प्राणो होच्चक्राम । ततस्तद्यथेह सैन्धवः सुहयः पड्वीशशङ्कून्समखिदेदेवमसौ प्राणान्समखिदत् । ते ह समेत्योचुर्भगवन्मोत्क्रमीरिति । स होवाच प्राणः किं मे अन्नं भविष्यति । यत्किंचा श्वभ्य इवा शकुनिभ्य इति । किं मे वासो भविष्यतीति । आप इति होचुः । तस्माद्वा अयमशिष्यन्पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति । लम्भुको हास्य वासो भवति । अनग्नो ह भवति । तद्ध स्मैतत्सत्यकामो जाबालो गोश्रुते वैयाघ्रपद्यायोक्त्वोवाच । अप्येवं शुष्कस्य स्थाणोः प्रब्रूयाज्जायेरन्नस्य शाखाः प्ररोहेयुः पलाशानीति । वनस्पते शतवल्शो विरोहेति द्यां मा लेखीरन्तरिक्षं मा मा हिंसीरिति याज्ञवल्क्यः ॥ ७ ॥

अथ यदि महज्जिगमिषेत्त्रिरात्रं दीक्षित्वाऽमावास्यायां सर्वौषधस्य मन्थं दधिमधुभ्यामुपमन्थ्याग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्योत्तरतोऽग्नेः कंसे मन्थं कृत्वा हुत्वा होमान् मन्थे संपातमानयेत् । ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेत् । वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेत् । प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेत् । संपदे स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेत् ।

(१) गोब्रा. २।४।११. (२) शाखा. ९।१–८.

आयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे संपातमानयेत्। तत्सवितुर्वृणीमह इति पच्छः प्राश्य तत्सवितुर्वरेण्यमिति पच्छ आचामति। महाव्याहृतिभिश्चतुर्थं निर्णिज्य कांस्यं चर्मणि वा स्थण्डिले वा संविशति। स यदि स्त्रियं पश्येत्समृद्धं कर्मेति विद्यात्समृद्धं कर्मेति विद्यात्॥ ८॥

एको देवः, भर्ता, मृत्युः, अमृतरूपः, जीवनव्यापारकर्ता, मातरिश्वा, एक एव बहुषु प्रविष्टः, यज्ञस्वरूपः, सोमात्मकः, यज्ञगतिः, प्रजापतभोगः, देहगुप्तः

भर्ता सन्भ्रियमाणो बिभर्ति। एको देवो बहुधा निविष्टः।
यदा भारं तन्द्रयते स भर्तुम्। निधाय भारं पुनरस्तमेति॥

योऽयं प्राणाभिमानी देवः सोऽयं भर्ता पोषकः सन् भ्रियमाणः अन्तर्यामिणा परमेश्वरेण स्वय धार्यमाणः सन् बिभर्ति देहान्धारयति। स च सूत्रात्मरूपेण स्वयमेक एव देवः तत्तच्छरीरेषु बहुधा शरीरानुसारेण बहुप्रकारो निविष्टः अवस्थितः। अत एव प्राणविद्याप्रकरणे तत्तच्छरीरानुसारेण प्राणस्यावस्थितिं काण्वा आमनन्ति—'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः' (बृउ. १।३।२२) इत्यादि। स प्राणो यदा भारं देहरूपं भर्तुं धारयितुं तन्द्रयते तन्द्रीं आलस्यं प्राप्नोति। आयुषोऽवसाने हि तस्य आलस्य भवति। तदानीं भारं देहरूपं निधाय क्वचिदुत्सृज्य पुनरस्तमेति अदर्शन गच्छति। यथा देहोत्पत्तेः पूर्वमदर्शन गतः तथा देहपातादूर्ध्वमपीत्यभिप्रेत्य पुनरित्युक्तम्।

तैआसा.

तमेव मृत्युममृतं तमाहुः। तं भर्तारं तमु गोप्तारमाहुः।
स भृतो भ्रियमाणो बिभर्ति। य एनं वेद सत्येन भर्तुम्॥

वेदरहस्याभिज्ञाः पुरुषाः तमेव प्राणं मृत्युमाहुः। यदा प्राणो देहान्निर्गच्छति तदैव देहो म्रियते, अतो मृत्युहेतुत्वान्मृत्युत्वम्। यदा प्राणो देहेऽवस्थितः तदा अमृतो देह इत्यमृतत्वहेतुत्वात्तं प्राणममृतमाहुः। शरीरस्थापनहेतुत्वात् तमेव प्राण भर्तार देहस्य धारयितारमाहुः। तथा च कौषीतकिनः समामनन्ति—'अथ खलु प्राण एव प्रज्ञात्मेदं शरीर परिगृह्योत्थापयति' (कौउ. ३।३) इति। तथा तमेव प्राण अन्नपानादिस्वीकारहेतुत्वात् गोप्तार पोषकमाहुः। तथा च छन्दोगा अन्नपानस्वीकारसाधनत्व प्राणस्यामनन्ति—'यदश्नाति यत्पिबति तेनेतरान्प्राणानवति' (छाउ. १।२।९) इति। यः पुमान् एन प्राणं सत्येन श्रुतिस्मृत्युदितेन सम्यङ्मार्गेण भर्तुं व्यानकाल भित्ते धारयितु वेद जानाति, स उपासकः पुमान् भृतः परमेश्वरेण आदौ पोषितः भ्रियमाणः अनेन प्राणवायुना धार्यमाणः सन् बिभर्ति स्वयमितरान् प्राणिनश्च पोषयितुं समर्थो भवति।

तैआसा.

सद्योजातमुत जहात्येषः। उतो जरन्तं न जहात्येकम्।
उतो बहूनेकमहर्जहार। अतन्द्रो देवः सदमेव प्रार्थः॥

एष प्राणदेवः स्वतन्त्रः सन् सद्योजातमुत तदानीमेवोत्पन्नमपि पुरुषमल्पायुष जहाति परित्यजति। एकं अन्यं वा कंचित्पुरुष उतो जरन्त दीर्घेणायुषा जरा प्राप्तमपि न जहाति। एकमहः एकस्मिन्नेव दिने उतो बहून् अनेकानपि पुरुषान् जहार संहरति। सोऽय प्राणदेवः सदमेव सर्वदैव अतन्द्रः उच्छ्वासनिश्वासमरणामरणबहुमरणविषयव्यापारेषु आलस्यरहितः, अतोऽयं प्रार्थः अस्माभिः प्रार्थनीयः, उपास्य इत्यर्थः।

तैआसा.

यस्तद्वेद यत आबभूव। संधां च याँ संदधे ब्रह्मणैषः।
रमते तस्मिन्नुत जीर्णे शयाने। नैनं जहात्यहस्सु पूर्व्येषु॥

यतो यस्मात्कारणादयं प्राणः आबभूव आविर्बभूव, तत्कारणं यः पुमान् वेद जानाति, तथा संधां च संबन्धमपि यो वेद। कीदृशी सधेति सैव विशेष्यते—एष प्राणो ब्रह्मणा आत्मना सह यां संधा संदधे यं संबन्धं प्राप्तवान्। इत्थमिह देहे वस्तव्यमियन्तं कालमिह वस्तव्यमित्येतादृशी संधा, ता यो वेद तस्मिन्पुरुषे

(१) तैआ. ३।१४।१-४.

प्राणाकार प्राणात्मसंबन्ध वाऽभिजानाने उत जीर्णे शयाने तादृशे पुरुषे जरा प्राप्य शयाने सत्यपि तत्रायं प्राणो रमते क्रीडति। पूर्व्येषु पूर्वकृतैः कर्मभिः सपादितेषु अहस्सु बहुष्वपि दिवसेपु नैन जहाति एन जीर्णं पुरुष स प्राणो न परित्यजति। तैआसा.

**त्वामापो अनु सर्वाश्चरन्ति जानतीः। वत्सं पयसा पुनानाः।**
**त्वमग्निꣳ हव्यवाहꣳ समिन्त्से। त्वं भर्ता मातरिश्वा प्रजानाम्॥**

हे प्राण त्वा वायुरूप सर्वा आपः अनु सचरन्ति। यत्र वायुः प्रबल वाति तत्रैवाधिक सत् वृष्टिजल प्रवर्तते। तत्र दृष्टान्तः—यथा जानतीः स्वस्ववत्साभिज्ञा गावः पयसा पुनानाः स्वकीयेन क्षीरेण स्रवन्त्यः पोषयन्त्यो वत्समनु सचरन्ति, तद्वत् इति द्रष्टव्यम्। हे प्राण त्व हव्यवाहं हविषा वोढारमग्निं समिन्त्से सम्यग्दीपयसि। वायुना ह्यग्निर्दीप्यते। तथा त्वमेव मातरिश्वा वायुरूपः सन् प्रजाना भर्ता धारयिता असि। तैआसा.

**त्वं यज्ञस्त्वमु वेवासि सोमः। तव देवा हवमायन्ति सर्वे।**
**त्वमेकोऽसि बहूननुप्रविष्टः। नमस्ते अस्तु सुहवो म एधि॥**

हे प्राण त्व यज्ञप्रवर्तकत्वेन यज्ञरूपोऽसि। प्राणस्य वायुरूपत्वाद्यज्ञप्रवर्तकत्वम्। एतच्चान्यत्राम्नातम्- 'वाताद्वा अध्वर्युर्यज्ञ प्रयुङ्क्ते' (तैब्रा. ३।३।९।१२) इति। सोम उ सोमयागोऽपि त्वमेव, सर्वक्रियाणा वायुप्रेरितत्वात्। किंच सर्वे देवाः तव हव त्वदीयमाह्वान प्रति आयन्ति आगच्छन्ति। वायुना यागक्रियायां प्रवर्तितायां हविरर्थं देवा आगच्छन्ति। किच देवतारूपेण त्वमेकोऽसि, तथापि बहून् देहान् अनुप्रविष्टः तत्तदानुकूल्येन पृथग्रूपाणि धृत्वा तत्र तत्र स्थितः। हे प्राण ते तुभ्य नमोऽस्तु। मे मम सुहवः एधि आह्वातुं सुलभो भव। तैआसा.

**नमो वामस्तु शृणुतꣳ हवं मे। प्राणापानावजिरꣳ संचरन्तौ॥**
**ह्वयामि वां ब्रह्मणा तूर्तमेतम्। यो मां द्वेष्टि तं जहितं युवाना॥**

अजिरं अजनशीलं गमनस्वभावं शरीरं सञ्चरन्तौ सम्यक्प्रवर्तयन्तौ हे प्राणापानौ वां युवाभ्यां नमोऽस्तु नमस्कारोऽस्तु। मे हवं मदीयमाह्वान शृणुतम्। ब्रह्मणा मन्त्रेण वां ह्वयामि युवां आह्वयामि। तूर्तं तूर्णं शीघ्र एतं आगच्छतम्। युवाना तरुणौ युवां यः शत्रुर्मां द्वेष्टि तं जहित विनाशयतम्। तैआसा.

**प्राणापानौ संविदानौ जहितम्। अमुष्यासुना मा संगसाथाम्।**
**तं मे देवा ब्रह्मणा संविदानौ। वधाय दत्तं तमहꣳ हनामि॥**

हे प्राणापानौ वायू सविदानौ परस्परमैकमत्य गतौ जहितं अस्मच्छत्रु परित्यजतम्। अमुष्य मदीयशत्रोः असुना प्राणेन मा सगसाथा सगतौ मा भूतम्। ये ब्रह्मणा मदीयेन मन्त्रेण संविदानौ ऐकमत्य गतौ देवा प्राणापानदेवौ युवा त मदीयं शत्रु वधाय वधार्थं दत्तं मह्यं प्रयच्छतं, तं शत्रु अहं हनामि विनाशयामि। तैआसा.

**असज्जजान सत आबभूव। यं यं जजान स उ गोपो अस्य।**
**यदा भारं तन्द्रयते स भर्तुम्। परास्य भारं पुनरस्तमेति॥**

असत् अव्यक्त जगत्कारणं जजान प्रथममाकाशात्मना अव्यक्तरूपेणोत्पन्नम्। तस्मात्ततः अव्यक्तत्वेन सद्रूपादाकाशात् वायुरूपोऽस्य प्राणः आबभूव आभिमुख्येनोत्पन्नः। स च वायुरूपः प्राणो यं य देवमनुष्यादिदेह जजान उत्पादितवान्, स उ स सर्वोऽपि देहोऽस्य प्राणस्य गोपो रक्षकोऽभवत्। प्राणो हि शरीरे प्रविश्य गुप्तो वर्तते। स यावदायुस्तावन्तं कालं तत्रावस्थाय यदा देहरूपं भारं भर्तुं तन्द्रयते धारयितुमलसो भवति, तदानीमेव त भारं परास्य परित्यज्य पुनरपि देहोत्पत्तेः प्रागवस्थायां अस्तमेति अदर्शन गच्छति। तैआसा.

**तद्वै त्वं प्राणो अभवः। महान्भोगः प्रजापतेः।**
**भुजः करिष्यमाणः। यद्देवान्प्राणयो नव॥**

यत् यदा त्वं भुजो भोगान् करिष्यमाणः सन् नव देवान् नवच्छिद्रवर्तिनश्चक्षुरादीन् दीप्यमानान् पदार्थान् प्राणयः प्रकर्षेण चेष्टितवानसि, तद्वै तदानीमेव त्वं

प्राणोऽभवः प्राणयति प्रकर्षेण चेष्टयतीति व्युत्पत्त्या प्राणनामकोऽभूः । कीदृशस्त्वम् । प्रजापतेर्महान्भोगः अत्यन्तभोगहेतुः । तैआसा.

---

## मनः

संकल्पकरं, वेदाधारं, दूरंगमं, ज्योतिषां ज्योतिः, कर्मकारणं, प्रज्ञानचेतोधृतिरूपं, त्रैकालिकवस्तुग्राहकं, मनुष्यप्रवर्तकनियामकं, अमृतम्

**[1]यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥**

ऋषिर्वदति—तन्मे मनः शिवसंकल्पमस्तु । शिवः कल्याणकारी धर्मविषयः संकल्पो यस्य तत् तादृशं भवतु । मन्मनसि सदा धर्म एव भवतु न कदाचित्पापमित्यर्थः । तत्किम् । यत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति । चक्षुराद्यपेक्षया मनो दूरगामीत्यर्थः । यच्च दैवं दीव्यति प्रकाशते देवो विज्ञानात्मा, तत्र भवं दैवं आत्मग्राहकमित्यर्थः । ' मनसैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ' ( बृउ. ४।४।२० ) इति श्रुतेः । तत् उ । यदः स्थाने तच्छब्दः । उकारश्चार्थः । यच्च मनः सुप्तस्य पुंसः तथैव एति, यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्तावस्थायां पुनरागच्छति । यच्च दूरंगमं दूरात् गच्छतीति दूरंगमम् । अतीतानागतवर्तमानविप्रकृष्टव्यवहितपदार्थानां ग्राहकमित्यर्थः । यच्च मनो ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्तकमित्यर्थः । प्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्तन्ते । ' आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन ' इति न्यायोक्तेः मनःसंबन्धमन्तरा तेषामप्रवृत्तेः । तादृशं मे मनः शान्तसंकल्पमस्तु । शुम.

**[2]येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः । यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥**

मनीषिणः मेधाविनः यज्ञे येन मनसा सता कर्माणि कृण्वन्ति कुर्वन्ति, मनःस्वास्थ्यं विना कर्माप्रवृत्तेः । केषु सत्सु । विदथेषु ज्ञानेषु सत्सु विद्यन्ते ज्ञायन्ते तानि विदथानि, तेषु । यज्ञसंबन्धिना हविरादिपदार्थानां ज्ञानेषु सत्स्वित्यर्थः । कीदृशा मनीषिणः । अपसः । अप इति कर्मनाम । अपो विद्यते येषां ते अपस्विनः कर्मवन्तः । सदा कर्मनिष्ठा इत्यर्थः । तथा धीराः धीमन्तः । धीर्विद्यते येषां ते धीराः । यच्च मनः अपूर्वं न विद्यते पूर्वं इन्द्रियं यस्मात्तदपूर्वं, इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः । यद्वा, ' अपूर्वमनपरमनन्तरमबाह्यम् ' ( बृउ २।५।१९ ) इत्युक्तेरपूर्वं आत्मरूपमित्यर्थः । यच्च यक्षं यष्टृ शक्तं यज्ञम् । यच्च प्रजायन्ते इति प्रजास्तासां प्राणिमात्राणामन्तः शरीरमध्ये आस्ते । इतरेन्द्रियाणि बहिष्ठानि, मनस्त्वन्तरिन्द्रियमित्यर्थः । तत् तादृशं मे मनः शिवसंकल्पमस्त्विति व्याख्यातम् ।

शुम.

**[1]यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्न ऋते किंच न कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥**

यत् मनः प्रज्ञानं विशेषेण ज्ञानजनकम् । प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम् । उत अपि यन्मनः चेतः चेतयति सम्यक् ज्ञापयति तच्चेतः सामान्यविशेषज्ञानजनकमित्यर्थः । यच्च मनः धृतिः धैर्यरूपम् । मनस्येव धैर्योत्पत्तेः मनसि धैर्यमुपचर्यते, कार्यकारणयोरभेदात् । यच्च मनः प्रजासु जनेषु अन्तर्वर्तमानं सत् ज्योतिः प्रकाशकं सर्वेन्द्रियाणाम् । उक्तमपि पुनरुच्यते आदरार्थम् । ' अभ्यासे भूयांसमर्थं मन्यन्ते ' ( नि. १।४२ ) इति यास्कोक्तेः । यच्चामृतं अमरणधर्मि आत्मरूपत्वात् । यस्मान्मनसः ऋते यन्मनो विना किंचन किमपि कर्म न क्रियते जनैः । सर्वकर्मसु प्राणिनां मनःपूर्वं प्रवृत्तेः मनःस्वास्थ्यं विना कर्माभावादित्यर्थः । तन्मे मन इति व्याख्यातम् । शुम.

---

(१) ऋसं. ( खिल ) ४।११।४, शुसं. ३४।१; कब्रा. ४ ( पृ १३४ ).

(२) ऋसं. ( खिल ) ४।११।२; शुसं. ३४।२; कब्रा. २ ( पृ. १३४ ).

(१) ऋसं. ( खिल ) ४।११।३, शुसं. ३४।३; कब्रा. ३ ( पृ. १३४ ).

[1]येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम्।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥

येन मनसा इद सर्व परिगृहीत परितः सर्वतो ज्ञातम्। इद किम्। भूतं भूतकालसबन्धि वस्तु। भुवन भवतीति भुवनं वर्तमानकालसबन्धि। भविष्यत्। त्रिकालसबद्धवस्तुषु मनः प्रवर्तते इत्यर्थः। श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति। कीदृशेन येन। अमृतेन शाश्वतेन मुक्तिपर्यन्तम्। श्रोत्रादीनि नश्यन्ति, मनस्त्वनश्वरमित्यर्थः। येन च मनसा यज्ञः अग्निष्टोमादिः तायते विस्तार्यते। कीदृशो यज्ञः। सप्तहोता सप्त होतारो देवानामाह्वातारो होतृमैत्रावरुणादयो यत्र स सप्तहोता। अग्निष्टोमे सप्त होतारो भवन्ति। तन्मे मन इति व्याख्यातम्। शुम

[2]यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥

यस्मिन्मनसि ऋचः प्रतिष्ठिताः। यस्मिन् साम सामानि प्रतिष्ठितानि। यस्मिन्यजूंषि प्रतिष्ठितानि। मनसः स्वास्थ्ये एव वेदत्रयीस्फूर्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम्। 'अन्नमय हि सोम्य मनः' (छाउ. ६।७।६) इति छान्दोग्ये मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता। तत्र दृष्टान्तः— रथनाभौ आराः इव। यथा आराः रथचक्रनाभौ मध्ये प्रतिष्ठिताः, तद्वच्छब्दजाल मनसि। किंच प्रजानां सर्व चित्त ज्ञानं सर्वपदार्थविषयि ज्ञानं यस्मिन्मनसि ओतं प्रोतं निक्षिप्तं तन्तुसततिः पटे इव सर्व ज्ञानं मनसि निहितम्। मनःस्वास्थ्ये एव ज्ञानोत्पत्तिः, मनोवैयग्र्ये च ज्ञानाभावः। तन्मे मम मनः शिवसंकल्प शान्तव्यापारमस्तु। शुम.

(१) ऋसं (खिल) ४।११।१; शुसं. ३४।४; कब्रा. १ (पृ. १३४).
(२) ऋसं. (खिल) ४।११।५, शुसं. ३४।५, कब्रा. ५ (पृ. १३४).

*सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥

यत् मनो मनुष्यान् नरान् नेनीयते अत्यर्थमितस्ततो नयति। मनःप्रेरिता एव प्राणिनः प्रवर्तन्ते। मनुष्यग्रहण प्राणिमात्रोपलक्षकम्। तत्र दृष्टान्तः— सुसारथिः अश्वानिव, शोभनः सारथिर्यन्ता यथा कशया अश्वान्नेनीयते। द्वितीयो दृष्टान्तः— अभीशुभिर्वाजिन इव, यथा सुसारथिःअभीशुभिः प्रग्रहैः वाजिनः अश्वान्नेनीयते इत्यनुषङ्गः। रश्मिभिर्नियच्छतीत्यर्थः। उपमाद्वयम्। प्रथमायां नयनं, द्वितीयाया नियमनम्। तथा मनः प्रवर्तयति नियच्छति च नरानित्यर्थः। यच्च मनः हृत्प्रतिष्ठम्। हृदि प्रतिष्ठा स्थितिः यस्य तत्। हृद्येव मन उपलभ्यते। यच्च मनः अजिर जरारहितम्। बाल्य-

* ऋग्वेदसंहिताखिले (४।११) उपर्युद्धृतमन्त्रोत्तरमाम्नाता मन्त्रा यथा—

यदत्र षष्ठं त्रिशतं शरीरं यज्ञस्य गुह्यं नवनाभमाद्यम् ॥
दश पञ्च त्रिंशतं यत्परं च तन्मे मनः शिवसंकल्पमस्तु ॥
ये पञ्चपञ्चा दशतं शतं च सहस्रं च नियुतं न्यर्बुदं च।
ते यज्ञचित्तेष्टकात्तं शरीरं तन्मे मनः शिवसंकल्पमस्तु ॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तस्य योनिं परिपश्यन्ति धीरास्तन्मे मनः शिवसंकल्पमस्तु ॥
येन कर्माणि प्रचरन्ति धीरा विप्रा वाचा मनसा कर्मणा च।
यस्यान्वितमनु सं यन्ति प्राणिनस्तन्मे मनः शिवसंकल्पमस्तु ॥

(१) ऋसं. (खिल) ४।११।६; शुसं. ३४।६; कब्रा. ६ (पृ. १३४).

यौवनस्थाविरेषु मनसस्तदवस्थत्वात्। यच्च जविष्ठं अतिजववत् वेगवत् जाविष्ठम्। 'न वै वातात्किंचनाशीयोऽस्ति न मनसः किंचनाशीयोऽस्ति' (शब्रा. ५।१।४।८) इति श्रुतेः। तन्म इत्युक्तम्। शुम.

ये मनो हृदयं ये च देवा ये अन्तरिक्षे बहुधा चरन्ति।
ये श्रोत्रं चक्षुषी संचरन्ति तन्मे मनः शिवसंकल्पमस्तु॥
[यस्येदं धीराः पुनन्ति कवयो ब्रह्माणमेतं व्यावृणत इन्दुम्।
स्थावरं जङ्गमं च द्यौराकाशं तन्मे मनः शिवसंकल्पमस्तु॥]
येन द्यौरुग्रा पृथिवी चान्तरिक्षं ये पर्वताः प्रदिशो दिशश्च।
येनेदं जगद्व्याप्तं प्रजानां तन्मे मनः शिवसंकल्पमस्तु॥
येनेद सर्वं जगतो बभूवुर्ये देवा अपि महतो जातवेदाः।
तदिवाग्निस्तपसो ज्योतिरेकं तन्मे मनः शिवसकल्पमस्तु॥
अचिन्त्यं चाप्रमेयं च व्यक्ताव्यक्तपरं च यत्।
सूक्ष्मात्सूक्ष्मतरं ज्ञानं तन्मे मनः शिवसंकल्पमस्तु॥
आदित्यवर्ण तपसा ज्वलन्तं यत्पश्यसि गुहासु जायमानः।
शिवरूपं शिवमुदितं शिवालयं तन्मे मनः शिवसकल्पमस्तु॥
अस्ति विनाशयित्वा सर्वमिदं नास्ति पुनस्तथैव दृष्टं ध्रुवम्।
अस्ति नास्ति हितं मध्यमं पदं तन्मे मनः शिवसंकल्पमस्तु॥
अस्ति नास्ति विपरीतो प्रवादोऽस्ति नास्ति सर्वं वा इदं गुह्यम्।
अस्ति नास्ति परात्परो यत्परं तन्मे मनः शिवसंकल्पमस्तु॥
परात्परतरं यच्च तत्पराच्चैव यत्परम्।
तत्परात्परतोऽज्ञेयं तन्मे मनः शिवसंकल्पमस्तु॥
परात्परतरो ब्रह्मा तत्परात्परतो हरिः।
तत्परात्परतो ह्येष तन्मे मनः शिवसंकल्पमस्तु॥
गोभिर्जुष्टो धनेन ह्यायुषा च बलेन च।
प्रजया पशुभिः पुष्कलाद्यं तन्मे मनः शिवसंकल्पमस्तु॥
प्रयतः प्रणवो नित्यं परमं पुरुषोत्तमम्।
ओंकारं परमात्मानं तन्मे मनः शिवसंकल्पमस्तु॥
यो वै वेदादिषु गायत्री सर्वव्यापिमहेश्वरात्।
तद्विरुक्तं तथाद्वैरयं तन्मे मनः शिवसंकल्पमस्तु॥
ओंकारं चतुर्भुजं लोकनाथ नारायणम्।
सर्वस्थितं सर्वगत सर्वव्याप्त तन्मे मनः शिवसकल्पमस्तु॥
यो वै वेद महादेव परमं पुरुषोत्तमम्।
यः सर्वं यस्य चित्सर्वं तन्मे मनः शिवसंकल्पमस्तु॥
योऽसौ सर्वेषु वेदेषु पठते ह्यज ईश्वरः।
अकायो निर्गुणोऽध्यात्मा तन्मे मनः शिवसंकल्पमस्तु॥
कैलासशिखरे रम्ये शकरस्य शुभे गृहे।
देवतास्तत्र मोदन्ति तन्मे मनः शिवसंकल्पमस्तु॥
कैलासशिखराभासा हिमवद्गिरिसंस्थिताः।
नीलकण्ठं त्रिनेत्रं च तन्मे मनः शिवसंकल्पमस्तु॥
आब्रह्मस्तम्बपर्यन्तं त्रैलोक्यं सचराचरम्।
उत्पातितं जगद्व्याप्तं तन्मे मनः शिवसंकल्पमस्तु॥
य इमं शिवसंकल्पं सदा ध्यायन्ति ब्राह्मणाः।
ते परं मोक्षं गमिष्यन्ति तन्मे मनः शिवसंकल्पमस्तु॥
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्तन्मे मनः शिवसंकल्पमस्तु॥

सर्वेन्द्रियस्थानं सर्वव्यापकं च

मनो हि रेतस्येति ब्रूयात्। नो मनसो बाहीयः किं चनास्ति। अथो सर्वे प्राणा मनोऽभिसंपन्नाः॥

वाग्जनकं मन, वाचः स्वर एव सर्वदेवात्मक इन्द्र

अथो द्वे एव धुरौ मनश्चैव वाक् च। मनसो हि वाक् प्रजायते। सा मनोनेत्रा वाग्भवति। तन्मनो वाचमभिप्रवहति। वाग्घु पुनर्मन एवाभिप्रवहति। स यो मनसश्च वाचश्च स्वरो जायते स इन्द्रः। इन्द्रः सर्वे देवाः। स हैव देवलोकं गमयति य एवं विद्वानुद्गायति। अथ हान्ये गन्धर्वलोकं वा पितृलोकं वा गमयन्ति। अथो हास्यै ताभ्यामेव धूर्भ्यां सर्वा धुर उपाप्ता भवन्ति॥

श्रेयोरूपकर्मप्रेरक देवेषु श्रेष्ठं भूतभव्यरक्षकं च

* मनसश्चित्तेदम्। भूतं भव्यं च गुप्यते। तद्धि देवेष्वग्रियम्॥

आन एतु पुरश्चरम्। सह देवैरिमꣳ हवम्। मनः श्रेयसि श्रेयसि। कर्मन् यज्ञपतिं दधत्॥

मन सर्वस्य वशि, स्वतन्त्रं, देवस्वरूपं, आकूतीना चेतसा च अधिपतिः, विपश्चिच्च

मनसो वशे सर्वमिदं बभूव। नान्यस्य मनो वशमन्वियाय। भीष्मो हि देवः सहसः सहीयान्। स नो जुषाण उप यज्ञमागात्॥

सर्वमिद जगन्मनसो वशे बभूव। न त्वेतन्मनः अन्यस्य कस्यचिद्वशमनुगच्छति। सर्वस्य मनोऽधीनत्व श्रुत्यन्तरे दर्शितम्—'मन एव मनुष्याणा कारणं बन्धमोक्षयोः' (मैउ. ४।११) इति। मनस इतराधीनत्वाभावश्च स्मर्यते—'असशय महाबाहो मनो दुर्निग्रह चलम्' (भ. गी. ६।३५) इति। तादृशमनोभिमानी देवो भीष्मो हि भयहेतुत्वेन प्रसिद्धः। मनसः सर्वदुःखापादकत्वं सर्वैरप्यनुभूयते। सुप्ते मनसि दुःखमात्रस्याभावात्। तस्मादयं मनोदेवः सहसः सहीयान् बलवतोऽप्यत्यन्त बलीयान्। अत एव स्मर्यते—'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्' (भ. गी. ६।३४) इति। स तादृशो मनोदेवो जुषाणः प्रीतियुक्तः सन् नः अस्मदीय यज्ञ उपागात् प्राप्नोतु।

तैब्रासा.

आकूतीनामधिपतिं चेतसां च। संकल्पजूतिं देवं विपश्चिम्। मनो राजानमिह वर्धयन्तः। उपहवेऽस्य सुमतौ स्याम॥

इह कर्मणि वय मनोनामक चक्षुरादीन्द्रियाणा राजान वर्धयन्तः परितोषयन्तः उपहवे अनुज्ञाने सति अस्य देवस्य सुमतौ अनुग्रहबुद्धौ स्याम भवेम। यदा ह्यय सुखिनो भवन्त्विति अस्माननुजानाति तदानीमेव सुखिनो भवेम। कीदृश राजानम्। आकूतीना इदमेव करिष्यामीत्येवविधाना सकल्पानां चेतसा च इद वस्तु एतादृशमिति ज्ञानाना च अधिपतिम्। कर्तव्यसकल्पाना वस्तुज्ञानाना च मनोऽधीनत्व प्रसिद्धम्। सकल्पजूतिं सहस्रसख्याककर्तव्यविषयेषु संकल्पेषु जूतिर्वेगो यस्यासौ संकल्पजूतिः, तादृश देव सर्वस्य द्योतक अत एव विपश्चि सर्वज्ञम्।

तैब्रासा.

वाच· मन एव श्रेय.

अथातो मनसश्चैव वाचश्चाहम्भद्र उदितम्। मनश्च ह वै वाक् चाहम्भद्र ऊदाते॥ ८॥

प्राजापत्यस्य पूर्वाधारस्य उपांशुत्व प्रतिपादयितु मनोवाग्भ्या कृत संवादमुपन्यसितु प्रतिजानीते—अथात इति। अथशब्दोऽधिकारार्थः। अतः पर अहम्भद्रे निमित्ते अहमेवः भद्रः अहमेव भद्र इति स्वस्वोत्कर्षविषये मनसो वाचश्च यदुक्त वचन तदधिक्रियते इत्यर्थः। तमेवेतिहासं उदाहरति—मनश्चेति। अहम्भद्रे आत्मीयोत्कर्षविषये ऊदाते विवादं चक्रतुः। शब्रासा.

तद्ध मन उवाच। अहमेव त्वच्छ्रेयोऽस्मि। न वै मया त्वं किंचनानभिगतं वदसि। सा यन्मम त्वं कृतानुकराऽनुवर्त्माऽसि। अहमेव त्वच्छ्रेयोऽस्मीति॥ ९॥

---

* अनयोर्व्याख्यानं ३१६–३१७ पृष्ठयोर्द्रष्टव्यम्।

(१) जैब्रा. १।३१६.

(२) जैब्रा. १।३२०–२१.

(३) तैब्रा. २।५।१।१–२.

(४) तैब्रा. ३।१२।३।३–४.

(१) शब्रा. १।४।५।८–१२.

तत्र मनसो वाक्यमुदाहरति—तद्धेति । श्रेयस्त्वकारणमाह—न वा इति । हे वाक् त्वं मया मनसा अविषयीकृतं किमपि न वदसि, अतो विषयीकृतमेव वदसि । सा त्वं मम कृतानुकरा मया यत्कृतं तदेवानुकुर्वती अनुवर्त्मा अनुगन्त्री भवसीत्यर्थः । शब्रासा.

**अथ ह वागुवाच । अहमेव त्वच्छ्रेयस्यस्मि । यद्वै त्वं वेत्थ अहं तद्विज्ञपयामि । अहं संज्ञपयामीति ॥ १० ॥**

अथैतस्य प्रत्युत्तरमाह—अथ वागिति । हे मनः अहमेव त्वत्तः सकाशात् श्रेयसी । कुतः । यत् वै त्वं यद्वस्तु त्वं वेत्थ जानासि अहं तत् विज्ञपयामि तदन्तर्गतविषयं परेषां विविधं प्रतिपादयामि । तत् संज्ञपयामि सम्यग्ज्ञपयामि प्रतिपादयामि । यतो विज्ञापनसंज्ञापनसाध्यं ममैव, अतस्त्वत्तः श्रेयसीत्यर्थः ।

शब्रासा.

**ते प्रजापतिं प्रति प्रश्नमेयतुः । स प्रजापतिर्मनस एवानूवाच । मन एव त्वच्छ्रेयः । मनसो वै त्वं कृतानुकराऽनुवर्त्माऽसि । श्रेयसो वै पापीयान् कृतानुकरोऽनुवर्त्मा भवतीति ॥ ११ ॥**

ते प्रजापतिमिति । एवं विवदमाने ते मनश्च वाक्च प्रश्नं प्रति प्रजापतिं एयतुः जग्मतुः । स च मनस एव अनुकूलमुवाच । तद्वाक्यमुदाहरति— मन एवेति । कृतानुकरत्वस्य निकर्षहेतुत्वं लोकप्रसिद्ध्या दर्शयति— श्रेयसो वा इति । शब्रासा.

**सा ह वाक् परोक्ता विसिष्मिये । तस्यै गर्भः पपात । सा ह वाक् प्रजापतिमुवाच । अहव्यवाडेवाहं तुभ्यं भूयासं यां मा परावोच इति । तस्माद्यत्किंच प्राजापत्यं यज्ञे क्रियत उपांश्वेव तत् क्रियते । अहव्यवाड्ढि वाक् प्रजापतय आसीत् ॥ १२ ॥**

सा हेति । एवं प्रजापतिनोक्ते सा वाक् पराजितत्वेन उक्ता विसिष्मिये विगतस्मया भग्नवीर्या बभूव । तस्मात् पराभवात्तस्या वाचो यो गर्भः देवमनुष्यादीनामुत्पत्तिहेतुः सोऽपि पपात । सा वाक् पराजयेन खिन्ना सती प्रजापतिमुवाच उक्तवती । किमिति । हे प्रजापते तुभ्यमहं अहव्यवाट् हव्यवहनस्याहेतुभूतैव भूयासं यां मा पराजितत्वेनोक्तवानसि । यस्मादेव वाचोक्तं तस्मादेव कारणात् यज्ञसंबन्धि यत्किमपि प्रजापतिदेवताकं कर्म तत्सर्वं वाग्व्यापारविरहेण उपांश्वेव क्रियते । अहव्यवाड्ढि इति प्रागुक्तार्थस्मारणम् । शब्रासा.

## कामः

सर्वकर्मकर्ता, दातृप्रतिग्रहीतृरूपः

**क इदं कस्मा अदात्कामः कामायादात् ।**
**कामो दाता कामः प्रतिग्रहीता कामः समुद्रमा विवेश ।**
**कामेन त्वा प्रति गृह्णामि कामैतत्ते ॥**

इदं ईदृगिति अनिरुक्तरूपः प्रजापतिः कशब्देनोच्यते । अर्थसामान्यात्किंशब्दोऽपि तस्यैव वाचकः । कशब्दाभिधेयः प्रजापतिः कस्मै प्रजापतये इदं दक्षिणात्वेन देयं द्रव्यं अदात् दत्तवान् । दाता च प्रतिग्रहीता च प्रजापतिरेव । एवमनुसदधानस्य प्रतिग्रहदोषो न जायते इत्यर्थः । तथा च तैत्तिरीयकम्— 'क इदं कस्मा अदादित्याह । प्रजापतिर्वै कः । स प्रजापतये ददाति' (तैब्रा. २।२।५।५ ) इति । तथा कामः फलविषयोऽभिलाषः । आमुष्मिकफलाभिलाषी दाता । ऐहिकफलाभिलाषी प्रतिग्रहीता । अतः उभावपि कामात्मानौ । तथा च काम एव कामाय अदात् दत्तवान् । नाहं प्रतिगृह्णामीत्यात्मानं व्यावृत्य प्रतिग्रहे कृते तद्दोषो न संस्पृशतीत्यर्थः । तथा च तैत्तिरीयकम्— 'य एवंविद्वान् व्यावृत्य दक्षिणां प्रतिगृह्णाति । नैनं दक्षिणा व्लीनाति' ( तैब्रा. २।२।५।१ ) इति । उक्तमर्थमुप-

(१) असं. ३।२९।७, कासं. ९।९ (३७) कामायादात् (कामाय) मा विवेश (माविशत्); मैसं. १।९।४ (१५) ( कामः समुद्रमा विवेश० ) कामेन त्वा (कामाय त्वा); शुसं. ७।४८ ( कोऽदात्कस्मा अदात्कामायादात् । कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥), ताब्रा १।८।१७ मा विवेश ( माविशत्'), तैब्रा. २।२।५।५–६ तैआवत्पाठ; शब्रा. ४।३।४।३२ शुसंवत्; तैआ. ३।१०।१,३।१०।५ ( क इदं कस्मा अदात् । कामः कामाय । कामो दाता । कामः प्रतिग्रहीता । कामं समुद्रमाविश । कामेन त्वा प्रतिगृह्णामि । कामैतत्ते । एषा ते काम दक्षिणा । उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु ॥ ).

पादयति—कामो दाता कामः प्रतिग्रहीतेति। व्याख्यातप्रायमेतत्। उक्तो देवतारूपः कामः समुद्रं समुद्रवन्निरवाधिकं रूपं आ विवेश प्राप्तवान्। 'समुद्र इव हि कामः। नैव हि कामस्यान्तोऽस्ति' (तैब्रा. २।२।५।६) इति हि तैत्तिरीयकम्। तादृशेन कामेन हे दक्षिणाद्रव्य त्वा त्वां प्रति गृह्णामि नात्मना इत्यर्थः। हे काम एतत्प्रतिगृहीतं द्रव्यं ते तुभ्यं त्वदर्थमेव। असा.

सपत्नहन्ता, धेनोर्विराजो वाचः पिता, अध्यक्षः, वाजी, यजनीयो ज्येष्ठो देवः, बहुलोकदः, प्रथमजः, देवपितृमर्त्यैरप्राप्यः, सर्वदा महान्, द्यावापृथिवीदिगादिभ्यो ज्यायान्, बहुशिवतनुधरः, पापधीनाशकः

सपत्नहनमृषभं घृतेन कामं शिक्षामि हविषाऽऽज्येन।
नीचैः सपत्नान्मम पादय त्वमभिष्टुतो महता वीर्येण॥
यन्मे मनसो न प्रियं न चक्षुषो यन्मे बभस्ति नाभिनन्दति।
तद्दुष्वप्न्यं प्रति मुञ्चामि सपत्ने कामं स्तुत्वोदहं भिदेयम्॥
दुष्वप्न्यं काम दुरितं च कामाप्रजस्तामस्वगतामवर्तिम्।
उग्र ईशानः प्रति मुञ्च तस्मिन्यो अस्मभ्यमंहूरणा चिकित्सात्॥
नुदस्व काम प्र णुदस्व कामावर्तिं यन्तु मम ये सपत्नाः।
तेषां नुत्तानामधमा तमांस्यग्ने वास्तूनि निर्दह त्वम्॥
सा ते काम दुहिता धेनुरुच्यते यामाहुर्वाचं कवयो विराजम्।
तया सपत्नान्परि वृङ्ग्धि ये मम पर्येनान्प्राणः पशवो जीवनं वृणक्तु॥
कामस्येन्द्रस्य वरुणस्य राज्ञो विष्णोर्बलेन सवितुः सवेन।
अग्नेर्होत्रेण प्र णुदे सपत्नांछम्बीव नावमुदकेषु धीरः॥
अध्यक्षो वाजी मम काम उग्रः कृणोतु मह्यमसपत्नमेव।
विश्वे देवा मम नाथं भवन्तु सर्वे देवा हवमा यन्तु म इमम्॥
इदमाज्यं घृतवज्जुषाणाः कामज्येष्ठा इह मादयध्वम्।
कृण्वन्तो मह्यमसपत्नमेव॥
इन्द्राग्नी काम सरथं हि भूत्वा नीचैः सपत्नान्मम पादयाथः।
तेषां पन्नानामधमा तमांस्यग्ने वास्तून्यनुनिर्दह त्वम्॥
जहि त्वं काम मम ये सपत्ना अन्धा तमांस्यव पादयैनान्।
निरिन्द्रिया अरसाः सन्तु सर्वे मा ते जीविषुः कतमच्चनाहः॥
अवधीत्कामो मम ये सपत्ना उरुं लोकमकरन्मह्यमेधतुम्।
मह्यं नमन्तां प्रदिशश्चतस्रो मह्यं षडुर्वीर्घृतमा वहन्तु॥
तेऽधराञ्चः प्र प्लवन्तां छिन्ना नौरिव बन्धनात्।
न सायकप्रणुत्तानां पुनरस्ति निवर्तनम्॥
अग्निर्यव इन्द्रो यवः सोमो यवः।
यवयावानो देवा यावयन्त्वेनम्॥
असर्ववीरश्चरतु प्रणुत्तो द्वेष्यो मित्राणां परिवर्ग्यः स्वानाम्।
उत पृथिव्यामव स्यन्ति विद्युत उग्रो वो देवः प्र मृणत्सपत्नान्॥
च्युता चेयं बृहत्यच्युता च विद्युद्बिभर्ति स्तनयित्नूंश्च सर्वान्।
उद्यन्नादित्यो द्रविणेन तेजसा नीचैः सपत्नान् नुदतां मे सहस्वान्॥
यत् ते काम शर्म त्रिवरूथमुद्भु ब्रह्म वर्म विततमनतिव्याध्यं कृतम्।
तेन सपत्नान्परि वृङ्ग्धि ये मम पर्येनान्प्राणः पशवो जीवनं वृणक्तु॥
येन देवा असुरान्प्राणुदन्त येनेन्द्रो दस्यूनधमं तमो निनाय।

(१) असं. ९।२।१-२५.

तेन त्वं काम मम ये सपत्नास्तानस्माल्लोकात्प्र णुदस्व दूरम् ॥
यथा देवा असुरान्प्राणुदन्त यथेन्द्रो दस्यूनधमं तमो बबाधे ।
तथा त्वं काम मम ये सपत्नास्तानस्माल्लोकात्प्र णुदस्व दूरम् ॥
कामो जज्ञे प्रथमो नैनं देवा आपुः पितरो न मर्त्याः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥
यावती द्यावापृथिवी वरिम्णा यावदापः सिष्य- दुर्यावदग्निः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥
यावतीर्दिशः प्रदिशो विषूचीर्यावतीराशा अभि- चक्षणा दिवः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥
यावतीर्भृङ्गा जत्वः कुरूरवो यावतीर्वघा वृक्षसर्प्यो बभूवुः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥
ज्यायान्निमिषतोऽसि तिष्ठतो ज्यायान्त्समुद्रादसि काम मन्यो ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥
न वै वातश्चन काममाप्नोति नाग्निः सूर्यो नोत चन्द्रमाः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥
यास्ते शिवास्तन्वः काम भद्रा याभिः सत्यं भवति यद्वृणीषे ।
ताभिष्ट्वमस्माँ अभिसंविशस्वान्यत्र पापीरप वेशया धियः ॥

यजनीय, मनसो रेत., बृहन्, विभु, सखा, स्वर्गजनकः, काम्यफलदः

[1]कामस्तदग्रे समवर्तत मनसो रेतः प्रथमं यदासीत् ।
स काम कामेन बृहता सयोनी रायस्पोषं यजमानाय धेहि ॥

एतत्सूक्तं कामप्रतिपादकत्वात् कामसूक्तमित्यभिधीयते । प्रलयकाले सर्वेषु जगत्सु वासनाशेषेण मायायां विलीनेषु पुनरीश्वरस्य पर्यालोचन जगतः पुनरुत्पत्तौ कारण, तदेव किंनिबन्धन इति तदाह—कामस्तदग्र इति । अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थाया परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत सिसृक्षा जातेत्यर्थः, । अत्र मनोव्यतिरेकेण कामनायाः उत्पत्त्यसम्भवात् मनस्तत्त्वमपि प्रथम मायातो जातमित्यर्थः । श्रूयते हि– 'तदसदेव सन्मनोऽकुरुत स्यामिति' ( तैब्रा. २।२।९।१ ) इति । ईदृशस्य मनसः उत्पत्तेरनन्तर कामः समवर्ततेत्यर्थः । ईश्वरस्य सिसृक्षा किंहेतुका इत्यत आह—मनस इति । मनसः अन्तःकरणस्य सबन्धि वासनाशेषेण मायाया विलीने अन्तःकरणे समवेतम् । सामान्यापेक्षमेकवचनम् । सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः । एतेनात्मनो गुणाधारत्व प्रत्याख्यातम् । तादृशमनःसबन्धि रेतः भाविनः प्रपञ्चस्य बीजभूतं प्रथम अतीते कल्पे प्राणिभिः कृत पुण्यापुण्यात्मकं कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवत् भूष्णु वर्धिष्णु समजायत । परिपक्क सत् फलोन्मुख आसीदित्यर्थः । तत् ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः । तस्यां च जाताया द्रष्टव्यं पर्यालोच्य ततः सर्व जगत् सृजति । तथाच आम्नायते– 'सोऽकामयत । बहु स्या प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद सर्वमसृजत । यदिद किंच' ( तैउ. २।६ ) इति । हे काम सः सर्वजगत्सर्जनार्थं परमेश्वरेणोत्पादितस्त्व बृहता महता देशकालवस्तुपरिच्छेदरहितेन कामेन कामयित्रा परमेश्वरेण सयोनिः समानकारणः परमेश्वरव्यतिरिक्तकारणान्तररहित इत्यर्थः । यजमानाय धनप्रदात्रे हविः-

(१) ऋसं. १९।५२।१-२.

प्रदात्रे वा पुरुषाय रायो धनस्य पोष पुष्टिं समृद्धिं धेहि स्थापय प्रयच्छ। अत्र कामो जगद्विषयकामरूपत्वेन स्वफलसिध्यर्थ स्तूयते। असा.

**त्वं काम सहसाऽसि प्रतिष्ठितो विभुर्विभावा सख आ सखीयते।**
**त्वमुग्रः पृतनासु सासहिः सह ओजो यजमानाय धेहि॥**

हे काम त्व सहसा परधर्षणसामर्थ्येन प्रतिष्ठितोऽसि। विभुः सर्वविषयत्वात् व्याप्तः विभावा विशेषेण दीप्यमानः, अल्पविषयत्वाभावात्। हे सखे सखिवद्धितकारिन् काम आ सखीयते अस्मानभिलक्ष्य सखिवदाचरति। भवच्छब्दाध्याहारेण प्रथमपुरुषः। किंच हे काम त्व उग्रः उद्गूर्णः पृतनासु शत्रुसग्रामेषु सासहिः सोढा। सहः शत्रुधर्षणसमर्थ ओजः बलं यजमानाय यष्ट्रे जनाय धेहि विधेहि प्रयच्छ। असा.

**दूराच्चकमानाय प्रतिपाणायाक्षये।**
**आस्मा अशृण्वन्नाशाः कामेनाजनयन्त्स्वः॥**

दूरात् दूरविषय अत्यन्तदुर्लभ फल चकमानाय कामयमानाय अस्मै जनाय प्रतिपाणाय सर्वतो रक्षणाय अभिमतफलप्रापणाय अक्षये क्षयराहित्ये निमित्ते अनिष्टनिवृत्तये च आशाः दिशः सर्वाः प्राच्यादयः आशृण्वन् आश्रवणं फल प्रदातुं अङ्गीकरणं कृतवत्यः। न केवल प्रतिश्रवण किंतु कामेन अभिमतफलविषयेण स्वः। सुखनामैतत्। सुख अजनयन् उदपादयन्।

असा.

**कामेन मा काम आगन् हृदयाद्धृदयं परि।**
**यदमीषामदो मनस्तदैतूप मामिह॥**

कामेन फलविषयया इच्छया कामः काम्यमानं फल मा मा आ अगन् आगच्छतु। कामनाया मनोमूलत्वात्तन्मनः सपादयति। पूर्व जगत्स्रष्टयर्थ ब्रह्मणा उत्पादिता जगत्सृष्टिविषये कामयितारो नव ब्रह्माणः अमीषामित्यदःशब्देन विवक्ष्यन्ते। तेषां विप्रकृष्टाना ब्रह्मणा यत् अदः मनः अस्तित्वभावनानिमित्तं तत् हृदयात्। प्रत्येकविवक्षया एकवचनम्। हृदयेभ्यः हृदयं मदीयं हृदयप्रदेशं परि अभिलक्ष्य तत् तदीय सर्वविषयं मनः इह अस्मिन्फलकामे मा कामयितारमुपैतु उपगच्छतु।

असा.

**यत्काम कामयमाना इदं कृण्मसि ते हविः।**
**तन्नः सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहा॥**

हे काम वय यत् फल कामयमानाः सन्तः ते त्वदर्थ इदं इदानी दीयमान हविः चरुपुरोडाशादिक कृण्मसि कुर्मः प्रयच्छामः। अथ अनन्तर एतस्य प्रत्तस्य हविषः। 'क्रियाग्रहण कर्तव्यम्' इति कर्मणः सप्रदानत्वाच्चतुर्थी। चतुर्थ्यर्थे षष्ठी। हविषो भागं वा वीहि भक्षय। स्वाहा इद हविः सुहुतमस्तु। तत् काम्यमानं नः अस्मदीयं सर्व फल समृध्यता समृद्धं सपूर्ण भवतु।

असा.

## मन्युः

संग्रामेऽनुग्राहक, बलजन्य, बलवान्, इन्द्राग्निवरुणरूपः देवः, मानवप्रशस्तः, तपःसहायः शत्रूणामभिभावकः, तनुस्थो बलदः, विश्वधर्ता, मधुना यजनीयः उभयविधधनदः

**यस्ते मन्योऽविधद्वज्र सायक सह ओजः पुष्यति विश्वमानुषक्।**
**साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता॥**

हे मन्यो क्रोधाभिमानिन् देव। 'मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा' (नि. १०।२९) इति निरुक्तम्। यः यजमानः ते तुभ्य अविधत् परिचरति, हे वज्र वज्रवत्सारभूत सायक सायकवच्छत्रूणां हिंसक स मनुष्यः सहो बलं बाह्य ओजः शारीर बल च आनुषक् अनुषक्तं पुष्यति त्वदनुग्रहात्सग्रामे। यस्मादेवं

(१) असं १९।५२।३; तैआ. ३।१५।१ (सद्यश्चकमानाय। प्रवेपानाय मृत्यवे। प्रास्मा आशा अशृण्वन्। कामेनाजनयन्पुनः॥).

(२) असं. १९।५२।४; तैआ. ३।१५।२ (कामेन मे काम आगात्। हृदयाद्हृदयं मृत्योः। यदमीषामदः प्रियम्। तदैतूप मामभि॥).

(१) असं. १९।५२।५.

(२) ऋसं. १०।८३।१; असं. ४।३२।१ युजा (युजा वयं).

तस्माद्वय दास उपक्षयकर्तारं आर्यं अस्मत्तोऽधिक चोभयविध शत्रु साह्याम अभिभवेम। केन साधनेनेति तदुच्यते—त्वया युजा त्वया सहायेन। सहायो विशेष्यते—सहस्कृतेन बलोत्पादितेन सहसा सहमानेन परान् सहस्वता बलवता। ईदृशेन त्वया सहायेनेत्यर्थः। ऋसा.

[1]मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः।
मन्युं विश ईळते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः॥

अय मन्युरिन्द्रो मन्युरेव देवः सर्वोऽपि मन्युरेव आस अभवत्। मन्युरेव होता होमनिष्पादकोऽग्निः। तथा मन्युर्वरुणः अपि जातवेदाः जातप्रज्ञो वरुणश्च। सर्वेष्वपि तेजास्विषु मन्युसद्भावात्। याः मानुषीः मनुषोऽपत्यभूताः विशः प्रजाः सन्ति ताः मन्युमेव देव ईळते स्तुवन्ति। हे मन्यो तपसा एतन्नामकेनास्मत्पित्रा सजोषाः समानप्रीतिस्त्व पाहि रक्ष। ऋसा.

[2]अभीहि मन्यो तवसस्तवीयान् तपसा युजा वि जहि शत्रून्।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः॥

हे मन्यो त्व अभीहि अभिगच्छ अस्मद्यज्ञम्। कीदृशस्त्वम्। तवसः बलवतोऽपि तवीयान् अत्यन्तं बलवान्। स त्व तपसा अस्मत्पित्रा युजा सहायेन शत्रून् वि जहि। किंच अमित्रहा अमित्राणा हन्ता। अमित्रः अरिनघः। तथा वृत्रहा आवरकाणां शत्रूणा हन्ता। तथा दस्युहा च। दस्युः उपक्षपणकारी शत्रुः। तादृश मन्युदेव त्वं विश्वा सर्वाणि वसूनि धनानि नः अस्मभ्यं आ भर आहर। ऋसा.

(१) ऋसं. १०।८३।२; असं. ४।३२।२ मन्युं वि (मन्युर्वि); मैसं ४।१२।३ (७९) जातवेदा. (विश्ववेदाः) पाहि नो (अवा नो), तैब्रा. २।४।१।११ (मन्युर्भगो मन्युरेवास देवः। मन्युर्होता वरुणो विश्ववेदाः। मन्यु विश ईडते देवयन्तीः। पाहि नो मन्यो तपसा श्रमेण॥).

(२) ऋसं. १०।८३।३; असं. ४।३२।३.

[1]त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमातिषाहः।
विश्वचर्षणिः सहुरिः सहावानस्मास्वोजः पृतनासु धेहि॥

हे मन्यो त्व अभिभूत्योजाः परेषामभिभावुकबलः स्वयभूः स्वयमेवोत्पन्नः भामः क्रुद्धः अभिमातिषाहः, अभितो हिंसन्तीत्यभिमातयः शत्रवः, तेषामभिभविता विश्वचर्षणिः सर्वेषां द्रष्टा सहुरिः सहनशीलः सहावान् सहनवान् ईदृशस्त्वं अस्मासु पृतनासु सग्रामेषु ओजः बलं धेहि देहि। ऋसा.

[2]अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः।
तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वा तनूर्बलदेयाय मेहि॥

हे प्रचेतः प्रकृष्टज्ञान मन्यो तविषस्य महतः तव क्रत्वा कर्मणा अभागः भागरहितः सन् त्वां यज्ञे अयाजकः सन्नित्यर्थः। त्वदनुकूलरहितोऽह अप परेतोऽस्मि युद्धे शत्रुभिरभिभूतः सन् दूरं गतोऽस्मि। त तादृश भागरहित त्वा त्वा हे मन्यो अक्रतुः कर्मरहितः अहं जिहीळ क्रुद्ध कृतवानित्यर्थः। यद्वा, अहमेव त्वत्सहायमेव क्रोधितवान्। अथेदानी स्वा तनूः मम शरीरभूतस्त्वं बलदेयाय बलदानाय मेहि मां प्राप्नुहि। ऋसा.

[3]अयं ते अस्म्युप मेह्यर्वाङ् प्रतीचीनः सहुरे विश्वधायः।
मन्यो वज्रिन्नभि मामा ववृत्स्व हनाव दस्यूँरुत बोध्यापेः॥

हे सहुरे शत्रूणां सहनशील विश्वधायः विश्वस्य धर्तः मन्यो अयं जनोऽहं ते तव अस्मि कर्मकृत्। यत एवमतः प्रतीचीनः प्रतिगन्ता अर्वाङ् अस्मदभिमुख मा मा उप

(१) ऋसं १०।८३।४; असं ४।३२।४ सहावान (सहीयान), मैसं. ४।१२।३ (८०) यंभूर्भा (यंजो भा) सहा..... धेहि (सहावान्त्स हूयमानो अमृताय गच्छत्).

(२) ऋसं. १०।८३।५; असं ४।३२।५ देयाय मेहि (दावा न एहि).

(३) ऋसं. १०।८३।६; असं ४।३२।६ मेह्य (न एह्य) विश्वधायः (विश्वदावन्) मामा (न आ).

इहि उपागच्छ। हे मन्यो वज्रिन् मा अभि आ ववृत्स्व अभ्यावर्तस्व। किमर्थमभ्यागमनमिति चेत्, उच्यते। हनाव आवा दस्यून् शत्रून्। उत अपि च आपेः बन्धुं बोधि बुध्यस्व। ऋसा.

**[1]अभि प्रेहि दक्षिणतो भवा मेऽधा वृत्राणि जङ्घनाव भूरि।**
**जुहोमि ते धरुणं मध्वो अग्रमुभा उपांशु प्रथमा पिबाव॥**

हे मन्यो अभि प्रेहि अभिगच्छ। मम युद्धं गत्वा च मे मम दक्षिणतो भव। अध अथ आवा वृत्राणि शत्रून् भूरि प्रभूत जङ्घनाव हनाव। ते तुभ्य अग्रं श्रेष्ठं मध्वः मधु सोमरस जुहोमि। उभौ त्वं चाहं च उपांशु अप्रकाश प्रथमा प्रथमौ सन्तौ पिबाव। ऋसा.

**[2]त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः।**
**तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः॥**

हे मन्यो हे मरुत्वः त्वया सरथं समानमेकमेव रथमारुह्येति शेषः। आरुजन्तः गच्छन्तः हर्षमाणासः हृष्टाः धृषिताः धृष्टाः तिग्मेषवः तीक्ष्णबाणाः आयुधा आयुधानि संशिशानाः सम्यग्निश्यन्तः नरो युद्धस्य नेतारः इन्द्रादयो देवास्त्वदनुचरा वा अग्निरूपाः अग्निवत्तीक्ष्णदाहादिकर्माणः। यद्वा, सनद्धाः कवचिनः अभि प्र यन्तु युद्धे सहायार्थम्। अत्र 'त्वया मन्यो सरथमारुह्य रुजन्तः' (नि. १०।३०) इत्यादि निरुक्तमनुसंधेयम्। ऋसा.

**[3]अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि।**
**हत्वाय शत्रून्वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व॥**

हे मन्यो अग्निरिव त्विषितः ज्वलितः सहस्व अभिभव शत्रून्। हे सहुरे सहनशील सेनानीः एधि भव नः अस्माकं सग्रामे हूतः सन्। किंच हत्वाय हत्वा शत्रून् वि भजस्व प्रयच्छ अस्माकं वेदः धनं शत्रुसबन्धि। किंच ओजः मिमानः अस्माकं बल कुर्वन् मृधः शत्रून् वि नुदस्व घातयेत्यर्थः। ऋसा.

**[1]सहस्व मन्यो अभिमातिमस्मे रुजन्मृणन्प्रमृणन्प्रेहि शत्रून्।**
**उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वम्॥**

हे मन्यो अस्मे अस्माकं अभिमातिं अभिगन्तारं शत्रुं सहस्व अभिभव। रुजन् हिंसन् मृणन् प्रमृणन् प्रकर्षेण हिंसन् यथा पुनर्न जीवेत्तथा कुर्वंस्त्व शत्रून्प्रति प्रेहि। ते तव पाजो बलं उग्रं उद्गूर्णं के ननु आ रुरुध्रे आरुन्धन्ति। न तथा संभवति। हे एकज त्वं असहायः वशी त्वं वशं नयसे प्रापयसि शत्रुम्। ऋसा.

**[2]एको बहूनामसि मन्यवीळितो विशंविशं युधये सं शिशाधि।**
**अकृत्तरुक् त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्महे॥**

हे मन्यो ईळितः स्तुतस्त्वं एकः एव असहाय एव बहूनां शत्रूणा असि भवसि पर्याप्तो हन्तुम्। अतो विशंविशं तां तां अस्मद्विरोधिनीं प्रजां युधये युद्धाय सं शिशाधि सम्यक् तीक्ष्णीकुरु। किंच हे अकृत्तरुक् अच्छिन्नदीप्ते त्वया युजा सहायेन वयं द्युमन्तं दीप्तिमन्तं घोषं सिंहनादवन्तं विजयाय विशिष्टजयार्थं कृण्महे कुर्मः। ऋसा.

**[3]विजेषकृदिन्द्रइवानवब्रवोऽस्माकं मन्यो अधिपा भवेह।**

(१) ऋसं. १०।८३।७, असं. ४।३२।७ मेऽधा (नोऽधा) मुभा उ (मुभावु).

(२) ऋसं १०।८४।१; असं. ४।३१।१ हर्षमाणासो धृषिता मरुत्व (हर्षमाणा हृषितासो मरुत्वन्) अभि (उप), तैब्रा. २।४।१।१० धृषिता (धृषता) अभि प्र यन्तु (उपप्रयन्ति), नि. १०।३०.

(३) ऋसं. १०।८४।२, असं. ४।३१।२; नि. ११४, ९।१७.

(१) ऋसं. १०।८४।३; असं. ४।३१।३ मस्मे (मस्मै) रुरुध्रे (ररुध्रे) नयस (नयासा).

(२) ऋसं. १०।८४।४, असं. ४।३१।४ मन्यवीळितो (मन्य ईडिता) युधये (युद्धाय) कृण्महे (कृण्मसि).

(३) ऋसं. १०।८४।५; असं. ४।३१।५; नि. ६।२९.

प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥

हे मन्यो इन्द्रइव विजेषकृत् विजयकर्ता तथा अनवब्रवः अनिन्दितवचनः । 'अनवब्रवोऽनवक्षिप्तवचनः' ( नि. ६।२९ ) इति यास्कः । ईदृशस्त्व अस्माक अधिपाः अधिक पाता रक्षिता भव इह अस्मिन्यज्ञे । हे सहुरे शत्रूणा सहनशील ते प्रिय नाम स्तोत्रं गृणीमसि गृणीमः स्तुमः । यतो नाम्नः स्तोत्रात् त्व आबभूथ आभवसि प्रवृद्धो भवसि तमुत्स बलस्योद्गमयितार विद्म जानीमः । ऋसा.

[१]आभूत्या सहजा वज्र सायक सहो बिभर्ष्यभिभूत उत्तरम् ।
क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि ॥

हे वज्र वज्रवत्सारभूत हे सायक शत्रूणामन्तकर अभिभूते शत्रूणामभिभावुक मन्यो आभूत्या, आभूतिः अभिभवः, तेन सहजाः सहैवोत्पन्नस्त्व उत्तर उत्कृष्टतर सहो बल बिभर्षि धारयसि । हे मन्यो क्रत्वा कर्मणा सह नः अस्माक मेद्येधि स्निग्धो भव । कुत्रेति तदुच्यते । महाधनस्य । सङ्ग्रामनामैतत् । सङ्ग्रामस्य ससृजि सर्गे । हे पुरुहूत बहुभिराहूतेति मन्युसबोधनम् ।

ऋसा.

[२]संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥

ससृष्ट अभिभागमापन्न उभय उभयविध धन समाकृत सम्यगानीत अस्मभ्यं दत्ताम् । कः । वरुणश्च देवो मन्युश्च । भियं भयं हृदयेषु दधानाः शत्रवः अस्मद्विरोधिनः पराजितासः पराजिताः अप नि लयन्ता अपनिलीना भवन्तु । ऋसा.

---

(१) ऋसं. १०।८४।६; असं ४।३१।६ बिभर्ष्यभि ( बिभर्षि सह ).

(२) ऋसं. १०।८४।७; असं ४।३१।७ दत्तां ( धत्ता ) भियं ( भियो ).

## मेधा

गवाश्वादिधनदा, यजनीया, ब्रह्मयुक्ता, ब्राह्मणसेविता, ब्रह्मचारिप्रपीता, ऋभ्वसुरर्षिभिरुपासिता, सर्वदा आत्मनि स्थाप्या

[१]त्वं नो मेधे प्रथमा गोभिरश्वेभिरा गहि ।
त्व सूर्यस्य रश्मिभिस्त्वं नो असि यज्ञिया ॥

हे मेधे श्रुतधारणसामर्थ्यरूपिणि देवि प्रथमा मुख्या देवमनुष्यादिभिः सर्वैरुपास्यमाना त्व गोभिः अस्मभ्यं दातव्यैः अश्वेभिः अश्वैश्च नः अस्मान् आ गहि आगच्छ । हे मेधे त्व सूर्यस्य सर्वप्रेरकस्य देवस्य रश्मिभिः सर्वव्यापिभिः किरणैः । लुप्तोपममेतत् । सूर्यरश्मयो यथा आशु सर्व जगत् व्याप्नुवन्ति एव सर्वविषयव्यापनशक्तैरात्मीयैः सामर्थ्यैरस्मानागच्छेति सबन्धः । तत्र हेतुरुच्यते । हे मेधे त्व नः अस्माक यज्ञिया यज्ञार्हा असि भवसि । अस्माभिर्दत्तेन हविषा यतः प्रीता भवसि तत आगच्छेत्यर्थः । असा.

मेधामहं प्रथमां ब्रह्मण्वतीं ब्रह्मजूतामृषिष्टुताम् ।
प्रपीतां ब्रह्मचारिभिर्देवानामवसे हुवे ॥

अह मेधाकामः प्रथमा मुख्या मेधा देवीं हुवे आह्वयामि । कीदृशीम् । ब्रह्मण्वतीं ब्रह्म वेदः तद्युक्ताम् । तद्धारणेन तैर्युज्यमानामित्यर्थः । ब्रह्मजूता ब्राह्मणजातीयैः सेविताम् । ऋषिष्टुता ऋषिभिः अतीन्द्रियार्थदर्शिभिर्वसिष्ठादिभिः प्रशसिताम् । ब्रह्मचारिभिः, ब्रह्म वेदः, तत्र चरितु शीलमेषामिति ब्रह्मचारिणः गुरुकुलवासादिनियमोपेताः अधीयानाः तैः । तैः प्रपीता सेविताम् । यद्वा, प्रपीतां प्रवर्धिताम् । किमर्थम् । देवाना इन्द्रादीनां अवसे अध्ययनतदर्थज्ञानतदनुष्ठानादिना रक्षणायेत्यर्थः । असा.

यां मेधामृभवो विदुर्यां मेधामसुरा विदुः ।
ऋषयो भद्रां मेधां यां विदुस्तां मय्या वेशयामसि ॥

ऋभवो देवाः या मेधा विदुः जानन्ति, असुराः दानवाः यां मेधां विदुः, भद्रा भन्दनीया कल्याणीं वेदशास्त्रादिविषयां या मेधा ऋषयः वसिष्ठाद्याः विदुः, तां

---

(१) असं. ६।१०८।१-५.

सर्वतोदिक्कां मेधा मयि साधके आ वेशयामसि आवेशयामः आस्थापयामः। अस्रा.

**यामृषयो भूतकृतो मेधां मेधाविनो विदुः।**
**तया मामद्य मेधयाऽग्ने मेधाविनं कृणु॥**

ऋषयो मन्त्रद्रष्टारो भूतकृतः पृथिव्यादीनि भूतानि कर्तुं शक्ताः कश्यपकौशिकादयो मेधाविनः धीमन्त इति प्रसिद्धाः या मेधां विदुः जानन्ति, हे अग्ने तया मेधया अद्य इदानीं मा मेधाविन कृणु मेधायुक्त कुरु। अस्रा.

**मेधां सायं मेधां प्रातर्मेधां मध्यन्दिनं परि।**
**मेधां सूर्यस्य रश्मिभिर्वचसा वेशयामहे॥**

सायकाले मेधां अह स्तौमि। प्रातःकाले मेधा देवीं स्तौमि। मध्यन्दिनं परि मध्याह्नकालेऽपि मेधां भजे। किं बहुना, सूर्यस्य रश्मिभिः सार्धं सर्वस्मिन्नपि अहनि वचसा स्तुतिरूपेण वाक्येन ता महानुभावां मेधा आ वेशयामहे आत्मनि स्थापयामः। अस्रा.

---

## आकूतिः

सुभगा देवी, चित्तस्य माता, मनसि प्रविष्टा, आङ्गिरस-बृहस्पतिप्रदेया

**[१]आकूतिं देवीं सुभगां पुरो दधे चित्तस्य माता सुहवा नो अस्तु।**
**यामाशामेमि केवली सा मे अस्तु विदेयमेनां मनसि प्रविष्टाम्॥**

इदमादिभिस्तिसृभिर्ऋग्भिर्वाग्देवता प्रार्थ्यते। आकूतिं तात्पर्यरूपाम्। लौकिकवैदिकसर्ववाक्यप्रतिपाद्यामित्यर्थः। देवीं द्योतमाना सुभगां, भगो भाग्य, शोभनभाग्ययुक्तां एवंरूपां वाग्देवतां पुरो दधे पुरस्कुर्वे परिचरामि। सर्वेष्वभीष्टकार्येषु वाग्देवतामेव पुरस्ताद्भावयामीत्यर्थः। अनर्थान्निवारक हिते प्रवर्तक आप्तं जन पुरोहित कुर्वन्ति, एवमस्माभिः पुरतो निहिता चित्तस्य मनसः माता जननी यथा पुत्रो मातृवशे वर्तते एव चित्तं स्वप्रभवं नियमयन्ती वाक् नः अस्माकं सुहवा सुष्ठु ह्वातव्या अस्तु भवतु। आह्वानेन अस्मदनुकूला भवत्वित्यर्थः। किंच यां आशां फलविषयां कामनां एमि प्राप्नोमि सा कामना मे मम केवली अस्तु असाधारणी भवतु। मदन्यं न कामयतामित्यर्थः। न केवल कामना, किंतु मनसि प्रविष्टा निहिता सर्वदा मनसि प्रवर्तमाना एना फलविषया कामना विदेय फलपर्यवसायिनीं लप्स्यासम्। अस्रा.

**[१]आकूत्या नो बृहस्पत आकूत्या न उपा गहि।**
**अथो भगस्य नो धेह्यथो नः सुहवो भव॥**

हे बृहस्पते बृहतां देवानां हितोपदेष्टृत्वेन पालक एतन्नामक देव आकूत्या सर्ववाक्यतात्पर्यार्थरूपया वाचा सह नः अस्मान् उपा गहि वाग्देवतां अस्माकमनुकूलयितु उपाऽऽगच्छ। एतदेव आदरार्थं पुनरुच्यते—आकूत्या न उपा गहीति। अथो अपि च भगस्य भाग्य नः अस्मभ्यं देहि यच्छ। एतत्सर्व बृहस्पतेराभिमुख्येन विना न घटते इति तदेव प्रार्थ्यते—अथो न इति चरमपादेन। अथो अपि च नः अस्माक सुहवः सुष्ठु ह्वातव्यः आह्वानमात्रेणानुकूलो भव। अस्रा.

**[२]बृहस्पतिर्म आकूतिमाङ्गिरसः प्रति जानातु वाचमेताम्।**
**यस्य देवा देवताः सं बभूवुः स सुप्रणीताः कामो अन्वेत्वस्मान्॥**

आङ्गिरसः अङ्गिरसा पुत्रः। बृहस्पतेरङ्गिरसः पुत्रत्व ऐतरेयब्राह्मणे समाम्नायते 'येऽङ्गारा आसस्तेऽङ्गिरसोऽभवन्। यदङ्गाराः पुनरवशान्ता उददीप्यन्त तद्बृहस्पतिरभवत्' (ऐब्रा. १३।१०।१) इति। तादृशो देवः आकूतिं सर्वाभिप्रायरूपामेतां सकलश्रुतिपुराणादिप्रसिद्धा वाच वाग्देवता मे मह्यं दातु प्रति जानातु स्मरतु। अर्थिन प्रति दातव्यस्मरण प्रदानान्तं भवतीति तदेव प्रार्थ्यते। यस्य बृहस्पतेः। वशे इत्यध्याहारः। देवाः देवताश्च स्त्रीपुरुषात्मना प्रसिद्धाः सकला देवताः सुप्रणीताः येन बृहस्पतिनैव कार्येषु सुष्ठु प्रणीयमानाः देवताः सबभूवुः सभूताः सगता ऐकमत्य प्राप्ताः सकला देवता यस्य वशे वर्तन्ते, स कामः काम्यमानफलप्रदाता

(१) असं १९।४।२; तैब्रा. २।५।३।२ (आकूतिं देवीं मनसः पुरो दधे। यज्ञस्य माता सुहवा मे अस्तु। यदिच्छामि मनसा सकामः। विदेयमेनद्धृदये निविष्टम्॥).

(१) असं. १९।४।३.
(२) असं. १९।४।४.

बृहस्पतिः अस्मान् कामयमानान् अभ्येतु फलदानाय अभिमुख आगच्छतु । असा.

## वाक्

चतुष्पदा, गुहानिहितत्रिपदा, मानुषतुरीयपदा

**चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥**

राजमाना, देवाना मादयित्री, अज्ञातपरमस्वरूपा, देवी, देवपुत्री, पशुभिर्वाच्या, अन्नरसधेनु.

**यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।**
**चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥**

राष्ट्री राजनशीला देवाना मन्द्रा मादयित्री वा यत् यदा वाक् अविचेतनानि विज्ञानरहितानप्रज्ञातानर्थान् वदन्ती प्रज्ञापयन्ती निषसाद यज्ञे निषीदति तदा चतस्रो दिशः प्रति ऊर्जं अन्न पयांसि तत्कारणभूतान्युदकानि दुदुहे । अस्याः माध्यमिकाया वाचः स्वभूत यत् परमं श्रेष्ठं तत् क्व जगाम क्व गच्छतीति न दृश्यते इत्यर्थः । तथा च यास्कः–'यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवाना निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पयासि क्व स्विदस्याः परमं जगामेति यत्पृथिवी गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा' (नि. ११।२८) इति । * ऋसा.

[2]**देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।**
**सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥**

एषा माध्यमिका वाक् सर्वप्राण्यन्तर्गता धर्माभिवादिनी भवतीति विभूतिमुपदर्शयति–यां देवीं द्योतमानां माध्यमिका वाच देवाः माध्यमिकाः अजनयन्त जनयन्ति ता वाचं विश्वरूपाः सर्वरूपाः व्यक्तवाचोऽव्यक्तवाचश्च पशवो वदन्ति, तत्पूर्वकत्वाद्वाक्प्रवृत्तेः । सा वाग्देवी मन्द्रा मदना स्तुत्या हर्षयित्री वा वृष्टिप्रदानेनास्मभ्य इषं अन्न ऊर्जं पयोघृतादिरूप रस च दुहाना क्षरन्ती धेनुः धेनुभूता सुष्टुता अस्माभिः स्तुता अस्मान् नेमान् उप एतु उपगच्छतु । वर्षणायोद्युक्तेत्यर्थः । तथा च यास्कः–'देवी वाचमजनयन्त देवास्ता विश्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च सा नो मदनान्न च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुता' (नि. ११।२९) इति । ऋसा.

शिवाशिवरूपा, त्रिविधा अन्त स्थिता, एका घोषस्था

[1]**शिवास्त एका अशिवास्त एकाः सर्वा बिभर्षि सुमनस्यमानः ।**
**तिस्रो वाचो निहिता अन्तरस्मिन्तासामेका वि पपातानु घोषम् ॥**

सर्वा हि वाक् परापश्यन्तीमध्यमावैखरीरूपचतुरवस्थापन्ना । तत्र पराद्यास्तिस्रोऽवस्थाः देहान्तरवस्थानात् न परेभ्योऽर्थं प्रतिपादयितु क्षमाः । वैखरी तु ताल्वोष्ठादिस्थानेषु वर्णपदवाक्यरूपेण अभिव्यज्यमाना परश्रोत्रग्रहणयोग्या भवति । एव पराद्यवस्थापन्ना वाक् स्तुतिरूपा निन्दारूपा चेति द्विविधा भवति । तथा च अस्या ऋचोऽयमर्थः – ते इति युष्मच्छब्देन बिभर्षीति मध्यमपुरुषेण च मिथ्याभिशस्तः पुरुषोऽभिधीयते । हे अकारण निन्दित पुरुष ते तव विषये शिवाः स्तुतिरूपाः कल्याण्यः एकाः अन्या वाचः सन्ति । तथा ते तव विषये अशिवाः अस्तुतिरूपा निन्दार्था एकाः अन्या वाचः सन्ति । सर्वाः ता उभयीर्वाचः त्वं सुमनस्यमानः सुमना इवाचरन् । स्तुतिवाक्यश्रवणे यथा सुमनस्कत्व प्राप्नोषि एव निन्दावाक्यश्रवणेऽपि सौमनस्यं प्राप्नुवन् बिभर्षि बिभृहि । स्तुतिनिन्दाजातहर्षविषादयोरपि समानं सौमनस्यं प्राप्नुहीत्यर्थः । अथ वाचः पराद्यवस्थाचतुष्टयात्मकत्वेऽपि प्रथमावस्थात्रयरूपाया

---

* व्याख्यानं स्थलादिनिर्देशश्च परमात्मप्रकरणे २२६ पृष्ठे द्रष्टव्य॰ ।

(१) ऋसं. ८।१००।१०, तैब्रा. २।४।६।११, २।८।८।४; नि. ११।२८.

(२) ऋसं. ८।१००।११; तैब्रा. २।४।६।१०,२।८।८।४; नि. ११।२९.

(१) असं. ७।४४।१; पैसं २०।१।४.

[illegible]नार्थप्रत्यायकत्व, तुरीयावस्थापन्नायास्तु अर्थबोधकत्वमिति उत्तरार्धेनाह—तासा पूर्वोक्ताना द्वितयीना वाचा मध्ये तिस्रो वाचः पराद्या अस्मिन् शब्दप्रयोक्तरि पुरुषे अन्त देहमध्ये निहिताः अवस्थिता भवन्ति। एका वैखरीरूपा घोषमनु ताल्वोष्ठव्यापारजन्य ध्वनिमनुलक्ष्य वि पपात विशेषेण वर्णपदादिरूपेण वर्तते। यद्वा, पूर्वार्धेन निन्दावाक्यस्य स्तुतिवाक्यसमानताप्रतिपत्तिमापाद्य निन्दावाक्यप्रयोगेऽपि प्रयोक्तुरेव महती बाधा, नाभियुज्यमानस्य बाधेत्याह—तासामशिवाना निन्दारूपाणा वाचा मध्ये तिस्रो वाचः पराद्याः अस्मिन्मिथ्यापवदितरि जने अन्तर्निहिताः। एका वाक् वैखरी घोष जनसघध्वनिमनुलक्ष्य वि पपात निन्दात्वेन विरुद्धा पातिता। अयमर्थः—निन्दावाक्यस्यापि परादिचतुष्टयात्मकत्वात् तादृशवाक्य प्रयोक्तृशरीरमध्ये त्रयाणा भागाना अवस्थानात् तस्मिन्नेव निन्दा महती, मिथ्याभियुज्यमाने तु एक एव भागः पतित इति नास्ति निन्देति।

असा.

आत्मा सर्वथाऽभिव्यक्त वाङ्मय स एव सत्यमय

[1]यैवैके चानन्दा अन्ने पाने मिथुने रात्र्या एव ते सन्तता अव्यवच्छिन्नाः क्रियन्ते। तेषां रात्रिः कारोतरः। य उ वैके चानन्दा अन्नादेव ते सर्वे जायन्ते। ते देवा अब्रुवन् कथं न्विमान्वयमानन्दा तस्मादृशस्यैव प्रतिगृह्णीयामेति। तेऽपामूर्ध्व रसमुदौहन्। ता ओषधयश्च वनस्पतयश्च समभवन्। ओषधीनां च वनस्पतीनां चोर्ध्वं रसमुदौहन्। तत् फलमभवत्। फलस्योर्ध्वं रसमुदौहन्। तदन्नमभवत्। अन्नस्योर्ध्वं रसमुदौहन्। तद्रेतोऽभवत्। रेतस ऊर्ध्वं रसमुदौहन्। स पुरुषोऽभवत्। सोऽयं पुरुषो यः प्राणिति वाऽपानिति वा न तत्प्राणेन नापानेनाहेति। प्राणिषं वाऽपानिषं वेति वाचैव तदाह। तत्प्राणापानौ वाचमपीतो वाङ्मयौ भवतः। अथ यच्चक्षुषा पश्यति न तच्चक्षुषाहेति। अद्राक्षमिति वाचैव तदाह। तच्चक्षुर्वाचमप्येति वाङ्मयं भवति। अथ यच्छ्रोत्रेण शृणोति न तच्छ्रोत्रेणाहेति। अश्रौषमिति वाचैव तदाह। तच्छ्रोत्रं वाचमप्येति वाङ्मयं भवति। अथ यन्मनसा संकल्पयते न तन्मनसाहेति। समचीक्लपमिति वाचैव तदाह। तन्मनो वाचमप्येति वाङ्मयं भवति। अथ यदङ्गैः सुशीमं वा दुःशीमं वा स्पृशति न तदङ्गैराहेति। सुशीमं वा दुःशीमं वाऽस्प्राक्षमिति वाचैव तदाह। तत्सर्वं आत्मा वाचमप्येति वाङ्मयो भवति। तदेतदृचाऽभ्युदितं नेन्द्रादृते पवते धाम किचनेति। वाग्वा इन्द्रः। न ह्यृते वाचः पवते धाम किंचन। स वै सायं जुहोति॥

अग्निर्ज्योतिर्ज्योतिरग्निरिति। तं ज्योतिः सन्तं ज्योतिरित्याह स सत्यं वदति। तस्यायं वाङ्मय आत्मा सत्यमयो भवति। सत्यमया उ देवाः॥

देवी देवपुत्री, सर्वपशुवाच्या, अन्नरसधेनु, परमव्योम्नि स्थिता, सलिलजननी, अपरिमिताक्षरा, विश्वोपजीव्याक्षरमूलम्

[1]देवीं वाचमजनयन्त देवाः। तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना। धेनुर्वागस्मानुप सुष्टुतैतु॥

देवाः सर्वे वाच देवीमजनयन्त। ता वाच विश्वरूपाः द्विपाच्चतुष्पात्तदवान्तरभेदेन बहुविधाः पशवः स्वस्वभाषारूपेण वदन्ति। सा वाग्रूपा धेनुः नः अस्मदर्थ इष अन्न ऊर्ज क्षीरादिरस दुहाना सपादयन्ती सुष्टुता अस्माभिः सुष्टु वैदिकैः स्तोत्रैः स्तुता मन्द्रा हृष्टा सती अस्मान् प्रत्यागच्छतु। तैब्रासा.

यद्वाग्वदन्त्यविचेतनानि। राष्ट्री देवानां निषसाद मन्द्रा।
चतस्र ऊर्जं दुदुहे पयांसि। क्व स्विदस्याः परमं जगाम॥

यद्वाक् या वाग्देवता अविचेतनानि अचेतनसदृशान् मूकान्प्राणिनो वदन्ती अभिवदनक्षमान् कुर्वती देवानां सर्वेषा राष्ट्री राष्ट्रप्रदा मन्द्रा हृष्टा सती निषसाद

(१) शाब्रा. २।७–८.

(१) तैब्रा. २।४।६।१०–११. अन्यस्थलादिनिर्देशः ३४६ पृष्ठे द्रष्टव्यः।

अस्मदीये कर्मण्युपविष्टा । यस्या वाग्देव्याः प्रसादाच्चतस्रो दिग्देवता ऊर्जं क्षीरादिरसद्रव्य पयासि जलानि च दुदुहे दुहन्ति संपादयन्ति । अस्या वाग्देव्याः परम पद मनुष्य. क्व स्विज्जगाम कुत्र वा प्राप्तवान्, तदीयस्थान प्राप्तु न कोऽपि क्षम इत्यर्थः । तैब्रासा.

[1]गौरी मिमाय सलिलानि तक्षती । एकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी । सहस्राक्षरा परमे व्योमन् ॥

परमे व्योम्नि ब्रह्मणि प्रतिष्ठिता गौरी गौरवर्णा वाग्देवी सृष्ट्युपक्रमे सलिलसदृशानि वर्णपदवाक्यानि तक्षती सृजन्ती मिमाय शब्दमकरोत् । कथम् । प्रथमं प्रणवात्मना एकपदी ब्रह्मणो मुखान्निर्गता । अनन्तर व्याहृतिरूपेण सावित्रीरूपेण च द्विपदी । ततो वेदचतुष्टयरूपेण चतुष्पदी । ततो वेदाङ्गैः षड्भिः पुराणधर्मशास्त्राभ्यां चाष्टापदी । ततो मीमांसान्यायसाख्ययोगपाञ्चरात्रपाशुपतायुर्वेदधनुर्वेदगान्धर्वैर्नवपदी । ततोऽनन्तैर्वाक्यसदर्भैः सहस्राक्षरा अनन्तविधा बभूवुषी सपन्ना । तैब्रासा.

[2]तस्याः समुद्रा अधि विक्षरन्ति । तेन जीवन्ति प्रदिशश्चतस्रः ।
ततः क्षरत्यक्षरम् । तद्विश्वमुपजीवति ॥

तस्या वाग्देवतायामधिश्रिताः समुद्राः समुद्रसमाना वेदाः विक्षरन्ति विविध प्रवर्तन्ते । तेन प्रवर्तनेन चतस्रः प्रदिशः चतुर्विधाः प्राच्यादिदिगवस्थिताः प्राणिनो जीवन्ति, वेदोक्तमनुष्ठाय ऐहिकमामुष्मिक च प्राप्नुवन्ति । ततो वेदादेवाक्षर प्रणवात्मकं प्रवर्तते । तदेतदक्षर विश्वमुपजीवति सर्वे जनाः प्रणवानुष्ठानेन स्वापेक्षित फलं प्राप्नुवन्ति । तैब्रासा.

इन्द्रा सूरा जनयन्विश्वकर्मा । मरुत्वाँ अस्तु गणवान्त्सजातवान् ।
अस्य स्नुषा श्वशुरस्य प्रशिष्टिम् । सपत्ना वाचं मनसा उपासताम् ॥

इन्द्रा परमैश्वर्ययुक्तः सूरा सूर्यः विश्वकर्मा सर्वव्यापारयुक्तो विश्व जनयन् मरुत्वान् मरुद्भिर्युक्तो गणवान् वसुरुद्रादित्यगणैः सहितः सजातवान् सजातैः स्वेन समानजन्मभिः सर्वैः सहितश्च सन् यजमानस्यानुग्राहकोऽस्तु । ततश्चास्य यजमानस्य श्वशुरस्थानीयस्य सपत्नाः शत्रवः स्नुषा स्नुषावन्निलीयमानाः सन्तः प्रशिष्टिं प्रशासनरूपा वाचं मनसा उपासतां मनःपूर्वं सेवन्ताम् । तैब्रासा.

यजनीया, विराट्, अनपायिनी, हव्यवाट्, बहुरूपप्रतिपादिनी

* [1]जुषतां मे वागिदँ हविः । विराड्देवी पुरोहिता ।
हव्यवाडनपायिनी ॥
यया रूपाणि बहुधा वदन्ति । पेशाँसि देवाः परमे जनित्रे ।
सा नो विराडनपस्फुरन्ती । वाग्देवी जुषतामिदँ हविः ॥

अनन्ता, देवगन्धर्वमनुष्यपशूनामुपजीव्या, विश्वाश्रयः, अक्षररूपा, ऋतस्य प्रथमजा, वेदमाता, अमृतनाभि, मन्त्रकृद्भिस्तपसा प्राप्ता, सुकृतलोकदा

[2]अनन्तामन्तादधिनिर्मितां महीम् । यस्यां देवा अदधुर्भोजनानि ।
एकाक्षरां द्विपदाँ षट्पदां च । वाचं देवा उपजीवन्ति विश्वे ॥

देवा इन्द्रादयः यस्या वाचि भोजनानि अदधुः सपादितवन्तः । इन्द्राय स्वाहेति मन्त्रेण हुन भुङ्क्ते अतः वाङ्निमित्त तद्भोजनम् । ता वाच स्वभोजनहेतुं विश्वे सर्वे देवा उपजीवन्ति । सर्वेषामपि देवाना मन्त्रपुरःसरं दत्तमेवान्नं जीवनहेतुः । कीदृशीं वाचम् । अनन्ताम् । न हि लौकिकवैदिकशब्दानामन्तः पारोऽस्ति । अत एव महाभाष्यकार उदाजहार–'बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्यं च वर्षसहस्रमध्ययनकालः, शब्दपारायणस्यान्तं च न जगाम' इति । अन्तादधिनिर्मिताम् ।

(१) तैब्रा. २।४।६।११ अन्यस्थलादिनिर्देशः २२५ पृष्ठे द्रष्टव्यः.
(२) तैब्रा. २।४।६।१२.

* अनयोर्व्याख्यानं ३१७ पृष्ठे द्रष्टव्यम् ।
(१) तैब्रा २।५।१।२.
(२) तैब्रा. २।८।८।४–५.

पूर्वसृष्टेरन्तः परमेश्वरस्वरूपं, तस्मिन् हि जगल्लीयते। तस्मादन्तात्परमेश्वरादधिकत्वेन निर्मिता तामेकाक्षरा प्रणवरूपां द्विपदा संस्कृतापभ्रंशरूपा षट्पदां प्राकृतपैशाचिकादिभाषाभेदेन षड्विधां अत एव महीं महतीम्। तैब्रासा.

**वाचं देवा उपजीवन्ति विश्वे । वाचं गन्धर्वाः पशवो मनुष्याः ।**
**वाचीमा विश्वा भुवनान्यर्पिता । सा नो हवं जुषतामिन्द्रपत्नी ॥**

पूर्वमन्त्रोक्तरीत्या सर्वे देवा आहुतिकालीनमन्त्ररूपा वाचमेवोपजीवन्ति। गन्धर्वादयश्च वाचैव व्यवहरन्ति। पशूनामपि हम्भारवादिरूपया वाचैव व्यवहारो दृश्यते। तस्मादिमा विश्वा भुवनानि सर्वलोकनिवासिन एते प्राणिनो वाच्यर्पिता वाचमेवाश्रित्य वर्तन्ते। येयमीदृशी वाक् सेयमिन्द्रपत्नी इन्द्रस्य पालयित्री सती नो हवमस्मदीयमिदं हविः जुषताम्। तैब्रासा.

**वागक्षरं प्रथमजा ऋतस्य । वेदानां माताऽमृतस्य नाभिः ।**
**सा नो जुषाणोपयज्ञमागात् । अवन्ती देवी सुहवा मे अस्तु ॥**

येयं वाक् सैवाक्षरमविनश्वरं परमात्मस्वरूपं, तत उत्पन्नत्वात्। सा च ऋतस्य यज्ञस्य प्रथमजा प्रथममुत्पादयित्री। मन्त्रैर्हि कर्माण्युत्पाद्यन्ते। अत एव आथर्वणिका आमनन्ति–'तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' ( मुउ. १।२।१ ) इति। सा च ऋग्वेदादीना माता, तेषां वाग्विशेषरूपत्वात्। अमृतस्य नाभिः, अमृतत्वं हि देवत्वं वाचि नह्यते बध्यते, मन्त्रपूर्वकानुष्ठानेन तत्प्राप्तिः। सा वाग्देवी जुषाणा प्रीतियुक्ता सती नः अस्मदीयं यज्ञं उपागात् प्राप्नोतु। सा च देवी अवन्ती अस्मान् रक्षन्ती मे मम सुहवा सुखेन आह्वातुं शक्या अस्तु। तैब्रासा.

**यामृषयो मन्त्रकृतो मनीषिणः । अन्वैच्छन्देवास्तपसा श्रमेण ।**
**तां देवीं वाचꣳ हविषा यजामहे । सा नो दधातु सुकृतस्य लोके ॥**

मन्त्रकृतः संप्रदायप्रवर्तकरूपेण मन्त्राणां कर्मकर्तारो मनीषिणो बुद्धिमन्तो धारणशक्तियुक्ता ऋषयो वसिष्ठाद्याः श्रमेण तपसा बहुप्रयाससाध्येन तपसा युक्ताः तथा देवाश्च या वाचं अन्वैच्छन् अनुप्राप्तुं इच्छामकुर्वन्। अत एव स्मर्यते– ' युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥ ' इति। ता तादृशी वाचं देवीमनेन हविषा यजामहे। सा च देवी सुकृतस्य कर्मणः फलभूते लोके नः अस्मान् दधातु स्थापयतु। तैब्रासा.

मनीषिवेद्यचतुष्पदा, गुहाहितत्रिपदा, मनुष्यवाच्यतुरीयपदा

**चत्वारि वाक्परिमिता पदानि। तानि विदुर्ब्राह्मणा ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति ॥**

येयं वाक् सा परिमिता इयत्तया परिच्छिन्नानि चत्वारि पदानि चतुरोऽवयवान् प्राप्य वर्तते। परा पश्यन्ती मध्यमा वैखरीत्येते चत्वारः पादाः। तानि चत्वार्यपि पदानि ये ब्राह्मणाः मनीषिणः शास्त्रज्ञास्ते विदुः न त्वितरे मूढाः। तत्र हेतुरुच्यते—त्रीणि परा पश्यन्ती मध्यमेत्येतानि पदानि गुहायां शरीरमध्ये निहितानि स्थापितानि वर्तन्ते, नेङ्गयन्ति न तु बहिः प्रसरन्ति। वाचस्तुरीयं वैखरीत्याख्यं पदं मनुष्याः सर्वे वदन्ति उच्चारयन्ति। एतच्च शिक्षाकारेण स्पष्टीकृतम्— 'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ मारुतस्तूरसि-चरन्मन्द्रं जनयति स्वरम्। प्रातःसवनयोगं त छन्दो गायत्रमाश्रितम्॥ कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम्। तारं तार्तीयसवनं शीर्षण्यं जागतानुगम्॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते तेषा विभागः पञ्चधा स्मृतः॥ स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः। इति वर्णविदः प्राहुर्निपुणं त निबोधत ॥' (पा. शि. ६–१०) इति। तस्माच्छरीरमध्ये गूढं पादत्रयं मनीषिण एव जानन्ति। मूढास्तुरीयमेव वदन्ति। तैब्रासा.

(१) तैब्रा. २।८।८।५–६. अन्यस्थलादिनिर्देशः २२६ पृष्ठे द्रष्टव्यः।

वाचः तुरीयं निरुक्तम्

सं होवाच । तुरीयं तुरीयं चेन्मामबीभजुः । तुरीयमेव तर्हि वाङ्निरुक्तं वदिष्यतीति । तदेतत्तुरीयं वाचो निरुक्तं यन्मनुष्या वदन्ति । अथैतत्तुरीयं वाचो निरुक्तं यत्पशवो वदन्ति । अथैतत्तुरीयं वाचो निरुक्तं यद्वयांसि वदन्ति । अथैतत्तुरीयं वाचो निरुक्तं यदिदं क्षुद्रं सरीसृपं वदति ॥

स्वकीयग्रहादिभागानुसारेण वाचश्चतुर्थमेव निरुक्त स्यादित्याह—स होवाचेत्यादि । ग्रहादौ सर्वत्र चतुर्थभागस्यैव मदीयत्वात् वागपि चतुर्थभागमेव विस्पष्टं वदिष्यति । वाचो विस्पष्टिश्चतुर्थे भागे वैखरी वदत इत्यर्थः । परा पश्यन्ती मध्यमा वैखरीत्येव चतुरवस्था वागवतिष्ठते । तत्र परादीना तिसृणां देहमध्ये एवावस्थानेन परश्रोत्रग्रहणयोग्यताभावादविस्पष्टार्थत्वम् । वैखरी पुनः परश्रोत्रैर्गृह्यते अतिवाहितार्थप्रत्यये च समर्था भवति इति विस्पष्टेत्यर्थः । अबीभजुः अबीभजन् । यत् इन्द्रेण वैखर्यात्मक वाग्रूपमनुज्ञात, इदानी (यत इन्द्रेण वैखर्यात्मक वायुमनु जात तदिदानीं ?) मनुष्यादिभिस्तदेव व्यवह्रियते इत्याह—तदेतत्तुरीयमित्यादिना । मनुष्यादयः इदानी यद्वाग्रूप वदन्ति तदिन्द्रेणाभ्यनुज्ञातं विस्पष्टं चतुर्थ वाग्रूपमित्यर्थः । क्षुद्र सरीसृपमिति । पुनः पुनस्तानेव गच्छदन्यत्प्राणिजातमित्यर्थः ।

शब्रासा.

तस्मादेतदृषिणाऽभ्युक्तम् । चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति ॥

उक्तेऽर्थे मन्त्रसवाद दर्शयति—तस्मादेतदित्यादि । इन्द्रो वाचः चतुर्थभाग विस्पष्टमन्वजानात् । तस्मादेतदुक्तमर्थरूपमनुसृत्य ऋषिणा मन्त्रेण एवमुक्तम् । वाचः पदानि परापश्यन्तीत्यादयः अवस्थाभेदाः चत्वारि परिमिता परिमितानि, यतः चत्वारि अतः परिच्छिन्नानीत्यर्थः । अथवा, वाक् परिमितानि चत्वारि पदानि परिच्छिन्नपराद्यवस्थाभेदरूपचतुष्पदात्मिका । ये मनीषिणः विद्वांसस्ते ब्राह्मणाः तानि वाचः पदानि जानन्ति । तेषां मध्ये त्रीणि पदानि पराद्यवस्थाभेदरूपाणि शरीरमध्यरूपाया गुहाया निहितानि नेङ्गयन्ति न चेष्टन्ते न विस्पष्टीभवन्तीत्यर्थः । चतुर्थमेव रूपं वैखर्यात्मकमिदानी मनुष्या वदन्ति । मनुष्या इत्येतत् पश्वादीनामप्युपलक्षणार्थम् । पश्वादयोऽपि चतुर्थ वाग्रूप वदन्तीति ।

शब्रासा.

प्रभतफलदात्री स्वर्गकरी च

सुपर्णोऽसि गरुत्मान् । प्रेमां वाचं वदिष्यामि । बहु वदिष्यन्तीं बहु पतिष्यन्तीं बहु करिष्यन्तीं बहु सनिष्यन्तीं बहोर्भूयः करिष्यन्तीं स्वर्गच्छन्तीं स्ववदिष्यन्तीं स्वः पतिष्यन्तीं स्वः करिष्यन्तीं स्वः सनिष्यन्तीं स्वरिमं यज्ञं वक्ष्यन्तीं स्वर्मा यजमानं वक्ष्यन्तीमिति ॥

यागनिर्वाहकचित्याग्ने पक्ष्याकार त्व गरुत्मान् पक्षयुक्तोऽसि । तत्रापि सुपर्णः शोभनपत्रयुक्तोऽसि । त्वदनुग्रहात् अह इमा शस्त्रशसनादिरूपा वाचं प्रकर्षेण कथयिष्यामि । सैव वागेव अनेकैर्विशेषणैर्विशेष्यते—बहु अर्थजात अपेक्षित वदिष्यन्तीम् । तथा बहु पारलौकिकफल प्रापयिष्यन्तीम् । तत्साधनभूतमिदं कर्म बहु प्रभूतं यथा भवति तथा करिष्यन्तीम् । ऐहिकमपि बहु धनादिक सनिष्यन्ती दास्यन्तीम् । पुनरप्येतत् कर्म प्रभूतादप्यत्यन्त करिष्यन्तीम् । तथा देवानामग्रे यथोक्त कर्म वक्तु स्वर्गलोके गच्छन्तीम् । तस्मिंश्च स्वर्गलोके यजमान प्रापयिष्यन्तीम् । प्रापय्य च तस्मिन्स्वर्गे निवासस्थान करिष्यन्तीम् । कृत्वा च तत्र स्वर्गे भोग दास्यन्तीम् । तस्मिन् स्वर्गे देवाना पुरतः प्रभूतमिम यज्ञ वक्ष्यन्तीम् । तत्र स्वर्गे मां होतार यजमानत्वेन वक्ष्यन्तीम् । अस्ति हि सत्रे होतुर्यजमानत्व, 'ये यजमानास्त ऋत्विजः' इति श्रुतेः ।

ऐआसा.

नमस्या, उदितानुदितोभयरूपा, देवप्रिया, वैश्वदेवी, मधुमती च

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमः । नमो वाचे । नमो वाचस्पतये । नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः । मा मामृ-

(१) शब्रा. ४।१।३।१६-१७.

(१) ऐब्रा ५।१।५.

(२) तैआ. ४।१.

**षयो मन्त्रकृतो मन्त्रपतयः परादुः । माऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादाम् ॥**

अनुवाकस्य प्रथमभागे स्वाभीष्टानां देवतानामृषीणा च नमस्कारमाह—अनुष्ठेयस्य कर्मणो मन्त्राधीनत्वात् मन्त्राणां च वाग्देवताशरीरस्वरूपत्वात्तस्यै देवतायै प्रथम नमस्कारः क्रियत । वाक् च द्विविधा, काचित्पूर्वमुदिता व्यवहृता, काचिदनुदिता व्यवहरिष्यमाणा । तयोर्मध्ये या च वागुदिता तस्या अपि नमोऽस्तु । या च पूर्वमनुदिता तस्यै वाचेऽपि नमोऽस्तु । विभज्य नमस्कृत्य पुनः समुदायाकारेण नमस्क्रियते—वाचे भागद्वयेऽप्यनुगदितायै वाग्देवतायै नमोऽस्तु । सेय वाग्देवता येन बृहस्पतिरूपेण पाल्यते तस्मै वाचस्पतये नमोऽस्तु । यथा देवतानमस्कारस्तद्वत् ऋषिभ्योऽपि नमस्कारोऽस्तु । कीदृशेभ्यः । मन्त्रकृद्भ्यः, मन्त्र कुर्वन्तीति मन्त्रकृतः । यद्यप्यपौरुषेये वेदे कर्तारो न सन्ति तथापि कल्पादावीश्वरानुग्रहेण मन्त्राणा लब्धारो मन्त्रकृत इत्युच्यन्ते । तल्लाभश्च स्मर्यते—'युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥' इति । त एव महर्षयः सम्प्रदायप्रवृत्त्या मन्त्राणा पालनान्मन्त्रपतय इत्युच्यन्ते । तथाविधा महर्षयो मा यजमान मा परादुः परादान अवज्ञा मा कुर्वन्तु, किंतु अनुगृह्णन्तु । अहमपि तान्महर्षीन् मा परादा अवज्ञा न करोमि, किंतु आदरेण भजामि । तैआसा.

**वैश्वदेवीं वाचमुद्यासꣳ शिवामदस्तां जुष्टां देवेभ्यः ॥**

द्वितीयभागेन नमस्कारप्रयोजनं दर्शयति—अहं वाच उद्यासं तत्त्वरूपया वाचा वदिता भूयासम् । कीदृशीं वाचम् । वैश्वदेवीं सर्वदेवविषयाम् । शिवां स्तुतिरूपेण देवेभ्यः सुखप्रदाम् । अदस्ता अनुपक्षीणा संपूर्णाम् । देवेभ्यो जुष्टां देवाना प्रियाम् । तैआसा.

**शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् ।**
**शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती ॥**

तृतीयभागे देवतानुग्रहप्रार्थनारूपां ऋचं दर्शयति—द्यौः द्योलोकात्मको देवो मे मम शर्म सुखरूपो भवतु । अनुष्ठेये कर्मणि विघ्नपरिहारेण अनुगृह्णात्वित्यर्थः । एवं पृथिव्यादिषु योजयन् । ब्रह्म जगत्कारणं वस्तु । प्रजापतिश्चतुर्मुखः । तैआसा.

**भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये ॥**

यदुक्तं पूर्वत्र वैश्वदेवीं वाचमुद्यासमिति, तस्या वाचो विषयभूतानर्थानस्य चतुर्थभागेन दर्शयति—भूतं आकाशादिपञ्चमहाभूतात्मकम् । भुवनं पृथिव्यादिलोकस्वरूपम् । तेजः शरीरकान्तिः । यशः कीर्तिः । तपः व्रतादिनियमविशेषः । ब्रह्म स्वाध्यायः । सत्यं यथार्थकथनम् । एतत्सर्वं वदिष्ये तदनुकूलं नमस्क्रियेतत्प्रार्थयिष्ये । तैआसा.

**तस्मा अहमिदमुपस्तरणमुपस्तृणे । उपस्तरणं मे प्रजायै पशूनां भूयात् । उपस्तरणमहं प्रजायै पशूनां भूयासम् ॥**

यथोक्तमन्त्रार्थवदनसिद्ध्यर्थं तदाधारभूतं कर्म पञ्चमभागेन प्रार्थयते—तस्मै पूर्वोक्तभूतादिवदनसिद्ध्यर्थं अहमिदं प्रवर्ग्याख्यं कर्म उपस्तरणं तदाधारभूतं उपस्तृणे सम्पादयामि । मे मदीयाना प्रजानां पशूनां च उपस्तरणं आधारभूतं वस्तु भूयात् । अन्याधारमनवेऽपि अहमेव प्रजानां पशूनां च उपस्तरणं आधारः भूयासम् । तैआसा.

**प्राणापानौ मृत्योर्मा पातम् । प्राणापानौ मा मा हासिष्टम् ॥**

यथोक्तकर्मसिद्ध्यर्थं विघ्नरूपात् मृत्योः परिहारं षष्ठभागेन प्रार्थयते—हे प्राणापानौ उभौ वायू मृत्योः सकाशात् मां पालयतम् । तस्मिन्कालेऽनुग्रहाय—हे प्राणापानौ मा यजमानं मा हासिष्टं मा परित्यजतम् । तैआसा.

**मधु मनिष्ये । मधु जनिष्ये । मधु वक्ष्यामि । मधु वदिष्यामि । मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यः । तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥**

ॐ शान्तिः शान्तिः शान्तिः ॥

अपमृत्युपरिहारे सति प्रयोजनं सप्तमभागेन दर्शयति—अपमृत्युपरिहारेण लब्धायुरहं मधु मधुरं अर्वाचीनफलसाधनं प्रवर्ग्याख्यं कर्म मनिष्ये मनसि संकल्पयिष्ये ।

संकल्पादूर्ध्वं मधु तन्मधुरं कर्म जनिष्ये प्रादुर्भावयिष्ये अनुष्ठातु प्रारप्स्ये। प्रारम्भादूर्ध्वं तन्मधु मधुरं कर्म वक्ष्यामि वहन करिष्यामि समाप्तिपर्यन्त निर्वहिष्यामि। तत्सिद्धयर्थं मधु मधुर मन्त्रजातं वदिष्यामि कथयिष्यामि। न केवल मन्त्रपाठ, किंतु वाचमपि उद्देशत्यागरूपां उद्यासं वाचो वदिता भूयासम्। कीदृशीं वाचम्। देवेभ्यो मधुमतीं देवानामतिप्रियाम्। मनुष्येभ्यः शुश्रूषेण्यां मनुष्योपलक्षितानां पितॄणा श्रोतुमत्यन्तमधुराम्। तं एतादृश मा यजमानं शोभायै शोभनफलप्राप्त्यर्थं देवाः सर्वे अवन्तु रक्षन्तु। पितरोऽप्यनुमदन्तु अनुजानन्तु।

अथाष्टमभागेन स्वाभीष्टसिद्धिहेतुं परमात्मानं प्रणवेनानुस्मृत्य विघ्नत्रयपरिहारार्थं त्रिः शान्तिं पठति— आध्यात्मिकानां विघ्नाना ज्वरादिरूपाणां शान्तिरस्तु। आधिभौतिकानां रोगोपद्रवादीनां शान्तिरस्तु। आधिदैविकानां यक्षराक्षसोपद्रवादीनां शान्तिरस्तु।

तैआसा.

---

## जीवगतिः

**दानेन स्वर्गस्य अमरत्वस्य देवसलोकतायाश्च प्राप्ति. दुरितनिवारणं ऐहिकेष्टलाभश्च**

**नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति।**
**तस्मा आपो घृतमर्षन्ति सिन्धवस्तस्मा इयं दक्षिणा पिन्वते सदा॥**

सोमयागप्रशंसाप्रसङ्गेन सामान्यतो दान एतदादिभिस्त्रिभिः प्रशंसति। यद्वा, सोमस्यैव स्तुतत्वात् दक्षिणाशब्दस्य यागे एव प्रसिद्धत्वाच्च आ सूक्तपरिसमाप्तेः सोमयाग एव प्रस्तूयते। यः यो मर्त्यः पृणाति हविरादिदानेन देवादीन् प्रीणाति सः नाकस्य। कमिति सुखनाम। तद्विरुद्धं अकम्। न विद्यते अक दुःखं तत्साधनं पाप वेति नाको द्युलोकः। तथा च श्रूयते— 'न वा अमु लोकं जग्मुषे किं च नाकम्' (नि. २। १४; कासं. २१।२) इति। तस्य पृष्ठे उन्नते उपरिदेशे श्रितः सन् अधि अधिक आकल्पान्त तिष्ठति। यद्वा, अधि तिष्ठति अधिष्ठाय प्रमुखो भूत्वा तिष्ठति। न केवलं स्वर्गाश्रयणं, किंतु देवेषु मध्ये गच्छति वर्तते, स्वयमेव देवो भवतीत्यर्थः। ह इति प्रसिद्धौ। तस्मै प्रीणयित्रे पुरुषाय सिन्धवः स्यन्दनशीलाः आपः घृतं तेजोवत् सारं अर्षन्ति गच्छन्ति, रसवत्यो भवन्तीत्यर्थः। किंच इयं भूमिरपि दक्षिणा सस्यादिफलसंपादनदक्षा सती सदा सर्वकाल पिन्वते सेचयति तोषयतीत्यर्थः। दातुर्जीवनसाधकान्नोदकानि रुचिराणि समृद्धानि भवन्तीत्यर्थः।

ऋसा.

**दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः।**
**दक्षिणावन्तो अमृत भजन्ते दक्षिणावन्तः प्र तिरन्त आयुः॥**

दक्षिणावता बहुविधगोहिरण्यादिरूपदक्षिणाप्रदातॄणाम्। इच्छब्दः एवकारार्थः। तेषामेवार्थे इमानि भूमौ दृश्यमानानि चित्राणि चायनीयानि स्रक्चन्दनमणिमुक्तादिरूपाणि द्रव्याणि समृद्धानि भवन्तीति शेषः। किंच दक्षिणावतामेव दिवि द्युलोके सूर्यासः सूर्यसंबन्धिनो लोकाः तदनुगृहीता भोगा वा समृद्धा भवन्ति। किंच दक्षिणावन्तः एव अमृत जरामरणरहित स्थान भजन्ते सेवन्ते। यद्वा, दानेनापहतपाप्मानः आत्मानं विदित्वा अमृतमविनाश मोक्षं भजन्ते प्राप्नुवन्ति। 'यज्ञेन दानेन' (बृउ. ४।४।२२) इति श्रुतेः। किंच दक्षिणावन्तः

(१) ऋसं. १।१२५।५.

(१) ऋसं. १।१२५।६.

एव आयुः प्र तिरन्ते अतिदीर्घमेवमायुष्य वर्धयन्ते लभन्ते । प्रपूर्वस्तिरतिर्वर्धनार्थः । इत् इति सर्वत्र संबध्यते । ऋसा.

**मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः ।**
**अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभि सं यन्तु शोकाः ॥**

अन्वयव्यतिरेकाभ्यां दान प्रशसितुमाह—पृणन्तः देवादीन् हविरादिना प्रीणयन्तः सन्तः दुरित दुष्ट यथा भवति तथा प्राप्त दुःख एनः तत्साधन पाप च मा आरन् मा प्राप्नुवन् । न केवल दातार एव, अपि तु सूरयः देवाना स्तोतारो विद्वांसः मा जारिषुः जरया न जीर्णा भवेयुः । तथा सुव्रतासः शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपि मा जारिषुः । तर्हि एषामन्यो जनः क इति स उच्यते—तेषा दातॄणा स्तोतॄणां वा अन्यः तेभ्योऽन्यो यः कोऽपि पुरुषः परिधिः पापस्य परितो धारकः अस्तु । यद्वा, अन्यो यः कश्चन पापदेवः तेषां परिधिस्थानीयो व्यवधायकोऽस्तु । यथा अग्नेः परिधिः स्वय रक्षःप्रभृतिभिर्बाध्यमानः स्वान्तर्हितमग्नि रक्षति तद्वत् । अथवा, अन्यो धर्मविशेषः तेषां परिधिः परिधानमस्तु कवचस्थानीयोऽस्तु । तर्हि कि प्राप्नुयुरिति उच्यते—अपृणन्त देवादीन् अप्रीणयन्तमदातार शोकाः चित्तपीडाः तत्साधनाः पाप्मानः अभि अभिमुख स यन्तु सम्यक् प्राप्नुवन्तु, वय सुखिनो भवेमेत्यर्थः । ऋसा.

शरीरधारी आत्मा जीवाख्यः अमर्त्यः मर्त्यसहभावी च

*** को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति ।**
**भूम्या असुरसृगात्मा क स्वित्को विद्वांसमुप गात्प्रष्टुमेतत् ॥**

**अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम् ।**
**जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥**
**अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ।**
**ता शश्वन्ता विषूचीना वियन्ता न्यन्य चिक्युर्न नि चिक्युरन्यम् ॥**

अमार्गगपतिद्वेषयुक्तस्त्रीसदृशपापकर्मकृद्भिर्नरक सृष्टः

**अभ्रातरो न योषणो व्यन्तः पतिरिपो न जनयो दुरेवाः ।**
**पापासः सन्तो अनृता असत्या इदं पदमजनता गभीरम् ॥**

अभ्रातरः भ्रात्रादिबन्धुरहिताः योषणः न गतभर्तृका योषित इव । ता यथा भर्तृगृहात्पितृगृह प्रत्यायन्ति तद्वत् व्यन्तः गच्छन्तः, यज्ञादीनपहाय अमार्गे वर्तमाना इत्यर्थः । तथा पतिरिपो न जनयः पतिद्वेषिण्यः स्त्रिय इव दुरेवाः दुष्टगतयो दुराचाराः अत एव पापासः पापाः सन्तः अनृताः मानससत्यरहिताः असत्याः वाचिकसत्यरहिताः मनसा वाचाऽग्निमभजमानाः इदं पापिभिरनुभूयमानतया प्रसिद्ध गभीरं अगाधं पद नरकस्थानं अजनत अजनयन्त उत्पादयन्ति । ऋसा.

दुष्कृता पाकशंसभद्रमार्गदूषकाणा हिंसकानां असद्वादिना च दुर्गतिर्नाशश्च

**इन्द्रासोमा दुष्कृतो वव्रे अन्तरनारम्भणे तमसि प्र विध्यतम् ।**
**यथा नातः पुनरेकश्चनोदयत्तद्वामस्तु सहसे मन्युमच्छवः ।**

हे इन्द्रासोमौ दुष्कृतः दुष्कर्मकारिणः राक्षसान् वव्रे वारके अन्तः मध्ये अनारम्भणे आलम्बनरहिते तमसि अन्धकारे प्र विध्यतं प्रवेश्य ताडयतम् । यथा येन प्रकारेणैषा मध्ये एकश्चन एकोऽपि राक्षसः अतः अस्मात्तमसः पुनः न उदयत् उद्गच्छेत् तथा विध्यत-

---

* एतेषां त्रयाणा व्याख्यानं परमात्मप्रकरणे क्रमेण २०८, २१९, २२३ पृष्ठेषु द्रष्टव्यम् ।

(१) ऋसं १।१२५।७

(२) ऋसं. १।१६४।४, ३०, ३८ अन्यस्थलादिनिर्देशः क्रमेण २०८, २१९, २३३, पृष्ठेषु द्रष्टव्यः ।

(१) ऋसं. ४।५।५.

(२) ऋसं. ७।१०४।३; असं. ८।४।३ यथा नातः ( येतो नैषां ).

मित्यर्थः । तत् प्रसिद्ध मन्युमत् क्रोधयुक्तं वा युवयोः शवः बल सहसे रक्षसामभिभवनाय अस्तु भवतु । ऋसा

[1]ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः ।
अहये वा तान्प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे ॥

ये राक्षसाः पाकशस परिपक्कवचन सत्यभाषिण मा एवैः एतव्यैः प्राप्तव्यैरात्मीयैः कामैर्हेतुभूतैः विहरन्ते विशेषेण हरन्ति उपक्षपयन्ति यथाकाम परिवदन्तीत्यर्थः । ये वा स्वधाभिः बलैर्युक्ताः भद्र कल्याणवर्तन मा दूषयन्ति दुष्टं कुर्वन्ति तान् सर्वान् सोमः अहये वा सर्पाय वा प्रददातु । निर्ऋतेः पापदेवतायाः उपस्थे उत्सङ्गे वा आ दधातु प्रक्षिपतु । ऋसा.

[2]परः सो अस्तु तन्वा तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।
प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम् ॥

स राक्षसः तन्वा तना च तन्वाः शरीरस्य तनयस्य च परः परस्तादस्तु वर्तमानो भवतु, उभाभ्या वियुक्तो भवत्वित्यर्थः । विश्वाः व्याप्ताः तिस्रः पृथिवीः त्रील्लोकान् अधो अस्तु अधस्ताद्भवतु लोकत्रयादपि प्रच्युतो भवत्वित्यर्थः। हे देवाः अस्य शत्रोः यशः अन्न कीर्तिर्वा प्रति शुष्यतु। यः राक्षसः नः अस्मान् दिवा अहनि दिप्सति जिघासति यश्च नक्तं रात्रौ जिघासति अस्योभयविधस्य यशः प्रति शुष्यत्विति सबन्धः । ऋसा.

[3]सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत् ॥

प्रायेणेदमादिभिर्ऋग्भिः राक्षसेन सह ऋषिणा शपथः क्रियते । अत्र केचिदाहुः – ' हत्वा पुत्रशत पूर्व वसिष्ठस्य महात्मनः । वसिष्ठ राक्षसोऽसि त्व वासिष्ठ रूपमास्थितः ॥ अहं वसिष्ठ इत्येव जिघासु राक्षसोऽब्रवीत् । अत्रोत्तरा ऋचो दृष्टा वसिष्ठेनेति नः श्रुतम् ॥ ' इति । चिकितुषे विदुषे जनाय इद सुविज्ञान विज्ञातुं सुशकं भवति । किं तत् । सच्च सत्यं च असच्च असत्य च वचसी सत्यासत्यरूपे वचने पस्पृधाते मिथः स्पर्धेते । तयोः सदसतोर्मध्ये यत्सत्य यथार्थं वचन यतरत् यच्च ऋजीयः ऋजुतम अकुटिल तदित् तदेवाकुटिल सत्यभाषण सोमः अवति रक्षति । असत् उक्तविलक्षणमसत्यं हन्ति हिनस्ति । एवं सति आवयोर्मध्ये कतरोऽनृतभाषीति विद्वद्भिः सुविज्ञानमित्यर्थः । ऋसा.

[1]न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।
हन्ति रक्षो हन्त्यासद्वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ॥

वृजिनं पापकारिणं राक्षसं सोमः देवः न वा उ न खलु हिनोति प्रेरयति गच्छ त्वमिति न मुञ्चति । तथा क्षत्रिय क्षत्र बल तद्वन्त मिथुया मिथ्याभूतं वचन धारयन्त बिभ्रत असत्यवादिन पुरुप न च हिनोति न विसृजति, अपि तु रक्षः राक्षस हन्ति । असत् असत्यं वदन्तं च हन्ति हिनस्ति । उभौ राक्षसावनृतवादिनौ तौ सोमेन हतौ इन्द्रस्य सबन्धिनि प्रासितौ बन्धने शयाते निवसतः । यद्वा, इन्द्रस्येति तृतीयार्थे षष्ठी । इन्द्रेण ईश्वरेण सोमेन प्रसितौ बद्धौ । ऋसा.

मर्त्यानां विवस्वान् हन्ता

[2]मा नो हेतिर्विवस्वत आदित्याः कृत्रिमा शरुः ।
पुरा नु जरसो वधीत् ॥

हे आदित्याः नः अस्मान् विवस्वतः विवस्वत्पुत्रस्य यमस्य । पुत्रे पितृशब्दः । तस्य हेतिः आयुधभूता कृत्रिमा क्रियया निष्पन्ना शरुः हिंसिका प्रसितिः पुरा पूर्वं नु इदानीं सर्वदेत्यर्थः । जरसः इदानी जीर्णान् मा वधित् मा हिंस्यात् । ऋसा.

(१) ऋसं ७।१०४।९; असं. ८।४।९.
(२) ऋसं. ७।१०४।११; असं. ८।४।११ यो नो (यो मा ).
(३) ऋसं. ७।१०४।१२; असं. ८।४।१२.

(१) ऋसं. ७।१०४।१३; असं. ८।४।१३.
(२) ऋसं. ८।६७।२०.

एकविंशं ब्रध्नस्य विष्टपं स्वर्गाख्यं सोमसाध्यम्

[1]उद्यद्ब्रध्नस्य विष्टपं गृहमिन्द्रश्च गन्वहि ।
मध्वः पीत्वा सचेवहि त्रिः सप्त सख्युः पदे ॥

यत् यदा ब्रध्नस्य विष्टप सूर्यस्य स्थान गृह इन्द्रश्च अह चोभौ उत् गन्वहि उद्गच्छावः, तदानी मध्वः मधुर सोमरस पीत्वा सचेवहि ससृधौ भवेव । कुत्र । सख्युः सर्वेषां सखिभूतस्य आदित्यस्य । त्रिः सप्त इत्यनेन देवलोकानामुत्तममेकविंश स्थानमुच्यते, आदित्यस्यैकविंशत्वात् । तथा च ब्राह्मणम्—'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंश.' (ऐब्रा. ५।४।२९) इति । तादृशे एकविंशस्थाने सचेवहीति । ऋसा.

अयज्वन पतनम्

[2]अन्यव्रतममानुषमयज्वानमदेवयुम् ।
अव स्वः सखा दुधुवीत पर्वतः सुघ्नाय दस्युं पर्वत. ॥

हे इन्द्र अन्यव्रत व्यतिरिक्तकर्माण अत एव अमानुष मानुषाणा इन्द्रयाजिनामप्रियं अयज्वान अयष्टार अदेवयु अदेवकर्मिण पापिन स्वः स्वर्गात् अव दुधुवीत अवचालयेदित्यर्थः । कः । सखा पर्वतः तव सखिभूतः पर्वतः ऋषिः । यद्यपि अन्य देवमिष्ट्वा स्वर्ग प्राप्नोति सः, तथापि पातयति ऋषिः । न केवल धूननमात्र, अपि तु सुघ्नाय सुष्ठु हन्त्रे मृत्यवे दस्यु उक्तलक्षण पर्वतः प्रेरयतीति शेषः । अतः इन्द्रमेवावश्य यजध्वमिति शेषः । ऋसा.

सोमसाध्य अमृत स्वर्ग ज्योतिषावृत. राज्ञा वैवस्वतेनाधिष्ठितश्च

[3]यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितम् ।
तस्मिन्मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परि स्रव ॥

हे पवमान यत्र यस्मिंल्लोके ज्योतिः सर्व तेजः अजस्र सर्वदाऽविनश्वर वर्तते, यस्मिंश्च लोके स्वः आदित्याख्य ज्योतिः हित निहितमस्ति, तस्मिन् अमृते मरणधर्मरहिते अत एव अक्षिते अक्षीणे लोके मा सोम-मिन्द्र कुर्वन्त धेहि निधेहि । तस्मान्मामुत्तमलोक प्रापयितु त्वमिन्द्राय परि स्रव । ऋसा.

[1]यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।
यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥

यत्र यस्मिंल्लोके वैवस्वत. विवस्वत्पुत्रः राजा भवति, यत्र च लोके दिव. आदित्यस्य अवरोधन भूताना प्रवेशन, किंच यत्र लोके यह्वी महत्य. अमूः इमाः गङ्गाद्याः आपः तिष्ठन्ति, तत्र तादृशे लोके मा अमृत मरणधर्मरहित कृधि कुरु, मम देवत्व प्रापये-त्यर्थ. । अतः कारणात् परि स्रव ।

ऋसा.

[2]यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।
लोका यत्र ज्योतिष्मन्तस्तत्र माममृत कृधीन्द्रायेन्दो परि स्रव ॥

यत्र त्रिदिवे तृतीयस्या दिवि द्युलोके त्रिनाके । नक्षत्राधारभूतस्थानेन त्रीणि स्थानानि सन्ति । तत्र तृतीये नाके उत्तमे स्थाने दिवः आदित्यस्य अनुकाम कामानुरूप चरणमस्ति । किंच यत्र यस्मिन् लोके लोकाः ज्योतिष्मन्तः ज्योतिर्युक्तास्तिष्ठन्ति । तत्र तादृशे लोके माममृत कृधि । यथा ममोत्तमलोको भवति तथा त्वमिन्द्राय परि स्रव । ऋसा.

[3]यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् ।
स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥

यत्र यस्मिंल्लोके कामाः काम्यमानाः देवाः निकामाः नितरामस्य प्रार्थ्यमाना इन्द्रादयश्च विद्यन्ते । यद्वा, कामाः निकामा अभिलाषाः निकामाश्च यत्र विद्यन्ते (?) । यत्र लोके ब्रध्नस्य सर्वेषां प्रशासकस्य । यद्वा, सूर्येण विना कर्माणि न घटन्ते इति सर्वेषा कर्मणा मूलभूतस्यादित्यस्य विष्टप सद्स्थान यत्र विद्यते तत्र लोके ।

(१) ऋसं. ८।६९।७, असं. २०।९२।४; ऐब्रा. १६।४।७, शाब्रा १७।३.

(२) ऋसं. ८।७०।११.

(३) ऋसं. ९।११३।७.

(१) ऋसं. ९।११३।८.

(२) ऋसं ९.११३।९.

(३) ऋसं ९।११३।१०

स्वधा अन्न स्वधाकारेण वा दत्तमन्न तृप्तिः तर्पण हर्षण हर्षः च यत्र विद्यते तत्र लोके माममृत कृधि । ऋसा.

**यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।**
**कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥**[1]

यत्र यस्मिंल्लोके आनन्दादयः आसते । तेषामल्पो भेदो द्रष्टव्यः । यत्र च लोके कामस्य काम्यमानस्य देवस्य सर्वे कामाः आप्ताः प्राप्ता भवन्ति, तत्र माममृत कृधि । एतत्तु त्वया विना न घटते इति हे सोम त्व परि स्रव । ऋसा.

लोकद., मार्गमबाधमान., संगमस्थानभूत. जनाना, प्रथमः पितृमार्गज्ञ', वैवस्वतो यमो राजा

**परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।**
**वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥**[2]

हे मदीयान्तरात्मन् यजमान वा त्वं राजान पितॄणा स्वामिनं यमं हविषा पुरोडाशादिना दुवस्य परिचर । कीदृशम् । प्रवतः प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधन पुण्यमनुष्ठितवतः पुरुषान् महीः तत्तद्भोगोचितभूप्रदेशविशेषान् अनु परेयिवात क्रमेण मरणादूर्ध्वं प्रापितवन्त तथा बहुभ्यः स्वर्गार्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतार्थे पन्थां स्वर्गस्योचितं मार्ग अनुपस्पशान अबाधमानम् । पापिनः एव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयति न तु पुण्यकृत इत्यर्थः । वैवस्वत विवस्वतः सूर्यस्य पुत्रं जनाना पापिनां सगमन गन्तव्यस्थानरूपम् । ऋसा.

**यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।**[3]
**यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या अनु स्वाः ॥**

प्रथमः सर्वेषा मुख्यः यमः नः अस्माक प्रजाना गातु शुभाशुभनिमित्त विवेद जानाति । एषा गव्यूतिः न अपभर्तवा उ । अतिशयज्ञानयोगाद्यमस्य न केनचिदपहर्तुमपनेतुं शक्यते इत्यर्थः । यत्र यस्मिन्मार्गे नः अस्माकं पूर्वे पितरः परेयुः एना अनेन मार्गेण गच्छन्तः जज्ञानाः जाताः सर्वे स्वाः स्वभूताः पथ्याः स्वकर्ममार्गभूताः गतीः अनु गच्छन्ति । ऋसा.

देवपित्राश्रय. यमवरुणाधिष्ठितं इष्टापूर्तद्वारा मर्त्येन प्राप्यं पूर्वपितृवासभूतं परमव्योम्नि स्थित स्थानं, यत्र नवशरीरलाभः यत्र च यमदूतश्वद्वयरक्षितमृतस्य गतिः

**मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।**[1]
**यांश्च देवा वावृधुर्ये च देवान्त्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति ॥**

मातली मातलिरिन्द्रस्य सारथिः, तद्वानिन्द्रो मातली । स च कव्यैः कव्यभाग्भिः पितृभिः सह वव्रधानः वर्धमानो भवति । यमश्च अङ्गिरोभिः पितृविशेषैः सह वर्धमानो भवति । ............ । तत्र देवाः इन्द्रादयः यांश्च कव्यभागादीन् पितॄन् ववृधुः वर्धयन्ति, ये च कव्यभागादयः पितरः देवान् इन्द्रादीन् वर्धयन्ति, तेपा मध्ये अन्ये इन्द्रादयः स्वाहा मदन्ति स्वाहाकारेण हृष्यन्ति । अन्ये पितरः स्वधया स्वधाकारेण हृष्यन्ति ।

ऋसा.

**[2]प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।**

---

(१) ऋसं. ९।११३।११.

(२) ऋसं. १०।१४।१; असं. १८।१।४९ महीरनु ( महीरिति ) दुवस्य ( सपर्यत ); मैसं. ४।१४।१६ ( २३४), तैआ. ६।१।१ यिवासं ( युवासं ) मनुप ( मनप ) दुवस्य ( दुवस्यत ), नि. १०।२०.

(३) ऋसं. १०।१४।२; असं. १८।१।५० परेयुरेना ( परेता एना ), मैसं. ४।१४।१६ ( २२९ ).

(१) ऋसं. १०।१४।३, असं. १८।१।४७ देवान्त्स्वा ... ..मदन्ति ( देवास्ते नोऽवन्तु पितरो हवेषु ); तैसं. २।६।१२।५, मैसं. ४।१४।१६ ( २३३ ); ऐब्रा १३।१३।११; तैब्रा. २।६।१६।२.

(२) ऋसं. १०।१४।७, असं. १८।१।५४ ( प्रेहि प्रेहि पथिभिः पूर्याणैर्येना ते पूर्वे पितर. परेताः । उभा राजानौ स्वधया मदन्तौ यमं पश्यासि वरुणं च देवम् ॥ ), मैसं. ४।१४।१६ ( २३० ) पूर्व्ये ( पूर्वे ) परेयु' ( परेताः ).

**उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम् ॥**

यत्र यस्मिन् स्थाने नः अस्माकं पूर्वे पुरातनाः पितरः पितामहादयः परेयुः पूर्व्येभिः पूर्वस्मिन्काले भवैः, अनादिकालप्रवृत्तैरित्यर्थः । पथिभिः मार्गैः हे मत्पितः तत्स्थानं प्रेहि प्रगच्छ शीघ्रं गच्छ । गत्वा च स्वधया अमृतान्नेन मदन्ता मदन्तौ तृप्यन्तौ राजाना राजानौ उभा उभौ यमं देवं द्योतमानं वरुणं च पश्यासि पश्य । ऋसा.

[1]**सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।**
**हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥**

हे मदीय पितः तनस्त्वं परमे उत्कृष्टे व्योमन् व्योमनि स्वर्गाख्ये स्थाने स्वभूतैः पितृभिः सह सं गच्छस्व । इष्टापूर्तेन श्रौतस्मार्तदानफलेन सं गच्छस्व । ततः इष्टापूर्तेन सहागम्य अवद्यं पापं हित्वा परित्यज्य अस्तं व्रियमाणाख्यं गृहं एहि आगच्छ । ततः सुवर्चाः । तृतीयार्थे प्रथमा । सुवर्चसा शोभनदीप्तियुक्तेन तन्वा स्वशरीरेण सं गच्छस्व । ऋसा.

[2]**अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।**
**अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥**

श्मशाने पूर्वं स्थिता हे पिशाचादयः अतः अस्मात् प्रमृज्यमानदहनस्थानात् अपेत अपगच्छत, वीत विशेषेण गच्छत, वि सर्पत च । इदं स्थानं परित्यज्य नानाभावेन दूरतरं देशं गच्छतेत्यर्थः । पितरः अस्मै मृतयजमानस्यार्थाय एतं लोकं इदं दहनस्थानं अक्रन् यमस्याज्ञया अन्वकुर्वन् । यमः अपि अहोभिः दिवसैः अद्भिः अभ्युक्षणोदकैः अक्तुभिः रात्रिभिः व्यक्तं [illegible] । शुद्धिनिमित्तैः कालोदकादिभिः शोधितमित्यर्थः । अवसानं दहनस्थानं अस्मै मृतयजमानस्यार्थाय ददाति दत्तवान् । ऋसा.

[1]**अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।**
**अथा पितॄन्त्सुविदत्रॉ उपेहि यमेन ये सधमादं मदन्ति ॥**

हे अग्ने साधुना पथा समीचीनेन मार्गेण श्वानौ उभौ अति द्रव अतिक्रम्य गच्छ । यमस्वामिकौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः । कीदृशौ श्वानौ । सारमेयौ, सरमा नाम काचित्प्रसिद्धा देवशुनी, तस्याः पुत्रौ । चतुरक्षौ उपरितने पुनरप्यक्षिद्वयं ययोस्तादृशौ । अथ शोभनमार्गेण गमनानन्तरं ये पितरो यमेन सधमादं सह [illegible] अनुभवन्ति तान् सुविदत्रान् सुष्ठ्वभिज्ञान् पितॄन् उपेहि उपगच्छ । ऋसा.

[2]**यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।**
**ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि ॥**

हे राजन् हे यम ते त्वदीयौ यौ श्वानौ विद्येते ताभ्यां श्वभ्यां हे राजन् यम एनं प्रेतं परि देहि रक्षार्थं प्रयच्छ ।

(१) ऋसं. १०।१४।८; असं. १८।३।५८ हित्वायावद्यं (हित्वावद्यं) च्छस्व तन्वा ( च्छना तन्वा ), तैआ ६।४।२ सं यमेनेष्टा ( सं स्वधाभि समिष्टा ) उत्तरार्धे ( यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देव. सविता दधातु ).

(२) ऋसं. १०।१४।९, असं. १८।१।५५, तैसं. ४।२।४।१, ५।२।३।१ ( अपेत वीत वि च सर्पताऽतो येऽत्र स्थ पुराणा ये च नूतनाः । अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ॥ ), कासं. १६।११ ( १२४ ) पूर्वार्धं तैसंवत्, उत्तरार्धे ( अदाद्यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ), मैसं. २।७।११ ( १३१ ) तैसंवत्, शुसं. १२।४५ कासंवत्, तैब्रा. १।२।१।१६ तैसंवत्, शब्रा ७।१।१।२ कासंवत्, तैआ १।२७।५, ६।६।१ पूर्वार्धं तैसंवत्, ददात्य ( ददात्व ).

(१) ऋसं. १०।१४।१०; असं. १८।२।११ सारमेयौ श्वानौ ( श्वानौ सारमेयौ ) अथा .. .उपेहि ( अधा पितॄन्सुविदत्रॉ अपीहि ), तैआ ६।३।१ उपेहि ( अपेहि )

(२) ऋसं. १०।१४।११; असं १८।२।१२ पथिरक्षी नृचक्षसौ ( पथिषदी नृचक्षसा ) उत्तरार्धे ( [illegible] राजन्परि धेह्येनं स्वस्त्यस्मा अनमीवं च धेहि ), तैआ ६।३।१ नृचक्षसौ ( नृचक्षसा ) उत्तरार्धे ( ताभ्यां राजन्परि देह्येनं स्वस्ति चास्मा अनमीवं च धेहि ).

कीदृशौ श्वानौ । रक्षितारौ यमगृहस्य रक्षकौ, चतुरक्षौ अक्षिचतुष्टययुक्तौ, पथिरक्षी मार्गस्य रक्षकौ, नृचक्षसौ मनुष्यैः ख्याप्यमानौ । श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषास्तौ प्रख्यापयन्ति । ताभ्यां श्वभ्यां दत्त्वा अस्मै प्रेताय स्वस्ति च क्षेममपि अनमीव च रोगाभावमपि धेहि सपादय ।

ऋसा.

उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥

यमस्य सबन्धिनौ दूतौ श्वानौ जनाँ अनु प्राणिनो लक्ष्यीकृत्य सर्वत्र चरतः । कीदृशौ । उरूणसौ दीर्घनासिकायुक्तौ असुतृपौ परकीयान्प्राणान् स्वीकृत्य तैस्तृप्यन्तौ उदुम्बलौ उरुबलौ विस्तीर्णबलौ । तौ उभौ दूतौ सूर्याय दृशये सूर्यस्य दर्शनार्थं अद्य दिने इह कर्मणि भद्रं असु समीचीनं प्राणं पुनः अस्मभ्यं दातां अदत्ताम् ।

ऋसा.

मरणोत्तरजीविनो देवरूपा अन्यरूपा वा देवैः सह स्वर्गे अन्यत्र वा वासिन. देवैः सह स्वातन्त्र्येण वा यज्ञभाज इहलोके जीविना पितृयज्ञपराणां रक्षणाय समर्था इष्टफलप्रदाश्च

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥

त्रिविधाः पितरः उत्तमा मध्यमा अधमाश्चेति । यथाविध श्रौत कर्मानुष्ठाय पितृत्वं प्राप्ता उत्तमाः । स्मार्तकर्ममात्रपरा मध्यमाः । अत्रापि कैश्चित्संस्कारैर्विकलाः अधमाः । एतदेवाभिप्रेत्य 'ये अग्निदग्धा ये अनग्निदग्धाः' ( ऋम. १०।१५।१४ ) इत्यादिमन्त्रः समाम्नातः । तेषु अवरे निकृष्टाः उदीरतां उत्तम हविः प्राप्नुवन्तु । परासः उत्तमाः पितरः उदीरताम् । मध्यमाः पितरश्चोदीरताम् । ते सर्वेऽप्यस्मद्विषये सोम्यासः सोम्याः अनुग्रहपराः सन्तु । ये पितरः अवृकाः वृकवत् अरण्यश्ववत् अस्मासु हिंसामकुर्वन्तः ऋतज्ञाः अस्मदनुष्ठितं यज्ञं जानन्तः असुं अस्मत्प्राणं ईयुः रक्षितुं प्राप्ताः ते पितरः हवेषु अस्मदीयेष्वाह्वानेषु नः अस्मान् अवन्तु रक्षन्तु ।

ऋसा.

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥

पूर्वासः यजमानोत्पत्तेः पूर्वमुत्पन्नाः ज्येष्ठभ्रातृपितामहादयः ये ईयुः पितृलोकं प्राप्ताः । ये चान्ये उपरासः यजमानजन्मनः उपरि उत्पन्नाः कनिष्ठभ्रातृस्वपुत्रादयः ईयुः पितृलोकं प्राप्ताः । ये अप्यन्ये पार्थिवे पृथिवीसंबन्धिनि रजसि रजोगुणकार्येऽस्मिन्कर्मणि आ निषत्ताः हविः स्वीकर्तुमागत्योपविष्टाः । ये वा केचिदन्ये बन्धुवर्गरूपाः पितरः विक्षु बन्धुरूपासु प्रजासु आ निषत्ताः श्राद्धादिस्वीकारायागत्योपविष्टाः । कीदृशीषु विक्षु । सुवृजनासु । वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनम् । शोभनं वृजनं यासां ताः सुवृजनाः । तादृशीषु । धनसमृद्ध्या श्राद्धादिकर्मपरास्वित्यर्थः । सर्वेभ्यः उक्तेभ्यः पितृभ्यः अद्य अस्मिन् कर्मणि इदं नमः अस्तु अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु । ऋसा.

आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥

अरुणीनां आरोचमानानां ज्वालानां वा देवतानां वा उपस्थे समीपस्थाने वेद्याख्ये आसीनासः उपविष्टाः

(१) ऋसं. १०।१४।१२, असं १८।२।१३ तृपा उ ( तृपाव् ); तैआ. ६।३।२ पूर्वार्धे ( उरुणसावसुतृपावुलुम्बलौ यमस्य दूतौ चरतोऽवशाँ अनु ) दातामसु (दत्तावसु).
(२) ऋसं. १०।१५।१, असं १८।१।४४, तैसं. २।६।१२।३; मैसं. ४।१०।६ ( १४० ) मवर उत्परास ( मवरा उत्परासा ), शुसं १९।४९; ऐब्रा. १३।१३।१२; नि ११।१८.

(१) ऋसं. १०।१५।२, असं १८।१।४६ य उप ( ये अप ) विक्षु ( दिक्षु); तैसं. २।६।१२।४; मैसं. ४।१०।६ ( १३९ ); शुसं. १९।६८, ऐब्रा १३।१३।१८.
(२) ऋसं १०।१५।७; असं. १८।३।४३, शुसं. १९।६३.

पितरः यूय दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय रयिं धन धत्त दत्त । हे पितर, यूय तस्य यजमानस्य पुत्रेभ्यः वस्वः वसु धन प्र यच्छत । ते तादृशाः यूय इह अस्मिन् अस्मदीये कर्मणि ऊर्ज धन दधात निधत्त । ऋभा.

[1]ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥

सोम्यासः सोमसपादिनः वसिष्ठाः वस्तृतमाः कृताच्छादनाः धनवत्तमा वा नः अस्माक ये पूर्वे पितरः सोमपीथ सोमपानं अनूहिरे आनुपूर्व्येण देवेभ्यश्च पितृभ्यश्च प्राप्नुवन्तः दत्तवन्त इत्यर्थः । उशन् पितृभिः सह सभोग कामयमानः यमः पितृपतिः उशद्भिः यमेन सह सभोग कामयमानैः तेभिः तैरस्मदीयैः पितृभिः सह रराणः रममाणः हवींषि अस्माभिर्दत्तानि प्रतिकाम काम काम प्रति अत्तु । यानि यानि हवींषि कामयते तानि तानि भक्षयत्वित्यर्थः । ऋसा.

[2]ये तातृपुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।
आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥

देवत्रा देवान् जेहमानाः क्रमेण गच्छन्तः क्रमेण देवत्व प्राप्ता इत्यर्थः । होत्राविदः यज्ञान् सम्यक्कर्तुं वेदितारः अर्कैः अर्चनीयैः स्तोत्रैः स्तोमतष्टासः स्तोमानां च सम्यक्कर्तारः ये पितरः तातृपुः तृप्यन्ति, हे अग्ने त्व तैः पितृभिः अर्वाङ् अस्मदभिमुखः आ याहि आगच्छ । कीदृशैः । सुविदत्रेभिः सुविदत्रैः सत्यैः अविसंवादिभिः कव्यैः, कव्य नाम पितृदेवत्यं हविः, तत्संबन्धिभिः । यद्वा, कव्यैः कविभिर्मेधाविभिः । घर्मसद्भिः यज्ञसादिभिः । ऋसा.

(१) ऋसं. १०।१५।८, शुसं. १९।५१.

(२) ऋसं १०।१५।९, असं. १८।३।४७ उत्तरार्धे ( आग्ने याहि सहस्रं देववन्दैः सत्यैः कविभिर्ऋषिभिर्घर्मसद्भिः ), मैसं ४।१०।६ ( १४६ ) रर्वाङ् सत्यैः कव्यैः ( रर्वाक् सत्यैः ); तैब्रा. २।६।१६।२ तृपुर्दे ( तृपुर्दे ).

[1]ये सत्यासो हविरदो हविष्पा इन्द्रेण देवैः सरथं दधानाः ।
आग्ने याहि सहस्रं देववन्दैः परैः पूर्वैः पितृभिर्घर्मसद्भिः ॥

सत्यासः सत्याः ये पितरः हविरदः भक्षणयोग्यस्य हविषोऽत्तारो भक्षयितारः हविष्पाः पानयोग्यस्य हविषः पातारः इन्द्रेण देवैः सरथ समानं एक तुल्य वा रथं दधानाः गमनाय सदा धारयन्ति, हे अग्ने तैः पितृभिः सह आ याहि आगच्छ । कीदृशः । सहस्रम् । तृतीयार्थे प्रथमा । सहस्रेण बहुभिरित्यर्थः । देववन्दैः देवसबन्धिभिः स्तोत्रैर्युक्त. परैः परकालीनैः पूर्वैः पूर्वकालीनैः घर्मसद्भिः यज्ञसादिभिः महावीरसादिभिः आदित्यसादिभिर्वा । ऋसा.

अग्निः असुमार्गेण गच्छन्त आहुतिरूपं जीवं सुकृता लोक प्रति नयति, पितृभ्यो ददाति, स देववशो भवति, मर्त्यस्य चक्षुरादीना सूर्यवातद्युभूजलौषधीषु विलयः

[2]मैनमग्ने वि दहो माभि शोचो मास्य त्वचं चिक्षिपो मा शरीरम् ।
यदा शृतं कृणवो जातवेदोऽथेमेनं प्र हिणुतात्पितृभ्यः ॥

हे अग्ने एन प्रेत मा वि दहः विशेषेण दग्ध भस्मीभूत मा कुरु । माऽभि शोचः अभितः शोकेन सतापेन युक्त मा कुरु । अस्य त्वच मा चिक्षिपः इतस्ततो विक्षिप्ता मा कुरु । शरीरमपि विक्षिप्त मा कुरु । हे जातवेदः अग्ने यदा त्वं शृत पक्व सुदग्धं कृणवः करिष्यसि अथ तदानीं ईं एन प्रेत पितृभ्यः प्र हिणुतात् पितृसमीपे प्रेरय । ऋसा.

(१) ऋसं १०।१५।१०, असं. १८।३।४८ दधानाः ( तुरेण ) उत्तरार्धे ( आग्ने याहि सुविदत्रेभिरर्वाङ् परैः पूर्वैर्ऋषिभिर्घर्मसद्भिः ).

(२) असं. १०।१६।१; असं. १८।२।४ शोचो ( शूशुचो ) उत्तरार्धे ( शृतं यदा करसि जातवेदोऽथेमेनं प्र हिणुतात्पितॄँरुप ), तैआ. ६।१।४ कृणवो ( करवो ).

**शृतं यदा करसि जातवेदोऽथेमेनं परि दत्तात्पितृभ्यः।**
**यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति॥**

हे जातवेदः यदा प्रेतशरीरं शृतं पक्वं करसि करिष्यसि अथ ईं तदानीमेव एनं प्रेतं पितृभ्यः परि दत्तात् प्रयच्छ। यदाऽयं प्रेतः एतां अग्निना कृतां असुनीतिं प्राणस्य नयनं प्राणप्रेरणं गच्छाति प्राप्नोति अथ तदानीमेव देवानां वशनीः देवानां वशं प्रापितो भवति। ऋसा.

**सूर्यं चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा।**
**अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः॥**

हे प्रेत त्वदीयं चक्षुः इन्द्रियं सूर्यं गच्छतु प्राप्नोतु। आत्मा प्राणः वातं बाह्यं वायुं गच्छतु। अपि च त्वमपि धर्मणा सुकृतेन तत्फलं भोक्तुं द्यां च। अत्र चशब्दो विकल्पार्थे। द्युलोकं वा पृथिवीं च पृथिवीं वा गच्छ प्राप्नुहि। अपो वा अन्तरिक्षलोकं गच्छ प्राप्नुहि। तत्रान्तरिक्षे हितं स्थापितं ते तव कर्मफलम्। ओषधीषु शरीरैः शरीरावयवैः प्रति तिष्ठ। ऋसा.

**अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः।**
**यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम्॥**

अजः जननरहितः शरीरेन्द्रियादिभागव्यतिरिक्तोऽन्तरपुरुषलक्षणो यः भागः अस्ति, हे अग्ने तं त्वदीयेन तपसा तापनेन तं तादृशं भागं तपस्व तप्तं कुरु। तथा ते तव शोचिः शोकहेतुः ज्वालाविशेषः तं भागं तपतु संस्करोतु। अपि च ते तव आर्चिः भासको ज्वालाविशेषः तं भागं तपतु संस्करोतु। तपःशोचिरर्चिःशब्दानां संतापतारतम्येन भेदः। हे जातवेदः ते तव याः तन्वः मूर्तयः शिवाः सुखहेतवो न तु तापप्रदाः, ताभिः एनं तनूभिः प्रेतं सुकृतां शोभनकर्मकारिणां लोकं स्थानं वह प्रापय। उशब्दः पूरणः। ऋसा.

**अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः।**
**आयुर्वसान उप वेतु शेषः सं गच्छतां तन्वा जातवेदः॥**

हे अग्ने यः प्रेतः पुमान् आहुतः चितौ मन्त्रेण समर्पितः सन् स्वधाभिः स्वधाकारसमर्पितैरुदकादिभिः सह चरति, तं प्रेतं पितृभ्यः पितृप्राप्त्यर्थं पुनः अव सृज भूयः प्रेरय। अयं प्रेतः आयुः जीवनं वसानः आच्छादयन्, आयुषा युक्त इत्यर्थः। शेषः शिष्यमाणमस्थिलक्षणं यजनीयं शरीरं उप वेतु उपगच्छतु। हे जातवेदः तव प्रसादात् तन्वा शरीरेण स गच्छतां सगतो भवतु। ऋसा.

चक्षुष्मान् शृण्वन् मृत्युर्देव

**परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात्।**
**चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान्॥**

हे मृत्यो सर्वेषां मारक एतन्नामक देव परं अन्यं पन्थां पन्थानं अनु आनुपूर्व्येण परेहि पराङ्मुखो गच्छ, यजमानादिति शेषः। कोऽसौ पन्थाः। ते तव स्वः स्वभूतः

(१) ऋस १०।१६।२; असं १८।२।५ शृतं यदा... ...थेमेन (यदा शृतं कृणवो जातवेदोऽथेममेनं) यदा (यदो) तामथा (तामथ), तैआ. ६।१।४ यदा कर (यदाऽकर).

(२) ऋसं १०।१६।३, असं. १८।२।७ पूर्वार्धे (सूर्यं चक्षुषा गच्छ वातमात्मना दिवं च गच्छ पृथिवीं च धर्मभि.), तैआ. ६।१।४ सूर्यं (सूर्यं ते).

(३) ऋसं. १०।१६।४; असं. १८।२।८ स्तपसा तं (स्तपसस्तं); तैआ. ६।१।४ उत्तरार्धे (यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेमं सुकृतां यत्र लोकाः).

(१) ऋस १०।१६।५, असं १८।२।१० स्वधाभिः (स्वधावान्) वेतु (यातु) जातवेदः (सुवर्चा.); तैआ. ६।४।२ वेतु शेषः (यातु शेषं) तन्वा (तनुवा).

(२) ऋसं. १०।१८।१; असं. १२।२।२१ यस्ते स्व (यस्त एष) मि मा . . वीरान् (मीहेमे वीरा बहवो भवन्तु); शुसं. ३५।७ यस्ते स्व (यस्ते अन्य); तैब्रा. ३।७।१४।५, शब्रा. १३।८।३।४ शुसंवत्; तैआ. ३।१५।२, ६।७।३; नाउ. ४६; नि. १०।७.

देवयानात्। देवा अनेन मार्गेण गच्छन्तीति देवयानो देवमार्गः। तस्मात् इतरः यः पन्थाः त प्र(परा)गच्छ। न केवलमतः परागच्छ, अपि तु चक्षुष्मते दर्शनवते शृण्वते सर्व, अप्रतिहतसर्वेन्द्रियविज्ञानायेत्यर्थः। ते तुभ्य ब्रवीमि कथयामि। नः अस्माक प्रजा दुहितृदौहित्रात्मिकां मा रिःषः मा हिंसीः। उत अपि च वीरान् पुत्रपौत्रादीन् मा हिंसीः, तत्परागमनेन रक्षेत्यर्थः। ऋसा.

वाजिन. स्वर्गमनम्

* इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिपा सं विशस्व।
संवेशने तन्वश्चारुरेधि प्रियो देवानां परमे जनित्रे ॥

एतदादिभिर्बृहदुक्थो वाजिन नाम स्वपुत्र मृत वदति। हे मृत पुत्र ते तव इदम्। उपरि ज्योतिषेति वक्ष्यमाणत्वात् अत्र इदशब्देन ज्योतिरभिधीयते। इद ज्योतिरग्न्याख्य एक एकोऽशः। अतस्तमग्निं तव देहगताग्न्यशेन बाह्यमग्नि स विशस्व सगच्छस्व। तथा पर उ अन्योऽपि ते तव एक वाय्वाख्योऽशः ते तव प्राणवाय्वाख्येनाशेन स विशस्व। शरीराग्निप्राणवाय्वोर्बाह्याग्निवाय्वोश्चैकत्वादशत्वमिति भावः। तथा तृतीयेन ज्योतिषा आदित्याख्येन तेजसा तवात्मना स विशस्व। सूर्यगतात्मचैतन्यदेहगतात्मचैतन्ययोरभेदादशत्वम्। 'तद्योऽहं सोऽसौ योऽसौ सोऽह' (ऐआ. २।२।४) 'सूर्य आत्मा जगतस्तस्थुषश्च' (ऋस. १।११५।१) इति श्रुतेरात्मनः सूर्यप्रवेशो युक्तः। तन्वः तन्वाः सवेशने तस्मिन्सूर्ये सविश्य चारुरेधि कल्याणो भव। कीदृशस्त्वम्। प्रियः तेन सह प्रीयमाणः। कीदृशे तस्मिन्। देवानां परमे उत्तमे जनित्रे जनके। 'देवानां ह्येतत्परमं जनित्र यत्सूर्यः' इति हि श्रुतिः। ऋसा.

तनूष्टे वाजिन्तन्वं नयन्ती वाममस्मभ्यं धातु शर्म तुभ्यम्।
अह्रुतो महो धरुणाय देवान्दिवीव ज्योतिः स्वमा मिमीया. ॥

हे वाजिन् एतन्नामक पुत्र ते तव तन्व शरीर नयन्ती स्वशरीर प्रापयन्ती तनूः इय पृथिवी। उभयोरपि पार्थिवत्वात्तव शरीरस्य पृथिवीप्राप्तौ सत्यां तस्याः तव शरीरनयन युक्तम्। तादृशी पृथिवी वाम वननीय धन अस्मभ्य धातु दधातु शर्म च सुख तुभ्य धातु दधातु। स त्व अह्रुतः अनवपातितः सन् महः महतः देवान् तव कारणभूतान् दिवीव ज्योतिः द्युलोके वर्तमानं सूर्यं च। इवशब्दश्चार्थे, निपातानामनेकार्थत्वात्। त च स्व तव स्वभूत आ मिमीयाः आविश। ऋसा.

वाज्यसि वाजिनेना सुवेनी सुवितः स्तोम सुवितो दिवं गाः।
सुवितो धर्म प्रथमानु सत्या सुवितो देवान्त्सुवितोऽनु पत्म ॥

हे पुत्र त्व वाजिनेन अन्नरसेन बलेन वा वाज्यसि तद्वान् भवसि। कीदृशस्त्वम्। सुवेनीः सुष्ठु कान्तस्त्व सुवितः सुष्ठु प्रेरितस्त्व स्तोम पूर्व त्वया कृतं स्तोत्र तदभिमानिदेव अनु गाः अन्वगाः अनुगच्छ। तथा सुवितो दिव गाः। तथा सुवितो धर्म त्वया संपादितानि धर्माण्यनुगच्छ। कीदृशानि। प्रथमा मुख्यानि सत्या सत्यफलानि। तथा सुवितो देवान् इन्द्रादीन्। तथा सुवितः पत्म पतज्ज्योतिः आदित्याख्यं अनु गाः।

ऋसा.

महिम्न एषां पितरश्चनेशिरे देवा देवेष्वदधुरपि क्रतुम्।
समविव्यचुरुत यान्यत्विषुरैषां तनूषु नि विविशुः पुनः ॥

* अस्य सूक्तस्य जीवगतिविषयत्वं न स्पष्ट प्रतीयते। व्याख्याकृता तु तथा व्याख्यानस्य कृतत्वादेवात्र सगृहीतम्।

(१) ऋसं. १०।५६।१; असं १८।३।७ तन्वश्चा (तन्वा चा) जनित्रे (सधस्थे); सासं. १।१।७ ऊ त (उ त) ने तन्वश्चा (नस्तन्वे चा), कासं. ३५।१७ (८४) ने तन्वश्चा (नस्तन्वे चा); तैब्रा. ३।७।१।३ ऊ त (उत) ने तन्वश्चा (नस्तनवै चा) प्रियो (प्रिये), तैआ. ६।३।१, ६।४।२ ने तन्वश्चा (नस्तनुवै चा) जनित्रे (सधस्थे).

(१) ऋसं. १०।५६।२; असं. ६।९२।३ धातु (धावतु) देवान् (देवो) मिमीयाः (मिमीयात्).

(२) ऋसं. १०।५६।३.

(३) ऋसं. १०।५६।४.

पितरश्च न अस्मत्पितरोऽप्यङ्गिरसः एषा देवानां महिम्नः महत्त्वस्य ईशिरे ईश्वरा अभवन् । ते देवाः अपि देवत्वं प्राप्ताः अङ्गिरसः देवेषु इन्द्रादिषु क्रतु सक्रतु अदधुः धृतवन्तः । उत अपि च यानि तेजांसि अत्विषुः दीप्यन्ते तानि समविव्यचुः सगता आसन् । एषा देवानां तनूषु शरीरेषु नि विविशुः निविशन्ति पितरोऽङ्गिरसः । अतस्त्वमपि तथा कुर्वित्यर्थः ।

ऋसा.

सहोभिर्विश्वं परि चक्रमू रजः पूर्वा धामान्यमिता मिमानाः ।
तनूषु विश्वा भुवना नि येमिरे प्रासारयन्त पुरुध प्रजा अनु ॥

मदीयाः पितरः सहोभिः बलैः स्वीयैः विश्व सर्व रजः लोकम् । 'लोका रजांस्युच्यन्ते' इति निरुक्तम् । पूर्वा पूर्वाणि धामानि स्थानानि अमिता अन्यैरमितानि मिमानाः परिच्छिन्दन्तः परि चक्रमुः पर्यक्रामन् । किंच तथा कुर्वन्तः विश्वा सर्वाणि भुवना भूतजातानि नि येमिरे नियमितवन्तः । किंच पुरुध पुरुधा बहुप्रकारं प्रजा अनु ज्योतींषि उदकानि वा प्रासारयन्त प्रसारितवन्तः । अस्मत्पितरः पूर्वेऽङ्गिरसः स्वसामर्थ्येन सर्व लोकं व्याप्य पुरातनानि ग्रहनक्षत्रादीनि परिच्छिद्य सर्वभूतानि नियम्य प्रजा अनु उदकानि तेजांसि वा प्रसारितवन्त इत्यर्थः । अतस्त्वमप्येव कुर्विति भावः ।

ऋसा.

[1]द्विधा सूनवोऽसुरं स्वर्विदमास्थापयन्त तृतीयेन कर्मणा ।
स्वां प्रजां पितरः पित्र्यं सह आवरेष्वदधुस्तन्तुमाततम् ॥

सूनवः आदित्यस्य पुत्रा देवा अङ्गिरसः । 'देवाना ह्येतत्परम जनित्रं यत्सूर्यः' इति प्रदर्शितत्वादादित्यस्य सूनव इति गम्यते । असुरं बलवन्तं स्वर्विद् सर्वज्ञ स्वर्गस्य लम्भकं वा आदित्य तृतीयेन कर्मणा प्रजोत्पत्त्याख्येन । 'ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' ( तैसं. ६।३।१०।५ ) इति श्रुतेः प्रजोत्पादनस्य तृतीयकर्मत्वम् । तेन आदित्य द्विधा आस्थापयन्त द्विप्रकारमास्थापयन्ति उदितं चास्तमित च कुर्वन्ति । 'उद्ग्राभ च निग्राभं च ब्रह्म देवा अवीवृधन्' ( तैब्रा. १।१।१३।१ ) इति मन्त्रस्य ब्राह्मणे 'असौ वा आदित्य उद्यन्नुदग्राभ एष निम्रोचन्निग्राभः' ( तैब्रा. ५।४।६।६ ) इति श्रुतत्वाद्देवानामादित्यस्य द्विःस्थापनमुदयास्तमयकरणमिति गम्यते । किंच पितरः मदीया अङ्गिरसः स्वां प्रजा, उत्पाद्यति शेषः । पित्र्य सहः पितुरादित्यस्य सबन्धिनमपराभिभवक्षमं बल अवरेषु आ दधुः निकृष्टेषु स्वप्रजाभूतेषु मनुष्येषु स्थापितवन्तः । यथा पित्र्यं धन सम्यक् परिरक्ष्य स्वपुत्रेभ्यः प्रयच्छन्ति तद्वत्पितुरादित्यस्य प्रकाशादिबलं मनुष्येषु न्यदधुरित्यर्थः । किंच तन्तुं प्रजा आतत वितत कृतवन्त इति शेषः । पुत्रपौत्रादिरूपेणानवच्छिन्नां प्रजामित्यर्थः । 'अथ ह्याततन्तुर्यत् प्रजाः' इति ब्राह्मण, 'प्रजातन्तुं मा व्यवच्छेत्सीः' ( तैउ. १।११।१ ) इति च । 'तन्तु तन्वन्' ( ऋसं. १०।५३।६ ) इत्यस्य ब्राह्मण 'प्रजा वै तन्तुः' ( ऐब्रा. १३।१४।५ ) इति ।

ऋसा.

[1]नावा न क्षोदः प्रदिशः पृथिव्याः स्वस्तिभिरति दुर्गाणि विश्वा ।
स्वां प्रजां बृहदुक्थो महित्वावरेष्वदधादा परेषु ॥

नावा न उदकोत्तरणसाधनेनेव क्षोदः उदक यथा मनुष्या नावा उदकमतितरन्ति, यथा वा स्वस्तिभिः क्षेमैः विश्वा सर्वाणि दुर्गाणि दुःखेन गन्तव्यान्यतितरन्ति तद्वत् बृहदुक्थः स्वां प्रजां वाजिन मृतं पुत्रं महित्वा स्वमहत्त्वेन अवरेषु अग्न्यादिषु आ अदधात् कृतवान् । तत् आ परेषु दिव्येषु सूर्यादिष्वादधात् । एवमृषिर्ब्रूते स्वयमेव वा स्वात्मान परोक्षेणाह । ऋसा.

म्रियमाणस्य मनः शरीरमुत्सृज्यान्यत्र गच्छति

[2]यत्ते यमं वैवस्वतं मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥

पुरुषस्य म्रियमाणस्य मनो नाम महद्भूत बहुधा विशीर्णं भवति । तस्य पुनःसंभरणमत्रोच्यते । हे

(१) ऋसं. १०।५६।५.
(२) ऋसं. १०।५६।६.

(१) ऋसं. १०।५६।७. (२) ऋसं. १०।५८।१-१२.

म्रियमाणं पुरुष यत् ते तव मनः वैवस्वत विवस्वतः पुत्रं यमं दूरक अत्यन्त दूरं यथा भवति तथा जगाम, ते तव तत् मनः आ वर्तयामसि आवर्तयामः । किमर्थम् । इह क्षयाय इह लोके निवासाय जीवसे चिरकालजीवनाय । ऋसा.

**यत्ते दिवं यत्पृथिवीं मनो० ।**
**तत्त आ० ॥**

हे सुबन्धो यत् मनः दिव जगाम यत् च पृथिवीं दूरकम् । दूरकमिति क्रियाविशेषणम् । तत् इह निवासाय जीवनाय चावर्तयामः । ऋसा

**यत्ते भूमिं चतुर्भृष्टिं मनो० ।**
**तत्त आ० ॥**

हे सुबन्धो यत् मनः भूमिं चतुर्भृष्टिं, चतुर्दिक्षु भ्रंशो यस्याः सा, ता जगाम तत् आवर्तयामः । ऋसा.

**यत्ते चतस्रः प्रदिशो मनो० ।**
**तत्त आ० ॥**

हे सुबन्धो यत्ते मनः प्रदिशः प्रकृष्टा महादिशः चतस्रः जगाम तत् आवर्तयामः । ऋसा.

**यत्ते समुद्रमर्णवं मनो० ।**
**तत्त आ० ॥**

हे सुबन्धो यत्ते मनः अर्णव अर्णास्युदकानि तद्वन्त समुद्र मेघ वा जगाम, तत् इति गतम् । ऋसा.

**यत्ते मरीचीः प्रवतो मनो० ।**
**तत्त आ० ॥**

हे सुबन्धो यत्ते मनः प्रवतः प्रगच्छन्तीः मरीचीः दीप्तीः जगाम, तत् इति गतम् । ऋसा.

**यत्ते अपो यदोषधीर्मनो० ।**
**तत्त आ० ॥**
**यत्ते सूर्यं यदुषसं मनो० ।**
**तत्त आ० ॥**
**यत्ते पर्वतान् बृहतो मनो० ।**
**तत्त आ० ॥**
**यत्ते विश्वमिदं जगन्मनो० ।**
**तत्त आ० ॥**

चतस्र ऋचो निगदसिद्धाः । ऋसा.

**यत्ते पराः परावतो मनो० ।**
**तत्त आ० ॥**

हे सुबन्धो यत्ते मनः पराः परावतः अत्यन्त दूरदेशान् जगाम, तत् इति गतम् । ऋसा.

**यत्ते भूतं च भव्यं च मनो जगाम दूरकम् ।**
**तत्त आ वर्तयामसीह क्षयाय जीवसे ॥**

हे सुबन्धो यत्ते मनः, भूत च भव्य च इत्यनेन भूतभव्यात्मकव्यतिरेकेण कस्यचिदभावाद्वर्तमानस्य पृथगेवाभिधानात् कृत्स्नं प्रपञ्च(जात)मुक्त भवति । तत्र सर्वत्र गत मनो जीवनाय निवासाय चावर्तयामः । ऋसा.

सोमस्यासुनीतेरितरेषा च देवानामनुग्रहात् पापनाशेन आयु. प्रवृद्धतरं नवीय· भवितुमर्हं, चक्षु·-प्राणासुतनूना पुन. प्राप्तिश्च भवितुमर्हा सति निर्ऋते· दूरतरगमनं

**प्र तार्यायुः प्रतरं नवीयः स्थातारेव क्रतुमता रथस्य ।**
**अध च्यवान उत्तवीत्यर्थं परातरं सु निर्ऋतिर्जिहीताम् ॥**

सुबन्धोः आयुः आयुष्य प्र तारि प्रवर्धताम् । प्रपूर्वस्तिरतिर्वर्धनार्थः । कथ प्रवर्धतामिति उच्यते—प्रतर प्रवृद्धतरं नवीयः नवतर यौवनोपेतमित्यर्थः । निर्ऋत्यनुग्रहादेवमायुर्वर्धताम् । तत्र दृष्टान्तः—क्रतुमता कर्मवता सारथिना रथस्य स्थातारेव रथे स्थितौविव वर्धेते तद्वत् । अध अथ च्यवानः जीवितात्प्रच्यवमानः अर्थं स्वाभिलषितमायुर्लक्षण उत्तवीति वर्धयति । सुबन्धुप्राणापहर्त्री निर्ऋतिः पापदेवता परातर अत्यन्तं दूरतरं जिहीता परित्यजतु गच्छतु । ऋसा.

**सामन्नु राये निधिमन्न्वन्नं करामहे सु पुरुध श्रवांसि ।**
**ता नो विश्वानि जरिता ममत्तु परातरं सु निर्ऋतिर्जिहीताम् ॥**

(१) ऋसं १०।५९।१.
(२) ऋसं. १०।५९।२.

सामन्नु साम्नि गीयमाने सति । नु चार्थे । राये जीवायूरूपधनार्थं निधिमत् निधानवत् अन्न हविश्च करामहे कुर्मः । अत्रापि नु इति चार्थे । निर्ऋत्यै स्तुतिं हविश्चोभय कुर्म इत्यर्थः । तदेवाह—सु सुष्ठु पुरुध पुरुधा बहुप्रकार श्रवांसि अन्नानि हवींषि करामहे । ता तानि हवींषि नः अस्माकं सबन्धीनि विश्वानि सर्वाणि जरिता जीर्णा स्तुता वा । 'जरा स्तुतिः' (नि. १०।८)। ममत्तु स्वदताम् । आस्वाद्य च निर्ऋतिः परातरं अत्यन्त दूरदेशं जिहीता गच्छतु । ऋसा.

**अभी ष्वर्यः पौंस्यैर्भवेम द्यौर्न भूमिं गिरयो नाज्रान् ।**
**ता नो विश्वानि जरिता चिकेत परातरं सु निर्ऋतिर्जिहीताम् ॥**

वय अर्यः अरीन् शत्रून् पौंस्यैः पुंस्त्वैः बलैः सु सुष्ठु अभि भवेम । द्यौर्न भूमिं सूर्यो यथा स्वरश्मिभिर्भूमिमभिभवति तद्वत् । गिरयो नाज्रान् । गिरिर्वज्रः । ते यथा अज्रान् अजनशीलान् मेघानभिभवन्ति तद्वत् । ता तानि यानि नः अस्माभिः कृतानि स्तोत्राणि तानि विश्वानि सर्वाणि जरिता स्तुता सती निर्ऋतिः चिकेत जानाति । शिष्टमुक्तम् । ऋसा

**मो षु णः सोम मृत्यवे परा दाः पश्येम नु सूर्यमुच्चरन्तम् ।**
**द्युभिर्हितो जरिमा सू नो अस्तु परातरं सु निर्ऋतिर्जिहीताम् ॥**

हे सोम नः अस्मान् सु सुष्ठु मृत्यवे मो परा दाः मैव परादान कुरु । मृत्युवशीनान् मा कार्षीः । किंतु नु इदानीं उच्चरन्त ऊर्ध्वं गच्छन्तं उदयन्तं सूर्यं पश्येम, चिरकाल जीवेमेत्यर्थः । जीवाभावे सूर्यदर्शनासंभवादित्यभिप्रायः । किंच द्युभिः । अहर्नामैतत् । अहोभिः दिवसैः हितः प्रेरितः जरिमा जराभावः नः अस्माक सु सुखकरः अस्तु । शिष्टमुक्तम् । ऋसा.

**असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः ।**
**रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ॥**

हे असुनीते मनुष्याणामसूनां नेत्रि देवि अस्मासु मनः पुनः धारय । किंच जीवातवे जीवितुं सु प्र तिर सुष्ठु वर्धय नः अस्माक आयुः । किंच ररन्धि स्थापय नः अस्मान् सूर्यस्य सदृशि चिरसदर्शने । त्व च घृतेन अस्माभिर्दत्तेन तन्व शरीर वर्धयस्व वर्धय । ऋसा.

**असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् ।**
**ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ॥**

हे असुनीते प्राणदायिनि देवि अस्मासु अस्मदीये सुबन्धा वित्यर्थः । पुनः चक्षुः प्रकाशक नयन, ईक्षणसामर्थ्यमित्यर्थः । किंच प्राण पुनः अस्मासु धेहि स्थापय । वय च ज्योक् चिरं उच्चरन्त उद्गच्छन्त सूर्यं पश्यम । हे अनुमते देवि स्वस्ति अविनाशं यथा स्यात्तथा नः अस्मान् मृळय सुखय । ऋसा.

**पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम् ।**
**पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्यां या स्वस्तिः ॥**

पृथिवी देवी नः अस्मभ्यं असुं प्राण ददातु । पुनः द्यौः देवता असुं ददातु । तथा अन्तरिक्ष अन्तरिक्षदेवता असु ददातु । तथा सोमः नः तन्व शरीर पुनः ददातु । तथा पूषा पोषाभिमानिनी देवता पथ्याम् । 'पन्था अन्तरिक्षम्' (नि. ११।४५)। तत्र भवां वाचम् । वागात्मकः शब्दो ह्याकाशादुत्पद्यते । तां पुनः ददातु । किंच या स्वस्तिः या लोके वेदे च स्वस्तिरुच्यते तामपि पूषा प्रयच्छतु । यद्वा, पूषा पोष प्रयच्छतु । या स्वस्तिर्वाङ्नाम्नी देवी अस्ति सा पथ्यां वाचं प्रयच्छतु । 'वाग्वै पथ्या स्वस्तिः' (शब्रा. ३।२।३।८) इति ब्राह्मणम् । ऋसा.

(१) ऋसं. १०।५९।३.
(२) ऋसं. १०।५९।४.
(३) ऋसं १०।५९।५; नि. १०।४०.
(१) ऋसं. १०।५९।६.
(२) ऋसं. १०।५९।७.

[1]शं रोदसी सुबन्धवे यह्वी ऋतस्य मातरा।
भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥

इदमादिभिस्तिसृभिः द्यावापृथिव्योः स्तुतिः। रोदसी द्यावापृथिव्यौ सुबन्धवे शं सुखं प्रयच्छताम्। कीदृश्यौ ते। यह्वी महत्यौ ऋतस्य यज्ञस्य उदकस्य वा मातरा निर्मात्र्यौ। यद्रपः पापं कृच्छ्रमस्ति तत् अप भरतां अपहरतां अपनयताम्। हे द्यौः हे पृथिवि हे द्यावापृथिव्यौ क्षमा क्षमायां सत्याम्। यद्वा, क्षमा पृथगप्युच्यते। क्षमाप्यपहरतु। एवमुक्त्वा सुबन्धु बन्ध्वादयो ब्रुवते। हे सुबन्धो ते त्वा मो षु मैव सुष्ठु किं चन रपः कृच्छ्रं आममत् हिनस्तु। ऋसा.

[2]अव द्वके अव त्रिका दिवश्चरन्ति भेषजा।
क्षमा चरिष्ण्वेककं भरतामप यद्रपो द्यौः
पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥

दिवः द्युलोकात् भेषजा भेषजानि द्वके द्विकं त्रिका त्रिकं च अव चरन्ति। अत्राश्विनौ द्विकमवचरतः। इळा सरस्वती भारती त्रिकमवचरति। क्षमा क्षमायां चरिष्णु चरति एककं एकं भेषजमित्यभिप्रायमाह। तानि सर्वाणि सुबन्धोः प्राणं परिरक्षन्त्विति शेषः।

ऋसा.

[3]समिन्द्रेरय गामनड्वाहं य आवहदुशीनराण्या अनः।
भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥

हे इन्द्र सं ईरय सम्प्रेरय। किम्। गां गन्तारं अनड्वाहं अनोवहनसमर्थम्। यः अनड्वान् आवहत् आवहति अस्मान्प्रति। किम्। अनः शकटम्। कस्य। उशीनराण्याः एतन्नामिकायाः ओषधेः। ययार्तमनुलिम्पन्ति सा उशीनराणी। भरतामित्यादि गतम्।

ऋसा.

पातकनाशद्वारा सुबन्धुमननम्. जीवनहेतोस्तच्छरीरं प्रति आगमनप्रार्थना

[4]अयं माताऽयं पिताऽयं जीवातुरागमत्।
इदं तव प्रसर्पणं सुबन्धवेहि निरिहि ॥

अत्र शेषे शाट्यायनकम्— 'अथाग्निं द्वैपदेन सूक्तेनास्तुवन्। अग्निः स्तुत आजगाम। आगत्य चाह किंकामा मागच्छतेति। सुबन्धोरेवासुं पुनर्वेनुयामेत्यब्रुवन्। एषान्तःपरिधीत्यब्रवीत्तमाददृत्रमिति। तन्निराह। अयं माताऽयं पिता' इति। शौनकश्च — 'स्तुतः स राजा सुप्रीतस्तस्थौ गौपायनानभि॥ सूक्तेन तेऽस्तुवन्नग्निं द्वैपदेन यथाविधि। अथाग्निरब्रवीदेतानयमन्तःपरिध्यसुः॥ सुबन्धोरस्य चेक्ष्वाकोर्मया गुप्तो हितार्थिना। सुबन्धवे प्रदायासुं जीवेत्युक्त्वा च पावकः॥ स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति। अयं मातेति हृष्टास्ते सुबन्धोरसुमाह्वयन्॥ शरीरमभिनिर्दिश्य सुबन्धोः पतितं भुवि। सूक्तशेषं जगुश्चास्य चेतसो धारणाय ते॥'
(बृद्दे. ७।९७।१०१) इति। अयं अग्निः माता। अयं एव पिता। अयं जीवातुः जीवयिता आगमत् आजगाम। अतो हे सुबन्धो जीवपरिधौ वर्तमान इदं तव शरीरं तव प्रसर्पणं प्रकर्षेण सर्पणसाधनम्। अतः इदं प्रति एहि आगच्छ। निरिहि निर्गच्छ परिधेः सकाशात्। अन्ये एवं व्याचक्षते — हे निर्गतप्राण सुबन्धो अयं, विभक्तिव्यत्ययः, इयं माता अयं पिता अयं जीवातुः जीवनफलभूतः पुत्रश्चागमदिति सम्बध्यते। सर्वे त्वामागता दुःखिताः सन्तः। शिष्टं समानम्।

ऋसा.

[1]यथा युगं वरत्रया नह्यन्ति धरुणाय कम्।
एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥

यथा युगं वरत्रया पाशेन नह्यन्ति बध्नन्ति धरुणाय रथादिधारणाय। कमिति पादपूरणः। एवं एव ते मनः दाधार परिधौ अग्निः। किमर्थम्। जीवातवे जीवनाय, न मृत्यवे मरणाय, न अथो अपि च अरिष्टतातये अविनाशाय। ऋसा.

[2]यथेयं पृथिवी मही दाधारेमान्वनस्पतीन्।
एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥

(१) ऋस. १०।५९।८.
(२) ऋसं. १०।५९।९. (३) ऋसं. १०।५९।१०.
(४) ऋसं. १०।६०।७, जैब्रा ४।१६९.

(१) ऋसं १०।६०।८.
(२) ऋसं. १०।६०।९.

यथेय पृथिवी मही इमान् वनस्पतीन् वृक्षादीन् दाधार.। शिष्टमुक्तम्। ऋसा.

[१]यमादहं वैवस्वतात्सुबन्धोर्मन आभरम्।
जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥

इय निगदसिद्धा। ऋसा.

[२]न्यग्वातोऽव वाति न्यक्तपति सूर्यः।
नीचीनमघ्न्यां दुहे न्यग्भवतु ते रपः ॥

वातः वायुः द्युलोकात् न्यक् नीचीन अव वाति गच्छति। सूर्यः च न्यक् तपति। अघ्न्या अहननीया गौः नीचीन दुहे दुग्धे। एव ते रपः पाप न्यक् नीचीन भवतु। ऋसा.

द्युलोकरूपदिव्यनौकारोहणम्

[३]सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ॥

द्युलोको नौरूपकतया स्तूयते। सुत्रामाण सुष्ठु त्रायन्तीं पृथिवी विस्तृता अनेहस पापरहिता सुशर्माण शोभनसुखयुक्ता अदितिं अदीना सुप्रणीति सुप्रणयना सुष्ठु प्रणेत्री दैवीं देवसंबन्धिनीं स्वरित्रां शोभनारित्रा जलाहरणशीलदारुयुक्तां अनागस पापरहिता अस्रवन्ती अगच्छन्ती अविनश्वरी नाव नावमिव स्थिता द्या स्वस्तये अविनाशाय देवत्वप्राप्तये आ रुहेम वयमारोहेम। ऋसा.

देवपित्रधिष्ठितौ द्वौ मार्गौ मर्त्यानाम्

[४]द्वे स्रुती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्।
ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥

पितॄणां देवानां च उत अपि मर्त्यानां मनुष्याणां च द्वे स्रुती द्वौ मार्गौ देवयानपितृयाणाख्यौ अह अशृणव अश्रौषम्। यत् विश्व पितर पालकत्वेन पितृभूतां द्या मातर च धारकत्वेन मातृभूता पृथिवीं च अन्तरा द्यावापृथिव्योर्मध्ये भवति, तत् इदं विश्व अग्निना संस्कृतं सत् एजत् देवलोक पितृलोक च गच्छत् ताभ्यां देवयानपितृयाणाख्याभ्यां मार्गाभ्यां समेति गच्छति। तौ च मार्गौ भगवता दर्शितौ— 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमस ज्योतिर्योगी प्राप्य निवर्तते ॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ॥' (भ. गी. ८।२४–२७) इति। ऋसा.

दक्षिणादिदातॄणामामुष्मिका लोका

[१]उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण।
हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः ॥

दक्षिणावन्तः दक्षिणायाः देयत्वेन तद्वन्तो दक्षिणा दत्तवन्तो यजमानाः उच्चा उच्चैः स्थानैः स्थिते दिवि द्युलोके अस्थुः तिष्ठन्ति। सामान्येनोक्त्वा दातृविशेषाणा फलविशेषमाह— अश्वदाः अश्वाना दातारः ये यजमानाः ते सूर्येण सर्वस्य स्वस्वकर्मणि प्रेरकेणादित्येन सह तिष्ठन्ति। ये हिरण्यदाः हिरण्यदातारः ते अमृतत्व अमरणधर्मत्व देवत्वं भजन्ते। 'अमृतं वै हिरण्यम्' (तैस. ५।२।७।२) इत्याम्नानात्। तथा 'सौम्य वै वासः' (तैब्रा. २।२।५।२) इति श्रवणात्सोम एव सबोध्यते। हे सोम वासोदाः त्वद्देवत्यवस्त्राणा दातारो ये सन्ति

(१) ऋस १०।६०।१०. (२) ऋस. १०।६०।११; असं. ६।९१।२ ग्वातोऽव (ग्वातो).

(३) ऋसं. १०।६३।१०, असं. ७।६।३ समस्र (सो अस्र); तैसं. १।५।११।५; कासं २।३ (११) मा रुहेमा (आरुहेम), मैस. ४।१०।१ (३३); शुसं. २१।६; ऐब्रा २।३।७.

(४) ऋसं १०।८८।१५; कासं. १७।१९ (११४) स्रुती (सृती) विश्वमेजत्स (विश्वं भुवनं स). ३८।२ (२५); मैसं २।३।८ (४४), ३।११।१० (१०२) ताभ्या (याभ्या), शुसं. १९।४७ स्रुती (सृती), तैब्रा. १।४।२।३ उत्तरार्धे (ताभ्यामिदं विश्वं भुवन समेति। अन्तरा पूर्वमपरं च केतुम्): २।६।३।५ मैसवत्, शब्रा. १२।८।१।२१ शुसंवत्; बृउ. ६।२।२ शुसंवत्.

(१) ऋसं. १०।१०७।२.

ते त्वया सह तिष्ठन्तीति शेषः। एते सर्वे आयुः जीवन प्र तिरन्ते प्रवर्धयन्ति।

ऋसा.

सोमघृतमधुयुक्ता आमुष्मिका लोका.

[1]सोम एकेभ्यः पवते घृतमेक उपासते।
येभ्यो मधु प्रधावति ताँश्चिदेवापि गच्छतात्॥

एकेभ्यः केभ्यश्चित् पितृभ्यः सोमः पवते उपभागाय कुल्यारूपेण प्रवहति। एषां गोत्रजाः सामानि ब्रह्मयज्ञसमयेऽधीयते। श्रूयते हि—'यत्सामानि सोम एभ्यः पवते' (तैआ. २।१०) इति। एके अन्ये पितरः घृत आज्य उपासते उपगच्छन्ति उपभुञ्जते इत्यर्थः। एषां पुत्रादयो यजूंषि ब्रह्मयज्ञकालेऽधीयते। श्रुतिश्च भवति—'यद्यजूंषि घृतस्य कुल्या' इति। येभ्यः पितृभ्यः। तादर्थ्ये चतुर्थी। उपभोगार्थं मधु क्षौद्रं प्रधावति प्रवाहरूपेण शीघ्रं गच्छति। य आथर्वणान् मन्त्रान् ब्रह्मयज्ञार्थमधीयते तेषां पितॄन् मधुकुल्या प्रवहति। तथा चाम्नायते—'यदाथर्वणाङ्गिरसो मधोः कुल्या' इति। तांश्चिदेव तान् पूर्वोक्तान् सर्वानेव हे प्रेत त्व अपि गच्छतात् अपिगच्छ प्राप्नुहि।

ऋसा.

तपस्विना रणेषु तनुत्यजा विविधदानपराणा ऋतपराणा पितॄणा ऋषीणा चामुष्मिका लोका.

[2]तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः।
तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात्॥

ये जनाः तपसा कृच्छ्रचान्द्रायणादिना युक्ताः सन्तः अनाधृष्याः पापैरप्रधृष्याः भवन्ति। ये च तपसा यागादिरूपेण साधनेन स्वर्ययुः स्वर्गं यान्ति प्राप्नुवन्ति। ये च महः महत् तपः अन्यैर्दुष्करं राजसूयाश्वमेधादिकं हिरण्यगर्भाद्युपासनं वा चक्रिरे कुर्वन्ति एतेषु प्रवर्तन्ते तेषु लोकेषु तांश्चित् तानेव तपस्विनो हे प्रेत अपिगच्छ।

ऋसा.

(१) ऋसं. १०।१५४।१; असं. १८।२।१४, तैआ. ६।३।२.

(२) ऋसं. १०।१५४।२, असं. १८।२।१६; तैआ. ६।३।२ स्वर्ययुः (सुवर्गताः) महस्तांश्चि (महत्तॉश्चि).

[1]ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः।
ये वा सहस्रदक्षिणास्ताँश्चिदेवापि गच्छतात्॥

प्रधनेषु, प्रकीर्णान्यस्मिन् धनानि भवन्तीति प्रधनाः सङ्ग्रामाः, तेषु शूरासः शौर्यवन्तः ये युध्यन्ते शत्रून् सम्प्रहरन्ति। ये च तनूत्यजः शरीराणां तत्र त्यक्तारो भवन्ति। ये वा ये च सहस्रदक्षिणाः सहस्रदक्षिणान् क्रतून् अनुष्ठितवन्तः। तान् सर्वान् एव त्वमपिगच्छ। येपूत्तमेषु लोकेषु ते निवसन्ति तं लोकं प्राप्नुहीत्यर्थः।

ऋसा.

[2]ये चित्पूर्व ऋतसाप ऋतावान ऋतावृधः।
पितॄन्तपस्वतो यम तांश्चिदेवापि गच्छतात्॥

ये चित् ये च पूर्वे पूर्वपुरुषाः ऋतसापः ऋतं सत्यं यज्ञं वा स्पृशन्तः अत एव ऋतावानः ऋतेन युक्ताः ऋतावृधः ऋतस्य वर्धकाश्च भवन्ति, तपस्वतः तपसा युक्तान् तान् एव पितॄन् हे यम नियत त्वमपिगच्छ।

ऋसा.

[3]सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम्।
ऋषीन् तपस्वतो यम तपोजाँ अपि गच्छतात्॥

सहस्रनीथाः सहस्रनयनाः कवयः क्रान्तदर्शिनः ये सूर्यं अमुमादित्यं गोपायन्ति रक्षन्ति, तपस्वतः तपसा

पुण्यकृता सुकृतिना अमृतस्थानस्वरूपम्

*यत्र लोकास्तनुत्यजाः श्रद्धया तपसा जिताः।
तेजश्च यत्र ब्रह्म च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव॥

यत्र देवा महात्मानः सेन्द्राश्च मरुद्गणाः।
ब्रह्मा च यत्र विष्णुश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव॥

यत्र तत्परमं पदं विष्णोर्लोके महीयते।
देवैः सुकृतकर्मभिस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव॥

(१) ऋसं. १०।१५४।३; असं. १८।२।१७; तैआ. ६।३।२ तनू (तनु).

(२) ऋसं. १०।१५४।४, असं १८।२।१५ (ये चित्पूर्व ऋतसाता ऋतजाता ऋतावृधः। ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात्॥).

(३) ऋसं. १०।१५४।५, असं. १८।२।१८.

युक्तान् तपोजान् तपसः सकाशादेवोत्पन्नान् तान् ऋषीन् हे यम नियत त्वमपिगच्छ। ऋसा.

अग्निना साधनेन देवत्व स्वर्ग' दवै सह वासश्च, पृथिव्यन्तरिक्षद्युलोकक्रमेण स्वर्ज्योति'प्राप्ति

अजो[1] ह्यग्नेरजनिष्ट शोकात् सो अपश्यज्जनितारमग्रे।
तेन देवा देवतामग्र आयन्तेन रोहान् रुरुहुर्मेध्यासः।

अजः छागः अग्नेः शोकात् तापात् अजनिष्ट उदपद्यत। हिशब्दः श्रुत्यन्तरप्रसिद्धि द्योतयति। तथा च तैत्तिरीयके अजस्याग्निसकाशात् उत्पत्तिराम्नाता—'स आत्मनो वपामुदखिदत्। तामग्नौ प्रागृह्णात्। ततोऽजस्तूपरः समभवत्' (तैस. २।१।१।४) इति। सः जातोऽजः अग्रे सर्वप्रजापनिपशुसृष्टेः प्राक् जनितारं जनयितार प्रजापतिं अग्निं वा अपश्यत् दृष्टवान्। जनयितृगौरवेण आत्मनो गौरव अज्ञासीदित्यर्थः। तेन प्रथमसृष्टेन अजेन देवाः इन्द्रादयः देवतां देवत्व देवभाव अग्रे सृष्ट्यादौ आयन् तत्साध्ययागद्वारा प्राप्नुवन्। तथा मेध्यासः मेधार्हाः यज्ञार्हा अन्येऽपि ऋषिजनाः रोहान्। रोह्यन्ते प्राप्यन्ते इति रोहाः स्वर्गादिलोकाः। तान् तेन अजेन साधनेन यागद्वारा रुरुहुः आरूढवन्तः। तस्मात् ईदृक्साधनकः अजौदनसवो देवत्वादिसर्वफलप्रातिसाधक इत्यर्थः। असा.

क्रमध्वमग्निना[1] नाकमुख्यान् हस्तेषु बिभ्रतः।
दिवस्पृष्ठं स्वर्गत्वा मिश्रा देवेभिराध्वम्॥

हे जनाः अग्निना सवयज्ञार्थमुत्पादितेन तत्साध्यान् सवयज्ञान् अनुष्ठाय, तत्फलभूत नाक दुःखसभेदरहित उत्तमं लोक क्रमध्व आरोहत। कथभूताः सन्तः। अक्षान् अक्षवत्प्रकाशकान् अनुष्ठितान् यज्ञान् हस्तेषु बिभ्रतः धारयन्तः। यागादिजनितसुकृतविशेषान् अवलम्ब्य तत्फलभूत लोक प्राप्नुतेत्यर्थः। तदनन्तरं दिवः अन्तरिक्षस्य पृष्ठ पृष्ठवशवदुन्नतप्रदेश स्वः स्वर्गाख्य लोक गत्वा प्राप्य देवेभिः देवैः आजानशुद्धैः मिश्राः मिश्रिताः समानैश्वर्येण एकीभूताः आध्व उपविशत। असा.

पृष्ठात्[2] पृथिव्या अहमन्तरिक्षमारुहमन्तरिक्षात् दिवमारुहम्।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम्॥

पृथिव्याः पृष्ठात् भूलोकात् अह अन्तरिक्ष आरुह अन्तरिक्षलोक आरोहामि। तस्मादन्तरिक्षलोकात् दिव

---

यत्र तद्विष्णुर्महीयते नराणां च नराधिपम्।
यत्र शङ्खचक्रगदाधरः स्मरणं मुक्तिश्च तत्र मामसृत कृधीन्द्रायेन्दो परि स्रव॥
यत्र तत्परमाव्यं भूतानामधिपतिः।
भावभावी च यो गीश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव॥

यत्र गङ्गा च यमुना यत्र प्राची सरस्वती।
यत्र सोमेश्वरो देवस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव॥
ऋसं (खिल) ३।१२

सितासिते सरिते यत्र संगथे तत्राप्लुतासो दिवमुत्पतन्ति।
ये वै तन्वं वि सृजान्ति धीरास्ते जनासो अमृतत्वं भजन्ते॥
ऋसं. (खिल) ३।१४

हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्।
शचीर्मदन्त उत दक्षिणाभिर्नैज्जिह्मायन्त्यो नरकं पताम॥
ऋसं. (खिल) ३।२२

---

(१) असं ४।१४।१; तैसं ४।२।१०।४ (अजा ह्यग्नेरजनिष्ट गर्भात्सा वा अपश्यज्जनितारमग्रे। तया रोहमायन्नुप मेध्यासस्तया देवा देवतामग्र आयन्॥); कासं १६।१७ (२२२) यन्तेन.. र्मेध्यासः (यंस्तेन रोहमायन्नुप मेध्यासः); मैसं. २।७।१७ कासंवत्, शुसं. १३।५१ कासंवत्; शब्रा. ७।५।२।३६ कासंवत्.

(१) अस ४।१४।२, तैसं ४।६।५।१, ५।४।७।१ मुख्यान् (मुख्य<) दिवस्पृष्ठं (दिव. पृष्ठं), कासं १८।४ (३३) तैसवत्, मैसं २।१०।६ (५६) तैसंवत्; शुसं. १७।६५ मुख्यान् (सुख्यं), शब्रा ९।२।३।२४ शुसवत्.

(२) असं ४।१४।३, तैस ४।६।५।१, ५।४।७।१ पृष्ठा ....मन्त (पृथिव्या अहमुदन्त) स्वर्ज्योति (सुवर्ज्योति), कासं. १८।४ (३५) पूर्वार्धं तैसंवत्, मैसं २।१०।६ (५९) कासंवत्, शुसं. १७।६६ कासंवत्, शब्रा. ९।२।३।२६ कासंवत्.

द्युशब्दवाच्यं तृतीय लोक आरुह्य आरोहामि । नाकस्य, नास्मिन् अकं दुःखं अस्तीति नाकः, तादृशस्य दिवः द्युलोकस्य पृष्ठात् उपरिदेशात् स्वः । आदित्यनामैतत् । आदित्यमण्डलस्थ हिरण्मयपुरुषाख्य ज्योतिः अह अगा प्राप्नोमि । इत्थं सोपानक्रमेण पृथिव्यादिलोकेषु नानाविधान् भोगान् भुक्त्वा अन्ते सूर्यसायुज्य प्राप्नोतीत्यर्थः । असा.

(१)स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी ।
यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥

स्वः स्वर्ग यज्ञफलभूत यन्तः गच्छन्तः नापेक्षन्ते पुत्रपश्वादिजनित ऐहिकसुख अल्प नेच्छन्ति । किंतु द्या अन्तरिक्ष रोदसी द्यावापृथिव्यौ चेति लोकत्रयं प्रागुक्तरीत्या आ रोहन्ति । के पुनस्ते । ये यजमानाः विश्वतोधारं विश्वतः सर्वतो धारकम् । यद्वा, विश्वतः सर्वतो धारकाः अविच्छिन्नफलप्राप्त्युपायाः यस्मिंस्तादृश यज्ञ सुविद्वांसः सुष्ठु जानन्तः वितेनिरे वितन्वन्ति विस्तारयन्ति । ते स्वर्यन्तः इति सबन्धः । असा.

(२)अग्ने प्रेहि प्रथमो देवतानां चक्षुर्देवानामुत मानुषाणाम् ।
इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति ॥

हे प्रणीयमान अग्ने त्वं प्रेहि प्रगच्छ आहवनीयदेश प्राप्नुहि । कीदृशस्त्वम् । देवताना यष्टव्याना प्रथमः मुख्यः । अत एव दर्शपूर्णमासयोस्तावदग्निः प्रथमं इज्यते । चातुर्मास्येषु च पञ्चसंचरेषु आग्नेयः प्रथमो यागः । सोमयागे च दीक्षणीयाया आग्नावैष्णवयागे अग्निः प्रथमभावी । अत एव मन्त्रवर्णः— 'अग्निरग्रे प्रथमो देवतानाम्' (तैब्रा. २।४।३।३) इति । तथा देवाना इन्द्रादीनां हविर्वहनेन अय अग्निः चक्षुः चक्षुरिन्द्रियवत् प्रियः । उत अपि च मानुषाणा मनोरपत्यभूतानां मनुष्याणा चक्षुः आहवनीयादिरूपेण पुण्यलोकस्य दर्शयिता । यस्मादेव अग्निर्देवानां मानुषाणां च चक्षुः तस्मात् तदीयप्रकाशेन इयक्षमाणाः प्रथमं यष्टुं इच्छन्तः पश्चात् यजमानाः यागं कुर्वाणाश्च जनाः भृगुभिः एतत्सञ्ज्ञैर्महर्षिभिः सजोषाः समानप्रीतयः सन्तः स्वः स्वर्ग कर्मफलभूत स्वस्ति क्षेमेण यन्तु प्राप्नुवन्तु । यद्वा, समान जोषमाणाः प्रीयमाणाः । असा.

पक्षिरूपकेण सवयज्ञेन लभ्यः स्वर्ग. अशरीरशुचिगम्यः देवयमगन्धर्वाध्यासित. बहुक्षीरथकमलह्रद-पुष्करिणीकामधुग्धेनुमधुक्षीरदधिसुरादिसंपन्न.

(१)ब्रह्मास्य शीर्षं बृहदस्य पृष्ठं वामदेव्यमुदरमोदनस्य ।
छन्दांसि पक्षौ मुखमस्य सत्यं विष्टारी जातस्तपसोऽधि यज्ञः ॥

अस्यौदनस्य दीयमानस्य शिरःप्रभृत्यवयवकल्पनया स्तुतिः क्रियते । ब्राह्मणजात्या सह प्रजापतिमुखादुत्पन्नत्वात् ब्रह्मशब्देनात्र रथन्तर साम विवक्षितम् । अत एव तस्य ब्रह्मवर्चसरूपता समाम्नाता—'रथन्तरं साम भवति । ब्रह्मवर्चस वै रथन्तरम्' (तैब्रा. २।७।१।१) इति । तत् ब्रह्मशब्दवाच्यं रथन्तर साम अस्य ओदनस्य शीर्ष शिरः । तथा बृहत् साम अस्यौदनस्य पृष्ठ पृष्ठभागः उपरिभागः । तथा वामदेव्यं वामदेवेन दृष्टं साम उदरम् । छन्दांसि गायत्र्यादीनि पक्षौ । तथा सत्य सत्याख्य साम पर ब्रह्म वा अस्यौदनस्य मुखम् । एव विष्टारी विस्तीर्यमाणावयवः अय सवयज्ञः तपसः तप्यमानाद्ब्रह्मणः अधि उपरि जातः उत्पन्नः । यज्ञदानादिलक्षणात् अन्यस्मात् तपसो वा आधिक्येनोत्पन्न इत्यर्थः । असा.

अनस्थाः पूताः पवनेन शुद्धाः शुचयः शुचिमपि यन्ति लोकम् ।
नैषां शिश्नं प्र दहति जातवेदाः स्वर्गे लोके बहु स्त्रैणमेषाम् ॥

---

(१) असं. ४।१४।४; तैसं ४।६।५।२, ५।४।७।१ स्वर्यन्तो (सुवर्यन्तो), कासं १८।४ (३६); मैसं. २।१०।६ (६०); शुसं. १७।६८ असंवत्; शब्रा. ९।२।३।२७; नि. १३।८.

(२) असं ४।१४।५; तैसं. ४।६।५।२, ५।४।७।१ देवताना (देवयता) मानुषाणाम् (मर्त्यानाम्) स्वर्यन्तु (सुवर्यन्तु); कासं. १८।४ (३७) पूर्वार्धे (अग्ने प्रेहि प्रथमो देवायता चक्षुर्देवानामुत मर्त्यानाम्), मैसं. २।१०।६ (५८) पूर्वार्धं तैसंवत्, सजोषाः (सह); शुसं. १७।६९ पूर्वार्ध तैसंवत्; शब्रा. ९।२।३।२८ शुसंवत्.

(१) असं. ४।३४।१–८.

अनस्थाः, न विद्यते अस्थ्युपलक्षितं षाट्कौशिक शरीर एषां इति अनस्थाः । अमृतमयशरीरा इत्यर्थः । अत एव पवनेन पवनसाधनेन पूताः । यद्वा, पवनेन अन्तरिक्षसचारिणा वायुना पवित्रीकृताः । शुद्धाः निर्मलाः । शुचयः दीप्यमानाः । एवभूताः सवयज्ञस्य कर्तारः शुचिं दीप्यमान ज्योतिर्मयं लोक अपि यन्ति अपिगच्छन्ति देहावसाने प्राप्नुवन्ति । अपि च एषां स्वर्गे लोके अवस्थितानां शिश्न भोगसाधन इन्द्रियं जातवेदाः जाताना वेदिता अग्निः न प्र दहति न निर्वीर्यं करोति । प्रदाहप्रसक्तिमाह—बहु स्त्रैणमिति । तत्र हि सुकृतफलोपभोगस्थाने एषा सुकृतिनां बहु बहुल स्त्रैण स्त्रीणां समूहो भोगार्थ विद्यते । एव स्त्रीसमूह भुञ्जानानामपि न निर्वीर्यत्वशङ्केत्यर्थः । अस.

**विष्टारिणमोदनं ये पचन्ति नैनानवर्तिः सचते कदा चन ।**
**आस्ते यम उप याति देवान्त्सं गन्धर्वैर्मदते सोम्येभिः ॥**

विष्टारिण उदीरितरीत्या विस्तीर्यमाणावयवं ओदनं ये यजमानाः पचन्ति, पक्त्वा ब्राह्मणेभ्यः प्रयच्छन्तीत्यर्थः । एनान् यजमानान् । वर्तिः वृत्तिः । वृत्तिर्जीवनम् । तदभावः अवर्तिः दारिद्र्यम् । कदा चन कदाचिदपि न सचते न समवैति । बहुवदुक्त एकवदाह—यः पचति स च सवयज्ञानुष्ठाता देहविश्लेषानन्तरं यमे पितॄणामधिपतौ पूजितः सन् आस्ते सुखेन वसति । तेन अनुज्ञातः सन् देवान् उप याति उपगच्छति । तथा सोम्येभिः सोम्यैः सोमार्हैः गन्धर्वैः विश्वावसुप्रभृतिभिः सोमपालैः सह मदते अमृतमयसोमपानेन माद्यति । अस.

**विष्टारिणमोदनं ये पचन्ति नैनान् यमः परि मुष्णाति रेतः ।**
**रथी ह भूत्वा रथयान ईयते पक्षी ह भूत्वाऽति दिवः समेति ॥**

नैनानित्यन्तं पूर्ववत् । यमः नियन्ता जीवनापहारी एनान् सवयज्ञानुष्ठातॄन् रेतः न परि मुष्णाति नापहरति रेतोहीनान् न करोतीत्यर्थः । स च सवयज्ञानुष्ठाता रथयाने रथेन यातव्ये भूलोके यावज्जीवं रथी ह भूत्वा रथाधिरूढ एव ईयते सचरति । अन्तरिक्षमार्गे च पक्षी पक्षवान् भूत्वा दिवः अन्तरिक्षप्रभृतीन् उपरितनान् लोकान् अतिक्रम्य समेति तत्तद्भोगस्थानेषु भोगैः सगच्छते । अस.

**एष यज्ञानां विततो बहिष्ठो विष्टारिणं पक्त्वा दिवमा विवेश ।**
**आण्डीकं कुमुदं सं तनोति बिसं शालूकं शफको मुलाली ।**
**एतास्त्वा धारा उप यन्तु सर्वाः स्वर्गे लोके मधुमत् पिन्वमाना उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः ॥**
**घृतह्रदा मधुकूलाः सुरोदकाः क्षीरेण पूर्णा उदकेन दध्ना ।**
**एतास्त्वा धारा उप यन्तु सर्वाः स्वर्गे लोके मधुमत् पिन्वमाना उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः ॥**

एष विततः विस्तृतः सवयज्ञः यज्ञाना मध्ये बहिष्ठः वोढृतमः विष्टारिण शिरःपृष्ठाद्यवयवकल्पनया उदीरितविस्तारोपेतं ओदनं पक्त्वा यजमानस्तत्फलभूत दिव स्वर्गं आ विवेश प्राप्नोति । आण्डीकं अण्डाकृतेः कन्दादुत्पन्नं कुमुद कैरवं दिव्येषु ह्रदेषु स तनोति संयोजयति । तथा बिसं पद्मकन्दम् । शालूक उत्पलकन्दम् । शफकः शफाकृतिः जलोत्पन्नः । मुलालीति मृणाली विवक्षिता । एतानि सर्वाणि परितो ह्रदेषु स्थापनीयानि । एवमिदानीं अनुष्ठितत्वात् एतत्फलभोगस्थाने स्वर्गे कुमुदोत्पलकमलोपेतानि मधुरोदकानि नित्यपूर्णानि क्रीडासरासि एनं परितः सेवन्ते इत्यर्थः । एतदेवोत्तरत्र विशदीक्रियते— उप त्वा तिष्ठन्तु पुष्करणीः समन्ता इति । दधिमधुघृतादिलक्षणस्य दिव्यासु कुल्यासु पूर्यमाणस्य रसस्य एताः सर्वा धाराः प्रवाहाः फलभूते स्वर्गे लोके मधुमत् मधुयुक्त माधुर्यवद्वा पिन्वमानाः सिञ्चन्त्यः त्वा त्वां उप यन्तु उपगच्छन्तु । तथा समन्ताः पर्यन्तवर्तिन्यः पुष्करिणीः पुष्करिण्यः सरस्यः हे सवयज्ञानुष्ठातः त्वा त्वां उप तिष्ठन्तु उपस्थिताः संगता भवन्तु । कीदृश्यस्ताः । घृतह्रदाः घृतपूर्णह्रदयुक्ताः । मधुकूलाः मधुना माक्षिकेण युक्तानि कूलानि यासां ताः । सुरोदकाः सुरा मद्यमेव उदकं यासां ताः । तथा क्षीरेण उदकेन दध्ना च

पूर्णाः । एतेषु घृतादिद्रव्येषु यद्यत्कामयसे तेन तेन पूर्णाः बहुविधाः पुष्करिण्यः त्वा सेवन्तामित्यर्थः ।

असा.

**चतुरः कुम्भांश्चतुर्धा ददामि क्षीरेण पूर्णाँ उदकेन दध्ना ।**
**एतास्त्वा धारा उप यन्तु सर्वाः स्वर्गे लोके मधुमत् पिन्वमाना उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः ॥**

क्षीरादिद्रव्येण पूर्णान् चतुरः कुम्भान् चतुर्धा प्रागादिदिग्भेदेन चतुष्प्रकार दधामि दिक्षु निदधामि । एताः क्षीरादिधाराः त्वा उप यन्तु इत्यादि योज्यम् ।

असा.

**इममोदनं नि दधे ब्राह्मणेषु विष्टारिणं लोकजितं स्वर्गम् ।**
**स मे मा क्षेष्ट स्वधया पिन्वमानो विश्वरूपा धेनुः कामदुघा मे अस्तु ॥**

इम पक्व ओदनं ब्राह्मणेषु अग्न्यजन्मसु भोक्तृषु निदधे निक्षिपामि । कीदृशम् । विष्टारिण प्रागुक्तविस्तारोपेतम् । लोकजितं, लोक्यते इति लोकः कर्मफल, तज्जयसाधनम् । अत एव स्वर्ग्यं स्वर्गशब्दाभिधेयदुःखासभिन्नानिरतिशयसुखस्य साधनम् । स ओदनः तस्मिन् स्वर्गे लोके स्वधया क्षीरादिरसेन पिन्वमानः वर्धमानः । मा क्षेष्ट क्षय मा प्राप्नोतु । अपि च ओदनः विश्वरूपा नानाविधफलप्रदरूपा धेनुः सती मे मम कामदुघा अभिलषितफलस्य दोग्ध्री अस्तु भवतु । असा.

बहवो देवयानाः

**[1]ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति ।**
**तेषामज्यानि यतमो वहाति तस्मै मा देवाः परि धत्तेह सर्वे ॥**

देवयानाः देवा एव यैः पथिभिर्गच्छन्ति ते तथोक्ताः । ईदृशाः ये पन्थानः मार्गाः बहवः कर्मणा वैचित्र्यात् तत्तल्लोकप्राप्त्युपायतया नानाविधाः सन्तः द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये संचरन्ति वर्तन्ते । सचरणसाधनत्वात् तद्व्यपदेशः । तेषा मध्ये यतमः यज्जातीयः पन्थाः अज्यानिं, ज्यानिर्हानिः, तद्विपरीता समृद्धिं वहाति वहेत् प्रापयेत् । तस्मै मार्गाय हे देवाः सर्वे यूय इह अस्मिन् देशे मा मा परि दत्त । रक्षणार्थं दानं परिदानम् । रक्षणाय प्रयच्छतेत्यर्थः । असा.

बहवो देवयानाः पितृयाणाश्च लोका अनृणगम्या

**अनृणा अस्मिन्ननृणाः परस्मिन् तृतीये लोके अनृणाः स्याम ।**
**ये देवयानाः पितृयाणाश्च लोकाः सर्वान् पथो अनृणा आ क्षियेम ॥**

हे अग्ने त्वत्प्रसादात् अस्मिन् भूलोके अनृणाः । ऋण अत्र लौकिक वैदिक च परिगृह्यते । लौकिकं तावत् उत्तमर्णाद्गृहीतं हिरण्यधान्यादिक प्रसिद्धम् । वैदिकं तु 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' ( तैस. ६।३।१०।५ ) इति । तेन सर्वेण ऋणेन रहिताः स्याम भवेम । परस्मिन् लोके स्वर्गादौ एतद्देहपरित्यागेन दिव्यशरीरपरिग्रहेण सुकृतफलभोगस्थानेऽपि अनृणाः स्याम । ऋणादाननिमित्तो भोगप्रतिबन्धस्तत्रापि मा भूदित्यर्थः । तृतीये लोके स्वर्गादपि उत्कृष्टे नाकपृष्ठादौ वय अनृणा भवेम । अन्येऽपि ये लोकाः देवयानाः देवा एव येषु यान्ति गच्छन्ति ते तथोक्ताः । ये च लोकाः पितृयाणाः पितॄणा असाधारणभोगभूमयः । तान् सर्वान् लोकान् तत्प्राप्त्युपायभूतान् पथः मार्गांश्च । यद्वा, लोक्यन्ते इति लोकाः पन्थानः । देवानेव यैर्यान्ति ते देवयानाः, पितॄनेव यैर्यान्ति ते पितृयाणाः । ये एव उभये विभिन्ना मार्गाः तान् सर्वान् अनृणाः ऋणप्रतिबन्धरहिताः सन्तः आ क्षियेम अभिगच्छेम ।

असा.

---

(१) असं ६।५५।१, तैसं. ५।७।२।३ ( ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषा यो अज्यानिमजीतिमावहात्तस्मै नो देवाः परि दत्तेह सर्वे ॥ ); कासं. १३।१५ (६८) (इमे चत्वारो रजसो विमाना अन्तरा द्यावापृथिवी वियन्ति पन्थान. । तेषामज्यानि यतमो न आवहात्तस्मै नो देवा. परिदत्त सर्वे ॥ ).

(१) असं ६।११७।३, तैब्रा. ३।७।९।८ उत्तरार्धे ( ये देवयाना उत पितृयाणाः । सर्वान्पथो अनृणा आक्षीयेम ), तैआ. २।१५।१ तैब्रावत्.

वैश्वानरः अनृणं मनुष्यं सुकृतलोकस्य प्रापयिता

[1]यद्दीव्यन्नृणमहं कृणोम्यदास्यन्नग्न उत संगृणामि ।
वैश्वानरो नो अधिपा वसिष्ठ उदिन्नयाति सुकृतस्य लोकम् ॥

अदीव्यन् व्यवहर्तुमशक्नुवन् यदृण अहं कृणोमि करोमि हे अग्ने अदास्यन् पुनः प्रदानमकरिष्यन् । उत शब्दः अप्यर्थे । सगृणामि दास्यामीति केवल प्रतिजानामि । वैश्वानरः विश्वनरहितः सर्वेषा प्राणिना हितकारी अत एव अधिपाः अधिक पालयिता वसिष्ठः वासयितृतमः एवभूतोऽग्निः सुकृतस्य पुण्यकर्मणः फलभूत लोक नः अस्मान् उन्नयाति उन्नयतु ऊर्ध्व प्रापयतु स्वयमेव नयत्वित्यर्थः । असा.

[2]वैश्वानराय प्रति वेदयामि यदृणं संगरो देवतासु ।
स एतान् पाशान् विचृतं वेद सर्वानथ पक्केन सह सं भवेम ॥

वैश्वानराय विश्वनरहिताय अग्नये प्रति वेदयामि विज्ञापयामि । किं तदित्याह–यदृणमिति । यदिशब्दो यच्छब्दार्थः । यदृण लौकिकम् । देवतासु देवताविषये यः सगरः अवश्यकर्तव्यतया प्रतिज्ञा 'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' ( तैसं. ६।३।१०।५ ) इति । तद्धि वैदिकमृणम् । तत् सर्व वैश्वानराय निवेदयामीत्यर्थः । स तादृशो वैश्वानरोऽग्निः एतान् लौकिकवैदिकऋणात्मकान् सर्वान् पाशान् पाशवद्बन्धकान् विचृतं विचर्तितुं विश्लेषयितु वेद जानाति । अथ ऋणरूपपाशच्छेदनानन्तरं पक्केन परिपक्केन स्वर्गादिफलेन सह वय स भवेम सगच्छेमहि । असा.

[3]वैश्वानरः पविता मा पुनातु यत् संगरमभिधावाम्याशाम् ।
अनाजानन् मनसा याचमानो यत् तत्रैनो अप तत् सुवामि ॥

पविता शोधयिता सर्वभावानां शुद्धेः कर्ता वैश्वानरोऽग्निः मा मां पुनातु पूत शुद्ध करोतु । यत् यस्माद्धेतोः सगरं प्रतिज्ञा यक्ष्ये दास्यामीत्येवरूपा ऋणापाकरणविषयां केवल अभिधावानि आभिमुख्येन प्राप्नवानि, तथा आशां देवादीनां अभिलापमेव उत्पादयामि न किंचित् यागादिरूप ऋणापाकरण करोमि अनाजानन् हिताहितविभागमजानन् प्रत्युत मनसा अन्तःकरणेन ऐहिकमेव सुखं याचमानः प्रार्थयमानः । अज्ञानात् विपर्ययज्ञानाच्च हेतोरित्यर्थः । तत्र तथाविधे अनृतकरणे यत् एनः पापं उत्पन्नमस्ति तत् अप सुवामि अस्मत्तोऽपगमयामि । असा.

हिंसादिजनितपापनाशकोऽग्निः पृथिव्यन्तरिक्षद्यावश्च याजकं सुकृतलोकस्य पितृपुत्रसंपन्नस्य प्रापयितारः

[1]यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम ।
अयं तस्माद्गार्हपत्यो नो अग्निरुदिन्नयाति सुकृतस्य लोकम् ॥

अन्तरिक्षादिशब्दैर्लोकवचनैस्तत्रत्या जना लक्ष्यन्ते । अन्तरिक्ष अन्तरिक्षलोकस्थान् जनान्, पृथिवी भूलोकं तत्रत्यान् जनान् । उतशब्दः अप्यर्थः समुच्चये । द्यां दिवं द्युलोकस्थांश्च जनान् यज्जिहिंसिम, तत्तद्विषयहिंसया यत् पापं कृतमित्यर्थः । तथा मातर जनयित्रीं पितर जनकम् । वाशब्दः समुच्चये । यज्जिहिंसिम, तयोः प्रतिकूलाचरणलक्षणाद्धिंसनात् यत् पापमुपार्जितमित्यर्थः । तस्मादुभयविधात्पापादयं गार्हपत्यः गृहपतिना सयुक्तः अस्माभिः परिचर्यमाणोऽग्निः नः अस्मान् सुकृतस्य लोकं इत् सुकृतपरिपाकस्य लोक स्वर्गमेव उन्नयाति उन्नयतु उद्गमयतु, पापादुत्तारयत्वित्यर्थः । असा.

[2]भूमिर्मातादितिर्नो जनित्रं भ्राताऽन्तरिक्षमभिशस्त्या नः ।

---

(१) असं. ६।११९।१.

(२) असं ६।११९।२; तैआ. २।६।१, २।७।१ वेदयामि यदृण ( वेदयानो यदीनृण ) उत्तरार्धे ( स एतान्पाशान्प्रमुचन्प्रवेद स नो मुञ्चातु दुरितादवद्यात् ).

(३) असं. ६।११९।३; तैआ. २।६।१ पविता मा पुनातु ( पवयान्. पवित्रैः ) यत्तत्रैनो अप ( यदत्रैनो अव ).

(१) असं. ६।१२०।१.

(२) असं. ६।१२०।२; तैआ. २।६।२ शस्त्या नः ( शस्त एनः ) उत्तरार्धे ( द्यौर्नः पिता पितृयाच्छं भवासि जामि मित्वा मा विविसि लोकात् ).

**द्यौर्नः पिता पित्र्याच्छं भवाति जामिमृत्वा माऽव पत्सि लोकात् ॥**

नः अस्माकं भूमिः पृथिवीदेवता माता जननी। अदितिः अखण्डनीया अदीना वा देवमाता जनित्र जननकारणम्। अन्तरिक्ष अवकाशात्मकोऽन्तरिक्षलोकः भ्राता, सर्वदा सहभावित्वात्। अतो नः अस्माकं मात्रादिकृतं पापमस्तीत्यर्थः। ते सर्वे अभिशस्त्या अभिशसनात् मिथ्यापवादजनितात्पापात् नः अस्मान्, रक्षन्त्विति शेषः। तथा नः अस्माकं द्यौः द्युलोकः पिता वृष्ट्यादिप्रदानेन रेतःसेकस्य कर्ता। स च पित्र्यात् पितुरागतादोषाद्दणादानादिरूपात् शं भवाति सुखं उत्पादयतु। पित्र्यमपि दोषं निवर्त्य अस्मान् सुखिनः करोत्वित्यर्थः। अहं च जामि व्यर्थमेव मृत्वा प्राणान् परित्यज्य परलोकहितं यागहोमदानादिकं अननुष्ठाय लोकात् लोकनीयात् स्वर्गादेः मा अव पत्सि अवपन्नः अधोगतिर्मा भूवम्। यद्वा, जामिं इति पदच्छेदः। जामिर्भगिनी तद्वन्निषिद्धा स्त्री, ता ऋत्वा गत्वा निषिद्धाचरणेन अवपन्नो मा भूवमित्यर्थः।

असा.

**[1]यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः।**
**अश्लोणा अङ्गैरह्रुताः स्वर्गे तत्र पश्येम पितरौ च पुत्रान् ॥**

यत्र यस्मिन्नुत्तमे स्वर्गादिलोके सुहार्दः शोभनहृदयाः सुकृतः शोभनं यागादिकं कृतवन्तो जनाः स्वायाः स्वकीयायाः तन्वाः शरीरस्य सम्बन्धिनं रोगं पापफलभूतं ज्वरादिकं विहाय परित्यज्य मदन्ति दुःखासंस्पृष्टकेवलसुखानुभवेन माद्यन्ति। वयमपि अङ्गैः अवयवैर्हस्तपादादिभिः अश्रोणाः कुष्ठादिरोगरहिताः अह्रुताः अकुटिलगमनाः सन्तः तत्र पुण्यकृद्भिः प्राप्ये स्वर्गे लोके पितरौ पितरं मातरं च तथा आत्मीयान् पुत्रांश्च पश्येम साक्षात्कुर्याम।

असा.

बहुबन्धनमुक्तिः सुकृतलोकप्राप्तिश्च

**[1]विषाणा पाशान् वि ष्याध्यस्मद्य उत्तमा अधमा वारुणा ये।**
**दुष्वप्न्यं दुरितं नि ष्वास्मदथ गच्छेम सुकृतस्य लोकम् ॥**

हे बन्धनाभिमानिनि निर्ऋतिदेवते पाशान् अस्मदवयवगतान् बन्धनरज्जुविशेषान् विषाणा विमुञ्चती अस्मत् अस्मत्तः अधि उपरि वि ष्य विमुञ्च। पाशा विशेष्यन्ते—ये पाशा उत्तमा उत्कृष्टा ऊर्ध्वकायाश्रिताः, ये च अधमाः निकृष्टाः अधःकायाश्रिताः, ये च वारुणाः वरुणसम्बन्धिनः सर्वकायाश्रिताः पाशाः। 'उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय' (ऋस. १।२४।१५) इति हि निगमः। इत्थं अनेकभेदभिन्नान् पाशान् अस्मत्तो विमुञ्चेत्यर्थः। अपि च दुःष्वप्न्यं दुष्टस्वप्नदर्शनजनितं दुरितं पापं अस्मत् अस्मत्तो निः ष्व निर्गमय। अथ पाशविमोचनानन्तरं सुकृतस्य पुण्यस्य फलभूतं लोकं इमं च अमुं च गच्छेम प्राप्नुयाम।

असा.

**[2]यद्दारुणि बध्यसे यच्च रज्ज्वां यद्भूम्यां बध्यसे यच्च वाचा।**
**अयं तस्माद्गार्हपत्यो नो अग्निरुदिन्नयाति सुकृतस्य लोकम् ॥**

हे पुरुष त्वं दारुणि काष्ठविशेषे यत् बध्यसे। यच्च रज्ज्वा बध्यसे। भूम्या वा गर्तरूपाया यत् बध्यसे। वाचा राजाज्ञाप्रकाशिन्या यच्च बध्यसे। तस्मात् सर्वस्माद्बन्धनात् अयं अस्मदीयो गार्हपत्योऽग्निः त्वं उत्तारयत्वित्यर्थः। शेषं पूर्ववत्।

असा.

**[3]उद्गातां भगवती विचृतौ नाम तारके।**
**प्रेहामृतस्य यच्छतां प्रैतु बद्धकमोचनम् ॥**

भगवती भाग्ययुक्ते विचृतौ नाम विचृन्नामनी तारके नक्षत्रे उद्गाता उदयं प्राप्तवती। 'विचृतौ नक्षत्रं पितरो देवता' (तैसं. ४।४।१०।२) इति श्रुतेः। मूलनक्षत्रस्य

(१) असं. ६।१२०।३; तैब्रा. २।६।२ (यत्र सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वा स्वायाम्। अश्लोणाङ्गैरह्रुता स्वर्गे तत्र पश्येम पितरं च पुत्रम् ॥).

(१) असं. ६।१२१।१. (२) असं. ६।१२१।२.

(३) असं. ६।१२१।३, तैब्रा. २।६।१ (अमी ये सुभगे दिवि विचृतौ नाम तारके। प्रेहामृतस्य यच्छतामेतद्बद्धकमोचनम् ॥).

विचृत् इति संज्ञा । अधिष्ठानद्वयापेक्षया द्विवचनम् । इह अस्मिन् बद्धे पुरुषे अमृतस्य अमृतं अमरण प्र यच्छताम् । बद्धकमोचन, कुत्सित निगलादिभिर्बद्धः बद्धकः, तस्य मोचन बन्धान्मोक्षः प्रैतु प्राप्नोतु ।

असा.

**[1]वि जिहीष्व लोकं कृणु बन्धान्मुञ्चासि बद्धकम् ।**
**योन्या इव प्रच्युतो गर्भः पथः सर्वाँ अनु क्षिय ॥**

हे बन्धनाभिमानिदेव त्वं वि जिहीष्व विविध गच्छ । लोक स्थान अस्य पुरुषस्य बन्धनार्तस्य कृणु कुरु । तस्मात् बन्धात् बन्धनात् बद्धकमिम पुरुष मुञ्चासि मुञ्च । हे पुरुष बन्धनमोक्षानन्तर योन्याः प्रच्युतः मातुर्गर्भाशयात् बहिर्विनिर्गतो गर्भ इव, स यथा इतस्ततः अनिरुद्धगतिः प्रचलति एव सर्वान् पथो मार्गान् अनु क्षिय अनुगच्छ, यथेष्ट वर्तस्वेत्यर्थः ।

असा.

दानेन यज्ञेन वा संतानयुक्ताना बन्धुरहिताना वा स्वर्गप्राप्ति

**[2]एतं भागं परि ददामि विद्वान् विश्वकर्मन् प्रथमजा ऋतस्य ।**
**अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनु सं तरेम ॥**

हे विश्वकर्मन्, विश्वं कृत्स्न जगत् कर्म कर्तव्य यस्य सः विश्वकर्मा, एतत्संज्ञ हे देव यस्त्वं ऋतस्य सत्यस्य परब्रह्मणः प्रथमजः प्रथम जातः उत्पन्नः । सः प्रथम-शरीरी हिरण्यगर्भः सर्वजगत्स्रष्टेत्यर्थः । ईदृशस्य तव माहात्म्य विद्वान् जानन् एत भागं पक्वं अन्नं हविर्भाग वा परि ददामि रक्षणार्थ तुभ्य प्रयच्छामि । एवं इह लोके अस्माभिस्तुभ्यं दत्त इमं भाग जरसः परस्तात् जराया ऊर्ध्वं एतद्देहपातोत्तरकालम् । जरसः परस्तात् इति वदता जरापर्यन्त आयुषो दैर्घ्यं प्रार्थितम् । जीर्णे इमं देहं परित्यज्य अच्छिन्न अविच्छिन्नं तन्तुम् । तायते कुल विस्तार्यते अनेनेति तन्तुः पुत्रपौत्रादिलक्षणः सतानः । तं अनुप्रविश्य स चरेम सप्रागनुयाम । एतदेव हि ससारिणः पुरुषस्य अमृतत्वम् । तथा च मन्त्रवर्णः—‘प्रजामनु प्रजायसे । तदु ते मर्त्यामृतम्’ (तैब्रा. १।५।५।६) इति, ‘प्रजाभिरग्ने अमृतत्वमश्याम्’ (ऋस. ५।४।१०) इति च ।

असा.

**[1]ततं तन्तुमन्वेके तरन्ति येषां दत्तं पित्र्यमायनेन ।**
**अबन्ध्वेके ददतः प्रयच्छन्तो दातुं चेच्छिक्षान्त्स स्वर्ग एव ॥**

एके केचन जना ऋणिनः सन्तः देहपातोत्तरकाल ततं विस्तीर्णं तन्तु पुत्रपौत्रादिलक्षण सतान अनुलक्ष्य तरन्ति ऋण अतिक्रामन्ति । पुत्रादिभिस्तस्य पितृगतस्य ऋणस्य अपाकरणात् । येषा जनाना ऋणवता पित्र्य पितुरागतमपि ऋण आयनेन आगमनेन पुत्रपौत्रादिषु प्रवेशनेन दत्त उत्तमर्णेभ्यः प्रत्यर्पित भवति । ते तरन्तीति पूर्वत्र सबन्धः । अस्त्वेव पुत्रपौत्रादिसतानवताम् । येषा तु तदभावः कथ ते अनृणाः स्युरिति, तत्राह—अबन्ध्वेक इति । अबन्धु अबन्धवः । बध्नाति कुल सतत अविच्छिन्न करोतीति बन्धुः पुत्रपौत्रादिलक्षणः सतानः । तद्रहिता एके जनाः ददतः हिरण्यधान्यादिक ददते उत्तमर्णाय पितृकृतं आत्मकृत चेति उभयविधमपि ऋणं प्रयच्छन्तः इह लोके एव प्रत्यर्पयन्तो दातु चेत् शिक्षान् सर्वात्मना प्रत्यर्पयितु यदि शक्नुवन्ति, शक्त्यभावेऽपि तदिच्छामात्र वा विद्यते स एव तेषां स्वर्गः । तावन्मात्रेणापि सर्वमृण अपाकृत्य स्वर्गभाजो भवन्तीत्यर्थः ।

असा.

**[2]अन्वारभेथामनुसंरभेथामेतं लोकं श्रद्दधानाः सचन्ते ।**

---

(१) असं. ६।१२१।४, तैब्रा. २।६।१ (विजिहीर्ष्व लोकान्कृधि बन्धान्मुञ्चासि बद्धकम् । योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनुष्व ॥ ).

(२) असं. ६।१२२।१; तैब्रा. २।६।१ पूर्वार्धे ( स प्रजानन्प्रतिगृभ्णीत विद्वान्प्रजापतिः प्रथमजा ऋतस्य ) सं तरेम ( संचरेम ).

(१) असं. ६।१२२।२, तैब्रा २।६।२ (ततं तन्तुमन्वेके अनुसंचरन्ति येषां दत्तं पित्र्यमायनवत् । अबन्ध्वेके ददत प्रयच्छाद्दातुं चेच्छक्नवास स्वर्ग एषाम् ॥ ).

(२) असं. ६।१२२।३, तैब्रा. २।६।२ ( आरभेथामनुसंरभेथा समानं पन्थामवथो घृतेन । यद्वा पूर्तं परिविष्ट यदग्नौ तस्मै गोत्रायेह जायापती संरभेथाम् ॥ ).

**यद्वां पक्वं परिविष्टमग्नौ तस्य गुप्तये दम्पती सं श्रयेथाम् ॥**

हे दम्पती जायापती अन्वारभेथां परलोकहित सत्कर्म अनुलक्ष्य तस्य आरम्भः क्रियताम् । अनुसंरभेथां आरम्भानन्तर तत्रैव संरब्धौ सयुक्तौ भवताम् । सत्कर्मणा अग्निहोत्रादीना अनारम्भः, आरब्धानां च तेषा परित्यागश्च सर्वथा न युक्तः इत्यर्थः । एतं कर्मफलभूतं लोक स्वर्गादिक श्रद्दधानाः श्रद्धावन्तः आस्तिक्यबुद्धियुक्ताः कर्मानुष्ठानतत्परा जनाः सचन्ते सेवन्ते । 'सचस्वा नः स्वस्तये सेवस्व नः स्वस्तये' (नि.३।२१) इति हि निरुक्तम् । यस्मादेव तस्मात् हे दम्पती युवामपि श्रद्दधानौ भवतमित्यर्थः । वां युवाभ्यामर्थे यत् पक्व पाकेन सस्कृत स्थालीपाकादिलक्षणमन्नम् । यद्वा, युवयोः संबन्धि ब्राह्मणेभ्यो देय पक्व अन्नम् । एतच्च स्मृतिविहितस्य वापीकूपतटाकनिर्माणादेः पूर्तस्य उपलक्षणम् । यच्च अन्न अग्नौ परिविष्ट हवीरूपेण देवतार्थ प्रक्षिप्तम् । एतच्च इष्टशब्दवाच्यस्य अग्निहोत्रदर्शपूर्णमासादेर्यागस्य उपलक्षणम् । तस्य इष्टापूर्तस्य गुप्तये रक्षणाय हे दम्पती युवां स श्रयेथा संसेवेथाम् ।

अस्रा.

**यज्ञं यन्तं मनसा बृहन्तमन्वारोहामि तपसा सयोनिः ।**
**उपहूता अग्ने जरसः परस्तात् तृतीये नाके सधमादं मदेम ॥**

यज्ञ अस्माभिः कृत यागं यन्त देवान् गच्छन्तं बृहन्तं महान्तं मनसा बुद्ध्या अहं अन्वारोहामि अनुप्रविश्य तत्रैव तिष्ठामि । कथंभूतः । तपसा अनशनादिरूपेण दीक्षानियमेन सयोनिः । योनिः दिव्यदेहोत्पत्तिबीजं अपूर्वं, तत्सहितः । यदि हि यजमानस्तपस्वी भवति तदा यज्ञस्तेन संबद्धो भवति । 'योऽतपस्वी स्यादसंश्लिष्टोऽस्य यज्ञः स्यात्, तपस्वी स्याद्यज्ञमेव तत् संश्लेषयत इति विज्ञायते' इति स्मरणात् । सर्वथा यजमानेन तपस्विना भवितव्य इत्यभिप्रायः । यद्वा, यज्ञ यज्ञसाधन यष्टव्य वा अग्निं यन्त अस्मदीयं हविरादाय देवान् गच्छन्त इति योज्यम् । हे अग्ने उपहूताः त्वया अनुज्ञाताः जरसः परस्तात् चिरकाल इह लोके उषित्वा जरसः परस्तात् जराया ऊर्ध्वं जीर्णे इद मानुषशरीर परित्यज्य तृतीये त्रित्वसख्यापूरके नाके । कं सुखं, अकं दुःख, नास्मिन् अक अस्तीति नाकः । दुःखासंस्पृष्टे स्वर्गलोके सधमाद पुत्रपौत्रादिभिः सह हर्षो यथा भवति तथा मदेम हृष्येम । अस्रा.

**शुद्धाः पूता योषितो यज्ञिया इमा ब्रह्मणां हस्तेषु प्रपृथक् सादयामि ।**
**यत्काम इदमभिषिञ्चामि वोऽहमिन्द्रो मरुत्वान्त्स ददातु तन्मे ॥**

शुद्धाः पापरहिताः पूताः जगत्पवित्रभूताः योषितः स्त्रीरूपाः यज्ञियाः यज्ञार्हाः इमा अपः ब्रह्मणां ब्राह्मणानां चतुर्णां आर्षेयाणां ऋत्विजा हस्तेषु प्रक्षालनेन पृथक् सादयामि अस्मदुपभोगार्थं स्थापयामि । यत्कामः यत्फल कामयमानः इद इदानीं हे आपः वः युष्मान् अहं अभिषिञ्चामि अभितो निनयामि । मरुत्वान् मरुद्गणैर्युक्तः स प्रसिद्धः इन्द्रः मे मह्य तत् फल ददातु प्रयच्छतु । अस्रा.

इष्टापूर्तेन स्वर्ग.

**एतं सधस्थाः परि वो ददामि यं शेवधिमावहाज्जातवेदाः ।**
**अन्वागन्ता यजमानः स्वस्ति तं स्म जानीत परमे व्योमन् ॥**

हे सधस्थाः । सह तिष्ठन्ति एकत्र स्वर्गे लोके स्थाने यजमानेन सह निवसन्तीति सधस्थाः देवाः । हे सहायभूता देवाः एत हविर्भागं वः युष्मभ्य परि ददामि । परिदानं रक्षणार्थं दानम् । य भाग शेवधिं निधिरूपं जातवेदाः जातानां वेदिता अग्निः आवहात् युष्मान् प्रापयति, एतं इति पूर्वत्रान्वयः । अय यजमानः स्वस्ति क्षेमेण तं शेवधिं अन्वागन्ता पृष्ठतः आगमिष्यति । परमे उत्कृष्टे

(१) असं. ६।१२२।४.

(१) असं. ६।१२२।५.

(२) असं ६।१२३।१; तैसं. ५।७।७।१ (एतं सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदा, । अन्वागन्ता यज्ञपतिर्वो अत्र तं स्म जानीत परमे व्योमन् ॥ ); कासं. ४०।१३ (१०२) यं शेवधिमावहात् (यमावहाच्छेवधिं ); शुसं. १८।५९ तैसंवत्; शब्रा. ९।५।१।४६ तैसंवत्.

व्योमन् व्योमनि विविधावनयुक्ते स्वर्गलोके त अन्वागतं यजमान जानीत स्म अवगच्छत, मा विस्मरतेत्यर्थः। अविस्मरणद्योतनार्थः स्मशब्दः। असा.

**[१]जानीत स्मैनं परमे व्योमन् देवाः सधस्था विद लोकमत्र।**
**अन्वागन्ता यजमानः स्वस्तीष्टापूर्तं स्म कृणुताविरस्मै ॥**

जानीत स्मैनमित्यादि पूर्ववद्योज्यम्। हे सधस्थाः सहस्थाना देवाः अत्र अस्मिन् स्वर्गे अस्य यजमानस्य लोकं विद जानीथ कर्मानुष्ठानसमये एव अवधारयत। तृतीयः पादः पूर्ववद्योजनीयः। अस्मै अन्वागताय यजमानाय तत्कृत इष्टापूर्तम्। इष्टं श्रुत्युक्तयागादि कर्म। स्मृत्युक्तवापीकूपतटाकनिर्माणादि पूर्तम्। तदुभयं आविष्कृणुत दर्शयत, तत्फल प्रयच्छतेत्यर्थः। असा.

पाकयज्ञदानादिभि करयापि स्वर्गप्राप्तिः

**[२]देवाः पितरः पितरो देवाः।**
**यो अस्मि सो अस्मि ॥**
**सँ पचामि स ददामि स यजे स दत्तान्मा यूषम् ॥**

ये देवाः वसुरुद्रादित्यरूपाः ते अस्माकं पितरः पितृपितामहप्रपितामहात्मकाः पितृदेवताः। ये च अस्माक पितरः पितृपितामहप्रपितामहरूपा मानुषाः ते एव प्रागुक्ता देवाः। इत्थ परस्परव्यतिहारेण पितॄणां देवतात्मकत्व दृढीकृतम्। अतः सर्वेषां जनकाः देवा एव। ततो यो अस्मि यदीयो भवामि सो अस्मि तदीयोऽहं अस्मि। सभावितव्यतिक्रमा हि स्त्रियः। अतः एतद्भावनया स्वपितुरेव अह पुत्रो भवामीत्यर्थः। 'स्व्यपराधात् कर्तुश्च पुत्रदर्शनात्' (जै. सू. १।२।१३) इत्यत्र मीमासाभाष्यकृता एतत् समर्थितम्। अतः स तदीय एवाह पचामि पाकयज्ञान् करोमि। स ददामि दानानि करोमि। स यजे यागान् अनुतिष्ठामि। सोऽहं दत्तात् पुत्रादिभिरनुष्ठितश्राद्धादिजन्यफलात् मा यूष पृथक्कृतो मा भूवम्। सत्यपि मातापित्रोर्व्यभिचारे एतन्मन्त्रपाठसामर्थ्येन यथास्वमेव सर्व कर्म अनुष्ठितं भवतीत्यर्थः। असा.

**[१]नाके राजन् प्रति तिष्ठ तत्रैतत् प्रति तिष्ठतु।**
**विद्धि पूर्तस्य नो राजन्त्स देव सुमना भव ॥**

हे राजन् स्वामिन् सोम 'सोमोऽस्माक ब्राह्मणानां राजा' (तैस. १।८।१०।२) इति श्रुतेः। स त्वं नाके स्वर्गे लोके प्रति तिष्ठ अस्मदीयमपराध विस्मृत्य सुखं वर्तस्व। तत्र तस्मिन् स्वर्गे लोके एतत् अस्माभिः कृत इष्टापूर्तं प्रति तिष्ठतु प्रतिष्ठित फलप्रदानसमर्थं वर्तताम्। हे राजन् नः अस्माक पूर्तस्य। उपलक्षणमेतत्। इष्टापूर्तं विद्धि जानीहि एतस्य कर्मणः एतावत्फल देयमिति मनसा निश्चिनु। हे देव स तादृशस्त्व सुमनाः शोभनमनस्को भव। असा.

मरणपूर्वं मरणोत्तरं मरणसमये च स्थिति, निर्ऋतिमृत्युयमदूतादयः पाशशृङ्खलाद्यायुधधराः मरणकाले प्राणहराः, अयं लोक अभयस्थानं, असुप्राणचक्षुर्मनआदीनां मरणकाले देहत्यागः, मृत्युपरिहारविधि., मृत्यो. रक्षणकर्तारः

**[२]अन्तकाय मृत्यवे नमः प्राणा अपाना इह ते रमन्ताम्।**
**इहायमस्तु पुरुषः सहासुना सूर्यस्य भागे अमृतस्य लोके ॥**

आयुष्कामस्य आयुर्वृद्धिः मृत्योरधीनेति तन्नमस्कार आदौ क्रियते। अन्तकाय अन्त करोतीत्यन्तकः तस्मै

(१) असं. ६।१२३।२, तैस ५।७।७।१ (जानीतादेनं परमे व्योमन्देवाः सधस्था विद रूपमस्य। यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै ॥), कासं. ४०।१३(१०३) (एतं जानीत परमे व्योमन्नग्ने सधस्था विद लोकमस्य। यदा गच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै ॥); शुसं. १८।६० (एतं जानाथ परमे व्योमन्देवा. सधस्था विद रूपमस्य। यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणवाथाविरस्मै ॥); तैब्रा. ३।७।१३।३ पूर्वार्धे (एतं जानीतात्परमे व्योमन्। वृकाः सधस्था विद रूपमस्य।) उत्तरार्ध तैसंवत्; शब्रा. ९।५।१।४७ शुसंवत्.

(२) असं. ६।१२३।३, कासं. ४।१४ (९५), ३१।१५ (४९) यो अस्मि सो अस्मि (योऽस्मि स सन्यजे); मैसं. १।४।११ (५६) यो अस्मि सो अस्मि (योऽस्मै स सन्यजे); ऐब्रा. ३४।६।३ कासंवत्; तैब्रा. ३।७।५।४ यो अस्मि सो अस्मि (योऽहमस्मि स सन्यजे).

(३) असं. ६।१२३।४.

(१) असं. ६।१२३।५. (२) असं. ८।१।१-२१.

सर्वप्राणिनाशकर्त्रे मृत्यवे प्राणिवियोजकाय एतन्नामकाय देवाय नमः नमस्कारः, अस्त्विति शेषः। हे आयुष्काम माणवकादे ते तव प्राणाः। प्राणन्तीति प्राणाः बहिर्मुखसञ्चारिणो वायवः। अपानाः। अप अनन्तीत्यपानाः अवाङ्मुखसञ्चारिणः। ते च अन्तकानुग्रहात् इह अस्मिन् शरीरे रमन्तां क्रीडन्तु, प्राणापहर्तुर्मृत्योर्नमस्कारेण प्रीतत्वात् तद्विषयभीतिमपहाय सुखेन संचरन्तु इत्यर्थः। प्राणापानयोर्व्यापारवृत्तेर्बहुत्वात् बहुवचनप्रयोगः। एवं प्राणापानयोरनपगमं आशास्य इदानीं तत्सहितस्य पुरुषस्य अनपगतिं आशास्ते— अयं प्राणप्रच्युतिं शङ्कमानः पुरुषः असुना प्राणेन। वृत्तिबहुत्वानपेक्ष्यात् सामान्याभिप्रायेण एकवचनम्। तेन सह सर्वदा अविनाभूतः सन् इह भूलोके एवास्तु भवतु। इह अस्त्विति यदुक्तं तद्विशिनष्टि— सूर्यस्य आदित्यस्य भागे प्रदेशविशेषे भूलोके। सूर्यव्याप्तेर्विषयभूतास्त्रयो भागाः द्यौरन्तरिक्षं भूश्च। तत्र अपेक्षितत्वादिह भागशब्देन भूलोकः परिगृह्यते। तमेव विशिनष्टि—अमृतस्य लोके, अमृतशब्देनात्र पौत्रादिरूपेणावस्थानमभिधीयते, मनुष्यैराशास्यमानत्वात्। श्रूयते हि— 'प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्' (तैब्रा. १।५।५।६) इति। तथाविधस्य अमृतस्य लोके। लोक्यते इति लोकः स्थानं, भूलोक इत्युक्तं भवति।

असा.

**उदेनं भगो अग्रभीदुदेनं सोमो अंशुमान्।**
**उदेनं मरुतो देवा उदिन्द्राग्नी स्वस्तये॥**

भगो नाम आदित्यमूर्तिविशेषः, 'अंशश्च भगश्च' (तैआ. १।१३।३) इति अदितिपुत्राणां मध्ये श्रवणात्। सर्वप्राणिभिर्भजनीयो भगो देवः एनं मूर्च्छालक्षणे अन्धे तमसि प्रविशन्तं पुरुषं उदग्रभीत् उद्धृतवान्। तथा अंशुमान् अमृतमयैरंशुभिस्तद्वान् सोमो देवः, एनं उदग्रभीदित्यनुषज्यते। एवं मरुतः एकोनपञ्चाशत्सङ्ख्याका देवाः, एनं उदग्रभीषुरिति वचनविपरिणामेन अनुषङ्गः कर्तव्यः। एवं इन्द्राग्नी इन्द्रश्च अग्निश्च उभावपि मुख्यौ देवौ उदग्रहीष्टाम्। अत्र द्विवचनविपरिणामः। किमर्थमुद्ग्रहणमिति तत्राह— स्वस्तये। सु अस्तीति स्वस्तिः, क्षेमायेत्यर्थः। असा.

**इह तेऽसुरिह प्राण इहायुरिह ते मनः।**
**उत्त्वा निर्ऋत्याः पाशेभ्यो दैव्या वाचा भरामसि॥**

हे आयुरर्थयमान पुरुष ते असुः मुख्यः प्राणश्चक्षुरादिः इह शरीरे अस्तु। तथा ते प्राणः पञ्चवृत्त्यात्मको वायुरपि इह अस्तु। एवं ते आयुरपि इह अस्तु। तथा ते मनोऽपि इह अस्तु। एते सर्वेऽपि त्वा विहाय अन्यत्र मा अपसरन्तु। हे गतासो पुरुष त्वा त्वां निर्ऋत्याः एतन्नामिकायाः पापदेवतायाः पाशेभ्यः बन्धनरज्जुभ्यः सकाशात् दैव्या देवसम्बन्धिन्या वाचा मन्त्ररूपया उद्भरामसि ऊर्ध्वं भरामः हरामः नयामः।

असा.

**उत्क्रामातः पुरुष माऽव पत्था मृत्योः पड्वीशमवमुञ्चमानः।**
**मा च्छित्था अस्माल्लोकादग्नेः सूर्यस्य संदृशः॥**

हे पुरुष त्वं अतः अस्मात् मृत्युपाशनिचयात् उत्क्राम उत्क्रमणं कुरु। माऽव पत्थाः अवपतनं मा कार्षीः। बद्धस्य कथमुत्क्रमणं घटते इत्यत आह—मृत्योः हिंसकस्य देवस्य पड्वीशं पादबन्धनपाशं अवमुञ्चमानः विच्छिन्दन् अस्मात् भूलोकात् मा च्छित्था. छिन्नो मा भूः। किमर्थमिति चेत्, उच्यते—अग्नेः सूर्यस्य च संदृशः संदर्शनाद्धेतोः अग्निसूर्ययोश्चिरकालसंदर्शनाय, चिरजीवनायेत्यर्थः। 'ज्योक् च सूर्यं दृशे' (ऋसं. १०।९।७) इति हि श्रुतिः। असा.

**तुभ्यं वातः पवतां मातरिश्वा तुभ्यं वर्षन्त्वमृतान्यापः।**
**सूर्यस्ते तन्वे शं तपाति त्वां मृत्युर्दयतां मा प्र मेष्ठाः॥**

पुनः मरणाभावं सोपपत्तिकमाशास्ते – हे मुमूर्षो पुरुष तुभ्यं त्वदर्थं मातरिश्वा। माता अन्तरिक्षं, निर्मीयन्तेऽस्मिन् भूतानीति व्युत्पत्तेः। तस्मिन् श्वसितीति मातरिश्वा। तादृशो वातः वायुस्तव सुखाय पवतां सञ्चरतु। तथा आपश्च तुभ्यं त्वदर्थं अमृतानि वर्षन्तु सिञ्चन्तु। तथा सूर्यो देवस्ते तव तन्वे शरीराय शं सुखं यथा भवति तथा तपाति तपतु। एतत्सर्वं मृत्योरनुग्रहमन्तरेण न घटते इति तदनुग्रहमाशास्ते—हे

पुरुष त्वा मृत्युर्देवो दयता रक्षा करोतु । अतस्त्व मा प्र मेष्ठाः मृतिं मा गाः । असा.

**उद्यानं ते पुरुष नावयानं जीवातुं ते दक्षतातिं कृणोमि ।**
**आ हि रोहेममममृतं सुखं रथमथ जिर्विर्विदथमा वदासि ॥**

हे पुरुष ते तव उद्यान उद्गमनमेव, मृत्युपाशादिति शेषः । अवयान अवागमन नैवास्ति । तत् कथमेतत्सप-त्स्यते इति तत्राह—ते तव जीवातु जीवनौषध कृणोमि करोमि । केवल जीवनमेव न किन्तु दक्षतातिं दक्षं बल च कृणोमि । त्व च आ रोह आधितिष्ठ इम अमृत अमरणधर्मक सुख इन्द्रियेभ्योऽनुकूल रथ यानम् । देहो वा रथत्वेन उपचर्यते । अतो जीवात्मनो देहेऽवस्थान प्रार्थ्यते । आरुह्य च अजिर्विः अजीर्णः सन् विदथ वेदन आ वदासि आवद, लब्धसज्ञोऽस्मीति आचक्ष्वेत्यर्थः । असा.

**मा ते मनस्तत्र गान्मा तिरो भून्मा जीवेभ्यः प्र मदो माऽनु गाः पितॄन् ।**
**विश्वे देवा अभि रक्षन्तु त्वेह ॥**

तत्र तस्मिन् यमविषये ते मनो मा गात् गतं मा भूत् । तथा मा तिरो भूत् अन्तर्हित विलीनमपि मा भूत् । किंच त्व जीवेभ्यः बन्धुभ्यस्तेषामर्थाय मा प्र मदः अनवधान मा आमुहि । पितॄन् मृतान् पूर्वपुरुषान् माऽनु गाः अनुगति मा कार्षीः । विश्वे देवाः इन्द्राद्या इन्द्रियाणि वा त्वा त्वां अभि रक्षन्तु सर्वतः पालयन्तु । कुत्रेति चेत्, उच्यते—इह अस्मिन्नेव शरीरे इह भूतले वा । असा.

**मा गतानामा दीधीथा ये नयन्ति परावतम् ।**
**आ रोह तमसो ज्योतिरेह्या ते हस्तौ रभामहे ॥**

गतानां पितृलोकं प्राप्तानां, मार्गमिति शेषः । मा दीधीथाः तं प्रति देवनं मा कार्षीः । अथवा गत-मार्ग मा ध्याय । ध्यै चिन्तायाम् । छान्दसी रूपसिद्धिः । अथवा गतानामिति कर्मणि षष्ठी । मृतान् मा चिन्त-येत्यर्थः । ते विशेष्यन्ते – ये गतास्त्वामपि परावत दूर-देशं नयन्ति । यथा त्व पुनर्नायासि तथा प्रापयन्ती-त्यर्थः । अतस्त्वं तमसः । म्रियमाणस्य पुरुषस्य समस्त-स्यापि ज्ञानस्य नाशात् तमःप्रवेश इव भवति अतस्तमसः सकाशात् ज्योतिः । ज्योतिः प्रकाशः । प्रकाशं ज्ञान आ रोह अधितिष्ठ आश्रयेत्यर्थः । अन्धकारप्रविष्टस्य कथमा-रोहणमिति, तत्राह—ते तव हस्तौ आ रभामहे गृह्णीमः । आरोहणानुकूलप्रयत्न कुर्म इत्यर्थः । असा.

**श्यामश्च त्वा मा शबलश्च प्रेषितौ यमस्य यौ पथिरक्षी श्वानौ ।**
**अर्वाङेहि मा वि दीध्यो मात्र तिष्ठः पराङ्मनाः ॥**

हे मुमूर्षो पुरुष त्वा त्वा श्यामश्च एतन्नामा श्वा । वर्णप्रयुक्तय संज्ञा । मा बाधतामिति शेषः । एवं शबलश्च श्वा मा बाधताम् । चित्रवर्णत्वात् शबल इति संज्ञा । तौ विशेष्येते – यमस्य सर्वप्राणिप्राणापहर्तुर्देवस्य पथिरक्षी मार्गरक्षकौ यौ श्वानौ स्तः । तत्र श्यामश्च शबलश्चेति सम्बन्धः । श्वभ्यामसदष्टः सन् अर्वाङ् अस्मद-भिमुखः एहि आगच्छ । मा वि दीध्यः ध्यान मा कार्षीः । किमित्याशङ्कायां मृताना मार्गमित्यवतिष्ठते । तदेव भङ्ग्यन्तरेणाह—अत्र अस्मिन् भूलोके वर्तमानः सपदि पराङ्मनाः अप्रतिनिवृत्तिचित्तविषयध्यानोपेतः सन् मा तिष्ठः मा वर्तस्व । असा.

**मैतं पन्थामनु गा भीम एष येन पूर्वं नेयथ तं ब्रवीमि ।**
**तम एतत्पुरुष मा प्र पत्था भयं परस्तादभयं ते अर्वाक् ॥**

हे गतासो पुरुष त्वं एत पूर्वोक्तं पन्था पन्थानं मृता येन गच्छन्ति त मा अनु गाः अनुसृत्य मा याहि । अनु-गमननिषेधस्य कारणमाह—एष मार्गो भीमो भयहेतुः । एतच्छब्दार्थमाह—येन मार्गेण पूर्व मृतेः प्राक्काले नेयथ न गच्छसि, तं मार्ग ब्रवीमि । माऽनु गा इति निषेधप्रतियोगितया वच्मीत्यर्थः । एतत् मरणलक्षणं तमः अन्धकार अज्ञानं मा प्र पत्थाः प्रपदन मा कार्षीः । पुरस्तात् पूर्वदेशे यमपुरप्रदेशे भयं, भव-तीति शेषः । अर्वाक् अस्मदभिमुखागमनमार्गे ते तव अभयं भयाभावः क्षेमं भवतीत्यर्थः । असा.

**रक्षन्तु त्वाऽग्नयो ये अप्स्वन्ता रक्षतु त्वा मनुष्या यमिन्धते ।**
**वैश्वानरो रक्षतु जातवेदा दिव्यस्त्वा मा प्र धाग्विद्युता सह ॥**

अप्सु अन्तः उदकेषु मध्ये ये अग्नयो वाडवादिरूपेण वर्तन्ते तेऽग्नयः त्वा त्वा हे रक्षाकाम राजादे रक्षन्तु पालयन्तु । उदकेष्वग्निसद्भावमाह मन्त्रः– ' अप्स्वग्ने साधिष्टव ' ( ऋसं. ८।४३।९ ), ' अग्निं च विश्वशंभुवम् ' (ऋस. १०।९।६) इत्यादिकः । ' सोऽपः प्राविशत् ' ( तैसं. २।६।६।१ ) इति च । अबाधिष्ठानबहुत्वमपेक्ष्य अग्नीनां बहुत्वाभिधानम् । यद्वा, अग्नीषोमयोरखिलजगत्कारणत्वेन विकारेषु सर्वेष्वपि अग्निसम्भवात् बहुत्वाभिधानम् । तथा यमग्निं मनुष्या आहवनीयादिरूपेण वर्तमान वा पाकाद्यर्थमवस्थापित वा इन्धते दीप्त कुर्वन्ति सोऽपि त्वां रक्षतु । एव वैश्वानरः विश्वेषा नराणा संबन्धी जाठरोऽग्निः, स च जातवेदाः जातप्रज्ञो जातधनो वा त्वा रक्षतु । तथा दिव्यः दिवि भवो वैद्युतो विद्युता स्वशरीरेण सह सहितः सन् त्वा मा प्र धाक् प्रकर्षेण मा दहतु । असा.

**मा त्वा क्रव्यादभि मंस्तारात्संकसुकाच्चर ।**
**रक्षतु त्वा द्यौ रक्षतु पृथिवी सूर्यश्च त्वा रक्षतां चन्द्रमाश्च ।**
**अन्तरिक्षं रक्षतु देवहेत्याः ॥**

क्रव्यात् मांसाशनोऽग्निः । स च त्वा त्वा माऽभि मंस्त मम त्व आहार इत्यभिमान मा करोतु । ' नास्य रुद्रः पशूनभिमन्यते ' (तैसं. १।६।७।४) इत्यादौ तथा दर्शनात् । त्वं च संकुसुकात् शवभक्षकादेतन्नामकादग्नेः आरात् दूरदेशे एव चर । तथा द्यौः पृथिवी सूर्यश्चन्द्रमाश्च प्रत्येक स्वस्वसबन्धिनो भयात् त्वा त्वा रक्षतु । अन्तरिक्षमपि त्वां देवहेत्याः देवप्रेरितादायुधात् रक्षतु । असा.

**बोधश्च त्वा प्रतीबोधश्च रक्षतामस्वप्नश्च त्वानवद्राणश्च रक्षताम् ।**
**गोपायंश्च त्वा जागृविश्च रक्षताम् ॥**

बोधप्रतीबोधौ नाम ऋषी । ' ऋषी बोधप्रतीबोधौ ' ( असं. ५।३०।१० ) इति प्रागुक्तत्वात् । तत्सहप्रपाठादत्रोक्ताः षडपि ऋषयः । बोधः सर्वदा प्रतिबुध्यमानः । प्रतीबोधः प्रतिवस्तु प्रतिक्षण वा बुध्यमानः । अस्वप्नः स्वप्नरहितः । अनवद्राणः निद्रारहितः । गोपायन् सर्वदा देहस्य गोपायिता । जागृविः जागरणशीलः । एते सर्वे देहाश्रयाः प्राणापानमनोबुद्धिचक्षुर्द्वयरूपा इन्द्रियाभिमानिदेवाः यथोचित बोद्धव्याः । ते युग्मशः त्वां रक्षन्त्वित्यर्थः । असा.

**ते त्वा रक्षन्तु ते त्वा गोपायन्तु तेभ्यो नमस्तेभ्यः स्वाहा ॥**

ते बोधाद्याः त्वा त्वा रक्षन्तु पालयन्तु । ते त एव त्वा गोपायन्तु । गोपायन सर्वतो रक्षणम् । तेभ्यः बोधादिभ्यो देवेभ्यो नमः नमस्कारोऽस्तु । तेभ्यः स्वाहा इद द्रव्य स्वाहुतमस्तु । असा.

**जीवेभ्यस्त्वा समुदे वायुरिन्द्रो धाता दधातु सविता त्रायमाणः ।**
**मा त्वा प्राणो बलं हासीदसुं तेनु ह्वयामसि ॥**

जीवेभ्यः । अत्र जीवोपयुक्तानि इन्द्रियाणि जीवशब्दव्यपदेश भजन्ते । तेषामर्थाय । अथ वा, जीवाः पोषणीयाः पुत्रभार्यादासादयः । तेषामर्थाय । तादर्थ्यं विशिनष्टि– समुदे तेषा समोदाय त्वा वाय्वादयः प्रत्येक समुदायो वा दधातु स्थापयतु मृत्योराकृष्य प्रयच्छतु । त्रायमाण इति सवितुर्विशेषणम् । त्वा पालयमानः । किंच त्वा त्वा प्राणः शरीरबल च मा हासीत् मा त्याक्षीत् । ते असुमनु ह्वयामसि आनुकूल्येन आह्वयाम । असा.

**मा त्वा जम्भः संहनुर्मा तमो विदन्मा जिह्वा बर्हिः प्रमयुः कथा स्याः ।**
**उत्त्वादित्या वसवो भरन्तूदिन्द्राग्नी स्वस्तये ॥**
**उत्त्वा द्यौरुत्पृथिव्युत्प्रजापतिरग्रभीत् ।**
**उत्त्वा मृत्योरोषधयः सोमराज्ञीरपीपरन् ॥**

किञ्च त्वा त्वा सहनुः सहतदन्तो जम्भः असुरः । अथवा, सहनुः संहतहनुः जम्भः अस्थूलदन्तो मा विदत् मा विन्दतु, भक्षयितुमिति शेषः । ' त वो जम्भे दधामि ' (तैस. ४।५।११।२ ) इत्यादिमन्त्रदर्शनात् । तथा तमः अज्ञानमपि मा विदत् । एवं बर्हिः बर्हिरिव आयामविस्तारोपेता उद्यमाना जिह्वा रक्षःप्रभृतेः

सन्निधिनी मा विदत् । किमर्थमेव प्रार्थ्यते इति चेत्, तत्राह—कथा केन प्रकारेण त्व प्रमयुः प्रगतहिंसः प्रगतहिंसको वा स्याः भवेः । एवमर्थं जम्भादि मा विददित्यर्थः । आदित्याः अदितेः पुत्रा देवा धात्रादयः त्वा त्वा उद्धरन्तु ऊर्ध्वं हरन्तु मृत्योर्मुखात् । तथा वसवः अष्टसंख्याका धरादयः उद्धरन्तु । इन्द्राग्नी इन्द्रश्च अग्निश्च देवौ उद्धरताम् । किमर्थम् । स्वस्तये क्षेमाय । तथा द्यौः द्युदेवता त्वां उद्धरतु । पृथिवी च उद्धरतु । किं बहुना, प्रजापतिः सर्वेषां देवाना पिता उदग्रभीत् उद्ग्रहणमकार्षीत् उद्गृह्णातु । सोमराज्ञीः सोमस्य पत्न्यः ओषधयो देव्यो मृत्योः सकाशात् त्वा उदपीपरन् अपालयन् । असा.

**अयं देवा इहैवास्त्वयं मामुत्र गादितः ।**
**इमं सहस्रवीर्येण मृत्योरुत्पारयामसि ॥**

हे देवाः आदित्याद्याः अय पुरुषः इहैव भूलोके अस्तु भवतु । एतदेव व्यतिरेकमुखेनाह— अयं इतः अस्मात् भूलोकात् अमुत्र स्वर्गे मा गात् । वय रक्षाकर्तारः इम पुरुष सहस्रवीर्येण अपरिमितसामर्थ्येन रक्षाविधानेन मृत्योः सकाशात् उत्पारयामसि उत्पारयामः । असा.

**उत्त्वा मृत्योरपीपरं सं धमन्तु वयोधसः ।**
**मा त्वा व्यस्तकेश्यो मा त्वाघरुदो रुदन् ॥**

हे आयुष्काम पुरुष त्वा त्वां मृत्योः उदपीपरन् पालयन्तु वयोधसः अन्नस्य आयुष्यस्य वा धातारो देवाः, सं धमन्तु सधान कुर्वन्तु च । त्वा त्वां प्रति व्यस्तकेश्यः कीर्णकेशाः बन्धुयोषितो मा रुदन् अश्रुविमोकं मा कार्षुः । तथा अघरुदः अघे व्यसने दुःखे बान्धवेन रोदनकर्तारो मा रुदन् । असा.

**आहार्षमविदं त्वा पुनरागाः पुनर्णवः ।**
**सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥**

हे मृत्युग्रस्त पुरुष त्वा त्वा आहार्षं मृत्युमुखादाहृतवानस्मि । आहृत्य च त्वा त्वा अविद लब्धवानस्मि । हे पुनर्नव पुनरुत्पन्न त्व पुनरागाः पुनरागतोऽसि । पुनर्जीवलाभात् पुनर्नवत्वव्यपदेशः । हे सर्वाङ्ग केनचिदपि चक्षुराद्यङ्गेन अविकल संपूर्णाङ्ग । मृत्यभावेऽपि प्रायेण अङ्गवैकल्य दृढरोगग्रस्तस्य भवतीत्यभिप्रायेण एवमाह । ते तव सर्वं चक्षुः, चक्षुर्विषयमित्यर्थः । सर्वमपि इन्द्रियजात स्वविषयप्रकाशक, भवत्विति शेषः । ते तव सर्वं शतसवत्सरलक्षणमायुः अविद लब्धवानस्मि । असा.

**व्यवात्ते ज्योतिरभूदप त्वत्तमो अक्रमीत् ।**
**अप त्वन्मृत्युं निर्ऋतिमप यक्ष्मं नि दध्मसि ॥**

हे विसृज पुरुष ते व्यवात् व्यौच्छत् तमोविवासनमभूत् । अत एव ज्योतिः संज्ञानं अभूत् । तथा त्वत् त्वत्तः सकाशात् तमः कृत्स्नमपाक्रमीत् अपक्रान्तमभूत् । कुतो हेतोरिति, तत्राह—त्वत् त्वत्तः मृत्यु प्राणापहर्त्रीं देवतां निर्ऋतिं पापदेवतां अप, नि दध्मसीति उत्तरक्रियानुषङ्गः । तथा यक्ष्म बाह्यमाभ्यन्तर च रोग अप नि दध्मसि अपनिदध्मः त्वत्तः प्रच्यावयामः । असा.

**आ रभस्वेमाममृतस्य श्नुष्टिमच्छिद्यमाना जरदष्टिरस्तु ते ।**
**असुं त आयुः पुनरा भरामि रजस्तमो मोप गा मा प्र मेष्ठाः ॥**

हे आयुष्काम पुरुष इमां अस्माभिः दीयमानां अमृतस्य अमरणत्वस्य श्नुष्टिं प्रस्तुतिं ... उपक्रमस्व, अनुभवितुमिति शेषः । यद्वा, ... वर्तमानः अविच्छिन्ना उदकधारा निनयेदिति विनियोग... ध्यानोपेतः शब्देन उदकमुच्यते । तस्य श्नुष्टिं उदकधारा अच्छिद्यमाना परैर्विच्छेत्तुमनर्हा जरदष्टिः, जरा... पर्यन्त अष्टिः अशन जरदष्टिः, सा ते अस्तु भवतु । तं तदर्थं ते तव असुं प्राण मृत्युनाऽपहृत आयुश्च ... आ भरामि आहरामि । त्व च रजः राग ... सत्त्वगुणप्रतिबन्धक मोप गाः मा प्राप्नुहि । एवं ... आवरक हिताहितविवेकप्रतिरोधकं तमआख्यगुण ... गाः । न केवलं रजस्तमसोरप्राप्तिरेव प्रार्थ्यते, किन्तु मृतिनिवारणमपि—मा प्र मेष्ठा इति । हिंसा च मा प्राप्नुहि । असा.

**जीवतां ज्योतिरभ्येह्यर्वाङा त्वा हरामि शतशारदाय ।**
**अवमुञ्चन्मृत्युपाशानशस्तिं द्राघीय आयुः प्रतरं ते दधामि ॥**

हे पुरुष त्वं जीवता मनुष्याणां ज्योतिः दीप्तिं ज्ञानं अर्वाङ् अस्मदभिमुखः अभ्येहि अभ्यागच्छ । अहं

(१) अथ. ८।२।१–२८.

तु त्वा त्वा आहरामि, मृत्युसकाशादिति शेषः । किमर्थम् । शतशारदाय । शतसंख्याकशरदवधिक आयुः शतशारदम् । शतायुषे, चिरकालजीवनायेत्यर्थः । मृत्युपाशबद्धस्य कथमागमनमिति, तत्राह—मृत्युपाशान् मृत्योः ज्वरशिरोरोगादिनानाविधान् पाशान् अवमुञ्चन् उत्सृजन् । तथा अशस्ति निन्दामवमुञ्चन् । सा हि कोश इव आच्छादयति । एतत्सर्वं सति आयुषि सम्भवतीत्याशङ्क्याह—द्राघीयः अतिदीर्घं शतसंवत्सरलक्षणमायुः ते त्वदर्थं प्रतरं प्रकृष्टतरं दधामि स्थापयामि ।

असा.

**वातात्ते प्राणमविदं सूर्याच्चक्षुरहं तव ।**
**यत्ते मनस्त्वयि तद्धारयामि सं वित्स्वाङ्गैर्वद जिह्वयाऽलपन् ॥**

हे गतासो पुरुष ते तव प्राणं वातात् स्वाश्रयभूताद्बाह्यवायोः सकाशात् अविदं लब्धवानस्मि । प्राणवायोर्मरणावस्थायां वायुप्राप्तेः उत्पत्त्यवस्थायां तत एवोत्पत्तेश्च एवमुच्यते । तथा च श्रूयते—'वातं प्राणं अन्ववसृजतात्' ( ऐब्रा. २।६ ) इति, 'वायुः प्राणो भूत्वा नासिके प्राविशत्' ( ऐआ. २।४।२ ) इति च । अहं तव चक्षुश्च सूर्यादविदम् । पूर्ववन्मृतिसमये चक्षुषः सूर्यप्राप्तेः उत्पत्तिसमयेऽपि सूर्यादेवोत्पत्तेश्च एवमुच्यते । 'सूर्यं चक्षुर्गमयतात्' ( ऐब्रा. २।६ ), 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' ( ऐआ.२।४।२ ) इति च । किञ्च यत् ते मनः उत्क्रमणसमये निर्गतं तत् त्वय्येव धारयामि स्थापयामि । त्वं तु यत एवं अतो विश्वाङ्गैः कृत्स्नैरङ्गैरुपेतः सन् जिह्वया आलपन् व्यक्तमुच्चरन् वद वाचमुदीरय । जीवनस्य अभिवदनं स्पष्टं लिङ्गं इति तत् प्रार्थ्यते । असा.

**प्राणेन त्वा द्विपदां चतुष्पदामग्निमिव जातमभि सं धमामि ।**
**नमस्ते मृत्यो चक्षुषे नमः प्राणाय तेऽकरम् ॥**

हे निर्गतप्राण त्वा त्वा द्विपदां पुरुषादीनां चतुष्पदां गवाश्वादीनां च प्राणेन, सर्वप्राणिनां प्राणेनेत्यर्थः । तेन जातं मथनादुत्पन्नमग्निमिव तं यथा अणीयांसं सन्तं नाल्यादिसाधनेन मुखवायुना अभिसंधमति तद्वदल्पप्राणं सन्तं सर्वप्राणिप्राणेन अभि सं धमामि संयोजयामि प्रभूतप्राणं करोमि । हे मृत्यो ते तव चक्षुषे क्रूराय नमः अकरम् । तथा ते प्राणाय प्रकृष्टाय बलायापि नमः अकरं करोमि । असा.

**अयं जीवतु मा मृतेमं समीरयामसि ।**
**कृणोम्यस्मै भेषजं मृत्यो मा पुरुषं वधीः ॥**

अयं गतासुः पुरुषो जीवतु । मा मृत मरणं मा प्राप्नुयात् । इमं पुरुषं समीरयामसि सम्यक् प्रेरयामः । यथा चेष्टते तथा प्रयतामहे । तदेव एकवदाह—अस्मै मुमूर्षवे पुरुषाय भेषजं चिकित्सां कृणोमि करोमि । हे मृत्यो त्वं तु पुरुषममुं मा वधीः मा जहि ।

असा.

**जीवलां नघारिषां जीवन्तीमोषधीमहम् ।**
**त्रायमाणां सहमानां सहस्वतीमिह हुवेऽस्मा अरिष्टतातये ॥**

जीवलां जीववतीं जीवप्रदामित्यर्थः । नघरुषाम् । न हन्तीति नघा । नघा रुषा रोषोऽस्यां सा नघरुषा । यस्याः कोपोऽपि न घातकस्तादृशीमित्यर्थः । अथवा, घर्षरहिता अघकारिरोषरहिता वा । स्वयं जीवन्तीं कदाचिदपि अशुष्कामित्यर्थः । अथवा सजीवाम् । त्रायमाणां रक्षन्तीं स्वसेविनां रोगपरिहारेण रक्षाकर्त्रीम् । सहमानां रोगस्याभिभवित्रीम् । सहस्वतीं, सहो बलं तद्वतीम् । एवंमहिमोपेतां ओषधीं पाठाख्यां अहं व्याधिनाशकामः इह अस्मिन् शान्तिकर्मणि हुवे आह्वयामि । कस्मै प्रयोजनाय, उच्यते—अस्मै संनिहिताय पुरुषाय, रिष्टं हिंसा, तदभावाय अरिष्टतातये अरिष्टकरणाय । उत्तरमन्त्रे अस्मै मृत्यो अधि ब्रूहीति मृत्युशब्दश्रवणात् अत्रापि मृत्युः संबोध्यः । अथवा, जीवलादयः प्रत्येकमोषधिविशेषाः । ओषधीमित्येतत्प्रत्येकं संबध्यते । इह हुवे इति सर्वत्रान्वयः । असा.

**अधि ब्रूहि मा रभथाः सृजेमं तवैव सन्त्सर्वहाया इहास्तु ।**
**भवाशर्वौ मृडतं शर्म यच्छतमपसिध्य दुरितं धत्तमायुः ॥**

हे मृत्यो त्वं अधि ब्रूहि । पक्षपातेन वचनं अधिवचनम् । मदीयोऽयमिति वद । मा आ रभथाः आरम्भं मा कार्षीः, हन्तुमिति शेषः । हननोद्योगो निषिध्यते ।

तवैव अयं जनस्तवैव, स्वमिति शेषः। अतः इमं स सृज, प्राणैरिति शेषः। अथ इह अस्मिन् भूलोके सर्वहायाः सर्वगतिरस्तु। किञ्च हे भवाशर्वौ युवा भवश्च शर्वश्च भवाशर्वौ ईश्वरमूर्तिभेदौ मृडत सुखयत अमुष्मै शर्म सुख यच्छत दत्तम्। शर्म यच्छतमित्युक्तमर्थं विवृणोति— दुरितं उपस्थित व्याध्यादिलक्षण पाप अपसिध्य निराकृत्य आयुः धत्त स्थापयत प्रयच्छतम्।

असा.

**अस्मै मृत्यो अधि ब्रूहीमं दयस्वोदितोऽयमेतु।**
**अरिष्टः सर्वाङ्गः सुश्रुज्जरसा शतहायन आत्मना भुजमश्नुताम्॥**

हे मृत्यो त्व अस्मै त्वत्तो मृतिमाशङ्कमानाय अधि ब्रूहि असौ मदनुग्रहार्ह इति शब्द कुरु। इम प्रति दयस्व दयां कुरु इम रक्ष वा। अयं इतः अस्मान्मृत्योः उदेतु उद्गच्छतु। उक्तमर्थं स्पष्टमाह— अरिष्टः अहिंसितः सर्वाङ्गः सर्वैरङ्गैश्चक्षुरादिभिः सपन्नः सुश्रुत् सुष्ठु श्रोता जरसा वार्धकावस्थया शतहायनः शत हायना अस्य सः तथोक्तः शतसवत्सर जीवन् आत्मना अनन्यापेक्षः सन् भुज भोग अश्नुता प्राप्नोतु।

असा.

**देवानां हेतिः परि त्वा वृणक्तु पारयामि त्वा रजस उत्त्वा मृत्योरपीपरम्।**
**आरादग्निं क्रव्यादं निरूहं जीवातवे ते परिधिं दधामि॥**

देवानां रुद्रादीनां हेतिः आयुध त्वा त्वा परि वृणक्तु परिवर्जयतु हिंसा मा कुर्यात्। त्वा त्वा रजसः मूर्छालक्षणादावरणात् पारयामि पालयामि वा। किंच त्वा त्वा मृत्योः सकाशात् उदपीपरं उद्धरामि। आरात् दूरदेशे एव क्रव्यादं मांसाशनमग्निं निरौहं निरूहामि निर्गमयामि च। ते तव जीवातवे जीवनाय परिधि प्राकारं दधामि स्थापयामि च, देवयजनमग्निमिति शेषः। असा.

**यत्ते नियानं रजसं मृत्यो अनवधर्ष्यम्।**
**पथ इमं तस्माद्रक्षन्तो ब्रह्मास्मै वर्म कृण्मसि॥**

हे मृत्यो ते तव संबन्धि यत् नियानं, नियान्त्यत्रेति नियानं मार्गः। कीदृक्। रजसं रजोमयं, अनवधृष्यं केनापि धर्षितुमशक्यम्। तस्मादुक्तलक्षणात् पथः मार्गात् इम मुमूर्षु पुरुष रक्षन्तो वय अस्मै मुमूर्षवे ब्रह्म परिवृढ शान्तिरूप कर्म उदीरितलक्षण मन्त्रसमूह वा वर्म तनुत्र कृण्मसि कृण्मः कुर्मः। असा.

**कृणोमि ते प्राणापानौ जरां मृत्युं दीर्घमायुः स्वस्ति।**
**वैवस्वतेन प्रहितान्यमदूतांश्चरतोऽप सेधामि सर्वान्॥**

हे आयुष्काम पुरुष ते तव प्राणापानौ शरीरे ऊर्ध्वाधःसचारिणौ वायू कृणोमि। प्रतिपद कृणोमि ते इति यथोचित तत्तद्वाक्यशेषोऽध्याहर्तव्यः। ते प्राणापानौ स्थिरौ कृणोमि, जरा मृत्युं च। त्वां यथा न स्पृशतस्तथा कृणोमि। दीर्घमायुश्च ते कृणोमि। तथा कृत्वा स्वस्ति। अविनाशिनामैतत्। अविनाश कृणोमि। कथमेतत्सर्व घटते यमदूतेष्वासन्नेषु इति, तत्राह— वैवस्वतेन यमेन प्रहितान् प्रेषितान् चरतः आनयनाय व्यापारयतः सर्वान् यमदूतान् अप सेधामि दूरे निराकरोमि, मन्त्रसामर्थ्यादित्यभिप्रायः। असा.

**आरादरातिं निर्ऋतिं परो ग्राहिं क्रव्यादः पिशाचान्।**
**रक्षो यत्सर्वं दुर्भूतं तत्तम इवाप हन्मसि॥**

अराति अदात्री शत्रुभूता वा पुरोग्राहिं पुरस्ताद्ग्रहणशीला एवविधा निर्ऋति पापदेवता कलहोत्पादिकाम्। 'यत्रैतत्कुलं कलहि भवति तन्निर्ऋतिगृहीतमित्याचक्षते' (कौ. १३।५) इति सूत्रकारवचनात्। आरात् हन्मसीति संबन्धः। निकृष्ट हन्मः। तथा क्रव्यादः मासाशनान् पिशाचान् अप हन्मसि। एवं दुर्भूत दुष्टत्वमापन्नं यत्सर्व रक्षोऽस्ति राक्षसजातिरस्ति। अथवा दुष्ट च तत् भूत च दुर्भूत, तादृग्रक्षः तत् तम एव तमोवदावरकमेव। तत् अप हन्मः। असा.

**अग्नेष्टे प्राणममृतादायुष्मतो वन्वे जातवेदसः।**
**यथा न रिष्या अमृतः सजूरसस्तत्ते कृणोमि तदु ते समृध्यताम्॥**

अमृतात् अमरणाद्देवात् आयुष्मतः चिरजीविनः। 'अग्निरायुष्मान्' (तैस. २।३।१०।३) इति हि श्रुतिः। तथाविधमाहात्म्यवतः अग्नेः सकाशात् हे

निर्ऋत्यादिना अपहृतप्राण पुरुष ते प्राण वन्वे याचे । पुनः कीदृशादग्नेः । जातवेदसः जातप्रज्ञाज्जातधनाद्वा । हे पुरुष त्व च यथा न रिष्याः हिंसितो न भवेः, अमृतः अमरणः सजूः सह प्रीयमाणश्च असः भवेः, तत् तादृक् शान्तिकर्म ते त्वदर्थ कृणोमि करोमि । तदु तदेव ते तव समृध्यतां समृद्धं भवतु । अथा.

**शिवे ते स्तां द्यावापृथिवी असंतापे अभिश्रियौ ।**
**शं ते सूर्य आ तपतु शं वातो वातु ते हृदे ।**
**शिवा अभि क्षरन्तु त्वापो दिव्याः पयस्वतीः ॥**

हे कुमार ते तव निष्क्रमणसमये । यद्वा, गोदानादिभिः कर्मभिः सस्क्रियमाण पुरुष ते तव द्यावापृथिवी द्यावापृथिव्यौ देव्यौ शिवे मङ्गले कल्याणकारिण्यौ स्ता भवताम् । तथा असतापे संतापमकुर्वत्यौ स्ताम् । अधिश्रियौ प्राप्तश्रीके श्रीपदे स्ताम् । तथा सूर्यश्च ते त्वदर्थ शं सुख यथा भवति तथा आ तपतु प्रकाशयतु । एवं ते हृदे हृदयाय मनोऽनुकूलतायै वातः वायुः शं सुख यथा भवति तथा वातु सचरतु । तथा त्वा त्वा प्रति दिव्याः दिवि भवाः पयस्वतीः बहुभिः पयोभिः स्वादुरसैरुपेता आपः शिवाः सत्यः अभि क्षरन्तु अभि स्रवन्तु ।

अथा.

**शिवास्ते सन्त्वोपधय उत्त्वाऽहार्षमधरस्या उत्तरां पृथिवीमभि ।**
**तत्र त्वादित्यौ रक्षतां सूर्याचन्द्रमसावुभा ॥**

हे कुमार ते तव ओषधयः आहारार्थमुपयुज्यमाना व्रीह्यादयः शिवाः सुखकराः सन्तु भवन्तु । त्वा त्वा अधरस्याः पृथिव्याः सकाशात् उत्तरा पृथिवीं अभिलक्ष्य उदाहार्ष उद्धरणमकार्षम् । पृथिव्या एकस्या अपि अधरोत्तरभावः अशभेदेन त्रित्वादुपपद्यते । 'तिस्रो भूमीर्धारयन् त्रीरुँत द्यून्' ( ऋसं. २।२७।८ ) 'तिस्रो महीरुपराः' ( ऋसं. ७।८७।५ ) इत्यादिमन्त्रेषु त्रित्वस्याम्नानात् । अवममध्यमोत्तमभेदेन पृथिव्यास्त्रैविध्यमाम्नायते मन्त्रान्तरे— 'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्या, परमस्यामुत स्थः' ( ऋसं. १।१०८।९ ) इति । अतः अवमस्याः सकाशात् परमा पृथिवीमभिलक्ष्य उद्धरणमत्राभिधीयते । तत्र उत्तरस्यां पृथिव्या हे बालक त्वा त्वा आदित्यौ अदितेः पुत्रौ देवौ रक्षतां पालयताम् । कौ तावादित्यौ इति, तौ दर्शयति— उभा उभौ सूर्याचन्द्रमसौ । अथा.

**यत्ते वासः परिधानं यां नीविं कृणुषे त्वम् ।**
**शिवं ते तन्वे तत्कृण्मः संस्पर्शेऽद्रूक्ष्णमस्तु ते ॥**

हे बालक ते तव परिधान उपरि आच्छादनीयं यद्वासोऽस्ति त्वं च यां नीविं कृणुषे । नाभिदेशे सबद्ध वस्त्र नीविरित्युच्यते, मध्यदेशाच्छादनमित्यर्थः । नीव्यपेक्षया यामिति स्त्रीलिङ्गव्यपदेशः । तत् द्विप्रकारकं वस्त्रं ते तन्वे तव शरीराय शिवं सुखकर कृण्मः । तच्च वस्त्रं सस्पर्शे विषये अद्रूक्ष्ण अरूक्ष यथा मार्दवमश्नुते व्याप्नोति गच्छति तथा कृण्मः । अथा.

**यत्क्षुरेण मर्चयता सुतेजसा वप्ता वपसि केशश्मश्रु ।**
**शुभं मुखं मा न आयुः प्र मोषीः ॥**

यत् यदा हे देव सवितः सस्कारक पुरुष वा त्वं वप्ता केशानां छेत्ता नापितः सन् मर्चयता व्यापारयता सुतजसा शोभनतेजोयुक्तेन क्षुरेण केशश्मश्रु शिरोरोमाणि मुखरोमाणि च वपसि । यद्यपि वपतिर्धातुर्बीजसंतानार्थस्तथापि केशसमभिव्याहारात् छेदने वर्तते । तदा वपनं कुर्वन् मुख गोदानचौलोपनयनैः सस्क्रियमाणस्य बालस्य मुख शुभ दीप्त तेजस्वि कुरु । वपने सति मुखविकाशभावादेवं प्रार्थ्यते । नः अस्माक पुत्रस्य आयुः मा प्र मोषीः । अथा.

**शिवौ ते स्तां व्रीहियवावबलासावदोमधौ ।**
**एतौ यक्ष्मं वि बाधेते एतौ मुञ्चतो अंहसः ॥**

हे अन्नमश्नन् बालक ते तव व्रीहियवौ अन्नत्वेन कल्पितौ शिवौ स्तां मङ्गलौ सुखकरौ भवताम् । अबलासौ शारीरबलस्य अक्षेप्तारौ बलकरावित्यर्थः । तथाविधौ स्ताम् । यथा अदोमधू उपयोगानन्तरं मधुरौ । एवमिष्टप्राप्तिमाशास्य अनिष्टपरिहारमाशास्ते – एतौ व्रीहियवौ यक्ष्म शरीरगत रोग वि बाधेते विशेषेण पीडयतः । एतावेव व्रीहियवौ कुमार अंहसः पापात् मुञ्चतः मोचयतः ।

अथा.

**यदश्नासि यत्पिबसि धान्यं कृष्याः पयः ।**
**यदाद्यं यदनाद्यं सर्वं ते अन्नमविषं कृणोमि ॥**

हे कुमार त्व यत् धान्य कृच्छ्रात् अश्नासि अभ्य वहरसि। तथा यत् धान्यं कृच्छ्रात् पयः पयोवत्सारभूत पिष्टमय अन्न पयोमिश्रित वा धान्य व्रीह्यादिरूप पिबसि। यत् आद्य अदनीय सुखेन भक्षणीयं यच्च अनाद्य अदनानर्हं कठिनद्रव्यम्। अत्यन्तकटुतिक्तत्वाद्वा अनाद्यम्। सर्वं यदश्नासीत्यादिना उक्त अन्न अविष निर्विष अमृत कृणोमि करोमि। असा.

**अह्ने च त्वा रात्रये चोभाभ्यां परि दद्मसि।**
**अरायेभ्यो जिघत्सुभ्य इमं मे परि रक्षत॥**

हे कुमार त्वा त्वा अह्ने अहर्देवतायै रात्रये रात्रिदेवतायै च उभाभ्या देवताभ्यां परि दध्मसि परिदद्मः रक्षार्थ प्रयच्छामः। उक्तकालद्वयव्यतिरेकेण कालान्तराभावात् तदुभयाभिमानिदेवताके रक्षणे सति सर्वदा बालस्य रक्षा भवतीत्यभिप्रायः। परिदानप्रकार उच्यते— अरायेभ्यः अधनेभ्यो धनापहर्तृभ्यो वा जिघत्सुभ्यः अदनेच्छावद्भ्यो भक्षकेभ्यः रक्षःपिशाचादिभ्यः सकाशात् इम मे मदीय बाल परि रक्षत परितः पालयत हे विश्वे देवाः अह्नि सचरद्भ्यो रात्रौ सचरद्भ्यश्च। असा.

**शतं तेऽयुतं हायनान्द्वे युगे त्रीणि चत्वारि कृण्मः।**
**इन्द्राग्नी विश्वे देवास्तेऽनु मन्यन्तामहृणीयमानाः॥**

हे बालक ते तव शतं हायनान् शतसंख्याकान् संवत्सरान्। 'शतायुः पुरुषः' (तैब्रा. १।७।६।२) इति श्रुतिविहितान् अयुतं अयुतसंख्याकान् कृण्मः कुर्मः। तथा ते द्वे युगे। जायापतिलक्षणं एक युगम्। स्त्र्यपत्यपुमपत्यलक्षणं अपरं युगम्। एवं द्वे युगले। त्रीणि युगानि चत्वारि युगानि च कुर्मः। उपलक्षणमेतत्। पुत्रपौत्रादिद्वारा अनेकयुगलानि कुर्मः। यद्यपि एकशतपर्यन्तं जीवनमपि मनुष्याणा न सभवति तथापि आकल्पं जीव कल्पायुष्यमस्तु इत्याद्याशीर्दर्शनात् दीर्घायुषि तात्पर्य न विरुध्यते। अथवा एवं योजना। हे बालक ते शतं हायनान् कृण्मः। तानेव अयुतं च हायनान् कृण्मः। तानेव द्वे युगे कृण्मः। त्रीणि च युगानि कृण्मः। चत्वारि युगानि कृण्म इति। अयमभिप्रायः—तव प्रथमं क्रियमाणेन संस्कारविशेषेण सर्वमनुष्यसाधारणान् शतसवत्सरान् कुर्मः। तानेव अयुतसख्याकान् कुर्मः। चतुर्णां युगानां सधिसवत्सरान् विहाय युगचतुष्टयस्य मिलित्वा अयुतं सवत्सराः स्युः। तान् विभज्य द्वे कलिद्वापराख्ये। त्रीणि त्रेतासहितानि। चत्वारि कृतयुगसहितानि कुर्म इति आशास्यते। एवरूपा प्रार्थना ते प्रसिद्धा इन्द्राग्नी विश्वे च देवा अहृणीयमानाः ईदृक्प्रार्थना कथ कर्तुं युज्यते इति हृणा लज्जां क्रोधं वा अकुर्वाणाः सन्तः अनु मन्यन्ता अनुमति कुर्वताम्। असा.

**शरदे त्वा हेमन्ताय वसन्ताय ग्रीष्माय परि दद्मसि।**
**वर्षाणि तुभ्यं स्योनानि येषु वर्धन्त ओषधीः॥**

हे बालक त्वा त्वा शरदे ऋतवे परि दद्मसि परिदद्मः। परिदान रक्षार्थ दानम्। हे शरदृतो अमु रक्षेति प्रयच्छाम इत्यर्थः। तावत्पर्यन्त जीवन्त हेमान्ताय परिदद्मः। ततो वसन्ताय, ततो ग्रीष्माय च परिदद्मः। उपलक्षणमेतत्। सर्वेभ्योऽपि ऋतुभ्यः प्रयच्छामीत्युक्तं भवति, सर्वेष्वपि ऋतुषु जीवनस्य अपेक्षितत्वात्। हे बालक तुभ्य वर्षाणि जीवनकालमध्यपातीनि षष्ट्युत्तरशतत्रयदिनसख्याकानि प्रभवादिरूपाणि स्योनानि सुखकराणि, भवन्त्विति शेषः। येषु वर्षेषु ओषधीः ओषध्यः भोगसाधनभूतव्रीह्यादयो वर्धन्ते अभिवृद्धिं प्राप्नुवन्ति, तानि वर्षाणीति पूर्वत्र सबन्धः। वर्षाणि स्वीयाभिरभिवृद्धाभिरोषधीभिः तव सुखकराणि सन्तु इत्यर्थः। असा.

**मृत्युरीशे द्विपदां मृत्युरीशे चतुष्पदाम्।**
**तस्मात्त्वां मृत्योर्गोपतेरुद्भरामि स मा बिभेः॥**

द्विपदा पदद्वयभूताना मनुष्यपक्ष्यादीना मृत्युः सर्वप्राणिसहर्ता देवः ईशे ईष्टे स्वामी भवति। तथा चतुष्पदा गवाश्वादीनां मृत्युरेव ईष्टे। न हि मृत्युमपलपन् कश्चिदपि प्राणन् दृश्यते ऋते मुमुक्षोः। यस्मादेव तस्मात् त्वा गोपतेः। गावः पराधीनत्वात् यथा गोपाल नातियन्ति एवमेतेऽपि मृत्योर्वशगा इति मृत्युर्गोपतिरित्युच्यते। अथवा गोशब्देनात्र पशवोऽभिधीयन्ते। पशवो द्विपादश्चतुष्पादश्च। तेषामुभयेषां पतिः।

तादृशात् मृत्योः सकाशात् उन्द्वरामि उद्धरामि, मन्त्रवीर्यादित्यभिप्रायः । स मृत्युमीतस्त्व मा बिभेः भीतिं मा कार्षीः । असा.

**सोऽरिष्ट न मरिष्यसि न मरिष्यसि मा बिभेः ।**
**न वै तत्र म्रियन्ते नो यन्त्यधमं तमः ॥**

हे अरिष्ट, न विद्यते रिष्ट दैवं यस्य सः अरिष्टः, दैवविमुख इत्यर्थः । स सम्बोध्यते । अथवा, रिष्ट रेषो हिंसा सा यस्य नास्ति सः अरिष्टः, निरस्तहिंस इत्यर्थः । मृत्युकर्तृकहिंसारहित इति यावत् । तादृश त्व न मरिष्यसि मृतिं न प्राप्नोषि । दाढर्याय पुनराह— न मरिष्यसि त्वमतो मा बिभेः मरिष्यामीति भीति मा प्राप्नुहि । भीत्यभावे कारणमाह— न वै तत्रेति । तत्र तस्मिन् शान्तिकर्मविषये तस्मिन् शान्तिकर्मयुक्ते देशे वा, उत्तरमन्त्रे 'यत्रेद ब्रह्म क्रियते' इति वक्ष्यमाणत्वात् । न म्रियन्ते वै न प्राण त्यजन्ति खलु । वैशब्दः प्रसिद्धौ । सा च महाशान्तिकृत्सु पुरुषेषु सार्वजनीना । मा भून्मृतिः । अधमतमःप्राप्तिः किमस्ति, सापि नेत्याह— नो यन्त्यधम तम इति । अधमं तमः मरणकालीना दुःसहा मूर्छा, तामपि नैव प्राप्नुवन्ति । यद्वा, मृत्यनन्तर दुष्कर्माभिः प्राप्तव्य सवितृप्रकाशशून्य अधोलोकस्थ तामिस्रम् । तस्य प्राप्तिर्नैवेत्यर्थः । असा.

**सर्वो वै तत्र जीवति गौरश्वः पुरुषः पशुः ।**
**यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कम् ॥**

पूर्वमन्त्रे 'सोऽरिष्ट न मरिष्यसि, न वै तत्र म्रियन्ते' इति यदुक्त तदेवास्मिन्मन्त्रे सोपपत्तिक विस्पष्टीक्रियते । अर्थस्तु स्पष्ट एव । सर्वशब्दस्य विवरणं गौरश्व इत्यादि । ब्रह्म परिवृढं महाशान्त्याख्य कर्म । परिधिः रक्षःपिशाचादिनिवारकः प्राकारः । यथा यज्ञे अग्नेः परिधिः एवम् । तच्च परिधान किमर्थमिति तत्राह—जीवनाय कमिति । जीवनायेत्येतावतो नाधिक, कमित्यस्य पूरणार्थत्वात् । तथा च यास्कः— 'मिताक्षरेष्वनर्थकाः कमीमिद्' इत्युक्त्वा उदाजहार 'शिशिर जीवनाय कमिति शिशिरं जीवनाय' ( नि. १।१० ) इति । असा.

**परि त्वा पातु समानेभ्योऽभिचारात्सबन्धुभ्यः ।**
**अमम्रिर्भवामृतोऽतिजीवो मा ते हासिपुरसवः शरीरम् ॥**

हे शान्त्यर्थिन् पुरुष त्वा त्वां मया कृत शान्तिकर्म परि परितः पातु पालयताम् । कुतः सकाशात् । समानेभ्यः विद्यैश्वर्यपराक्रमैः सदृशेभ्योऽन्येभ्यः । तथा सबन्धुभ्यः समानबन्धुभ्यः । अभिचारात् तत्कृतात् हिंसाप्रयोगात् । त्व च अमम्रिः अमरणशीलो भव । तथा अमृतः मृतिरहितः अतिजीवः अतिशयितजीवो भव । ते तव शरीर असवः प्राणाः चक्षुरादीन्द्रियरूपा अमुख्यप्राणाः प्रसिद्धा मुख्यप्राणाश्च मा हासिपुः मा जहयुः । असा.

**ये मृत्यव एकशतं या नाष्ट्रा अतितार्याः ।**
**मुञ्चन्तु तस्मात्त्वां देवा अग्नेर्वैश्वानरादधि ॥**

ये प्रसिद्धा मृत्यवः हिंसकाः यमस्य हेतयः ज्वरशिरोव्यथादयः एकशतं एकशतसख्याका मुख्यभूताः सन्ति । याश्च नाष्ट्राः नाशकारिण्यः अतितार्याः अतितरीतव्या लङ्घनीया हिंसिकाः सन्ति । तस्मादुक्ताद्द्विविधात् मृत्युरूपात् नाष्ट्रारूपाच्च त्वां देवाः इन्द्रादयो मुञ्चन्तु मोचयन्तु । तथा वैश्वानरादग्नेरधि अग्नेः सकाशात् त्वां मुञ्चन्तु । असा.

**अग्नेः शरीरमसि पारयिष्णु रक्षोहासि सपत्नहा ।**
**अथो अमीवचातनः पूतद्रुर्नाम भेषजम् ॥**

अनेन मन्त्रेण पूतद्रुनामकः सर्वारिष्टनिवर्तको रक्षामण्युपादानभूतो वृक्षविशेषः कथ्यते । हे पूतद्रो त्वं अग्नेः पारयिष्णु पारप्रापक शरीरमसि । वृक्षस्यान्तः अग्नेरवस्थानात् शरीरत्वव्यपदेशः । विशेषतः अस्य वृक्षस्य शरीरत्वाभिधानम् । अथवा, पारयिष्णुरिति पृथग्विशेषणम् । स्वनिर्दिष्टव्यापारस्य पारप्रापकः रक्षोहा रक्षसां हन्ता असि भवसि । सपत्नहा शत्रुहन्ता च असि । अथो अपि च अमीवचातनः रोगस्य प्रच्यावकः । एवंमहिमा त्व पूतद्रुर्नाम पूतद्रुसज्ञक भेषज औषधम् । तादृशस्त्व अभिमतं साधयेति शेषः । असा.

अङ्गिरसां द्युलोकगमनम्

**इत एत उदारुहन् दिवस्पृष्ठान्यारुहन् ।**
**प्र भूर्जयो यथा पथा द्यामङ्गिरसो ययुः ॥**

(१) अस. १८।१।६१, सासं. १।१।१० (९२) वस्पृ ( व. पृ ) पथा द्या ( पथोद्या ).

शवसंस्कर्तारः पुरुषाः एतत् मृतशरीर इतः अस्मात् भूप्रदेशात् उदारुहन् ऊर्ध्वं शकटादिक आरोहयन्, इत एतदिति शकटे शयने वा प्रेत निदध्यादिति विनियोगात्। अनन्तर दिवः द्युलोकस्य पृष्ठानि स्प्रष्टव्यानि उपरितनस्थलानि भोग्यस्थानानि आरुहन् आरोहयन्। द्युलोकं केन पथा आरोहयन्निति, तत्राह—भूर्जयः भरणवन्तो भुव जितवन्तो वा अङ्गिरसः यथा यादृशेन पथा मार्गेण द्यां द्युलोक प्र ययुः प्राप्ताः, तेन मार्गेण दिवस्पृष्ठान्यारुहन् इति सबन्धः। असा.

मधुयुक्तासंबाधलोकप्राप्तिः स्वधाकरस्य

**असंबाधे पृथिव्या उरौ लोके नि धीयस्व।**
**स्वधा याश्चकृषे जीवन् तास्ते सन्तु मधुश्चुतः॥**

हे मुमूर्षो प्रेत वा असबाधे, सबाधः समर्दः, तद्रहिते उरौ विस्तीर्णे पृथिव्याः अग्निहोत्रवेदिलक्षणाया लोके लोक्यमाने स्थाने नि धीयस्व धापितो भव। पूर्वं त्व जीवन् जीवनवान् याः स्वधाः, स्व आत्मान दधाति पुष्णाति धिनोतीति स्वधा अन्न, दैवानि हवींषि स्वधाकारेण दत्तानि पित्र्याणि हवींषि च चकृषे कृतवान् असि। ताः स्वधाः ते तव मधुश्च्युतः मधुप्रवाहक्षारयित्र्यः सन्तु भवन्तु। उपलक्षणमेतत्। मधुररसघृतसोमादिप्रवाहरूपा भवन्तु। असा.

मरणोत्तरं मनसैवात्रागमनं, पितृभिर्यमेन च सह संगति, मृत्युर्यमस्य दूत, तेन नीतस्य पितृस्थाने यमराज्ये वास· सर्वाङ्गपूर्णस्य

**ह्वयामि ते मनसा मन इहेमान् गृहाँ उप जुजुषाण एहि।**
**सं गच्छस्व पितृभिः सं यमेन स्योनास्त्वा वाता उप वान्तु शग्माः॥**

हे प्रेत पुरुष ते तव संबन्धि मनः अन्तःकरण अस्मदीयेन मनसा इह अस्मिन् लोके ह्वयामि आह्वयामि। इमान् अस्मदीयान् गृहान् येषु त्वामुद्दिश्य और्ध्वदेहिक कर्म क्रियते तान् जुजुषाणः सेवमानः प्रीयमाणो वा उपैहि उपागच्छ। उपेत्य च संस्कारोत्तरकालं पितृभिः पितृपितामहप्रपितामहैः स गच्छस्व साविण्ड्यकरणेन संगतो भव। यमेन तद्राजेन च संगतो भव। स्योनाः पितृलोकगमनसमये तव अध्वजन्यश्रममपनेतुं सतताः नैरन्तर्येण वर्तमानाः शग्माः सुखकराः शैत्यमान्द्यसौरभ्ययुक्ताः वाताः वायवः त्वा त्वा उप वान्तु उपगच्छन्तु। असा.

**उत्त्वा वहन्तु मरुत उदवाहा उदप्रुतः।**
**अजेन कृण्वन्तः शीतं वर्षेणोक्षन्तु बालिति॥**

हे प्रेत मरुतः मरुत्संज्ञका देवास्त्वा त्वां उद्वहन्तु ऊर्ध्वमाकाशे वहन्तु धारयन्तु। यद्वा, उदवाहसमभिव्याहारात् मरुच्छब्देन वायव उच्यन्ते। वायवस्त्वामुपरिलोकं प्रापयन्तु इत्यर्थः। अपि च उदवाहाः, उदकं वहन्ति धारयन्तीति उदवाहा मेघाः, अत एव उदप्लुतः उदकैर्भूमिं प्लावयन्तः आर्द्रीकुर्वन्तः, शीत शैत्यगुण कृण्वन्तः कुर्वन्तः, एवगुणविशिष्टा मेघाः समीपबद्धेन अजेन सहितं त्वा वर्षेण वर्षजलेन उक्षन्तु सिञ्चन्तु। इतिशब्दः बाल् इत्यस्य अनुकरणशब्दतां द्योतयति। उक्षणसमये बाल् इत्येवमात्मकः शब्दो यथा जायेत तथा उक्षन्तु इत्यर्थः। असा.

**उदह्वमायुरायुषे क्रत्वे दक्षाय जीवसे।**
**स्वान् गच्छतु ते मनो अधा पितॄँरुप द्रव॥**

हे प्रेत ते त्वदीयमायुः उदह्व उच्चैःस्वरेण आह्वयामि। किमर्थम्। आयुषे जीवनाय, क्रत्वे क्रतवे यज्ञादिकर्मणे, दक्षाय बलाय। यद्वा, 'प्राणो वै दक्षः। अपानः क्रतुः' (तैस. २।५।२।४) इति श्रुतेर्दक्षक्रतुशब्दाभ्या प्राणापानावभिधीयेते। क्रत्वे अपाननव्यापाराय दक्षाय प्राणनव्यापाराय। प्राणवायोर्नासारन्ध्राद्बहिर्निःसरणं प्राणनम्। अन्तराकर्षणं अपाननम्। जीवसे जीवनाय प्राणधारणाय। एतत्सर्वं आयुषि सत्येव भवतीति तदाह्वान क्रियते इत्यर्थः। ते त्वदीयं मनः स्वां स्वकीयां तनु सस्कारजन्यमभिनवशरीर गच्छतु। अध अथ शरीरप्राप्त्यनन्तर पितॄन् वस्त्रादिरूपान् उप द्रव उपलक्ष्य गच्छ। असा.

**मा ते मनो मासोर्माङ्गानां मा रसस्य ते।**
**मा ते हास्त तन्वः किं चनेह॥**

हे प्रेत पुरुष ते तव मनः मानसमिन्द्रियं मा हास्त त्वां मा परित्याक्षीत्। ओहाक् त्यागे। व्यत्ययेन

(१) अस. १८।२।२०–२४.

आत्मनेपदम्। यद्वा, 'ओहाङ् गतौ' इत्यस्य रूपम्। मा गच्छतु त्वां विहाय इह मा तिष्ठतु। तथा असोः त्वदीयस्य प्राणस्य किं चन किमपि रूप मा हास्त। अङ्गाना अवयवानां हस्तपादादीना किमपि मा हास्त। तथा ते तव देहसबन्धिनो रसस्य रुधिरादेः किमपि मा हास्त। इह अस्मिल्लोके ते तव तन्वः शरीरस्य किं चन किमप्यङ्ग मा हास्त। लोकान्तरे मनःप्राणादिसर्वाङ्गसहितशरीरयुक्तो भवेत्यर्थः। असा.

**मा त्वा वृक्षः सं बाधिष्ट मा देवी पृथिवी मही।**
**लोकं पितृषु वित्त्वैधस्व यमराजसु॥**

हे प्रेत त्वा त्वा वृक्षः त्वदाश्रयभूतो मा स बाधिष्ट संबाध हिंसन मा कार्षीत्। तथा देवी द्योतमाना दानादिगुणयुक्ता वा मही महती पृथिवी त्वदाश्रयभूता भूमिः त्वां मा स बाधिष्ट। त्व च यमराजसु, यमो राजा ईश्वरो येषां ते यमराजानः, तथाविधेषु पितृषु पितृदेवतासु लोक स्थान वित्त्वा लब्ध्वा एधस्व वर्धस्व। असा.

**यत्ते अङ्गमतिहितं पराचैरपानः प्राणो य उ वा ते परेतः।**
**तत्ते संगत्य पितरः सनीडा घासाद्घासं पुनरा वेशयन्तु॥**

हे प्रेत ते तव यत् अङ्ग शरीर पराचैः पराङ्मुख अतिहित अतीत्य स्थित, अतिक्रम्य गतमित्यर्थः। तस्मिन् शरीरे वर्तमानः अपानः अपानवायुः प्राणः प्राणवायुः। उशब्दः अप्यर्थे। अपि वा ये च अन्ये चक्षुःश्रोत्रादिरूपाः सप्तशीर्षण्याः प्राणास्ते त्वदीयाः परेताः परागताः, अपुनरावृत्तये शरीरान्निर्गता इत्यर्थः। ते त्वदीय तत् सर्व सनीळाः समाननिलयाः पितरः पितृदेवताः सगत्य संघीभूत्वा घासात्, अद्यते भुज्यते अस्मिन्निति घासः भोगायतन शरीर, घासात् भोजनाधिकरणाच्छरीरात् घासं भोजनाधिकरण अन्यच्छरीर पुनरा वेशयन्तु अभिप्रापयन्तु। असा.

**अपेमं जीवा अरुधन् गृहेभ्यस्तं निर्वहत परि ग्रामादितः।**
**मृत्युर्यमस्यासीद्दूतः प्रचेता असून् पितृभ्यो गमयां चकार॥**

जीवाः जीवन्तः प्राणधारिणो बान्धवा इम प्रेत गृहेभ्यः सकाशात् अपारुधन् प्रेतशरीर अपागमयन्तु इत्यर्थः। तं प्रेतदेह इतः अस्मात् ग्रामात्। परिः पञ्चम्यर्थानुवादी। यद्वा, परिहरणार्थः। हे बान्धवाः त मृतदेह परिहृत्य निर्वहत ग्रामान्निर्गमयत। कुत इत्यत आह—मृत्युः मारकः पुरुषो यमस्य राज्ञो दूतः कर्मकर आसीत् अभवत्। प्रचेताः प्रकृष्टज्ञानः सः म्रियमाणस्य पुरुषस्य असून् प्राणान् पितृभ्यः पितॄन् अनुप्रवेशयितु गमया चकार प्रापयामास। असा.

मृतस्य अश्वावतीनदीतरणम्

**अश्वावतीं प्र तर या सुशेवार्क्षाकं वा प्रतरं नवीयः।**
**यस्त्वा जघान वध्यः सो अस्तु मा सो अन्यद्विदत भागधेयम्॥**

हे प्रेत अश्वावतीं, अश्वा अस्या सन्तीति अश्वावती, अश्वानां आकारभूता नदी। सञ्ज्ञाशब्दोऽयम्। एतत्सञ्ज्ञा नदीं प्र तरय प्रकर्षेण तारय उत्तारय। सा च नदी सुशेवा अस्मभ्यं सुसुखा भवतु। तथा ऋक्षाक वा। वाशब्दश्चार्थे। ऋक्षाकं ऋक्षैः भल्लूकैरुपेत दुष्टमृगनिषेवित नवीयः नवतरं अदृष्टपूर्व अरण्यमपि प्रतरं प्रकर्षेण तरामि। हे प्रेत त्वा त्वा यः पुरुषः जघान स वध्यः वधार्हः अस्तु भवतु। स घातकः पुरुषः अन्यत् भागधेय पूर्व उपभुक्तादन्यदुपभोग्य वस्तु मा विदत मा लभता निर्धनो भवत्वित्यर्थः। असा.

यमः पर सर्वस्मात् तिष्ठति, स च मृतार्थस्थानदाता

**यमः परोवरो विवस्वान् ततः परं नाति पश्यामि किं चन।**
**यमे अध्वरो अधि मे निविष्टो भुवो विवस्वानन्वाततान॥**

(१) असं. १८।२।२५, तैआ ६।७।२ ( मा त्वा वृक्षौ संबाधिष्टां मा माता पृथिवि त्वम्। पितॄन् ह्यत्र गच्छास्येधासं यमराज्ये॥ ).
(२) असं १८।२।२६.

(१) असं. १८।२।२७.
(२) असं. १८।२।३१.
(३) असं. १८।२।३२.

यमः विवस्वतः पुत्रः परः तेजसा अधिकोऽभवत्। विवस्वान् यमस्य पिता आदित्यः अवरः तेजसा निकृष्टोऽभवत्। यमस्तेजसा पितुरपि अधिकोऽभवदित्यर्थः। ततः तस्मात् यमात् परं उत्कृष्टं किं चन किमपि प्राणिजात नाति पश्यामि अतिक्रान्तं न जानामि। तस्मिन् सर्वोत्कृष्टे यमे मे मदीयः अध्वरो यज्ञः अधि निविष्टः अधिक अवस्थितः, तत्प्रीतिकरो वर्तते इत्यर्थः। यज्ञस्य सिद्ध्ये विवस्वान् तत्पिता सूर्यः भुवः भूप्रदेशान् अन्वाततान स्वकिरणैर्विस्तारितवान्। असा.

[1]शं तप माऽति तपो अग्ने मा तन्वं तपः।
वनेषु शुष्मो अस्तु ते पृथिव्यामस्तु यद्धरः॥

हे अग्ने शं सुखं यथा भवति तथा प्रेतशरीरं तप दह। मा अति तपः अतितापं मा कार्षीः। अतिदहने हि अस्थीन्यपि भस्मीभवन्ति। तेषां सञ्चयनादिसंस्कारेण प्रतिविधानादतिदाहो निषिध्यते। तथा तन्वः शरीराणि अस्मत्सबन्धीनि मा तपः मा धाक्षीः। तथा ते त्वदीयः शुष्मः शोषको ज्वालासमूहो वनेषु अरण्येषु अस्तु भवतु। हरः रसहरणशीलं यत् त्वदीयं तेजः तत् पृथिव्या भूम्या अस्तु भवतु। असा.

[2]ददाम्यस्मा अवसानमेतद्य एष आगन् मम चेदभूदिह।
यमश्चिकित्वान् प्रत्येतदाह ममैष राय उप तिष्ठतामिह॥

यमो ब्रूते—अस्मै मृताय पुरुषाय अवसानं, अवस्यन्ति निवसन्ति अस्मिन्निति अवसानं, आवासस्थानम्। एतत् स्थानं ददामि, यत् यस्मात् कारणात् एष पुरुषः आगन् मत्समीपं आगमत्। स च आगतः पुरुषः इह अस्मिन् लोके मम सबन्धी अभूच्चेत्, यदि मत्सबन्धी मत्परिचरणशीलो भवेदित्यर्थः। तदा अस्मै आगतायेति पूर्वेण संबन्धः। एवं चिकित्वान् जानन् यमो मृतं पुरुषं प्रति एतद्वाक्यं आह ब्रवीति। एषः मत्समीपं आगतः पुरुषः रायः, रायति स्तौतीति रायः, मम स्तोता भूत्वा इह अस्मिन् मदीये लोके उप तिष्ठतां सेवताम्। असा.

(१) असं. १८।२।३६.
(२) असं. १८।२।३७.

[1]प्राणो अपानो व्यान आयुश्चक्षुर्दृशये सूर्याय।
अपरिपरेण पथा यमराज्ञः पितॄन् गच्छ॥

मुख्यप्राणस्य तिस्रो वृत्तयः प्राणाद्याः। मुखनासिकाभ्यां बहिर्निःसरन् वायुः प्राणः। अन्तर्गच्छन् अपानः। मध्यस्थः सन् अशितपीतादिकं विविधं आनिति कृत्स्नदेहं व्यापयतीति व्यानः। आयुः जीवनं शतसंवत्सरपरिमितम्। चक्षुः नीलपीतादिदर्शनसाधनं इन्द्रियम्। एतच्च उपलक्षणमन्येषामिन्द्रियाणाम्। सर्वं एतदनुक्रान्तं सूर्याय सूर्यस्य दृशये दर्शनाय भवतु। प्राणादिभिः सहिताः सूर्यं पश्यन्तश्चिरकालं अवतिष्ठेमहीत्यर्थः। हे मृतपुरुष त्वं यमराज्ञः, यमश्चासौ राजा यमराजा, तस्य स्वभूतेन अपरिपरेण। परिपरिणः पर्यवस्थातारश्चोराः। तद्रहितेन पथा मार्गेण पितॄन् गच्छ प्राप्नुहि। असा.

अनपत्या द्वेषरहिताः स्वर्गगामिनः

ये अग्रवः शशमानाः परेयुर्हित्वा द्वेषांस्यनपत्यवन्तः।
ते द्यामुदित्याविदन्त लोकं नाकस्य पृष्ठे अधि दीध्यानाः॥

शशमानाः। ‘शशमानः शसमानः’ (नि. ६।८) इति यास्कः। यद्वा, शश प्लुतगतौ, ताच्छीलिकश्चानश्। प्लुतगमनशीलाः अग्रवः अग्रगामिनो ये पितरः अनपत्यवन्तः अपत्यरहिताः द्वेषांसि द्वेषणीयानि पापानि हित्वा त्यक्त्वा परेयुः पराजग्मुः अमृषतेत्यर्थः। ते पितरो द्यां अन्तरिक्षं उदित्य उद्गत्य ऊर्ध्वं गत्वा नाकस्य दुःखसंस्पर्शरहितस्य स्थानस्य पृष्ठे उपरिभागे। अधिः सप्तम्यर्थानुवादी। अधिकं वा दीध्यानाः दीप्यमानाः लोकं सुकृतफलोपभोगस्थानं अविदन्त अलभन्त। असा.

त्रिविधा द्यौः

उदन्वती द्यौरवमा पीलुमतीति मध्यमा।
तृतीया ह प्रद्यौरिति यस्यां पितर आसते॥

पितृलोकस्य सर्वोत्कृष्टता वक्तुं दिवस्त्रैविध्यं प्रतिपाद्यते—अवमा अधःकक्ष्या गता द्यौः उदन्वती उदकवती, यस्यामवस्थिता मेघाः प्रवर्षन्ति तस्या उदन्वतीति सञ्ज्ञेत्यर्थः। मध्यमा मध्यकक्ष्यां गता द्यौः पीलुमती

(१) असं. १८।२।४६–४९.

इत्युच्यते । पालयन्तीति पीलवः ग्रहनक्षत्रादयः । ते यस्यां सन्तीति पीलुमती । तृतीया ह । हशब्दः प्रसिद्धौ । प्रद्यौरिति प्रसिद्धा । प्रकृष्टफलोपेता द्यौः प्रद्यौः । यस्या तृतीयस्यां दिवि नाकपृष्ठाख्ये स्थाने पितरः पितृदेवताः आसते निवसन्ति । अस.

विविधस्थानस्थिताः पितरः

**ये नः पितुः पितरो ये पितामहा य आविविशुरुर्वन्तरिक्षम् ।**
**य आक्षियन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम ॥**

नः अस्माकं पितुः तातस्य ये पितरः जनकाः। ये च पितामहास्तज्जनकाः । पूजार्थं बहुवचनम् । ये च अन्ये उरु विस्तीर्णं अन्तरिक्षं आविविशुः आविष्टनन्तः । ये च पृथिवीं आक्षियन्ति अभिनिवसन्ति पृथिव्यां वर्तन्ते इत्यर्थः । उतशब्दः अप्यर्थे । ये च द्यां स्वर्गलोकं आक्षियन्ति आश्रित्य निवसन्ति । इत्थं लोकत्रयं व्याप्य वर्तन्ते इत्यर्थः । तेभ्यः सर्वेभ्यः पितृभ्यः नमसा । नम इति अन्ननाम । हविर्लक्षणेन अन्नेन नमस्कारेण वा विधेम परिचरेम । अस.

यमममिर्नि प्रति प्रेतस्य गतिः

**ईमौ युनज्मि ते वह्नी असुनीताय वोढवे ।**
**ताभ्यां यमस्य सादनं समितीश्चाव गच्छतात् ॥**

हे मृतपुरुष वह्नी वोढारौ इमौ अनड्वाहौ ते तव वहनाय युनज्मि अनसि सयोजयामि । किमर्थम् । असुनीताय, असवः प्राणाः नीताः यस्मात् सः असुनीतः गतप्राणो देहः, तस्मै । त्यक्तप्राणं शरीरं वोढवे वोढुम् । यद्वा, सुष्ठु नेतव्यः सुनीतः, न सुनीतः असुनीतः, दुर्वह इत्यर्थः । तादृशं शव वोढुम् । ताभ्यां अनडुद्भ्यां यमस्य संबन्धि सदन गृहं इति अनेन प्रकारेण स अव गच्छतात् सम्यग्जानीहि । अस.

देवमार्गगा गौ मृतं स्वर्गस्य प्रापयित्री

**प्रजानत्यघ्न्ये जीवलोकं देवानां पन्थामनुसंचरन्ती ।**
**अयं ते गोपतिस्तं जुषस्व स्वर्गं लोकमधि रोहयैनम् ॥**

हे अघ्न्ये । गोनामैतत् । अहन्तव्ये हे गौः जीवलोकं, जीवाना लोको जीवलोकः भूलोकः, तं प्रजानती प्रकर्षेण जानाना । तथा देवाना इन्द्रादीनां पन्था पन्थान मार्गं यज्ञलक्षण अनुसचरन्ती अनुलक्ष्य गच्छन्ती क्षीरदध्यादिहविर्निष्पादयन्ती, त्वं आगच्छेति शेषः । ते तव अयं गोपतिः गोस्वामी त जुषस्व सेवस्व । एन मृतं पुरुषं स्वर्गं लोक अधि रोहय प्रापय । अस.

मरणोत्तरं सलिले गृहकर्ता पितृभि सह वसान.
तनुधारी जीव.

**उत्तिष्ठ प्रेहि प्र द्रवौकः कृणुष्व सलिले सधस्थे ।**
**तत्र त्वं पितृभिः संविदानः सं सोमेन मदस्व सं स्वधाभिः ॥**

हे प्रेत त्व उत्तिष्ठ अस्मात् स्थानादूर्ध्वं तिष्ठ । उत्थानानन्तर प्रेहि प्रगच्छ । ततः प्र द्रव प्रकर्षेण धाव शीघ्रं गच्छेत्यर्थः । सलिले, अन्तरिक्षनामैतत् । अन्तरिक्षे सधस्थे सहस्थाने अलौकिके ओकः गृहं कृणुष्व कुरु । तत्र तस्मिन् लोके त्वं पितृभिः बर्हिषदग्निष्वात्ताख्याभिः पितृदेवताभिः सविदानः संजानानः ऐकमत्य गतः सन् सोमेन सं मदस्व सोमपानेन तृप्तो भवेत्यर्थः । सोमयागेषु हि नाराशसाख्यः सोमरसस्य भागः पितॄणामस्ति, तदुपभोगेन आत्मान हर्षयेति भावः । यद्वा, सोमेन राज्ञा पितॄणां अधिपतिना सह मदस्वेत्यर्थः । तथा स्वधाभिः स्वधाकारसहितैः श्राद्धैः पुत्रादिभिः कृतैः सं मदस्व । अस.

**प्र च्यवस्व तन्वं सं भरस्व मा ते गात्रा वि हायि मो शरीरम् ।**
**मनो निविष्टमनुसंविशस्व यत्र भूमेर्जुषसे तत्र गच्छ ॥**

हे प्रेत त्वं प्र च्यवस्व अस्मात् स्थानात् प्रच्युतो भव । तदर्थं तन्वं शरीरं हस्तपादादिसहित सं भरस्व

(१) अस. १८।२।५६, तैआ. ६।१।१ नीताय (नीथाय) ताभ्या ( याभ्या ) समितिश्चाव ( सुकृता चापि ).

(२) असं १८।३।४.

(१) असं. १८।३।८; तैआ. ६।४।२ सलिले सधस्थे ( परमे व्योमन् ) उत्तरार्धे ( यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहेमम् ).

(२) असं. १८।३।९.

संभृतं एकीभूत कुरु । ते तव गात्रा गात्राणि हस्तपादादीनि मा वि हायि परित्यक्तानि मा भूवन् । तथा शरीर अवयविभूतो मध्यदेहश्च मो मैव त्याक्षीः । यत्र यस्मिन् स्थाने त्वदीयं मनो निविष्ट अवस्थित, मनसो विषयभूतं तत् स्वर्गादिलक्षणं अनुसविशस्व सप्रविष्टो भव । तथा यत्र यस्यां भूमौ भूप्रदेशे जुषसे प्रीयसे तत्र गच्छ त भूप्रदेश प्राप्नुहीत्यर्थः ।　　　　　असा.

मर्त्यांना प्रथममृतः स्वर्गत. वैवस्वतो यमो राजा, असुनीतिर्देव. पितृभ्यस्तनुदाता, यमः ऐहिकाभयामृतत्वदाता

[1]यो ममार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा सपर्यत ॥

यो यमो राजा मर्त्याना मरणधर्माणां मनुष्याणां मध्ये स्वयमपि एकः सन् प्रथमः प्रथमभूतो ममार मरण प्राप्तवान् । एत लोक यो यमो राजा प्रथमः प्रथमभूतः प्रेयाय प्रगतवान् । प्रथम मरणं पश्चात् लोकान्तरप्राप्तिः इत्युभयं यमोपज्ञमासीदित्यर्थः । अत एव यमस्य मनुष्यवत्कामयितृत्वादिक यागात् राज्यप्राप्तिश्च आम्नायते – ' यमो वा अकामयत । पितॄणा राज्यमभिजयेयमिति । स एत यमायापभरणीभ्यश्चरु निरवपत् ' ( तैब्रा. ३।१।५।१४ ) इति । इत्थ यः यमो राजा मरणपूर्वकं प्रथमं प्रेयाय अस्माल्लोकात् प्रगतो बभूव तं वैवस्वतं, विवस्वान् आदित्यः तस्य पुत्रं, जनाना जनिमता प्राणिना संगमनम् । सगच्छन्ते अस्मिन्निति संगमनः । जनिमद्भिः सर्वैः प्राणिभिः संप्राप्यं इत्यर्थः । एवंगुणविशिष्ट यम राजान ईश्वरम् । प्राणिकृतसुकृतदुष्कृतानुरूपेण शिक्षाकर इति यावत् । हविषा आज्यपुरोडाशादिना सपर्यत पूजयत, हे ऋत्विजः इति शेषः । अथ वा, प्रथमः प्रथमभावी कल्पादौ वर्तमानो यो जनः प्राणी ममार यश्च जनः प्रथमः कल्पादौ वर्तमानः एत लोक यमस्य स्वभूत प्रेयाय प्रगतवान् । तदाप्रभृति वर्तमानानां सर्वेषां जनानां सगमनं सप्राप्य राजानं इत्यादि पूर्ववत् ।　　　　　असा.

(१) असं. १८।३।१३.

[1]ये नः पितुः पितरो ये पितामहा य आविविशुरुर्वन्तरिक्षम् ।
तेभ्यः स्वराडसुनीतिर्नो अद्य यथावशं तन्वः कल्पयाति ॥

नः अस्माक पितुः जनकस्य ये पितरः जनकाः ये च पितामहास्तेषामपि उत्पादयितारः । पूजार्थं बहुवचनम् । पितृपितामहप्रपितामहा इत्यर्थः । ये च अन्ये गोत्रजाः उरु विस्तीर्ण अन्तरिक्ष आविविशुः आविष्टाः प्रविष्टाः । तेभ्यः तेषा तन्वः शरीराणि अद्य इदानीं स्वराट् स्वयमेव राजा असुनीतिः असूना नेता एतत्सज्ञको देवः नः अस्माकं यथावशं यथाकामं कल्पयाति कल्पयतु । तत्र तत्र फलोपभोगाय शरीराणि सपादयत्वित्यर्थः ।　　　　　असा.

[2]विवस्वान् नो अभयं कृणोतु यः सुत्रामा जीरदानुः सुदानुः ।
इहेमे वीरा बहवो भवन्तु गोमदश्ववन्मय्यस्तु पुष्टम् ॥

विवस्वान् एतत्सज्ञक आदित्यो नः अस्माक अभयं मरणजनितभीतिराहित्यं कृणोतु करोतु । तथा जीरदानुः जीवनस्य कर्ता । यद्वा, जीरस्य वयोहानेर्दाता जीरदानुः । सुदानुः शोभनदानुः । एवंगुणविशिष्टो यः सुत्रामा सुष्ठु त्राता एतत्सज्ञको देवः, सोऽपि अस्माकं अभय कृणोत्विति सबन्धः । इह अस्मिन् लोके इमे वीराः पुत्रपौत्रादयः अस्माकं बहवः बहुला भवन्तु । तथा गोमत् बहुभिर्गोभिर्युक्त अश्ववत् बह्वश्वोपेत पुष्ट पोषक धन मयि आत्मनि अस्तु भवतु, मरणजनितभीतिपरिहारेण पुत्रपौत्रादिसमृद्धिर्धनसमृद्धिश्च अस्माक भवत्वित्यर्थः ।

असा.

विवस्वान्नो अमृतत्वे दधातु परैतु मृत्युरमृतं न ऐतु ।
इमान्रक्षतु पुरुषाना जरिम्णो मो ष्वेषामसवो यमं गुः ॥

विवस्वान् आदित्यो नः अस्मान् अमृतत्वे अमरणत्वे दधातु स्थापयतु । तत्प्रसादात् मृत्युः मरणकारी देवः परैतु पराङ्मुखो गच्छतु । अमृत अमरण नः अस्मान्

(१) असं. १८।३।५९
(२) असं. १८।३।६१-६३.

एतु प्राप्नोतु। आ जरिम्णः। जराया भावो जरिमा। जरावस्थापर्यन्तं इमान् अस्मदीयान् पुरुषान् पुत्रपौत्रादीन् रक्षतु पालयतु। एषां पुरुषाणां असवः प्राणाः सु सुष्ठु मो मैव यम वैवस्वतं गुः गच्छन्तु। विवस्वता यमस्य पित्रा रक्षितत्वादिति भावः।

अस्रा.

**यो दध्रे अन्तरिक्षे न मह्ना पितॄणां कविः प्रमतिर्मतीनाम्।**
**तमर्चत विश्वमित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात्॥**

यो यमः कविः क्रान्तदर्शी प्रमतिः प्रकृष्टबुद्धिः मह्ना स्वमहिम्ना मतीनां मन्तॄणां स्तोतॄणां पितॄणां पितॄन् अन्तरिक्षेण अन्तरा क्षान्तेन लोकेन दध्रे धारयति, हे विश्वमित्राः सर्वजनमित्रभूता ब्राह्मणाः तं तादृशं यमं हविर्भिश्चरुपुरोडाशादिभिः अर्चत पूजयत। सोऽर्चितो यमो नः अस्मान् जीवसे जीवनाय प्रतरं प्रकृष्टतरं धात् दधातु धारयतु।

अस्रा.

उत्तमाया दिवि ऋषय, देवा मृतार्थमध्वादिपूर्णकुम्भधरा, इतो दत्ततिलमिश्रधानाभुक् मृतः, शरीरं दग्ध्वा मृतं सुकृतलोकस्य प्रापयिता अग्निः

**आ रोहत दिवमुत्तमामृषयो मा बिभीतन।**
**सोमपाः सोमपायिन इदं वः क्रियते हविरगन्म ज्योतिरुत्तमम्॥**

हे ऋषयः मन्त्रदर्शिनो मनुष्याः उत्तमां उत्कृष्टां दिवं स्वर्गं आ रोहत यज्ञदानादिसत्कर्मभिः प्राप्नुत। मा बिभीतन भयं मा प्राप्नुत। ऋषयो विशेष्यन्ते — सोमं पिबन्तीति सोमपाः, स्वयं कृतसोमयागा इत्यर्थः। सोमपायिनः, अन्यानपि यजमानान् सोमं पाययन्तीति सोमपायिनः, सोमयागस्य कारयितार इत्यर्थः। दिवं आरूढानां वः युष्माकं इदं हविः क्रियते। तेन हविषा यूयं सुखेन द्युलोके वर्तध्वमित्यर्थः। वयं च युष्मत्प्रसादादुत्तमं उत्कृष्टतमं ज्योतिः प्रकाशं चिरकालजीवनं अगन्म गच्छेम।

ऋस्रा.

**अपूपापिहितान् कुम्भान् यांस्ते देवा अधारयन्।**

(१) अऋं १८।३।६४ (२) अऋं १८।३।६८-७३.

**ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः॥**

हे प्रेत ते तुभ्यं त्वदर्थं अपूपापिहितान् अपूपैरपिहितान् छादितान् यान् कुम्भान् घृतमध्वादिपूर्णान् देवा अधारयन् तवोपभोगाय धारितवन्तः, ते कुम्भाः स्वधावन्तः अन्नवन्तः मधुमन्तः मधुनोपेताः घृतश्चुतः घृतस्राविणश्च ते तुभ्यं सन्तु भवन्तु।

अस्रा.

**यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः।**
**तास्ते सन्तु विभ्वीः प्रभ्वीस्तास्ते यमो राजानु मन्यताम्॥**

हे प्रेत ते तुभ्यं तिलमिश्राः तिलैर्मिश्रिताः स्वधावतीः स्वधाकारवतीः स्वधोदकवतीर्वा या धानाः। भृष्टयवा धाना उच्यन्ते। अनुकिरामि आनुपूर्व्येण निक्षिपामि समर्पयामीत्यर्थः। ता धानास्ते तुभ्यं विभ्वीः विभ्व्यः विविधा भवन्त्यः विभुत्वगुणोपेता वा प्रभ्वीः प्रभ्व्यः प्रभवन्त्यः तृप्तिजननसमर्थाश्च सन्तु भवन्तु। राजा राजमान ईश्वरो यमः ते तव ता धाना अनु मन्यतां भोक्तुं अनुजानातु।

अस्रा.

**पुनर्देहि वनस्पते य एष निहितस्त्वयि।**
**यथा यमस्य सादन आसातै विदथा वदन्॥**

हे वनस्पते वृक्षविशेष त्वयि य एषः अस्थ्यात्मकः पुरुषो निहितः निक्षिप्तः पूर्वं तं पुनर्देहि अस्मभ्यं प्रयच्छ। किमर्थमिति चेत्, उच्यते— यथा येन प्रकारेण यमस्य राज्ञः सदने गृहे विदथा विदथानि विज्ञानानि। यद्वा, यज्ञनामैतत्। यज्ञात्मकानि स्वार्जितानि कर्माणि वदन् ब्रुवन् प्रकाशयन् आसातै आसीत उपविशेत्, तदर्थं पुनर्देहीत्यर्थः।

अस्रा.

**आ रभस्व जातवेदस्तेजस्वद्धरो अस्तु ते।**
**शरीरमस्य सं दहाथैनं धेहि सुकृतामु लोके॥**

हे जातवेदः जातानामुत्पन्नानां प्राणिनां वेदितरग्ने आ रभस्व मृतं दग्धुं उपक्रमस्व। ते तव तेजस्वत् तेजोभिर्ज्वालाभिर्युक्तं हरः रसहरणशीलं दहनसामर्थ्यमस्तु भवतु। अस्य मृतस्य शरीरं सं दह सम्यक् दह, यथा भस्मसाद्भवति तथा कुर्वित्यर्थः। अथ शरीरदहनानन्तरं एनं पुरुषं सुकृतां पुण्यकृतां लोके स्वर्गे धेहि स्थापय, यत्र पुण्यकृतो निवसन्ति तं लोकं प्रापयेत्यर्थः।

अस्रा.

**ये ते पूर्वे परागता अपरे पितरश्च ये ।**
**तेभ्यो घृतस्य कुल्यैतु शतधारा व्युन्दती ॥**

ते प्रसिद्धा ये पूर्वे पूर्वभाविनः पूर्वमुत्पन्नाः ज्येष्ठाः पितरः परागताः पराङ्मुख गताः, अपुनरावृत्तये गता इत्यर्थः । ये च अपरे अपरभाविनः पश्चादुत्पन्नाः पितरः तेभ्यः सर्वेभ्यः घृतस्य कुल्या क्षरणशीलस्य सर्पिषः कुल्या एतु गच्छतु । कुल्या कृत्रिमा सरिदिति निघण्टुः । घृतपूर्णा कुल्या प्रवहत्वित्यर्थः । कीदृशी सा । शतधारा शतसङ्ख्यधाराभिरुपेता । अत एव व्युन्दती विविधमार्द्रीकुर्वती । असा.

**एतदा रोह वय उन्मृजानः स्वा इह बृहदु दीदयन्ते ।**
**अभि प्रेहि मध्यतो माऽप हास्थाः पितॄणां लोकं प्रथमो यो अत्र ॥**

हे मृतपुरुष एतत् परिदृश्यमानं सनिहितं वयः । वियन्ति गच्छन्ति अस्मिन्निति वयः अन्तरिक्षम् । एतदा रोह आरूढो भव । कि कुर्वन् । उन्मृजानः उन्मार्जनं कुर्वन्, शरीरादुत्क्रमणेन स्वात्मान शोधयन्नित्यर्थः । स्वाः ज्ञातयः इह अस्मिन् लोके बृहत् अधिक दीदयन्ते दीप्यन्ता समृद्धा निवसन्तु । उशब्दः पदपूरणः । आरोहणार्थं मध्यतः बन्धुजनमध्यात् अभि प्रेहि लोकान्तरं अभिलक्ष्य प्रकर्षेण गच्छ । अत्र अस्मिन् द्युलोके यः पितॄणा सबन्धी प्रथमः मुख्यो लोकः तं लोक मा अप हास्थाः मा परित्यजेः चिर तत्रैव निवसेत्यर्थः ।

असा.

अग्नय सुकृतलोकप्रापकाः, यज्ञायुधानि लोकत्रयधारकाणि स्वर्गप्रापकाणि, त्रय· सुपर्णा· स्वर्गे, अङ्गिरोगतैर्देवयानै· अमृतसंपन्नस्वर्गगति·

**आ रोहत जनित्रीं जातवेदसः पितृयाणैः सं व आ रोहयामि ।**
**अवाड्ढव्येषितो हव्यवाह ईजानं युक्ताः सुकृतां धत्त लोके ॥**

हे जातवेदसः । वैतानिकाग्न्यपेक्षया बहुवचनम् । 'पश्वा हि सं तर्हि भवति' इति श्रुतेः प्रत्यहं होमानन्तरं आहवनीयशक्तेर्गार्हपत्येऽनुप्रवेशात् एतद्योनेर्दक्षिणाग्नेश्च तत्रैवानुप्रवेशात् बहुवदुक्तिः । स्मार्ताग्निपक्षे पूजाया बहुवचनम् । जातानि भूतानि विदन्ति जातैः प्राणिभिर्विद्यन्ते ज्ञायन्ते इति वा जातवेदसः । यद्वा, वेद इति धननाम । जातस्य प्राणिमात्रस्य वेदो धनं येभ्योऽग्निभ्यो भवति । उपलक्षणमेतत् । सर्वेषा वैदिकाना स्मार्तानां च कर्मणामग्निसाध्यत्वात् तत्कर्मफलस्य प्रापयितारः हे गार्हपत्यादयोऽग्नयः जनित्री स्वोत्पादिकां अरणिम् । प्रत्येकविवक्षया एकवचनम् । आ रोहत शक्त्यात्मना प्रविशत । अहमपि अरणी आ रोहतो वः युष्मान् पितृयाणैः । पितरो यान्ति एभिः पथिभिः पित्र्य लोकं इति पितृयाणाः पन्थानः । द्विविधो हि मार्गः, देवयानः पितृयाण इति । देवलोकप्राप्तिसाधनभूतो देवयानः । पितृलोकप्रापकः इतरः । तत्र तैः पितृयाणैः समा रोहयामि सम्यक् विधिपूर्वक अधिरोहयामि अरण्योः । अग्नीना तत्रानुप्रवेशे पथा भाव्य इति पितृसबन्धात् पन्थास्तादृश उक्तः । आहिताग्नेर्मृतत्वादुत्तरत्र तेन अग्निभिः साध्याना कर्मणामभावात् समारोपणम् । इतः पूर्वं तु हव्यवाहः । द्विविध हि हविः । दैव हविर्हव्य, पित्र्यं हविः कव्यम् । पूर्वं पित्र्यहविःसबन्धाभावात् हव्यं इत्युक्तम् । हव्यं दैव वहतीति हव्यवाहः अग्निः । अग्निरपि द्विविधः, हव्यवाहनः कव्यवाहन इति । इषिता इषितानि इष्टानि तत्तत्फलसाधनत्वेन अभिमतानि यजमानेन दत्तानि हव्या हव्यानि हवींषि अवाट् अवाक्षीत् उद्दिश्यान् देवान् प्रापिपत् । अतः हे अग्नयः यूय युक्ताः परस्पर समवेताः सन्तः ईजान येन यूय आहिता इष्टाश्च तं इष्टवन्त देशान्तरे मृतं यजमान सुकृता सुकृतकर्मणा लोके स्थाने धत्त धारयत स्थापयत । यद्वा, हे जातवेदसः जनित्रीं अरणी आ रोहत आहवनीयादिशक्तिरूपेण । अरणी आरूढवतो वः युष्मान् पितृयाणैर्मार्गैः समा रोहयामि, पुण्यलोक इति शेषः । यजमानस्य देशान्तरे मरणात् तत्प्रतिनिधित्वेन तदाहिताना अग्नीना परलोकनयनम् । अत एव अग्नीनामपि पितृयाणः पन्था उक्तः । गार्हपत्याद्याकारेण परलोकनयने तदर्थं हविषोऽपेक्षितत्वात् हविःसद्भाव तन्नेतारं अग्निं च दर्शयति–हव्यवाहः । अत्र हविषः अग्निदेवत्यत्वात् हव्यमित्युक्त, तद्वहतीति हव्यवाहः अग्निः । इषिता इषितानि

(१) असं. १८।४।१-१५.

अस्माभिः संस्कर्तृभिः प्रेषितानि प्रत्तानि हव्या हव्यानि अवाट् अवाक्षीत् वक्ष्यति प्रापयिष्यति युष्मान् । एवं पुण्यलोकं प्रापिताः हविर्भिः प्रीणयिष्यमाणाश्च हे अग्नयः यूय युक्ताः समाहिताः सन्तः ईजान इष्टवन्त पुण्यलोके स्थापयतेति । अस.

**देवा यज्ञमृतवः कल्पयन्ति हविः पुरोडाशं स्रुचो यज्ञायुधानि ।**
**तेभिर्याहि पथिभिर्देवयानैर्यैरीजानाः स्वर्गं यन्ति लोकम् ॥**

देवा इन्द्राद्याः यष्टव्या देवताः ऋतवः वसन्ताद्याश्च कालाः यज्ञ कल्पयन्ति कुर्वन्ति । स्वय हविःस्वीकारार्थं यष्टॄणां च फलसिद्ध्यर्थं यज्ञ निर्मिमते । तत्स्वरूप दर्शयति— हविः चर्वाज्यसोमलक्षणं हविः । पुरोडाश पिष्टमयम् । स्रुचः । उपलक्षणमेतत् । जुह्वादीनि यज्ञोपयुक्तानि । यैर्यज्ञायुधानि पात्राणि आयुधवदायुधानि । यथा योद्धारः आयोधनसाधनैः शस्त्रादिभिर्द्विषो निघ्नन्ति, एवं यष्टारोऽपि एतैः स्रुगादिपात्रैर्यज्ञविद्वेपकारिणः स्वोपद्रवकारिणश्च परिहरन्तीति आयुधत्वोपचारः । एव देवर्तुनिर्मितपुरोडाशयज्ञायुधात्मकयज्ञं अनुष्ठितवन् हे आहिताग्ने प्रेत त्व देवायानैः, देवा यान्ति एभिरिति देवयानाः, तैर्देवलोकप्राप्तिसाधनैस्तेभिः तैः पथिभिः मार्गैः याहि गच्छ । गन्तव्य स्थान दर्शयति—ईजानाः इष्टवन्तः कृतयज्ञाः पुरुषाः यैः पथिभिः स्वर्ग सुखात्मक लोक स्थानं यन्ति गच्छन्ति । अस.

**ऋतस्य पन्थामनु पश्य साध्वङ्गिरसः सुकृतो येन यन्ति ।**
**तेभिर्याहि पथिभिः स्वर्गं यत्रादित्या मधु भक्षयन्ति तृतीये नाके अधि वि श्रयस्व ॥**

ऋतस्य सत्यभूतस्य यज्ञस्य पन्था पन्थानम् । साधु सम्यक् । पथो वा विशेषणम् । साधु समीचीन अर्चिरादिमार्गं अनु पश्य अनुक्रमेण जानीहि । सुकृतः सुकर्माणः अङ्गिरसः एतत्संज्ञका महर्षयः अङ्गारोत्पन्नाः । 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (ऐब्रा. ३।३४) इति ऐतरेयकश्रुतेः । येन पथा यन्ति स्वर्गलोकम् । अङ्गिरसां सत्रयागानुष्ठानेन स्वर्गलोकप्राप्तिः ऐतरेयके श्रूयते—'अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते' इति, 'तं स्वर्यन्तोऽब्रुवन्नेतत् ते ब्राह्मण सहस्रमिति' (ऐब्रा. ५।१४) इति । तेभिः तैः पथिभिः मार्गः स्वर्गं याहि । प्रेत एव सबोध्यते । यत्र यस्मिन् स्वर्गे आदित्याः अदितेः पुत्रा देवाः मधु मधुवत्प्रीतिकरं मधुर अमृत भक्षयन्ति आस्वादयन्ति । गत्वा च तृतीये त्रित्वसंख्यापूरके उत्तमे नाके । कं सुखं, अकं दुःख, न विद्यते अकं यस्मिन्, तस्मिन् सुखात्मके स्वर्गे वि श्रयस्व विश्रितः प्रतिष्ठितो भव । यद्वा, स्वर्गस्य लोकस्य उत्तममध्यमाधमभेदेन त्रिवृत्त्वात् तृतीये नाके इत्युक्तम् । तथा च ऐतरेयकम्—'त्रयो वा इमे त्रिवृतो लोकाः' (ऐब्रा. २।१७) इति । मन्त्रवर्णोऽपि—'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्' (ऋस. २।२७।८) इति । तथा 'यदिन्द्राग्नी परमस्या पृथिव्या मध्यमस्यामवमस्यामुत स्थः' (ऋसं. १।१०८।१०) इति च । अस.

**त्रयः सुपर्णा उपरस्य मायू नाकस्य पृष्ठे अधि विष्टपि श्रिताः ।**
**स्वर्गा लोका अमृतेन विष्ठा इषमूर्जं यजमानाय दुह्राम् ॥**

त्रयः त्रिसंख्याकाः सुपर्णाः सुपतना अग्निसूर्यसोमाः उपरस्य । 'उपर उपलो मेघो भवति' (नि. २।२१) इति यास्कः । तस्य मेघस्य संबन्धिनौ मायू मायुमन्तौ शब्दकारिणौ वायुपर्जन्यौ । तौ हि मेघसंबन्धेन शब्दकारिणौ । एते अग्न्यादयः अधिष्ठातृदेवाः क्रमेण नाकस्य स्वर्गस्य पृष्ठे उपरिभागे तृतीयकक्ष्याया विष्टपि । विष्टपशब्दः अन्तरिक्षवचनः । तस्मिन् विष्टपे अधि श्रिताः, अग्न्यादयः स्वर्गलोकं वायुपर्जन्यावन्तरिक्षलोक अधितिष्ठन्तीत्यर्थः । एतैरग्न्यादिभिरधिष्ठिताः स्वर्गाः सुखात्मकाः लोकाः स्वकर्मभिरार्जिताः । कर्मभेदात् फलवैविध्येन उत्तमादिभेदेन वा स्वर्गा लोका इति बहुवचनम् । अमृतेन अमरणसाधनेन सुधारसेन विष्ठाः व्याप्ताः पूर्णाः । यजमानाय यज्ञं स्मार्त वैदिक वा अनुष्ठितवते प्रेताय इष इष्यमाणं अन्न ऊर्ज बलकर अन्नरसं च दुह्रां दुहतां प्रयच्छन्तु । अस.

**जुहूर्दाधार द्यामुपभृदन्तरिक्षं ध्रुवा दाधार पृथिवीं प्रतिष्ठाम् ।**

**प्रतीमां लोका घृतपृष्ठाः स्वर्गाः कामंकामं यजमानाय दुह्राम् ॥**

जुहूः, जुहोति हूयते वा अनया हविरिति जुहूः, होमसाधनभूतः पात्रविशेषः । द्यां द्युलोक दाधार घृतवती । उपभृत्, उप समीपे जुह्वाः भ्रियते धार्यते इति उपभृत्, एतत्संज्ञकः पात्रविशेषः । अन्तरिक्ष अन्तरा क्षान्तं मध्यमलोकं धरति । ध्रुवा, बर्हिषि आसादनमारभ्य यज्ञपरिसमाप्तेरचलभावा ध्रुवा प्रतिष्ठिता, एतत्संज्ञका स्रुक् प्रतिष्ठा चराचरात्मकस्य जगतः आश्रयभूता पृथिवीं प्रथिता भूमिं दाधार । एवं जुह्वाद्यास्तिस्रः स्रुचो द्युलोकादिधारकत्वेन प्रशस्ताः । इमां ध्रुवया धारिता पृथिवीं प्रति अभिलक्ष्य घृतपृष्ठाः दीप्तोपरिभागाः सर्वतो ज्योतिष्मन्तः स्वर्गाः सुखात्मका लोकाः । कक्ष्यात्रयवत्त्वात् बहुवचनम् । यजमानाय इष्टवते कामंकामं काम्यमानानि सर्वाणि फलानि दुह्राम् । पूर्वस्मिन्मन्त्रे तृतीये नाके अधि वि श्रयस्वेति उत्तमं स्वर्गं लोकमारूढवतो यजमानस्य स्वकर्मार्जिताः पुण्यलोकाः सुकृतफल प्रयच्छन्तु इत्युक्तम् । अस्मिंस्तु मन्त्रे पुण्यक्षयानन्तरं मर्त्यलोकं प्राप्तवतः अस्यैवाहिताग्नेः पूर्वजन्मार्जितसुकृतवासनाबलात् इह लोकेऽपि पुनः स्वर्गलोकप्रापकाणि यज्ञादीनि समीचीनानि कर्माणि भवन्तु इत्याशास्यते । तथा च भगवतोक्तम्—'त्रैविद्या मा सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥ ते तं भुक्त्वा स्वर्गलोक विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥' ( भ. गी. ९।२०, २१ ) इति, 'प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः । शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् । यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥' ( भ. गी. ६।४१,४३ ) इति च । असा.

**ध्रुव आ रोह पृथिवीं विश्वभोजसमन्तरिक्षमुपभृदा क्रमस्व ।**
**जुहु द्यां गच्छ यजमानेन साकं स्रुवेण वत्सेन दिशः प्रपीनाः सर्वा धुक्ष्वाहृणीयमानः ॥**

हे ध्रुवे एतन्नामधेये स्रुक् । विश्वभोजस विश्वस्य भोजयित्रीं सस्यादिद्वारेण विश्वभोगाधिकरणभूतां वा पृथिवीं आ रोह अधितिष्ठ । 'यजमानेन साक' इति तृतीयवाक्ये समाम्नातस्य सर्वत्रानुषङ्गः । यजमानोऽपि पृथिवीं अधितिष्ठतु । ध्रुवा नाम स्रुक् बर्हिषि आसादिता यज्ञपरिसमाप्तिपर्यन्त आज्येन संपूर्णा अविचलिता वर्तते । पृथिव्यपि स्थिरा । अतस्तस्याः सा अधिष्ठात्रीत्युच्यते । हे उपभृत्, अन्तरिक्ष मध्यमलोकं आ क्रमस्व आक्राम । अध्वर्युणा हि हस्ताभ्यां जुहूरुपभृच्च यागकाले धार्येते । तत्र उपभृतं सव्यहस्तेन गृहीत्वा दक्षिणेन जुह्वा जुहोति । अतोऽत्र जुह्वा उपभृत् अधस्तनीति मध्यमलोकाधिष्ठातृत्वेन उच्यते । हे जुहु, द्यां दिव यजमानेन साक सह गच्छ । हे ध्रुवादिस्रुचः, यूयं क्रमेण पृथिव्यादिलोकान् यजमानेन अधिष्ठापयतेत्यर्थः । अथ प्रत्यक्षवदुक्तिः । एवं स्रुग्भिर्लोकत्रय प्रापितो यजमानस्त्व अहृणीयमानः । हृणीङ् रोषे लज्जायाम् । कथ अहं व्याप्ता दिशः अभिलषितानि दुहीयेति विचिकित्सामकुर्वन् स्रुवेण वत्सेन । वत्सवत् वत्सः, वत्सो यथा प्रथमं स्तन्यपानेन मातरं पीनोध्नीं करोति, तद्वत् स्रुवोऽपि सर्वाणि जुह्वादीनि पात्राणि आज्यपूरितानि करोतीति वत्सत्वेन रूपितः । वत्सरूपेण स्रुवेण प्रपीनाः प्रकर्षेण प्रवृद्धस्तनीः, प्रस्नुतस्तनीरित्यर्थः । ताः सर्वा दिशः प्राच्याद्या दश दिशः कर्म धुक्ष्व अभिलषितानि फलानि । असा.

**तीर्थैस्तरन्ति प्रवतो महीरिति यज्ञकृतः सुकृतो येन यन्ति ।**
**अत्रादधुर्यजमानाय लोकं दिशो भूतानि यदकल्पयन्त ॥**

तीर्थैः तरणसाधनैर्यज्ञादिभिः प्रवतः प्रकृष्टाः महीः महतीः आपदस्तरन्ति अतिक्रामन्ति इति एव यज्ञादीनि आपदुत्तरकाणि भवन्तीति बुद्ध्या यज्ञकृतः यज्ञ वैदिकं स्मार्तं च कुर्वाणाः अत एव सुकृतः सुकृतकर्माणो येन पथा यन्ति प्राप्नुवन्ति पुण्यलोकं अत्र अस्मिन् पुण्यलोकप्राप्तिसाधने पथि तं पन्थानमनुसृत्य आगच्छते यजमानाय तदर्थं लोकं पुण्यार्जितं अदधुः विदधतु यज्ञकृतः सुकृतकर्तारः दिशो भूतानि वा । यत् यं लोकं दिशः 'स्रुवेण वत्सेन दिशः प्रपीनाः सर्वा धुक्ष्व' इति पूर्वमन्त्रे अभिलषितफलप्रदत्वेन उपवर्णिता दिशः भूतानि भवनवन्ति सर्वदिगवस्थितप्राणिजातानि च अकल्पयन्त

यजमानार्थे समपादयन् । तं लोकमदधुरिति पूर्वेण संबन्धः । असा.

**अङ्गिरसामयनं पूर्वो अग्निरादित्यानामयनं गार्हपत्यो दक्षिणानामयनं दक्षिणाग्निः ।**
**महिमानमग्नेर्विहितस्य ब्रह्मणा समङ्गः सर्व उप याहि शग्मः ॥**

परितश्रिता आहिताग्नेर्गार्हपत्यादयोऽग्नयो विहृता यथाप्रदेश वर्तन्ते । तेऽग्नयः अभिलषितप्रदा भवन्तु इत्ययमर्थः इत उत्तरैर्मन्त्रैः प्रतिपाद्यते । अङ्गिरसा अयन नाम सत्रात्मकः क्रतुविशेषः । स एव पूर्वः पूर्वस्या दिशि वर्तमानोऽग्निः आहवनीयः । आदित्याना अयन एतत्सज्ञकः सत्रयागः गार्हपत्योऽग्निः । दक्षिणानां, दक्षा एव दक्षिणाः, दक्षाणा अयन सत्रविशेषः । स एव दक्षिणाग्निः दक्षिणस्यां दिशि वर्तमानोऽग्निः—। एवं ब्रह्मणा मन्त्रेण मन्त्रसाध्यसत्रयागात्मना वा विहितस्य निर्मितस्य पृथगायतनेषु स्थापितस्य अग्नेर्महिमान आहवनीयादिसज्ञाभिर्व्यवह्रियमाणां विभूति समङ्गः सहतावयवः सर्वः सपूर्णावयवः अतः शग्मः । सुखनामैतत् । सुखितः सन् उप याहि । सर्वैरग्निभिर्दह्यमानः प्रेतः एवमुच्यते । असा.

**पूर्वो अग्निष्ट्वा तपतु शं पुरस्ताच्छं पश्चात् तपतु गार्हपत्यः ।**
**दक्षिणाग्निष्टे तपतु शर्म वर्मोत्तरतो मध्यतो अन्तरिक्षाद्दिशोदिशो अग्ने परि पाहि घोरात् ॥**

हे अग्निभिर्दह्यमान प्रेत पूर्वो अग्निः पूर्वस्या दिशि दीप्यमानः आहवनीयः पुरस्तात् पूर्वस्यां दिशि श सुख यथा तथा त्वा त्वां तपतु तापयतु दहतु । तथा गार्हपत्यः गृहपतिना यजमानेन आहितः सर्वाग्नियोनिभूतोऽग्निः पश्चात् पश्चिमभागे शं सुख तपतु त्वा दहतु । दक्षिणाग्निः दक्षिणस्यां दिशि निहितोऽग्निस्ते त्वदर्थे शर्म सुख यथा तथा वर्म कवचं पराभेद्य यथा तथा तपतु । कवचं यथा सर्ववारकं, यद्वा, शर्म गृहं, गृहं यथा सर्वाच्छादकं एवं सर्व त्वदीयशरीरं आवृत्य दहत्वित्यर्थः । अथ अग्नेः प्रत्यक्षस्तुतिः—हे अग्ने । आहवनीयाद्यनुगतत्वाकारेण एकवचनम् । उत्तरतः उत्तरस्या दिशः मध्यतः पूर्वादीनां चतसृणा मध्यप्रदेशात् अन्तरिक्षात् आकाशात् दिशोदिशः सर्वस्या अवान्तरदिशः परि पाहि परितो रक्ष । न केवल दिशो घ्नन्ति किं तु तत्रस्थो भयकरः पुरुषो हिनस्ति । तथा च महारण्य प्रस्तुत्य मन्त्रवर्णः-'न वा अरण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति' ( ऋस. १०।१४६।५ ) इति । अतो भीतिकारणमाह–घोरादिति । घोरात् क्रूरात् हिंसकात् परि पाहि । असा.

**यूयमग्ने शंतमाभिस्तनूभिरीजानमभि लोकं स्वर्गम् ।**
**अश्वा भूत्वा पृष्टिवाहो वहाथ यत्र देवैः सधमादं मदन्ति ॥**

हे अग्ने यूयम् । एकस्यैवाग्नेस्त्रेधाभवनात् यूय इति बहुवचनम् । पृथगायतनेषु स्थापिता यूय शतमाभिः अत्यन्त सुखकरीभिस्तनूभिः शरीरैः । द्विविधाः खलु अग्नेस्तन्वः घोराश्च शिवाश्चेति । उभय्यस्तन्वस्तैत्तिरीयके श्रूयन्ते–'ये ते अग्ने शिवे तनुवौ । विराट् च स्वराट् च । ते मा विशता ते मा जिन्वताम्' 'सम्राट् चाभिभूश्च' 'विभूश्च परिभूश्च' 'प्रभ्वी च प्रभूतिश्च' 'यास्ते अग्ने शिवास्तनुवः' ( तैब्रा. १।१।७।२–३ ) इत्यादि । 'यास्ते अग्ने घोरास्तनुवः । क्षुच्च तृष्णा च । अस्नुक् चानाहुतिश्च । अशनया च पिपासा च । सेदिश्चामतिश्च' 'तास्ते अग्ने घोरास्तनुवः' ( तैआ. ४।२२ ) इति । ताभिः शिवाभिस्तनूभिः सह ईजान येन यूय आहिता इष्टं श्च तं इष्टवन्तं पुरुष स्वर्ग सुखेन गन्तव्यं सुखात्मकं लोकं अभि वहाथ अभिगमयत । अग्नित्रयस्य गन्तव्यप्रापणे दृष्टान्तमाह—अश्वो भूत्वेति । प्रष्टिवाहः अश्वो भूत्वा । पुरस्तात् एकः पश्चात् द्वौ इत्येव त्रिभिरश्वैर्युक्तो दैवो रथः प्रष्टिः । तं वहन् प्रष्टिवाहः अश्वो भूत्वा । समष्टिरूपेण एकवचनम् । एव त्रिधाभवन्तो यूय एन आहिताग्निं स्वर्गे लोकं अभिगमयतेति । यत्र यस्मिन् स्वर्गे लोके देवैः अमृतपैः सधमाद सह मदो यस्मिन् कर्मणि तथा मदेम हृष्यास्म । उपस्तोतॄन् गोत्रिणोऽपेक्ष्य उत्तमपुरुषो बहुवचनं च ।

असा.

**शमग्ने पश्चात्तप शं पुरस्ताच्छमुत्तराच्छमधरात् तपैनम् ।**

**एकस्त्रेधा विहितो जातवेदः सम्यगेनं धेहि सुकृतामु लोके ॥**

हे अग्ने त्व पश्चात् पश्चिमभागे गार्हपत्यः सन् श सुख तप दह । पुरस्तात् पूर्वभागे शम् । तपेत्यनुषङ्गः । उत्तरात् उत्तरदिक्प्रदेशे । अधरात्, अधरशब्देनात्र उत्तरप्रतियोगिनी दक्षिणा दिगुच्यते । वाक्यभेदात् शपदस्य आवृत्तिः । एन आहिताग्निं तप । हे जातवेदः जाताना वेदितरग्ने त्वं पूर्व एकोऽपि त्रेधा विहितः गार्हपत्यादिरूपेण त्रिप्रकारं स्थापितः एनं अन्वादिष्ट अग्न्याहितं प्रेतम् । उशब्दः अवधारणे । सुकृतां सुकृतकर्मणां लोके स्थाने स्वर्गाख्य एव सम्यक् समीचीन यथा तथा धेहि स्थापय । सम्यक्त्व नाम अविकल चिरकालावस्थायित्वम् । असा.

**शमग्नयः समिद्धा आ रभन्तां प्राजापत्यं मेध्यं जातवेदसः ।**
**शृतं कृण्वन्त इह माऽव चिक्षिपन् ॥**

आभ्यां अग्नीन् संभूय प्रार्थयते—जातवेदसः जातानां वेदितारोऽग्नयः समिद्धाः सम्यक् प्रदीपिताः सन्तः प्राजापत्य प्रजापतिदेवत्यं मेध्य, मेधो यज्ञः पितृमेधाख्यः, तदर्हं इमं प्रेतरूपं पशुं समा रभन्तां संस्पृशन्तु परितो दहन्तु । इह अस्मिन् दहनकर्मणि शृतं प्राजापत्य इमं यज्ञार्हं पशुं पक्कं कृण्वन्तः कुर्वन्तः मा अव चिक्षिपन् अवक्षिप्तं अवकीर्णं मा कुर्वन्तु, यथा निरवशेषं दह्यते तथेति । असा.

**यज्ञ एति विततः कल्पमान ईजानमभि लोकं स्वर्गम् ।**
**तमग्नयः सर्वहुतं जुषन्तां प्राजापत्यं मेध्यं जातवेदसः ।**
**शृतं कृण्वन्त इह माऽव चिक्षिपन् ॥**

विततः प्राच्योदीच्याङ्गैर्विस्तृतः कल्पमानः इष्ट प्रदेशं प्रापयितु समर्थो यज्ञः पितृमेधाख्यः ईजान इष्टवन्त एनं स्वर्गं सुखात्मकं लोक अभ्येति अभिगमयति अभिप्रापयति । अतो जातवेदसः अग्नयः प्राजापत्यं मेध्य त ईजानं प्रेतरूप पशु सर्वहुत सर्वः निरवशेषः हुतो दग्धः तं जुषन्तां सेवन्ताम् । शृतमित्यादि व्याख्यातम् । असा.

**ईजानश्चितमाऽरुक्षदग्निं नाकस्य पृष्ठाद्दिवमुत्पतिष्यन् ।**
**तस्मै प्र भाति नभसो ज्योतिषीमान्त्स्वर्गः पन्थाः सुकृते देवयानः ॥**

ईजानः इष्टवान् पुरुषः चित विषमसख्याकाभिः शलाकाभिरिष्टकाभिर्वा चयनेन संस्कृत अग्निं प्रदेशम् । इष्टकचितः प्रदेशः अग्निरित्युच्यते । उक्त हि भगवता आपस्तम्बेन—'अग्निष्टोम उत्तरवेदिरुत्तरेषु क्रतुष्वग्निः' ( आप. श्रौसू. २५।४ ) इति । तं आ अरुक्षत् आरूढवान् । किमर्थम् । नाकस्य दुःखरहितस्य स्वर्गस्य पृष्ठे उपरिभागे दिवं तृतीयकक्ष्यारूप द्युलोकम् । 'त्रयो वा इमे त्रिवृतो लोकाः' ( ऐब्रा. २।१७ ) इति श्रुतेः एकैकस्य लोकस्य त्रिवृत्त्वादेकस्यापि स्वर्गलोकस्य उत्तमाधममध्यमेदेन त्रैविध्यम् । मध्यमायाः स्वर्गकक्ष्यायाः परमां तृतीयकक्ष्यां उत्पतिष्यन्, उत्पतनाद्धेतोरित्यर्थः । तस्मै दिवं उत्पतिष्यते सुकृते सुकृतकर्मणे तदर्थ नभसः मध्याकाशस्य ज्योतिषीमान् ज्योतिष्मान् प्रकाशकः देवयानः देवा यान्ति अनेनेति सः स्वर्गः सुखेन गन्तव्यः परमः स्वर्गप्राप्तिसाधनभूतो वा पन्थाः मार्गः प्र भाति प्रकर्षेण दीप्यतां प्रकाशताम् । असा.

**अग्निर्होताऽध्वर्युष्टे बृहस्पतिरिन्द्रो ब्रह्मा दक्षिणतस्ते अस्तु ।**
**हुतोऽयं संस्थितो यज्ञ एति यत्र पूर्वमयनं हुतानाम् ॥**

हे चितस्थ प्रेत ते तव पितृमेधाख्ये यज्ञे अग्निः होता वषट्कर्ता एतत्सज्ञकः ऋत्विक् अस्तु । बृहस्पतिः बृहतां देवाना पतिः पालको देवः अध्वर्युः अध्वरं यज्ञं यजमानस्य कामयमानः एतत्संज्ञकः ऋत्विक् अस्तु । इन्द्रो दक्षिणस्या दिशि आसीनो ब्रह्मा एतत्सज्ञकः ऋत्विक् ते तव पितृमेधाख्ये यज्ञे अस्तु भवतु । अस्मिन् प्रेतसंस्काररूपपितृमेधे अग्न्यादीना होत्रादिमहर्त्विग्भावेन रूपण अस्य कर्मणो वैकल्याभावद्योतनायेति मन्तव्यम् । होत्रादिकीर्तनं अन्येषां ऋत्विजामुपलक्षणार्थम् । एव होत्रादिरूपैरग्न्यादिभिरनुष्ठितोऽयं यज्ञः पितृमेधाख्यः सस्थितः समापितः सन् एति गच्छति । गतव्यं स्थानं दर्शयति—यत्र यस्मिन् स्थाने हुताना इष्टानां यज्ञानां पूर्वं पूर्वकालीनं

अयनं गमनं प्राप्तिर्विद्यते । यज्ञस्य उत्तमलोकप्राप्त्या तत्संस्कृतस्य पुरुषस्य स्वर्गलोकप्राप्तिरुक्तेत्यनुसंधेयम् । असा.

प्रेताय दत्ताना धानातिलाना रूपान्तरेण, वस्त्रस्य च यमराज्ये भुक्तिः

[१]एतत्ते देवः सविता वासो ददाति भर्तवे ।
तत्त्वं यमस्य राज्ये वसानस्तार्प्यं चर ॥

हे प्रेत ते तव सविता सर्वस्य प्रेरको देवः एतत् इद वासः वस्त्र भर्तवे भरणाय आच्छादनाय ददाति प्रयच्छति । त्व च तत् तार्प्यं तर्पणार्हं प्रीतिकरम् । यद्वा, तृपानाम तृणविशेषः । तन्निर्मित घृताक्त वस्त्रं तार्प्यं इति अन्ये वदन्ति । तद्वस्त्रं वसानः आच्छादयन् यमस्य प्रेताधिराजस्य राज्ये चर परिभ्राम्य । असा.

[२]धाना धेनुरभवद्वत्सो अस्यास्तिलोऽभवत् ।
तां वै यमस्य राज्ये अक्षितामुप जीवति ॥

धाना भृष्टयवः धेनुः प्रीणयित्री गौरभवत् । अस्या धेनुरूपाया धानायास्तिलः वत्सोऽभवत् । तां वत्सरूपतिलसहितां धनुरूपा धानां यमस्य राज्ये अक्षिता क्षयरहितां उप जीवाति उपजीवेदयं प्रेतः । वैशब्दः प्रसिद्धिद्योतनार्थः । यद्वा, उपजीव हे प्रेत त्वमिति । असा.

[३]एतास्ते असौ धेनवः कामदुघा भवन्तु ।
एनीः श्येनीः सरूपा विरूपास्तिलवत्सा उप तिष्ठन्तु त्वात्र ॥

असौ इति प्रेतस्य संबोधनम् । हे असौ अमुकनामधेय प्रेत ते तव एता धानाः कामदुघाः, काम काम्यमानं फलं दुहन्तीति कामदुघाः, इष्टफलदा धेनवो भवन्ति । ता एव विशिनष्टि—एनीः । एतः संध्यावर्णः । श्येतः शुभ्रवर्णः । एन्यः संध्यावर्णाः शुभ्रारुणवर्णाः श्येन्यः धवलवर्णाः सरूपाः समानरूपाः विरूपाः विविधरूपाः तिलवत्साः तिलात्मकवत्ससहिता धेनुरूपा धानाः अत्र अस्मिन् यमराज्ये हे प्रेत त्वा त्वां उप तिष्ठन्तु अभिमतफलदोहनार्थं समीपे सेवन्तां परिचरन्तु । असा.

(१) असं. १८।४।३१.
(२) असं. १८।४।३२.
(३) असं. १८।४।३३.

[१]एनीर्धाना हरिणीः श्येनीरस्य कृष्णा धाना रोहिणीर्धेनवस्ते ।
तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वनपस्फुरन्तीः ॥

पूर्वमन्त्रोक्तोऽर्थः अनया विव्रियते । एनीश्येनीशब्दौ व्याख्यातौ । हरिणीः हरिण्यः हरितवर्णाः । कृष्णाः अतिभर्जनात् कृष्णवर्णाः । रोहिणीः रोहितवर्णा अरुणवर्णाः । धेनुरूपाः धानाः अस्य ते तव भवन्ति । तास्तिलवत्सा धेनवो विश्वाहा सर्वेषु अह.सु अनपस्फुरन्तीः अनपस्फुरन्त्यः । अपस्फुरण नाम नाशः । अविनश्वर्यः अक्षीणाः सत्यः अस्मै अस्थिरूपाय ते तव ऊर्ज बलकरं अन्नं दुहानाः प्रयच्छन्त्यः सन्तु भवन्तु । असा.

वैश्वानरे हुतहविषः स्वधारूपेण परिणतिः पितृपितामहप्रपितामहानामुपकाररूपा, मर्त्यस्यामृतत्वं, पितॄणां मासि पुनरागमनम्

[२]वैश्वानरे हविरिदं जुहोमि साहस्रं शतधारमुत्सम् ।
स बिभर्ति पितरं पितामहान् प्रपितामहान् बिभर्ति पिन्वमानः ॥

वैश्वानरे । विश्वनरहितो विश्वानरः । विश्वानर एव वैश्वानरः । तस्मिन् अग्नौ इद पयोरूप स्थालीपाकरूपं वा हविः जुहोमि प्रक्षिपामि । हविर्विशिनष्टि—साहस्र सहस्रविधोदकप्रवाहयुक्तम् । शतधारं शतप्रवाहोपेतम् । अवयुत्य स्तुतिः । उत्स प्रस्रवणम् । यथा एवविध उत्सः स्वोपजीविनः प्राणिनः प्रीणयति एवं इद हविः नानाविधं सत् पितॄन् पुष्णातीति उत्सात्मना रूपितम् । पिन्वमानः हविषा प्रीतः स वैश्वानरोऽग्निः पितरं पितृत्व प्राप्तं स्वजनकं प्रेत पितामहान् पितुः पितॄन् बिभर्ति प्रीणयति । तथा प्रपितामहान् प्रकृष्टान् पितामहान् स्वपितुः पितामहान् । बहुवचनेन पितामहादीन् सर्वान् स्ववश्यान् बिभर्ति पुष्णातीति । असा.

(१) असं. १८।४।३४, तैआ. ६।७।१ पूर्वार्धे ( एणीर्धाना हरिणीरर्जुनी. सन्तु धेनव. ).
(२) असं १८।४।३५; तैआ. ६।६।१ ( वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सं शतधारमेतम् । तस्मिन्नेष पितरं पितामहं प्रपितामहं बिभरत्पिन्वमाने ॥ ).

[१] सहस्रधारं शतधारमुत्समक्षितं व्यच्यमानं सलिलस्य पृष्ठे।
ऊर्जं दुहानमनपस्फुरन्तमुपासते पितरः स्वधाभिः ॥

सहस्रधारं सहस्रसख्याकच्छिद्रपतितोदकप्रवाहयुक्तम्। शतधारम्। अवयुत्यैव स्तुतिः। उत्सं, उत्सवत् उत्सः, उत्सोपम कलश अक्षितं क्षयरहितं उदकपूर्णं सलिलस्य अन्तरिक्षस्य पृष्ठे उपरिभागे व्यच्यमान व्याप्नुवन्तम्। आकाशे धार्यमाण इति यावत्। ऊर्जं बलकर अन्नम्। अन्नसाधनोदक इति यावत्। दुहानं क्षारयन्त अनपस्फुरन्त बहुच्छिद्रसाहित्येऽपि अविदीर्यमाण सम्यक् शोभमानं वा सहस्रच्छिद्र कुम्भं पितरः प्रेतभूताः स्वधाभिः स्वप्रीणनसाधनैरन्नैर्हेतुभिः उपासते सेवन्ते उपगच्छन्ति। असा.

[२] इदं कसाम्बु चयनेन चितं तत् सजाता अव पश्यतेत।
मर्त्योऽयममृतत्वमेति तस्मै गृहान् कृणुत यावत्सबन्धु ॥

हे सजाताः सहजन्मानः समानकुले जाता गोत्रिणः यूय चयनेन सचयनकर्मणा चित संचितं एकत्र समूहीकृतं तत् इदं कसाम्बु। कसाः कीकसाः अस्थीनि। कसाश्च अम्बूनि च कसाम्बु। पूर्वमन्त्रेण अस्थ्नामुदकेन आप्लावनमुक्तम्। उदकप्लावितान्यस्थीनि अव पश्यत अवधानेन ईक्षध्वम्। एत आगच्छत। अयं मर्त्यः मरणधर्मा प्रेतः अमृतत्वं एति अमरणधर्म प्राप्नोति। तस्मै तदर्थ गृहान् स्थानानि कृणुत कुरुत। यावत्सबन्धु यावन्तः सबन्धवः समानगोत्रा भवथ ते सर्वे यूय तस्मै प्रेताय गृहान् कुरुतेति। तस्यास्थिनिरीक्षणमेव परलोके स्थानकरणमित्यर्थः। असा.

[३] परा यात पितरः सोम्यासो गम्भीरैः पथिभिः पूर्याणैः।
अधा मासि पुनरा यात नो गृहान् हविरत्तुं सुप्रजसः सुवीराः ॥

हे पितरः सोम्यासो यूयं पूर्याणैः, पूः पुर स्वीयः पितृलोकः, त यान्ति एभिरिति पूर्याणाः, तैः स्वपुरप्राप्तिसाधनैः गम्भीरैः पथिभिः परा यात इतः पराङ्मुखा यात स्वस्थानं गच्छत। अध अथ अनन्तर मासि मासे पूर्णे अमावास्यायामित्यर्थः। हविरत्तून्, हविरदन्ति एषु गृहेष्विति ते हविरत्तवः, तान् हविर्भक्षस्थानभूतान् नः अस्मदीयान् गृहान् पुनरा यात आगच्छत। किंविशिष्टान्। सुप्रजसः, प्रजा सततिः पुत्रलक्षणा, शोभनपुत्रयुक्तान्। सुवीराः, वीरः कर्मणि कुशलः पौत्रादिः, शोभनपौत्रादिसमेतान्। एवविधान् गृहान् आ यात। पितॄणा वा विशेषणम्। शोभनप्रजसः सुवीराः सन्तः अस्मभ्य पुत्रपौत्रादिलक्षणा सततिं दातु पुनरायातेति सबन्धः। असा.

[१] यद्वो अग्निरजहादेकमङ्गं पितृलोकं गमयं जातवेदाः।
तद्व एतत् पुनरा प्याययामि साङ्गाः स्वर्गे पितरो मादयध्वम् ॥

हे प्रेताः वः युष्मान् पितृलोक पितृभिरधिष्ठित स्थानं गमयन् प्रापयन् जातवेदाः जाताना वेदिता पुण्यापुण्यकर्मणः। यद्वा, जाताना कर्मफलस्य लम्भयिता प्रापयिता अग्निः प्रेतदाहकः यत् युष्मदीयं एकं अङ्गं अजहात् त्यक्तवान्, चितेर्विप्रकीर्णं अवयव नादहदित्यर्थः। वः युष्माकं तत् एतत् पुरोवर्ति अङ्ग अवयवं पुनरा प्याययामि अग्नौ प्रक्षेपेण प्रवर्धयामि। यूय साङ्गाः संपूर्णावयवाः पितरो भूत्वा स्वर्गे मादयध्व मोदध्वम्। असा.

[२] शुम्भन्तां लोकाः पितृषदनाः पितृषदने त्वा लोक आ सादयामि ॥

---

(१) असं. १८।४।३६.

(२) असं. १८।४।३७.

(३) असं. १८।४।६३; तैसं. १।८।५।२ ( परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः। अथा पितॄन्त्सुविदत्रॉ अपीत यमेन ये सधमादं मदन्ति ॥ ), कासं. ९।६ ( १९ ) ( परेत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः। दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत ॥ ); मैसं. १।१०।३ (१५) ( परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्वेभिः। दधथ नो द्रविणं यच्च भद्रं रयिं च नः सर्ववीरं नियच्छत ॥ ).

(१) असं. १८।४।६४. (२) असं. १८।४।६७.

हे प्रेत तव पितृसदनाः, पितरः सीदन्ति अत्र इति पितृसदना लोकाः शुम्भन्ता प्रकाशन्ताम् । अहं संस्कर्ता पितृसदने पितृभिरधिष्ठिते लोके त्वा त्वां आ सादयामि स्थापयामि । असा.

पृथिव्यन्तरिक्षद्युस्थिताः पितर.

[1]स्वधा पितृभ्यः पृथिविषद्भ्यः ॥
स्वधा पितृभ्यो अन्तरिक्षसद्भ्यः ॥
स्वधा पितृभ्यो दिविषद्भ्यः ॥

पृथिविषद्भ्यः पृथिव्यां सीदद्भ्यः पितृभ्यः स्वधा इदं हविः स्वधाकारेण हुतमस्तु । एवमुत्तरौ व्याख्येयौ । दिविषद्भ्यः दिवि द्युलोके सीदद्भ्यः । असा.

अग्न्यादयो देवा ब्रह्मविल्लोकप्रापकाः

[2]यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
अग्निर्मा तत्र नयत्वग्निर्मेधा दधातु मे ।
अग्नये स्वाहा ॥

यत्र यस्मिन्स्थाने सुकृतफलभोगाश्रये ब्रह्मविदः सगुणब्रह्मस्वरूपं जानन्तः । अथ वा, ब्रह्म परिवृढं कर्म, तद्विदः तद्विषयज्ञानवन्तो महान्तो दीक्षया दण्डकृष्णाजिनमेखलादिधारणात्मिकया, 'दण्डेन दीक्षयति' 'मेखलया दीक्षयति' (तैसं. ६।१।३।५) 'कृष्णाजिनेन दीक्षयति' (तैसं. ६।१।३।२) इत्यादिश्रुतेः । तपसा सह पयोव्रतादिनियमजन्येन सह यान्ति गच्छन्ति। उपलक्षणमेतत् । दीक्षातपआदिधर्मोपेतेन अग्निष्टोमादिकर्मणेत्यर्थः । तत्र तत् स्थानं अग्निर्देवः मा नयतु प्रापयतु गमयतु । तदर्थं अग्निर्देव एव मे मह्यं मेधाः तद्विषयप्रज्ञाः दधातु प्रयच्छतु । अग्नये स्वाहा, य एवं स्वर्गं गमयति यश्च मेधा प्रयच्छति तस्मै अग्नये स्वाहा इदं हविः स्वाहुतमस्तु । असा.

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
वायुर्मा तत्र नयतु वायुः प्राणान् दधातु मे ।
वायवे स्वाहा ॥

पूर्वार्धर्चः पूर्ववद्व्याख्येयः । तृतीयपादे अग्निरित्यस्य स्थाने वायुरिति विशेषः । तादृशो वायुः मे मम प्राणान् दधातु मयि स्थापयतु । अत्र प्राणान् इति बहुवचनेन प्राणापानादयः पञ्च प्राणा ग्राह्याः । वायोः प्राणानां च बाह्याभ्यन्तरभेदमात्रेण भेदात्, 'वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐउ. १।२।४) इति श्रुतेः वायोः प्राणस्थापनप्रार्थना युक्ता । वायवे स्वाहेति स्पष्टम् । असा.

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
सूर्यो मा तत्र नयतु चक्षुः सूर्यो दधातु मे ।
सूर्याय स्वाहा ॥

'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' (ऐउ. १।२।४) इति श्रुतेः सूर्यस्य चक्षुरानुकूल्य युक्तम् । गतमन्यत् । असा.

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
चन्द्रो मा तत्र नयतु मनश्चन्द्रो दधातु मे ।
चन्द्राय स्वाहा ॥

चन्द्रः प्रसिद्धः । तस्य मनआह्लादकत्वात् मनस आनुकूल्यं युक्तम् । असा.

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
सोमो मा तत्र नयतु पयः सोमो दधातु मे ।
सोमाय स्वाहा ॥

सोमोऽत्र अभिषूयमाणो वल्लीरूपः परिगृह्यते । तस्य च 'सोमो वा ओषधीना राजा' (तैब्रा. ३।९।१७।१) इति श्रुतेः ओषधीना सोमस्य च रसात्मकत्वात् पयःस्थापकत्वं युक्तम् । असा.

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
इन्द्रो मा तत्र नयतु बलमिन्द्रो दधातु मे ।
इन्द्राय स्वाहा ॥

इन्द्रस्य बलरूपत्व श्रुतिस्मृतिप्रसिद्धम् । असा.

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
आपो मा तत्र नयन्त्वमृतं मोप तिष्ठतु ।
अद्भ्यः स्वाहा ॥

'अमृतं वा आपः' (तैआ. १।२६।७) इति श्रुतेः गतप्राणस्यापि उदकसबन्धेन आप्यायनसभवादपां अमृतप्रदानप्रार्थना युज्यते । मा मां अमृतं उप तिष्ठतु प्राप्नोतु । असा.

(१) असं. १८।४।७८–८०.
(२) असं. १९।४३।१–८.

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह।
ब्रह्मा मा तत्र नयतु ब्रह्मा ब्रह्म दधातु मे।
ब्रह्मणे स्वाहा ॥

ब्रह्मा जगत्स्रष्टा हिरण्यगर्भः ब्रह्म स्वस्वरूपभूत श्रुताध्ययनजन्य तेजो वा दधातु। अस्ता.

मधुघृतयुक्तं देवस्थानं स्वर्गं प्रति प्रापकोऽग्निः

[1]यत्र धारा अनपेता मधोर्घृतस्य च याः।
तदग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत् ॥

यत्र यस्मिंल्लोके मधोर्माक्षिकस्य घृतस्य च या धारा अनपेता अविच्छिन्नास्तास्तत्र लोके नः अस्मदीयं तत्सर्वं वैश्वकर्मणः कृत्स्नकर्मस्वामिभूतः अयमग्निः सुवर्देवेषु स्वर्गलोकनिवासिषु देवेषु मध्ये दधत् स्थापयतु। तैसा.

स्वर्गलोकात्प्रत्यागच्छन्तो यजमानाः

[2]इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा।
शिक्षा नो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥

[3]इत्यमुत आयतां षण्मासो ब्रह्मसामं भवति। अयं वै लोको ज्योतिः। प्रजा ज्योतिः। इममेव तल्लोकं पश्यन्तोऽभिवदन्त आ यन्ति ॥

अमुतः स्वर्गलोकात् आयतां भूलोकं प्रत्यागच्छतां यजमानानामानुकूल्येन उत्तरस्मिन्पक्षसि षडपि मासान्नैरन्तर्येण प्रतिदिन 'इन्द्र क्रतु न' इत्यस्यामृचि यदुत्पन्न तद्ब्रह्मसामं भवेत्। तस्या ऋचोऽयमर्थः— हे इन्द्र नः अस्मदर्थमिमं क्रतुं आहर। तत्र दृष्टान्तः— यथा लोके पिता पुत्रेभ्यो भाग्यमाहृत्य प्रयच्छति तद्वत्। हे पुरुहूत इन्द्र अस्मिन्ननुष्ठीयमाने यामनि क्रतुविशेषरूपे नियमे शिक्ष हितोपदेशं कुरु। वयं त्वत्प्रसादाज्जीवा जीवन्तः ज्योतिः प्रकाशरूपं मनुष्यलोकं अशीमहि प्राप्नुयामेति। अस्यामृचि ज्योतिःशब्देन भूलोकस्तत्रत्यप्रजाश्च विवक्षिताः। तथा सति एतदीयसामप्रयोगेण इमं भूलोकं ज्योतिषा पश्यन्तः प्राप्नुयाम इति वाचा वदन्तश्च आगच्छन्ति। तैसा.

मृतस्य पुनरुज्जीवनस्थानं विदुषोऽप्यगम्यम्

[1]तदित्पदं न विचिकेत विद्वान्यन्मृतः पुनरप्येति जीवान्।
त्रिवृद्भुवनं यद्रथवृज्जीवो गर्भो न मृतः स्वाहा ॥

यत् यस्मिन्कर्मानुष्ठानरूपे पदे स्थितो मृतः पुरुषः पुनर्जीवानप्येति न तु नरकं प्राप्नोति, तत् इत् पदं तदेव कर्मानुष्ठानं मुख्य पद, तच्च शास्त्रतो विद्वानपि पुरुषो न विचिकेत विविच्य न जानाति। यत् यस्मात्कारणात् भुवनस्य गर्भो लोकस्य मध्ये वर्तमानो जीवः त्रिवृत् सात्त्विक्याद्यास्तिस्रो वृत्तयो यस्यासौ त्रिवृत् रथवत् रथचक्रवत्पुनःपुनरावर्तमानः, अत एव लोकदृष्ट्या मृतोऽपि वस्तुतः स जीवो न मृतः किंतु जीवात् जीवत्येव। सर्वात्मना तिरोहिते रथचक्रवत्पुनःपुनरावृत्तिर्न स्यात्। अतो देहस्यैव मरणं, आत्मा तु जीवत्येव। अयमर्थः—यथा रथचक्र पुनःपुनः पर्यावर्तते तथा जीवोऽपि संसारे पुनःपुनः परिभ्रमति। स च सत्त्वरजस्तमोगुणैरावृतत्वात् कदाचित्सत्त्वगुणाधिक्येन शास्त्रार्थं जानन्नपि कालान्तरे तमोगुणाधिक्ये सति तं शास्त्रार्थं न जानाति, अतः तमोगुणकृतं प्रामादिक चमसभक्षणविस्मरणं, न त्वय पुरुषापराध इति।

तैब्रासा. ३।७।१०।६

त्रयः स्वर्गाः

[2]सँसर्पन्त्रीन् समुद्रान् स्वर्गानपां पतिर्वृषभ इष्टकानाम्।

(१) तैसं ५।७।७।३; शुसं. १८।६५ सुवर्दे (स्वर्दे); शब्रा. ९।५।१।५० शुसंवत्.

(२) ऋसं. ७।३२।२६ नो (णो); असं. १८।३।६७, २०।७९।१ ऋसंवत्; सासं. १।३।३ (२५९) ऋसंवत्; तैसं. ७।५।७।४; कासं ३३।७ (१५) ऋसंवत्; ऐब्रा. १७।४।२ ऋसंवत्; ताब्रा. ४।७।२,४।७।८.

(३) तैसं. ७।५।७।४; कासं ३३।७ (१६) आ यन्ति+ (अयं हि लोको लोकाना प्रतिष्ठा).

(१) कासं. ३५।१३ (६९); तैब्रा. ३।७।१०।६ त्रिवृद्भुवनं यद्रथ (त्रिवृद्यद्भुवनस्य रथ) मृतः स्वाहा (मृतः स जीवात्); तैआ. १।१३।३.

(२) कासं ३९।३ (३०); मैसं. २।७।१६ (२२४) पूर्वार्धे (त्रीन्त्समुद्रान्त्समसृपत्स्वर्गोऽपां पतिर्वृषभ इष्टकानाम्); शुसं. १३।३१ (त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानपां पतिर्वृषभ इष्टकानाम्। पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः ॥); शब्रा. ७।५।१।१९ शुसंवत्.

**तत्र गच्छ यत्र पूर्वे परेताः पुरीषं वसानः सुकृतस्य लोकम् ॥**

हे कूर्म, यो भवान् त्रीन् समुद्रान् लोकान् समसृपत् सम्यक्प्राप्तो भवति। समुद्द्रवन्ति स्वकारणात्समुद्भवन्तीति समुद्रा लोकाः, तान्। कीदृशान्। स्वर्गान् भोगसाधनभूतान्। कीदृशो भवान्। अपां पतिः जलेशः इष्टकाना वृषभः वर्षिता। किंच यत्र यस्मिन्स्थाने पूर्वे पुरातनाः कूर्माः अन्येष्वग्निषूपहिताः परेताः परागताः, सुकृतस्य शोभनकृतस्याग्नेः तत्र तस्मिन् लोके स्थाने त्व गच्छ। किं कुर्वन्। पुरीष हुतान् पशून् वसानः आच्छादयन्। शुम. १३।३१

अग्नि. परलोके जन्मद.

[1]**अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः। असौ स्वर्गाय लोकाय स्वाहा ॥**

हे अग्ने, त्वमस्मात् यजमानात् आधानकाले अधिजातोऽसि उत्पन्नोऽसि। अतोऽयं यजमानः पुनः त्वत् त्वत्तः जायता उत्पद्यताम्। असाविति विशेषनामवचनः। तथाहि देवदत्तः स्वर्गाय लोकाय स्वर्गलोकप्राप्त्यर्थं त्वत्तो जायताम्। त्वद्रूपय एव भवत्विति भावः। स्वाहा सुहुतमस्तु। शुम.

परलोके आत्मरक्षोपाय

[2]**तद्यथा ह वा अस्मिँल्लोके मनुष्याः पशूनश्नन्ति यथैभिर्भुञ्जत एवमेवामुष्मिँल्लोके पशवो मनुष्यानश्नन्त्येवमेभिर्भुञ्जते। स एनानि ह प्रातरनुवाकेनावरुन्धे। तमिहावरुद्धा अमुष्मिँल्लोके नाश्नन्ति नैनेन प्रतिभुञ्जते। यथैवैनानस्मिँल्लोकेऽश्नाति यथैभिर्भुङ्क्त एवमेवैनानमुष्मिँल्लोकेऽश्नात्येवमेभिर्भुङ्क्ते ॥**

प्राण अमृतम्

[3]**अमृतं वै प्राणः ॥**

देवलोक. पितृलोकश्च

[4]**अथो देवलोको वा इन्द्रः। पितृलोको यमः ॥**

(१) शुसं ३५।२२; शब्रा. १२।५।२।१५; तैब्रा. ६।२।१ उत्तरार्धे ( अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा ). (२) शाब्रा. ११।३. (३) शाब्रा. ११।४. (४) शाब्रा. १६।८.

सप्त देवलोका.

[1]**देवचक्रं वा एतत्परिप्लवं यत्संवत्सरः। तदमृतत्वम्। तस्मिन्नेतत्षद्तयमन्नाद्यं ग्राम्याश्च पशव आरण्याश्चौषधयश्च वनस्पतयश्चाप्सुचरं च परिप्लवं च। तद्देवाः समारुह्य सर्वाँल्लोकाननु परिप्लवन्ते देवलोकं पितृलोकं जीवलोकमिममुपोदकमग्निलोकमृतधामानं वायुलोकमपराजितमिन्द्रलोकमधिदिवं वरुणलोकं प्रदिवं मृत्युलोकं रोचनं ब्रह्मणो लोकं नाकं सप्तमं लोकानाम् ॥**

स्वर्ग पुण्यलोक, अनृतेन ततश्च्युति

[2]**अङ्गिरसो वै सत्रमासत। तेषामाप्तः स्पृतः स्वर्गो लोक आसीत्। पन्थानं तु देवयानं न प्राजानन्। तेषां कल्याण आङ्गिरसोऽध्यायमुदव्रजत्। स ऊर्णायुं गन्धर्वमप्सरसां मध्ये प्रेङ्खयमाणमुपैत्। स इयामिति यां यामभ्यदिशत्सैनमकामयत। तमभ्यवदत्कल्याणा३ इति। आप्तो वै वः स्पृतः स्वर्गो लोक.। पन्थानं तु देवयानं न प्रजानीथ। इदं साम स्वर्ग्यम्। तेन स्तुत्वा स्वर्गं लोकमेष्यथ। मा तु वोचोऽहमदर्शमिति ॥**

अङ्गिरसः खलु पुरा ऋषयः सत्रयागमन्वतिष्ठन्। तेषा अङ्गिरसा तद्यागफलभूतः स्वर्गाख्यो लोकः आप्तः पर्याप्तः स्पृतः प्रियहेतुश्चासीत्। देवयान, देवा यान्त्यनेनेति स देवयानः, देवयान तु पन्थान स्वर्गस्य मार्ग न प्राजानन् न चाबुध्यन्त। एवमजानता मध्ये कल्याणनामाऽऽङ्गिरसः ध्याय ध्यात्वा ध्यात्वा कोऽसौ देवयानः पन्था इति विचार्य विचार्य उदव्रजत् ऊर्ध्वमगच्छत्। स कल्याण आङ्गिरसः कियन्त देश गत्वा अन्तरिक्षलोके ऊर्णायुं एतत्सज्ञ गन्धर्वं अप्सरसा मध्ये प्रेङ्खयमाण दोलया विहरन्त उपैत् उपागच्छत्। स गन्धर्वः इयां प्राप्नुयामिति या या स्त्रियमभ्यदिशत् अभ्यध्यायत् सा सा एन गन्धर्वमकामयत। एवमप्सरोभिः सह क्रीडन् गन्धर्वः त कल्याणमाङ्गिरसं अभिलक्ष्य अवदत् अब्रवीत् कल्याणा३ इति हे कल्याण इति सबोध्य। एव सबोध्य इदमब्रवीत् —वो युष्माकं यज्ञफलभूतः स्वर्गो लोक आप्तो वै प्राप्तः स्पृतः

(१) शाब्रा. २०।१
(२) ताब्रा. १२।११।१०-१२.

प्रीतिकरश्चाभूत् । देवयान तु पन्थानं यूय न प्रजानीथ । तत्रेद साम स्वर्ग्य स्वर्गाय हित स्वर्गप्राप्तिसाधनम् । तेन साम्ना स्तुत्वा स्वर्ग लोकमेष्यथ प्राप्स्यथ । यदि त्वा कश्चिदप्राक्षीत् तस्मै अहमेवादर्शमिति अदर्श अज्ञासिषमिति मा त्ववोचः, अपि तु ऊर्णायुः गन्धर्वः प्रावोचदिति ब्रूहीति । तासा.

**स ऐत्कल्याणः । सोऽब्रवीदाप्तो वै नः स्पृतः स्वर्गो लोकः । पन्थानन्तु देवयानं न प्रजानीमः । इदं साम स्वर्ग्यम् । तेन स्तुत्वा स्वर्गं लोकमेष्याम इति । कस्तेऽवोचदिति । अहमेवादर्शमिति । तेन स्तुत्वा स्वर्गं लोकमायन् । अहीयत कल्याणः । अनृतं हि सोऽवदत् । स एष श्वित्रः ॥**

एव गन्धर्वेणोक्तः किं कृतवानिति तदाह—एव गन्धर्वेणोक्तः स कल्याणः ऐत् पुनरङ्गिरसः समीपमागच्छत् । आगत्य च सोऽब्रवीत्— नः अस्माकं स्वर्गो लोकः आप्तः स्पृतश्च किल । देवयान पन्थान न प्रजानीमः । वय इदमौर्णायवं साम स्वर्ग्य स्वर्गसाधनं देवयानस्य पथो लम्भकम् । तेन स्तुत्वा वय स्वर्ग लोकमेष्यामः गमिष्याम इति । एवं कल्याणेनोक्ते अङ्गिरसः अपृच्छन्—ते तव कः पुरुषोऽवोचदुक्तवानिति । न कश्चिदवोचत्, अहमेवैतत् साम स्वर्गसाधनत्वेनादर्शं अज्ञासिषमिति कल्याणः प्रत्यब्रवीत् । ततस्तेनौर्णायवेन स्तुत्वा स्वर्गलोकमायन् अङ्गिरसोऽगच्छन् । कल्याणस्त्वाङ्गिरसोऽहीयत हीनो भूमावेव परित्यक्तोऽभूत् । हि यस्मात् सोऽनृतं वितथमवदत् तस्मादहीयत । स एषः असत्यवादी श्वित्रः श्वेतकुष्ठी दृश्यते । तासा.

**स्वर्ग्यं वा एतत्साम । स्वर्गलोकः पुण्यलोको भवत्यौर्णायवेन तुष्टुवानः ॥**

तस्मादेतेन साम्ना स्तवनं स्वर्गसाधनमित्युपसहरति— स्वर्गलोकः स्वर्गो लोको यस्य स तथोक्तः, पुण्यः पुण्यात्मकः उत्तमः स्वर्गादन्योऽपि लोको यस्य स पुण्यलोकः और्णायवेन तुष्टुवानः स्तुवन्नुभयविधो भवति । गतमन्यत् । तासा.

मृताना पुनरुज्जीवनम्

**[1]वैखानसा वा ऋषय इन्द्रस्य प्रिया आसन् । तान् रहस्युर्देवमलिम्लुङ्मुनिमरणेऽमारयत् । ते देवा अब्रुवन् क त ऋषयोऽभूवन्निति । तान् प्रैषमैच्छत् । तान् नाविन्दत् । स इमान् लोकानेकधारेणापुनात् । तान् मुनिमरणेऽविन्दत् । तानेतेन साम्ना समैरयत् । तद्वाव स तर्ह्यकामयत । कामसनि साम वैखानसम् । काममेवैतेनावरुन्धे । स्तोमः ॥**

वैखानसाः विखनसः पुत्राः ऋषयः इन्द्रस्य प्रिया आसन् इष्टतमा अभवन् । तान् ऋषीन् रहस्युर्नाम देवमलिम्लुङ् देवान् मालिन्य मोचयति प्रापयतीति देवमतिगः, एवविधोऽसुरः मुनिमरणे, मुनयो म्रियन्तेऽस्मिन्निति मुनिमरण स्थानविशेषः, तस्मिन्स्थाने अमारयत् अवधीत् । एव मृतेषु वैखानसेषु तमिन्द्र देवा अब्रुवन्—ते च प्रिया ऋषयः क कुत्राभूवन् इति । स इन्द्रः तानृषीन् प्रैषमैच्छत् अन्विष्टवानित्यर्थः । स च गवेषयमाणः तान् क्वचिदपि नाविन्दत् नालभत । स इमान् पृथिव्यादीन् सर्वानेकधारेण एकोद्योगेन अपुनात् अशोधयत् । एवं सर्वान् लोकान् शोधयित्वा तानृषीन् मुनिमरणे स्थानेऽविन्दत् मृतानलभत अपश्यदित्यर्थः । स इन्द्रः एतेन साम्ना तान् समैरयत् पुनः प्राणैस्तान् समयोजयत् । यस्मादेव वैखानसाना सबन्धः तस्माद्वैखानसमिति साम्नः सज्ञा जाता । तत् खलु समीरण तस्मिन् काले सोऽकामयत । यस्मादेवं कामितार्थमसाधयत् तस्माद्वैखानसं साम कामसनि कामप्रद, तस्मात्सर्वमेव काम्यमान फल तेन साम्ना लभते । एतेष्वपि चतुर्षु पृष्ठस्तोत्रेषु पूर्वोक्त एव चतुर्विंशस्तोमः कार्यः । तासा.

आहुतिरमृतत्वसाधनम्

**[1]तद्यदाहुः केन जुहोति कस्मिन् हूयत इति । प्राणेनैव जुहोति प्राणे हूयते । तदेतदन्नं प्राणे जुहोति । स एषोऽन्नं कामयमान इमान् हि प्राणानभिवर्धयमानस्तेषु जुह्वदास्ते । अथैतद्ध वाव ब्राह्मणस्य स्वयंहुतहविः । तदात्मन् निधत्त एष्वमृतेषु प्राणेषु । तदस्यात्मन् निहितं न प्रमीयते । तद्यदा वै मन उत्क्रामति यदा प्राणो यदा**

(१) ताब्रा. १४।४।७.

(१) जैब्रा. १।२.

चक्षुर्यदा श्रोत्रं यदा वागेतानेवाग्नीनभिगच्छति। अथास्येदं शरीरं एतेष्वेवाग्निष्वनुप्रविध्यन्ति अस्माद्वै त्वमजायथा एष त्वज्जायतां स्वाहा इति। सोऽत आहुतिमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयो वाङ्मय ऋङ्मयो यजुर्मयः साममयो ब्रह्ममयो हिरण्मयोऽमृतः संभवति। अमृता हैवास्य प्राणा भवन्ति। अमृतशरीरमिदं कुरुते। सोऽमृतत्वं गच्छति य एवं विद्वानग्निहोत्रं जुहोति॥

दुष्कृतं हित्वा सुकृतेन सहोत्क्रमणसाधनं विद्या

तदाहुर्यज्जीवन् पुरुषः करोत्येव साधु करोति पापं का तयोर्दुष्कृतसुकृतयोर्व्यावृत्तिरिति। यद्ध वै जीवन् पुरुषः साधु करोति प्राणांस्तदभिसंपद्यते। अथ यद्दुष्कृतं शरीरं तत्। स यदस्माल्लोकादेवं-वित् प्रैति तस्य प्राणेन सह सुकृतमुत्क्रामति शरीरेण सह दुष्कृतं हीयते। तदाहुर्दुर्विदितं वैतद्यदा मर्त्यवान् दुष्कृतेन सह वसात्। यो वा एतेन जीवन्नेव व्यावर्तते तत् सुविदितमिति। तद्वा एतदग्निहोत्रमेवाभिसंपद्यते॥

मनो वा अनु प्राणा वाचमन्वात्मा। स यद्वाचा पूर्वामाहुतिं जुहोति मनसोत्तरां तद्दुष्कृतसुकृते व्यावर्तयति। तस्मादाहुर्नैते आहुती संसृज्ये। दुष्कृतसुकृते ह्येताभ्यां व्यावर्तयतीति। स यत्सायमाहुत्योर्वाचा पूर्वामाहुतिं जुहोति यदेवाह्ना पापं करोति तस्मादेव तया व्यावर्तते। अथ यन्मनसोत्तरां यदेव रात्र्या पापं करोति तस्मादेव तया व्यावर्तते। अथ यत्प्रातराहुत्योर्वाचा पूर्वामाहुतिं जुहोति यदेव रात्र्या पापं करोति तस्मादेव तया व्यावर्तते। अथ यन्मनसोत्तरां यदेवाह्ना पापं करोति तस्मादेव तया व्यावर्तते। स एषोऽहरहर्दुष्कृतेन व्यावर्तमान एति य एवं विद्वानग्निहोत्रं जुहोति॥

देवयोनि मनुष्ययोनिश्च, देवलोक. मनुष्यलोकश्च

द्वे ह वाव योनी। देवयोनिर्हैवान्या मनुष्ययोनिरन्या। द्वा उ हैव लोकौ। देवलोको हैवान्यो मनुष्यलोकोऽन्यः। सा या मनुष्ययोनिर्मनुष्यलोक एव सः। तत् स्त्रियै प्रजननम्। अतोऽधि प्रजाः प्रजायन्ते। तस्माद्ु कल्याणीं जायामिच्छेत कल्याणे म आत्मा संभवादिति। तस्माद्ु जायां जुगुप्सेन्नेन्मम योनौ मम लोकेऽन्यः संभवादिति। तस्य वै संभविष्यतः प्राणा अग्रे प्रविशन्त्यथ रेतः सिच्यते। स इमान् प्राणानाकाशानभिनिवर्तते। तस्माद्ु समानस्यैव रेतसः सतो यादृश एव भवति तादृशो जायते। अथैषा देवयोनिर्देवलोको यदाहवनीयः। एषा ह वै देवयोनिर्देवलोकः। तस्माद्यो गार्हपत्ये जुहुयादकृतं करोतीत्येवैनं मन्येरन्। स यज्जुहोति यः साधु करोत्येतस्यामेवैनद्देवयोनावात्मानं सिञ्चति। सोऽस्याऽऽत्माऽमुष्मिन्नादित्ये संभवति। स हैवं विद्वान् द्व्यात्मा द्वियोनिः। एकात्मा हैवैकयोनिरेतदविद्वान्। स यस्माल्लोकादेवंवित् प्रैति॥

उत्क्रान्तस्य विदुष. आत्मद्वयं दायद्वयं च

तस्य प्राणः प्रथम उत्क्रामति। स हेयत्ता देवेभ्य आचष्ट इयदस्य साधु कृतमियत् पापमिति। अथ ह्ययं धूमेन सहोर्ध्व उत्क्रामति। तस्य हैतस्यर्तवो द्वारपाः। तेभ्यो हैतेन प्रब्रुवीत। विचक्षणादृतवो रेत आभृतमर्धमास्यं प्रसुतात्पित्र्यावतः। तं मा पुंसि कर्तर्येरयध्वं पुंसः कर्तुर्मातर्यासिषिक्त॥ स उपजायोपजायमानो द्वादशेन त्रयोदशोपमासः। समं तद्विदे प्रति तद्विदेऽहं तं मा ऋतवोऽमृत आनयध्वम्॥ इति। तं हर्तव आनयन्ते। यथा विद्वान् विद्वांसं यथा जानन् जानन्तमेवं हैनमृतव आनयन्ते। तं हात्यर्जयन्ते। स हैतमागच्छति तपन्तम्। तं हागतं पृच्छति कस्त्वमसीति। स यो ह नाम्ना वा गोत्रेण वा प्रब्रूते तं हाह यस्तेऽयं मय्यात्माऽभूदेष ते स इति। तस्मिन् हात्मन् प्रतिपत्त ऋतवः संपलाय्य पद्गृहीतमपकर्षन्ति। तस्य हाहोरात्रे लोकमाप्नुतः। तस्मा उ हैतेन प्रब्रुवीत कोऽहमस्मि सुवस्त्वम्। स त्वां स्वर्ग्यं स्वरगामिति। को ह वै प्रजापतिः। अथ हैवंविदेव सुवर्गः। स हि सुवर्गच्छति। तं हाह यस्त्वमसि सोऽहमस्मि। योऽहमस्मि स त्वमस्येहीति। स एतमेव सुकृत-

(१) जैब्रा. १।१५-१८.

रसमप्येति । तस्य पुत्रा दायमुपयन्ति पितरः साधुकृत्याम् । स हैवं विद्वान् द्व्यात्मा द्विदायः । एकात्मा हैवैकदाय एतदविद्वानग्निहोत्रं जुहोति ॥

आहुतिपञ्चकक्रमेण अस्मिँल्लोके पुनर्जन्म

एष[1] वा अग्निर्वैश्वानरो य एष तपति । तस्य रात्रिः समित् । अहर्ज्योतिः । रश्मयो धूमः । नक्षत्राणि विष्फुलिङ्गाः । चन्द्रमा अङ्गाराः । तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवा अमृतमपो जुह्वति । तस्या आहुतेर्हुतायै सोमो राजा संभवति ॥

स्तनयित्नुरेवाग्निर्वैश्वानरः । तस्य द्यौः समित् । विद्युज्ज्योतिः । अभ्राणि धूमः । ह्रादनयो विष्फुलिङ्गाः । अशनिरङ्गाराः । तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवाः सोमं राजानं जुह्वति । तस्या आहुतेर्हुतायै वृष्टिः संभवति ॥

पृथिव्येवाग्निर्वैश्वानरः । तस्यान्तरिक्षं समित् । अग्निर्ज्योतिः । वायुर्धूमः । मरीचयो विष्फुलिङ्गाः । दिशोऽङ्गाराः । तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवा वृष्टिं जुह्वति । तस्या आहुतेर्हुताया अन्नं संभवति ॥

पुरुष एवाग्निर्वैश्वानरः । तस्य वाक् समित् । चक्षुर्ज्योतिः । प्राणो धूमः । मनो विष्फुलिङ्गाः । श्रोत्रमङ्गाराः । तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवा अन्नं जुह्वति । तस्या आहुतेर्हुतायै रेतः संभवति ॥

स्त्रियो वा अग्निर्वैश्वानरः । तस्योपस्थं समित् । योनिर्ज्योतिः । इष्या धूमः । अभिनन्दो विष्फुलिङ्गाः । संस्पर्शोऽङ्गाराः । तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवा रेतो जुह्वति । तस्या आहुतेर्हुतायै पुरुषः संभवति ॥

सोऽत्र पञ्चम्यां विसृष्टयां पुरुषो देवेभ्यो जायते । पञ्चम्यां विसृष्टयां दिव्या आपः पुरुषवाचो वदन्ति । अथ यथाऽमुं लोकमप्येति ॥

द्विविधा आमुष्मिकी गतिः सान्ताऽनन्ता च

तस्याग्निरेवाग्निर्वैश्वानरः । तस्यौषधयश्च वनस्पतयश्च समित् । ज्योतिरेव ज्योतिः । धूम एव धूमः । विष्फुलिङ्गा एव विष्फुलिङ्गाः । अङ्गारा एवाङ्गाराः । तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवाः पुरुषं जुह्वति । तस्या आहुतेर्हुतायै पुरुषोऽमुं लोकं संभवति । सोऽस्य लोकः पुनरुत्थायै भवति ॥

तस्य हैतस्य देवस्याहोरात्रे अर्धमासा मासा ऋतवः संवत्सरो गोप्ता य एष तपति । अहोरात्रे प्रचरे । तं हर्तूनामेको यः कूटहस्तो रश्मिना प्रत्यवेत्य पृच्छति कोऽसि पुरुषेति । स किं विद्वान् प्रवृञ्ज्यात् । तस्य ह प्रहरति । तस्य ह प्रतिराद्धस्य त्रेधा साधुकृत्या विनश्यति । स तृतीयमादत्ते । दिशोऽनु तृतीयं व्येति । तृतीयेन सहेमं लोकमभ्यवैति । स यो हास्य दानजितो लोको भवति तस्मिन्निरमते । तमु ह वै ततो मृत्युरेवान्तत आप्नोति । अनवजितो हास्य पुनर्मृत्युर्भवति स य एवंवित् स्यात् ॥

स यदोपतापी स्याद्यत्रास्य समं सुभूमिस्पष्टं स्यात्तद्ब्रूयादिह मेऽग्नि मन्थतेति । ईश्वरो हागदो भवितोः । यद्यु तन्न यदस्माल्लोकात्प्रेयादथैनमाददीरन् । नानास्थाल्योरग्नी ओप्य हरेयुः । अन्वाहार्यपचनादुल्मुकमाददीरन् यज्ञपात्राणि सर्पिरपो दारूण्यनुस्तरणीं क्षुरं नखनिकृन्तनम् । ते यन्ति यत्रास्य समं सुभूमिस्पष्टं भवति । तदस्याग्नीन् विहरन्ति ॥

अथास्यां दिशि कूपं खात्वा वपन्ति केशश्मश्रूणि । उप्त्वा केशश्मश्रूणि नखान्निकृन्तति । नखान् निकृत्य निरान्त्रं कुर्वन्ति । निरान्त्रं कृत्वा निष्पुरीषं कुर्वन्ति । निष्पुरीषं कृत्वा पांसुभिः कूपे पुरीषमभिसंवपन्ति । पाप्मानमेवास्य तत्प्रच्छादयन्ति । प्रक्षाल्यान्त्राणि प्रत्यवधायैनमाहरन्ति । तमन्तरेणाग्नीन्निधाय गार्हपत्य आज्यं विलाप्योत्पूय चतुर्गृहीतं गृहीत्वा गत्वाऽऽहवनीये समिद्वत्यन्वारब्धे जुहोति । अयं वै त्वदस्मादसि त्वमेतत् । अयं ते योनिरस्य योनिस्त्वम् । पिता पुत्राय लोककृज्जातवेदो नयाह्येनं सुकृतां यत्र लोकः । अस्माद्वै त्वमजायथा एष त्वज्जायतां स्वाहा इति । सोऽत आहुतिमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयो वाङ्मय ऋङ्मयो यजुर्मयः साममयो ब्रह्ममयो हिरण्मयोऽमृतः संभवति ॥

(१) जैब्रा. १।४५-५०.

अथैतां चितां चिन्वन्ति । तस्यामेनमादधति । तस्य नासिकयोः स्रुवौ निदध्याद्दक्षिणहस्ते जुहूं सव्य उपभृतमुरसि ध्रुवां मुखेऽग्निहोत्रहवणीं शीर्षतश्चमसमिळोपवहनं कर्णयोः प्राशित्रहरणे उदरे पात्रीं संवर्तधानीमाण्डयोर्दृषदुपले शिश्ने शम्यामुपस्थे कृष्णाजिनमनुपृष्ठं स्फ्यं पार्श्वयोर्मुसले च शूर्पे च पत्त उलूखलम् । परिशिष्टानि यज्ञपात्राण्युपनिदधति । अपो मृण्मयान्यभ्यवहरन्ति ददत्येवायस्मयानि । अथैनं सर्पिषाऽभ्युत्पूरयन्ति । यज्ञपात्रेषु सर्पिरासिञ्चन्ति ॥

अथैतामनुस्तरणीमानयन्ति । तां प्रोक्ष्य त्रिरपसलीं पर्याणाय्य कूटेन हन्यात् । प्रदक्षिणं हैके पर्याणयन्ति । तदु तथा न कुर्यात् । तस्यै वपामुत्खिद्य शीर्ष्णि परिवयन्ति हस्तयोर्मतस्नी हृदये हृदयं बाह्वोर्बाहू । यथाङ्गमेवेतराण्यङ्गानि विचिन्वन्ति । अथैनं चर्मणा प्रोर्णुवन्ति स्वया तन्वा समृध्यस्वेति । संस्तीर्योपादीपयन्ति । स तथैव चिकीर्षेद्यथैनमाहवनीयः प्रथमो गच्छेत् । तदेनं देवलोकः प्रत्यागच्छति । अथ यथान्वाहार्यपचनस्तदेनं पितृलोकः प्रत्यागच्छति । अथ यथा गार्हपत्यस्तथास्मिँल्लोके प्रजया च पशुभिश्च प्रतितिष्ठति । तस्योपादीप्तस्य धूम एव शरीरं धुनोति । स यद्धुनोति तस्माद्धुनः । धुनो ह वै नामैषः । तं धूम इति परोक्षमाचक्षते परोक्षेणैव । परोक्षप्रिया इव हि देवाः । धूमाद्ध रात्रिमप्येति रात्रिया अहरह्नोऽपोछन्तीपक्षमपोछन्तीपक्षादापूर्यमाणपक्षमापूर्यमाणपक्षान्मासम् । ते अत्र मासे शरीरं चासुश्च संगच्छाते । तं हर्तूनामेको यः कूटहस्तो रश्मिना प्रत्यवेत्य पृच्छति कोऽसि पुरुषेति ॥

त प्रतिब्रूयात् । विचक्षणादृतवो रेत आभृतमर्धमास्यं प्रसुतात् पित्र्यावत इति । यददो विचक्षणं सोमं राजानं जुह्वति तत्तत् । तं मा पुंसि कर्तर्येरयध्वमिति । पुंसि ह्येनमेतत्कर्तर्येरयन्ते । पुंसः कर्तुर्मातर्यासिषिक्तेति । मातरि ह्येनमासिञ्चति । स उपजायोपजायमानस्त्रयोदशेन द्वादशोपमास इति । एष त्रयोदशो य एष तपति । सं तद्विदे प्रति तद्विदेऽहम् । तं मर्तवोऽमृत आनयध्वं द्वादशत्रयोदशेन पित्रा । तया मात्रा तया श्रद्धया तेनान्नाद्येन तेन सत्येन । अहर्मे पिता रात्रिर्माता । सत्यमस्मि । ते मर्तवोऽमृत आनयध्वमिति । तं हर्तव आनयन्ते । यथा विद्वान् विद्वांसं यथा जानन् जानन्तमेवं हैनमृतव आनयन्ते । तं ह्यत्यर्जयन्ते । स हैष न मनुष्यो य एवं वेद । देवानां ह वै स एको य एवंवित् । तं ह वै मनोजवसः पितरश्च पितामहाश्च प्रत्यागच्छन्ति ततः किं न आहार्षीरिति । तान् प्रतिब्रूयात् । यत् किं च पुण्यमकरं तद्युष्माकमिति । तस्य पुत्रा दायमुपयन्ति पितरः साधुकृत्यां द्विषन्तः पापकृत्याम् । स एवमेतत्त्रेधा विभज्यैतस्य सलोकतामप्येति य एष तपति ॥

[1]स हैवं विद्वानहोरात्रयोरर्धमासशो मासश ऋतुशः संवत्सरश एतस्मिन् सर्वस्मिन्नात्मानमुपसंधाय तं मृत्युं तरति यः स्वर्गे लोके । न हैवंवित्पुनर्म्रियते । तस्य हर्ङ्मयान्यस्थानि भवन्ति साममयानि मांसानि । स एषोऽपहतपाप्मा धूतशरीरोऽतीत्यैतं मृत्युं शरीरं धूनुते ॥

यजमानस्य जन्मद्वयम्

[2]द्विर्ह वै यजमानो जायते मिथुनादन्यज्जायते यज्ञादन्यत् । तद्यन्मिथुनाज्जायते तदस्मै लोकाय जायते । अथ यद्यज्ञाज्जायते तदमुष्मै लोकाय जायते गन्धर्वलोकाय जायते देवलोकाय जायते स्वर्गलोकाय जायते ॥

स्वर्गनरका

[3]अथ निर्बाधापस्तम्भौ । साम्नो हिंक्रियमाण एतां दिशं यं द्विष्यात्तं मनसा निर्बाधेत । तत एव स पराभवति । प्रतिह्रियमाण एतामु एव दिशं यं द्विष्यात्तं मनसाऽपस्तभ्नुयात् । तत उ एव स पराभवति । अथो त्रयः साम्नः स्वर्गाः । त्रयो

(१) जैब्रा. १।२५२.
(२) जैब्रा. १।२५९.
(३) जैब्रा. १।३२५.

नारकाः। प्रस्तुते पुरादेः स नारकः। तद्द्विषन्तं भ्रातृव्यं पातयित्वादिः स्वर्गो लोकः। तस्मिन्नात्मानं दध्यात्। प्रतिहृते पुरोपद्रवात्स नारकः। तद्द्विषन्तं भ्रातृव्यं पातयित्वोपद्रवः स्वर्गो लोकः। तस्मिन्नात्मानं दध्यात्। उपद्रुते पुरा निधनात्स नारकः। तं द्विषन्तं भ्रातृव्यं पातयित्वा निधनं स्वर्गो लोकः। तस्मिन्नात्मानं दध्यात्। तदु होवाच शाट्यायनिरपहतपाप्मैतत्साम्नो यदूर्ध्वं प्रस्तावात्स्वर्ग एषु लोकः। कस्तस्मिन् द्विषन्तं भ्रातृव्यमाभजेत। प्रस्तुत एव पुरादेः स एवैको नारकः। तद्द्विषन्तं भ्रातृव्यं पातयित्वा सर्वस्मिन्नेव सामन्नात्मानं दध्यात्। अथो यजमानम्। सोऽपहत्य पाप्मानं स्वर्गं लोकमेति। एतत्तद्यत्कृत्वा श्रेयान्मन्यत इति ॥

सप्तमो ब्रह्मलोक

[1]उपोदको नाम लोको यस्मिन्नयमग्निर्ऋतधाम यस्मिन्वायुरपराजितो यस्मिन्नादित्योऽभिद्युर्यस्मिन् वरुणः प्रद्युर्यस्मिन्मृत्यू रोचनो यस्मिन्नशाया। विष्टप एव सप्तमो ब्रह्मलोको यस्मिन्नेतद्ब्रह्म। तत्सप्तमेन प्ररोहेण विष्टपे ब्रह्मलोक आत्मानं दध्यात्। अथो यजमानमथो हैनद्गमयति। यदेनत्स्पृशतीव तद्धैनतत्प्रियेण धाम्ना समृद्धयति। यद्ध स्म सुचित्तः शैलन उद्गृह्णाति स्वासाराधिषु धेनो वा इत्यभि ब्रह्मलोकमारोहयति प्रियेण धाम्ना समृद्धयति। तदु हैनत्समृद्धं प्रियेणो एव धाम्ना समृद्धयति। तद्धिमं लोकमागमयति तेनो सर्वमायुरेति ॥

उत्तरमार्गगा देवा

[2]देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिंशाः। उत्तरे भवत। उत्तरवर्त्मान उत्तरसत्त्वानः। यत्काम इदं जुहोमि। तन्मे समृध्यताम्। वयं स्याम पतयो रयीणाम्। भूर्भुवः स्वः स्वाहा ॥

ते च त्रिविधा अपि पुनस्त्रिस्त्रयस्त्रिंशा अवान्तरमूर्तिभेदादेकैकस्य मूर्तित्रयमित्येवं त्रिगुणितास्त्रयस्त्रिंशत्सख्याका भवन्ति। तावन्तो हे देवाः उत्तरे भवत उत्कृष्टा भवत। तदेवोत्तरत्वं स्पष्टीक्रियते— उत्तरं उत्कृष्टं वर्त्म मार्गो येषां ते उत्तरवर्त्मानः, स्वर्गमार्गप्रापका इत्यर्थः। उत्तरे उत्कृष्टाः सत्त्वानः सात्त्विकमूर्तिविशेषाः येषा ते उत्तरसत्त्वानः। अत एव रुद्रस्य मूर्तिविशेषानभिप्रेत्य रुद्राध्याये समाम्नातम्— 'अथो ये अस्य सत्त्वानोऽहं तेभ्योऽकर नमः' इति। अस्मदनुग्रहपरा इत्यर्थः। तथाविधा हे देवाः यत्कामो यद्विषयकामनायुक्तः सन्नहमिद द्रव्य जुहोमि तत्फल मे मदर्थे समृध्यता समृद्ध भवतु। युष्मत्प्रसादाद्वय भूर्भुवःस्वर्लोकत्रये रयीणा पतयः धनस्वामिनः स्याम। स्वाहुतमिदमस्तु।

तैब्रासा.

सशरीरस्य स्वर्गगमनं, सान्त अनन्तश्च लोक

[1]यो ह वा अग्नेर्नाचिकेतस्य शरीरं वेद। सशरीर एवं स्वर्गं लोकमेति। हिरण्यं वा अग्नेर्नाचिकेतस्य शरीरम्। य एवं वेद। सशरीर एव स्वर्गं लोकमेति ॥

अथ हिरण्यशरीरत्वेन ध्यान विधत्ते। हिरण्यस्य शरीरत्वध्यानेन मनुष्यशरीरसहितस्यैव स्वर्गप्राप्तिः।

तैब्रासा.

अथो यथा रुक्म उत्तप्तो भाय्यात्। एवमेव स तेजसा यशसा। अस्मिंश्च लोकेऽमुष्मिंश्च भाति ॥

फलान्तरं दर्शयति— अपि च यथा लोके रुक्मः सौवर्णाभरणविशेषः उत्कर्षेणाग्नौ तप्तः सन् स्वनिष्ठां कालिका परित्यज्य विस्पष्ट भासेत, एवमेव स हिरण्यध्याता शरीरकान्त्या कीर्त्या च लोकद्वये प्रकाशते।

तैब्रासा.

उरवो ह वै नामैते लोकाः। येऽवरेणाऽऽदित्यम्। अथ हैते वरीयांसो लोकाः। ये परेणाऽऽदित्यम्। अन्तवन्तं ह वा एष क्षय्यं लोकं जयति। योऽवरेणाऽऽदित्यम्। अथ हैषोऽनन्तमपारमक्षय्यं लोकं जयति। यः परेणाऽऽदित्यम् ॥

अथाग्निचिता तदुपासकेन च प्राप्यानां लोकानामत्युत्तमत्व वक्तु लोकविभागं दर्शयति—द्विविधाः स्वर्गलोकाः, आदित्यलोकादर्वाञ्च उपरितनाश्च। तत्राऽऽदित्यं अवरेण आदित्यादर्वाञ्चो ये लोकाः स्वर्गविशेषास्ते

(१) जैब्रा. १।३३४.
(२) तैब्रा. ३।११।२।४.

(१) तैब्रा. ३।११।७।३–४.

सर्वेऽपि उरवः विस्तीर्णा इति । नाम प्रसिद्धम् । अथ ये स्वर्गलोका आदित्य परेण आदित्यलोकात् परस्ताद्वर्तन्ते एते वरीयासः अतिशयेन विस्तीर्णाः । एव सति यः पुमानादित्यादर्वाञ्चं लोकं प्राप्नोति, एष पुमान् अन्तवन्त विनाशयुक्तं क्षय्य परस्परमेकैकापेक्षया क्षयार्हं तादृश लोक प्राप्नोति । यस्त्वादित्यात्पराञ्च प्राप्नोति, एष पुमान् अनन्तमपार आतानवितानाभ्यामवसानरहित अक्षय्य भोग्यवस्तुक्षयरहित लोक प्राप्नोति ।

तैब्रासा

**अनन्तꣳ ह वा अपारमक्षय्यं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ॥**

एव विभागे व्यवस्थिते सति नाचिकेताग्निं चिन्वतस्तस्योपासकस्य चोपरितनलोकप्राप्तिफलं दर्शयति—अनन्त ह वेति ।

तैब्रासा.

**अथो यथा रथे तिष्ठन्पक्षसी पर्यावर्तमाने प्रत्यपेक्षते । एवमहोरात्रे प्रत्यपेक्षते । नास्याहोरात्रे लोकमाप्नुतः । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ॥**

आदित्यमण्डलादूर्ध्ववर्तिन ब्रह्मलोक प्राप्तस्याऽऽयुःक्षयहेतुभूतकालपारतन्त्र्याभाव दृष्टान्तेन दर्शयति—अत्युन्नतस्य रथस्योपरि वर्तमानः पुरुषो रथस्य पार्श्वयोरधोभागे पुनः पर्यावर्तमाने पक्षसी उभे चक्रे स्वस्मादत्यन्तमधस्तनत्वेन प्रतिक्षणं पश्यति, एवमसौ ब्रह्मलोके वर्तमानः पुरुषोऽधस्तनेषु मनुष्यादिलोकेषु प्राणिनामायुष्क्षपणाय पुनःपुनः पर्यावर्तमाने अहोरात्रे स्वस्मादत्यन्तनीचत्वेन प्रतिक्षणं पश्यति । यो नाचिकेतमग्निं चिनुते, यश्चोपास्ते, उभयविधस्यास्य लोक अहोरात्रे न प्राप्नुतः । ब्रह्मलोके हि नैते अहोरात्रे अत्यल्पे प्रसरतः, किंतु कल्पमात्रमेकमहः । तस्मादितरलोकेष्विव नास्य आयुः क्षीयते ।

तैब्रासा.

एकविंश. स्वर्ग आदित्यरूप.

[1]**एकविꣳशो वा इतः स्वर्गो लोकः । प्र स्वर्गं लोकमाप्नोति । असावादित्य एकविꣳशः । अमुमेवाऽऽदित्यमाप्नोति ॥**

(१) तैब्रा. ३।१२।५।७.

भूलोकमारभ्य सत्यलोकान्ताः सप्तलोकाः । ते प्रत्येकमुत्तमाधममध्यमभोगेन त्रिविधाः । तथा सति सत्यलोके योऽयमुत्तमभोगयुक्तश्चरमः स्वर्गः सोऽयमधमभूलोकमपेक्ष्य एकविंशतिसंख्यापूरको भवति । अतः संख्यासाम्यात्प्रकृष्ट स्वर्गमाप्नोति । 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इति श्रुतेः । आदित्यस्यैकविंशत्वात्संख्यासाम्येन तं प्राप्नोति ।

तैब्रासा.

देवयानपितृयाणौ

[1]**द्वौ वै पन्थानौ देवयानश्च पितृयानश्च । अग्निहोत्रेण वै देवाः स्वर्गं लोकमायन् पितृयज्ञेन पितृलोकम् । तस्मादुभौ यष्टव्यौ देवयानश्च पितृयानश्च उभाभ्यां वा एतत्स्वर्गं लोकमेत्याहुः ॥**

सप्त देवलोकाः

[2]**अथ वा एकशतविधः सप्तविधमभिसंपद्यते । एकशतधा वा असावादित्यो विहितः सप्तसु देवलोकेषु प्रतिष्ठितः । सप्त वै देवलोकाः । चतस्रो दिशः । त्रय इमे लोकाः । एते वै सप्त देवलोकाः । तेष्वेष प्रतिष्ठितः । तथैवैतद्यजमान एकशतधाऽऽत्मानं विधाय सप्तसु देवलोकेषु प्रतितिष्ठति ॥**

'अथ वा एकशतविधः' इत्यादिना सप्तविधसंख्यासंपत्तिप्रदर्शन फलविवक्षया । असावादित्यः एकशतधा, शत रश्मयः, स्वात्मा एकशतसंख्यापूरकः । सप्तसु देवलोकेषु, दिक्षु चतसृषु, त्रिषु लोकेष्वित्यर्थः । एव यजमानोऽपि तेषु सप्तलोकेषु प्रतिष्ठितो भवति ।

शब्रासा.

पुरुषस्य जन्मत्रयम्

[3]**त्रिर्ह वै पुरुषो जायते । एतन्न्वेव मातुश्चाधि पितुश्चाग्रे जायते । अथ यं यज्ञ उपनमति स यद्यजते तद्द्वितीयं जायते । अथ यत्र म्रियते यत्रैतमग्नावभ्यादधति स यत्ततः संभवति तत्तृतीयं जायते । तस्मात्त्रिः पुरुषो जायत इत्याहुः ॥**

अथ विशिष्टजन्महेतुतया सामिधेनीः प्रशस्यन् पुरुषस्य जन्मत्रयमाह—त्रिर्ह वै पुरुष इति । पुरुषः शरीरी

(१) कब्रा. ८।३. (२) शब्रा. १०।२।४।४.
(३) शब्रा. ११।२।१।१.

त्रिस्त्रिवारं खलु जायते। तदेव जन्मनस्त्रित्वं दर्शयति—एतन्न्वेवेति। मातापितृसकाशात् यत् प्रथमं जन्म तदेकम्। अथ अनन्तरं यं पुरुषं यज्ञः सोमयागः उपनमति प्राप्नोति सः यदि तेन यजते तदस्य पुरुषस्य दीक्षारूपं द्वितीयं जन्म भवति। अथ अनन्तरं आयुरवसाने यत्र यजमानः म्रियते पञ्चत्वं गच्छति, अनन्तरं यत्र एनमग्नौ अभ्यादधति अन्त्येष्टिविधानेन प्रक्षिपन्ति, ततः अनन्तरमेव सः यजमानः अमुष्मिन् लोके अमृतमयशरीरः सन् यतः संभवति उत्पद्यते यज्ञफलोपभोगायतनं तदस्य तृतीयं जन्म। उक्तेऽर्थे प्रसिद्धिं संवादयति—तस्मात् त्रिः पुरुष इति। आहुः अभिज्ञाः कथयन्ति। शब्रासा.

यज्ञीरूपं मृत्युमुक्त

[1]अथ यद्वषट्कृते जुहोति। एष वै वषट्कारो य एष तपति। स एष मृत्युः। तदेनमुपरिष्टान्मृत्योः संस्करोति। तदेनमतो जनयति। स एतं मृत्युमतिमुच्यते। यज्ञो वा अस्याऽऽत्मा भवति। तद्यज्ञ एव भूत्वैतन्मृत्युमतिमुच्यते। एतेनो ह्यस्य सर्वे यज्ञक्रतव एतं मृत्युमतिमुक्ताः॥

वषट्कारानन्तरभाविनं होमविधिमनूद्य प्रशंसति—अथेति। य एष सूर्यः तपति अन्तरिक्षलोके एष एव वषट्कारः। स एष वषट्कारात्मकः सूर्यः मृत्युः। तमतिक्रम्य होमेन एनं यजमानं मृत्योरुपरिष्टात् संस्करोति। तदेनं अतः अस्माद्धोमात् जनयति, जातश्च यजमानः एतं मृत्युं अतिमुच्यते मृत्युगोचरान्मुक्तो भवति। तत्र कारणमाह—यज्ञो वा अस्येति। अस्य यजमानस्य यज्ञः खलु आत्मा शरीरं भवति। तत् तस्माद्यज्ञशरीरात्मको भूत्वा वषट्कारात्मकं मृत्युं अतिमुच्यते। यतः सर्वेषु यज्ञक्रतुषु वषट्कृते होमः। एतेनैव हेतुना अस्य यजमानस्य सर्वे यज्ञक्रतवः, यज्ञा दर्शपूर्णमासादयः, यूपवन्तः क्रतवः, उभयविधाश्चैते वषट्कारात्मकाः एतं मृत्युं अतिमुक्ताः अतिक्रम्यावस्थिताः। शब्रासा.

आहुति स्वर्गसाधनम्

अथ यामेतामाहुतिं जुहोति एषा ह वा अस्याहुतिरमुष्मिन् लोक आत्मा भवति। स यदैवंविदस्माल्लोकात्प्रैत्यथैनमेषाऽऽहुतिरेतस्य पृष्ठे सत्याह्वयति। एह्ययं वै त इहाऽऽत्माऽस्मीति। तद्यदाह्वयति तस्मादाहुतिर्नाम॥

अथाहुतिशरीरत्वं यजमानस्य प्रतिपादयति—अथ यामेतामिति। स्वाहाकारेण वा वषट्कारेण वा या एषा यज्ञेषु आहुतिर्हूयते, एषा खलु अमुष्मिन् स्वर्गे लोके अस्य यजमानस्य आत्मा शरीरम्। एववित् उक्तार्थवित् सः यजमानः यदा अस्मात् भूलोकात् प्रैति प्रगच्छति, अथ तदा एतस्य यजमानस्य पृष्ठे पश्चाद्भागे सती भवन्ती एषा आहुतिः आह्वयति। हे यजमान, एहि आगच्छ। ते त्वदीयः आत्मा अहं इह अस्मिन् स्थाने अस्मि भवामि, अत आगच्छेति। अत एवाऽऽथर्वणिकैराम्नायते—'एह्येहीति ता आहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं भक्षयन्ति' इति। आहुतिनामनिर्वचनं करोति—तद्यदाह्वयतीति। शब्रासा.

आहुतिपञ्चकक्रमेण अत्र लोके पुनर्जन्म

[1]ते वा एते आहुती हुते उत्क्रामतः। ते अन्तरिक्षमाविशतः। ते अन्तरिक्षमेवाहवनीयं कुर्वाते। वायुं समिधम्। मरीचीरेव शुक्रामाहुतिम्। ते अन्तरिक्षं तर्पयतः। ते तत उत्क्रामतः॥

अथ जनकः प्राक् अज्ञातत्वेन आत्मना उपन्यस्तान् उत्क्रान्त्यादीन् तस्मै याज्ञवल्क्याय कथयति—ते वा एते इति। ते त्वया उक्ते एते सायंप्रातःकालीने अग्निहोत्राहुती हुते अग्नौ प्रक्षिप्ते सत्यौ उत्क्रामतः ऊर्ध्वं गच्छतः। ते अन्तरिक्षं लोकं आविशतः प्रविशतः। अनन्तरं ते आहुती अन्तरिक्षलोकमेव आहवनीयाग्निं कुर्वाते। अन्तरिक्षलोकस्याहवनीयत्वे तत्र यो वायुः तं वायुं समिद्रूपेण कुरुतः। तथा मरीचयः सूर्यरश्मयः। ता एव शुक्रां निर्मलां आहुतिं कुरुतः। एवंभूते ते आहुती अन्तरिक्षं लोकं तर्पयतः। तस्मादन्तरिक्षात् ते आहुती उत्क्रामतः निष्क्रामतः ऊर्ध्वं गच्छतः। शब्रासा.

ते दिवमाविशतः। ते दिवमेवाहवनीयं कुर्वाते। आदित्यं समिधम्। चन्द्रमसमेव शुक्रामाहुतिम्। ते दिवं तर्पयतः। ते तत आवर्तेते॥

उत्क्रम्य च ते आहुती दिवं द्युलोकं स्वर्गाख्यं

(१) शब्रा. ११।२।२।५-६.

(१) शब्रा. ११।६।२।६-१०.

आविशतः । ते दिवमेवेत्यादि पूर्वेण समानार्थम् । ( अत्रोत्क्रामत इति उत्क्रान्तिरुक्ता । अन्तरिक्षमाविशत इति गतिरुक्ता । अन्तरिक्षमेवाहवनीय कुर्वाते इत्यादिना प्रतिष्ठा उक्ता । अन्तरिक्ष तर्पयत इति तृप्तिः । *) अथ पुनरावृत्तिं कथयति—द्युलोकस्य प्रीणनानन्तर ततः तस्मात् द्युलोकात् ते आहुती आवर्तेते ।

शब्रासा.

ते इमामाविशतः । ते इमामेवाहवनीयं कुर्वाते । अग्निं समिधम् । ओषधीरेव शुक्रामाहुतिम् । ते इमां तर्पयतः । ते तत उत्क्रामतः ॥

आवर्तमाने च ते इमां पृथिवी आविशतः । ते इमामेवाहवनीय कुर्वाते इत्यादि व्याख्यातप्रायम् । भूमिरेवाहवनीयोऽग्निः । तदधिष्ठाता अग्निरेव समित् । तत्रत्या ओषधयः एव शुक्रा शुद्धा आहुतिः । ईदृश्यौ ते आहुती इमा पृथिवीं तर्पयतः । ततस्तस्याः पृथिव्याः सकाशात् ते आहुती उत्क्रामतः ।

शब्रासा.

ते पुरुषमाविशतः । तस्य मुखमेवाहवनीयं कुर्वाते । जिह्वां समिधम् । अन्नमेव शुक्रामाहुतिम् । ते पुरुषं तर्पयतः । स य एवं विद्वानश्नात्यग्निहोत्र-मेवास्य हुतं भवति । ते तत उत्क्रामतः ॥

उत्क्रम्य च ते पुरुष प्रविशतः । तस्य मुखमेवाहवनीयोऽग्निः । जिह्वैव समित् । तेन भुज्यमानमन्नमेव शुक्रा शुद्धा आहुतिः । एतद्वेदनस्यावान्तरफलमाह—स य एव विद्वानिति । एवमनेन प्रकारेण मुखादेराहवनीयादिरूपता जानन् अश्नाति, अस्य पुरुषस्य तत्सर्वमग्निहोत्रात्मकमेव हुत भवति । ते तत उत्क्रामत इत्यादि । ततः पुरुषात् ते आहुती उत्क्रामतः ॥

शब्रासा.

ते स्त्रियमाविशतः । तस्या उपस्थमेवाहवनीयं कुर्वाते । धारकां समिधम् । धारका ह वै नामैषा । एतया ह वै प्रजापतिः प्रजा धारयांचकार । रेत एव शुक्रामाहुतिम् । ते स्त्रियं तर्पयतः । स य एवं विद्वान् मिथुनमुपैत्यग्निहोत्रमेवास्य हुतं भवति । यस्ततः पुत्रो जायते स लोकः प्रत्युत्थायी । एतदग्निहोत्रं याज्ञवल्क्य नातः परतरमस्तीति होवाच । तस्मै ह याज्ञवल्क्यो वरं ददौ । स होवाच कामप्रश्न एव मे त्वयि याज्ञवल्क्यासदिति । ततो ब्रह्मा जनक आस ॥

ते स्त्रियमाविशतः । तत्राप्याहवनीयादीन् सपादयति—तस्या उपस्थमेवेति । स्त्रीसंबन्धि यत्प्रजननं स आहवनीयोऽग्निः । धारकां समिधमिति । तस्य प्रजननस्य या धारका श्रोणिः ता समिध कुर्वाते । धारकाख्या निर्ब्रूते—धारका ह वा इति । एतया खलु श्रोण्या पुरा प्रजापतिः प्रजा धारयांचकार धारितवान् । अतः अस्याः धारयत्यनयेति व्युत्पत्त्या धारकेति नाम सपन्नम् । तस्मिन्नुपस्थरूपे आहवनीयेऽग्नौ रेत एव शुक्रा निर्मला आहुतिः । एव ते अग्निहोत्राहुती स्त्रियामाविश्य ता स्त्रिय तर्पयतः प्रीणयतः । एतद्वेदनस्य फलमाह—स य एवं विद्वानिति । उपस्थादेराहवनीयादिरूपता विद्वान् जानन् यः मिथुनमुपैति स्त्रियमुपगच्छति, अस्य तदग्निहोत्रमेव हुत भवति । ततस्तस्याः स्त्रियाः सकाशात् यः पुत्रो जायते स प्रत्युत्थानशीलो लोकः । एतेन तं लोकं प्रत्युत्थायिनमिति प्रागुक्तमतिदिष्ट भवति । एवं जनकः स्वाभिमतं अग्निहोत्राहुत्योरुत्क्रान्त्यादिक प्रतिपाद्य उपसहरति—एतदग्निहोत्रमिति । अस्मदुक्तप्रकारेणानुसधीयमानं एतदेवाग्निहोत्र कर्म । हे याज्ञवल्क्य, अतोऽस्मात् परतर अधिकं नास्तीति होवाच । एव जनकेन अग्निहोत्रस्वरूपविशेषे कथिते सति तस्मै जनकाय याज्ञवल्क्यः महर्षिः तुष्टः सन् वरं ददौ । जनकः स्वाभिमतं वर प्रार्थयते—स होवाचेति । हे याज्ञवल्क्य, त्वयि मम कामप्रश्न एव यथाकामं प्रश्न एव असत् भवति । प्रष्टव्याप्रष्टव्यविभागो मा भूदित्यर्थः । ततः याज्ञवल्क्यवरप्रदानादनन्तर स जनकः ब्रह्मा ब्रह्मिष्ठः सबभूव ।

शब्रासा.

कर्मण परलोकसाधनत्वम्

न[१]हि तदमुर्ष्मिल्लोके शक्नुवन्ति यदस्माल्लोकादकृत्वा प्रयन्ति । एतद्ध स्माऽऽहोद्दालक आरुणिः ॥

* अयं ग्रन्थ. पूर्वखण्डभाष्यशेषो लेखकप्रमादादत्र पतित इति भाति ।

(१) षब्रा. १।६.

मृत्युस्वरूपं परलोकेषु पुण्यपापफलभोगश्च

**पृच्छामि त्वा परं मृत्युम् । अवमं मध्यमं चतुम् ।**
**लोकं च पुण्यपापानाम् । एतत्पृच्छामि संप्रति ॥**

अत्र कश्चिन्मुनिर्जिज्ञासुरभिज्ञमन्य मुनिं पृच्छति– हे अभिज्ञ मुने त्वा प्रति चतुर्विधान्मृत्यून् पृच्छामि । परः अवमः मध्यमश्चतुर्थश्चेत्येते मृत्यवः, तेषा स्वरूप ब्रूहि । चतुर्थ इत्येतस्मिन्नर्थे चतुशब्दः । तथा पुण्यकृता पापिनां च लोक ब्रूहि । एतत्सर्वमिदानी पृच्छामि । तैआसा.

**अमुमाहुः परं मृत्युम् । पवमानं तु मध्यमम् ।**
**अग्निरेवावमो मृत्युः । चन्द्रमाश्चतुरुच्यते ॥**

इदमभिज्ञस्योत्तरम्—योऽसावादित्यः अमुमेव परं मृत्यु पूर्वे महर्षय आहुः । आदित्यस्य परिस्पन्दबाहुल्येन आयुषः क्षये सति मृत्योरलङ्घनीयत्वात् । पवमानं वायु मध्यम मृत्युमाहुः । प्राणवायोर्नाडीष्वन्यथा सचारे सति तत्क्लेशेन मृत्युः प्राप्यते, स च प्राणायामकुशलैर्योगिभिः क्लेशेन समाधातुं शक्यते । तस्मान्मध्यमो मृत्युः । जठराग्निर्यदा मन्दो भवति तदा व्याधिद्वारा मृत्युः प्राप्नोति, स च चिकित्सकैरल्पप्रयासेन समाधातुं शक्यते । तस्मादग्निरवमो मृत्युः । चन्द्रमा ओषधीनामधिपतिः । तदनुग्रहाभावे सति अन्नाभावान्मृत्युः प्राप्नोति । तस्मादसौ चतुर्थो मृत्युः । तैआसा.

**अनाभोगाः परं मृत्युम् । पापाः संयन्ति सर्वदा ।**
**आभोगास्त्वेव संयन्ति । यत्र पुण्यकृतो जनाः ॥**

पापाः श्रुतिस्मृत्युल्लङ्घनेन पापमेवाचरन्तः पुरुषाः अनाभोगाः सुखलेशेनापि हीनाः कृमिकीटादयः सन्तः सर्वदा पर मृत्यु संयन्ति, कतिपयैरेवादित्यपरिस्पन्दैरल्पायुषः सन्तः पुनःपुनर्जायन्ते म्रियन्ते च, सेयं सर्वदा परमृत्युप्राप्तिः । ये तु श्रुतिस्मृतिमार्गवर्तिनस्ते सर्वेऽपि आभोगाः सपूर्णाः सर्वभोगयुक्ताः सन्तस्तादृश स्थानं प्राप्नुवन्ति । यत्र यस्मिन्स्वर्गे पूर्वे पुण्यकृतो जना देवा वर्तन्ते तत्र गच्छन्ति । एतत्तु 'लोकं च पुण्यपापानाम्' इत्यस्योत्तरम् । तैआसा.

**ततो मध्यममायन्ति । चतुमग्निं च संप्रति ॥**

ततः पूर्वोक्तेभ्यः अत्यन्तपापकृद्भ्यः अत्यन्तपुण्यकृद्भ्यश्च अन्ये ये पुरुषा मिश्राणि पुण्यपापान्याचरन्ति, ते सप्रति मनुष्यजन्मनि मध्यमाधमचतुर्थमृत्यु च तदा प्राप्य प्रतीकारैः समादधते । एतदपि पुण्यपापलोकप्रश्नस्योत्तरम् । तैआसा.

**पृच्छामि त्वा पापकृतः । यत्र यातयते यमः ।**
**त्वं नस्तद्ब्रह्मन्प्रब्रूहि । यदि वेत्थासतो गृहान् ॥**

हे ब्रह्मन् त्वामिद पृच्छामि । किं पृच्छसीति तदुच्यते—पापकृतः प्राणिनो यमो यत्र स्थाने यातयते क्लेशयति तत्स्थान नः अस्मभ्य त्व प्रब्रूहि । यदि असतः पापिनो जन्तोः गृहान् आयतनानि वेत्थ तर्हि शुश्रूषवे मह्य ब्रूहि । तैआसा.

**कश्यपादुदिता. सूर्याः । पापान्निर्घ्नन्ति सर्वदा ।**
**रोदस्योरन्तर्देशेषु । तत्र न्यस्यन्ते वासवैः ॥**

योऽय कश्यपाख्योऽष्टमः सूर्यो महामेरौ नित्य वसति, तस्मादुत्पन्ना आरोगादयः सप्त सूर्याः, तदीयमूर्तिविशेषा अन्ये सहस्रसख्याकाः, ते सर्वेऽपि रोदस्योरन्तः द्यावापृथिव्योर्मध्ये देशेपु रौरवादिनरकप्रदेशेपु पापान् पापिनः प्राणिनः सर्वदा निर्घ्नन्ति निःशेपेण मारयन्ति । मारिताश्च ते पापिनो वासवैः निवासहेतुभिः सूर्यरश्मिरूपैर्देवैः तत्र न्यस्यन्ते तेष्वेव नरकप्रदेशेपु पुनरपि बाधिता उत्पाद्य स्थाप्यन्ते । तैआसा.

**तेऽशरीराः प्रपद्यन्ते । यथाऽपुण्यस्य कर्मणः ।**
**अपाण्यपादकेशासः । तत्र तेऽयोनिजा जनाः ॥**

ते पापिनस्तेषु नरकस्थानेषु अशरीराः सपूर्णावयवसमीचीनावयवरहिताः प्रपद्यन्ते जन्म प्राप्नुवन्ति, अपुण्यस्य कर्मणो यथा योग्य तथा प्राप्नुवन्ति । तत्र कश्चित्पापी पाणिशून्यः कुणिर्भवति । अपरः पादहीनः पङ्गुर्भवति । अपरः केशहीनः खलतिर्भवति । एवं अपाण्यपादकेशासः विकृतशरीरा जायन्ते । किंच तत्र तेषु नरकस्थानेषु केचित् अयोनिजा जन्तवो भवन्ति । तन्मध्ये केचित्स्वेदजाः कृमिदंशाद्याः, अपरे उद्भिदः तरुगुल्माद्या भवन्ति । अत एव वाजसनेयिनः पञ्चाग्नि-

(१) तैआ. १।८।४–८.

विद्यायां दक्षिणोत्तरमार्गरहितानां पापिनामीदृश जन्म आमनन्ति—'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्' (बृउ. ६।२।१६) इति। छन्दोगाश्चैवमामनन्ति—'तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति' (छाउ. ५।१०।८) इति। तैआसा.

**मृत्वा पुनर्मृत्युमापद्यन्ते। अद्यमानाः स्वकर्मभिः। आशातिकाः क्रिमय इव। ततः पूयन्ते वासवैः॥**

तेषु नरकस्थानेषूत्पन्नाः प्राणिनः सकृत् मृत्वा पुनः उत्पद्यन्ते मृत्यु प्राप्नुवन्ति, जन्ममरणसहस्राणि प्रतिपद्यन्ते इत्यर्थः। ते च स्वकर्मभिः स्वकीयैः पापैः अद्यमानाः भक्ष्यमाणाः, कर्मपरवशा इत्यर्थः। तेषामेव मध्येऽस्मत्प्रत्यक्षसिद्धो दृष्टान्त उदाह्रियते—आशातिकाः आगत्य शात्यमानाः अस्माभिरेव बाध्यमानाः शिरोवस्त्रखट्वादिषु वर्तमानाः कृमय इव यूकामत्कुणादय इव। यूकादयः पापिनो यथाऽस्माभिः प्रतिक्षण मार्यन्ते एवमन्येऽपि पापिनो देवैर्मार्यन्ते इत्यर्थः। तैआसा.

**अपैतं मृत्युं जयति। य एवं वेद। स खल्वैवविद्ब्राह्मणः। दीर्घश्रुत्तमो भवति। कश्यपस्यातिथिः सिद्धगमनः सिद्धागमनः। तस्यैषा भवति॥**

अथ ब्राह्मणम्। यः पुमान् एव 'कश्यपादुदिताः सूर्याः' इत्याद्युक्तप्रकारेण कश्यपमहिमान जानाति, असावेतं अपमृत्युं कृमिकीटादिकेषूक्तमपकृष्टमृत्युं जयति। विदुषः पापेष्वप्रवृत्तेर्युक्तो मृत्युजयः। किंच स खलु ब्राह्मणः एवंवित् कश्यपमहिमाभिज्ञः सन् दीर्घश्रुत्तमो भवति। दीर्घं चिरकाल कश्यपेन श्रूयते सम्यगनुष्ठाताऽयमिति, ततोऽप्यातिशयो बहूनां देवानां मुखात् श्रवणम्। बहवोऽपि देवाः कश्यपसमीप गत्वा ब्राह्मणोऽयमारुणकेतुक सम्यगनुतिष्ठतीति पुनःपुनः कथयन्ति, अतोऽयं दीर्घश्रुत्तमः। परलोके कश्यपस्य अतिथिरिव पूज्यो भवति। किंच स ब्राह्मणः स्वेच्छया कश्यपसमीपगमनागमनयोः समर्थो भवति। अथ ब्राह्मणोक्तार्थस्य प्रतिपादिकामृच अवतारयति—तस्यैषेति। तैआसा.

**आ यस्मिन्त्सप्त वासवाः। रोहन्ति पूर्व्या रुहः। ऋषिर्ह दीर्घश्रुत्तमः। इन्द्रस्य घर्मो अतिथिरिति॥**

तामेतामृच दर्शयति—यस्मिन् कश्यपे सप्तसङ्ख्याका आरोगादयः सूर्या आरोहन्ति, कश्यपादेवोत्पद्य स्थितिं लभन्ते इत्यर्थः। कीदृशाः सप्त सूर्याः। वासवाः जगन्निवासहेतवः। पूर्व्या रुहः सृष्ट्यादावुत्पन्नत्वेन प्रथमाङ्कुरभूताः। तस्य इन्द्रस्य परमैश्वर्ययुक्तस्य कश्यपस्य दीर्घश्रुत्तमनामकः कश्चित् ऋषिः घर्मः दीप्यमानः सन् अतिथिः सपन्नः। तैआसा.

**कश्यपः पश्यको भवति। यत्सर्वं परिपश्यतीति सौक्ष्म्यात्॥**

अथ ब्राह्मणमुच्यते—योऽयमष्टमः सूर्यो रूढ्या कश्यप इतिनाम्नाऽभिधीयते, स एव अवयवार्थपर्यालोचनायां आद्यन्तयोरक्षरयोर्व्यत्यासेन पश्यकों भवति। यत् यस्मात्कारणात् अत्यन्तसूक्ष्मत्वेन दिव्यदृष्ट्या सर्वं अतीतानागतादिक परितः पश्यति। तैआसा.

चतुर्दिक्षु चतुर्विधा नरका

**दक्षिणपूर्वस्यां दिशि विसर्पी नरकः। तस्मान्नः परिपाहि॥**

**दक्षिणापरस्यां दिश्यविसर्पी नरकः। तस्मान्नः परिपाहि॥**

**उत्तरपूर्वस्यां दिशि विषादी नरकः। तस्मान्नः परिपाहि॥**

**उत्तरापरस्यां दिश्यविषादी नरकः। तस्मान्नः परिपाहि॥**

दक्षिणस्याः पूर्वस्याश्चान्तरालवर्तिनी दिक् आग्नेयी, तस्यां विसर्पिनामको नरको विद्यते। इष्टके, तस्मात् नरकात् नः अस्मान् परिपाहि। नैर्ऋती दक्षिणापरा, तस्यामविसर्पी नाम नरकः। पूर्वत्र वेदनातिशयाद्विविधमितस्ततः सर्पति जन्तुर्यत्रेति व्युत्पत्त्या विसर्पी। इह तु दुःखस्यात्यन्तमाधिक्याद्विसर्पितुमपि न क्षमन्ते तस्मादविसर्पी। ऐशानी दिक् उत्तरपूर्वा, तत्र हि विषादिसंज्ञको नरकः। किमर्थमस्माभिः पापं कृतमिति जन्तवो विषाद कुर्वन्ति तस्मादय विषादी। वायवी दिक् उत्तरापरा, तत्र अविषादी नरकः। दुःखातिशयाज्जन्तवो विषादमपि

(१) तैआ. १।१९.

कर्तुं न क्षमन्ते तस्मादविषादी । शेषं पूर्ववत् ।

तैआसा.

देहस्य दु खान्तता ज्ञानस्येष्टता च

आप्लवस्व प्रप्लवस्व । आण्डी भव ज मा मुहुः ।
सुखादीं दुःखनिधनाम् । प्रतिमुञ्चस्व स्वां पुरम् ॥

जशब्देन जन्मवान्यजमान उच्यते । आप्लवन आगमनं जन्म । प्रप्लवनं प्रायणम् । हे यजमान जन्मोपेत मा मुहुः आप्लवस्व पुनःपुनर्जन्मलक्षणमागमन मा कुरु । मुहुः मा प्राप्लवस्व पुनःपुनर्मरणलक्षण प्रप्लवनं मा कुरु । मा मुहुराण्डीभव, आण्डो ब्रह्माण्डमध्ये भव इत्यर्थः । आण्डीत्यभूततद्भाव उच्यते । पूर्वमनाण्डः इदानीमाण्डीभूतः, तस्य निषेधो माशब्देनोच्यते । पुनःपुनर्ब्रह्माण्डवर्तित्वं तव मा भूदित्यर्थः । शेषं स्पष्टार्थम् ।

तैआसा.

मरीचयः स्वायम्भुवाः । ये शरीराण्यकल्पयन् ।
ते ते देहं कल्पयन्तु । मा च ते ख्या स्म तीरिषत् ॥

स्वायभुवाः, स्वयंभूः सवितृमण्डलवर्ती परमात्मा, तस्येमे स्वायंभुवाः । ये मरीचयः रश्मयः शरीराणि आत्मोपासकदेहान् अकल्पयन् कृतवन्तः, ते मरीचयः ते तव देह कल्पयन्तु जनयन्तु । स्मशब्देन आवश्यकत्वं द्योतयति । ससारोत्तरणविषया न ते ख्यातिः सर्वथा विनश्यत्वित्यर्थः । तैआसा.

मृत्युर्देव. इष्टदः यजनीयश्च

हरिं॑ हरन्तमनुयन्ति देवाः । विश्वस्येशानं वृषभं मतीनाम् ।
ब्रह्म सरूपमनु मेदमागात् । अयनं मा विवधीर्विक्रमस्व ॥

हरिं हरणशीलं प्राणापहर्तारं मृत्युदेवं सर्वे देवा अनुयन्ति आनुकूल्येन गच्छन्ति । न कोऽपि देवो मृत्युमुल्लङ्घयितुं क्षमते । कीदृश हरिं, हरन्तं आयुषोऽवसाने प्राणानपहरन्त, अत एव विश्वस्येशान सर्वस्य जगतः स्वामिनं, मतीनां मननीयानां देवानां मध्ये वृषभं श्रेष्ठम् । अस्मिंस्तु कर्मणि सरूपं समानरूपं अनुकूल इद ब्रह्म मन्त्रजात मामनु यजमानमनुलक्ष्य आगात् आभिमुख्येन प्राप्नोत् । अतो हे मृत्यो ब्रह्मणा तुष्टः सन् अयनं मा विवधीः मदीयं मार्गं मा विनाशय, किंतु विक्रमस्व मच्छत्रुविनाशार्थं पराक्रमं कुरु । तैआसा.

मा छिदो मृत्यो मा वधीः । मा मे बलं विवृहो मा प्रमोषीः ।
प्रजां मा मे रीरिष आयुरुग्र । नृचक्षसं त्वा हविषा विधेम ॥

हे मृत्यो त्वं मा च्छिदः मदीयस्य कस्याप्यवयवस्य च्छेद मा कार्षीः । मा वधीः मम वधमपि मा कार्षीः । मे मदीयं बल मा विवृहः मा विनाशय । मा प्रमोषीः अन्यदपि मदीयं वस्तु चौर्येण माऽपहर । मे मदीयां प्रजा पुत्रपौत्रादिकां मा रीरिषः हिंसिता मा कुरु । हे उग्र देव मदीयं आयुश्च मा रीरिषः मा विनाशय । नृचक्षस मनुष्येषु प्रख्यात त्वां हविषा विधेम परिचरेम ।

तैआसा.

सद्यश्चकमानाय । प्रवेपानाय मृत्यवे ।
प्रास्मा आशा अशृण्वन् । कामेनाजनयन्पुनः ॥

सद्यः तस्मिन्नेव क्षणे चकमानाय भयहेतवे, प्रवेपानाय तेन भयेन प्राणिना कम्पयित्रे । प्राणिनो हि मृत्योर्नामग्रहणेनैव भीताः कम्पन्ते । अस्मै ईदृशाय मृत्यवे आशाः सर्वा दिशः प्राशृण्वन् शृण्वन्ति । सर्वदिग्वर्तिनः प्राणिनो मृत्युदेवस्य महिमानं शास्त्रेभ्यः प्रकर्षेण शृण्वन्ति । कामेन मृत्योरिच्छया पुनरजनयन् पुनःपुनरपत्यानि जनयन्ति । मृत्यौ प्रतिकूले सति उत्पादितान्यपत्यानि तदानीमेव म्रियन्ते, अतो मृत्युमाराध्य तदिच्छानुवर्तिनोऽपत्यान्युत्पादयन्ति । तैआसा.

मृत्यु. पुरुषरूप., देवयानेतरमार्गस्वामी,
मनुष्याणा एकराट्, ऋतस्य प्रथमजः

कामेन मे काम आगात् । हृदयाद्धृदयं मृत्योः ।

(१) तैआ. १।२७।१-२.
(२) तैआ. ३।१५।१; नाउ. ४९.

(१) तैआ ३।१५।१; नाउ ५१
(२) तैआ. ३।१५।१. अन्यस्थलादिनिर्देशः ३४१ पृष्ठे द्रष्टव्यः ।
(३) तैआ. ३।१५।२. अन्यस्थलादिनिर्देशः ३४१ पृष्ठे द्रष्टव्यः ।

**यदमीषामदः प्रियम् । तदैतूप मामभि ॥**

कामेन मृत्योरिच्छया मे कामः आगात् मदीयमभीष्टं वस्तु आगच्छतु । मदीय हृदय मृत्योर्हृदयात् मृत्युचित्तानुकूल्येन वर्ततामिति शेषः । अतो मृत्योः अनुग्रहे सति अमीषा मदीयानामिन्द्रियाणा यददः प्रिय यदिद वस्तु अभीष्टं तद्वस्तु मामभिलक्ष्य उप समीपे ऐतु आगच्छतु । तैआसा.

**पॅरं मृत्यो अनुपरेहि पन्थाम् । यस्ते स्व इतरो देवयानात् ।**
**चक्षुष्मते शृण्वते ते ब्रवीमि । मा नः प्रजाँ रीरिषो मोत वीरान् ॥**

हे मृत्यो देवयानादितरो यः पन्थाः ते स्वः तव स्वभूतः, त परं पन्था देवयानादितर त मार्ग अनुपरेहि अनुक्रमेण प्राप्नुहि । चक्षुष्मते साधुदर्शिने शृण्वते अस्मद्विज्ञप्तीना श्रोत्रे ते तुभ्य एक वचन ब्रवीमि । नः अस्मदीया प्रजा पुत्रादिरूपा मा रीरिषः मा विनाशय । उतापि च वीरान् शूरान् भृत्यानपि मा रीरिषः ।
तैआसा.

**प्रॅ पूर्व्यं मनसा वन्दमानः । नाधमानो वृषभं चर्षणीनाम् ।**
**यः प्रजानामेकराण्मानुषीणाम् । मृत्युं यजे प्रथमजामृतस्य ॥**

यो मृत्युः मानुषीणां मनुष्यजातियुक्ताना प्रजानां एकराट् एक एव राजा, तादृशं मृत्यु अहं यजे पूजयामि । कीदृशोऽहम् । मनसा प्रवन्दमानः प्रकर्षेण नमस्कुर्वाणः, नाधमानः अपेक्षित फल याचमानः । कीदृश मृत्युम् । पूर्व्यं प्राणिभ्यः पूर्वस्मिन्कल्पे भवम् । चर्षणीना मनुष्याणा वृषभ कामादिवर्षणक्षमम् । ऋतस्य प्रथमजां सत्यस्य परब्रह्मणः प्रथमोत्पन्नकार्यम् । तैआसा.

वैश्वानर- प्रेतात्मा सुकृनलोकवह.

**अँयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनिरसि ।**
**वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो वहेमँ सुकृतां यत्र लोकाः ॥**

हे जातवेदः अय एव प्रेतः पुरुषः त्वं, न त्वस्य तव च भेदोऽस्ति । अस्मादधि अस्य प्रेतस्य शरीरस्योपरि त्वं अग्निः एतत् प्रत्यक्ष यथा भवति तथा वर्तसे । तत् तस्मादत्यन्तभेदाभावात्कारणात् अस्य प्रेतस्य अयमेव वैश्वानरस्त्व योनिरसि स्थानप्रदोऽसि । सर्वत्र हि पुत्रः पित्रे लोककृद्भवति, पुनाम्नो नरकात्त्रायते इति व्युत्पत्तेः । अयं च पुरा यजमानत्वदशाया नानाविधैः कर्मभिरग्नेः पालनात् तव पिता । ततो हे जातवेदः यत्र सुकृतां पुण्यकृता लोकाः स्थानानि सन्ति तत्रेमं प्रेत पुरुष वह प्रापय ।

तैआसा.

मृतमार्गरक्षकदेवताः

**यॅ एतस्य पथो गोप्तारस्तेभ्यः स्वाहा । य एतस्य पथो रक्षितारस्तेभ्यः स्वाहा । य एतस्य पथोऽभि रक्षितारस्तेभ्यः स्वाहा । ख्यात्रे स्वाहा । अपाख्यात्रे स्वाहा । अभिलालपते स्वाहा । अपलालपते स्वाहा । अग्नये कर्मकृते स्वाहा । यमत्र नाधीमस्तस्मै स्वाहा ॥**

एतस्य पथः मृतेन गन्तव्यस्य स्वर्गमार्गविषयस्य मार्गस्य रक्षकाः देवास्त्रिविधाः गोप्तृरक्षित्रभिरक्षितृनामकाः, ते च क्रमेण त्रिषु स्थानेषु तिष्ठन्ति । तादृशा ये सन्ति तेभ्यः स्वाहुतमिदमस्तु । यजमानकीर्तेः प्रकटयिता कश्चिद्देवः ख्याता, तस्मै स्वाहुतमिदमस्तु । स हि तुष्टः सन् देवलोके ख्यातिं करिष्यति ।अपकीर्तेः प्रकटयिता कश्चित् अपाख्याता, तस्मै स्वाहुतमिदमस्तु । स च तुष्टः अपकीर्ति वर्जयति । देवानामग्रे सुकृतं साकल्येन यः कथयति सोऽभिलालपन् । तद्योऽपलपति सोऽपलालपन् । ताभ्या स्वाहुतमिदमस्तु । पूर्ववदिष्टप्राप्त्यनिष्टपरिहारौ योजनीयौ । पूर्वानुष्ठितकर्मणामेतस्य च कर्मणो निष्पादको योऽग्निस्तस्मै कर्मकृते स्वाहुतमिदमस्तु । यं वाऽन्यदेवमत्रोपयुक्तं वयं नाधीमः न स्मरामः तस्मै स्वाहुतमिदमस्तु ।

तैआसा.

---

(१) तैआ. ३।१५।२ अन्यस्थलादिनिर्देशः ३६० पृष्ठे द्रष्टव्य । (२) तैआ. ३।१५।२.

(३) तैआ. ६।१।४; जैब्रा. १।४७ ( अयं वै त्वमस्मादसि त्वमेतत् । अयं ते योनिरस्य योनिस्त्वम् । पिता पुत्राय लोककृज्जातवेदो नयाह्येनं सुकृतां यत्र लोकः ॥ ).

(१) तैआ. ६।२।१.

**[१]यस्त इध्मं जभरत्सिष्विदानो मूर्धानं वा ततपते त्वाया ।**
**दिवो विश्वस्मात्सीमघायत उरुष्यः ॥**

हे अग्ने यः राक्षसादिः ते तव इध्मं जभरत् अपहरति । अथवा त्वाया त्वदीयस्य दग्धव्यस्य प्रेतस्य मूर्धानं स्वयं सिष्विदानः स्वेद प्राप्तः सन् ततपते अतिशयेन तापं करोति । शास्त्रीयदहनसाधनस्येध्मस्यापहारेण वा स्वकीयस्वेदेन मूर्धानं द्रवीकुर्वन्वा शास्त्रीयदाहं विनाश्य स्वर्ग विहन्ति । दिवः स्वर्गस्य अघायतः अघं पाप विघ्न य इच्छति तस्मात् विश्वस्मात्सीं सर्वस्मादपि राक्षसादेः उरुष्यः अयं प्रेतो रक्षणीयः । तैआसा.

मृतपुत्र मृतपिता चाग्निर्वैश्वानर

**[२]अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः ।**
**अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा ॥**

हे अग्ने अस्माद्यजमानात्प्रेतात् त्व अधिजातोऽसि । अय हि कर्मानुष्ठानेन त्वा स्वामिन सपादितवान् । अतः फलदशायामयं पुनस्त्वत्तः अधिजायतां त्वमेव स्वर्गलोके यजमानमुत्पादय । तत्सिद्ध्यर्थं वैश्वानराय सर्वपुरुषहितायाग्नये तुभ्यमिदं स्वाहुतमस्तु । तैआसा.

वरुणदूतः सुपर्णः

**[३]नाके सुपर्णमुप यत्पतन्तꣳ हृदा वेनन्तो अभ्यचक्षत त्वा ।**
**हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥**

हे अग्ने त्वामृत्विजो हृदा स्वकीयेन मनसा वेनन्तः कामयमानाः यत् यदा अभ्यचक्षत अभितः ख्यापितवन्तः, तदा त्वं तुष्टो भवेति शेषः । कीदृशं त्वाम् । नाके स्वर्गे उपपतन्त समीपे प्रतिगच्छन्तम् । अत एव सुपर्णं शोभनपक्षोपेतम् । हिरण्यपक्षं सुवर्णमयपक्षोपेतम् । वरुणस्य दूतं वरुणेन प्रेर्यमाणम् । यमस्य योनौ स्थानविशेषे भुरण्यु भरणशीलं भोगसपादकमित्यर्थः । शकुनं पक्ष्याकारम् । तैआसा.

(१) ऋसं. ४।२।६ उत्तरार्धे ( भुवस्तस्य स्वतवाँ पायुरग्ने विश्वस्मात्सीमघायत उरुष्य ), तैआ. ६।२।१.

(२) तैआ. ६।२।१. अन्यस्थलादिनिर्देशः ४०१ पृष्ठे द्रष्टव्य. ।

(३) ऋसं. १०।१२३।६; असं. १८।३।६६, सासं. १।३।९ ( ३२० ), २।२०।७ ( १८४६ ); ऐब्रा. ४।५।३; शाब्रा. ८।७, तैब्रा २।५।८।५, षब्रा.५।१; तैआ. ६।३।१.

प्रेतशरीरदोष. शकुनिपिपीलिकादिस्पर्शजन्यो निवारणीय

**[१]यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः ।**
**अग्निष्टद्विश्वादनृणं कृणोतु सोमश्च यो ब्राह्मणमाविवेश ॥**

हे प्रेत तव देहे कृष्णः शकुनः पक्षिविशेषः यदङ्गमातुतोद ईषद्व्यथितमकरोत् ।पिपीलः पिपीलिका वा सर्पो वा यदङ्गमातुतोद । उत वा अथवा श्वापदः अन्योऽपि जीवो व्यापत्तिहेतुरातुतोद । अयमग्निर्देवः तदङ्ग विश्वात् सर्वस्मादुपद्रवात् अनृण ऋणरहित उपद्रवरहित कृणोतु करोतु । यश्च सोमो ब्राह्मणं एतदीये ब्राह्मणशरीरे आविवेश यागकाले प्रविष्टवान् सोऽपि अनृणं करोतु । तैआसा.

प्रेतस्य स्वर्गमनम्

**[२]उत्तिष्ठातस्तनुवꣳ संभरस्व मेह गात्रमवहा मा शरीरम् ।**
**यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवः सविता दधातु ॥**

हे प्रेत अतः अस्माद्दहनदेशात् उत्तिष्ठ । तनुव शरीरं संभरस्व संपादय । इह दहनदेशे गात्र अङ्गं एकमपि मा अवहाः मा परित्यज । शरीरमपि माऽवहाः मा परित्यज । यत्रेत्यादि पूर्ववत् । ( भूम्यै भूम्या यत्र यस्मिन् देशविशेषे वृणसे जन्म प्रार्थयसे तत्र गच्छ । सविता देवः त्वा तत्र दधातु स्थापयतु । ) तैआसा.

**[३]इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व ।**

(१) ऋसं. १०।१६।६ दनृणं ( दगदं ) णमा ( णॉ आ ); असं. १८।३।५५ ऋसंवर्त्; तैआ. ६।४।२.

(२) तैआ. ६।४।२.

(३) तैआ. ६।४।२. अन्यस्थलादिनिर्देशः ३६१ पृष्ठे द्रष्टव्यः ।

**संवेशनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे ॥**

हे प्रेत ते तव सबन्धि इदमेकमस्थि, उ अपि च परः परस्तात् ते तव सम्बन्धि एकं अस्थि, हे प्रेत एतदस्थिरूपेण पूर्वद्वयापेक्षया तृतीयेन ज्योतिषा प्रकाशेन सविशस्व संयुक्तो भव । तनुवै शरीरसिद्ध्यर्थं संवेशनः सर्वेषामस्थ्नां योजयिता चारुरेधि रमणीयो भव । परमे सधस्थे उत्कृष्टे सहोपवेशनस्थाने देवाना प्रियो भव । तैआसा.

**उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन् ।**
**यमेन त्वं यम्या संविदानोत्तमं नाकमधि-रोहेमम् ॥**

हे प्रेत अस्मात्स्थानादुत्तिष्ठ । उत्थाय च प्रेहि प्रकर्षेण गच्छ । गमनकालेऽपि प्रद्रव शीघ्रं गच्छ । गत्वा च परमे व्योमन् उत्कृष्टे स्वर्गे ओकः कृणुष्व स्थानं कुरु । कृत्वा च त्वं यमेन यम्या च स्त्रीपुरुषाभ्यामुभाभ्यां सह सविदाना संविदानः ऐकमत्यं प्राप्तः सन् इममुत्तम नाक स्वर्गभोग अधिरोह प्राप्नुहि । तैआसा.

यजनीयो देव , जगत· वशी, गानेन स्तोतव्य·, अश्व-
रथाधिष्ठाता, जगतः धर्ता, छन्दसां प्रतिष्ठा,
सर्वप्रेताधिगम्य , मरणोत्तरं सत्यानृत-
विवेचक राजा यम·

**आयातु देवः सुमनाभिरूतिभिर्यमो ह वेह प्रयताभिरक्ता ।**
**आसीदताꣳ सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्यै ॥**

हशब्दः प्रसिद्ध्यर्थः, वाशब्दः समुच्चये । प्रसिद्धो यमो देवः सुमनाभिः सौमनस्ययुक्ताभिः ऊतिभिः अस्मदीयरक्षणैः सहितः इह यमयज्ञाख्ये कर्मणि आयातु । तथा प्रयताभिः नियताभिः ऊतिभिः अक्ता संबद्धा यमी चाऽऽयातु । मम यजमानस्य ऊर्जाय अन्नसिद्ध्ये जात्या उत्तमजातिसिद्ध्यै शत्रुहत्यै शत्रुवधाय च सुप्रयते सुष्ठुनियते बर्हिषि । ह प्रसिद्धौ । एतौ दम्पती आसीदता उपविशताम् । तैआसा.

**यमे इव यतमाने यदैतं प्र वां भरन्मानुषा देवयन्तः ।**
**आसीदतꣳ स्वमु लोकं विदाने स्वासस्थे भवत-मिन्दवे नः ॥**

इवशब्दः एवकारार्थः । यद्यदा यतमाने प्रयत्न कुर्वाणे यमे इव यमो यमी चेत्येते एव युवा ऐतं अस्मिन्कर्मण्यागच्छतम् । तदानीं देवयन्तो देवानात्मन इच्छन्तो मानुषा यजमानाः वां युवा प्रभरन् प्रकर्षेण भरन्तु पोषयन्तु । स्वमु लोकं स्वोचितमेव स्थान विदाने जानन्त्यौ युवां आसीदत उपविशतम् । नः अस्माक इन्दवे आह्लादाय स्वासस्थे सुखासनस्थाने भवत तिष्ठतम् । तैआसा.

**यमाय सोमꣳ सुनुत यमाय जुहुता हविः ।**
**यमꣳ ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥**

हे ऋत्विजः यमदेवार्थं सोम सुनुत लतात्मकं सोममभिषुणुत । तथा यमार्थं हविर्जुहुत । अग्निर्दूतो यस्मिन् यज्ञे सोऽय अग्निदूतः । अग्नेर्दूतत्वमन्यत्राऽऽम्नातम्— ‘ अग्निर्देवाना दूत आसीत् ’ इति । अरङ्कृतः बहुभिर्द्रव्यैरलङ्काररूपैर्युक्तः, तादृशो यज्ञो यम ह यममेव गच्छति गच्छतु । तैआसा.

**यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।**
**स नो देवेष्वायमद्दीर्घमायुः प्रजीवसे ॥**

हे ऋत्विजः यमार्थं घृतयुक्त हविर्जुहोत । यूय च प्रकर्षेण तिष्ठत । देवेषु मध्ये यो यमो देवः स प्रजीवसे प्रकृष्टजीवनार्थं नः अस्माक दीर्घमायुः आयमत् प्रयच्छतु । तैआसा.

**यमाय मधुमत्तमꣳ राज्ञे हव्यं जुहोतन ।**
**इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथि-कृद्भ्यः ॥**

हे ऋत्विजः यमाय राज्ञे मधुमत्तम अतिशयेन मधुरं हव्य जुहोतन जुहुत । पूर्वजेभ्यः सृष्ट्यादावुत्पन्नेभ्यः अत एव पूर्वेभ्यः अस्मत्तः पूर्वभाविभ्यः पथिकृद्भ्यः शोभनमार्गकारिभ्यः ऋषिभ्यः इद प्रत्यक्षं यथा भवति तथा नमोऽस्तु । तैआसा.

**योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी ।**
**यमं भङ्ग्यश्रवो गाय यो राजाऽनपरोध्यः ॥**

(१) तैआ. ६।४।२. अन्यस्थलादिनिर्देशः ३८९ पृष्ठे द्रष्टव्य. । (२) तैआ. ६।५

कौष्ठं धनमर्हतीति कौष्ठ्यः, तादृशो यः यमः एक इत् एक एव पार्थिवस्य पृथिव्यां भवस्यास्य सर्वस्य जगतो वशी वशेन युक्तः, सर्वं जगत्तदधीनमित्यर्थः। यश्च यमो राजा अनपरोध्यः केनाप्यपरोद्धुमशक्यः। त यम प्रति भङ्ग्यश्रवः एतन्नामकं गीत हे पुरुष गाय। भङ्गी रीतिः। सगीतशास्त्रोक्तां भङ्गीमर्हतीति भङ्ग्यम्। श्रवणीय श्रवः। भङ्ग्यं च तच्छ्रवश्चेति भङ्ग्यश्रवः। शास्त्रीयलक्षणोपेतत्वाच्छ्रोत्रसुखकरमित्यर्थः। तैआसा.

**यमं गाय भङ्ग्यश्रवो यो राजाऽनपरोध्यः।**
**येनाऽऽपो नद्यो धन्वानि येन द्यौः पृथिवी दृढा॥**

यो यमो राजा केनाप्यपरोद्धुमशक्यः। येन यमेन आपो धृता इति शेषः। तथा नद्यः येन धृताः। धन्वानि मरुस्थलानि येन धृतानि। द्यौर्येन धृता। दृढा पृथिवी च येन धृता। तादृश यम प्रति पूर्वोक्त भङ्ग्यश्रवो गाय। तैआसा.

**हिरण्यकक्ष्यान्त्सुधुरान्हिरण्याक्षानयःशफान्।**
**अश्वाननश्यतो दानं यमो राजाऽभितिष्ठति॥**

अनसां शकटानां रथानां शतं यस्य यमस्य सोऽयं अनश्शतः। तादृशो यमो राजा दानं फलप्रदान उद्दिश्यात्र समागच्छतु। अश्वानभितिष्ठति रथेषु योजयति। कीदृशान् अश्वान्। हिरण्यकक्ष्यान्, सौवर्णाभरणैर्युक्ताः कक्ष्याप्रदेशा येषा ते हिरण्यकक्ष्याः, तान्। शोभनं धुरं रथवहनस्थान येषा ते सुधुराः, तान्। शृङ्गारार्थं हिरण्यनिर्मिते अक्षिणी येषां ते हिरण्याक्षाः, तान्। पाषाणयुक्तमार्गेषु रक्षार्थं निर्मितैरयोमयैर्वलयैर्युक्ताः शफाः येषां ते अयःशफाः, तान्। अनश्यत इति पाठे नाशरहितानश्वान्' इति व्याख्येयम्। तैआसा.

**यमो दाधार पृथिवीं यमो विश्वमिदं जगत्।**
**यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम्॥**

पृथिवीं सर्वा यमो दाधार धृतवान्। तथा विश्वं सर्वमिदं जगत् यमो धृतवान्। यत्प्राणत् अस्मिञ्जगति श्वासयुक्तं यदस्ति, यदप्यन्यद्वायुना रक्षित वस्तु अस्ति, सर्वमित् सर्वमेव यमाय यमार्थं तस्थे तस्थौ अवस्थितम्। तैआसा.

**यथा पञ्च यथा षड्यथा पञ्चदशर्षयः।**
**यमं यो विद्यात्स ब्रूयाद्यथैक ऋषिर्विजानते॥**

पञ्च भूतानि यथा वर्तन्ते, षट् ऋतवो यथा वर्तन्ते, पञ्चदश तिथयो यथा वर्तन्ते, ऋषयश्च वसिष्ठादयो यथा वर्तन्ते, त प्रकार सर्वं स पुमान् ब्रूयात् वक्तु शक्तः। कः पुमानिति स उच्यते—यो यमं वेद स पुमान् ब्रूयादित्यन्वयः। यमो हि नियन्तृत्वेन भूतर्तुतिथ्यादिक सर्वं जगद्यथायथ प्रवर्तयति। अतो यमस्य माहात्म्य विद्वान् इदमित्थमिति सर्वं वक्तु शक्नोति। यथा वैक ऋषिः एक एव सर्वज्ञः परमेश्वरो विजानते विशेषेण जगज्जानाति, तदपि प्रकारान्तर यममाहात्म्याभिज्ञ एव वक्तुमुत्सहते। तैआसा.

**त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत्।**
**गायत्री त्रिष्टुप्छन्दाꣳसि सर्वा ता यम आहिता॥**

त्रिकद्रुकेभिः 'ज्योतिगौरायुरिति त्रिकद्रुकाः' इति सूत्रकारेणोक्तत्वात्ते त्रयो यागास्त्रिकद्रुकाः, तैर्यागैः षडुर्वीः भूमीः पतति प्राप्नोति। ताश्चोर्व्यः शाखान्तरमन्त्रे समाम्नाताः—'षण्मोर्वीरꣳहसस्पान्तु द्यौश्च पृथिवी चाऽऽपश्चौषधयश्चोर्क्च सूनृता च' इति। बृहत् परं ब्रह्म एकमित् एकमेव। गायत्र्यादीनि तु छन्दांसि छन्दोरूपेण व्यवस्थितानि। एव नानाविध यज्जगदस्ति सर्वा ता तत्सर्वं जगत् यमे आहिता यमे प्रतिष्ठितम्। नियामकत्वादेव जगद्व्यवस्थाहेतुत्वं यमस्य युक्तमित्यर्थः। तैआसा.

**अहरहर्नयमानो गामश्वं पुरुषं जगत्।**
**वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यमः॥**

अय वैवस्वतः सूर्यस्य पुत्रो यमः पञ्चभिर्मानवैः पञ्चसंख्याकैर्मुख्यैर्दूतविशेषैः सहितः सन् अहरहः प्रतिदिन गवादीन्नयमानः यमलोके प्रापयन् न तृप्यति अलमेतावतेत्येवं तृप्तिं न प्राप्नोति। प्राणिनो नेतुमालस्यरहित इत्यर्थः। तैआसा.

**वैवस्वते विविच्यन्ते यमे राजनि ते जनाः।**
**ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः॥**

इह लोके ये च पुरुषाः सत्येन वर्तितुं इच्छन्ति, येऽपि चान्ये पुरुषाः अनृतवादिनः, ते द्विविधा अपि जनाः वैवस्वते सूर्यस्य पुत्रे यमे राजनि स्थिते सति

उदेति । सा सत्योक्तिर्मो परिपात्वित्यर्थः ।

ऋसा.

सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः ।
ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः ॥

सत्येन ब्रह्मणाऽनन्तात्मना । ब्रह्मा खलु देवाना मध्ये सत्यभूतः । तेन अधःस्थितेन भूमिरुत्तभिता उपरि स्तम्भिता । यथा अधो न पतेत्तथा कृता । यद्वा, सत्येन अनृतप्रतियोगिना धर्मेण भूमिरुत्तभिता उद्धृता, फलिता भवतीत्यर्थः । असति सत्ये भूम्या सस्यादयो न फलन्ति । तथा सूर्येण देवेन द्यौरुत्तभिता । सूर्यो हि द्युस्थानत्वाद्दिव दधार । ऋतेन यज्ञेन आदित्याः अदितेः पुत्रा देवाः तिष्ठन्ति । यज्ञे यजमानदत्तया खल्वाहुत्या देवा उपजीवन्ति । दिवि द्युलोके सोमो देवानामाप्यायनकारी वल्लीरूपो देवतारूपश्च अधि श्रितः अधितिष्ठति । इति स्वपतिं सोम सूर्या स्तौति ।

ऋसा.

प्रजापतिर्वै यदग्रे व्याहरत् । स सत्यमेव व्याहरत् । एतद्वाव स त्रिर्व्याहरद्भूर्भुवस्स्वरिति । एतद्वै वाचः सत्यम् ॥

पाहि माऽग्ने दुश्चरितादा मा सुचरिते भजेत्याह । अग्निर्वाव पवित्रम् । वृजिनमनृतं दुश्चरितम् । ऋजुकर्मँ सत्यँ सुचरितम् । अग्निरेवैनं वृजिनादनृताद्दुश्चरितात्पाति । ऋजुकर्मे सत्ये सुचरिते भजति । तस्मादेवमाशास्ते । आत्मनो गोपीथाय ॥

भज स्थापय । कायिकं निषिद्धाचरण वृजिनं, विहिताचरणं ऋजुकर्म, वाचिके सत्यानृते ।

तैसा. १।१।१२।१ (१६९–७०)

आगात्सत्यँ हविरिदं जुषाणम् । यस्माद्देवा जज्ञिरे भुवनं च विश्वे ।
तस्मै विधेम हविषा घृतेन । यथा देवैः सधमादं मदेम ॥

यत् सत्यं सत्यवदनाभिमानिदेवतास्वरूपमस्ति तत् जुषाण प्रीतियुक्त सत् इदमस्माभिर्दीयमान हविः प्रति आगात् आगच्छत् । अस्मात्सत्याख्याद्देवस्वरूपात् विश्वे सर्वे देवाः भुवन च जज्ञिरे । सत्य हि परब्रह्मस्वरूपत्वात्सर्वस्य जनकम् । तस्मै सत्याय देवाय घृतयुक्तेन हविषा विधेम परिचरेम । अथानन्तरं वय देवैर्युक्ताः सधमादं मदेम एकत्र हर्ष प्राप्नुयाम । तैब्रासा.

यस्य प्रतिष्ठोर्वन्तरिक्षम् । यस्माद्देवा जज्ञिरे भुवनं च सर्वे ।
तत्सत्यमर्चदुपयज्ञं न आगात् । ब्रह्माऽऽहुतीरुपमोदमानम् ॥

यस्य सत्यस्य ब्रह्मणः उरु विस्तीर्ण अन्तरिक्ष प्रतिष्ठा आश्रयः । सर्वगतत्वादन्तरिक्षव्यापित्व युक्तम् । यस्मात् सत्यात् ब्रह्मणः सर्वे देवा भुवन च जज्ञिरे, तत्सत्याख्यं अर्चत् पूजायुक्त परं ब्रह्म अस्मदीया आहुतीरुपेत्य मोदमानं सत् मदीय यज्ञं उपागात् उपागच्छतु ।

तैब्रासा.

तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः । स यः सत्यं वदति यथाऽग्निं समिद्धं तं घृतेनाभिषिञ्चेदेवं हैनं स उद्दीपयति । तस्य भूयो भूय एव तेजो भवति । श्वः श्वः श्रेयान्भवति । अथ योऽनृतं वदति यथाऽग्निं समिद्धं तमुदकेनाभिषिञ्चेदेवं हैनं स जासयति । तस्य कनीयः कनीय एव तेजो भवति । श्वः श्वः पापीयान्भवति । तस्मादु सत्यमेव वदेत् ॥

आहिताग्निना सत्यमेव वदितव्य, न कदाचिदप्यनृत, इत्युभय प्रतिपादयति—तस्य वेत्यादिना ।

शब्रासा.

तदु हाप्यरुणमौपवेशिं ज्ञातय ऊचुः स्थविरो वा अस्यग्नी आधत्स्वेति । स होवाच ते मैतद्ब्रूथ । वाचंयम एवैधि । न वा आहिताग्निनाऽनृतं वदितव्यम् । न वदञ्जातु नानृतं वदेत् । तावत्सत्यमेवोपचार इति ॥

एतत्सत्यवदनस्याग्निसमिन्धनहेतुत्वमृषिवाक्यसबन्धेन द्रढयति—तदु हेति । तत् तत्र उक्तविषयेऽपि

(१) ऋस १०।८५।१; अस. १४।१।१.
(२) कास. ८।४ (९)
(३) तैब्रा. ३।३।७।९–१०.
(४) तैब्रा. ३।१२।३।२–३.
(१) शब्रा. २।२।२।१९–२०.

खल्वेवं पूर्ववृत्तान्तः संजातः। उपवेशो नाम कश्चित्, तस्य पुत्रमरणं तदीया ज्ञातयः उक्तवन्तः। किमिति। हे अरुण, स्थविरः वृद्धः असि, अतः आमुष्मिकसिद्ध्ये अग्न्याधान कुर्विति। स चैवं प्रत्युक्तवान्। कथमिति। मैतद्ब्रूयेति तद्वचनम्। वाचयम एवैधि वाग्यत एव भवेति। कुत एव प्रार्थ्यते, तत्राह—न वा इति। आहिताग्निना ह्यनृतं न वदितव्यम्। वाग्व्यवहार कुर्वतस्तु अनृतवदननिषेधो न सभवति। यस्मादेवमृषिणोक्त 'न वदञ्जातु' इत्यादि, तस्मात्सत्यवचनमेवाग्न्याधेयस्याङ्गमित्यर्थः। शब्रासा.

## धर्माचरणम्

[1]चरणं पवित्रं विततं पुराणम्। येन पूतस्तरति दुष्कृतानि।
तेन पवित्रेण शुद्धेन पूताः। अति पाप्मानमरातिं तरेम॥

चरत्यनेनेति पादेन्द्रियं चरण, शास्त्रीयाचरणं वा तेनोच्यते। तच्च पवित्र शुद्धिकारण, विततं सर्वप्राणिविषयत्वेन विस्तीर्णं, पुराणं सृष्ट्यादिमारभ्य प्रवृत्तत्वाच्चिरन्तनम्। येन चरणेन देवेन पूतः शोधितः पुरुषो दुष्कृतानि तरति पापानि विनाशयति, पवित्रेण अन्यस्य शोधकेन स्वयमपि शुद्धेन तेन चरणदेवेन पूताः वय पाप्मानमरातिं पापरूप शत्रु अतितरेम अतिशयेन लङ्घयामः। तैब्रासा.

[2]लोकस्य द्वारमर्चिमत्पवित्रम्। ज्योतिष्मद्भ्राजमानं महस्वत्।
अमृतस्य धारा बहुधा दोहमानम्। चरणं नो लोके सुधितां दधातु॥

यदेतच्चरणाख्य देवतास्वरूपं तदेतत् नः अस्माक स्वर्गलोके सुधिता सुखयुक्तामवस्थितिं दधातु सपादयतु। कीदृशं चरणम्। लोकस्य द्वार स्वर्गस्य द्वारवत्प्रवेशसाधन, अर्चिमत् अर्चनायुक्तं सर्वैः पूज्यं, पवित्र शोधकं, ज्योतिष्मत् त्विषा प्रकाशनसामर्थ्योपेत, भ्राजमानं स्वयमपि दीप्यमानं, महस्वत् माहात्म्ययुक्तं, अमृतस्य पीयूषस्य धारा बहुधा दोहमान अनेकप्रकारेण संपादनशीलम्। तैब्रासा.

(१) तैब्रा. ३।१२।३।४; नाउ. १।११.
(२) तैब्रा. ३।१२।३।४.

## आनृण्यम्

[1]जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते। ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः। एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवाव दयते। तदवदानानामवदानत्वम्॥

ब्रह्मचर्येण वेदाभ्यासेन ब्रह्मचारित्वेन गुरुगृहे वसतीति ब्रह्मचारिवासी, वेदाभ्यासादिभिरपाकर्तव्यं यदृण तत् हृदयाद्यवदानैरेव अपाकरोति। ऋणमवदयते एभिः इत्यवदानत्वम्। तैसा. १।३।१०।१ (पृ. ४८१)

[2]ऋणं ह वै जायते योऽस्ति। स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः॥

यो द्विजातिः स जायमान एव देवादिभ्यश्चतुर्भ्योऽपि ऋणवान् अधमर्णिको जायते। ऋणित्वे जननमेव निमित्तमित्यर्थः। शब्रासा.

स यदेव यजेत तेन देवेभ्य ऋणं जायते। तद्ध्येभ्य एतत्करोति यदेनान्यजते यदेभ्यो जुहोति॥

सग्रहोक्त विवृणोति—स यदेवेति। यजेत इति यत् तेन कारणेन यागेन निमित्तेन देवेभ्यस्तदृणं जायते। हि यस्मात् यागकर्मभ्य एभ्यो देवेभ्यः एतदिदानी करोति, अतस्तेभ्यस्तदृणमित्यर्थः। तच्छब्दार्थमाह—यदेनानिति। यागहोमावुभावपि नियमेन देवार्थमेव यतः क्रियेते अतस्तेषां तौ स्व, तस्यावश्यप्रदानत्वादृणी जायते इत्यर्थः। एवमुत्तरवाक्यान्यपि योज्यानि। शब्रासा.

अथ यदेवानुब्रुवीत तेनर्षिभ्य ऋणं जायते। तद्ध्येभ्य एतत्करोति। ऋषीणां निधिगोप इति ह्यनूचानमाहुः॥

अथेति। अनुब्रुवीत अनुवचनं कुर्यात्, अधीयीतेत्यर्थः। निधिगोप इतीति। उपभुज्यमानोऽपि यो न विनश्यति

(१) तैसं. ६।३।१०।५. (२) शब्रा. १।७।२।१-६.

स निधिः। तादृशः ऋषीणां सबन्धी यो वेदाख्यो निधिः, तस्य गोपायिता इति वेदमनूचानमाहुर्बुधाः। अतस्तेषां प्रवचनं धनमिति गम्यते।

शब्रासा.

अथ यदेव प्रजामिच्छेत तेन पितृभ्य ऋणं जायते। तद्ध्येभ्य एतत्करोति यदेषां संतताऽव्यवच्छिन्ना प्रजा भवति ॥

अथ यदेव वासयेत तेन मनुष्येभ्य ऋणं जायते। तद्ध्येभ्य एतत्करोति यदेनान्वासयते यदेभ्योऽशनं ददाति। स य एतानि सर्वाणि करोति स कृतकर्मा। तस्य सर्वमाप्तं सर्वं जितम् ॥

अथ यदेवेति। वासयेत गृहे अन्नादिप्रदानेन इदानीं अवकाशं प्रयच्छेत्। यो जायमानो ब्राह्मण एतानि यागानुवचनादीनि सर्वाण्यपि करोति, स कृतकर्मा कृतकृत्यः। तस्मादाप्तव्य सर्वमाप्त भवति देवादिसर्वस्थानं, सर्व जेतव्य जित भवति। शब्रासा.

स येन देवेभ्य ऋणं जायते तदेनांस्तदवदयते यद्यजते। अथ यदग्नौ जुहोति तदेनांस्तदवदयते। तस्माद्यत्किञ्चाग्नौ जुह्वति तदवदानं नाम ॥

स येनेति। इत्थं तेषामृणत्व प्रति तेन अवदयते। दयतिर्दानार्थः। अवप्रत्यर्पणं, देवाना स्वभूतमृण विभज्य दत्तवान्भवति। तच्छब्दार्थमाह—यद्यजत इति। यजते इति यदस्ति तत् तेन यागेनेत्यर्थः। एव होमेनापि। यस्मादेवं तस्माद्यत्किञ्च चरुपुरोडाशादिक अग्नौ जुह्वति तदवत्तं हविः अवदानमिति प्रसिद्ध भवति।

शब्रासा.

## ब्रह्मचर्यम्

ब्रह्मचारीष्णंश्चरति रोदसी उभे तस्मिन्देवाः संमनसो भवन्ति।
स दाधार पृथिवीं दिवं च स आचार्यं तपसा पिपर्ति ॥(१)

ब्रह्मचारी, ब्रह्मणि वेदात्मके अध्येतव्ये चरितु शीलमस्य स तथोक्तः उभे रोदसी द्यावापृथिव्यौ इष्णन् आत्मीयेन तपसाऽभीक्ष्ण व्याप्नुवन् चरति स्वनियमे प्रवर्तते। तस्मिन्ब्रह्मचारिणि सर्वे इन्द्रादयो देवाः संमनसः समानमनस्का भवन्ति। अनुग्रहबुद्धियुक्ता भवन्तीत्यर्थः। स ब्रह्मचारी आत्मीयेन तपसा पृथिवीं भूमिं दिव द्युलोक च दाधार धारयति पोषयति। तथा आचार्यं स्व गुरुं तेनैव तपसा पिपर्ति पालयति। सन्मार्गवृत्त्या आचार्यं परिपालयतीत्यर्थः। 'शिष्यपाप गुरोरपि' इति शिष्यकृतेन पापेन गुरोरपि पातित्यस्मरणादेवमुक्तम्।

असा.

ब्रह्मचारिणं पितरो देवजनाः पृथग्देवा अनुसंयन्ति सर्वे।
गन्धर्वा एनमन्वायन्त्रयस्त्रिंशत्त्रिशताः षट्सहस्राः सर्वान्त्स देवांस्तपसा पिपर्ति ॥(१)

ब्रह्मचारिणं ब्रह्मचर्यमाचरन्तं पुरुष पितरः पितृगणाः, देवजनाः एतत्सज्ञा देवगणाः, अन्ये च सर्वे देवा इन्द्रादयः पृथगनुसयन्ति। तस्य रक्षणार्थं पृथक्पृथक्तमनुगच्छन्तीत्यर्थः। तथा गन्धर्वाः अन्तरिक्षसचारिणो विश्वावसुप्रभृतयः एन ब्रह्मचारिणमन्वायन् अनुगच्छन्ति। ये च त्रयस्त्रिंशद्देवाः 'अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च' (ऐब्रा. १।१०) इत्येव प्रागुदाहृताः। ये च त्रिशताः। त्रय इति अत्रापि सबध्यते। त्र्युत्तरत्रिशतसंख्याकास्तद्विभूतिरूपा देवाः। तथा षट्सहस्राः ये च तद्विभूतिरूपाः षट्सहस्रसख्याका देवाः। एवमेव वैश्वदेवनिविदि देवाना संख्या उत्तरोत्तर भूयसी तन्माहात्म्यप्रतिपादनाय समाम्नायते—'ये स्थ त्रय एकादशास्त्रयश्च त्रिंशच्च त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा' इति प्रक्रम्य 'अतो वा देवा भूयांसः स्थ' (निवि. १।७) इति। तत्र प्रकृतसंख्यातो भूयस्त्वश्रवणादत्र षट्सहस्रा इति अधिकसख्योक्तिः। तान् सर्वान् देवान् स ब्रह्मचारी तपसा आत्मीयेन ब्रह्मचर्यनियमेन पिपर्ति पालयति। देवमनुष्यादिरूप सर्वं जगत् ब्रह्मचर्येण ध्रियते इत्यर्थः। असा.

आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः ॥

(१) असं. ११।७।१, गोब्रा. १।२।१.

(१) असं. ११।७।२-२६.

ब्रह्मचारिणं माणवकमुपनयमानः स्वसमीपमुपगमयन्नाचार्यः अन्तः विद्याशरीरस्य मध्ये गर्भं कृणुते करोति। तं गर्भीभूतं ब्रह्मचारिणं तिस्रो रात्रीः तावत्कालपर्यन्तं त्रिरात्रमुदरे आत्मीये बिभर्ति धारयति। चतुर्थे दिवसे जातं विद्यामयशरीरादुत्पन्नं तं ब्रह्मचारिणं द्रष्टुं अवलोकयितुं देवा अभिसंयन्ति अभिमुखं संभूय गच्छन्ति। उपनयनसंस्कारेण माणवकस्य आचार्यसकाशादुत्पत्तिं भगवानापस्तम्बोऽपि आह स्म—'स हि विद्यातस्तं जनयति। तच्छ्रेष्ठं जन्म। शरीरमेव मातापितरौ जनयतः' (आध. १।१।१५-१७) इति।

अस्त.

**इयं समित्पृथिवी द्यौर्द्वितीयोतान्तरिक्षं समिधा पृणाति।**
**ब्रह्मचारी समिधा मेखलया श्रमेण लोकांस्तपसा पिपर्ति॥**

पूर्वं ब्रह्मचारिणो माहात्म्यकथनपुरःसरं तदुत्पत्तिरभिहिता। अधुना स्तुतिव्याजेन तन्नियमा उपदिश्यन्ते। इयं परिदृश्यमाना पृथिवी ब्रह्मचारिणः प्रथमा समित्। द्यौः द्युलोकात्मिका द्वितीया समित्। उत अपि च अन्तरिक्षं द्यावापृथिव्योर्मध्ये समिधा अग्नावाधीयमानया पृणाति पूरयति। इत्थं ब्रह्मचारी समिधा आधीयमानया, मेखलया धार्यमाणया मौञ्ज्या, श्रमेण इन्द्रियनिग्रहोद्भूतखेदेन, तपसा अन्येनापि देहसंतापकेन नियमजातेन लोकान् प्रागुक्तान्पृथिव्यादीन् पिपर्ति पूरयति पालयति वा। अतः समिदाधानादिकमवश्यमस्य कर्तव्यमित्यर्थः।

अस्त.

**पूर्वो जातो ब्रह्मणो ब्रह्मचारी घर्मं वसानस्तपसोदतिष्ठत्।**
**तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं देवाश्च सर्वे अमृतेन साकम्॥**

यत्सर्वजगत्कारणं ब्रह्म सत्यज्ञानादिलक्षणं, तस्माद्ब्रह्मणः सकाशाद्ब्रह्मचारी पूर्वो जातः प्रथममुत्पन्नः। स चोत्पन्नो घर्मं दीप्तं रूपं वसानः आच्छादयन् तपसा समिदाधानादिरूपेण सहोदतिष्ठत् उत्थितवान्। तस्माद्ब्रह्मचार्यात्मना तपस्तप्यमानाद्ब्रह्मणः सकाशाद्ब्राह्मणं ब्राह्मणानां स्वभूतं ज्येष्ठं प्रशस्यतमं वृद्धतमं वा ब्रह्म वेदात्मकं जातं प्रादुर्भूतम्। तत्प्रतिपाद्याः सर्वे अग्न्यादयो देवाश्च अमृतेन अमृतत्वप्रापकेन स्वोपभोग्येन साकं सह। जाता इत्यर्थः। प्रथमजननाद्ब्रह्मचारी सर्वश्रेष्ठ इत्यर्थः।

अस्त.

**ब्रह्मचार्येति समिधा समिद्धः कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः।**
**स सद्य एति पूर्वस्मादुत्तरं समुद्रं लोकान्त्संगृभ्य मुहुराचरिक्रत्॥**

समिधा सायंप्रातरग्नावाधीयमानया तज्जनितेन तेजसा समिद्धः संदीपितः कार्ष्णं कृष्णमृगसंबन्धि अजिनं वसानः धारयन्दीक्षितो भिक्षाचरणादिभिर्नियमविशेषैर्नियन्त्रितः दीर्घश्मश्रुः दीर्घैरायतैः श्मश्रुभिर्युक्तः सन् ब्रह्मचारी ब्रह्मचर्यधर्मेण युक्तः एति वर्तते। स उदीरितलक्षणो ब्रह्मचारी सद्यः शीघ्रं पूर्वस्मात्समुद्रादुत्तरं उत्तरदिगवस्थितं समुद्रं एति गच्छति, तपसो महिम्ना व्याप्नोतीत्यर्थः। तथा लोकान् पृथिव्यन्तरिक्षादीन् संगृह्य हस्ते धृत्वा मुहुः अत्यर्थं आचरिक्रत् आभिमुख्येन करोति। सर्वे लोका अस्य वशे भवन्तीत्यर्थः।

अस्त.

**ब्रह्मचारी जनयन्ब्रह्मापो लोकं प्रजापतिं परमेष्ठिनं विराजम्।**
**गर्भो भूत्वाऽमृतस्य योनाविन्द्रो ह भूत्वाऽसुरांस्ततर्ह॥**

उक्तलक्षणो ब्रह्मचारी ब्रह्मचर्यमहिम्ना ब्रह्म ब्राह्मणजातिं, अपः स्नानपानार्था गङ्गाद्या नदीः, इममात्मनः फलभूतं स्वर्गादिलोकं, प्रजापतिं प्रजानां स्रष्टारमवान्तरसृष्टिकरं, परमेष्ठिनं, परमे उत्कृष्टे सत्यलोके तिष्ठतीति परमेष्ठी, तं आदिब्रह्माणं, विराजं स्थूलप्रपञ्चशरीराभिमानिनमीश्वरं च जनयन् उत्पादयन् वर्तते। स्वस्वकारणादुत्पद्यमानानामेषां ब्रह्मचर्यं निमित्तकारणमिति तदाश्रयभूतो ब्रह्मचार्येव जनयन्नित्युपचर्यते। अमृतस्य अमरणशीलस्य ब्रह्मणः संबन्धिन्या योनौ सत्त्वरजस्तमोगुणात्मिकायां प्रकृतौ प्रथमं ब्रह्मचारी गर्भो भूत्वा उदीरितं सर्वं जनयति। पश्चादिन्द्रो ह भूत्वा तपोबलादिन्द्रत्वं प्राप्य असुरान् सुरविरोधिनो दैत्यान् ततर्ह जघान। इत्थं सर्वजगत्कर्तृत्वेन ब्रह्मचारिणः स्तुतिः।

अस्त.

**आचार्यस्ततक्ष नभसी उभे इमे उर्वी गम्भीरे पृथिवीं दिवं च ।**
**ते रक्षति तपसा ब्रह्मचारी तस्मिन्देवाः संमनसो भवन्ति ॥**

इमे परिदृश्यमाने उभे नभसी । नभः अन्तरिक्ष, तत्साहचर्यात् द्विवचनेन पृथिवी उपलक्ष्यते। द्यावापृथिव्यौ आचार्यस्ततक्ष तक्षणेन जनयामास । नभसी विशेष्येते— उर्वी विस्तीर्णे, गम्भीरे गाम्भीर्ययुक्ते, परिच्छेत्तुमशक्ये इत्यर्थः।ते एव व्यस्त निर्दिशति—पृथिवी दिव चेति । तं द्यावापृथिव्योरुत्पादकमाचार्यं ब्रह्मचारी आत्मीयेन तपसा ब्रह्मचर्यनियमेन रक्षति पालयति । तस्मिंस्तथाविधे ब्रह्मचारिणि सर्वे देवाः समनसः समानमनस्काः प्रीता भवन्ति । असा.

**इमां भूमिं पृथिवीं ब्रह्मचारी भिक्षामा जभार प्रथमो दिवं च ।**
**ते कृत्वा समिधावुपास्ते तयोरार्पिता भुवनानि विश्वा ॥**

इमां परिदृश्यमाना पृथिवी प्रथितां विस्तीर्णां भूमि ब्रह्मचारी प्रथमः प्रथमभावी सन् भिक्षा आ जभार भिक्षात्वेन आहृतवान् । अनन्तरं दिव द्युलोक च द्वितीयां भिक्षामाजहार । ते द्यावापृथिव्यौ भिक्षणेन लब्धे समिधौ कृत्वा उपास्ते अग्निं परिचरति । समिन्धनसाधनयोस्तयोर्द्यावापृथिव्योः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आर्पिता अर्पितानि स्थापितानि, आश्रित्य वर्तन्ते इत्यर्थः । असा.

**अर्वागन्यः परो अन्यो दिवस्पृष्ठाद्गुहा निधी निहितौ ब्राह्मणस्य ।**
**तौ रक्षति तपसा ब्रह्मचारी तत्केवलं कृणुते ब्रह्म विद्वान् ॥**

दिवः द्युलोकस्य पृष्ठात् उपरिभागात् अर्वाक् अधः भूलोके अन्यः एको निधिर्वेदात्मकः गुहा गुहायां आचार्यहृदयरूपाया निक्षिप्तः । अन्यः अपरो निधिः तत्प्रतिपाद्यदेवतारूपः परः परस्तात् उपरि देशे गुहायां ज्ञातुमशक्ये स्थाने निक्षिप्तः । ब्राह्मणस्याधीतवेदस्य सबन्धिनौ तौ निहितौ निक्षिप्तौ निधी ब्रह्मचारी तपसा ब्रह्मचर्यनियमेन रक्षति पालयति । विद्वान् वेदार्थरहस्याभिज्ञः तत् शब्दतदर्थात्मकं निधिद्वयं केवल निष्प्रपञ्चं ब्रह्म कृणुते कुरुते । स्वात्मभूते परब्रह्मणि वेदराशेस्तदर्थस्य चाध्यस्तत्वेन अधिष्ठानभूतं ब्रह्मैव ताद्रूप्येण साक्षात्करोतीत्यर्थः । असा.

**अर्वागन्य इतो अन्यः पृथिव्या अग्नी समेतो नभसी अन्तरेमे ।**
**तयोः श्रयन्ते रश्मयोऽधि दृढास्ताना तिष्ठति तपसा ब्रह्मचारी ॥**

इतः अस्याः पृथिव्याः अर्वाक् अधःप्रदेशे अन्यः एकोऽग्निः अनुद्यत्सूर्यात्मको वर्तते । अन्यः अपरः पार्थिवोऽग्निः पृथिव्या उपरि वर्तते । ततः सूर्ये उदिते सति इमे नभसी अन्तरा अनयोर्द्यावापृथिव्योर्मध्ये तौ अग्नी समेतः परस्परं सगतौ भवतः । तयोः सूर्याग्न्योः सबन्धिनो रश्मयः परस्परसंमेलनेन अतिदृढाः श्रयन्ते द्यावापृथिव्यौ आश्रयन्ति । 'वैश्वानरो यतते सूर्येण ' ( ऋसं. १।९८।१ ) इति हि निगमः । इत्थमग्निद्वयोपेतां तां भूमिं ब्रह्मचारी तपसा तपोमहिम्ना आ तिष्ठति अधितिष्ठति, अग्निरूपेण तस्या अधिदेवता भवतीत्यर्थः । असा.

**अभिक्रन्दन् स्तनयन्नरुणः शितिङ्गो बृहच्छेपोऽनु भूमौ जभार ।**
**ब्रह्मचारी सिञ्चति सानौ रेतः पृथिव्यां तेन जीवन्ति प्रदिशश्चतस्रः ॥**

अभिक्रन्दन् अभितः शब्द कुर्वन् । एतदेव विव्रियते—स्तनयन् मेघेषु स्तनित गर्जित कुर्वन्, श्यतिङ्गः श्येतवर्णं जलपूर्णं मेघ प्राप्तः । एवंभूतो वरुणः बृहत् प्रभूतं शेपः आत्मीय प्रजनन भूमौ पृथिव्यामनु जभार जहार । तेन वरुणसबन्धिना शेपसा ब्रह्मचारी स्वतपोमहिम्ना सर्वजगदुत्पादकमुदकलक्षण वरुणसंबन्धि रेतः पृथिव्या सानौ उन्नतप्रदेशे सिञ्चति वर्षति।एतेन सर्वजगदुत्पादनार्थमूर्ध्वरेतस्कत्वं ब्रह्मचारिणः सूचित भवति, वारुणमेव रेतः सिञ्चति, न स्वकीयमित्यर्थस्यावगमात् । तेन वृष्टेनोदकलक्षणेन रेतसा प्रदिशश्चतस्रः प्राच्याद्या महादिशो जीवन्ति प्राणान्धारयन्ति । तत्रत्याः प्राणिनः समृद्धा भवन्तीत्यर्थः । यस्मिन् राष्ट्रे ब्रह्मचारी निवसति, तत्र कालवृष्टिर्भवतीति तात्पर्यार्थः । असा.

**अग्नौ सूर्ये चन्द्रमसि मातरिश्वन्ब्रह्मचार्यप्सु समिधमा दधाति ।**
**तासामर्चींषि पृथगभ्रे चरन्ति तासामाज्यं पुरुषो वर्षमापः ॥**

ब्रह्मचारी ब्रह्मचर्यनियमवान्पुरुषः अग्नौ पृथिव्यामवस्थिते, अन्तरिक्षगते सूर्ये, चन्द्रमसि, मातरिश्वन् मातरिश्वनि वायौ, अप्सु च समिध आ दधाति प्रक्षिपति । अत्र अग्न्यादीनां पूर्वपूर्वस्याभावे उत्तरोत्तरस्मिन् समिदाधानं कर्तव्यम् । सर्वथा लोपो न कर्तव्यः । तत्र सूर्यादिषु संस्मृत्य तद्रश्मियुक्तप्रदेशे समिदाधानम् । अपां सनिधानात्तदपेक्षया तासामिति स्त्रीलिङ्गेन प्रतिनिर्देशः । तासां तेषामग्न्यादीनामर्चींषि दीप्तयः अभ्रे अन्तरिक्षे पृथक् चरन्ति असंकीर्णं वर्तन्ते । यद्वा, अभ्रे उदकपूर्णे मेघे धनुराकारेण पृथक् पृथग्वर्तन्ते । तासाम् । पूर्ववत्स्त्रीलिङ्गनिर्देशः । तेषामग्न्यादीनां ब्रह्मचारिणा समिध्यमानानामाज्यादिकं कार्यम् । अग्न्यादयो ब्रह्मचारिसमिन्धनेन आज्यादिकमुत्पादयन्तीत्यर्थः । आज्यमित्यनेन गोसमृद्धिरुक्ता । पुरुष इत्यनेन पुत्रादिसमृद्धिः । वर्षमिति काले वृष्टिप्रादुर्भावः । आप इति वापीकूपतटाकादिसमृद्धिः ।

अस.

**आचार्यो मृत्युर्वरुणः सोम ओषधयः पयः ।**
**जीमूता आसन्त्सत्वानस्तैरिदं स्वराभृतम् ॥**

आचार्य एव मृत्युः मारयिता देवः । अपराधाचरणाद्रुष्टः तस्य जीवनमपहरतीत्यर्थः । तथा स एवाऽऽचार्यो वरुण: दुरितस्य वारयिता देवः । परिचर्यापरं ब्रह्मचारिणं पापान्निवारयतीत्यर्थः । तथा आचार्य एव सोमः चन्द्रमाः, तद्वदाह्लादकरत्वात् । ओषधयो व्रीहियवाद्याः । पयः क्षीरम् । तत्सर्वमाचार्यात्मकमेव, तत्प्रसादलभ्यत्वात् । यद्वा, यो मृत्युर्यमः स नचिकेतसे ब्रह्मविद्यामुपदिश्य आचार्यः संपन्नः । वरुणोऽपि भृगवे तामुपदिश्य आचार्योऽभवत् । एवं सोमोऽपीति । सर्वदेवतात्मक आचार्य इत्यर्थः । तत्र आचार्यरूपस्य वरुणस्य ये सत्वानः सदनशीला अनुचराः, ते जीमूता आसन् । जीवनं उदकं, तस्य मूतवद्धर्तारो जलपूर्णा मेघा अभवन् । तैर्जीमूतैरिदं स्वः सुष्ठु अरणशीलं उदकं आभृतं आहृतं, वृष्ट्यर्थमात्मनि धारितमित्यर्थः । यद्वा, इदं स्वः सुप्राप्यं सर्वं जगत् आभृतं वृष्ट्या समन्तात्पोषितमित्यर्थः ।

अस.

**अमा घृतं कृणुते केवलमाचार्यो भूत्वा वरुणो यद्यदैच्छत्प्रजापतौ ।**
**तद्ब्रह्मचारी प्रायच्छत्स्वान्मित्रो अध्यात्मनः ॥**

वरुणो देवः आचार्यो भूत्वा घृतं क्षरणशीलमुदकं केवलं अमा सह कृणुते कुरुते, उदकमेवानन्यसाधारणं स्वं आत्मना सहितं करोतीत्यर्थः । स वरुणः प्रजापतौ स्वजनके ब्रह्माणि यद्यत्फलमैच्छत् मित्रो देवो ब्रह्मचारी भूत्वा स्वकीयब्रह्मचर्यमाहात्म्येन स्वात् स्वकीयादात्मनः शरीरात् । अधिः पञ्चम्यर्थानुवादी । ल्यब्लोपे चेयं पञ्चमी । स्वशरीरमनपेक्ष्येत्यर्थः । तत् अपेक्षितं सर्वं आचार्यभूताय वरुणाय प्रायच्छत् दत्तवान् । ततश्च शिष्येण सता ब्रह्मचारिणा विद्योपदेष्टुर्गुरोः प्रीतिकरमपेक्षितं धनं सपाद्य प्रदातव्यमित्ययमप्येको नियमो ब्रह्मचारिणि उक्तो वेदितव्यः ।

अस.

**आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापतिः ।**
**प्रजापतिर्वि राजति विराडिन्द्रोऽभवद्वशी ॥**

आचार्यः प्रथमं विद्यामुपदिश्य ब्रह्मचार्यात्मना जातः स च ब्रह्मचारी तपसा ब्रह्मचर्येण अधिकं महिमानं प्राप्य प्रजापतिः जगत्स्रष्टा अभवत् । स च प्रजापतिर्विराजति विराट् भवति। 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वेउ. ६।१८) इतिश्रुत्युक्तः स्थूलप्रपञ्चशरीराभिमानी ईश्वरो विराट् । स च वशी स्वतन्त्रः इन्द्रः परमैश्वर्ययुक्तः सर्वजगत्स्रष्टा परमात्मा अभवत् । ततः आचार्यः परंपरया सर्वदेवतात्मकः इति तस्य माहात्म्यं केन वर्णयितुं शक्यमिति भावः ।

अस.

**ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति ।**
**आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥**

ब्रह्म वेदः, तदध्ययनार्थमाचर्यं आचरणीयं समिदाधानभैक्षचर्योर्ध्वरेतस्कत्वादिकं ब्रह्मचारिभिरनुष्ठीयमानं कर्म ब्रह्मचर्यम् । तेन ब्रह्मचर्येण, तपसा तत्कृतेनोपवासादिव्रतनियमेन च राजा राष्ट्रं स्वकीयं वि रक्षति विशेषेण पालयति । यस्य राज्ञो जनपदे ब्रह्मचर्येण युक्ताः पुरुषाः

तपश्चरन्ति, तदीयं राष्ट्रमभिवर्धते इत्यर्थः। यद्वा, राज्ञः कर्तव्यत्वेन कालविशेषेषु श्रुतिस्मृत्युदित ब्रह्मचर्यं तपोऽनुतिष्ठन् राजा तेनैव ब्रह्मचर्येण तपसा राष्ट्रं पालयतीत्यर्थः। आचार्योऽपि ब्रह्मचर्येण नियमेन ब्रह्मचारिणं शिष्यं इच्छते आत्मनोऽभिलष्यति। ब्रह्मचर्यनियमस्थमेवाऽऽचार्यं शिष्या उपगच्छन्तीत्यर्थः। असा.

**ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्।**
**अनड्वान्ब्रह्मचर्येणाश्वो घासं जिगीर्षति॥**

अत्रापि ब्रह्मचर्यं प्रशस्यते। कन्या अकृतविवाहा स्त्री ब्रह्मचर्यं चरन्ती तेन ब्रह्मचर्येण युवानं युवत्वगुणोपेतं उत्कृष्टं पतिं विन्दते लभते। किं बहुना, पशुजातिरपि ब्रह्मचर्येण स्वाभिलषितं फलं लभते इत्याह—अनड्वानिति। अनड्वान् अनो वहन् पुङ्गवः ब्रह्मचर्येण ऊर्ध्वरेतस्कत्वादिना धर्मेण अनोवहनादिकं स्वकार्यं निर्वर्तयन्नुत्कृष्टं पतिं लभते। तथा अश्वो ब्रह्मचर्येण घासं भक्षणीयं तृणादिकं जिगीर्षति भक्षितुमिच्छति। असा.

**ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत।**
**इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत्॥**

ब्रह्मचर्यरूपेण तपसा देवा अग्न्यादयः मृत्युं मरणं अपाघ्नत अपहतवन्तः, अमर्त्याः सपन्ना इत्यर्थः। इन्द्रो ह इन्द्रोऽपि ब्रह्मचर्येणैव साधनेन देवेभ्यः देवानामर्थे स्वः स्वर्गं आभरत् आहरत्। असा.

**ओषधयो भूतभव्यमहोरात्रे वनस्पतिः।**
**संवत्सरः सहर्तुभिस्ते जाता ब्रह्मचारिणः॥**

ओषः पाकः आसु धीयते इत्योषधयः व्रीहियवाद्या अरण्यजा वीरुधश्च। भूतभव्यं, भूतमुत्पन्नं चराचरात्मकं, भव्यमुत्पत्स्यमानम्। अहोरात्रे अहश्च रात्रिश्च। वनस्पतिर्वनानां पालयिता देवः। सवसन्त्यस्मिन्निति संवत्सरो द्वादशमासात्मकः कालः ऋतुभिर्वसन्ताद्यैः षड्भिः सह। ते ओषध्यादयोऽनुक्रान्ताः सर्वे ब्रह्मचारिणस्तपोमाहात्म्याज्जाताः उत्पन्नाः। असा.

**पार्थिवा दिव्याः पशव आरण्या ग्राम्याश्च ये।**
**अपक्षाः पक्षिणश्च ये ते जाता ब्रह्मचारिणः॥**

पार्थिवाः पृथिव्याः सबन्धिनो जनाः। तथा दिव्याः दिवि भवाः। आरण्याः अरण्ये भवाः पशवः सिंहशार्दूलहरिणाद्याः। ग्राम्याः गवाश्वमहिषाद्याः। एवंभूता ये पशवः सन्ति, तथा अपक्षाः पक्षरहिताः प्राणिनो ये सन्ति, पक्षिणः पक्षवन्तश्च ये सन्ति, ते सर्वे ब्रह्मचारिणो जाताः, ब्रह्मचर्यप्रभावादुत्पन्ना इत्यर्थः। असा.

**पृथक्सर्वे प्राजापत्याः प्राणानात्मसु बिभ्रति।**
**तान्त्सर्वान्ब्रह्म रक्षति ब्रह्मचारिण्याभृतम्॥**

प्राजापत्याः प्रजापतिना सृष्टा देवमनुष्याद्याः सर्वे आत्मसु शरीरेषु प्राणान् पृथक् नाना स्वस्वसबन्धिन एव बिभ्रति धारयन्ति पोषयन्ति वा। तान् सर्वान्प्राणान् ब्रह्मचारिणि आचार्यमुखात् आभृतं आहृतं अध्ययनेन सपादितं ब्रह्म वेदात्मकं रक्षति पालयति। ब्रह्मचार्यधीतं ब्रह्म सर्वप्राणिरक्षणक्षममित्यर्थः। असा.

**देवानामेतत्परिषूतमनभ्यारूढं चरति रोचमानम्।**
**तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं देवाश्च सर्वे अमृतेन साकम्॥**

एतत् सर्वापरोक्षं परब्रह्म देवाना परिषूतं परिगृहीतं, आत्मतया साक्षात्कृतमित्यर्थः। रोचमानं स्वप्रकाशचिद्रूपतया दीप्यमानं अनभ्यारूढं अन्यैरनाक्रान्तं सर्वोत्कर्षेण चरति वर्तते। तस्मात्सकाशात् ब्राह्मणं ब्रह्मणः सबन्धि ब्राह्मणस्य वा असाधारणं स्वं ज्येष्ठं प्रवृद्धतमं प्रशस्यतमं वा ब्रह्म वेदात्मकं जातं प्रादुर्भूतम्। 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' (बृउ. २।४।१०) इति श्रुतेः। देवाः तत्प्रतिपाद्या अग्न्यादयश्च सर्वे अमृतेन स्वोपभोग्येनामृतत्वप्रापकेन सुधारसेन साकं सह जाता इत्यर्थः। असा.

**ब्रह्मचारी ब्रह्म भ्राजद्बिभर्ति तस्मिन्देवा अधि विश्वे समोताः।**
**प्राणापानौ जनयन्नाद्व्यानं वाचं मनो हृदयं ब्रह्म मेधाम्॥**

ब्रह्मचारी ब्रह्मचर्यवान्पुरुषः भ्राजत् दीप्यमानं ब्रह्म वेदात्मकं बिभर्ति धारयति। तस्मिन् अधि उपरि विश्वे सर्वे देवाः समोताः सबद्धाः, 'यावतीर्वै देवतास्ताः

सर्वा वेदविदि ब्राह्मणे वसन्ति' (तैआ. २।१५) इति श्रुतेः। स च सर्वेषां देवाना निवासभूतो ब्रह्मचारी प्राणापानौ सर्वप्राणिसंबन्धिनौ जनयन् उत्पादयन् वर्तते। आत् अनन्तर व्यानं 'अथ यः प्राणापानयोः सधिः स व्यानः' (छाउ. १।३।३) इतिश्रुत्यन्तरप्रसिद्धं व्यानाख्यं वायुं, वाच वागिन्द्रिय परापश्यन्त्यादिरूपां वा शब्दात्मिकां वाचं, मनः सर्वेन्द्रियानुग्राहकमन्तःकरण, हृदय तदावासस्थानभूतं हृदयकमल, ब्रह्म वेदात्मक, मेधा आशुविद्याग्रहणकुशलां बुद्धिं, एतत्सर्व ब्रह्मचारी जनयन् वर्तते। असा.

चक्षुः श्रोत्रं यशो अस्मासु धेह्यन्नं रेतो लोहितमुदरम् ॥
तानि कल्पद्ब्रह्मचारी सलिलस्य पृष्ठे तपोऽतिष्ठत्तप्यमानः समुद्रे।
स स्नातो बभ्रुः पिङ्गलः पृथिव्यां बहु रोचते ॥

हे ब्रह्मन् ब्रह्मचार्यात्मक, अस्मासु स्तोतृषु चक्षुः रूपग्राहकमिन्द्रियं, श्रोत्र शब्दग्राहकम्। प्राधान्यादुपलक्षणत्वेन एतदिन्द्रियद्वयमुक्तम्। चक्षुःश्रोत्रादीनि सर्वाणीन्द्रियाणि यशः कीर्ति च अस्मासु धेहि धारय। आन्ध्यबाधिर्यादिक कदाचिदप्यस्माकं मा भूदित्यर्थः। तथा भोज्यमन्नं, पुत्रादिकारण रेतः, लोहितं शरीरगतमसृक्, उदरं उदरोपलक्षित समस्तशरीरम्। तान्येतान्यन्नादीनि ब्रह्मचारी कल्पत् कल्पयन् सलिलस्य पृष्ठे उदकस्य मध्ये तपस्तप्यमानः समुद्रे अतिष्ठत्, वर्तते इत्यर्थः। स तपस्वी ब्रह्मचारी अनिशं स्नातः स्नानेन पवित्रीकृतः बभ्रुः बभ्रुवर्णः। एतदेव विव्रियते—पिङ्गल इति। पिङ्गलवर्णः सन् पृथिव्यां भूम्या बहु अधिकं रोचते दीप्यते। असा.

---

## श्रद्धा

[1]श्रद्धयाऽग्निः समिध्यते श्रद्धया हूयते हविः।
श्रद्धां भगस्य मूर्धनि वचसाऽऽवेदयामसि ॥

पुरुषगतोऽभिलाषविशेषः श्रद्धा। तया श्रद्धया अग्निः गार्हपत्यादिः समिध्यते संदीप्यते। यदा हि पुरुषे श्रद्धा अग्निगोचर आदरातिशयो जायते तदैष पुरुषोऽग्नीन्प्रज्वालयति, नान्यदा। श्रद्धयैव हविः पुरोडाशादिहविश्च हूयते आहवनीये प्रक्षिप्यते। यद्वा, अस्य सूक्तस्य द्रष्ट्र्या श्रद्धाख्यया अग्निः समिध्यते। श्रद्धा उक्तलक्षणायाः श्रद्धाया अभिमानिदेवतां भगस्य भजनीयस्य धनस्य मूर्धनि प्रधानभूते स्थानेऽवस्थितां वचसा वचनेन स्तोत्रेण आ वेदयामसि अभितः प्रख्यापयामः। ऋसा.

[2]प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः।
प्रियं भोजेषु यज्वस्विदं म उदितं कृधि ॥

हे श्रद्धे, ददतः चरुपुरोडाशादीनि प्रयच्छतो यजमानस्य प्रियं अभीष्टफलं कुरु। दिदासतः दातुमिच्छतश्च हे श्रद्धे प्रिय कुरु। मे मम संबन्धिषु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु कृतयज्ञेषु जनेषु च इदं उदितं उक्त प्रियं कृधि कुरु। ऋसा.

[3]यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे।
एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ॥

देवाः इन्द्रादयः असुरेषु उद्गूर्णबलेषु यथा श्रद्धां चक्रिरे अवश्यमिमे हन्तव्या इत्यादरातिशयं कृतवन्तः, एवं श्रद्धावत्सु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु यष्टृषु अस्माकं अस्मत्संबन्धिषु तेषु उदितं तैरुक्तं प्रार्थितं फलजात कृधि कुरु। ऋसा.

श्रद्धां देवा यजमाना वायुगोपा उपासते।
श्रद्धां हृदय्ययाऽऽकूत्या श्रद्धया विन्दते वसु ॥

देवाः यजमानाः मनुष्याश्च वायुगोपाः वायुर्गोपा रक्षिता येषां ते तादृशाः सन्तः श्रद्धां देवीं उपासते प्रार्थयन्ते। हृदय्यया, हृदये भवा हृदय्या, तथाविधया आकूत्या संकल्परूपया क्रियया श्रद्धामेव परिचरन्ति सर्वे जनाः। कुतः इत्यत आह—यतः कारणात् श्रद्धया हेतुभूतया वसु धनं विन्दते लभते श्रद्धावान् जनः, तत इत्यर्थः। ऋसा.

---

(१) ऋसं. १०।१५१।१; तैब्रा. २।८।८।६ हूयते (विन्दते); नि. ९।३१.

(१) ऋसं. १०।१५१।२, तैब्रा. २।८।८।६.

(२) ऋसं. १०।१५१।३; तैब्रा २।८।८।७.

(३) ऋसं १०।१५१।४; तैब्रा. २।८।८।७ विन्दते (हूयते).

**श्रद्धां प्रातर्हवामहे श्रद्धां मध्यन्दिनं परि।**
**श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः॥**

श्रद्धा देवीं प्रातः पूर्वाह्णे हवामहे । तथा मध्यन्दिन परि मध्यन्दिन परिलक्ष्य, मध्यन्दिने इत्यर्थः। मध्याह्नेऽपि ता श्रद्धां आह्वयामहे । सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य निम्रुचि अस्तमयवेलाया सायसमयेऽपि तामेव श्रद्धामाह्वयामहे । ईदृग्रूपे हे श्रद्धे नः अस्मान् इह लोके कर्मणि वा श्रद्धापय श्रद्धावतः कुरु ।

ऋसा.

**श्रद्धा देवानधिवस्ते। श्रद्धा विश्वमिदं जगत्।**
**श्रद्धां कामस्य मातरम्। हविषा वर्धयामसि॥**

इय श्रद्धा देवी देवानधिवस्ते देवेष्वधिवसति । विश्वं सर्वमिद जगत् श्रद्धामयं, इच्छाविश्वासव्यतिरेकेण कस्यापि व्यवहारस्याभावात्। कामस्य मातर काम्यमानफलस्योत्पादिका श्रद्धा देवीं अनेन हविषा वर्धयामसि अभिवृद्धा सतुष्टा कुर्मः। तैब्रासा.

**श्रद्धया देवो देवत्वमश्नुते । श्रद्धा प्रतिष्ठा लोकस्य देवी।**
**सा नो जुषाणोप यज्ञमागात् । कामवत्साऽमृतं दुहाना॥**

येयमास्तिक्यरूपा श्रद्धा, तयैव देवः सर्वोऽपीन्द्रादिदेवः देवत्व प्राप्नोति, श्रद्धारहितस्य तपआदेर्निरर्थकत्वात्। तथा च स्मर्यते— 'अश्रद्धया हुतं दत्त तपस्तप्त कृत च यत्। असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह॥' (भ. गी. १७।२८) इति। अतः श्रद्धादेवी लोकस्य सर्वस्य प्रतिष्ठा आश्रयः। सा देवी जुषाणा प्रीयमाणा नः अस्मदीय यज्ञ उपागात् प्राप्नोतु। कीदृशी श्रद्धा। कामवत्सा, फलकामनैव वत्सस्थानीया यस्याः सा कामवत्सा, अत एव अमृत फल दुहाना दोग्ध्री। श्रद्धालुर्हि यत्फलं कामयते तत्सिध्यत्येव।

तैब्रासा.

**श्रद्धा देवी प्रथमजा ऋतस्य । विश्वस्य भर्त्री जगतः प्रतिष्ठा।**
**ताꣳ श्रद्धाꣳ हविषा यजामहे। सा नो लोकममृतं दधातु। ईशाना देवी भुवनस्याधिपत्नी॥**

श्रद्धाख्या देवी ऋतस्य सत्यस्य परमार्थस्य ब्रह्मणः सकाशात् प्रथमजा आदावेवोत्पन्ना । अत एव विश्वस्य भर्त्री सर्वस्य प्राणिजातस्य पोषयित्री जगतः प्रतिष्ठा आश्रयः, श्रद्धाहीनस्य वैदिकस्य लौकिकस्य वा व्यवहारस्य फलपर्यवसायित्वाभावात्। तामेता श्रद्धा देवीं वय हविषा यजामहे पूजयामः। सा श्रद्धा देवी नः अस्माक अमृत अविनाश लोक संपादयतु। सा हि देवी यस्मात् भुवनस्याधिपत्नी पालयित्री, तस्मादीशाना अस्माक लोक सपादयितु समर्था।

तैब्रासा.

---

## तपः

**यदग्ने तपसा तप उपतप्यामहे तपः।**
**प्रियाः श्रुतस्य भूयास्माऽऽयुष्मन्तः सुमेधसः॥**

हे अग्ने, तपसा तव सबन्धिना पर्युक्षणपरिसमूहनसमिदाधानादिरूपेण कर्मणा यत्तपो निर्वर्तयितव्यमस्ति, तत्तपः उप त्वत्समीपे तप्यामहे आर्जयामः। यद्वा, तपसा कृच्छ्रचान्द्रायणादिरूपेण यत्तपः तपन शरीरक्लेशनम्। 'तपः क्लेशसहिष्णुत्वम्' इति हि तद्विदः। कृच्छ्रादिचरणेन यच्छरीरशोषण, तत्तपः उपतप्यामहे, तव समीपे परिचरणेन आर्जयाम इत्यर्थः। यद्वा, तपसा पर्यालोचनेन देवताविषयज्ञानेन । 'मनसश्चेन्द्रियाणां चैकाग्र्य तप उच्यते' इति हि तद्विदः। तेन तपसा सहित तपः कृच्छ्रचान्द्रायणादिरूपो नियमः। 'शौचसतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' (पा. सू. २।३२) इति हि पातञ्जल सूत्रम्। तत्तपः हे अग्ने, त्वत्समीपे परिचरणेन तप्यामहे आर्जयामः। तेन तपसा श्रुतस्य सम्यगधीतस्य वेदशास्त्रादेः प्रियाः प्रियतमाः सुहृदः निवासस्थानत्वेन प्रीणयितारः, आयुष्मन्तो दीर्घकालजीविनः, सुमेधसः शोभनधारणाशक्तिसहिताः भूयास्म। असा.

**अग्ने तपस्तप्यामह उप तप्यामहे तपः।**
**श्रुतानि शृण्वन्तो वयमायुष्मन्तः सुमेधसः॥**

(१) ऋसं. १०।१५१।५; तैब्रा. २।८।८।७ ह न. (ह मा).
(२) तैब्रा. २।८।८।८.
(३) तैब्रा. ३।१२।३।१-२.

(१) असं. ७।६३।१-२.

"हे अग्ने, तपस्तप्यामहे शरीरशोषणरूप नियममार्जयामः । किं अन्यत्र, नेत्याह—उप तप्यामहे । तव समीपे एव तादृश तपः साधयाम इत्यर्थः । तेन तपसा श्रुतानि सम्यगधीतानि वेदशास्त्रादीनि शृण्वन्तः । हेत्वर्थे शतृप्रत्ययः । वेदशास्त्रश्रवणाद्धेतोर्वय आयुष्मन्तः दीर्घकालजीवनवन्तः, सुमेधसः समीचीनधारणाशक्तियुक्ताश्च । भूयास्मेति शेषः ।

अस.

तपसा[1] देवा देवतामग्र आयन् । तपसर्षयः स्वरन्वविन्दन् ।
तपसा सपत्नान्प्रणुदामारातीः । येनेदं विश्वं परिभूतं यदस्ति ॥

यज्जगत् देवर्षिमनुष्यादिरूपमस्ति, तदिदं विश्वं येन तपसा परिभूतं सर्वतो व्याप्त, तेन तपसा देवा इन्द्रादयः सर्वे देवत्वं अग्रे सृष्ट्यादौ प्राप्ताः पूर्वसृष्टौ तपस्तप्त्वा देवजन्म लब्धवन्तः । तथा ऋषयः वसिष्ठनारदाद्याः पूर्वानुष्ठितेन तपसा स्वर्गमन्विष्य लब्धवन्तः । वयमपि इदानीमनुष्ठितेन तपसा यागादिरूपेण सपत्नान् शत्रून् प्रणुदाम प्रकर्षेणापसारयामः । कीदृशान् सपत्नान् । अरातीः अस्मभ्यं दातव्यस्य धनस्य अदातॄन् ।

तैब्रासा.

प्रथमजं[2] देवꣳ हविषा विधेम । स्वयंभु ब्रह्म परमं तपो यत् ।
स एव पुत्रः स पिता स माता । तपो ह यक्षं प्रथमꣳ संबभूव ॥

योऽयं तपोभिमानी देवः, स प्रथमजः । तथा चोपनिषदि सृष्टिप्रकरणे तपसः प्रथमजत्वमाम्नायते—'सोऽकामयत । बहु स्या प्रजायेयेति । स तपोऽतप्यत' ( तैउ. २।६ ) इति । तादृशं तपोदेवं हविषा विधेम परिचरेम । यत्स्वयंभु स्वतःसिद्धं सत्यज्ञानादिरूप ब्रह्म परमं सृष्टिकारणरूपं तपः संपन्न, स एव तपोदेवः पुत्रपितृमात्रादिरूपेण आविर्बभूव । किंच तपो ह तप एव प्रथमं यक्ष पूज्यं संबभूव । सर्वोऽपि हि पुरुषः प्रथम फलसाधनं तपोऽनुष्ठाय पश्चात्फलं लभते । तस्मात्प्रशस्तमिदं तपः ।

तैब्रासा.

(१) तैब्रा. ३।१२।३।१; नाउ. ७९ स्व ( सुव ) चतुर्थपादं विना.
(२) तैब्रा. ३।१२।३।१.

---

## यज्ञः

यज्ञीयपशोरश्वस्य देवप्रशस्तत्वं देवरूपत्वं अमर्त्यत्वं च

यमेन[1] दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् ।
गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥

यमेन नियामकेनाग्निना दत्त एन अश्वं त्रितः पृथिव्यादिषु त्रिषु स्थानेषु वर्तमानः स्तीर्णतमो वा वायुः अयुनक् रथे योजितवान् । किंच एनं अश्वं इन्द्रः प्रथमः प्रतमः प्रकृष्टतमः । प्रथम इति मुख्यनाम । अध्यतिष्ठत् अधिष्ठितवान् । अस्य गन्धर्वः सोमः, 'सोमेन समया विपृक्तः' ( ऋस. १।१६३।३ ) इति वक्ष्यमाणत्वात् । स च अस्य अश्वस्य रशनां नियमनरज्जुं अगृभ्णात् अग्रहीत् । ईदृशोऽश्वः कुतः समुत्पन्नः इति चेत्, उच्यते—हे वसवः रश्मयः यूयं सूरात् आदित्यात् अश्व एवंमहानुभावं निरतष्ट निःशेषेण साधु सपादितवन्तः । यद्वा, वसुशब्देनोक्ता एव यमादयः परामृश्यन्ते । हे वसवः स्वस्वव्यापारेण सर्वस्याऽऽच्छादयितारः यूयं सूरात् आदित्यात् अश्व एनं निरतष्ट अतक्षत । निरित्येष समित्येतस्य स्थाने । तक्षतिः करोतिकर्मा । स च क्रियासामान्यवचनः अत्रौचित्यात् धारणे वर्तते । सम्यग्धारितवन्त इत्यर्थः ।

ऋसा.

असि[2] यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।
असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥

(१) ऋसं. १।१६३।२, तैसं. ४।६।७।१; कासं. ४०।६ ( ३६ ) एणं ( एनं ); शुसं. २९।१३.
(२) ऋसं. १।१६३।३; तैसं ४।६।७।१; कासं. ४०।६ ( ३७ ); शुसं. २९।१४.

हे अर्वन् त्व यमः असि नियमिता अग्निरसि। तेन दत्तत्वात् तच्छब्दव्यपदेशः। तथा आदित्यः असि, 'सूराद्भिरतष्ट' इत्युक्तत्वात्। तथा गुह्येन व्रतेन गोपनीयेन दुर्निरूपेण वा कर्मणा, सर्वत्र व्याप्तिरूपेणेत्यर्थः। तेन त्रितः त्रिषु स्थानेषु तायमानो वायुः असि। 'त्रित एनमायुनक्' इत्युक्तत्वात्तद्रूपत्वम्। अथवा गुह्येन व्रतेन गोपनीयेन कर्मणा योगादिसाधनरूपेण त्रितः एतन्नामकः ऋषिरसि। किंच हे अश्व त्व सोमेन समया सह विपृक्तः। वि इत्येष समित्येतस्मिन्नर्थे। संपृक्तः असि, तेन गृहीतत्वात्। हे अश्व एवंरूप ते तव दिवि द्युलोके आदित्ये वा वर्तमानस्य त्रीणि बन्धनानि उत्पत्तिकारणानि आहुः पुराविदः। वसवः आदित्यो द्युस्थानं चेति त्रीणि।

ऋसा.

[1]त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे।
उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम्॥

पूर्वं दिवि त्रीणि बन्धनानि इत्युक्तम्। इदानीं स्थानत्रयेष्वपि त्रीणि बन्धनानि इत्याह—हे अर्वन् ते तव दिवि बन्धनानि त्रीणि आहुः। तानि पूर्वमुक्तानि। अप्सु। अबुपजीवितत्वात् भूलोकोऽपि अप्शब्देनाभिधीयते। पृथिव्यां त्रीणि बन्धनान्याहुः। अन्नं स्थानं बीजमिति त्रीणि। तथा समुद्रे अन्तः समुद्रमध्ये। समुद्द्रवणादपादानात् समुद्रमन्तरिक्षम्। तस्मिन् त्रीणि वृष्ट्युत्पत्तिनिमित्तानि मेघो विद्युत् स्तनितमिति। उतेव। इवशब्दश्चार्थे। अपि च हे अर्वन् अश्व वरुणः पापस्य वारकः फलस्य आवर्जयिता वा त्वं मे मह्यं छन्त्सि कथयसि। किं कथयसीति चेत्, उच्यते—ते तव परमं जनित्रं निरतिशयं जन्म यत्र येषु त्रिषूक्तेषु स्थानेषु आहुः कथयन्ति। यद्वा, यत्र यस्मिन् आदित्ये परमं जनित्रमाहुः, 'सूरादश्व वसवो निरतष्ट' इत्युक्तत्वात्। तादृशं प्रशस्यं जन्म यज्ञसाधनभावेन कथयसीत्यर्थः।

ऋसा.

(१) ऋसं. १।१६३।४, तैसं. ४।६।७।२; कासं. ४०।६ (३८); शुसं. २९।१५.

आत्मानं ते मनसाऽऽरादजानामवो दिवा पतयन्तं पतङ्गम्।
शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि॥

हे अश्व ते तव आत्मानं शरीरं मनसा अस्मदीयेन प्रकृष्टगमनवता चेतसा आरात् अतिदूरे स्थितं अजानां जानामि, अतिव्याप्तं भावयामीत्यर्थः। कथम्। अवः अवस्तात्, सामर्थ्यात् भूमेः। भूमिमारभ्य दिवा अन्तरिक्षेण मार्गेण पतङ्गं आदित्यं पतयन्तं गच्छन्तं व्याप्नुवन्तम्। यद्वा, यतो दिवा अन्तरिक्षेण मार्गेण दिवि वा पतयन्त गच्छन्त पतङ्गमादित्यं अवः आवः व्याप्नोषि, अतो व्याप्तं जानामि। किंच शिरः अपश्यं तव शिरः एवं पश्यामि। कथम्। सुगेभिः शोभनगमनसाधनैः अरेणुभिः अपापैः पथिभिः मार्गैः, आदित्यमण्डलादपि उपरिभूतैः सत्यलोकमार्गैरित्यर्थः। तत्र प्रतिबन्धाभावात् मार्गाणामुक्तरूपत्वम्। तथाविधैः तैः जेहमानं उपर्युपरि व्याप्नुवत् पतत्रि पतनवच्छिरः अपश्यं भावयामि। एवं लोकत्रयव्याप्तं भावयामीत्यर्थः। यद्वा, ते आत्मानं एवं भावयामि—मनसा दिवा द्योतनात्मकेन अन्तरिक्षमार्गेण दिवः सकाशाद्वा अवः अवस्तात् अवाङ्मुखं पतयन्त यागदेशं प्रति व्याप्नुवत्, अत एव पतङ्ग पतनशील अधःपतदादित्यसदृश वा। एवं तव शिरो भावयामीत्यर्थः। शिरश्चैवमपश्यम्—उक्तरूपैर्देवयजनमार्गैर्जेहमानं यज्ञदेशं व्याप्नुवत् पतत्रि शीघ्रगामि शिरः पश्यामि। यद्यप्यात्मशब्देन सशिरस्कं शरीरमुक्तं, तथापि देहात्पूर्वं शिरसो दृश्यमानत्वात् पृथगभिधीयते।

ऋसा.

[2]अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम्।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते॥

(१) ऋसं. १।१६३।६, तैसं. ४।६।७।२; कासं. (अश्वमेधः) ६।३ (३३); शुसं. २९।१७.
(२) ऋसं. १।१६३।८; तैसं. ४।६।७।३, कासं. (अश्वमेधः) ६।३ (३५); शुसं. २९।१९.

इदानीं कृत्स्नस्य लोकस्यापि मुख्यः इति प्रतिपादयति। हे अर्वन् गमनशीलाश्व त्वा त्वां अनु अनुसृत्य रथः गच्छति, ततः पुरतोऽश्वस्य गमनात्। तथा मर्यः मर्त्यः त्वा त्वां अनु। अनु गावः। गावोऽपि त्वामनुगच्छन्ति। तथा कनीनां कन्यकानां स्त्रीणा भगः भाग्यं सौन्दर्यं त्वद्भग अनु। तथा व्रातासः व्राताः संघात्मकाः अन्ये अश्वसमूहाः वस्वादिदेवगणाः वा त्वा अनु अनुसृत्य तव सख्य ईयुः सखिभावं गच्छन्ति। देवाः ऋत्विजः द्योतमाना देवा वा त्वामनुसृत्य ते वीर्यं वीरकर्म ममिरे स्तुत्या मान्ति। अतः सर्वोऽपि त्वां अनुसरः, त्व तु सर्वस्य श्रेष्ठ इत्यर्थः।

ऋसा.

[1]हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत्।
देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत्॥

अयमश्वः हिरण्यशृङ्गः हितरमणीयशृङ्गो वा उन्नतशिरस्को हृदयरमणशृङ्गस्थानीयशिरोरुहो वा। अस्य पादाः अयः अयोमयाः, अयःपिण्डसदृशा इत्यर्थः। तथा मनोजवाः मनोवेगाः। अथवा एतदिन्द्रविशेषणम्। ईदृशस्याश्वस्य सामर्थ्यं प्रति मनोवेगः इन्द्रः अपि अवरः निकृष्टः आसीत्। किंच अस्य अश्वस्य हविरद्यं हविषः अदनं भक्षण, अदनयोग्य हविर्वा अपेक्ष्य देवा इत् सर्वेऽपि देवाः आयन् प्राप्ताः। यः इन्द्रः अर्वन्तं प्रथमः प्रथमभावी सन् अध्यतिष्ठत् अधिष्ठितवान्, स्वहविष्ट्वेन स्वकीयत्वेन वा आश्रितवानित्यर्थः। 'इन्द्र एण प्रथमो अध्यतिष्ठत्' इति ह्युक्तम्। ऋसा.

[2]उप प्रागात्परमं यत्सधस्थमर्वाँ अच्छा पितरं मातरं च।
अद्या देवाञ्जुष्टतमो हि गम्या अथा शास्ते दाशुषे वार्याणि॥

अर्वान् अरणकुशलोऽयमश्वः उप प्रागात् उपगच्छति। किम्। यत् परम उत्कृष्ट सधस्थ सहस्थानं सुकृतिभिरेकत्रनिवासयोग्य स्वर्गाख्यं यदस्ति, तत्। किमर्थम्। पितर मातर च अच्छ आभिमुख्येन प्राप्तुम्। हे अश्व अद्य अस्मिन्काले जुष्टतमः प्रीततमः, स्वर्गं प्राप्नोमीति हर्षयुक्त इत्यर्थः। एवभूतः देवान् गम्याः गच्छेः देवान्। हिशब्दो यज्ञे उपयुक्तस्य पशोः स्वर्गप्राप्तेः 'सगर्भ्योऽनु सखा सयूथ्यः' (तैस. १।२।४।२) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः। अथ अनन्तर यजमानः आ शास्ते। कस्मै। दाशुषे हविर्दत्तवते स्वस्मै। कानि। वार्याणि वरणीयानि धनानि। यद्वा। पुरुषस्य व्यत्ययः। आ शास्ते प्रार्थये यजमानार्थम्।

ऋसा.

अमृतनामाऽश्वो यज्ञीयपशुः विश्वात्मक, सत्यस्य सत्य, प्रजापतिस्वरूपश्च

[1]द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षँ समुद्रस्ते योनिः।
विख्याय चक्षुषा त्वमभि तिष्ठ पृतन्यतः॥

हे अश्व द्युलोकः तव पृष्ठम्। पृथिवी सधस्थ तवाश्रिना सहावस्थानप्रदेशः। अन्तरिक्षलोकः तव मध्यशरीरवर्ती जीवात्मा। समुद्रस्तव जन्मकारण, 'अप्सुयोनिर्वा अश्वः' इति श्रुतेः। एवं स्तूयमानस्त्व चक्षुषा विख्याय उखायोग्यां मृद विलोक्य पृतन्यतः सग्राम कर्तुमिच्छतः शत्रून् राक्षसादीन् तस्या मृदि गूढरूपेणावस्थितान् अभितिष्ठ पादेनाऽऽक्रम्य विनाशय।

तैसा.

[2]ऋतमस्यृतस्यर्तमसि सत्यमसि सत्यस्य सत्यमसि॥
ऋतस्य पन्था असि देवानां छायाऽमृतस्य नाम तत्सत्यं यत्त्वं प्रजापतिरसि॥

---

(१) ऋसं. १।१६३।९; तैसं. ४।६।७४; कास. (अश्वमेधः) ६।३ (३६); शुसं. २९।२०.

(२) ऋसं. १।१६३।१३; तैसं. ४।७।६।५; कासं. (अश्वमेध.) ६।३ (४०), शुसं. २९।२४.

(१) तैस. ४।१।२।३; कासं. १६।२ (१३) समुद्रस्ते (समुद्रो); मैसं २।७।२ (२२) विख्याय (विक्शाय) शेषं कासवत्; शुसं. ११।२० कासंवत्, तैब्रा. ३।९।४।८; शब्रा. ६।३।३।१२ कासंवत्.

(२) तैसं. ७।१।२०।१.

हे अश्व त्वं ऋतं यन्मानस सत्यं, तदसि। यागरहितानां पुरुषाणां यद्दतं तस्याप्युत्तमं त्वं ऋत सत्यमसि, तव यागसाधनत्वात् । एवं सत्यवाक्यमपि वाचिकविषयत्वेन व्याख्येयम्।

ऋतस्य यज्ञस्य पन्थाः मार्गोऽसि। त्वद्द्वारेण हि यागो निर्वर्त्यते। तथा देवानां छायाऽसि। यथा घर्मकाले वृक्षस्य छाया सुखप्रदा, तथा त्वं सुखप्रदोऽसि। अत एव त्वं अमृतस्य नाम असि। देवा हि त्वदीय हविः पीयूषमित्येव स्वीकुर्वन्ति। त्वं प्रजापतिरूपोऽसीति यत्, तत्सत्यं, नात्र कश्चिदुपचारोऽस्ति । प्रजापतेरक्ष्येव हि त्वदाकारेण निष्पन्नम्। तैसा.

सवे देय स्तोतव्यो वा अनड्वान् विश्वधर्ता, विश्वव्यापक., इन्द्रस्वरूप', प्रजापत्यात्मा, अक्षयफलदाता, स्वर्गदश्च

**अनड्वान् दाधार पृथिवीमुत द्यामनड्वान् दाधारोर्वन्तरिक्षम्।**
**अनड्वान् दाधार प्रदिशः षड्डुर्वीरनड्वान् विश्वं भुवनमा विवेश ॥**

अनः शकट वहतीति अनड्वान् शकटवहनसमर्थो वृषभः। सोऽयं कर्षणभारवहनादिना पृथिवीं भूमिं दाधार धारयति । यद्वा, अनडुच्छब्देन वृषरूपो धर्मोऽभिधीयते। धर्मो वृषभाकृतिर्भूत्वा पृथिव्यादिधारणं करोरीति योज्यम्। श्रूयते हि—'धर्मो विश्वस्य जगतः प्रतिष्ठा' ( नाउ. ७९ ) इति। उत द्यां द्युलोकं स्वर्गलोकमपि स एव दाधार। कर्षणादिनिष्पन्नेन चरुपुरोडाशादिहविषा द्युलोकं पोषयतीत्यर्थः । तथा उरु विस्तीर्णं अन्तरिक्षलोकमपि स धारयति । प्रदिशः प्राच्याद्या महादिशश्च धारयति । षड्डुर्वीः, उर्वीशब्दवाच्याः 'द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्चौषधयश्च' ( आश्व. १।२ ) इति षट्सख्याकाः सन्ति, ता अपि असौ धारयति । पृथिव्याः द्योश्च पृथगुपादानात् इतरचतुष्टयापेक्षं उर्वीग्रहणम्। इत्थं ब्रह्मणा सृष्टः अनड्वान् विश्व सर्वं भुवनं पृथिव्यादिभ्यः अन्यमपि लोकं आ विवेश रक्षणार्थं प्रविश्य वर्तते। असा.

(१) असं. ४।११।१-१२.

**अनड्वानिन्द्रः स पशुभ्यो वि चष्टे त्रयांछक्रो वि मिमीते अध्वनः।**
**भूतं भविष्यद्भुवना दुहानः सर्वा देवानां चरति व्रतानि ॥**

सः प्रागुक्तः अनड्वान् पशुभ्यः, पशवो गोमहिषाद्याः, तेषामर्थे इन्द्रः सन् वि चष्टे प्रकाशते। रिरसावशात् इन्द्रवत् पशूना दृष्टौ भासते इत्यर्थः। यद्वा अय अनड्वान् इन्द्र एव। इन्द्रो यथा वृष्टिजलसेकेन चराचरात्मकं सर्वं जगत् उत्पादयति, एवं अनड्वानपि रेतःसेकेन पशून् उत्पादयन् तज्जन्यपयोदध्यादिद्रव्येण कृत्स्नं जगत् उत्पादयतीति एककार्यकरत्वात् अनयोरभेदः। स च अन्येभ्यः पशुभ्यः सकाशात् वि चष्टे वीर्यवत्त्वेन प्रकाशते। स च शक्रः सर्वकर्मसु शक्तः इन्द्रात्मको वा स्तियान्। 'स्तिया आपो भवन्ति स्त्यायनात्' (नि. ६।१७) इति यास्कवचनात् स्त्यायतेरेतद्रूपम्। अत्र तु अयमर्थः—स्तियान् संस्त्यानप्रभवान् अध्वनः अध्ववत् अविच्छिन्नान् पशुसतानान् वि मिमीते विशेषेण निर्मिमीते । एवं इन्द्रात्मकोऽनड्वान् भूतं भूतकालावच्छिन्नं वस्तु, भविष्यत् आगामिकालावच्छिन्नं वस्तु, भुवना भुवनानि वर्तमानकालावच्छिन्नसद्भावानि च वस्तूनि दुहानः उत्पादयन् देवानां इन्द्रात् अन्येषामपि व्रतानि कर्माणि सर्वा सर्वाणि चरति अनुतिष्ठति। असा.

**इन्द्रो जातो मनुष्येष्वन्तर्घर्मस्तप्तश्चरति शोशुचानः।**
**सुप्रजाः सन्त्स उदारे न सर्षद्यो नाश्नीयादनडुहो विजानन् ॥**

मनुष्येषु मनोरपत्येषु मनुष्यजातीयेषु अन्तः मध्ये तावत् अनड्वान् प्रागुक्तरीत्या इन्द्रो जातः। तथा सोऽनड्वान् घर्मः दीप्तः सूर्यः सन् तप्तः कृत्स्न जगत् तपन् संतापयुक्तं कुर्वन् शोशुचानः अत्यर्थं दीप्यमानः चरति वियति सचरति। यद्वा, घर्मः प्रवर्ग्यः तप्तः वैकङ्कतखादिरादिभिरिध्मैः सतप्तः शोशुचानः अत्यर्थं शोचन् चरति वर्तते। तादृग्घर्मरूपः अनड्वान् जातः इत्यर्थः। सोऽपि हि कर्षणादिव्यापारजनितश्रमेण तप्तः संतप्तगात्रः अतिशयितशोकयुक्तश्च सन् चरति। अत-

स्ततत्वादिधर्मसामान्यात् अनडुहो घर्मतादात्म्यम् । इत्थं नः अस्माक सबन्धिनः अनडुहः दीयमानस्य माहात्म्य विजानन् विशेषेण अवगच्छन् यः प्रतिग्रहीता अश्नीयात् भुञ्जीत, स सुप्रजाः शोभनप्रजोपेतः सन् आरे दूरे देहावसानकाले उत् अस्माच्छरीरात् उत्क्रान्तः न स सर्पत् न संसरति पुनः ससारधर्मान् न प्राप्नोति, किंतु सूर्यादिलोकं प्राप्नोतीत्यर्थः । अत एव सोमयागविशेषस्य अनडुहां लोकः प्राप्यत्वेन आम्नायते—'अग्निष्टोमेन अनडुहो लोकमाप्नोति ज्योतिष्मतो लोकान् जयति' इति । असा.

**अनड्वान् दुहे सुकृतस्य लोक एनं प्याययति पवमानः पुरस्तात् ।**
**पर्जन्यो धारा मरुत ऊधो अस्य यज्ञः पयो दक्षिणा दोहो अस्य ॥**

सुकृतस्य यागादिजनितपुण्यस्य फलभूते लोके इन्द्रादिदेवतात्मकः अयं अनड्वान् दुहे अपेक्षित अक्षयं फलं दुग्धे । तत्प्रकारमेव विभज्य दर्शयति—पुरस्तात् पूर्व पवमानः पवित्रेण शोध्यमानः अमृतमयः सोमः एन अनड्वाहं आप्याययति आप्यायितं रसभरितं करोति । ततश्च पर्जन्यः वृष्टिप्रेरको देवो धारा भवति । मरुतः एकोनपञ्चाशत्संख्या देवगणाः अस्य अनडुहः ऊधो भवति । योऽयं कृतः सवयज्ञः स एव पयः दोह्य भवति । येय तस्मिन् यज्ञे दत्ता दक्षिणा सा अस्य अनडुहो दोहः दोहक्रिया संपद्यते । इत्थं इन्द्रादिदेवतात्मकस्य अनडुहो दोहोऽपि देवतात्मकः संपन्न इति अक्षयफलत्वम् । असा.

**यस्य नेशे यज्ञपतिर्न यज्ञो नास्य दातेशे न प्रतिग्रहीता ।**
**यो विश्वजिद्विश्वभृद्विश्वकर्मा घर्मं नो ब्रूत यतमश्चतुष्पात् ॥**

यस्य देवतात्मकस्य अनडुहः । कर्मणि षष्ठी, य इत्यर्थः । यज्ञपतिः यजमानः नेशे नेष्टे । यज्ञः यागक्रिया च नेशे नेष्टे । दाता प्रतिग्रहीता च अस्य अनडुहो नेशे नेष्टे । सर्वत्र ईशितृत्वमेव अनडुहः, न ईशितव्यत्वं, इत्युक्तमर्थ समर्थयते — य इन्द्रादिदेवतारूपः अनड्वान् विश्वजित् विश्वस्य सर्वस्य जेता, विश्वभृत् विश्वस्य सर्वस्य वाय्वात्मना भर्ता, यद्वा अन्नप्रदानेन पोषयिता । विश्वकर्मा । 'प्रजापतिः परमेष्ठी' इत्याम्नास्यते, तदभिप्रायेणेदम् । विश्व सर्व जगत् कर्म कर्तव्य यस्य स विश्वकर्मा । तथा यतमः यज्जातीयः चतुष्पात् पादचतुष्टयोपेतः सन् नः अस्मभ्य घर्मं दीयमानं आदित्यं ब्रूत ब्रूते कथयति, तत्स्वरूपं उपदिशतीत्यर्थः । नास्य दातेति संबन्धः । असा.

**येन देवाः स्वरारुरुहुर्हित्वा शरीरममृतस्य नाभिम् ।**
**तेन गेष्म सुकृतस्य लोकं घर्मस्य व्रतेन तपसा यशस्यवः ॥**

येन देवतात्मना अनडुहा देवाः स्वः स्वर्गं लोक आरुरुहुः आरूढवन्तः, तत्प्रकार उच्यते—पार्थिवं एतच्छरीरं हित्वा त्यक्त्वा अमृतस्य अमरणस्य नाभिं बन्धक, मोक्षद्वारभूतमित्यर्थः । तेन अनडुहा सुकृतस्य पुण्यस्य फलभूत लोक जेष्म जयेम । कथभूताः सन्तः । घर्मस्य दीप्यमानस्य सूर्यस्य सबन्धिना व्रतेन कर्मणा तपसा दीक्षादिनियमजनितेन अनशनादिना च यशस्यवः । 'न तस्येशे कश्चन तस्य नाम महद्यशः' ( नाउ. १।२ ) इति यशःशब्दस्य अद्वितीयब्रह्मपरत्वेन श्रुतत्वात् अत्रापि यशःशब्देन तद्विवक्ष्यते । यशःशब्दोपलक्षित निरतिशय मोक्षसुखं आत्मन इच्छन्तः । असा.

**इन्द्रो रूपेणाग्निर्वहेन प्रजापतिः परमेष्ठी विराट् ।**
**विश्वानरे अक्रमत वैश्वानरे अक्रमतानडुह्यक्रमत ।**
**सोऽदृंहयत सोऽधारयत ॥**
**मध्यमेतदनडुहो यत्रैष वह आहितः ।**
**एतावदस्य प्राचीनं यावान् प्रत्यङ् समाहितः ॥**

रूपेण आकृत्या अयं अनड्वान् इन्द्रो भवति । वहेन युगवहेन प्रदेशेन स्कन्धेन अग्निः अग्न्यात्मको भवति । 'अग्निदग्धमिव वा अस्य वहं भवति' इति ब्राह्मणम् । वहत्यनेनेति वहः । प्रजापतिः प्रजानां पतिः प्रजासृष्टिकर्ता । परमेष्ठी परमे सत्यलोके तिष्ठतीति परमेष्ठी आदिब्रह्मा । विराट् स्थूलप्रपञ्चस्य कर्ता 'तस्माद्विराडजायत'

( तैआ. ३।१२।२ ) इतिश्रुतिप्रसिद्धः । एते त्रयः क्रमेण विश्वानरादिषु व्याप्य वर्तन्ते । तत्र विश्वानर इति सर्वनरात्मकस्य ' विश्वानरस्य वस्पतिमनानतस्य शवसः ' ( ऋसं. ८।६८।४ ) इतिश्रुत्यन्तरप्रसिद्धस्य देवस्य सञ्ज्ञा । तस्मिन्प्रजापतिः अक्रमत तादात्म्येन प्रविष्टः । वैश्वानर इति विश्वनरहितः अग्निः । तत्र परमेष्ठी अक्रमत तदात्मना सक्रान्तवान् । उक्तप्रभावे अनडुहि विराट् अक्रमत तद्रूपेण प्राविशत् । अतः अय अनड्वान् विराडात्मक इत्यर्थः । यद्वा, इन्द्रः देवः रूपेण स्वकीयेन विश्वानरे देवे अक्रमत । अग्निर्वहेन वहनसामर्थ्येन वैश्वानरे अक्रमत । परमेष्ठी परमे सत्यलोके स्थितः प्रजापतिः विराट् विराजा अन्नेन अनडुहि अक्रमत । अतः प्रजापत्यात्मकोऽय अनड्वान् इति स्तुतिः ।

सः अनडुच्छरीरे प्रविष्टः प्रजापतिः तस्य अनडुहः एतत् मध्यं अङ्ग अदृहयत दृढ अकरोत् । तथा स प्रजापतिः अधारयत तत् मध्यं भारवहनसमर्थं अकरोत् । तत् मध्य विशिनष्टि—यत्र यस्मिन् मध्ये पृष्ठभागे एष वहः भारः आहितः स्थापितः । एतत् मध्य इति सबन्धः । भारवहनप्रदेशस्य मध्यत्व उपपादयति—एतावदिति । अस्य अनडुत्संबन्धिनो मध्यदेहस्य प्राचीन प्राग्भागः एतावत् एतत्परिमाणयुक्त, प्रत्यङ् प्रत्यग्भागो यावान् यत्परिमाणवान् समाहितः सम्यङ् निर्वर्तितः । एवं प्राक्प्रत्यग्भागावुभावपि समानौ, तयोर्मध्यदेशेन भारं वहतीत्यर्थः । अस्रा.

**यो वेदानडुहो दोहान् सप्तानुपदस्वतः ।**
**प्रजां च लोकं चाऽऽप्नोति तथा सप्तऋषयो विदुः ॥**

यः पुरुषः अनडुहः बलीवर्दस्य सप्त सप्तसख्याकान् अनुपदस्वतः क्षयरहितान् दोहान् व्रीह्यादिसप्तग्राम्यौषधिरूपान् वेद जानाति । यद्वा, अनडुहः प्रजापतिरूपत्वस्य उक्तत्वात् तत्सृष्टौ लोकसमुद्रादयो ये सप्तसख्याकाः सन्ति, तान् सर्वान् सप्तधा विभक्तान् अनडुहो दोहान् यो जानाति, स विद्वान् प्रजा पुत्रपौत्रादिकां यागादिभिः प्राप्य लोक स्वर्गादिलोकं च प्राप्नोति । यथैतदुक्त तथा तेनैव प्रकारेण अनडुन्माहात्म्य सप्तर्षयो विदुः जानन्ति । ते च आश्वलायनेन अनुक्रान्ताः—' विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्तऋषयः ॥ ' ( आश्व. प. १२।१ ) इति । सप्तर्षिप्रख्यानामेव इयं अनडुहि प्रजापतिविद्या, नान्येषां, इति विद्यास्तुतिः । अस्रा.

**पद्भिः सेदिमवक्रामन्निरां जङ्घाभिरुत्खिदन् ।**
**श्रमेणानड्वान् कीलालं कीनाशश्चाभि गच्छतः ॥**

अय प्रजापत्यात्मकः अनड्वान् पद्भिः पादैश्चतुर्भिः सेदिं अवसादकरीं अलक्ष्मीं अवक्रामन् अवाङ्मुखीं अधितिष्ठन् इरा भूमिं जङ्घाभिः उत्खिदन् कर्षणेन उद्भिन्दन् स्वकीयेन श्रमेण कर्षणादिव्यापारजनितदुःखेन अभि गच्छतः स्वाभिमुख गच्छतः कीनाशस्य कर्षकस्य कीलाल अन्नम् । प्रयच्छतीत्यर्थः ।

अस्रा.

**द्वादश वा एता रात्रीर्व्रत्या आहुः प्रजापतेः ।**
**तत्रोप ब्रह्म यो वेद तद्वा अनडुहो व्रतम् ॥**

अनडुहि सक्रान्तस्य यज्ञात्मकस्य प्रजापतेः द्वादश वा एता व्रत्याः व्रतार्हाः द्वादशसख्याकाः रात्रीः आहुः कथयन्ति । वैशब्दः श्रुत्यन्तरप्रसिद्धिं द्योतयति ' द्वादश रात्रीर्दीक्षितः स्यात् । द्वादश मासाः सवत्सरः । सवत्सरो विराट् । विराजमाप्नोति ' ( तैसं. ५।६।७।१) इति, 'तस्मात् दीक्षितो द्वादशाहं भृतिं वन्वीत ' इति च । तत्र तावति काले अनडुद्रूप उपगतं प्रजापत्यात्मक ब्रह्म यो वेद विद्यात्, स एव अस्मिन् अनडुत्सवे अधिक्रियते इत्यर्थः । तत् एतत् ज्ञान अनडुहः प्रजापत्यात्मकस्य व्रत अनुष्ठेय कर्म ।

अस्रा.

**दुहे सायं दुहे प्रातर्दुहे मध्यंदिनं परि ।**
**दोहा ये अस्य संयन्ति तान् विद्मानुपदस्वतः ॥**

साय सायाह्ने उक्तलक्षणं अनड्वाहं दुहे । देवतारूपेण उपासीनस्तत्फलं प्राप्नोमीत्यर्थः । तथा प्रातःकालेऽपि दुहे । मध्यन्दिनं परि मध्याह्नेऽपि दुहे । ( यद्वा ) सायमादिकालत्रयेऽपि उक्तरीत्या अनड्वान् दुहे सवयज्ञानुष्ठातुः फलानि दुग्धे । एव अस्य अनडुहो दोहा ये सयन्ति फलेन सगच्छन्ते, अनुपदस्वतः,

उपदासः क्षयः, तद्रहितास्तान् दोहान् विद्म जानीमः ।
असा.

अज पञ्चौदन यज्ञरूप, विश्वात्मक, ऋतसत्यश्रद्धाविराडङ्ग

[1]अजो वा इदमग्रे व्यक्रमत तस्योर इयमभवद्द्यौः पृष्ठम् ।
अन्तरिक्षं मध्यं दिशः पार्श्वे समुद्रौ कुक्षी ॥
सत्यं चर्तं च चक्षुषी विश्वं सत्यं श्रद्धा प्राणो विराट् शिरः ।
एष वा अपरिमितो यज्ञो यदजः पञ्चौदनः ॥

सर्वे देव सर्वदेवमय, सर्वरूपो गौ

[2]प्रजापतिश्च परमेष्ठी च शृङ्गे इन्द्रः शिरो अग्निर्ललाटं यमः कृकाटम् ॥
सोमो राजा मस्तिष्को द्यौरुत्तरहनुः पृथिव्यधरहनुः ॥
विद्युज्जिह्वा मरुतो दन्ता रेवतीर्ग्रीवाः कृत्तिका स्कन्धा घर्मो वहः ॥
विश्वं वायुः स्वर्गो लोकः कृष्णद्रं विधरणी निवेष्यः ॥
श्येनः क्रोडोऽन्तरिक्षं पाजस्यं बृहस्पतिः ककुद्बृहतीः कीकसाः ॥
देवानां पत्नीः पृष्टय उपसदः पर्शवः ॥
मित्रश्च वरुणश्चांसौ त्वष्टा चार्यमा च दोषणी महादेवो बाहू ॥
इन्द्राणी भसद्वायुः पुच्छं पवमानो बालाः ॥
ब्रह्म च क्षत्रं च श्रोणी बलमूरू ॥
धाता च सविता चाष्ठीवन्तौ जङ्घा गन्धर्वा अप्सरसः कुष्ठिका अदितिः शफाः ॥
चेतो हृदयं यकृन्मेधा व्रतं पुरीतत् ॥
क्षुत् कुक्षिरिरा वनिष्ठुः पर्वताः प्लाशयः ॥
क्रोधो वृक्कौ मन्युराण्डौ प्रजा शेपः ॥
नदी सूत्री वर्षस्य पतय स्तना स्तनयित्नुरूधः ॥
विश्वव्यचाश्चर्मौषधयो लोमानि नक्षत्राणि रूपम् ॥
देवजना गुदा मनुष्या आन्त्राण्यत्रा उदरम् ॥

(१) अस. ९।५।२०,२१. (२) असं. ९।१२।१-२६.

रक्षांसि लोहितमितरजना ऊबध्यम् ॥
अभ्रं पीबो मज्जा निधनम् ॥
अग्निरासीन उत्थितोऽश्विना ॥
इन्द्रः प्राङ् तिष्ठन् दक्षिणा तिष्ठन् यमः ॥
प्रत्यङ् तिष्ठन् धातोदङ् तिष्ठन्त्सविता ॥
तृणानि प्राप्तः सोमो राजा ॥
मित्र ईक्षमाण आवृत्त आनन्दः ॥
युज्यमानो वैश्वदेवो युक्तः प्रजापतिर्विमुक्तः सर्वम् ॥
एतद्वै विश्वरूपं सर्वरूपं गोरूपम् ॥
उपैनं विश्वरूपाः सर्वरूपाः पशवस्तिष्ठन्ति य एवं वेद ॥

सर्वे देवा वशा गौ देवगन्धर्वमनुष्यादिभिरुपजीवनीया, सर्वदेवरूपा, विश्वात्मिका

[1]नमस्ते जायमानायै जाताया उत ते नमः ।
बालेभ्यः शफेभ्यो रूपायाघ्न्ये ते नमः ॥
यो विद्यात् सप्त प्रवतः सप्त विद्यात् परावतः ।
शिरो यज्ञस्य यो विद्यात् स वशां प्रति गृह्णीयात् ॥
वेदाहं सप्त प्रवतः सप्त वेद परावतः ।
शिरो यज्ञस्याहं वेद सोमं चास्यां विचक्षणम् ॥
यया द्यौर्यया पृथिवी ययाऽऽपो गुपिता इमाः ।
वशां सहस्रधारां ब्रह्मणाऽच्छावदामसि ॥
शतं कंसाः शतं दोग्धारः शतं गोप्तारो अधि पृष्ठे अस्याः ।
ये देवास्तस्यां प्राणन्ति ते वशां विदुरेकधा ॥
यज्ञपदीराक्षीरा स्वधाप्राणा महीलुका ।
वशा पर्जन्यपत्नी देवाँ अप्येति ब्रह्मणा ॥
अनु त्वाऽग्निः प्राविशदनु सोमो वशे त्वा ।
ऊधस्ते भद्रे पर्जन्यो विद्युतस्ते स्तना वशे ॥
अपस्त्वं धुक्षे प्रथमा उर्वरा अपरा वशे ।
तृतीयं राष्ट्रं धुक्षेऽन्नं क्षीरं वशे त्वम् ॥
यदादित्यैर्हूयमानोपातिष्ठ ऋतावरि ।
इन्द्रः सहस्रं पात्रान्त्सोमं त्वापाययद्वशे ॥
यदनूचीन्द्रमैरात्त्व ऋषभोऽह्वयत् ।

(१) असं. १०।१०।१-३४.

तस्मात्ते वृत्रहा पयः क्षीरं क्रुद्धोऽहरद्वशे ॥
यत्ते क्रुद्धो धनपतिरा क्षीरमहरद्वशे ।
इदं तदद्य नाकस्त्रिषु पात्रेषु रक्षति ॥
त्रिषु पात्रेषु तं सोममा देव्यहरद्वशा ।
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥
सं हि सोमेनागत समु सर्वेण पद्वता ।
वशा समुद्रमध्यष्ठाद्गन्धर्वैः कलिभिः सह ॥
सं हि वातेनाऽऽगत समु सर्वैः पतत्रिभिः ।
वशा समुद्रे प्रानृत्यदृच. सामानि बिभ्रती ॥
सं हि सूर्येणाऽऽगत समु सर्वेण चक्षुषा ।
वशा समुद्रमत्यख्यद्भद्रा ज्योतींषि बिभ्रती ॥
अभीवृता हिरण्येन यदतिष्ठ ऋतावरि ।
अश्वः समुद्रो भूत्वाऽध्यस्कन्दद्वशे त्वा ॥
तद्भद्राः समगच्छन्त वशा देष्ट्र्यथो स्वधा ।
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥
वशा माता राजन्यस्य वशा माता स्वधे तव ।
वशाया यज्ञ आयुधं ततश्चित्तमजायत ॥
ऊर्ध्वो बिन्दुरुदचरद्ब्रह्मणः ककुदादधि ।
ततस्त्वं जज्ञिषे वशे ततो होताऽजायत ॥
आस्नस्ते गाथा अभवन्नुष्णिहाभ्यो बलं वशे ।
पाजस्याज्जज्ञे यज्ञ स्तनेभ्यो रश्मयस्तव ॥
ईर्माभ्यामयनं जातं सक्थिभ्यां च वशे तव ।
आन्त्रेभ्यो जज्ञिरे अत्रा उदरादधि वीरुधः ॥
यदुदरं वरुणस्यानुप्राविशथा वशे ।
ततस्त्वा ब्रह्मोदह्वयत्स हि नेत्रमवेत्तव ॥
सर्वे गर्भादवेपन्त जायमानादसूस्वः ।
ससूव हि तामाहुर्वशेति ब्रह्मभिः क्लृप्तः स ह्यस्या बन्धुः ॥
युध एकः सं सृजति यो अस्या एक इद्वशी ।
तरांसि यज्ञा अभवन् तरसां चक्षुरभवद्वशा ॥
वशा यज्ञं प्रत्यगृह्णाद्वशा सूर्यमधारयत् ।
वशायामन्तरविशदोदनो ब्रह्मणा सह ॥
वशामेवामृतमाहुर्वशां मृत्युमुपासते ।
वशेदं सर्वमभवद्देवा मनुष्या असुराः पितर ऋषयः ॥
य एवं विद्यात् स वशां प्रति गृह्णीयात् ।
तथा हि यज्ञः सर्वपाद्दुहे दात्रेऽनपस्फुरन् ॥[1]
तिस्रो जिह्वा वरुणस्यान्तर्दीद्यत्यासनि ।
तासां या मध्ये राजति सा वशा दुष्प्रतिग्रहा ॥
चतुर्धा रेतो अभवद्वशायाः ।
आपस्तुरीयममृतं तुरीयं यज्ञस्तुरीयं पशवस्तुरीयम् ॥
वशा द्यौर्वशा पृथिवी वशा विष्णुः प्रजापतिः ।
वशाया दुग्धमपिबन्त्साध्या वसवश्च ये ।
वशाया दुग्धं पीत्वा साध्या वसवश्च ये ।
ते वै ब्रध्नस्य विष्टपि पयो अस्या उपासते ॥
सोममेनामेके दुह्रे घृतमेक उपासते ।
य एवं विदुषे वशां ददुस्ते गतास्त्रिदिवं दिवः ॥
ब्राह्मणेभ्यो वशां दत्त्वा सर्वांल्लोकान्त्समश्नुते ।
ऋतं ह्यस्यामार्पितमपि ब्रह्माथो तपः ॥
वशां देवा उप जीवन्ति वशां मनुष्या उत ।
वशेदं सर्वमभवद्यावत्सूर्यो विपश्यति ॥

महामहिम सर्वदेवमय विराडात्मा सर्वात्मा ओदन·

तस्यौदनस्य बृहस्पतिः शिरो ब्रह्म मुखम् ॥
द्यावापृथिवी श्रोत्रे सूर्याचन्द्रमसावक्षिणी सप्तऋषयः प्राणापानाः ॥

विपक्षे बाधपुरःसरं ओदनस्यैव प्राशितृत्वं प्राशितव्यत्व च अग्रे वक्ष्यते । तत्र प्राशितुरोदनस्य शिरःप्रभृतीन्यङ्गानि कल्पयति । तस्य प्रसिद्धस्य विराडात्मना भावनीयस्य ओदनस्य बृहस्पतिर्देवः शिरः मूर्धा । तस्यापि कारणभूत यत् ब्रह्म, तत् ओदनस्य मुख आस्यम् । द्यावापृथिवी, द्यौश्च पृथिवी च द्यावापृथिव्यौ । ते उभे अस्य ओदनस्य विराडात्मनः श्रोत्रे । सूर्याचन्द्रमसौ । सूर्यः सर्वस्य प्रेरकः आदित्यः । चन्द्रं आह्लादकर अमृत मिमीते सर्वस्य जगतो निर्मिमीते इति चन्द्रमाः । तौ अस्य विराडात्मन ओदनस्य अक्षिणी चक्षुषी । ये सप्तऋषयः मरीच्यत्रिप्रभृतयः, ते प्राणापानाः । मुखनासिकाभ्यां बहिर्निःसरन् वायुः प्राणः । अन्तः प्रविशन् वायुः अपानः । प्राणश्च अपानश्च

(१) असं. ११।३।१-३१.

प्राणापानौ । ये सप्तऋषयः, ते अस्य प्राणापानात्मना भावनीया इत्यर्थः । असा.

**चक्षुर्मुसलं काम उलूखलम् ॥**

**दितिः शूर्पमदितिः शूर्पग्राही वातोऽपाविनक् ॥**

इत्थ ओदनस्य देवतारूपाणि अङ्गानि परिकल्प्य तत्साधनेष्वपि देवतारूपत्व सपादयति । अस्य उक्तमहिमोपेतस्य ओदनस्य उपादानभूतव्रीह्यवहननार्थं यन्मुसल, तच्चक्षुः चक्षुरिन्द्रियम् । यत् उलूखल, स कामः अभिलाषः । मुसलोलूखले हविरवहननार्थे चक्षुरादिरूपेण भावनीये इत्यर्थः । दितिः असुरमाता, सैव परापवनार्थं शूर्पम् । अदितिः देवमाता, सा शूर्पग्राही तस्य शूर्पस्य ग्रहीत्री । या शूर्पेण परापुनाति, सा अदित्यात्मना भावनीयेत्यर्थः । वातः वायुः अपाविनक् व्रीहिभ्यस्तण्डुलानां विवेचयिता अभवत् । विवेचयितरि वायुबुद्धिः कार्येत्यर्थः । अत एव तैत्तिरीयके— 'वायुर्वो विविनक्तु' ( तैस. १।१।५।२ ) इति मन्त्रवर्णः । असा.

**अश्वाः कणा गावस्तण्डुला मशकास्तुषाः ॥**

**कब्रु फलीकरणाः शरोऽभ्रम् ॥**

**श्याममयोऽस्य मांसानि लोहितमस्य लोहितम् ॥**

ओदनस्य विराडात्मना उपासनमभिधित्सुः तत्संबन्धिना कणादीना तत्तद्वस्त्वात्मकत्वेन तस्य ओदनस्य सार्वात्म्यं प्रतिपादयति । ये ओदनसबन्धिनः कणाः, ते अश्वाः, अश्वात्मना भावनीया इत्यर्थः । ओदनस्य उपादानभूता ये तण्डुलाः, ते गावः । परापूतास्तुषाः मशकाः क्षुद्रजन्तवः । ये फलीकरणाः, तत् कब्रु । क शिर एव भ्रुवौ यस्य प्राणिजातस्य तत् कब्रु । शिरसो भ्रुवोश्च भेदो न दृश्यते इत्यर्थः । तथाविधप्राण्यात्मना फलीकरणा भावनीया इत्यर्थः । यत् अभ्रं अन्तरिक्षे सचरन् मेघः, तत् अस्य शिरः । 'बृहस्पतिना शीर्ष्णा' ( अस. ११।४।१ ) इति प्राशने वक्ष्यमाणत्वात् प्रशुपयोगिदेवतात्मक शिरः प्रागुक्तम् । चेतनाचेतनात्मकस्य सर्वस्य जगतः ओदने भावनीयत्वप्रतिपादनप्रसङ्गायातं एतच्छिर इति न पौनरुक्त्यम् । श्यामं श्यामवर्णं यत् अयः खनित्राद्युपादानं, तत् अस्य विराडात्मनः ओदनस्य मांसानि । यल्लोहितं लोहितवर्णं अयः ताम्रात्मक लोके दृश्यते, तत् सर्वं अस्य ओदनस्य लोहितं असृक् धातुः । असा.

**त्रपु भस्म हरितं वर्णः पुष्करमस्य गन्धः ॥**

**खलः पात्रं स्फ्यावंसावीषे अनूक्ये ॥**

**आन्त्राणि जत्रवो गुदा वरत्राः ॥**

पुनरन्यान्यपि वस्तूनि ओदने सपादयति । ओदनपाकानन्तरभावि यत् भस्म, तत् त्रपु सीसम् । तदात्मना भस्म भावनीयमित्यर्थः । यत् हरितं हेम, तत् अस्य ओदनस्य वर्णः । यत् पुष्कर कमल, तत् अस्य ओदनस्य गन्धः । यः खलः व्रीह्यादिधान्यस्य पलालेभ्यो विवेचनस्थानं, तत् अस्य पात्र धारणार्थं आवपनम् । स्फ्यौ प्रवृद्धौ धान्याधारस्य शकटस्यावयवौ । तावस्य ओदनस्य अंसौ । ये शकटसबन्धिन्यौ ईषे, ते अस्य ओदनस्य अनूक्ये अंसयोर्मध्यदेहस्य च संधी । लोके सर्वप्राणिसबन्धीनि आन्त्राणि यानि सन्ति, तानि जत्रवः अनडुद्ग्रीवाणा शकटयोजनार्था रज्जवः । अशितपीतान्नरससचारणार्थाः सर्वप्राणिशरीरेषु या गुदाः, ता अस्य वरत्राः ओदनसबन्धिशकटलाङ्गलयोजनार्थाश्चर्मविकारा रज्जवः । असा.

**इयमेव पृथिवी कुम्भी भवति राध्यमानस्यौदनस्य द्यौरपिधानम् ॥**

इत्थ सर्वात्मकस्य ओदनस्य स्थाल्यपिधानयोर्द्यावापृथिव्यात्मकतामाह—इयमेवेति । इय परिदृश्यमाना पृथिवी प्रथिता विस्तीर्णा भूमिरेव राध्यमानस्य पच्यमानस्य ओदनस्य उदीरितरीत्या सर्ववस्त्वात्मकस्य कुम्भी पाकार्था स्थाली भवति । द्यौः द्युलोकः अपिधानं कुम्भीमुखस्य छादक पात्रम् । द्यावापृथिव्योरन्तराल सर्वं अय ओदनो व्याप्य वर्तते इत्यर्थः । असा.

**सीताः पर्शवः सिकता ऊबध्यम् ॥**

पुनरन्यदपि अवयवजात अस्मिन् सपादयति । सीताः कर्षणोत्पन्ना बीजावापार्था लाङ्गलपद्धतयः । ता अस्य ओदनस्य पर्शवः पार्श्वास्थीनि । नद्यादिषु याः सिकताः, ता अस्य ऊबध्यम् । अर्धजीर्णतृणात्मकं उदरगतं शकृत् ऊबध्यमित्युच्यते ।

असा.

**ऋतं हस्तावनेजनं कुल्योपसेचनम् ॥**

पुनरन्या सपत्तिमाह । ऋत इति उदकनाम । लोके विद्यमानं कृत्स्नं उदक हस्तावनेजनं अस्य ओदनस्य हस्तप्रक्षालनार्थम् । कुल्या अल्पा सरित् । तत्रत्यं समस्तं उदक अस्य ओदनस्य उपसेचन मिश्रणसाधनम्। असा.

**ऋचा कुम्भ्यधिहिताऽऽर्त्विज्येन प्रेषिता ॥**
**ब्रह्मणा परिगृहीता साम्ना पर्यूढा ॥**

उदीरितमहिमोनेतस्य पाकार्था कुम्भी पृथिव्येवेत्युक्तम् । तस्या अग्नौ स्थापनप्रकारमाह । उदीरितलक्षणा ओदनपाकार्था कुम्भी स्थाली ऋचा ऋग्वेदेन अधिहिता अग्नावुपरि आहिता स्थापिता । आर्त्विज्येन । ऋत्विजः अध्वर्यवः । तत्संबन्धिकर्मप्रतिपादकेन यजुर्वेदेन प्रेषिता अग्निं प्रगमिता । ब्रह्मणा ब्रह्मवेदेन आथर्वणेन परिगृहीता परितो धारिता । साम्ना सामवेदेन पर्यूळ्हा पर्यूढा अङ्गारैः परिवेष्टिता । असा.

**बृहदायवनं रथन्तरं दर्विः ॥**

इत्थ अधिश्रिताया स्थाल्यां ओदनपाकस्य अनुगुण साधनमाह । बृहत् साम आयवन उदके प्रक्षिप्ताना तण्डुलानां मिश्रणसाधन काष्ठम् । तथा रथन्तर साम दर्विः ओदनोद्धारणसाधनम् । असा.

**ऋतवः पक्तार आर्तवाः समिन्धते ॥**

ईदृग्विधस्य ओदनस्य पक्तॄन् दर्शयति । ऋतवः वसन्ताद्याः षट् अस्य ओदनस्य पक्तारः पचिक्रियायाः कर्तारः, सर्वजगदात्मकौदनपाकस्य कालाधीनत्वात् । नान्यः पक्तु शक्नोतीत्यर्थः । आर्तवाः ऋतुसंबन्धिनः अहोरात्राः, तत्तदृतौ जायमानाः प्राणिविशेषा वा समिन्धते सदीपयन्ति । यथा ओदनः पच्यते तथा अग्निं ज्वलयन्तीत्यर्थः । असा.

**चरुं पञ्चबिलमुखं घर्मोऽभीन्धे ॥**

साक्षात्पक्तृत्व आदित्यस्यैवेति दर्शयति । चरुशब्दः ओदनवचनः । तस्य पाकार्था स्थाल्यपि चरुरित्युच्यते । तं चरु पञ्चबिल .' गावो अश्वाः पुरुषा अजावयः ' ( असं. ११।२।९ ) इति प्रागुदीरितपञ्चपशूत्पत्तिहेतुत्वेन पञ्चधा विभिन्नमुखम् । यद्वा, अन्तः पञ्चधा गृहकैः प्रविभक्तावकाशश्चरुः पञ्चबिलः । यदाह आपस्तम्बः— 'पञ्चबिलस्य चरोर्विज्ञायते आज्यआग्नेयः पूर्वस्मिन् बिले । दधन्यैन्द्रो दक्षिणे । शृते प्रतिदुहि नीतमिश्रे वा वैश्वदेवः पश्चिमे । अप्सु मैत्रावरुण उत्तरे । पयसि बार्हस्पत्यो मध्यमे ' इति । एवभूत उखम् । चरुशब्दापेक्षया पुलिङ्गता । उखा स्थालीं घर्मः प्रवर्ग्यात्मकस्तीक्ष्ण आदित्यः अभीन्धे अभितपति । असा.

**ओदनेन यज्ञवचः सर्वे लोकाः समाप्याः ॥**

अस्यौदनस्य सर्वलोकप्राप्तिसाधनतामाह । इत्थ महाप्रभावेण पक्वेन ओदनेन यज्ञवचः यज्ञैः अग्निष्टोमादिभिः प्राप्तव्यत्वेन उच्यमानाः सर्वे लोकाः भूम्यन्तरिक्षस्वर्गाद्याः समाप्याः सम्यगाप्तुं अर्हाः । सर्वलोकावाप्तिः अस्यौदनस्य फलमित्यर्थः । असा.

**यस्मिन्त्समुद्रो द्यौर्भूमिस्त्रयोऽवरपरं श्रिताः ॥**

पुनरपि अस्य महिमानमाह । यस्मिन्नोदने समुद्रः उदधिः, द्यौः आकाशः द्युलोको वा, भूमिः पृथिवी, एते त्रयः अवरपर श्रिताः । एकः अवरः अधस्तात् भवति, अन्यः परस्तात् यथा भवति, तत् अवरपरम् । उत्तराधरभावेन स्थिता इत्यर्थः । असा.

**यस्य देवा अकल्पन्तोच्छिष्टे षडशीतयः ॥**

सर्वजगत्कल्पनास्पदत्वलक्षणं माहात्म्यमस्य दर्शयति । यस्य ओदनस्य उच्छिष्टे यागावशिष्टे अंशे षडशीतयः षड्गुणिताशीतिसख्याका देवाः अकल्पन्त समर्था वीर्यवन्तः अभवन् । अथवा, सर्व जगत् अकल्पयन् । तथा च अग्रे समाम्नास्यते—' उच्छिष्टे नाम रूपं चोच्छिष्टे लोक आहितः ' ( असं. ११।९।१ ) इत्यादिना । तेन ओदनेन सर्वे लोकाः समाप्या इति सम्बन्धः । असा.

**तं त्वौदनस्य पृच्छामि यो अस्य महिमा महान् ॥**

उक्त माहात्म्य गुरुमुखात् ज्ञातव्यमित्यभिप्रेत्य शिष्यप्रश्नमुद्भावयति । हे गुरो त्वा त्वा ओदनस्य तं महिमान पृच्छामि, अस्यौदनस्य यो महिमा महान् अधिकतरः । असा.

**स य ओदनस्य महिमानं विद्यात् ॥**
**नाल्प इति ब्रूयान्नानुपसेचन इति • नेदं च किं चेति ॥**

तत्र प्रतिवचने वर्जनीयं दर्शयति । सः प्रसिद्धो [illegible]

गुरुः उदीरितलक्षणस्य ओदनस्य महिमानं माहात्म्यं विद्यात् जानीयात्, असौ उपदेशसमये अल्प इति न ब्रूयात् महिम्नोऽल्पत्व नोपदिशेत् । अनुपसेचनः, उपसिच्यते अनेनेति उपसेचनं क्षीराज्यदध्यादि, तद्रहित इति च न ब्रूयात् । न च इद इति पुरोवर्तित्वेन निर्दिश्य ब्रूयात् । किं इति अनिर्दिष्टरूपेण च न ब्रूयात् । प्रागुक्तप्रकारेणैव सार्वात्म्य ब्रूयादित्यर्थः । अस्रा.

**यावद्दाताऽभिमनस्येत तन्नाति वदेत् ॥**

आधिक्यवचनमपि अस्य विषये न युक्तमित्याह । दाता सवयज्ञानुष्ठाता यावत् फलं अभिमनस्येत मनसा अभिप्राप्तुमिच्छेत्, तत् नाति वदेत् । तत् फल अतिक्रम्य अधिक न ब्रूयादित्यर्थः । अस्रा.

**ब्रह्मवादिनो वदन्ति पराञ्चमोदनं प्राशी३ः प्रत्यञ्चा३मिति ॥**

**त्वमोदनं प्राशी३स्त्वामोदना३ इति ॥**

अथ वक्ष्यमाणैः पर्यायैस्तस्यौदनस्य प्राशने भावनाविशेष वक्तु ब्रह्मवादिना प्रश्नद्वय अवतारयति । ब्रह्म वेदः, तत् वदितु शील एषा इति ब्रह्मवादिनः ब्रह्मविचारका महर्षयः । ते संभूय वदन्ति परस्परं भाषन्ते । हे देवदत्त त्व इमं ओदन पराञ्च पराङ्मुख स्थित प्राशीः प्राशितवानसि, उत प्रत्यञ्च आत्माभिमुख स्थित प्राशितवानसि । प्राशितुस्तव प्राशितव्यः स ओदनः किं पराङ्मुखः, उत अभिमुख इति प्रश्नः । तथा हे देवदत्त त्वं ओदनं प्राशीः भक्षितवानसि, अथ वा स एव ओदनस्त्वां प्राशीदिति प्रश्नान्तरम् । अस्रा.

**पराञ्चं चैनं प्राशीः प्राणास्त्वा हास्यन्तीत्येनमाह ॥**

अत्र आद्ये प्रश्ने प्रथमकल्पे दोषमाह । चशब्दश्चेदर्थे । पराञ्च पराङ्मुखत्वेन स्थित एन ओदनं प्राशीश्चेत्, प्राणाः प्राणवायवः त्वा त्वा हास्यन्ति त्यक्ष्यन्ति, इत्येन प्राशितार आह विद्वान् ब्रवीतु । बहिर्मुखः प्राणो बहिर्मुखौदनप्राशनाय शरीरात् विनिर्गतो भवेदित्यर्थः । अस्रा.

**प्रत्यञ्चं चैनं प्राशीरपानास्त्वा हास्यन्तीत्येनमाह ॥**

द्वितीयकल्पमनूद्य दूषयति । अत्रापि चशब्दश्चेदर्थे । प्रतिमुख अवस्थित चेत् एन ओदन प्राशीः, तर्हि त्वा त्वा अपानाः अपानवायुवृत्तयो हास्यन्ति त्यक्ष्यन्ति, इत्येन प्राशितार आह अभिज्ञो ब्रूयात् । अपानवायोरोदनस्य च प्रत्यङ्मुखत्वेन अधोद्वारात् अपानस्य शरीरात् विनिर्गम एव स्यादित्यर्थः । अस्रा.

**नैवाहमोदनं न मामोदनः ॥**

द्वितीयप्रश्नः अनङ्गीकारपरास्त इत्याह । अह ओदन नैव प्राशिषम् । ओदनोऽपि मा न प्राशीत् । अतः पक्षद्वयस्यानङ्गीकारात् तत्प्रयुक्तदोषाभाव इत्यर्थः । अस्रा.

**ओदन एवौदनं प्राशीत् ॥**

कथ तर्हि तत्प्राशनमिति, तत्राऽऽह । भोक्तृभोक्तव्यप्रपञ्चात्मक ओदन इति उक्तम् । अतः ओदन एव कर्ता ओदन स्वात्मान प्राशीत् प्राशितवान् । अस्रा.

**ततश्चैनमन्येन शीर्ष्णा प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन् ।**
**ज्येष्ठतस्ते प्रजा मरिष्यतीत्येनमाह ।**
**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**
**बृहस्पतिना शीर्ष्णा ।**
**तेनैनं प्राशिषं तेनैनमजीगमम् ।**
**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥**

अथ उत्तरैः पर्यायैः ओदनस्यैव भोक्तृत्व भोज्यत्व च विपक्षे बाधपुरःसर समर्थ्यते । पूर्वे प्रथमभाविनोऽनुष्ठातार ऋषयः येन च शिरसा एत ओदन प्राश्नन् प्राशितवन्तः, ततः तस्मात् अन्येन शीर्ष्णा शिरसा । ततश्चेति चशब्दश्चेदर्थे । अन्येन चेत् शिरसा एन उक्तप्रभाव ओदन प्राशीः हे देवदत्त प्राशितवानसि, ते तव प्रजा पुत्रादिरूपा ज्येष्ठत आरभ्य ज्येष्ठादिक्रमेण मरिष्यति, इति अनेन प्रकारेण एन प्राशितारं आह अभिज्ञो ब्रूयात् । इत्थ अयथाप्राशने दोष उपन्यस्तः । एतद्दोषपरिहारेण प्राशनमाह—तं

(१) अस. ११।४।१-१८.

वा इति। तं तथाविध ओदन अहं अर्वाञ्चं अवाङ्मुखमञ्चन्तं न प्राशिषम्। तथा पराञ्च पराङ्मुखमञ्चन्तमपि न प्राशिषम्। तथा प्रत्यञ्च आत्माभिमुखमञ्चन्तमपि न प्राशिषम्। अतः 'पराञ्च चैन प्राशीः' इत्यादिना उक्तदोषस्य अप्रसङ्गः। कथ तर्हि प्राशीरित्याह—बृहस्पतिना शीर्ष्णा बृहस्पत्यात्मना ओदनसबन्धिशिरसा। ऋषयो हि पूर्वं अनेनैव शिरसा ओदन प्राश्नन्। अहमपि ओदनात्मकस्तेनैव शिरसा एन ओदन प्राशिषं प्राशितवानस्मि। 'ओदन एवौदन प्राशीत्' इति ह्युक्तम्। तेनैव शिरसा एन ओदन अजीगम गन्तव्यं देश प्रापितवानस्मि। एष वै इत्थ खलु प्राशितोऽय ओदनः सर्वाङ्गः सर्वैरवयवैरुपेतः, सर्वपरुः सर्वैः परुर्भिः पर्वभिः अवयवसधिभिरुपेतः, सर्वतनूः सपूर्णशरीरः। इत्थं वेदितुः फलमाह—सर्वाङ्ग एवेति। यः पुरुषः एव उक्तप्रकारेण ओदनस्य प्राशन वेद जानाति, सोऽपि सर्वाङ्गत्वादिफल प्राप्तः सन् स भवति पुण्यभूते स्वर्गादिलोके उत्पद्यते। एव उत्तरेऽपि पर्याया व्याख्येयाः।

असा.

ततश्चैनमन्याभ्यां श्रोत्राभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन्।
बधिरो भविष्यसीत्येनमाह।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।
द्यावापृथिवीभ्यां श्रोत्राभ्याम्।
ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम्।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥

अयमर्थः—याभ्या श्रोत्राभ्या पूर्वे प्रथमभाविन ऋषयः एतं ओदन प्राश्नन्, ततोऽन्याभ्या श्रोत्राभ्या लौकिकाभ्या यदि ओदन प्राशितवानसि, तर्हि त्व बधिरः नष्टश्रोत्रेन्द्रियो भविष्यसि, इत्येन प्राशितारमाह। तं वा अहमित्यादि पूर्ववत्। द्यावापृथिवीभ्या श्रोत्राभ्यां ओदनस्य श्रोत्रत्वेन भाविताभ्याम्। ताभ्यामेव एनं ओदन प्राशिष, ताभ्यामेव एनं अजीगम गमितवानस्मि, न तु आत्मीयाभ्या श्रोत्राभ्यां, येन उक्तदोषः प्रसज्येदिति भावः। एष वा ओदन इत्यादिवाक्यशेषः सर्वत्र समानार्थः। एव उत्तरेषु पर्यायेषु अनुषङ्गेण वाक्यपरिसमाप्तिर्वाक्ययोजना च कर्तव्या।

असा.

ततश्चैनमन्याभ्यामक्षीभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन्।
अन्धो भविष्यसीत्येनमाह।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।
सूर्याचन्द्रमसाभ्यामक्षीभ्याम्।
ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम्।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥

याभ्यां चक्षुर्भ्यां पूर्वे ऋषयः एतं ओदन प्राश्नन्, ततश्च ताभ्या चेत् अन्याभ्या अक्षीभ्या चक्षुर्भ्या एनं ओदन प्राशितवानसि, तर्हि अयथाप्राशनात् अन्धः लुप्तचक्षुष्को भविष्यसि, इत्येन प्राशितार आह ब्रूयात्। त वा अहमित्यादि पूर्ववत्। सूर्याचन्द्रमसाभ्या, सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ, तद्रूपाभ्या अक्षीभ्या ओदनसंबन्धिचक्षुर्भ्याम्। ताभ्यामेन प्राशिषमित्यादि पूर्ववत्। एष वा ओदनः सर्वाङ्ग इत्यादिवाक्यशेषः समानार्थः।

असा.

ततश्चैनमन्येन मुखेन प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन्।
मुखतस्ते प्रजा मरिष्यतीत्येनमाह।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।
ब्रह्मणा मुखेन।
तेनैनं प्राशिषं तेनैनमजीगमम्।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥

येन च ओदनसबन्धिना ब्रह्मात्मकेन मुखेन पूर्वे ऋषयः प्राश्नन्, ततोऽन्येन चेन्मुखेन ओदन प्राशीः, तर्हि मुखतः मुखादारभ्य अभिमुखप्रदेशे वा ते त्वदीया प्रजा मरिष्यति विनङ्क्ष्यति, इति अनेन प्रकारेण एनं प्राशितार आह कश्चित् ब्रूयात्। त वा अह इत्यादि पूर्ववत्। ब्रह्मणा, यत् जगत्कारण ब्रह्म वेदात्मक वा, तदात्मकेन

मुखेन ओदनसंबन्धिना। तेन प्रागुक्तेन एनं ओदन प्राशिष इत्यादि समानम्। असा.

**ततश्चैनमन्यया जिह्वया प्राशीर्यया चैतं पूर्व ऋषयः प्राश्नन्।**

**जिह्वा ते मरिष्यतीत्येनमाह।**

**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।**

**अग्नेर्जिह्वया।**

**तयैनं प्राशिषं तयैनमजीगमम्।**

**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।**

**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥**

यया जिह्वया पूर्वे ऋषयः एतं ओदन प्राश्नन्, ततोऽन्यया आत्मीयया जिह्वया चेत् हे देवदत्त त्वं ओदन प्राशीः, तर्हि ते त्वदीया जिह्वा मरिष्यति प्राणांस्त्यक्ष्यति। प्राणत्यागेन शुष्का स्वकार्यक्षमा न भविष्यतीत्यर्थः। त वा अहमित्यादि पूर्ववत्। अग्नेः अवयवभूतया जिह्वया। सैव प्राशितुः ओदनस्य च जिह्वेत्यर्थः। तया जिह्वया एन ओदनं अह प्राशिषं इत्यादि पूर्ववत्। असा.

**ततश्चैनमन्यैर्दन्तैः प्राशीर्यैश्चैतं पूर्व ऋषयः प्राश्नन्।**

**दन्तास्ते शत्स्यन्तीत्येनमाह।**

**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।**

**ऋतुभिर्दन्तैः।**

**तैरेनं प्राशिषं तैरेनमजीगमम्।**

**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।**

**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥**

यैर्दन्तैः एत ओदन पूर्वे ऋषयः प्राश्नन्, ततोऽन्यैर्दन्तैश्चेत् एन ओदन प्राशीः, प्राशितुस्ते तव दन्ताः सत्स्यन्ति विशीर्णाः पतिष्यन्ति, इति अनेन प्रकारेण एन प्राशितारमाह अभिज्ञो ब्रूयात्। त प्रति उत्तर तं वा अहमित्यादि पूर्ववत्। ऋतुभिः वसन्तग्रीष्मादिभिर्दन्तैः। ऋतवः अस्य दन्ता इति अर्थादुक्तं भवति। तैः ऋत्वात्मकैर्दन्तैः. एन ओदनं प्राशिष, अतो नोक्तदोषप्रसङ्गः। अन्यत् उक्तार्थम्। असा.

**ततश्चैनमन्यैः प्राणापानैः प्राशीर्यैश्चैतं पूर्व ऋषयः प्राश्नन्।**

**प्राणापानास्त्वा हास्यन्तीत्येनमाह।**

**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।**

**सप्तर्षिभिः प्राणापानैः।**

**तैरेनं प्राशिषं तैरेनमजीगमम्।**

**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।**

**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥**

यैः प्राणापानैः ऋष्यात्मकैः एतं ओदन पूर्वेऽभिज्ञाः प्राश्नन्, ततोऽन्यैश्चेत् प्राणापानैः एन ओदन प्राशीः, तर्हि प्राशितार त्वा त्वा प्राणापानाः प्राणापानात्मिका मुख्यप्राणस्य वृत्तयः हास्यन्ति त्यक्ष्यन्ति, इति अनेन प्रकारेण एन प्राशितार आह विशेषज्ञो ब्रूयात्। तस्योत्तरम्—तं वा अहमित्यादि। सप्तऋषिभिः एतदात्मकैः प्राणापानैः। तैरेन प्राशिषमित्यादि पूर्ववत्। असा.

**ततश्चैनमन्येन व्यचसा प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन्।**

**राजयक्ष्मस्त्वा हनिष्यतीत्येनमाह।**

**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।**

**अन्तरिक्षेण व्यचसा।**

**तेनैनं प्राशिषं तेनैनमजीगमम्।**

**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।**

**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥**

येन व्यचसा व्याप्तिमता रूपेण कृत्स्नशरीरवर्तिना एत ओदन पूर्वे ऋषयः प्राश्नन्, ततोऽन्येन चेत् व्यचसा एनं ओदन प्राशीः, तर्हि त्वा त्वा प्राशितार राजयक्ष्मः एतत्संज्ञः क्षयरोगो हनिष्यति मारयिष्यति। राज्ञः सोमस्य सबन्धी यक्ष्मो राजयक्ष्मः। श्रूयते हि तैत्तिरीयके—'राजान यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म' (तैसं. २।५।६।५) इति। इति अनेन प्रकारेण एन प्राशितारं आह ब्रूयात्। तं वा अहमित्यादि पूर्ववत्। असा.

ततश्चैनमन्येन पृष्ठेन प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन्।
विद्युत् त्वा हनिष्यतीत्येनमाह।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।
दिवा पृष्ठेन।
तेनैनं प्राशिषं तेनैनमजीगमम्।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद॥

येन दिवा द्युलोकात्मकेन पृष्ठेन मध्यशरीरापरभागेन एतं ओदन पूर्वे ऋषयः प्राश्नन्, ततोऽन्येन चेत् पृष्ठेन आत्मीयेन शरीरापरभागेन त्व एन ओदन प्राशीः, विद्युत् विद्योतमाना अशनिस्त्वा त्वा हनिष्यति। इत्येनमाह इत्यादि पूर्ववत्। दिवा द्युलोकात्मकेन पृष्ठेन शरीरापरभागेन। तेन अवयवेन एनं प्राशिष इत्यादि पूर्ववत्। असा.

ततश्चैनमन्येनोरसा प्राशीर्येन चैत पूर्व ऋषयः प्राश्नन्।
कृष्या न रात्स्यसीत्येनमाह।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।
पृथिव्योरसा।
तेनैनं प्राशिषं तेनैनमजीगमम्।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद॥

येन उरसा पूर्वे ऋषयः प्राशितवन्तः, ततोऽन्येन चेत् उरसा स्तनमण्डलस्य उपरिवर्तिना पुरोभागस्थावयवेन त्वं ओदन प्राशीः, तर्हि कृष्या कर्षणक्रियया न रात्स्यसि, व्रीहियवादिसस्यैः समृद्धो न भविष्यसीत्यर्थः। अन्यदुक्तार्थम्। पृथिव्या उरसा पृथिवीत्वेन भाव्यमानेन उरसा। तेनैनं प्राशिषमित्यादि समानम्।

असा.

ततश्चैनमन्येनोदरेण प्राशीर्येन चैतं पूर्वे ऋषयः प्राश्नन्।
उदरदारस्त्वा हनिष्यतीत्येनमाह।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।
सत्येनोदरेण।
तेनैनं प्राशिषं तेनैनमजीगमम्।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद॥

पूर्वे ऋषयः येन उदरेण प्राश्नन्, ततोऽन्येन उदरेण यदि इम ओदन प्राशीः, तर्हि त्वा त्वा उदरदारः उदरस्य दरणात्मकः अतीसाराख्यो रोगो हनिष्यति मारयिष्यति। अन्यत् पूर्ववत्। सत्येन। यथार्थकथनात्मक सत्यम्। तेन उदरेण तद्रूपतया भाव्यमानेन उदरेण। एन ओदन प्राशिषमित्यादि समानम्। असा.

ततश्चैनमन्येन वस्तिना प्राशीर्येन चैतं पूर्वे ऋषयः प्राश्नन्।
अप्सु मरिष्यसीत्येनमाह।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।
समुद्रेण वस्तिना।
तेनैनं प्राशिषं तेनैनमजीगमम्।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद॥

वसति अस्मिन् अशितपीतान्नोदकं इति वस्तिः मूत्राशयः। येन वस्तिना पूर्वे ऋषयः प्राश्नन्, ततोऽन्येन चेत् वस्तिना त्व ओदन प्राशीः, तर्हि त्वं अप्सु उदकेषु मरिष्यसि, इति अनेन प्रकारेण एन प्राशितार आह ब्रूयात्। तं वा अहमित्यादि उक्तार्थम्। समुद्रेण वस्तिना समुद्रात्मना भावितेन आत्मीयेन वस्तिना। तेनैन प्राशिषमित्यादि पूर्ववत्। समुद्रस्य वस्तिरूपता तैत्तिरीयके समाम्नायते — 'तदभ्रमिव समहन्यत। तद्वस्तिमभिनत्। स समुद्रोऽभवत्। तस्मात् समुद्रस्य न पिबन्ति' (तैब्रा. २।२।९।३) इति।

असा.

ततश्चैनमन्याभ्यामूरुभ्यां प्राशीर्याभ्यां चैतं पूर्वे ऋषयः प्राश्नन्।
ऊरू ते मरिष्यत इत्येनमाह।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्।
मित्रावरुणयोरूरुभ्याम्।

ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥

याभ्या ऊरुभ्यां पूर्वे ऋषयः प्राश्नन्, ततोऽन्याभ्या चेत् ऊरुभ्यां एन ओदन प्राशीः, ते प्राशितुस्तव ऊरू मरिष्यतः त्यक्तप्राणौ शुष्कौ भविष्यतः इत्येनमाह । तं वा अहमित्यादि पूर्ववत् । मित्रावरुणयोः, मित्रश्च वरुणश्च मित्रावरुणौ, तयोः सबन्धिभ्यामूरुभ्याम् । ताभ्यामेन प्राशिषमित्यादि पूर्ववत् योज्यम् । अस्रा.

ततश्चैनमन्याभ्यामष्ठीवद्भ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।
स्रामो भविष्यसीत्येनमाह ।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।
त्वष्टुरष्ठीवद्भ्याम् ।
ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एव वेद ॥

अष्ठीवन्तौ अस्थिमन्तौ ऊर्वोरधःप्रदेशवर्तिनौ अवयवौ जानुलक्षणौ । ताभ्या अष्ठीवद्भ्या अन्याभ्यामित्यादि सर्व पूर्ववत् योज्यम् । स्रामः शुष्कजङ्घः । शुष्कजङ्घो भविष्यसि इत्येन प्राशितारमाह । त वा अहमित्यादि पूर्ववत् । त्वष्टुः देवस्य सबन्धिभ्यां अष्ठीवद्भ्याम् । गतार्थमन्यत् । अस्रा.

ततश्चैनमन्याभ्यां पादाभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।
बहुचारी भविष्यसीत्येनमाह ।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।
अश्विनोः पादाभ्याम् ।
ताभ्यामेनं प्राशिप ताभ्यामेनमजीगमम् ।
एप वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥

जङ्घयोरधोवर्तिनौ पादौ । बहुचारी, बहु अधिकं चरितुं शीलं अस्य स तथोक्तः । सवदा प्रवासशील इत्यर्थः । अश्विनोः संबन्धिभ्या तदीयत्वेन भाविताभ्यां पादाभ्याम् । वाक्ययोजना पूर्ववत् । अस्रा.

ततश्चैनमन्याभ्यां प्रपदाभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।
सर्पस्त्वा हनिष्यतीत्येनमाह ।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।
सवितुः प्रपदाभ्याम् ।
ताभ्यामेनं प्राशिष ताभ्यामेनमजीगमम् ।
एप वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥

प्रपदाभ्यां पादाग्राभ्याम् । सर्पः प्रसिद्धः । सवितुः सर्वस्य प्रेरकस्य देवस्य सबन्धिभ्या प्रपदाभ्या पादाग्राभ्याम् । अस्रा.

ततश्चैनमन्याभ्यां हस्ताभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।
ब्राह्मणं हनिष्यसीत्येनमाह ।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।
ऋतस्य हस्ताभ्याम् ।
ताभ्यामेनं प्राशिप ताभ्यामेनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥

ब्राह्मण हनिष्यसीति । ब्रह्महत्या तव भविष्यतीत्यर्थः । ऋतं सत्य पर ब्रह्म, तस्य सबन्धिभ्या हस्ताभ्याम् । ताभ्यामेनमित्यादि अन्यत्सर्वं पूर्ववत् । अस्रा.

ततश्चैनमन्यया प्रतिष्ठया प्राशीर्यया चैतं पूर्व ऋषयः प्राश्नन् ।
अप्रतिष्ठानोऽनायतनो मरिष्यसीत्येनमाह ।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।
सत्ये प्रतिष्ठाय ।
तयैनं प्राशिषं तयैनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥

प्रतितिष्ठति अस्या इति प्रतिष्ठा पादयोराधारभूता भूमिः। यया च प्रतिष्ठया सत्यब्रह्मात्मिकया एतं ओदन पूर्वे प्रथमभाविन ऋषयः प्राश्नन्, ततोऽन्यया चेत् प्रतिष्ठया एन ओदन प्राशीः प्राशितवानसि, तर्हि त्व अप्रतिष्ठानः प्रतिष्ठारहितः। तस्यैव अर्थकथन अनायतन इति। स्थानोपवेशनाय भूमिरहितो भविष्यसि, इत्येन प्राशितारमाह कश्चित् विद्वान् ब्रूयात्, इति विपक्षे बाधोपन्यासः। तस्यैतदुत्तरम्—तं वा अहमित्यादि। त खलु उक्तप्रभाव ओदन अहं अर्वाञ्च अभिमुख-मवस्थित न प्राशिषम्। न पराञ्च पराङ्मुखमवस्थित-मपि न प्राशिषम्। न प्रत्यञ्च प्रत्यङ्मुख आभिमुख्येन अवस्थितमपि न प्राशिषम्। किन्तु आत्मभूत ओदन सत्ये सर्वदा बाधविधुरे 'विज्ञानमानन्दं ब्रह्म' (बृउ. ३।९।२८) इत्याद्युपनिषदेकवेद्ये सर्वजगत्कल्पनास्पदे ब्रह्मणि प्रतिष्ठाय प्रतिष्ठितः समाश्रितो भूत्वा तेन सर्वजग-त्प्रतिष्ठात्मकेन प्राशिष प्राशितवानस्मि। तेनैव सत्येन एन अजीगम उदरमध्य गमितवानस्मि। यद्वा, अस्य सवयज्ञस्य फलभूत नाकपृष्ठाख्यं लोक गमितवानस्मि। एष खलु उदीरितभावनया प्राशित ओदनः सर्वाङ्गः सर्वैरङ्गैः अवयवैरुपेतः, सर्वपरुः सर्वैः पर्वभिः अवयवस-न्धिभिरुपेतः, सर्वतनूः कृत्स्नशरीरो भवति। सर्वशरीराभि-मानिविराडात्मको भवतीत्यर्थः। उक्तमर्थं वेदितुः फलमाह— सर्वाङ्ग एवेत्यादिना।

असा.

**एतद्वै ब्रध्नस्य विष्टपं यदोदनः ॥**

यत् योऽय उक्तमहिमोपेत ओदनः, एतत् खलु ब्रध्नस्य विष्टपम्। बध्नाति महिम्ना सर्वं जगत् सृजतीति ब्रध्नः सूर्यमण्डलमध्यवर्ती ईश्वरः। तस्य विष्टप वियति विष्टब्धं मण्डलम्। सूर्यमण्डलात्मकोऽय ओदन इत्यर्थः।

असा.

**ब्रध्नलोको भवति ब्रध्नस्य विष्टपि श्रयते य एवं वेद ॥**

यः पुरुषः एवं उक्तप्रकारेण वेद ओदनस्य सूर्यमण्डलात्मकत्व वेद। मण्डलाभिमानिसूर्यरूपेण ओदन उपास्ते इत्यर्थः। असौ ब्रध्नलोको भवति ब्रध्नस्य सूर्यस्य यो लोकः, तल्लोकवर्ती भवति। यद्वा, सूर्य इव लोकनीयः दर्शनीयो भवति। ब्रध्नस्य सूर्यस्य विष्टपि विष्टब्धे मण्डलात्मके स्थाने श्रयते सेवते, सूर्यात्मको भवती-त्यर्थः। 'असौ वा आदित्यो ब्रध्नस्य विष्टपम्' (तैस. ५।३।३।५) इति हि तैत्तिरीयकम्।

असा.

**एतस्माद्वा ओदनात् त्रयस्त्रिंशतं लोकान्निरमिमीत प्रजापतिः ॥**

एतस्मात् सूर्यात्मकादोदनात् सर्वजगदुपादान-भूतात् प्रजापतिः प्रजाना स्रष्टा देवः त्रयस्त्रिंशत लोकान् 'अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्याः प्रजापतिश्च वषट्कारश्च' (ऐब्रा. १।१०) इत्यैतरेयकादिश्रुति-प्रसिद्धा ये त्रयस्त्रिंशत्सङ्ख्याका देवाः, तेषा लोकान् अधिष्ठातृसहितान् निरमिमीत निर्मितवान्।

असा.

**तेषां प्रज्ञानाय यज्ञमसृजत ॥**

तेषां देवलोकानां प्रज्ञानाय प्रकर्षेण ज्ञानाय तत्तल्लो-कोपभोग्यसुखसाक्षात्काराय तत्साधनत्वेन इम यज्ञ असृ-जत सृष्टवान्। यज्ञसृष्ट्यभिधानादेव सर्वजगत्सृष्टिरुक्ता भवति, 'अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत' (तैस. ७।१।१।२) इत्यादिश्रुतेः। स्मर्यते च—'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्न ततः प्रजाः॥' (मस्मृ. ३।७६) इति।

असा.

**स य एवं विदुष उपद्रष्टा भवति प्राणं रुणद्धि ॥**

स यः यः कश्चन पुरुषः एव उक्तप्रकारेण विदुषः उपासकस्य उपद्रष्टा भवति, उप समीपे तत्कृतस्य अकामोपनतस्य द्रष्टा साक्षात्कर्ता भवति, तस्य मनसि उपरोध जनयतीत्यर्थः। स उपरोधकः स्वशरीरे वर्त-मानं प्राण रुणद्धि आवृणोति निरुद्धगतिं करोति। प्राणोपासकस्य अनिष्टाचरणादित्यर्थः।

असा.

**न च प्राणं रुणद्धि सर्वज्यानिं जीयते ॥**

प्राण रुणद्धि इत्येतावदेव न च, अपि तर्हि सर्व-ज्यानिं प्रजापश्वादिरूपस्य सर्वस्य अभिमतस्य वस्तुनः ज्यानिः हानिः यथा भवति तथा जीयते हीयते निहीनो

(१) असं. ११।५।१-७.

भवति । जीयते इत्येतावता वयोहानिमात्रं गम्यते । हानेः सर्ववस्तुविषयताप्रतिपत्त्यर्थविशेषणसंबन्धाय ज्यानिं जीयते इति पुनरुक्तिः । असा.

**न च सर्वज्यानिं जीयते पुरैनं जरसः प्राणो जहाति ॥**

सर्वज्यानिं जीयते इति एतावदेव न च, एन निन्दक जरसः जरावस्थायाः पुरा प्राणो जहाति परित्यजति । म्रियतेऽसावित्यर्थः । एतदुक्त भवति—विदुषो व्यतिक्रम दृष्ट्वा निन्दतः पुरुषस्य प्रथम प्राणरोधो भवति, ततः सर्ववस्तुहानिर्भवति, ततः अकालमरणमिति । असा.

ब्रह्मौदनोच्छिष्टं सर्वजगत्कारणब्रह्माभिन्नम्

**उच्छिष्टे नाम रूपं चोच्छिष्टे लोक आहितः ।**
**उच्छिष्ट इन्द्रश्चाग्निश्च विश्वमन्तः समाहितम् ॥**

ब्रह्मौदनाख्ये सवयज्ञे हुतशिष्टस्यौदनस्य सर्वजगत्कारणभूतब्रह्माभेदेन स्तुतिः क्रियते । उच्छिष्टे । होमादूर्ध्वं शिष्यते अवशिष्यते इति हुतावशिष्टः प्राशनार्थ ओदनः उच्छिष्टः । तस्य देवसृष्टिहेतुत्व तावच्छ्रूयते हि—'अदितिः पुत्रकामा । साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् । तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेतोऽधत्त । तस्यै धाता चार्यमा चाऽऽजायेताम्' (तैब्रा. १।१।९।१) इत्यादि । तथा अस्मिन्नेव वेदे मुण्डकोपनिषदि अन्नस्य सर्वजगद्धेतुता समाम्नास्यते—'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्य लोकाः कर्मसु चामृतम् ॥' (मुउ. १।१।८) इति । तस्मिन्नुच्छिष्टे हुतशिष्टे अन्ने नाम नामधेयात्मकः शब्दप्रपञ्चः, रूपं तेन निरूपणीयः अर्थप्रपञ्चश्च, तदुभयं आहित आश्रितम् । नामरूपात्मकः प्रपञ्चः तस्मिन् कारणभूते समाश्रित्य लब्धसत्ताकोऽवतिष्ठते इत्यर्थः । यद्वा, 'अथात आदेशो नेति नेति' (बृउ. २।३।६) 'नेह नानाऽस्ति किंचन' (बृउ. ४।४।१९) इत्येव दृश्यप्रपञ्चनिषेधात् ऊर्ध्वं तदवधित्वेन शिष्यते अवशिष्यते इत्युच्छिष्टं बाधावधित्वेन शिष्यमाणं पर ब्रह्म । तस्मिन् शुक्त्यादौ रजतादिवत् नाम रूपं चेति द्विधाभूत समस्तं जगत् आहितं आरोपितं, वर्तेते इत्यर्थः ।

(१) असं. ११।९।१—२७.

इत्थ सामान्येन सर्वजगदाधारत्वमभिधाय विशेषतो निर्दिशति—उच्छिष्टे लोक आहित इत्यादिना । उच्छिष्टे उच्छिष्यमाणे ब्रह्माभिन्ने कारणभूते तस्मिन्नोदने लोकः पृथिव्यादिरूपः सर्वो लोकः आहितः आस्थितः । तस्मिन्नेव उच्छिष्टे द्युलोकाधिपतिः इन्द्रश्च पृथिव्यधिपतिः अग्निश्च उभौ आहितौ । किं बहुना, एतदुपलक्षितं विश्व सर्वं जगत् अन्तः मध्ये समाहित सम्यगीश्वरेण स्थापितम् । असा.

**उच्छिष्टे द्यावापृथिवी विश्वं भूतं समाहितम् ।**
**आपः समुद्र उच्छिष्टे चन्द्रमा वात आहितः ॥**

प्रथमयर्चा सङ्ग्रहेण उक्त एवार्थः एतदादिभिर्मन्त्रैर्बहुधा प्रपञ्च्यते । द्यावापृथिवी द्यावापृथिव्यौ उच्छिष्टे उच्छिष्यमाणे ब्रह्मणि तदात्मके हुतशिष्टौदने वा समाहिते, आश्रित्य वर्तेते इत्यर्थः । भूत तत्रत्य यद्भूतजात विश्व सर्वं, तत् उच्छिष्टे समाहित सम्यक् निहितम् । तदाधारवशात्प्रचलतीत्यर्थः । तथा आपः व्यापनशीलाः प्रथमसृष्टा जगत्कारणभूताः, तासां समुदायात्मकः समुद्रश्च तस्मिन् उच्छिष्टे समाहिताः । चन्द्रमाः तस्मात्समुद्रात् मथ्यमानादुत्पन्नः, वातः वायुः अन्तरिक्षाधिपतिर्देवः आहितः आश्रितः ।

असा.

**सन्नुच्छिष्टे असंश्चोभौ मृत्युर्वाजः प्रजापतिः ।**
**लौक्या उच्छिष्ट आयत्ता व्रश्च द्रश्चापि श्रीर्मयि ॥**

सन् सत्तया क्रोडीकृतो भावरूपः प्रपञ्चः, असन् अभावात्मकश्च । उभौ सदसतौ उच्छिष्टे तस्मिन् उदीरितलक्षणे, कार्यत्वेन वर्तेते इत्यर्थः । तथा तस्य सदसदात्मकस्य प्रपञ्चस्य मारको मृत्युः, वाजः तदीयं बल, तस्य सर्वस्य स्रष्टा प्रजापतिश्च तत्रैव आहिताः । तथा लौक्याः लोकसम्बन्धिन्यः प्रजाः तस्मिन्नुच्छिष्टे आहिताः स्थापिताः । तथा व्रः वारको वरुणः, द्रः द्रावकः अमृतमयः सोमः । परस्परसमुच्चयार्थौ चकारौ । तावप्यस्मिन्नाहितौ । तत्प्रसादात् श्रीः सम्पत् मयि विदुषि आहिता आस्थिता भवतु । असा.

**दृढो दृंहस्थिरो न्यो ब्रह्म विश्वसृजो दश ।**
**नाभिमिव सर्वतश्चक्रमुच्छिष्टे देवताः श्रिताः ॥**

दृढः दृढाङ्गः, प्रवृद्धशरीरो देव इत्यर्थः । दृंहस्थिरः दृंहणेन स्थिरीकृतो लोकः । न्यः नेतारः तत्रत्याः प्राणिनः । ब्रह्म परिवृढं जगत्कारणं अव्यक्तात्मकम् । विश्वसृजः विश्वस्य स्रष्टारो नव ब्रह्माणः, तत्स्रष्टा दशमः, एवं दशसंख्याकाः । यद्वा, नव प्राणाः, मुख्यः प्राण एकः । एते हि प्रथमसृष्टा विश्वस्य स्रष्टारः । एते सर्वे उच्छिष्टे समाहिताः । अपि च देवताः इन्द्राद्याः सर्वे देवाः नाभिमिव चक्रं, यथा रथचक्रं मध्यस्थं नाभिं सर्वत आवेष्ट्य वर्तते, एवमुच्छिष्टे श्रिताः आश्रिताः, कारणभूतं ब्रह्म आवेष्ट्य वर्तन्ते इत्यर्थः । असा.

**ऋक्साम यजुरुच्छिष्ट उद्गीथः प्रस्तुतं स्तुतम् ।**
**हिंकार उच्छिष्टे स्वरः साम्नो मेडिश्च तन्मयि ॥**

अनया उत्तरया च यज्ञाङ्गानां तदाश्रितत्वं प्रतिपाद्यते । ऋक्साम यजुरिति । सर्वत्र जातावेकवचनम् । ऋचः पादबद्धा मन्त्राः यज्ञे याज्यानुवाक्यादिरूपेण विनियुक्ताः । सामानि प्रगीतमन्त्राः 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इत्येवं स्तोत्रसाधनत्वेन विनियुक्ताः । यजूंषि प्रश्लिष्टपठिता अनुष्ठेयार्थप्रकाशका मन्त्राः । तेषां लक्षणं जैमिनिराचार्योऽसूत्रयत्–'तेषां ऋग्यत्रार्थवशेन पादव्यवस्था' 'गीतिषु सामाख्या' 'शेषे यजुःशब्दः' (जै. सू. २।१।३५,३६,३७) इति । एवं त्रिविधा मन्त्राः उच्छिष्टे उच्छिष्यमाणे ब्रह्मणि समाश्रिताः । तत्र आज्यादिस्तोत्रनिर्वर्तकानां साम्नां पञ्च भक्तयः हिंकारप्रस्तावोद्गीथप्रतिहारनिधनाख्याः प्रयोगशास्त्रेण कल्पिताः । तत्र च उद्गात्रा गीयमानो भाग उद्गीथः । प्रस्तुतं प्रस्तोत्रा गीयमानः प्रस्तावाख्यो भागः । प्रस्तूयते स्तुतेः प्रारम्भः क्रियते अनेनेति प्रस्तुतम् । स्तुतं स्तोत्रं स्तवनकर्म । हिंकारः सर्वैरुद्गातृभिरादौ प्रयुज्यमानो हिं इति शब्दः । स्वरः कृत्स्नसामाश्रितः क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिमन्द्रात्मकः सप्तविधः स्वरः । अथ वा, कानिचित्सामानि आ इ ई इत्येवमात्मकैः स्वरैः परिसमाप्यन्ते, तानि च सामानि स्वरनिधनानि इत्युच्यन्ते, स आकारोऽत्र स्वरशब्देन विवक्षितः । स च साम्नः संबन्धी । तथा मेडिः मेलयिता ऋगक्षराणां गानविशेषस्य च संसर्जकः स्तोभविशेषः । अथ वा, मेलिरिति वाङ्नाम । साम्नः संबन्धिनी वाक् । कानिचित्सामानि वाङ्निधनानि गीयन्ते, तदभिप्रायमेतत् । तदेतदुद्गीथादिकं सर्वं उच्छिष्टे समाश्रितम् । तत्सर्वं मयि यज्ञसमृद्ध्यर्थं भवत्वित्यर्थः । असा.

**ऐन्द्राग्नं पावमानं महानाम्नीर्महाव्रतम् ।**
**उच्छिष्टे यज्ञस्याङ्गान्यन्तर्गर्भ इव मातरि ॥**

ऐन्द्राग्नं इन्द्राग्न्योः स्तावकं 'इन्द्राग्नी आ गतं सुतम्' (ऋस. ३।१२।१, सास. २।१।२) इति तृचे गीयमानं साम ऐन्द्राग्नं प्रातःसवने प्रयुज्यमानम् । पावमानं त्रिष्वपि सवनेषु सवनादौ गीयमानं पवमानसोमदेवताकं साम । महानाम्नीः महानाम्न्यः 'विदा मघवन्विदा गातुमनुशंसिषो दिशः' (ऐआ. ४।१, सास. १।६।६) इत्याम्नाता ऋचः । तत्र गीयमानं शाक्वरं सामापि महानाम्नीशब्देनोच्यते । ताश्च द्वादशाहमध्यवर्तिनि दशरात्रे पञ्चमेऽहनि पृष्ठसामत्वेन विनियुक्ताः । महाव्रतं राजनगायत्रबृहद्रथन्तरभद्राख्यैः पञ्चभिः सामभिः क्रियमाणं स्तोत्रम् । तच्च गवामयनस्योपान्त्येऽहनि प्रथमं पृष्ठस्तोत्रम् । एकाहोऽपि सोमयागः तद्वान् महाव्रतमित्याख्यायते । एवमैन्द्राग्नादीनि यज्ञस्याङ्गानि उच्छिष्टे अन्तः मध्ये मातरि गर्भः इव वर्तन्ते । यथा मातुरुदरमध्ये आश्रितो गर्भः पुष्यन्नभिवर्धते, एवमेतान्यपि कारणभूते ब्रह्मणि आश्रितत्वेन भाव्यमानानि अङ्गिनं यज्ञं फलसमृद्धं कुर्वन्तीत्यर्थः । असा.

**राजसूयं वाजपेयमग्निष्टोमस्तदध्वरः ।**
**अर्काश्वमेधावुच्छिष्टे जीवबर्हिर्मदिन्तमः ॥**

अङ्गवदङ्गिनामपि तदाश्रयत्वमितः परं प्रतिपाद्यते । राजा सूयते प्रेर्यते यस्मिन्कर्मणि तत् राजसूयं इष्टिपशुसोमदर्विहोमात्मकं शस्त्रप्रधानम् । वाजपेयं, वाजः अन्नं द्रवीकृत्य पेयं यस्मिन्कर्मणि तत् तथोक्तम् । 'राजा स्वर्गकामो राजसूयेन यजेत' (आ. श्रौ. ९।९।१९) इति क्षत्रिय एव राजसूये कर्मणि अधिकारी । वाजपेये तु ब्राह्मणक्षत्रियौ उभावपि अधिक्रियेते । श्रूयते हि—'स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः । तं वा एतं वाजपेयमित्याहुः' (तैब्रा. १।३।२।३) इति । तथा अग्निष्टोमः, चरमस्तोत्रे यज्ञायज्ञीये अग्निः स्तूयते इत्यग्निष्टोमः द्वादशस्तोत्रशस्त्रसहितः सर्वसोमानां प्रकृतिभूतः

सोमयागः । तत् । लिङ्गव्यत्ययः । सोऽध्वरः हिंसाप्रत्यवायरहितः । 'अग्नीषोमीयं पशुमालभेत' इत्यालभ्यपशुहिंसाया विहितत्वेन 'न हिंस्यात्सर्वभूतानि' इति निषेधशास्त्रस्य तत्रानुप्रवेशाभावात् । अर्काश्वमेधौ, अर्कः चित्योऽग्निः, अश्वो मेधः पशुर्यस्मिन्त्रिरात्रात्मके अहीने सोमे सोऽश्वमेधः, तौ अर्काश्वमेधौ । अथ वा, विराडात्मना उपास्यमानश्चियोऽग्निरर्कः । तस्य च तथात्वेनोपासनमैतरेयकोपनिषदि समाम्नायते— 'एत ह्येव बह्वृचा महत्युक्थे मीमासन्ते, एतमग्नावध्वर्यवः, एत महाव्रते छन्दोगाः' ( ऐआ. ३।२।३ ) इति । अश्वमेधशब्देन च 'उषा वा अश्वस्य मेध्यस्य शिरः' (बृउ. १।१।१) इत्याद्युपनिषदा अश्वमेधाङ्गस्याश्वस्य विराडात्मना यदुपासनमुक्तं तद्विवक्षित, 'तावेतावर्काश्वमेधौ' ( बृउ १।२।७ ) इति तदुपासनप्रकरणे समाम्नानात् । एतदेवाभिप्रेत्य तैत्तिरीयैरपि आम्नायते— 'अर्को वा एष यदग्निरसावादित्योऽश्वमेधः' ( तैस. ५।७।५।२ ) इति । एते राजसूयादयः सर्वे उच्छिष्टे उच्छिष्यमाणे निष्प्रपञ्चे ब्रह्मणि तदात्मना भाव्यमाने ओदने वा समाश्रिताः । तथा जीवबर्हिः जीवावस्थान्येव बर्हीषि यस्य यागविशेषस्य स तथोक्तः । मदिन्तमः मादयितृतमः देवाना तृप्तिविशेषकरः अन्योऽपि सोमयागः । स सर्वोऽपि उच्छिष्टे समाश्रित इत्यर्थः ।

असा.

अग्न्याधेयमथो दीक्षा कामप्रश्छन्दसा सह ।
उत्सन्ना यज्ञाः सत्राण्युच्छिष्टेऽधि समाहिताः ॥

अग्न्याधेयं, अग्नयो गार्हपत्यादयो यस्मिन्कर्मणि आधीयन्ते तदग्न्याधेयम् । अथो अग्न्याधानानन्तरमेव सोमयागस्य या दीक्षा दीक्षणीयेष्ट्यादिरूपा । कामप्रच्छन्दसा, कामान् अभिलषितान्फलविशेषान् प्राति यजमानस्य पूरयतीति कामप्र, तादृशेन छन्दसा गायत्रीत्रिष्टुबादिना सवननिष्पादकेन सह । उत्सन्नयज्ञाः, इदानी दुरधिगमतया अनुष्ठानाभावात् लुप्तप्राया यज्ञा उत्सन्नयज्ञा इत्युच्यन्ते । तानेव निर्दिशति—सत्राणीति । सीदन्ति एषु बहवो यजमानाः कर्तृत्वेनेति बहुकर्तृकाः सोमयागाः सत्राण्युच्यन्ते । श्रूयते हि—'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्' इति । तानि च त्रयोदशरात्रप्रभृतीनि विश्वसृजामयनान्तानि । न खल्विदानींतनानामल्पमतीनामल्पायुषा तदनुष्ठान सभवतीति तेषामुत्सन्नयज्ञत्वम् । एवमनुक्रान्ता अग्न्याधेयादयः सर्वे यागाः उच्छिष्टे ब्रह्मणि अधि समाहिताः समाश्रिताः ।

असा.

अग्निहोत्रं च श्रद्धा च वषट्कारो व्रतं तपः ।
दक्षिणेष्टं पूर्तं चोच्छिष्टेऽधि समाहिताः ॥

अग्नये होत्र होमः अस्मिन्कर्मणीत्यग्निहोत्र 'सायं प्रातरग्निहोत्र जुहुयात्' ( आप. श्रौ. ६।१५।१४ ) इति विहितम् । श्रद्धा श्रद्धान तदनुष्ठानविषया आस्तिक्यबुद्धिः । परस्परसमुच्चयार्थौ चकारौ । वषट्कारः याज्यान्ते हविःप्रदानाय प्रयुज्यमानो वौषडिति शब्दः । व्रत, 'नानृत वदेत् । नास्य ब्राह्मणोऽनाश्वान्गृहे वसत्' ( तैब्रा. १।१।४।२ ) इत्यादिशास्त्रविहित आहिताग्नेः प्रातिस्विकमनृतवदनवर्जनादिरूप कर्म 'अहिंसा सत्यमस्तेय शौचमिन्द्रियनिग्रहः' इत्येवमादिरूप वर्ज्यसाधारण च व्रतशब्देन विवक्षितम् । तपः शरीरसतापकरं कृच्छ्रचान्द्रायणादिकम् । यद्वा, 'पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्याऽऽमिक्षा वैश्यस्य' (तैआ. २।८।१) इति दीक्षादिवसेषु देहयात्रार्थं विहित पयःपानादिकं व्रतम् । तपो ब्रह्मचर्यं चित्तैकाग्र्य वा । 'मनसश्चेन्द्रियाणां चैकाग्र्य तप उच्यते' इति स्मरणात् । दक्षिणा 'तस्य द्वादशशत दक्षिणा' इत्यादिशास्त्रेण विहिता ऋत्विगानतये देयद्रव्यस्य क्लृप्तिः । तथा इष्टं श्रुतिविहितं यागहोमादि कर्म । पूर्तं स्मृतिपुराणाभिहित वापीकूपतटाकदेवायतनारामादिनिर्माणम् । एते चाग्निहोत्रादयः सर्वे उच्छिष्टे उच्छिष्यमाणे प्रपञ्चासस्पृष्टे ब्रह्मणि । अधिः सप्तम्यर्थानुवादी । समाहिताः समाश्रिताः ।

असा.

एकरात्रो द्विरात्रः सद्यःक्रीः प्रक्रीरुक्थ्यः ।
ओतं निहितमुच्छिष्टे यज्ञस्याणूनि विद्यया ॥

एका रात्रिं व्याप्य वर्तमानः सोमयागः एकरात्रः । तथा द्वे रात्री व्याप्य वर्तमानः सोमयागो द्विरात्रः । द्विरात्रप्रभृतयः सोमयागा अहीना इत्युच्यन्ते, 'द्विरात्रप्रभृतय उपरिष्टादतिरात्रा अहीना एकादशरात्रात्' इति सूत्रितत्वात् । अतो नैषां सत्रेष्वन्तर्भाव इति

पृथगुपादानम् । सद्यस्क्रीः प्रक्रीः इत्युभौ एकाहौ सोमयागविशेषौ । सद्यः तदानीमेव क्रीयते सोमोऽस्मिन्निति सद्यःक्रीः । प्रक्रीशब्दोऽपीत्थं निर्वक्तव्यः । उक्थ्यः अग्निष्टोमसंस्थात ऊर्ध्वभावीनि त्रीणि स्तुतशस्त्राणि उक्थसंज्ञकानि यस्य सन्ति स सोमयाग उक्थ्यः । तदेतदेकरात्रादिकमुच्छिष्टे उदीरितलक्षणे ओतं आबद्धं निहितं निक्षिप्तम् । वर्तते इत्यर्थः । इत्थं यज्ञस्य संबन्धीनि अणूनि सूक्ष्माणि रूपाणि विद्यया भावनया । तत्रैव कारणभूते ब्रह्मणि निहितानीत्यर्थः । अस्त.

चतूरात्रः पञ्चरात्रः षड्रात्रश्चोभयः सह ।
षोडशी सप्तरात्रश्चोच्छिष्टाज्जज्ञिरे सर्वे ये यज्ञा अमृते हिताः ॥

चतसृभिः रात्रिभिरावर्त्यमानः सोमयागश्चतूरात्रः । एवं पञ्चरात्रषड्रात्रसप्तरात्रा व्याख्येयाः । उभय इत्यनेन चतूरात्रादीनां द्विगुणितत्वं विवक्षितम् । उभौ चतूरात्रलक्षणौ अवयवौ अस्य सोऽष्टरात्र उभयः । एवं पञ्चरात्रो द्विगुणितो दशरात्रो भवति, षड्रात्रो द्विगुणितो द्वादशरात्र इत्येवमवगन्तव्यम् । सहशब्द एतेषां साहित्यमाचष्टे । षोडशी, उक्थ्यसंस्थात उपरि षोडश षोडशसंख्यापूरकं स्तोत्रं शस्त्रं च यस्यास्ति स सोमयागः षोडशी । ये चान्ये यज्ञा अमृते हिताः अमृतलक्षणफलजनने समर्थाः, चतूरात्रादयः सर्वे ते यज्ञा उच्छिष्टात् ब्रह्मौदनोच्छेषणादुच्छिष्यमाणाज्जगत्कारणाद्ब्रह्मण एव वा जज्ञिरे जाताः बभूवुः । अस्त.

प्रतीहारो निधनं विश्वजिच्चाभिजिच्च यः ।
साह्नातिरात्रावुच्छिष्टे द्वादशाहोऽपि तन्मयि ॥

उद्गीथभक्त्यनन्तरभाविनी प्रतिहर्त्रा उच्यमाना साम्नश्चतुर्थी भक्तिः प्रतिहारः । येन भागेन साम परिसमाप्यते तन्निधनम् । तच्च सर्वैरुद्गातृभिर्वक्तव्यम् । विश्वजिदभिजितौ द्वौ सोमयागौ अग्निष्टोमसंस्थौ । साह्नातिरात्रौ । एकेनाह्ना समाप्यमानः सवनत्रयात्मकः सोमयागः साह्नः । रात्रिमतीत्य वर्तते इत्यतिरात्रः एकोनत्रिंशत्स्तुतशस्त्रवान् सोमयागः । एते प्रतिहारादयः उच्छिष्टे ब्रह्मणि परिकल्पिताः । द्वादशाहोऽपि । द्वादशानामह्नां समाहारो यस्मिन्क्रतौ स क्रतुर्द्वादशाहः । स च सत्राहीनात्मकः । सोऽपि तस्मिन्ब्रह्मण्याश्रितः । यदेतदनुक्रान्तं यज्ञजातं, तत्सर्वं मयि भवत्विति प्रार्थना अवगन्तव्या ॥ अस्त.

सूनृता संनतिः क्षेमः स्वधोर्जामृतं सहः ।
उच्छिष्टे सर्वे प्रत्यञ्चः कामाः कामेन तातृपुः ॥

सूनृता प्रियसत्यात्मिका वाक् । सनतिः फलस्य नतिः उपनतिः । तस्योपनतस्य फलस्य परिरक्षणं क्षेमः । स्वधा पितॄणां संबन्धिनी तृप्तिकरी । यद्वा, अन्ननामैतत् । सर्वप्राण्युपभोग्यमन्नम् । ऊर्जा प्राणस्य स्थापकं बलकरमन्नम् । अमृतं देवोपभोग्यममृतत्वप्रापकं पीयूषम् । सहः पराभिभवनक्षमं बलम् । एते सर्वे कामाः काम्यमानाः फलविशेषा उच्छिष्टे ब्रह्मण्याश्रिताः प्रत्यञ्चः आत्माभिमुखमञ्चन्तः प्राप्नुवन्तः कामेन काम्यमानेन अभिलषितफलेन तातृपुः यजमानं तर्पयन्ति प्रीणयन्ति । अस्त.

नव भूमीः समुद्रा उच्छिष्टेऽधि श्रिता दिवः ।
आ सूर्यो भात्युच्छिष्टेऽहोरात्रे अपि तन्मयि ॥

नव भूमीः नवखण्डात्मिकाः पृथिव्यः । समुद्राः सप्तसंख्याकाः । दिवः द्युलोका उपरितनाः । उच्छिष्टे अधि उच्छिष्यमाणे ब्रह्मणि श्रिताः आश्रिताः । सूर्यश्चायमुच्छिष्टे उच्छिष्यमाणे स्वप्रकाशे परब्रह्मणि आश्रितः सन् आ भाति आसमन्ताद्दीप्यते, 'तस्य भासा सर्वमिदं विभाति' ( काउ. ५।१५ ) इति श्रुतेः । अहोरात्रे अपि तदाश्रित्य आभातः । तदुक्तं सर्वं मयि भवत्विति । अस्त.

उपहव्यं विषूवन्तं ये च यज्ञा गुहा हिताः ।
बिभर्ति भर्ता विश्वस्योच्छिष्टो जनितुः पिता ॥

उपहव्यं एतत्संज्ञं सोमयागम् । विषूवन्तं, गवामयनाख्यस्य संवत्सरसत्रस्य मासषट्कात्मकयोः पूर्वोत्तरपक्षयोर्मध्ये एकविंशस्तोमकोऽनुष्ठेयः सोमयागो विषूवान्, तम् । ये चान्ये यज्ञा गुहा हिताः गुहायां निगूढाः अज्ञायमाना वर्तन्ते, तान् सर्वान्यज्ञान् अयं उच्छिष्टः उच्छिष्यमाण ओदनः परमात्मा वा बिभर्ति धारयति पोषयति वा । कीदृगः स इति विशेष्यते — विश्वस्य सर्वस्य जगतो भर्ता । जनितुः जनयितुः स्वजनकस्य सवयज्ञानुष्ठातुः पिता पुण्यलोके तस्योत्पादकः । परमात्मपक्षे तु लोके यो जनयिता तस्य सर्वस्यापि पिता । सर्वे

जनयितारोऽप्यस्मात्प्रथममुत्पद्य ततः स्वकार्यं जनयन्तीत्यर्थः। ततः सर्वकारणकारणभूत इति भावः।

असा.

**पिता जनितुरुच्छिष्टोऽसोः पौत्रः पितामहः।**
**स क्षियति विश्वस्येशानो वृषा भूम्यामतिघ्न्यः॥**

उच्छिष्टः हुतावशिष्ट ओदनः जनितुः जनयितुः स्वोत्पादकस्य पिता लोकान्तरे दिव्यशरीरस्योत्पादकः। तथा असोः प्राणस्य पौत्रः। प्राणचलनाच्छरीरस्य चलन, तेन च ओदनस्य पाक इति व्यवधानापेक्षया पौत्रत्वम्। तथा तस्यैव प्राणस्यायं पितामहः। भाविस्वर्गभोगयोग्यस्य शरीरस्य तावदयं पिता। तस्य शरीरोत्पत्त्यनन्तरं तत्र प्राणसचार इति भाविशरीरव्यवधानात् भाविनः प्राणस्याय परपरयोत्पादक इति पितामहत्वम्। 'अथात आदेशो नेति नेति' (बृउ. २।३।६) इति दृश्यप्रपञ्चनिषेधावधित्वेनोच्छिष्यमाणः परमात्मा यदा उच्छिष्टशब्दार्थः, तदैव योजना — जनितुः जनयितुरुत्पादकस्य प्राणिजातस्योच्छिष्यमाणः परमात्मा पिता। स्वस्वकार्यमुत्पादयतां सर्वेषामयमाद्यस्रष्टेत्यर्थः। तथा असोः प्राणस्य प्रथमसृष्टस्य हिरण्यगर्भात्मनः पौत्रः। पुत्रश्चतुर्मुखो ब्रह्मा, तत्सृष्टा देवादयः पौत्राः। तदात्मना परमात्मैव अवस्थित इत्यर्थः। तत्र यः पितामहो हिरण्यगर्भः, तस्य च परमात्मनश्च वास्तवभेदाभावात्पितामहत्वमपि विज्ञेयम्। एवभूतः स उच्छिष्टः विश्वस्य सर्वस्य जगतः ईशानः ईश्वरो भवन् वृषा कामाना वर्षिता अतिघ्न्यः अतिक्रान्तहननः सन् भूम्या पृथिव्यां क्षियति निवसति सर्वप्राणिशरीरेषु वर्तते।

असा.

**ऋतं सत्यं तपो राष्ट्रं श्रमो धर्मश्च कर्म च।**
**भूतं भविष्यदुच्छिष्टे वीर्यं लक्ष्मीर्बलं बले॥**

ऋतं मनसा यथार्थसकल्पनम्। सत्य वाचा यथार्थभाषणम्। तपः शरीरसंतापकरो व्रतोपवासादिनियमविशेषः। राष्ट्रं राज्यम्। श्रमः शान्तिः शब्दादिविषयोपभोगस्य उपरतिः। धर्मः तज्जन्योऽपूर्वविशेषः। कर्म वर्णाश्रमानुसारेण विहित यागदानहोमादि। भूतं उत्पन्नं जगत्। भविष्यत् उत्पत्स्यमानम्। एतत्सर्वमुच्छिष्टे ब्रह्मणि तदात्मके ओदने वा कार्यत्वेन नित्यमाश्रितमिति। तथा वीर्यं सामर्थ्यम्। लक्ष्मीः सर्ववस्तुसंपत्तिः। बलं सर्वकर्मनिर्वर्तनक्षम शरीरगत सामर्थ्यम्। बले बलवति तस्मिन्नुच्छिष्टे। वर्तन्ते इत्यर्थः।

असा.

**समृद्धिरोज आकूतिः क्षत्रं राष्ट्रं षडुर्व्यः।**
**संवत्सरोऽध्युच्छिष्ट इडा प्रैषा ग्रहा हविः॥**

समृद्धिः इष्टफलस्याभिवृद्धिः। ओजः शारीरबल अष्टमो धातुः। आकूतिः इष्टफलविषयः सकल्पः। क्षत्रं क्षात्र तेजः। राष्ट्र क्षत्रधर्मेण परिपालनीय राज्यम्। षट् षट्सख्याका उर्व्यः। ताश्च मन्त्रान्तरे परिगण्यन्ते— 'षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च' (आ. श्रौ. १।२।१) इति। तथा संवत्सरः द्वादशमासात्मकः कालः। इडा नाम देवता, यस्याः प्रीतये यज्ञेषु हुतशिष्टात्पुरोडाशादेर्भागोऽवदीयते। प्रैषाः कर्मसु ऋत्विजां प्रेरका मन्त्राः। ग्रहाः वायव्यैर्गृह्यमाणा ऐन्द्रवायवादयः सोमाः। हविः चरुपुरोडाशादिलक्षणम्। एतत्सर्वमुच्छिष्टे अधि उच्छिष्यमाणे ब्रह्मणि आधारे। वर्तते इत्यर्थः।

असा.

**चतुर्होतार आप्रियश्चातुर्मास्यानि नीविदः।**
**उच्छिष्टे यज्ञा होत्राः पशुबन्धास्तदिष्टयः॥**

चतुर्होतारः चतुर्होतृसज्ञका मन्त्राः 'चित्तिः स्रुक्' (तैआ. ३।१–५) इत्याद्याः पञ्चानुवाकास्तैत्तिरीयके समाम्नाताः। यद्यपि तेषा दशहोता चतुर्होता पञ्चहोता षड्ढोता सप्तहोतेति क्रमेण सज्ञा, तथापि ते सर्वे चतुर्होतृसज्ञयैवोच्यन्ते। आप्रियः पशुयागसबन्धिना प्रयाजानां याज्याः। चातुर्मास्यानि चतुर्षु मासेषु क्रियमाणानि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चत्वारि पर्वाणि 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' (शब्रा. २।६।३।१) इति श्रुत्या विहितानि। निविदः स्तोतव्यगुणप्रकर्षनिवेदनपरा मन्त्राः 'अग्निर्देवेद्धः' (निवि. १–३) इत्येवमाद्याः। तथा यज्ञाः यागाः। होत्राः होतृप्रमुखाः सप्त वषट्कर्तारः। पशुबन्धाः अग्नीषोमीयसवनीयानुबन्ध्यात्मकाः सोमाङ्गभूताः पशुयागाः, स्वतन्त्राश्च 'वायव्य श्वेतमालभेत' (तैस. २।१।१।१) इत्यादिना विहिताः। इष्टयोऽप्यङ्गभूताः स्वतन्त्राश्च। तदेतदनुक्रान्त चतुर्होतृप्रभृतिकं सर्वं उच्छिष्टे

उच्छिष्यमाणे ब्रह्मणि तदात्मके ओदने वा समाश्रित्य वर्तते इत्यर्थः। अस्रा.

अर्धमासाश्च मासाश्चाऽऽर्तवा ऋतुभिः सह।
उच्छिष्टे घोषिणीरापः स्तनयित्नुः श्रुतिर्मही॥

अर्धमासाः पञ्चदशदिवसात्मकाः पक्षाः। मासाः चैत्राद्याः। आर्तवाः तत्तदृतुसबन्धिनः पदार्थविशेषाः। ऋतुभिः तैर्वसन्ताद्यैः सह। सर्व एते उच्छिष्टे समाश्रिताः। तथा घोषिणीः घोषिण्यः घोषयुक्ता आपः। स्तनयित्नुः स्तनयन् गर्जितं कुर्वन् मेघः। शुचिः शुद्धा मही महती भूमिः। एतेऽपि तस्मिन्नुच्छिष्टे समाश्रिता इत्यर्थः। अस्रा.

शर्कराः सिकता अश्मान ओषधयो वीरुध-स्तृणा।
अभ्राणि विद्युतो वर्षमुच्छिष्टे संश्रिता श्रिता॥

शर्कराः क्षुद्रपाषाणविशेषाः। सिकताः वालुकाः। अश्मानः पाषाणाः। ओषधयः व्रीहियवाद्याः। वीरुधः विरोहणशीला लताः। तृणा तृणानि गवादिभिरुपभोग्यानि। अभ्राणि उदकपूर्णा मेघाः। विद्युतस्तडितः। वर्षं वृष्टिः। एते सर्वे उच्छिष्टे सश्रिताः समवस्थिताः। श्रिताः इति पुनरुक्तिरादरार्था। यद्वा, ये चान्ये संश्रिताः स्वाश्रयसमवेताः पदार्थाः, ते सर्वे श्रिता इति। अस्रा.

राद्धिः प्राप्तिः समाप्तिर्व्याप्तिर्मह एधतुः।
अत्याप्तिरुच्छिष्टे भूतिश्चाहिता निहिता हिता॥

राद्धिः ससिद्धिः सम्यक् निष्पत्तिः। प्राप्तिः प्रेप्सितस्य फलस्याधिगमः। समाप्तिः सम्यगाप्तिः। व्याप्तिः विविधा आप्तिः। महः तेजः उत्सवो वा। एधतुः अभिवृद्धिः। अत्याप्तिः अतिक्रान्ता आप्तिः। भूतिः समृद्धिः। सा च आहिता आभिमुख्येन स्थिता, निहिता निक्षिप्ता। अत्र सर्वत्र उपसर्गवशादर्थभेदोऽवगन्तव्यः। राद्ध्यादयः सर्वाः तस्मिन्नुच्छिष्टे हिताः स्थिताः। अस्रा.

यच्च प्राणति प्राणेन यच्च पश्यति चक्षुषा।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः॥

यच्च प्राणिजातं प्राणेन प्राणवायुना प्राणति प्राणनव्यापारं करोति। यद्वा, प्राणेन घ्राणेन्द्रियेण प्राणति गन्धानाजिघ्रति। यच्च प्राणिजातं चक्षुषा चक्षुरिन्द्रियेण पश्यति नीलपीतादिकं साक्षात्करोति। ते सर्वे प्राणिनः उच्छिष्टात् उच्छिष्यमाणाद्ब्रह्मणः सकाशात् जज्ञिरे। तथा दिविश्रितः द्युलोके स्थिताः। ये चान्ये दिवि द्युलोके वर्तमाना देवाः, ते सर्वे उच्छिष्टाज्जज्ञिरे। अस्रा.

ऋचः सामानि छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः॥

'उच्छिष्टाज्जज्ञिरे' इति उत्तरोऽर्धर्चः अनुषज्यते। ऋचः पादबद्धा मन्त्राः। सामानि गीतविशिष्टा मन्त्राः। छन्दांसि गायत्र्युष्णिगादीनि चतुरक्षराधिकानि सप्तसख्याकानि। पुराणं पुरातनवृत्तान्तकथनरूपमाख्यानं, यजुषा यजुर्मन्त्रेण सह उच्छिष्टाज्जज्ञिरे। शेषं पूर्ववत्। अस्रा.

प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः॥

प्राणापानौ प्राणवृत्तिरपानवृत्तिश्च। चक्षुः रूपदर्शनसाधनमिन्द्रियम्। श्रोत्रं शब्दग्रहणसाधनमिन्द्रियम्। अक्षितिः क्षयाभावः। या च क्षितिः क्षयः। यद्वा, अक्षितिः अक्षीयमाणा देवता। क्षितिः क्षयाभिमानिनी। एते सर्वे पदार्थाः उच्छिष्टाज्जज्ञिरे इति। अस्रा.

आनन्दा मोदाः प्रमुदोऽभीमोदमुदश्च ये।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः॥

आनन्दाः विषयोपभोगजनिताः सुखविशेषाः। मोदाः विषयदर्शनजन्या हर्षाः। प्रकृष्टा मुदः प्रमुदः प्रकृष्टविषयलाभजन्या हर्षाः। ये च अभीमोदमुदः, आभिमुख्येन वर्तमानो मोदः अभिमोदः, अभिमोदेन मोदयन्ति हर्षयन्तीत्यभिमोदमुदः सनिहिताः सुखहेतवः पदार्थाः, ते सर्वे उच्छिष्टाज्जज्ञिरे इति। अस्रा.

देवाः पितरो मनुष्या गन्धर्वाप्सरसश्च ये।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः॥

देवाः अष्टौ वसव एकादश रुद्रा इत्येवं गणशो वर्तमानाः। पितरः पितृलोकनिवासिनः पूर्वपुरुषाः। मनुष्याः मनोः सकाशादुत्पन्नाः मनुष्यजात्याक्रान्ताः। गन्धर्वाप्सरसः, गन्धर्वा विश्वावसुप्रभृतयः, अप्सरसः उर्वशीप्रभृतयः। ये चैते देवाद्या अनुक्रान्ताः, ते सर्वे

उच्छिष्टात् ब्रह्मौदनोच्छेषणादुच्छिष्यमाणाद्ब्रह्मणः सकाशाद्वा जज्ञिरे उत्पन्नाः । तथा दिवि द्युलोके वर्तमाना ये चान्ये देवाः, तथा दिविश्रितः दिवमाश्रित्य वर्तमाना देवजनाः, ते सर्वे उच्छिष्टाज्जज्ञिरे इति । अस्त.

व्रात्य. प्रजापतिप्रेरकः, महादेवरूपेण परिणतः,
ईशान., एकव्रात्यः, इन्द्रधनुर्धरश्च

* व्रात्य आसीदीयमान एव स प्रजापतिं समैरयत् ॥
स प्रजापतिः सुवर्णमात्मन्नपश्यत्तत्प्राजनयत् ॥
तदेकमभवत् तल्ललाममभवत् तन्महदभवत् तज्ज्येष्ठमभवत् तद्ब्रह्माभवत् तत्तपोऽभवत् तत्सत्यमभवत् तेन प्राजायत ॥
सोऽवर्धत स महानभवत् स महादेवोऽभवत् ॥
स देवानामीशां पर्यैत् स ईशानोऽभवत् ॥
स एकव्रात्योऽभवत् स धनुरादत्त तदेवेन्द्रधनुः ॥
नीलमस्योदरं लोहितं पृष्ठम् ॥
नीलेनैवाप्रियं भ्रातृव्यं प्रोर्णोति लोहितेन द्विषन्तं विध्यतीति ब्रह्मवादिनो वदन्ति ॥

( कालात्मा ) व्रात्यः संवत्सराधिष्ठाता, चतुर्दिक्चरः, सामभिः देवै. ऋषिभिश्चानुसृत., पुंश्चलीमागधोपेत., वस्त्रोष्णीषकेशप्रवर्तमणिभूषित., परिष्कन्दविपथवाहसारथिप्रतोदपुरःसरसहित.

स उदतिष्ठत् स प्राचीं दिशमनु व्यचलत् ॥
तं बृहच्च रथन्तरं चाऽऽदित्याश्च विश्वे च देवा अनुव्यचलन् ॥
बृहते च वै स रथन्तराय चाऽऽदित्येभ्यश्च विश्वेभ्यश्च देवेभ्य आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥

* व्रात्यस्तोमयज्ञपरकार्थव्रात्यैर्नोपास्यं ब्रह्म व्रात्यरूपतया अत्रोक्तम् । तस्य उपास्यस्य व्रात्यस्य ब्रह्मणः गुणाश्चोक्ता. व्रात्यमहशाः उष्णीषकेशप्रतोदादिरूपा. । अत्र पञ्चविंशब्राह्मणं ( १७।१-४ ), लाट्यायनश्रौतसूत्रं (८।६) कात्यायनश्रौतसूत्रं ( अ. २२ ) चानुसंधेयम् ।

. (१) अस. १५।१।१-८.

(२) अस. १५।२।१-२८.

बृहतश्च वै स रथन्तरस्य चाऽऽदित्यानां च विश्वेषां च देवानां प्रियं धाम भवति तस्य प्राच्यां दिशि ॥
श्रद्धा पुंश्चली मित्रो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥
भूतं च भविष्यच्च परिष्कन्दौ मनो विपथम् ॥
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥
स उदतिष्ठत् स दक्षिणां दिशमनु व्यचलत् ॥
तं यज्ञायज्ञियं च वामदेव्यं च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ॥
यज्ञायज्ञियाय च वै स वामदेव्याय च यज्ञाय च यजमानाय च पशुभ्यश्चा वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥
यज्ञायज्ञियस्य च वै स वामदेव्यस्य च यज्ञस्य च यजमानस्य च पशूनां च प्रियं धाम भवति तस्य दक्षिणायां दिशि ॥
उषाः पुंश्चली मन्त्रो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥
अमावास्या च पौर्णमासी च परिष्कन्दौ मनो विपथम् ।
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ।
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥
स उदतिष्ठत् स प्रतीचीं दिशमनु व्यचलत् ॥
तं वैरूपं च वैराजं चाऽऽपश्च वरुणश्च राजाऽनुव्यचलन् ॥
वैरूपाय च वै स वैराजाय चाद्भ्यश्च वरुणाय च राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥

वैरूपस्य च वै स वैराजस्य चापां च वरुणस्य च राज्ञः प्रियं धाम भवति तस्य प्रतीच्यां दिशि ॥

इरा पुंश्चली हसो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥

अहश्च रात्री च परिष्कन्दौ मनो विपथम् ।

मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ।

कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥

स उदतिष्ठत् स उदीचीं दिशमनु व्यचलत् ॥

तं श्यैतं च नौधसं च सप्तर्षयश्च सोमश्च राजाऽनुव्यचलन् ॥

श्यैताय च वै स नौधसाय च सप्तर्षिभ्यश्च सोमाय च राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥

श्यैतस्य च वै स नौधसस्य च सप्तर्षीणां च सोमस्य च राज्ञः प्रियं धाम भवति तस्योदीच्यां दिशि ॥

विद्युत् पुंश्चली स्तनयित्नुर्मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥

श्रुतं च विश्रुतं च परिष्कन्दौ मनो विपथम् ॥

मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥

कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥

व्रात्यः देवैर्दत्ताया कालवेदरूपासन्द्या स्थितः, परिष्कन्दसंकल्पप्रहाय्योपसत्परिवृतः, षट्सु दिक्षु द्वादशमासरूपगोप्तृमहकृतः, बृहद्रथन्तरादिसामभिः भूम्यग्न्यादिदेवैश्चानुष्ठातृभिः सहितः

सं संवत्सरमूर्ध्वोऽतिष्ठत् तं देवा अब्रुवन् व्रात्य किं नु तिष्ठसीति ॥

(१) असं. १५।३।१-११.

सोऽब्रवीदासन्दीं मे सं भरन्त्विति ॥

तस्मै व्रात्यायासन्दीं समभरन् ॥

तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्तां शरच्च वर्षाश्च द्वौ ॥

बृहच्च रथन्तरं चानूच्ये आस्तां यज्ञायज्ञियं च वामदेव्यं च तिरश्च्ये ॥

ऋचः प्राञ्चस्तन्तवो यजूंषि तिर्यञ्चः ॥

वेद आस्तरणं ब्रह्मोपबर्हणम् ।

सामाऽऽसाद उद्गीथोऽपश्रयः ॥

तामासन्दीं व्रात्य आरोहत् ॥

तस्य देवजनाः परिष्कन्दा आसन्त्संकल्पाः प्रहाय्या विश्वानि भूतान्युपसदः ॥

विश्वान्येवास्य भूतान्युपसदो भवन्ति य एवं वेद ॥

तस्मै प्राच्या दिशः ॥

वासन्तौ मासौ गोप्तारावकुर्वन् बृहच्च रथन्तरं चानुष्ठातारौ ॥

वासन्तावेनं मासौ प्राच्या दिशो गोपायतो बृहच्च रथन्तरं चानु तिष्ठतो य एवं वेद ॥

तस्मै दक्षिणाया दिशः ॥

ग्रैष्मौ मासौ गोप्तारावकुर्वन् यज्ञायज्ञियं च वामदेव्यं चानुष्ठातारौ ॥

ग्रैष्मावेनं मासौ दक्षिणाया दिशो गोपायतो यज्ञायज्ञियं च वामदेव्यं चानु तिष्ठतो य एवं वेद ॥

तस्मै प्रतीच्या दिशः ॥

वार्षिकौ मासौ गोप्तारावकुर्वन् वैरूपं च वैराजं चानुष्ठातारौ ॥

वार्षिकावेनं मासौ प्रतीच्या दिशो गोपायतो वैरूपं च वैराजं चानु तिष्ठतो य एवं वेद ॥

तस्मा उदीच्या दिशः ॥

शारदौ मासौ गोप्तारावकुर्वञ्छ्यैतं च नौधसं चानुष्ठातारौ ॥

शारदावेनं मासावुदीच्या दिशो गोपायतः श्यैतं च नौधसं चानु तिष्ठतो य एवं वेद ॥

(१) असं १५।४।१-१८.

तस्मै ध्रुवाया दिशः ॥
हैमनौ मासौ गोप्तारावकुर्वन् भूमिं चाग्निं चानुष्ठातारौ ॥
हैमनावेनं मासा ध्रुवाया दिशो गोपायतो भूमिश्चाग्निश्चानु तिष्ठतो य एवं वेद ॥
तस्मा ऊर्ध्वाया दिशः ॥
शैशिरौ मासौ गोप्तारावकुर्वन् दिवं चादित्यं चानुष्ठातारौ ॥
शैशिरावेनं मासावूर्ध्वाया दिशो गोपायतो द्यौश्चादित्यश्चानु तिष्ठतो य एवं वेद ॥

सर्वाभिर्दिग्भि कृता व्रात्यस्यानुष्ठातारो भवशर्वपशुपत्युग्ररुद्रमहादेवेशानाः

तस्मै प्राच्या दिशो अन्तर्देशाद्भवमिष्वासमनुष्ठातारमकुर्वन् ॥
भव एनमिष्वासः प्राच्या दिशो अन्तर्देशादनुष्ठाताऽनु तिष्ठति नैनं शर्वो न भवो नेशानः ॥
नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥
तस्मै दक्षिणाया दिशो अन्तर्देशाच्छर्वमिष्वासमनुष्ठातारमकुर्वन् ॥
शर्व एनमिष्वासो दक्षिणाया दिशो अन्तर्देशादनुष्ठाताऽनु तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥
तस्मै प्रतीच्या दिशो अन्तर्देशात्पशुपतिमिष्वासमनुष्ठातारमकुर्वन् ॥
पशुपतिरेनमिष्वासः प्रतीच्या दिशो अन्तर्देशादनुष्ठाताऽनु तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥
तस्मा उदीच्या दिशो अन्तर्देशादुग्रं देवमिष्वासमनुष्ठातारमकुर्वन् ॥
उग्र एनं देव इष्वास उदीच्या दिशो अन्तर्देशादनुष्ठाताऽनु तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥

(१) असं. १५।५।१-१६.

तस्मै ध्रुवाया दिशो अन्तर्देशाद्रुद्रमिष्वासमनुष्ठातारमकुर्वन् ॥
रुद्र एनमिष्वासो ध्रुवाया दिशो अन्तर्देशादनुष्ठाताऽनु तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥
तस्मा ऊर्ध्वाया दिशो अन्तर्देशान्महादेवमिष्वासमनुष्ठातारमकुर्वन् ॥
महादेव एनमिष्वास ऊर्ध्वाया दिशो अन्तर्देशादनुष्ठाताऽनु तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥
तस्मै सर्वेभ्यो अन्तर्देशेभ्य ईशानमिष्वासमनुष्ठातारमकुर्वन् ॥
ईशान एनमिष्वासः सर्वेभ्यो अन्तर्देशेभ्योऽनुष्ठाताऽनु तिष्ठति नैनं शर्वो न भवो नेशानः ॥
नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥

व्रात्यः ध्रुवादिदिक्षु चर., भूम्यग्निसूर्यचन्द्रनक्षत्रौषधिवनस्पतिसत्यवेदविद्यास्थानाग्नित्रयकालादिसर्वभूतसर्वदेवादिभिरनुगत.

स ध्रुवां दिशमनु व्यचलत् ॥
तं भूमिश्चाग्निश्चौषधयश्च वनस्पतयश्च वानस्पत्याश्च वीरुधश्चानुव्यचलन् ॥
भूमेश्च वै सोऽग्नेश्चौषधीनां च वनस्पतीनां च वानस्पत्यानां च वीरुधां च प्रियं धाम भवति य एवं वेद ॥
स ऊर्ध्वां दिशमनु व्यचलत् ॥
तमृतं च सत्यं च सूर्यश्च चन्द्रश्च नक्षत्राणि चानुव्यचलन् ॥
ऋतस्य च वै स सत्यस्य च सूर्यस्य च चन्द्रस्य च नक्षत्राणां च प्रियं धाम भवति य एवं वेद ॥
स उत्तमां दिशमनु व्यचलत् ॥
तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन् ॥
ऋचां च वै स साम्नां च यजुषां च ब्रह्मणश्च प्रियं धाम भवति य एवं वेद ॥

(१) असं. १५।६।१-२६.

स बृहतीं दिशमनु व्यचलत् ॥
तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् ॥
इतिहासस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां च प्रियं धाम भवति य एवं वेद ॥
स परमां दिशमनु व्यचलत् ॥
तमाहवनीयश्च गार्हपत्यश्च दक्षिणाग्निश्च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ॥
आहवनीयस्य च वै स गार्हपत्यस्य च दक्षिणाग्नेश्च यज्ञस्य च यजमानस्य च पशूनां च प्रियं धाम भवति य एवं वेद ॥
सोऽनादिष्टां दिशमनु व्यचलत् ॥
तमृतवश्चाऽऽर्तवाश्च लोकाश्च लौक्याश्च मासाश्चार्धमासाश्चाहोरात्रे चानुव्यचलन् ॥
ऋतूनां च वै स आर्तवानां च लोकानां च लौक्यानां च मासानां चार्धमासानां चाहोरात्रयोश्च प्रियं धाम भवति य एवं वेद ॥
सोऽनावृत्तां दिशमनु व्यचलत् ततो नाऽऽवर्त्स्यन्नमन्यत ॥
तं दितिश्चादितिश्चेडा चेन्द्राणी चानुव्यचलन् ॥
दितेश्च वै सोऽदितेश्चेडायाश्चेन्द्राण्याश्च प्रियं धाम भवति य एवं वेद ॥
स दिशोऽनु व्यचलत् तं विराडनु व्यचलत् सर्वे च देवाः सर्वाश्च देवताः ॥
विराजश्च वै स सर्वेषां च देवानां सर्वासां च देवतानां प्रियं धाम भवति य एवं वेद ॥
स सर्वानन्तर्देशाननु व्यचलत् ॥
तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चानुव्यचलन् ॥
प्रजापतेश्च वै स परमेष्ठिनश्च पितुश्च पितामहस्य च प्रियं धाम भवति य एवं वेद ॥

महिमरूपः व्रात्यः समुद्ररूपेण परिणतः

[1]स महिमा सद्रुर्भूत्वाऽन्तं पृथिव्या अगच्छत् स समुद्रोऽभवत् ॥
तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चाऽऽपश्च श्रद्धा च वर्षं भूत्वाऽनुव्यवर्तयन्त ॥
ऐनमापो गच्छत्यैनं श्रद्धा गच्छत्यैनं वर्षं गच्छति य एवं वेद ॥
तं श्रद्धा च यज्ञश्च लोकश्चान्नं चान्नाद्यं च भूत्वाऽभिपर्यावर्तन्त ॥
ऐनं श्रद्धा गच्छत्यैनं यज्ञो गच्छत्यैनं लोको गच्छत्यैनमन्नं गच्छत्यैनमन्नाद्यं गच्छति य एवं वेद ॥

राजन्यजन्मदः सभासमित्यादिभिरनुसृतो व्रात्यः

[1]सोऽरज्यत ततो राजन्योऽजायत ॥
स विशः सबन्धूनन्नमन्नाद्यमभ्युदतिष्ठत् ॥
विशां च वै स सबन्धूनां चान्नस्य चान्नाद्यस्य च प्रियं धाम भवति य एवं वेद ॥
[2]स विशोऽनु व्यचलत् ॥
तं सभा च समितिश्च सेना च सुरा चानुव्यचलन् ॥
सभायाश्च वै स समितेश्च सेनायाश्च सुरायाश्च प्रियं धाम भवति य एवं वेद ॥

व्रात्यस्यातिथेर्महिमा पूजाविधिस्तत्फलं च

[3]तद्यस्यैवं विद्वान्व्रात्यो राज्ञोऽतिथिर्गृहानागच्छेत् ॥
श्रेयांसमेनमात्मनो मानयेत्तथा क्षत्राय ना वृश्चते तथा राष्ट्राय ना वृश्चते ॥
अतो वै ब्रह्म च क्षत्रं चोदतिष्ठतां ते अब्रूतां कं प्र विशावेति ॥
अतो वै बृहस्पतिमेव ब्रह्म प्र विशत्विन्द्रं क्षत्रं तथा वा इति ॥
अतो वै बृहस्पतिमेव ब्रह्म प्राविशदिन्द्रं क्षत्रम् ॥
इयं वा उ पृथिवी बृहस्पतिर्द्यौरेवेन्द्रः ॥
अयं वा उ अग्निर्ब्रह्मासावादित्यः क्षत्रम् ॥
ऐनं ब्रह्म गच्छति ब्रह्मवर्चसी भवति ॥
यः पृथिवीं बृहस्पतिमग्निं ब्रह्म वेद ॥
ऐनमिन्द्रियं गच्छतीन्द्रियवान् भवति ॥

(१) असं. १५।७।१-५.

(१) असं. १५।८।१-३. (२) असं. १५।९।१-३.
(३) असं. १५।१०।१-११.

य आदित्यं क्षत्रं दिवमिन्द्रं वेद ॥

तद्यस्यैवं विद्वान्व्रात्योऽतिथिर्गृहानागच्छेत् ॥

स्वयमेनमभ्युदेत्य ब्रूयाद्व्रात्य क्वावात्सीर्व्रात्योदकं व्रात्य तर्पयन्तु व्रात्य यथा ते प्रियं तथाऽस्तु व्रात्य यथा ते वशस्तथाऽस्तु व्रात्य यथा ते निकामस्तथाऽस्त्विति ॥

यदेनमाह व्रात्य क्वावात्सीरिति पथ एव तेन देवयानानव रुन्द्धे ॥

यदेनमाह व्रात्योदकमित्यप एव तेनाव रुन्द्धे ॥

यदेनमाह व्रात्य तर्पयन्त्विति प्राणमेव तेन वर्षीयांसं कुरुते ॥

यदेनमाह व्रात्य यथा ते प्रिय तथाऽस्त्विति प्रियमेव तेनाव रुन्द्धे ॥

ऐनं प्रियं गच्छति प्रियः प्रियस्य भवति य एवं वेद ॥

यदेनमाह व्रात्य यथा ते वशस्तथाऽस्त्विति वशमेव तेनाव रुन्द्धे ॥

ऐनं वशो गच्छति वशी वशिनां भवति य एव वेद ॥

यदेनमाह व्रात्य यथा ते निकामस्तथाऽस्त्विति निकाममेव तेनाव रुन्द्धे ॥

ऐनं निकामो गच्छति निकामे निकामस्य भवति य एवं वेद ॥

²तद्यस्यैवं विद्वान् व्रात्य उद्धृतेष्वग्निष्वधिश्रितेऽग्निहोत्रेऽतिथिर्गृहानागच्छेत् ॥

स्वयमेनमभ्युदेत्य ब्रूयाद्व्रात्यातिसृज होष्यामीति ॥

स चातिसृजेज्जुहुयान्न चातिसृजेन्न जुहुयात् ॥

स य एव विदुषा व्रात्येनातिसृष्टो जुहोति ॥

प्र पितृयाणं पन्थां जानाति प्र देवयानम् ॥

न देवेष्वा वृश्चते हुतमस्य भवति ॥

पर्यस्यास्मिंल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ॥

अथ य एवं विदुषा व्रात्येनानतिसृष्टो जुहोति ॥

न पितृयाणं पन्थां जानाति न देवयानम् ॥

आ देवेषु वृश्चते अहुतमस्य भवति ॥

नास्यास्मिंल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनानतिसृष्टो जुहोति ॥

¹तद्यस्यैवं विद्वान्व्रात्य एकां रात्रिमतिथिर्गृहे वसति ॥

ये पृथिव्यां पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥

तद्यस्यैवं विद्वान्व्रात्यो द्वितीयां रात्रिमतिथिर्गृहे वसति ॥

येऽन्तरिक्षे पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥

तद्यस्यैवं विद्वान्व्रात्यस्तृतीयां रात्रिमतिथिर्गृहे वसति ॥

ये दिवि पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥

तद्यस्यैवं विद्वान्व्रात्यश्चतुर्थीं रात्रिमतिथिर्गृहे वसति ॥

ये पुण्यानां पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥

तद्यस्यैवं विद्वान्व्रात्योऽपरिमिता रात्रीरतिथिर्गृहे वसति ॥

य एवापरिमिताः पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥

अथ यस्याव्रात्यो व्रात्यब्रुवो नामबिभ्रत्यतिथिर्गृहानागच्छेत् ॥

कर्षेदेनं न चैनं कर्षेत् ॥

अस्यै देवताया उदक याचामीमां देवतां वासय इमामिमां देवतां परि वेवेष्मीत्येनं परि वेविष्यात् ॥

तस्यामेवास्य तद्देवतायां हुतं भवति य एवं वेद ॥

प्राच्यादिदिक्षु चरन् व्रात्यः तत्तद्दिगनुसारेण मारुतशर्धेन्द्रवरुणसोमविष्णुरुद्रयमबृहस्पतीशानप्रजापतिपरमेष्ठस्वरूपभूतः

²स यत्प्राचीं दिशमनु व्यचलन्मारुतं शर्धो भूत्वाऽनुव्यचलन्मनोऽन्नाद कृत्वा ॥

(१) असं. १५।११।१–११.
(२) असं. १५।१२।१–११.

(१) असं. १५।१३।१–१४.
(२) असं. १५।१४।१–२४.

मनसाऽन्नादेनान्नमत्ति य एवं वेद ॥
स यद्दक्षिणां दिशमनु व्यचलदिन्द्रो भूत्वाऽनुव्यचलद्बलमन्नादं कृत्वा ॥
बलेनान्नादेनान्नमत्ति य एवं वेद ॥
स यत्प्रतीचीं दिशमनु व्यचलद्वरुणो राजा भूत्वाऽनुव्यचलदपोऽन्नादीः कृत्वा ॥
अद्भिरन्नादीभिरन्नमत्ति य एवं वेद ॥
स यदुदीचीं दिशमनु व्यचलत्सोमो राजा भूत्वाऽनुव्यचलत् सप्तर्षिभिर्हुत आहुतिमन्नादीं कृत्वा ॥
आहुत्याऽन्नाद्याऽन्नमत्ति य एवं वेद ॥
स यद्ध्रुवां दिशमनु व्यचलद्विष्णुर्भूत्वाऽनुव्यचलद्विराजमन्नादीं कृत्वा ॥
विराजाऽन्नाद्याऽन्नमत्ति य एवं वेद ॥
स यत्पशूननु व्यचलद्रुद्रो भूत्वाऽनुव्यचलदोषधीरन्नादीः कृत्वा ॥
ओषधीभिरन्नादीभिरन्नमत्ति य एवं वेद ॥
स यत्पितॄननु व्यचलद्यमो राजा भूत्वाऽनुव्यचलत्स्वधाकारमन्नादं कृत्वा ॥
स्वधाकारेणान्नादेनान्नमत्ति य एवं वेद ॥
स यन्मनुष्याननु व्यचलदग्निर्भूत्वाऽनुव्यचलत्स्वाहाकारमन्नादं कृत्वा ॥
स्वाहाकारेणान्नादेनान्नमत्ति य एवं वेद ॥
स यदूर्ध्वां दिशमनु व्यचलद्बृहस्पतिर्भूत्वाऽनुव्यचलद्वषट्कारमन्नादं कृत्वा ॥
वषट्कारेणान्नादेनान्नमत्ति य एवं वेद ॥
स यद्देवाननु व्यचलदीशानो भूत्वाऽनुव्यचलन्मन्युमन्नादं कृत्वा ॥
मन्युनाऽन्नादेनान्नमत्ति य एवं वेद ॥
स यत्प्रजा अनु व्यचलत्प्रजापतिर्भूत्वाऽनुव्यचलत्प्राणमन्नादं कृत्वा ॥
प्राणेनान्नादेनान्नमत्ति य एवं वेद ॥
स यत्सर्वानन्तर्देशाननु व्यचलत्परमेष्ठी भूत्वाऽनुव्यचलद्ब्रह्मान्नादं कृत्वा ॥
ब्रह्मणाऽन्नादेनान्नमत्ति य एवं वेद ॥

विश्वात्मको व्रात्य.

[1] तस्य व्रात्यस्य ॥
सप्त प्राणाः सप्तापानाः सप्त व्यानाः ॥
तस्य व्रात्यस्य । योऽस्य प्रथमः प्राण ऊर्ध्वो नामायं सो अग्निः ॥
तस्य व्रात्यस्य । योऽस्य द्वितीयः प्राणः प्रौढो नामासौ स आदित्यः ॥
तस्य व्रात्यस्य । योऽस्य तृतीयः प्राणोऽभ्यूढो नामासौ स चन्द्रमाः ॥
तस्य व्रात्यस्य । योऽस्य चतुर्थः प्राणो विभूर्नामायं स पवमानः ॥
तस्य व्रात्यस्य । योऽस्य पञ्चमः प्राणो योनिर्नाम ता इमा आपः ॥
तस्य व्रात्यस्य । योऽस्य षष्ठः प्राणः प्रियो नाम त इमे पशवः ॥
तस्य व्रात्यस्य । योऽस्य सप्तमः प्राणोऽपरिमितो नाम ता इमाः प्रजाः ॥
[2] तस्य व्रात्यस्य । योऽस्य प्रथमोऽपानः सा पौर्णमासी ॥
तस्य व्रात्यस्य । योऽस्य द्वितीयोऽपानः साऽष्टका ॥
तस्य व्रात्यस्य । योऽस्य तृतीयोऽपानः साऽमावास्या ॥
तस्य व्रात्यस्य । योऽस्य चतुर्थोऽपानः सा श्रद्धा ॥
तस्य व्रात्यस्य । योऽस्य पञ्चमोऽपानः सा दीक्षा ॥
तस्य व्रात्यस्य । योऽस्य षष्ठोऽपानः स यज्ञः ॥
तस्य व्रात्यस्य । योऽस्य सप्तमोऽपानस्ता इमा दक्षिणाः ॥
[3] तस्य व्रात्यस्य । योऽस्य प्रथमो व्यानः सेयं भूमिः ॥
तस्य व्रात्यस्य । योऽस्य द्वितीयो व्यानस्तदन्तरिक्षम् ॥
तस्य व्रात्यस्य । योऽस्य तृतीयो व्यानः सा द्यौः ॥
तस्य व्रात्यस्य । योऽस्य चतुर्थो व्यानस्तानि नक्षत्राणि ॥

(१) अस. १५।१५।१-९. (२) अस. १५।१६।१-७. (३) अस. १५।१७।१-१०.

तस्य व्रात्यस्य । योऽस्य पञ्चमो व्यानस्त ऋतवः ॥
तस्य व्रात्यस्य । योऽस्य षष्ठो व्यानस्त आर्तवाः ॥
तस्य व्रात्यस्य । योऽस्य सप्तमो व्यानः स संवत्सरः ॥
तस्य व्रात्यस्य । समानमर्थं परि यन्ति देवाः संवत्सरं वा एतदृतवोऽनुपरियन्ति व्रात्यं च ॥
तस्य व्रात्यस्य । यदादित्यमभिसंविशन्त्यमावास्यां चैव तत्पौर्णमासीं च ॥
तस्य व्रात्यस्य । एकं तदेषाममृतत्वमित्याहुतिरेव ॥
[1]तस्य व्रात्यस्य ॥
यदस्य दक्षिणमक्ष्यसौ स आदित्यो यदस्य सव्यमक्ष्यसौ स चन्द्रमाः ॥
योऽस्य दक्षिणः कर्णोऽयं सो अग्निर्योऽस्य सव्यः कर्णोऽयं स पवमानः ॥
अहोरात्रे नासिके दितिश्चादितिश्च शीर्षकपाले संवत्सरः शिरः ॥
अह्ना प्रत्यङ् व्रात्यो रात्र्या प्राङ् नमो व्रात्याय ॥

यज्ञः देवैरप्यनुष्ठितः प्रथमो धर्मः, देवानामधिपतिः, परमव्योमप्रापकः.

* [2]यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥
[3]यज्ञो बभूव स आ बभूव स प्र जज्ञे स उ वावृधे पुनः ।
स देवानामधिपतिर्बभूव सो अस्मासु द्रविणमा दधातु ॥

* व्याख्यान २२९,२३४ पृष्ठयोर्द्रष्टव्यम् ।

(१) असं. १५।१८।१-५.

(२) असं. ७।५।१. अन्यस्थलादिनिर्देशः २२८ पृष्ठे द्रष्टव्यः ।

(३) असं. ७।५।२; तैसं. १।६।६।३, ३।२।७।२ स उ वावृधे पुनः ( स वावृधे ) सो ....दधातु ( सो अस्माँ अधिपतीन्करोतु वयँ स्याम पतयो रयीणाम् ).

यज्ञः यज्ञरूपः प्रजापतिः, प्रसिद्धो वा यज्ञः स बभूव विश्वात्मना व्याप्तो निर्वृत्तो वा अभूत् । स आ बभूव सर्वतः कारणात्मना अभवत् । यद्वा, स निर्वृत्तो यज्ञः आवृत्य भवतु पुनःपुनर्भवतु । स प्र जज्ञे । जानातेर्जायतेर्वा रूपम् । प्रज्ञातः प्रसिद्धो यज्ञः । प्रकर्षेण जातः, फलोन्मुखो जात इत्यर्थः । उशब्दोऽवधारणे । स एव पुनर्वावृधे, अद्यापि जगदात्मना पुनःपुनर्वर्धते वर्धता वा यज्ञः । स देवानामिन्द्रादीनां अधिपतिः अधिको मुख्यः स्वामी बभूव । यज्ञो वा हेतुत्वाद्देवानामधिकं पालयिताऽभूत् । स यज्ञः अस्मासु हविषा परिचरत्सु द्रविण धन अभिमत फल आ दधातु स्थापयतु ।

असा.

[1]यद्देवा देवान् हविषाऽयजन्तामर्त्यान् मनसाऽमर्त्येन ।
मदेम तत्र परमे व्योमन्पश्येम तदुदितौ सूर्यस्य ॥

देवाः कर्मणा देवत्व प्राप्ताः यत्फलं, उद्दिश्येति क्रियाध्याहारः । अमर्त्यान् अमरणधर्माणो देवान् इन्द्रादीन् अमर्त्येन अमर्त्यसबन्धिना, देवविषयेणेत्यर्थः । अविनाशिना वा । भोगायतनेष्वागमापायिष्वपि मनसोऽवस्थानान्नित्यत्वम् । तादृशेन चिरकालावस्थायिना मनसा हविषा चरुपुरोडाशादिना अयजन्त इष्टवन्तः इति स्वेषामेव परोक्षेणाभिधानम् । 'विद्वान् यजेत' इति 'विद्वान् याजयेत' इति वचनात् अनुष्ठेयार्थप्रकाशकमन्त्रार्थयष्टव्यदेवताकर्तृज्ञानरूप वैदुष्य कर्मस्वपेक्षित, तच्च पूर्वापरानुसधानसाधनभूतेन मनसा विना न सभवतीति मनसेत्युक्तम् । 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' (ऐब्रा. ११।८।१) इति हि श्रुतिः । वषट्कारवचनमुपलक्षणम् । तत्र तस्मिन् परमे उत्कृष्टे केवलपुण्यफलभोगस्थाने व्योमन् व्योमनि द्युलोके मदेम वयं यजमाना हृष्यास्म । अपि च सूर्यस्योदितौ । द्युलोके हि नित्योदितः सूर्यः । सूर्यप्रकाशे यावत्सूर्यप्रकाश तत् फल पश्येम । पश्यतिरत्राऽऽलोचनवाची । भोग्यत्वेन जानीमः । चिरकाल पुण्यफलमनुभवेमेत्यर्थः । एव द्रव्ययज्ञस्वरूपतत्फलतद्भोगस्थान-

(१) असं ७।५।३-५.

परतया व्याख्यातः । ज्ञानयज्ञपरत्वेनापि अय मन्त्रो व्याख्यायते— आत्मविषयविद्यया दीव्यन्ति क्रीडन्तीति देवाः विविदिषवः । यत् यस्मिन्ब्रह्माग्नौ देवान् । देवशब्देन देवनसाधनभूता इन्द्रियवृत्तयो विवक्ष्यन्ते । तासां मनसश्च विषयेषु सातत्येन प्रवर्तनादमर्त्यत्वाभिधानम्। अथ वा, तत्त्वविद्योदयपर्यन्तामिन्द्रियवासनानां मनसश्चावस्थानादविनश्वरत्वम् । मनसेति सहार्थे तृतीया । अक्षवृत्त्युपरमेऽपि मनसो व्यापारसद्भावात्पृथगुपादानम् । मनःसहिताः अक्षवृत्तीः, हविषा । भावपरोऽय निर्देशः । हविष्ट्वेन, सकल्प्येति शेषः । यद्वा, हविष्ट्वसकल्पे मनसः करणत्वात्तृतीया । अमर्त्येन । मर्त्यशब्देन क्षयिष्णवो बाह्यविषया उच्यन्ते । विनाशिविषयानासक्तेनेत्यर्थः । 'मन एव मनुष्याणा कारण बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्तेर्निर्विषयं स्मृतम् ॥' (मैउ. ४।११) इति श्रुतेः । तादृशेन विषयानासङ्गिना मनसा इन्द्रियवृत्तीर्हविष्ट्वेन संकल्प्य अयजन्त । तथाविधा वयं तत्र तस्मिन् परमे । तस्य सर्वजगदधिष्ठानत्वात् तस्य वा अधिष्ठानान्तराभावात्परमत्वम् । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' (छाउ. ७।२४।१) इति श्रुतेः स्वमहिमप्रतिष्ठे व्योमनि व्योमवदसङ्गे सर्वगते चिदानन्दलक्षणे ब्रह्मणि विषये मदेम तुष्यास्म । न केवल संतोषः, अपि तु सूर्यस्य सुष्ठुप्रेरकस्य परमात्मनः उदितौ परिपूर्णप्रकाशसाक्षात्कारेण अविद्याऽस्तमये सति तत् प्रकाशात्मक तत्त्वं पश्येम स्वात्मतया अनुभवेम ।

असा.

पुरुषहविर्यज्ञापेक्षया श्वगवादियज्ञापेक्षया वा विद्व्यो मानसो वा यज्ञः श्रेयान्

**यत्पुरुषेण हविषा यज्ञं देवा अतन्वत ।**
**अस्ति नु तस्मादोजीयो यद्विहव्येनेजिरे ॥**

सर्वातिशायिसर्वात्मकहिरण्यगर्भरूपफलप्रापकात् पुरुषमेधाख्यमहाक्रतोरपि सर्वात्मकब्रह्मस्वरूपावाप्तिफलप्रापको ज्ञानयज्ञः श्रेयान् इत्यनयाऽभिधीयते । देवाः दीव्यन्ति इति देवा यजमानाः पुरुषेण अश्वरूपेण हविषा, 'अथ स पुरुषोऽश्व आसीत्' इति वाजसनेयश्रुतेः । अत्र साक्षात्पुरुषस्यानालम्भनात् पर्यग्निकरणानन्तरमुत्सर्गविधानादश्वमेधातिदिष्टोऽश्वः पशुः पुरुषशब्देन विवक्ष्यते। तेन हविषा यज्ञ पुरुषमेधाख्य अतन्वत विस्तारितवन्तः। 'ब्रह्मणे ब्राह्मणमालभते' (तैब्रा. ३।४।१।१) इत्यादिना समाम्नाताः ब्राह्मणक्षत्रियवैश्यशूद्रादिरूपा बहवः पुरुषपशवो विद्यन्ते इति यज्ञविस्तारोक्तिः । एव पुरुषहविष्कयज्ञः इति यदस्ति तस्मात् ओजीयः अतिशयेनौजस्वि सारवदस्ति नु विद्यते खलु । सामान्यनिर्देशेन यज्ञस्वरूपापेक्षया वा नपुसकत्वम् । ओजीयोऽस्तीति प्रतिज्ञात तद्दर्शयति—विहव्येन, हव्य होतव्यहविः, विगतहेविष्केण ज्ञानयज्ञेन ईजिरे इष्टवन्तः स्वात्मान परमात्माभेदेन साक्षात्कृतवन्त इति यत् तदोजीयः इति । द्रव्ययज्ञज्ञानयज्ञयोरुभयोः सार्वात्म्यलक्षणफलसाम्येऽपि पुरुषमेधफलस्य कर्मजन्यत्वेन विनाशित्व, ज्ञानयज्ञफल तु न तथेति तस्मादोजीयः इत्युक्तम् । भगवताऽप्युक्त—'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परतप' (भ. गी. ४।३३) इति ।

असा.

**मुग्धा देवा उत शुनाऽयजन्तोत गोरङ्गैः पुरुधाऽयजन्त ।**
**य इमं यज्ञं मनसा चिकेत प्र णो वोचस्तमिहेह ब्रवः ॥**

एव कर्मयज्ञात् ज्ञानयज्ञस्योत्कर्ष श्रुत्वा कर्मयज्ञं निन्दन्नविनाशिफलकामस्तटस्थो ब्रूते—मुग्धाः कार्याकार्यविवेकरहिताः देवा यजमानाः । उतशब्दोऽप्यर्थे । शुनाऽपि अयजन्त । यज्ञो हि पशुसाधनकः । तत्र अत्यन्तगर्हितस्यापि शुनः पशुत्वेन निर्देशात् कर्मयज्ञस्य निन्दा दर्शिता । अखाद्यानां परमावधिः श्वा । तथा । उतशब्दोऽप्यर्थे । गोः गोरूपपशोरङ्गैः अवयवैरपि । 'हृदयस्याग्रेऽवद्यति' (तैस. ६।३।१०।४) इत्यङ्गावदानश्रवणादङ्गैरित्युक्तम् । अवध्यानां परमावधिर्गौः । पुरुधा बहुधा अयजन्त । एकदा करणे प्रमादाज्ञानादिकृतमिति सभावना भवति । अतस्तन्निरासाय पुरुधेत्युक्तम् । सर्वदा शुनकगवादिरूपैः पशुभिर्यज्ञ कुर्वन्तीत्यर्थः । एवं पूर्वार्धेन कर्मयज्ञं निन्दित्वा उत्तरार्धेन ज्ञानयज्ञप्राप्तये तदभिज्ञं प्रार्थयते— यो विद्वानिमं यज्ञ यष्टव्यं परमात्मान मनसा चिकेत जानाति स, तं तथाविधं गुरुं नः अस्माक प्रवोचः प्रकर्षेण ब्रूहि । तेन प्रदर्शित गुरुं ब्रूते—

इहेह इहैव इदानीमेव ब्रवः परमात्मस्वरूपं ब्रूहि । असा.

ऋत्विग्यज्ञतत्साधनादि सर्वं ब्रह्मरूपं, यज्ञतत्त्वं च ब्रह्म

**[1]ब्रह्म होता ब्रह्म यज्ञा ब्रह्मणा स्वरवो मिताः ।**
**अध्वर्युर्ब्रह्मणो जातो ब्रह्मणोऽन्तर्हितं हविः ॥**

ब्रह्म जगदुपादानकारणं तत्त्वम् । तदेव यज्ञाङ्गभूतहौत्रकर्तृत्वोपाधिना होता इत्युच्यते । कृत्स्नस्य कार्यकारणप्रपञ्चस्य ब्रह्मात्मकत्वात्, 'ब्रह्मैवेदं सर्वम्' (मुउ. २।२।११) 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तैउ. २।६) इति स्वसृष्टसकलपदार्थानुप्रवेशश्रुतेश्च । 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी' (श्वेउ. ४।३) इति श्रुतेः ब्रह्मव्यतिरिक्तस्य कस्यचिदभावाद्ब्रह्मणो होत्रादिरूपत्वम् । तथा यज्ञाः ज्योतिष्टोमादयोऽपि ब्रह्मैव । 'तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च' (मुउ. २।१।६) इति मुण्डकश्रुतेः ब्रह्मैव यज्ञा इत्युच्यन्ते । एवं ब्रह्मणैव स्वरगामिता स्वराणां क्रुष्टादीनां सप्तानामुदात्तादीनां च चतुर्णां गामिता यज्ञानुप्रवेष्टृता । उद्गातृत्वादिभाव इत्यर्थः । यद्वा, स्वर्गं गन्तृता । ज्योतिष्टोमाद्यनुष्ठातृभ्य इति शेषः । अध्वर्युरपि ब्रह्मण एव जातः उत्पन्नः । प्रागुक्तनीत्या ब्रह्मणः सकाशादुत्पत्तिरवगन्तव्या । तथा हविः यज्ञसाधनभूतं चरुपुरोडाशाऽऽज्यसोमादिलक्षणं ब्रह्मण्यन्तर्हितं इन्द्राद्युद्देशेन दत्तमपि ब्रह्मण्येवावतिष्ठते । 'ब्रह्मार्पणं ब्रह्म हविः' (भ. गी. ४।२४) इत्यादिस्मृतेः, 'ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचः । ब्रह्म यज्ञानां हविषामाज्यस्य' (तैब्रा. ३।७।११।१) इति मन्त्रवर्णात् ब्रह्मणि हविषामवस्थानम् । अथ वा, अत्र ब्रह्मशब्देन 'अथर्वाङ्गिरोविदं ब्रह्माणं वृणीत' (गोब्रा. २।२४) इतिश्रुतेः ब्रह्माख्य ऋत्विग्वाऽभिमतः । तस्य सर्वानुज्ञातृत्वात् होत्रादिरूपत्वेन स्तुतिः ।

असा.

**[2]ब्रह्म स्रुचो घृतवतीर्ब्रह्मणा वेदिरुद्धिता ।**
**ब्रह्म यज्ञस्य तत्त्वं च ऋत्विजो ये हविष्कृतः ।**
**शमिताय स्वाहा ॥**

स्रुचः होमसाधनभूताः जुहूपभृदादयोऽपि ब्रह्म । ताश्च घृतवतीः घृतवत्यः होमार्थेन घृतेन पूर्णाः । ब्रह्मणैव वेदिः हविरासादनसाधना ब्रह्मणैवोद्धृता उद्धननखननर्निर्माणैः संपादिता । यज्ञस्य ज्योतिष्टोमाद्यात्मकस्य यागस्य तत्त्वं पारमार्थिकं रूपं च ब्रह्मैव । अत्र तत्त्वं चेति विशेषितत्वादत्रोक्तानां होत्रादीनां पारमार्थिकं रूपं ब्रह्मैव, तत्रैव परिकल्पितत्वात्कृत्स्नप्रपञ्चस्य । यथा मृदुपादानभूताः शरावादयो मृदेव, एवं ब्रह्मोपादानभूतास्तत्त्वतो ब्रह्मैवेत्यभिप्रायः । ये च हविष्कृतः हविष्कर्तारः ऋत्विजः उक्तव्यतिरिक्ताः प्रतिप्रस्थात्राद्याः तेऽपि ब्रह्मैव । समिताय उक्तप्रकारेण होत्राद्यात्मना समिताय । अभेदमापन्नाय ब्रह्मणे इत्यर्थः । तस्मै स्वाहा स्वाहुतमस्तु । अथ वा, अयं उक्तब्रह्महोतेत्यादिमन्त्रद्वयशेषो द्रष्टव्यः । असा.

आध्यात्मिको यज्ञः

**[1]चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्नित् । वाचस्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः ॥**

आदौ सिसृक्षुः प्रजापतिः सृष्ट्यर्थं केनचिद्यागेन आध्यात्मिकेनेष्टवान् । तद्यागवर्तिनः स्रुगादयः एतेषु मन्त्रेषु प्रतिपाद्यन्ते । अत्र चित्तिचित्तशब्दाभ्यां निर्विकल्पकसविकल्पकभेदजनकौ अन्तःकरणवृत्तिभेदौ विवक्षितौ । वाक् प्रसिद्धा । आधीतं उच्चार्यमाणम् । केतविज्ञातशब्दाभ्यां निर्विकल्पकसविकल्पकज्ञानविषयौ अभिधीयेते । वाक्पतिशब्देन वाचः प्रवर्तकः कण्ठताल्वादिस्थानेषु संयुज्यमानो वायुरुच्यते । मनःप्राणौ प्रसिद्धौ । सामशब्देन अध्येतुर्वर्णोच्चारणशक्तिरुच्यते । एवं चित्त्यादयो दश शरीरगताः पदार्थविशेषाः स्रुगादयो दश पदार्था होमनिष्पादकाः । अग्निशब्दद्वयेन च आहवनीयगार्हपत्यौ विवक्षितौ । उपवक्तृशब्देन अनुवचनकर्तुर्होतुः पुरा प्रैषवक्ता मैत्रावरुणो विवक्षितः । यद्वा,

(१) ऋसं. ११।४२।१.

(२) ऋसं. ११।४२।२ अन्यस्थलादिनिर्देशः परमात्मप्रकरणे २५८ पृष्ठे द्रष्टव्यः ।

(१) काठसं. ९।८ (३५), मैसं. ११९।१ मग्नित् (मग्नीत्); तैआ. ३।१।१ मग्नित् (मग्निः) वाचस्प (वाक्प).

प्रोक्षणादिष्वनुज्ञायां पृष्टायां ब्रह्मा समीपे स्थितः 'ओं प्रोक्ष' इत्यादिना तदनुज्ञां वक्ति, तस्मादयमुपवक्ता। चित्त्यादयः शरीरगतपदार्थाः स्रुगादिरूपा इति वाक्यार्थः। अस्मिन्मन्त्रे स्रुगादीना होमसाधनाना दशानामभिहितत्वात् अय मन्त्रो दशहोतेत्युच्यते।

तैआसा. ३।१।१

यजमानो राजा वा ब्रह्मसवितृमित्रेन्द्रवरुण-रूप

ब्रह्मॉ३स्त्वं ब्रह्मासि। सविताऽसि सत्यसवः। ब्रह्मॉ३स्त्वं ब्रह्मासि। मित्रोऽसि सुशेवः। ब्रह्मॉ३स्त्वं ब्रह्मासि। इन्द्रोऽसि सत्यौजाः। ब्रह्मॉ३स्त्वं ब्रह्मासि। वरुणोऽसि विश्वौजाः॥

सोमस्य त्वा द्युम्नेनाग्नेस्तेजसेन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाऽभिषिञ्चामीति। एतैरेवैनमिन्द्रियैरेताभिर्देवताभिरभिषिञ्चति॥

प्रजानां च मित्रोऽसि। इतीममुपावहरति। मित्रस्य ह्येतद्रूपम्। वरुणोऽसि। इतीमम्। वरुणस्य ह्येतद्रूपम्। सदसि। समह॒ँ विश्वैर्देवैः। इति हस्ता आमिक्षामभ्यवहरति। सद्वा आमिक्षा। सदेवाभ्यवहरति॥

ब्रह्मंस्त्वं ब्रह्मासि सविताऽसि सत्यप्रसवो वरुणोऽसि सत्यौजा इन्द्रोऽसि विशौजा रुद्रोऽसि सुशेवः॥

यजमानः पञ्चवारं ब्रह्मन्निति मन्त्रेण ब्रह्माणमामन्त्रयते। एवमामन्त्रितो ब्रह्मा त्व ब्रह्मासि इत्यादिभिः... यजमानं प्रत्याह—त्व ब्रह्मासि महान् भवसि सविता प्रेरकश्चासि। सत्यप्रसवः सत्यः प्रसवः अनुज्ञा यस्य। द्वितीय प्रत्याह—त्व ब्रह्मासि वरुणोऽनिष्टनिवारकोऽसि। सत्यौजाः सत्य ओजो यस्य, अमोघवीर्योऽसि, सत्ये वा ओजो यस्य। तृतीयं प्रत्याह—त्वं ब्रह्मासि इन्द्रोऽसि ऐश्वर्यवानसि। विशौजाः विक्षु प्रजासु ओजस्तेजो यस्य। विडोजा इति प्राप्ते विशौजा इति छान्दसम्। चतुर्थं प्रत्याह—त्व ब्रह्मासि रुद्रोऽसि हे राजन्, त्व रुद्ररूपोऽसि, शत्रूणा रोदनाद्द्रावणाच्च। सुशेवः। शेव इति सुखनाम। शोभन शेवः सुखं यस्मात्, शोभनं सुखयिता।

शुम.

ऋत्विक् यजमानो वा आत्मा सर्वव्यापी

उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम त इन्दोरिन्द्रियावतः पत्नीवतो ग्रहाँ२ ऋध्यासम्। अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताऽभूत्। अहं सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यत्॥

हे देव दीप्यमान हे सोम, त्व उपयामेन पात्रेण गृहीतोऽसि, अतः ते तव सबन्धिनोऽन्यान् ग्रहान् उपांशुप्रभृतीन् अहमृध्यास समर्धयेयम्। किंभूतस्य ते बृहस्पतिसुतस्य, बृहतो महतो यज्ञकर्मणः पतिः बृहस्पतिः यजमानः तेन सुतस्य अभिषुतस्य। यद्वा, बृहस्पतयो ब्राह्मणा ऋत्विजः, तैः अभिषुतस्य। तथा इन्दोः, 'उन्दी क्लेदे' उनत्तीति इन्दुः, तस्य क्लेदनरूपस्य रसरूपस्येत्यर्थः। तथा इन्द्रियावतः, इन्द्रियं वीर्यमस्यास्तीतीन्द्रियवान्, तस्य। संहितायां दीर्घः। तथा पत्नीवतः पत्नीसयुक्तस्य। अत्र मन्त्रद्रष्टा स्वस्य सर्वगतपरमात्मरूपत्वमभिप्रेत्य वदति—अहं परमात्मरूपः सन् परस्तात् उपरि द्युलोकादौ, तथा अहमवस्तात् अधस्तनभूलोकादौ च तिष्ठामीति शेषः। यदन्तरिक्षं मध्यवर्तिलोकरूपमस्ति, तदु तदेव मे देहधारिणो मम पिता अभूत् पितृवत् पालक भवति। अहं परमात्मरूपः सन् उभयतः उपरिष्टादधस्ताच्च स्थित्वा सूर्यं ददर्श पश्यामि। देवानामिन्द्रादीना यत् परमं गुहा अत्यन्तं गोप्ये हृदयेऽस्ति, तदेवाहमस्मि।

शुम.

यज्ञ एव प्रजापतिः

प्रजापतिर्वै यज्ञस्तस्मिन्सर्वे कामाः सर्वममृतत्वम्॥

पुरुष एव यज्ञ.

पुरुषो वै यज्ञः। तस्य शिर एव हविर्धाने। मुखमाहवनीयः। उदरं सदः। अन्नमुक्थानि। बाहू मार्जालीयश्चाऽऽग्नीध्रीयश्च। या इमा अन्त-

---

(१) मैसं. २।६।१२ (३९). (२) मैस. ४।४।५. (३) मैसं. ४।४।६. (४) शुसं. १०।२८.

(१) शुस ८।९, शब्रा. ४।४।२।१४.
(२) शाब्रा. १३।१.
(३) शाब्रा. १७।७, गोब्रा. २।५।४ (पुरुषो वै यज्ञ.। तस्य शिर एव हविर्धानम्। मुखमाहवनीयः। उदरं

र्देवतास्ते अन्तःसदसं धिष्ण्याः । प्रतिष्ठा गार्हपत्यव्रतश्रवणाविति । अथापरम् । तस्य मन एव ब्रह्मा । प्राण उद्गाता । अपानः प्रस्तोता । व्यानः प्रतिहर्ता । वाग्घोता । चक्षुरध्वर्युः । प्रजापतिः सदस्यः । आत्मा यजमानः । अङ्गानि होत्राशंसिनः । तद्यदध्वर्युः स्तोत्रमुपाकरोति चक्षुरेव तत्प्राणैः संदधाति । अथो अपानमेव तन्मनसा संतनोति । अथ यत्प्रस्तोता ब्रह्माणमामन्त्रयते ब्रह्मन्स्तोष्यामः प्रशास्तरिति । मनो वा अग्रणीर्भवति एषां प्राणानाम् । मनसा प्रसूताः स्तोमेन स्तुयामेति । अथो अपानमेव तन्मनसा संतनोति । अथ यद्ब्रह्मा स्तोत्रमनुमन्यते मन एव तत्प्राणैः संदधाति । अथो अपानमेव तन्मनसा संतनोति । अथ यत्प्रस्तोता प्रस्तौत्यपानमेव तत्प्राणे दधाति । अथ यदुद्गातोद्गाति प्राणमेव तद्व्याने दधाति । अथ यत्प्रतिहर्ता प्रतिहरति व्यानमेव तत्प्राणे दधाति । एवमेवैताः सर्वा देवताः प्राण एव प्रतिष्ठिताः । अथ यद्धोता साम्ना शस्त्रमुपसंतनोति । वाग्वै होता । वाचमेव तत्प्राणैः संदधाति । अथो अपानमेव तन्मनसा संतनोति । अथ यद्धोत्राशंसिनः सामसंततिं कुर्वन्त्यङ्गान्येव तत्प्राणैः संदधति । अथ यद्यजमानः स्तोत्रमुपगाति । प्राणा वा उद्गातारः । प्राणानेव तदात्मन्धत्ते । तस्मान्नैनं बहिर्वेद्यभ्यस्तमीयात् । नाभ्युदियात् । नाभ्युपाकुर्यात् । नाभ्याश्रावयेत् । नाभिवषट्कुर्यात् । नाधिष्ण्ये प्रतपेत । नेत्प्राणेभ्य आत्मानमपादधानीति ॥

सद. । अन्तरुक्थानि । बाहू मार्जालीयश्चाग्नीध्रीयश्च । या इमा देवतास्ते अन्तःसदसं धिष्ण्याः । प्रतिष्ठे गार्हपत्यव्रतश्रवणाविति । अथापरम् । तस्य मन एव ब्रह्मा । प्राण उद्गाता । अपानः प्रस्तोता । व्यान प्रतिहर्ता । वाग्घोता । चक्षुरध्वर्यु. । प्रजापति· सदस्यः । अङ्गानि होत्राशंसिनः । आत्मा यजमानः । तद्यदध्वर्यु. स्तोत्रमुपाकरोति सोम पवत इति । चक्षुरेव तत्प्राणै. संदधाति । अथ यत्प्रस्तोता ब्रह्माणमामन्त्रयते ब्रह्मन् स्तोष्यामः प्रशास्तरिति । मनोऽग्रणीर्भवत्येतेषां प्राणानाम् । मनसा हि प्रसूताः स्तोमेन स्तुयामेति । प्राणानेव तन्मनसा संदधाति । अथ यद्ब्रह्मा स्तुतेत्युच्चैरनुजानाति । मनो वै ब्रह्मा । मन एव तत्प्राणै. संदधाति । अथ यत्प्रस्तोता प्रस्तौति । अपानमेव तत्प्राणैः संदधाति । अथ यत्प्रतिहर्ता प्रतिहरति । व्यानमेव तदपानैः संदधाति । अथ यदुद्गातोद्गायति । समानमेव तत्प्राणै. संदधाति । अथ यद्धोता साम्ना शस्त्रमुपसंतनोति । वाग्वै होता । वाचमेव तत्प्राणैः संदधाति । अथ यत्सदस्यो ब्रह्माणमुपासीदति । प्रजापतिर्वै सदस्यः । प्रजापतिमेवाऽऽप्नोति । अथ यद्धोत्राशंसिनः सामसंततिं कुर्वन्ति । अङ्गानि वै होत्राशंसिनः । अङ्गान्येवास्य तत्प्राणैः संदधाति । अथ यद्यजमानः स्तोत्रमुपासीदति । आत्मा वै यजमानः । आत्मानमेवास्य तत्कल्पयति । "तस्मान्नैनं बहिर्वेद्यभ्याश्रावयेयुः । नाभ्यस्तमियात् । नाधिष्ण्ये प्रतपेत् । नेत्प्राणेभ्य आत्मानमन्तरगादिति । ).

विश्वसृजा आध्यात्मिकाधिदैवतशक्तिसंवलितो यज्ञ, यत्र ब्रह्म प्रादुर्भवति

[1] पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः । पञ्चपञ्चाशतः पञ्चदशाः । पञ्चपञ्चाशतः सप्तदशाः । पञ्चपञ्चाशत एकविंशाः । विश्वसृजां सहस्रसंवत्सरम् ॥

अथ विश्वाधिक्यसाधन विश्वसृजामयनाख्यं सहस्रसंवत्सरं सत्रमाह—पञ्चसंख्याकाः पञ्चाशतः सपञ्चाशद्द्विशतसंवत्सरास्त्रिवृत्स्तोमका भवेयुः । एवं पञ्चदशादिष्वपि द्रष्टव्यम् । मिलित्वैतद्विश्वसृजां देवानां सहस्रसंवत्सरं सत्रम् । ताभा.

[2] एतेन वै विश्वसृज इदं विश्वमसृजन्त । यद्विश्वमसृजन्त तस्माद्विश्वसृजः ॥

अथ अस्याधिकारिसिद्धये विश्वसृक्सबन्ध दर्शयति—पूर्वं सृष्ट्यादौ सृष्टिकामा देवाः एतत्सत्रमनुष्ठाय सत्यसंकल्पाः सन्तः इदं विश्वमसृजन्त । एतेषां विश्वसृज इति सज्ञाऽप्येतन्निमित्ता ।

ताभा.

[3] विश्वमेनाननु प्रजायते य एतदुपयन्ति ॥

इदानींतनानामप्येतत्सत्रयाजिना फल दर्शयति—एतदुपेयुषः एनान् विश्व जगत् अनु प्रजायते एतदनुष्ठातृभ्यो हीनमुपक्षीणं जायते । विश्वमपि । एते विश्वस्य स्वामिनो भवन्तीत्यर्थः । 'हीने' (पा. सू. १।४।८६)

(१) ताब्रा २५।१८।१, तैब्रा ३।१२।९।८.
(२) ताब्रा. २५।१८।२; तैब्रा. ३।१२।९।८.
(३) ताब्रा. २५।१८।३.

इत्यनोः कर्मप्रवचनीयत्वम्। अत एनानिति द्वितीया। तासा.

[1]तपो गृहपतिः। ब्रह्म ब्रह्मा। इरा पत्नी। अमृतमुद्गाता। भूतं प्रस्तोता। भविष्यत्प्रतिहर्ता। ऋतव उपगातारः। आर्तवाः सदस्याः। सत्यं होता। ऋतं मैत्रावरुणः। ओजो ब्राह्मणाच्छंसी। त्विषिश्चापचितिश्च नेष्टापोतारौ। यशोऽच्छावाकः। अग्निरेवाग्नीत्। भगो ग्रावस्तुत्। ऊर्गुन्नेता। वाक्सुब्रह्मण्यः। प्राणोऽध्वर्युः। अपानः प्रतिप्रस्थाता। दिष्टिर्विशास्ता। बलं ध्रुवगोपम्। आशा हविष्येषी। अहोरात्राविध्मवाहौ। मृत्युः शमिता। एते दीक्षन्ते॥

एतेन वै विश्वसृज इत्युक्तम्। के ते विश्वसृजः, कथमेतदुपायन्निति तदुभय दर्शयति—तपःप्रभृतिषु याः प्रसिद्धा देवताः तास्तयैव गृह्यन्ते। अप्रसिद्धास्तु तदभिमानिन्यो देवताः परिग्राह्याः। एतासा विभज्य सत्रे विनियोगोऽस्माभिस्तैत्तिरीयब्राह्मणे 'ऋत्नां प्राची' (तैब्रा. ३।१२।९।१) इत्यस्मिन्ननुवाके प्रपञ्चितः। आर्तवाः तदनुसंबन्धिनः शीतोष्णवर्षाभिमानिनः इत्यर्थः। दिष्टिः ब्रह्मण आज्ञा। शिष्ट निगदसिद्धम्। तासा.

[2]तदेष श्लोकः। विश्वसृजः प्रथमे सत्रमासत सहस्रसमं प्रसुतेन यन्तः। ते ह जज्ञे भुवनस्य गोपा हिरण्मयः शकुनो ब्रह्म नामेति॥

उक्तसर्वाधिक्यफलसाधनत्वसमर्थनाय पूर्व विश्वसृष्ट्यर्थं सत्रमुपेयुषा देवानां स्वयभूर्ब्रह्मा आविरभूदित्यस्मिन्नर्थे पूर्वतन श्लोकमुदाहरति—विश्वसृजः विश्वसृष्टिकर्तारः तदर्थं प्रथमे सृष्टेः पूर्वभूताः सत्रमासत। कथमिति, तदुच्यते— सहस्रसमं सहस्रसंवत्सर प्रसुतेन सोमाभिषवेण यन्तः सन्तः आसत। ते ह त एव। हेति विनिग्रहार्थीयः एवकारसमानार्थः। भुवनस्य गोपाः कृत्स्नस्य भूतजातस्य पालयिता। एतत्सृष्टिप्रलयस्याप्युपलक्षणम्। अनेन स्वरूप लक्षितं भवति। हिरण्मयः हिरण्मयशरीरः 'हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः' (छाउ. १।६।६) इति हि श्रुत्यन्तरम्। शकुनः पक्षिरूपः। अस्ति पक्षित्वेन श्रुतिषु सर्वत्र व्यपदेशः 'एकः सुपर्णः स समुद्रम्' (ऋसं. १०।११४।४) 'सुपर्णं विप्राः कवयः' (ऋस. १०।११४।५) 'पुरः स पक्षी भूत्वा' (बृउ. २।५।१८) इत्यादिषु। ब्रह्म नाम ब्रह्मेति प्रसिद्धम्। यज्ञे प्रादुरभूदिति सबन्धः। तासा.

[1]ब्रह्मणः सलोकतां सार्ष्टितां सायुज्यं गच्छन्ति य एतदुपयन्ति॥

एतत्सत्रफलभूतं ब्रह्मणः साक्षात्कारं प्रतिपाद्य इदानींतनानुष्ठायिनामपि ब्रह्मणः सालोक्यादिफलं दर्शयति—सार्ष्टिः साम्यप्राप्तिः। समानैश्वर्ययोग इत्यर्थः। शिष्ट स्पष्टम्। अनेन प्रसङ्गादध्ययनादिप्रवर्तकाना श्रेयोनिमित्त परदेवतास्मरणमपि कृतं भवति। तासा.

[2]तदेतद्विश्वसृजां सहस्रसंवत्सरम्। एतेन वै विश्वसृजः सर्वामृद्धिमृध्नुवन्ति य एतदुपयन्ति॥

अथ सर्वाधिक्यलक्षणं फल दर्शयति। एतन्निगदसिद्धम्। 'इतिवातवतोरयनेन क्लृप्तं विश्वसृजामयनं, ज्योतिष्टोमेन वा, विक्लृप्तेन ज्योतिष्टोमेन वा, यथा स्तोमक्लृप्तेन' इति कल्पो द्रष्टव्य इति। अत्र विश्वसृजा अपरिमितायुःसद्भावादधिकारः। इदानींतनानामपि कथमत्राधिकार इत्यय विचारः षष्ठस्य सप्तमपादान्ते चिन्तितः। तासा.

यज्ञेन हन्तव्या दोषाः

[3]अपमृत्युमपक्षुधम्। अपेतः शपथं जहि।
अधा नो अग्न आवह। रायस्पोषꣳ सहस्रिणम्॥
ये ते सहस्रमयुतं पाशाः। मृत्यो मर्त्याय हन्तवे।
तान्यज्ञस्य मायया। सर्वानवयजामहे॥

हे अग्ने, मृत्युं मरणमपजहि। क्षुध क्षुद्बाधामपजहि। इतः अस्मात्सकाशात् शपथ परकीयं शाप अपजहि

(१) ताब्रा. २५।१८।४.

(२) ताब्रा. २५।१८।५; तैब्रा. ३।१२।९।७ (विश्वसृजः प्रथमाः सत्रमासत। सहस्रसमं प्रसुतेन यन्तः। ततो ह जज्ञे भुवनस्य गोपाः। हिरण्मयः शकुनिर्ब्रह्म नाम).

(१) ताब्रा. २५।१८।६.

(२) ताब्रा. २५।१८।७.

(३) तैब्रा. ३।१०।८।१.

विनाशय । अथ तद्विनाशानन्तरं नः अस्माकं सहस्रिण सहस्रसख्यायुक्तं रायस्पोषं धनपुष्टिं आवह संपादय ।

हे मृत्यो, मर्त्याय हन्तवे मनुष्यं हन्तु ते तव ये सहस्रमयुत च पाशाः सन्ति, तान् यज्ञस्य मायया 'यज्ञो वै विष्णुः' ( तैब्रा. ३।२।३।१२ ) इति श्रुतेः परमेश्वरस्य मायया शक्त्या अवयजामहे विनाशयामः ।

तैब्रासा.

विश्वसृजा यज्ञ आध्यात्मिकाधिदैवतशक्तिसंवलित,
यत्र ब्रह्म मोक्षकारणं साक्षात्क्रियते

**आदर्शमग्निं चिन्वानाः । पूर्वे विश्वसृजोऽमृताः ।
शतं वर्षसहस्राणि । दीक्षिताः सत्रमासत ॥**

सर्वतो दर्शनीय महाग्निं चिन्वानाः पूर्वकल्पवर्तिनो वर्तमानस्य विश्वस्य स्रष्टारः अमृताः देवाः दीक्षिताः सन्तो लक्षसख्याकान् सवत्सरान् सत्रमन्वतिष्ठन् ।

तैब्रासा.

**तप आसीद्गृहपतिः । ब्रह्म ब्रह्माऽभवत्स्वयम् ।
सत्यꣳ ह होतैषामासीत् । यद्विश्वसृज आसत ॥**

तपआदिशब्दाः तदभिमानिदेवतावाचकाः । तस्मिन् विश्वसृजां सत्रे तपो गृहपतिः यजमानेषु मुख्यः आसीत् । ब्रह्म मन्त्रजातं ब्रह्माख्य ऋत्विगासीत् । यत्सत्यवदन विश्वसृजोऽनुष्ठितवन्तः, तदेव सत्य एषा विश्वसृजां होत्राख्य ऋत्विगासीत् । तैब्रासा.

**अमृतमेभ्य उदगायत् । सहस्रं परिवत्सरान् ।
भूतꣳ ह प्रस्तोतैषामासीत् । भविष्यत्प्रति चाहरत् ॥**

यदेतदमृत देवैः पेयं पीयूषं, तदेतत् एभ्यो विश्वसृड्भ्यः सहस्रसख्याकान्परिवत्सरानुद्गाता भूत्वा औद्गात्रमकरोत् । यद्भूतं अतीतकालस्वरूप, तत् एषां विश्वसृजा प्रस्तोत्राख्य ऋत्विगासीत् । यत्तु भविष्यत्कालरूपं, तत् प्रतिहर्ता भूत्वा प्रतिहरणाख्यसामांशगानरूपं कर्म अकरोत् । तैब्रासा.

**प्राणो अध्वर्युरभवत् । इदꣳ सर्वꣳ सिषासताम् ।
अपानो विद्वानावृतः । प्रतिप्रातिष्ठदध्वरे ॥**

इद सर्वं कृत्स्नमेतत्सत्रं सिषासतां अन्तपर्यन्तं कर्तुमिच्छता विश्वसृजां प्राणो वायुरेव अध्वर्युरभवत् । योऽयमपानवायुः विद्वान् प्रयोगाभिज्ञः, सोऽयमावृतः साकल्येनाऽऽर्त्विज्यार्थं वृतः सन् अध्वरे सोमयागे स्वयं प्रतिप्रस्थाता भूत्वा प्रतिप्रातिष्ठत् प्रतिप्रस्थातृकर्माकरोत् ।

तैब्रासा.

**आर्तवा उपगातारः । सदस्या ऋतवोऽभवन् ।
अर्धमासाश्च मासाश्च । चमसाध्वर्यवोऽभवन् ॥**

आर्तवाः तत्तदृतुयोग्याः पदार्थाः उपगातारोऽभवन् । सामगेषु गायत्सु तदुत्साहार्थं हो इति शब्दमुच्चारयन्तः उपगातारः । ये तु वसन्तादयः ऋतवः, ते सदस्याः यज्ञसदस्यवस्थिता बहुविधा ब्राह्मणाः कर्मोपदेष्टारोऽभवन् । चतुर्विंशतिरर्धमासाः, द्वादश मासाः चमसैर्होतारः चमसाध्वर्युसंज्ञका अभवन् । तैब्रासा.

**अशꣳसद्ब्राह्मणस्तेजः । अच्छावाकोऽभवद्यशः ।
ऋतमेषां प्रशास्ताऽऽसीत् । यद्विश्वसृज आसत ॥**

विश्वसृजा यत्तेजः, तत् ब्राह्मणाच्छंस्याख्यः ऋत्विग्भूत्वा ब्रह्मसबन्धिशस्त्राण्यशसत् । विश्वसृजां सबन्धि यद्यशः, तदच्छावाकाख्यः ऋत्विगासीत् । विश्वसृजा सबन्धि यदृताख्य मानस यथार्थचिन्तन, तदेपामृत्विजा प्रशास्त्राख्य ऋत्विगासीत् । तैब्रासा.

**ऊर्ग्राजानमुदवहत् । ध्रुवगोपः सहोऽभवत् ।
ओजोऽभ्यष्टौद्ग्राव्णः । यद्विश्वसृज आसत ॥**

येयमूर्क् विश्वसृजा संबन्धी रसः, सोऽय राजानमुदवहत्, आसन्दीरूपेण सोम ऊर्ध्वं धृतवान् । यदेषा सहो बलं, तत् ध्रुवगोपनामको भूत्वा ध्रुवाख्यग्रहस्य रक्षकोऽभवत् । विश्वसृजो यदोजः सामर्थ्यमासत सपादितवन्तः, तदोजो ग्राव्णः तदाख्य ऋत्विग्भूत्वा अभिषवहेतूनां ग्राव्णा स्तुतिमकरोत् । तैब्रासा.

**अपचितिः पोत्रीयामयजत् । नेष्ट्रीयामयजत्त्विषिः ।
आग्नीध्राद्विदुषी सत्यम् । श्रद्धा हैवायजत्स्वयम् ॥**

येय विश्वसृजामपचितिः पूजा, सेय पोत्राख्य ऋत्विग्भूत्वा पोतृसंबन्धिनीं याज्यां पठितवान् । या च विश्वसृजा त्विषिर्दीप्तिः, सेय नेष्ट्राख्य ऋत्विग्भूत्वा नेष्टृसबन्धिनीं याज्यामपठत् । या विश्वसृजा श्रद्धा, सा स्वयमाग्नीध्राख्य ऋत्विग्भूत्वा आग्नीध्रान्निमित्तभूताद्यत्सत्यं अवश्यानुष्ठेयं कर्म, तद्विदुषी सती अयजत् याज्यामपठत् ।

तैब्रासा.

(१) तैब्रा. ३।१२।९।२–६.

**इरा पत्नी विश्वसृजाम् । आकूतिरपिनड्ढविः ।**
**इध्मꣳ ह क्षुच्चैभ्य उग्रे । तृष्णा चाऽऽवहतामुभे ॥**

येय इरा अन्नभूता, सेयं विश्वसृजां पत्नी बभूव । येयमाकूतिरेषा, सेय सकल्परूपा हविरपिनट् दासी भूत्वा पेषणमकरोत् । या क्षुत्, या च तृष्णा, ते उभे उग्ररूपे सत्यौ इध्ममावहतां भारेण समानीतवत्यौ ।

तैब्रासा.

**वागेषाꣳ सुब्रह्मण्याऽऽसीत् । छन्दोयोगान्विजानती ।**
**कल्पतन्त्राणि तन्वानाऽहः । सꣳस्थाश्च सर्वशः ॥**

येय एषा विश्वसृजा वाक्, सेय सुब्रह्मण्याख्या देवता आसीत्, तदुपलक्षितः सुब्रह्मण्याख्य ऋत्विगप्यासीत् । कीदृशी सुब्रह्मण्या । छन्दोयोगान्विजानती गायत्र्यादिछन्दसा सबन्धिविशेषान्विजाननी, तथा कल्पतन्त्राणि कल्पेषु प्रोक्तान् प्रयोगविशेषान्, अहःसस्थाश्चाग्निष्टोमोक्थादिरूपाः सर्वात्मना तन्वाना विस्तारयन्ती ।

तैब्रासा.

**अहोरात्रे पशुपाल्यौ । मुहूर्ताः प्रेष्या अभवन् ।**
**मृत्युस्तदभवद्धाता । शमितोग्रो विशां पतिः ॥**

यावेतौ अहोरात्राख्यौ कालविशेषौ, तौ अत्रापेक्षितानां पशूना पालकौ संपन्नौ । ये च मुहूर्ताख्याः कालविशेषाः, ते नानाविधेषु व्यापारेषु प्रेषणीयाः पुरुषाः अभवन् । तत् तस्मिन्सत्रे योऽय मृत्युः, सोऽय शमिताऽभवत् । कीदृशः शमिता । धाता, यथा पशुः शब्दं न करोति तथा तन्मुख धारयितुं समर्थः । अत एवोग्रः, सत्रोपयुक्ताना विशां प्रजाना पतिः अमारणेन पालकः ।

तैब्रासा.

[1] **विश्वसृजः प्रथमाः सत्रमासत । सहस्रसमं प्रसुतेन यन्तः ।**
**ततो ह जज्ञे भुवनस्य गोपाः । हिरण्मयः शकुनिर्ब्रह्म नाम ॥**

पूर्वेषु मन्त्रेषु लक्षसंवत्सरसत्रं निरूपितम् । उत्तरेषु मन्त्रेषु लक्षसंवत्सरसत्र निरूप्यते । विश्वं सृजन्तीति विश्वसृजः, ते च प्रथमाः सृष्ट्यादावुत्पन्नाः सत्रमनुष्ठितवन्तः । कीदृशं सत्रम् । सहस्रसमं, सहस्रसंख्याकाः समाः संवत्सराः यस्मिन्सत्रे तत्सहस्रसत्रम् । किं कुर्वन्तः । प्रसुतेन यन्तः, प्रतिदिनमभिषुतः सोमः प्रसुतः, तेनानुतिष्ठन्तः । ततः संवत्सरसत्रानुष्ठानाच्छकुनिर्जज्ञे ज्ञानशक्तिक्रियाशक्तिरूपद्वयवान् पक्षी समुत्पन्नः । स च भुवनस्य गोपाः सर्वस्य लोकस्य पालकः, हिरण्मयो ज्योतिर्मयः, ब्रह्मेति तस्य नाम । परब्रह्मैव विश्वसृजामनुष्ठान पालयितुं हिरण्मयशकुनिरूपं स्वीचकार । तं हिरण्यगर्भ इत्याचक्षते । तथा च मन्त्रान्तरमाम्नायते—'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' ( ऋसं. १०।१२१।१ ) इति ।

तैब्रासा.

[2] **येन सूर्यस्तपति तेजसेद्धः । पिता पुत्रेण पितृमान्योनियोनौ ।**
**नावेदविन्मनुते तं बृहन्तम् । सर्वानुभूमात्मानꣳ संपराये ॥**

येन परब्रह्मरूपेण तेजसा चैतन्येनेद्धः प्रकाशितः सन् सूर्यो लोके तपति । अत एव 'ज्योतिषां ज्योतिः' ( मुउ. २।२।९) इत्युपनिषद्याम्नायते । किं च येन तेजसा इद्धः प्रकाशितः पिता योनियोनौ तत्तज्जन्मनि पुत्रेण युक्तो भवति । पुत्रश्च पितृमान्भवति । सूर्यतापपितृपुत्रादिव्यवहारः सर्वोऽपि परब्रह्माधीन इत्यर्थः । सर्वानुभू सर्वस्य जगतः साक्षित्वेन प्रकाशकत्वादनुभवितारं तं बृहन्तं परिपूर्णं परमात्मानं संपराये परलोकगमनवेलाया अवेदवित्पुमान् न मनुते न जानाति, तस्य वेदव्यतिरिक्तप्रमाणान्तरागोचरत्वात् । तैब्रासा.

**एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् ।**
**तस्यैवाऽऽत्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेन ॥**

ब्राह्मणस्य परब्रह्मरूपस्य यो महिमा 'सत्य ज्ञानमनन्तं ब्रह्म' ( तैउ. २।१ ) इति प्रतिपादितस्वरूप-

---

(१) तैब्रा. ३।१२।९।७. अन्यस्थलादिनिर्देशः ४६१ पृष्ठे द्रष्टव्य. ।

(१) तैब्रा. ३।१२।९।७.

(२) तैब्रा. ३।१२।९।७, बृउ. ४।४।२३ न कर्मणा वर्धते ( न वर्धते कर्मणा ) उत्तरार्धे ( तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन ).

विशेषः, स एष नित्यो विनाशरहितः । तत्कथमिति तदेवोच्यते—ज्योतिष्टोमाश्वमेधादिरूपेण पुण्येन कर्मणा न वर्धते नोत्कृष्ट जन्म प्राप्नोति । महापातकोपपातकरूपेण कर्मणा नो कनीयान् निकृष्ट जन्म न प्राप्नोति । तस्यैव ब्रह्मणः पदवित् स्वरूपज्ञानी तस्यैव आत्मा भवति 'ब्रह्मविद्ब्रह्मैव भवति' ( मुउ. ३।२।९ ) इत्यादिश्रुतिभ्यः । अतस्त बृहन्त परमात्मान वेदमुखाद्विदित्वा पापकेन अत्यन्तकुत्सितेन कर्मणा न लिप्यते । पुण्य पाप चेत्युभयमपि कर्म शरीरप्रदत्वादत्यन्तकुत्सित, तदुभयलेपस्तत्त्वविदो नास्ति । तदेव विश्वसृजां सहस्रसवत्सरप्रसङ्गेन परमार्थत्वं निरूपितम् । तैब्रासा.

आध्यात्मिकमग्न्याधानं अमृतत्वसाधनम्

**[1]देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । त उभय एवानात्मान आसुः । मर्त्या ह्यासुः । अनात्मा हि मर्त्यः । तेषूभयेषु मर्त्येष्वग्निरेवामृत आस । तं ह स्मोभयेऽमृतमुपजीवन्ति । स यं ह स्मैषां घ्नन्ति तद्ध स्म वै स भवति ॥ ८ ॥**

अथ आधानस्य भ्रातृव्यजयहेतुत्व वक्तुमाख्यायिकामाह—देवाश्चेति । अनात्मान आसुरिति । आत्मज्ञानरहिताः अविवेकिनो जाताः । अनात्मत्वादेव हेतोः मर्त्याः मरणधर्माणश्च सजाताः । तेषूभयेषु देवासुरेषु मर्त्येषु सत्सु अग्निरेव अमरणशील आस । यं ह स्मैषामिति एषां देवानां मध्ये यमेव असुरा घ्नन्ति तत्तत्र स वै हत एव भवति । शब्रासा.

**ततो देवास्तनीयांस इव परिशिशिषिरे । तेऽर्चन्तः श्राम्यन्तश्चेरुरुतासुरान्त्सपत्नान्मर्त्यानभिभवेमेति । त एतदमृतमग्न्याधेयं ददृशुः ॥ ९ ॥**

ततो देवा इति । एवं क्रमेणासुरैर्हतेषु देवा अल्पीयांस एव परिशिष्टा बभूवुः । मरणधर्मोपेतानसुरान् वयमभिभवेमेत्यभिप्रायेण ते देवाः अर्चन्तः तपस्यन्तः, श्राम्यन्तः श्रमं प्राप्नुवन्तश्चेरुः । त एतदित्यादि स्पष्टम् । शब्रासा.

**ते होचुर्हन्तेदममृतमन्तरात्मन्नादधामहै । त इदममृतमन्तरात्मन्नाधायामृता भूत्वाऽस्तर्या भूत्वा स्तर्यान्त्सपत्नान्मर्त्यानभिभविष्याम इति ॥ १० ॥**

(१) शब्रा. २।२।२।८–१८.

ते होचुरिति । अमृतमन्तरात्मन्निति । मरणधर्मरहितमग्निं आत्मनि हृदये आधाय वयमपि अमृता भूताः ( त्वा ) अत एव अस्तर्या अहिंस्याश्च भूता ( त्वा ) इत्यर्थः । शब्रासा.

**ते होचुरुभयेषु वै नोऽयमग्निः । प्र त्वेवासुरेभ्यो ब्रवामेति ॥ ११ ॥**

ते होचुरिति । उभयेषु वा इति । देवासुरेषूभयेषु अस्मासु स्थितोऽयमग्निः, अतः असुरेभ्यो निवेद्यैव अस्माभिः स आधातव्य इति विचारितवन्त इत्यर्थः । शब्रासा.

**ते होचुरा वै वयमग्नी धास्यामहे । अथ यूयं किं करिष्यथेति ॥ १२ ॥**

ते होचुरित्यादि निगदसिद्धम् । शब्रासा.

**ते होचुरथैनं वयं न्येव धास्यामहे । अत्र तृणानि दह, अत्र दारूणि दह, अत्रौदनं पच, अत्र मांसं पच इति । स यं तमसुरा न्यदधत । तेनानेन मनुष्या भुञ्जते ॥ १३ ॥**

ते होचुरिति । न्येव धास्यामह इति । यदि यूयं देवा अग्निमाधास्यध्वे, तर्हि वयमपि तमेवाग्निं निधास्यामहे । 'तृणानि दह' इत्याद्यसुरवाक्यम् । हे अग्ने, अत्र पृथिव्यां तृणानि दह, दारूणि दह, इत्येवमग्निं प्रेषयन्तो भूमौ तमस्थापयन् । यं निहितवन्तोऽसुरास्तेन अग्निना अमुना मर्त्या भुञ्जते । शब्रासा.

**अथैनं देवा अन्तरात्मन्नादधत । त इममसृतमन्तरात्मन्नाधायामृता भूत्वाऽस्तर्या भूत्वा स्तर्यान्त्सपत्नान्मर्त्यानभ्यभवन् । तथो एवैष एतदमृतमन्तरात्मन्नाधत्ते । नामृतत्वस्याऽऽशास्ति । सर्वमायुरेति । अस्तर्यो हैव भवति । न हैनं सपत्नस्तुस्तूर्षमाणश्चन स्तृणुते । तस्माद्यदाहिताग्निश्चानाहिताग्निश्च स्पर्धेते । आहिताग्निरेवाभिभवति । अस्तर्यो हि खलु स तर्हि भवत्यमृतः ॥ १४ ॥**

अथैनमित्यादि । देवास्त्वेनमग्निं आत्मन् आत्मनि अन्तः हृदयमध्ये आधाय यथासकल्पमकुर्वतेत्यर्थः । आख्यायिकासिद्धमर्थं प्रकृते योजयति—तथो एवैष इति । अस्तर्यो हीति । अमृतरूपाग्निधारणेन यस्मात्

आहिताग्निरहिंस्यः, तस्माद्विवदमानोऽसौ अनाहिताग्निमभिभवितुं शक्नोतीत्यर्थः। शब्रासा.

**तद्यत्रैनमदो मन्थन्ति। तज्जातमभि प्राणिति। प्राणो वा अग्निः। जातमेवैनमेतत्सन्तं जनयति। स पुनरपानिति। तदेनमन्तरात्मन्नाधत्ते। सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति॥ १५॥**

नन्वग्निर्गार्हपत्याद्यायतने बहिराधीयते, कथं तस्यान्तर्धारणमिति, तत्राह—तद्यत्रेति। अभिप्राणितीति। मन्थनाज्जातं तमग्निमभि उपरि प्राणन करोति। स पुनरपानिनीति। अग्नेश्चोपरि श्वासमुत्सृज्य तमेव श्वासं पुनरन्तर्नयेत्। तेन सार्द्धं अग्निरन्तः प्रविशन् यजमानस्य हृदये आहितो भवतीत्यर्थः। शब्रासा.

**तमुद्दीप्य समिन्धे। इह यक्ष्ये, इह सुकृतं करिष्यामि, इत्येवैनमेतत्समिन्धे। योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति॥ १६॥**

नियतस्याबाह्यस्याग्नेरुद्दीपनसमिन्धने विधत्ते—तमिति। उद्दीपनं काष्ठप्रक्षेपः, समिन्धन सम्यक्प्रज्वलनं, तदुभयमन्तरग्नौ दर्शयति—इहेति। इह अस्मिन् बाह्येऽग्नौ यक्ष्ये यागं करिष्ये, तत्फल च सपादयिष्यामीति यौ मनोव्यापारौ सकल्पौ, ते एव अन्तराहितस्याग्नेरुद्दीपनसमिन्धने इत्यर्थः। योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवतीत्युपसहारः। शब्रासा.

**अन्तरेणागाद्व्यवृतदिति। न ह वा अस्यैतं कश्चनान्तरेणैति यावज्जीवति। योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति। तस्मादु तं नाद्रियेत यदनुगच्छेत्। न ह वा अस्यैषोऽनुगच्छति यावज्जीवति। योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति॥ १७॥**

एवमन्तरग्निमादधानस्य व्यवायादिदोषोऽपि नास्तीति प्रतिपादयति— अन्तरेणेत्यादिना। अग्नियजमानयोर्मध्ये देवदत्तादेरागतेन च व्यवायादिभिः व्यवृतत् व्यावृतो विमुखो भवेदिति यो दोषः, सोऽप्यत्र नास्ति। तत्र हेतुमाह—न ह वा इति। न खलु हृदयमध्ये स्थापितस्य अग्नेर्यजमानस्य च मध्ये कोऽपि गच्छति यावज्जीव, अतो व्यवायशङ्का न कार्येति। एवं विदुषोऽग्न्यनुगमनशङ्कापि न कार्येत्याह—तस्मादिति। न ह वा अस्येति। बाह्यस्याग्नेरनुगमेऽपि अन्तराहितस्याग्नेर्यावज्जीवमवस्थानान्न खल्वस्य यजमानस्यैषोऽग्निरनुगच्छति उपशाम्यति। शब्रासा.

**ते वा एते प्राणा एव यदग्नयः। प्राणोदानावेवाऽऽहवनीयश्च गार्हपत्यश्च। व्यानोऽन्वाहार्यपचनः॥ १८॥**

नन्वन्तर्गार्हपत्याद्यग्नयो न सन्ति, कथ तेषामनुगम इत्यत आह— ते वा इति। गार्हपत्यादीनां प्राणोदानव्यानात्मना अवस्थितत्वान्नोक्तदोष इत्यर्थः।

शब्रासा.

प्रजापत्यात्मा यज्ञः

* [1]देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे। ततोऽसुरा अतिमानेनैव 'कस्मिन्नु वयं जुहुयाम' इति स्वेष्वेवाऽऽस्येषु जुह्वतश्चेरुः। तेऽतिमानेनैव पराबभूवुः। तस्मान्नातिमन्येत। पराभवस्य हैतन्मुखं यदतिमानः॥

अथ देवा अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुः। तेभ्यः प्रजापतिरात्मानं प्रददौ। यज्ञो हैषामास। यज्ञो हि देवानामन्नम्॥

+ [2]स देवेभ्य आत्मानं प्रदायाथैतमात्मनः प्रतिमामसृजत यद्यज्ञम्। तस्मादाहुः प्रजापतिर्यज्ञ इति। आत्मनो ह्येतं प्रतिमामसृजत॥

स देवेभ्य इत्यादि। सः प्रजापतिः एवं देवेभ्य आत्मान स्वशरीरं प्रदाय तन्निष्क्रयणाय यज्ञरूपामात्मनः प्रतिकृतिं असृजत सृष्टवान्। यत एवं प्रजापतिशरीरस्य प्रतिमा यज्ञः, तस्मात् प्रजापतियज्ञयोस्तादात्म्यव्यवहारः इत्याह—तस्मादाहुरिति। आत्मनो ह्येतमिति प्रागुदीरितहेतुयोजनम्। प्रतिमा प्रतिबिम्बं प्रतिकृतिरिति पर्यायाः।

शब्रासा.

---

* अनयोर्व्याख्यानं प्रजापतिप्रकरणे २०२, २०३ पृष्ठयोर्द्रष्टव्यम्।

+ प्रथमद्वितीयखण्डौ 'देवाश्च वै' (शब्रा. ५।१।१।१–२.) इत्युपरिगृहीताभ्या समानौ।

(१) शब्रा. ५।१।१।१–२.

(२) शब्रा. ११।१।८।३–४.

**स एतेन यज्ञेन देवेभ्य आत्मानं निरक्रीणीत। स यद्व्रतमुपैति। यथैव तत्प्रजापतिर्देवेभ्य आत्मानं प्रायच्छत्। एवमेवैष एतद्देवेभ्य आत्मानं प्रयच्छति। तस्मादु संयत एवैतां रात्रिं चिचरिषेत्। यथा हविषा चरेदेवम्। हविर्ह्येष देवानां भवति॥**

स एतेन यज्ञेनेत्यादि। सः प्रजापतिः इत्थं सृष्टेन स्वशरीरप्रतिकृतिभूतेन एतेन यज्ञेन देवेभ्यः सकाशादात्मानं स्वशरीरं निरक्रीणीत यज्ञतुल्यवेतनं देवेभ्यो दत्त्वा पुनः स्वशरीरं स्वीकृतवानित्यर्थः। इत्थमाख्यायिकया सिद्धमर्थं प्रकृते योजयति—स यद्व्रतमुपैतीति। दर्शपूर्णमासयागे प्रागुक्तलक्षणं व्रतमुपैतीति यदस्ति, एतेन प्रजापतिरिव देवेभ्यः स्वयमप्यात्मानं स्वशरीरं हविष्ट्वेन प्रयच्छति। तस्माद्धविर्दोषपरिहाराय एतां औपवसथीयदिवसस्य रात्रिं संयत एव सम्यङ्नियतेन्द्रियव्यापार एव सन् चिचरिषेत् चरितुं वर्तितुमिच्छेत्। दृष्टान्तेनोपपादयति—यथा हविषेति। यथा संयतः सन् हविषा चरेत् यजेत, एवं पर्वरात्रावपि संयतो भवेदित्यर्थः। तत्र कारणमाह—हविर्ह्येष इति। एवं व्रतमुपेयिवान् यजमानः औपवसथ्यदिवसे देवानां स्वयमेव हविर्भवति। हि यस्मादेव तस्मात् संयतश्चरेदिति संबन्धः।

शब्रा॰सा॰

देवयज्ञात् आत्मयजनं श्रेयः

**तदाहुरात्मयाजी श्रेया३न् देवयाजी३ इति। आत्मयाजीति ह ब्रूयात्। स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयत इति। स यथाऽहिस्त्वचो निर्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्मुच्यते। स ऋङ्मयो यजुर्मयः साममय आहुतिमयः स्वर्गं लोकमभिसंभवति॥**

उक्तोपासनेन सह दर्शपूर्णमासावनुतिष्ठतो यजमानस्येतरस्माद्धुतरफलभाक्त्वं विचारपूर्वकं दर्शयति—तदाहुरिति। तत् तत्र विषये आहुः मीमांसन्ते ब्रह्मवादिनः। किमात्मयाजी श्रेयानुत देवयाजी इति। 'विचार्यमाणानाम्' (पा. सू. ८।२।९७) इत्युभयत्र प्लुतिः। तत्र प्रशस्तं पक्षं दर्शयति— आत्मयाजीतीति। हशब्दोऽवधारणे। कः पुनरसावात्मयाजीति, तं लक्षयति— स ह वा आत्मयाजीति। स एव खलु आत्मयाजी यो यजमानः इदं शिरःप्रभृतिकं मदीयमङ्गं अनेन यज्ञाङ्गेन संस्क्रियते, इदं मदीयमङ्गमनेनोपधीयते उपस्थाप्यते इति वेद जानाति स आत्मयाजी। तस्य सर्वपापक्षयरूपं फलं सदृष्टान्तमाह—स यथाऽहिरिति। यथा सर्पस्त्वचो विनिर्मुच्येत, एवमात्मयाजी अस्मात् मर्त्यात् मरणधर्मकाच्छरीररूपात् पाप्मनो निर्मुच्यते निःशेषेण मुक्तो भवति। न पुनः तादृक्शरीरसंबन्धं प्रतिपद्यते इत्यर्थः। तर्हि कीदृग्रूपोऽसौ भवतीति, तदाह— स ऋङ्मय इति। सूर्यमण्डलस्य त्रयीरूपत्वात्तादृङ्मयरूप एव सन् तत्र स्थिताऽऽहुतिमयः सन् फलभूतं स्वर्गं दुःखासंस्पृष्टसुखरूपं लोकमभिलक्ष्य संभवति संनिधत्ते।

शब्रा॰सा॰

**अथ ह स देवयाजी यो वेद देवानेवाहमिदं यजे, देवान्त्सपर्यामीति। स यथा श्रेयसे पापीयान्बलिं हरेत्। वैश्यो वा राज्ञे बलिं हरेत्। एवं सः। स ह न तावन्तं लोकं जयति यावन्तमितरः॥**

ईदृग्रूपफलव्यतिरेकं देवयाजिनो दर्शयति—अथ ह स देवयाजीति। निगदसिद्धोऽर्थः। सपर्यामि पूजयामि। स यथा श्रेयस इत्यादि। यथा खलु श्रेयसे श्रेष्ठाय पापीयान् हीनः पुरुषो बलिं उपहारं हरेत्, यथा वा वैश्यो राज्ञे बलिं करं हरेत्, एवमेव स देवयाजी हविषा तोषितैर्देवैः सेवानुसारेण दत्तं फलं लभते। यावन्तं लोकमितरं आत्मयाजी जयति, तावन्तं लोकं स देवयाजी न लभते। उपासनाज्ञानहीनत्वादित्यर्थः। अ॰सा॰

आध्यात्मिकं प्राणाग्निहोत्रम्

**वाग्घ वा एतस्याग्निहोत्रस्याग्निहोत्री। मन एव वत्सः। तदिदं मनश्च वाक्च समानमेव सन्नानेव। तस्मात्समान्या रज्ज्वा वत्सं च मातरं चाभिदधति। तेज एव श्रद्धा। सत्यमाज्यम्॥१॥**

इत्थं दर्शपूर्णमासाववलम्ब्य तत्प्रशंसाव्याजेन तदङ्गावबद्धान्युपासनानि विहितानि। अथाग्निहोत्रमाश्रित्य तत्प्रशंसामुखेन तदवयवाश्रितानि उच्यन्ते—वाग्घ

(१) शब्रा. ११।२।६।१३-१४.

(१) शब्रा. ११।३।१।१-८.

वा इत्यादिना । अग्निहोत्रमिति कर्मनामधेयम् । अग्नये होत्र होमोऽस्मिन्निति व्युत्पत्तिः । उपचारात्तदर्थं पयोऽप्यग्निहोत्रम् । तस्य दोग्ध्री धेनुरपि अग्निहोत्रीत्युच्यते । तस्यैतस्याग्निहोत्राख्यस्य कर्मणो वागेव अग्निहोत्री धेनुः । मनः तस्या एव वत्सः । गवि वाग्बुद्धिः, वत्से मनोबुद्धिश्च कार्येत्यर्थः । तदेतत्समानधर्मयोगेन प्रतिपादयति—तदिदमिति । तदिद वाङ्मनसलक्षण द्वय समान इदप्रदेशे एकीभूतमेव सत् पश्चान्नानेव विभक्तमिव भवति । यस्मादेव तस्माल्लोके दोग्धारः समान्या एकयैव रज्ज्वा वत्स मातर च अभिदधति बध्नन्ति । तत्र तेजसो हविषश्च श्रद्धासत्यरूपतामाह—तेज एव श्रद्धेति । होमाधिकरणभूत यत्तेजः तत् श्रद्धात्मकत्वेन ध्यातव्यं, तत्र होमद्रव्यमाज्य तत्सत्यात्मकमिति । शब्रासा.

**तद्धैतज्जनको वैदेहो याज्ञवल्क्यं पप्रच्छ । वेत्थाग्निहोत्रं याज्ञवल्क्या३ इति । वेद सम्राडिति । किमिति । पय एवेति ॥ २ ॥**

इममर्थं जनकयाज्ञवल्क्ययोरुक्तिप्रत्युक्तिभ्यां समर्थयते —तद्धैतदिति । तत्र खलु अग्निहोत्रविषये एतत् उक्त तेजआज्ययोः श्रद्धासत्यरूपत्वं विदेहाना राजा वैदेहः जनकाख्यो राजा याज्ञवल्क्य महर्षिं पप्रच्छ पृष्टवान् । हे याज्ञवल्क्य, त्वमग्निहोत्र वेत्सि जानासि किं, इति प्रश्नः । सम्राट् वेद अह जानाम्यग्निहोत्रमिति प्रतिवचनम् । पुनः किं तदिति प्रश्नः । पय एवेति तस्योत्तरम् । पयः खलु नित्यतयाऽग्निहोत्रसाधनत्वेन श्रुतम् । अतः पय एवाग्निहोत्रमित्यर्थः । शब्रासा.

**यत्पयो न स्यात्केन जुहुया इति । व्रीहियवाभ्यामिति । यद्व्रीहियवौ न स्यातां केन जुहुया इति । या अन्या ओषधय इति । यदन्या ओषधयो न स्युः केन जुहुया इति । या आरण्या ओषधय इति । यदारण्या ओषधयो न स्युः केन जुहुया इति । वानस्पत्येनेति । यद्वानस्पत्यं न स्यात्केन जुहुया इति । अद्भिरिति । यदापो न स्युः केन जुहुया इति ॥ ३ ॥**

यदि तर्हि पयो न स्यात्तदा केन द्रव्येण जहुया इति प्रश्नस्योत्तरं—व्रीहियवाभ्यामिति । व्रीहियवयोरन्यतरत्साधनमित्यर्थः । एवमुत्तरेष्वपि प्रश्नप्रतिवचनेषु योजना । अन्या ओषधय इति । व्रीहियवातिरिक्ता ग्राम्या ओषधयो होमसाधनमित्यर्थः । आरण्या ओषधय इति । वैणवश्यामाकधान्यादयः आरण्याः । वानस्पत्येनेति । वनस्पतिर्वृक्षः, तज्जन्य फलादिकं वानस्पत्य, तेनेत्यर्थः । तस्याप्यभावे आप एव होमद्रव्यमित्याह—अद्भिरिति । शब्रासा.

**स होवाच । न वा इह तर्हि किं चनासीत् । अथैतदहूयतैव । सत्यं श्रद्धायामिति । वेत्थाग्निहोत्रं याज्ञवल्क्य । धेनुशतं ददामीति होवाच ॥ ४ ॥**

तासामभावे केन होम इति पृष्टे मनसि रहस्यत्वेन स्थापितमर्थमाह—स होवाचेति । इत्थ खलु याज्ञवल्क्य उवाच—तर्हि तथा सति इह अस्मिंल्लोके किं चन किमपि होमसाधनमन्यद्द्रव्य नैवासीत् । तथापि एतदग्निहोत्र अहूयतैव न लुप्यते । तत्किंरूपमित्युच्यते — यत्सत्यवदनरूपो यो धर्मः स एव श्रद्धारूपाग्नौ हूयते इति अन्तरतिगूढमर्थमाविष्कृतवान् । विद्योपदेशात्तुष्टस्य जनकस्य वाक्य — वेत्थाग्निहोत्रमिति । हे याज्ञवल्क्य, त्वमेव अग्निहोत्र जानासि । अतस्तुभ्यं रहस्यवेदिने धेनूनां शतं पारितोषिक प्रयच्छामीत्यर्थः । शब्रासा.

**तदप्येते श्लोकाः । किंस्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः । कथं स्विदस्य काव्यं कथं संततो अग्निभिरिति । कथं स्विदस्यानपप्रोषितं भवतीत्येवैतदाह ॥ ५ ॥**

अथ प्रवसद्विषये अग्निहोत्रहोमस्य मनःप्राणात्मना सातत्यं श्लोकमन्त्रैः प्रतिपादयति—तदप्येते श्लोका इति । तत् तस्मिन्नग्निहोत्रविषये अपि खलु एते श्लोकाः पठ्यन्ते । तत्तत्र प्रथमेन श्लोकेन प्रवासविषयं प्रश्नमुद्भावयति—किंस्विदिति । अग्निहोत्री यावज्जीवसकल्पिताग्निहोत्रवान् यजमानः किं विद्वान् किंरूपमग्निहोत्र जानन् गृहेभ्यः प्रवसति । तथा अस्य प्रवसतो यजमानस्य कथ वा तत् काव्य कविकर्म 'यावज्जीवमग्निहोत्र जुहुयात्' इति वाक्यं समर्थ भवति । तथा अग्निभिः गार्हपत्यादिभि. कथ सततः सबद्धो भवतीति । अस्य मन्त्रस्य

तात्पर्यार्थमाह—कथ स्विदिति । अस्य प्रवसतो यजमानस्य अनपप्रोषितं प्रवासदोषाभावः कथ सिध्यतीत्येतत्प्रथमश्लोकरूपमन्त्रवाक्यं प्रतिपादयतीत्यर्थः ।

शब्रासा.

**यो जविष्ठो भुवनेषु स विद्वान्प्रवसन्विदे । तथा तदस्य काव्यं तथा संततोऽग्निभिरिति ॥ मन एवैतदाह । मनसैवास्यानपप्रोषितं भवतीति ॥ ६॥**

अस्योत्तरं द्वितीयेन श्लोकमन्त्रेण प्रतिपादयति—यो जविष्ठ इति । यो यजमानो भुवनेषु लोकेषु अनुष्ठेयपदार्थेषु जविष्ठः अतिशयेन जववान् । मनसा कृत्स्नं दूरवर्त्यपि प्रयोगजातमनुसधातु कुशल इत्यर्थः । स विद्वान् विदे लाभाय प्रवसन् प्रवासकारी भवति । तथा तेन वेदनेन अस्य प्रवसतस्तत्काव्य यावज्जीववाक्यमपि सार्थकं भवति । तथा तेनैव वेदनेन दूरे वर्तमानोऽप्यग्निभिः सततः अव्यवहितसंबन्ध एव भवति । इम मन्त्र तात्पर्यकथनेन व्याचष्टे—मन एवैतदिति । एतन्मन्त्रवाक्य प्रवासजनितदोषनिवृत्तेर्मन एव साधनमिति आह तात्पर्यतो ब्रूते इत्यर्थः । तदेव विवृणोति—मनसैवास्यानपप्रोषितमिति । अनपप्रोषित प्रवासदोषविरहः ।

शब्रासा.

**यत्स दूरं परेत्याथ तत्र प्रमाद्यति । कस्मिन्त्साऽस्य हुताऽऽहुतिर्गृहे यामस्य जुह्वतीति ॥ यत्स दूरं परेत्याथ तत्र प्रमाद्यति । कस्मिन्नस्य साऽऽहुतिर्हुता भवतीत्येवैतदाह ॥ ७॥**

यत्स दूरमिति तृतीयश्लोकः । यत् यदि स यजमानो दूरं परेत्य अथ तत्र प्रमाद्यति अनवधानयुक्तो भवति, तदा अस्य यजमानस्य गृहे यामाहुतिं ऋत्विजो जुह्वति, सा आहुतिः अस्य प्रमाद्यतो यजमानस्य तस्मिन्गृहे एव हुता भवति । न त्वनेन सगच्छते इत्यर्थः । इम मन्त्र व्याचष्टे—यत्स दूरमिति । निगदसिद्धोऽर्थः ।

शब्रासा.

**यो जागार भुवनेषु विश्वा जातानि योऽबिभः । तस्मिन्त्साऽस्य हुताऽऽहुतिर्गृहे यामस्य जुह्वतीति ॥ प्राणमेवैतदाह । तस्मादाहुः प्राण एवाग्निहोत्रमिति ॥ ८ ॥**

एवं हि तन्मनस्कस्य प्रवसतो मनसैवाग्निहोत्रसंपत्तिमभिधाय प्राणरूपतामप्याह—यो जागारेति । यः प्राणवायुः भुवनेषु शरीरेषु जागार जागर्ति अनिद्रः सदा वर्तते, तथा विश्वा सर्वाणि जातानि भूतजातानि योऽबिभः तत्राऽऽत्मरूपतया बिभर्ति, तस्मिन् अनिरुक्तरूपिणि तस्मिन्प्राणवायौ अस्य उक्तं प्राणत्व विदुषः प्रवसतो यजमानस्य सा अग्निहोत्राहुतिः हुता भवति । गतमन्यत् । इम मन्त्र व्याचष्टे—प्राणमेवैतदाहेति । एतन्मन्त्रवाक्यं प्राणमेव होमाधारत्वेन प्रतिपादयतीत्यर्थः । अत्र विद्वत्प्रसिद्धिं संवादयति—तस्मादाहुरिति । इत्थमाहुत्यधिकरणत्वात्प्राण एवाग्निहोत्राख्य कर्म इति तत्र प्राणबुद्धिः कार्येत्यर्थः । प्राणस्तु सर्वदा यजमानेन सबद्धः इति न प्रवासजनितदोषावकाश इत्यर्थः ।

शब्रासा.

यज्ञपुरुषप्रजापतीनामैकात्म्यम्

**यद्वालाक इदं त्रिवृदेति सर्वमन्योऽन्यमभिसंपद्यमानम् ।
कथं स्विद्यज्ञः पुरुषः प्रजापतिरन्योऽन्यं नातिरिच्यन्त एते ॥ १ ॥**

अथ ब्राह्मणद्वये गवामयनपुरुषप्रजापतीना कलासाम्यमुच्यते प्रश्नप्रतिवचनाभ्यां—यद्बालाक इति । श्लोका एते नव । बलाकस्यापत्यं बालाकिः । सपृच्छयतो पृष्ठाननिर्दिष्टः । हे बालाके, यदिद अधियज्ञाध्यात्माधिदैव सर्वं त्रिवृत् अन्योऽन्यास्मिन्सपद्यमानम् । एतदनु ( एति ? ) स्वीक्रियते । ततः कथं यज्ञादयः अन्योऽन्यमतिरिक्ता ( न ? ) भवन्तीति प्रश्नः ।

शब्रासा.

**यदूर्ध्वा स्तोमा अनुयन्ति यज्ञमभ्यावर्तं सामभिः कल्पमानाः ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ २ ॥**

यदूर्ध्वाः स्तोमाः । अनुयन्ति इति लिङ्गवचनव्यत्ययः । ये ऊर्ध्वाः वर्द्धमानकाः स्तोमाः त्रिवृदादयः आनुपूर्व्येण यन्ति प्रवर्तन्ते । यज्ञमभ्यावर्तं आवृत्त्या इति च स्पष्टमित्यर्थः । सामभिः ससख्येयैः ये कल्पमानाः आत्मनो लभमानाः । कथं ते पुरुषमाविशन्ति । उपासकैः

(१) शब्रा. १२।३।१।१-९.

आश्रीयमाणा अपि निरालम्बनत्वाद्दुरावेशा इत्यभिप्रायः । कथ च प्राणैः पुरुषगतैः सयुजः सहयुक्ता अतिरिक्ता भवन्ति । शब्रासा.

प्रायणीयोऽतिरात्रश्चतुर्विंशमहश्चत्वारोऽभिप्लवाः पृष्ठ्य इत्येते ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ ३ ॥

प्रायणीयः प्रायणीयादिरूपं न किंचित्पुरुषैर्दृश्यते इत्यभिप्रायः । शब्रासा.

अभिजिता स्वरसामानोऽभिक्लृप्ता उभयतो विषुवन्तमुपयन्ति ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ ४ ॥

अभिजिता विश्वजिता वा इति विशेषः । अभिक्लृप्ताः परितो ह्यभिमुखीकृताः । अनुलोमा इत्यर्थः । उभयतः पुरस्तात्परस्ताच्च । विषुवन्तं मध्ये स्थित उपगच्छन्ति । कथं स्वित्ते इति । न च अध्यात्म किंचिद्दृश्यते इत्यभिप्रायः । शब्रासा.

त्रिवृत्प्रायाः सप्तदशाभिक्लृप्तास्त्रयस्त्रिंशान्ताश्चतुरुत्तरेण ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ ५ ॥

त्रिवृत्प्रायाः, त्रिवृता प्रयन्ति प्रवर्तन्ते इति त्रिवृत्प्रायाः । त्रिवृदादय इत्यर्थः । सप्तदशेन मध्ये स्थितेन अभिक्लृप्ताः अभिगताः सप्तदशाभिक्लृप्ताः । सप्तदशमध्या इत्यर्थः । त्रयस्त्रिंशान्ताः, त्रयस्त्रिंशः अन्तो येषा ते त्रयस्त्रिंशान्ताः पार्ष्ठिकाः स्तोमाः । चतुरुत्तरेण स्तोमेन सह ये दशरात्रे वर्तन्ते । छन्दोगेषु हि चतुर्विंशचतुश्चत्वारिंशस्तोमाः । तेषु ये चतुरुत्तरस्तोमाः । तेषु दिवसेषु स्थिता इत्यर्थः । कथं स्वित्ते पुरुषमिति व्याख्यातम् ।

शब्रासा.

शिरस्त्रिवृत्पञ्चदशोऽस्य ग्रीवा उर आहु. सप्तदशाभिक्लृप्तम् ।
एकविंशमुदरं कल्पयन्ति पार्श्वे पर्शूस्त्रिणवेनाभिक्लृप्ते ॥ ६ ॥

अभिप्लवा उभयतोऽस्य बाहू पृष्ठ्यं पृष्ठ्य इति धीरा वदन्ति ।
अनूकमस्य चतुरुत्तरेण संवत्सरे ब्राह्मणाः कल्पयन्ति ॥ ७ ॥

कर्णावस्याभिजिद्विश्वजिच्चाक्ष्या बाहुः स्वरसामाभिक्लृप्ते ।
नस्यं प्राणं विषुवन्तमाहुर्गोआयुषी प्राणावेताववाङ्गौ[1] ॥ ८ ॥

अङ्गान्यस्य दशरात्रमाहुर्मुखं महाव्रतं संवत्सरे ब्राह्मणाः कल्पयन्ति ।
सर्वस्तोमं सर्वसामानमेतं संवत्सरमध्यात्मं प्रविष्टम् ।
समं धीर आत्मना कल्पयित्वा ब्रध्नस्याऽऽस्ते विष्टपेऽजातशोकः ॥ ९ ॥

शिरस्त्रिवृदिति । त्रिवृत्प्राया इत्येतस्योत्तरम् । शिरः पुरुषस्य त्रिवृत्स्तोमः । तदपि त्रिष्टुबङ्गम् । अन्यानि स्पष्टानि च ।

शब्रासा.

प्रजापतिना नारायणाय प्रोक्ता यज्ञाङ्गभूता सर्वात्मविद्या

पुरुषं ह नारायणं प्रजापतिरुवाच यजस्वयजस्वेति । स होवाच । यजस्वयजस्वेति वाव त्वं मामात्थ । त्रिरयक्षि । वसवः प्रातःसवनेनागुः । रुद्रा माध्यन्दिनेन सवनेन । आदित्यास्तृतीयसवनेन । अथ मम यज्ञवास्त्वेव । यज्ञवास्तावेवाहमास इति ॥ १ ॥

स होवाच । यजस्वैव । अहं वै ते तद्वक्ष्यामि । यथा त उक्थ्यानि मणिरिव सूत्र ओतानि भविष्यन्ति । सूत्रमिव वा मणाविति ॥ २ ॥

तस्मा उ हैतदुवाच । प्रातःसवने बहिष्पवमान उद्गातारमन्वारभासै । श्येनोऽसि गायत्रच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय इति ॥ ३ ॥

अथ माध्यन्दिने पवमाने उद्गातारमन्वारभासै । सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय इति ॥ ४ ॥

(१) शब्रा. १२।३।४।१–११.

अथ तृतीयसवन आर्भवे पवमाने उद्गातारमन्वारभासै । ऋभुरसि जगच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय इति ॥ ५ ॥

अथ संस्थितेषु संस्थितेषु सवनेषु जपेः । मयि भर्गो मयि महो मयि यशो मयि सर्वमिति ॥ ६ ॥

अयं वै लोको भर्गः । अन्तरिक्षलोको महः । द्यौर्यशः । येऽन्ये लोकास्तत्सर्वम् ॥ ७ ॥

अग्निर्वै भर्गः । वायुर्महः । आदित्यो यशः । येऽन्ये देवास्तत्सर्वम् ॥ ८ ॥

ऋग्वेदो वै भर्गः । यजुर्वेदो महः । सामवेदो यशः । येऽन्ये वेदास्तत्सर्वम् ॥ ९ ॥

वाग्वै भर्गः । प्राणो महः । चक्षुर्यशः । येऽन्ये प्राणास्तत्सर्वम् ॥ १० ॥

तद्विद्यात्सर्वाँल्लोकानात्मन्नधिषि । सर्वेषु लोकेष्वात्मानमधाम् । सर्वान्देवानात्मन्नधिषि । सर्वेषु देवेष्वात्मानमधाम् । सर्वान्वेदानात्मन्नधिषि । सर्वेषु वेदेष्वात्मानमधाम् । सर्वान्प्राणानात्मन्नधिषि । सर्वेषु प्राणेष्वात्मानमधामिति । अक्षिता वै लोकाः । अक्षिता देवाः । अक्षिता वेदाः । अक्षिताः प्राणाः । अक्षितं सर्वम् । अक्षिताद्ध वा अक्षितमुपसंक्रामति । अप पुनर्मृत्युं जयति । सर्वमायुरेति । य एवमेतद्वेद ॥ ११ ॥

पुरुषमेध सर्वात्मभावसाधनम्

पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयं सर्वाणि भूतानि । अहमेवेदं सर्वं स्यामिति । स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत् । तमाहरत् । तेनायजत । तेनेष्ट्वाऽत्यतिष्ठत्सर्वाणि भूतानि । इदं सर्वमभवत् । अतितिष्ठति सर्वाणि भूतानि । इदं सर्वं भवति । य एवं विद्वान्पुरुषमेधेन यजते । यो वैतदेवं वेद ॥

अत्राध्याये पुरुषमेध उच्यते । राजा मन्त्रब्राह्मण इति सहस्रपुराणाधिमहाभाग्यः (१) सर्गान्तरे शयनावस्थाया कामितवान् । सर्वाणि भूतानि धर्मज्ञानवैराग्यैश्वर्यप्राप्तिप्राकाम्यादिभिश्च गुणैरतीत्य तिष्ठेयम् । कृतकर्तव्यः सन् मेध्यस्वः स्यामित्यर्थः । अहमेव च इदं सर्व चेतनाचेतन स्या भवेयम् । मम चित्तानुविधायि इद सर्वं स्यादित्यर्थः । ( स एत प्रकारे प्रमाण पुरुमेधाख्य यज्ञक्रतु एतच्छास्त्रानुसारेणैव, नारायणत्वं प्राप्नुया य अपश्यत् शास्त्रचक्षुषा ददर्शेत्यर्थः?) । तमाहरत् तत्साधनान्युपादत्त । तेनायमयजत । तेन समीहित फल साधित वानित्यर्थः । किं पुनस्तत्साधितवानित्यत आह — अत्यतिष्ठत्सर्वाणि भूतानीत्यादि । एतदितिहासेन क्रतु पत्तिवचनम् । अतितिष्ठति सर्वाणि भूतानीति फलवत्प्रयोगवाक्यम् । यो वा एतदेव वेद उपास्ते इत्युपासनाफलवचनम् । शब्रासा.

अथातो दक्षिणानाम् । मध्यं प्रति राष्ट्रस्य । यदन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्सपुरुषम् । प्राची दिग्घोतुः । दक्षिणा ब्रह्मणः । प्रतीच्यध्वर्योः । उदीच्युद्गातु. । तदेव होतृका अन्वाभक्ताः ॥

अथ यदि ब्राह्मणो यजेत । सर्ववेदसं दद्यात् । सर्वं वै ब्राह्मणः । सर्वं सर्ववेदसम् । सर्वं पुरुषमेधः । सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥

अथाऽऽत्मन्नग्नी समारोह्योत्तरनारायणेनाऽऽदित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्रेयात् । तदेव मनुष्येभ्यस्तिरोभवति । यद्यु ग्रामे विवत्सेत् । अरण्योरग्नी समारोह्योत्तरनारायणेनैवाऽऽदित्यमुपस्थाय गृहेषु प्रत्यवस्येत् । अथ तान्यज्ञक्रतूनाहरेत यानभ्याप्नुयात् । स वा एष न सर्वस्मा अनुवक्तव्यः । सर्वं हि पुरुषमेधः । नेत्सर्वस्मा इव सर्वं ब्रवाणीति । योऽन्वेव ज्ञातः । तस्मै ब्रूयात् । अथ योऽनूचानः । अथ योऽस्य प्रियः स्यात् । नेत्त्वेव सर्वस्मा इव ॥

अथाऽऽत्मन्नग्नी समारोह्य आत्मनि शरीरे अग्नी समारोप्य ‘अय ते योनिः’ ( शुस ३।१४ ) इतिमन्त्रेणोष्माण आस्ये कोष्ठे वा आवेश्य उत्तरनारायणेन, नारायणार्थः ‘अद्भ्यः संभृतः’ ( शुसं. ३१।१७–२२ ) इत्यनुवाको नारायणः । स पूर्वस्मान्नारायणादुत्तर इत्युत्तरनारायणः । तेन आदित्यमुपस्थाय अनपेक्षमाणोऽरण्यं गच्छेत् । तदेव तत्रैव मनुष्येभ्यस्तिरोभवति अन्तर्धीयते । ग्रामं न पुनः प्रविशति । वन एव वैखानस-

(१) शब्रा. १३।६।१।१.

(१) शब्रा. १३।६।२।१८–२०.

वृत्तेन वर्तते इत्यर्थः । स वा एष न सर्वस्मै, ज्ञातप्रियानूचानेभ्य एव पुरुषमेधो ग्रन्थतश्चार्थतश्चानुवक्तव्यो हिरण्यगर्भलक्षणः । ततः प्रागवस्थाभ्यः पुरुषार्थोऽय प्रतिषेधः । शब्रासा.

सर्वमेध सर्वात्मभावसाधनम्

ब्रह्म वै स्वयंभु तपोऽतप्यत । तदैक्षत । न वै तपस्यानन्त्यमस्ति । हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनीति । तत्सर्वेषु भूतेष्वात्मानं हुत्वा भूतानि चाऽऽत्मनि सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्यैत् । तथैवैतद्यजमानः सर्वमेधे सर्वान्मेध्यान्हुत्वा सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति ॥

ब्रह्म वै स्वयभु । यदेतदधुना ब्रह्म सर्वस्वभूतानां कर्तृ स्वयभु हिरण्यगर्भलक्षण ततः प्रागवस्थाया तपस्तप्त्वा तपसि निमित्ते आनन्त्य द्वित्वैकत्वलक्षण नास्तीत्यपश्यत् । सर्वमेधपूर्विकया सर्वात्मकत्वभावनया सर्वेषां भताना श्रैष्ठ्य, स्वाराज्य अन्यानधीनत्व, आधिपत्यं वृत्तमात्रेण प्रयोक्तृत्वम् । तथैवेति फलवचनम् । मेध्यान् मेधार्हान् यज्ञियान् स्थावरजङ्गमात्मकानर्थान् यज्ञात्मक आत्मनि हुत्वा तदनुकारेण द्वित्वैकत्वं भावयित्वा सर्वात्मकत्वभावनया सर्वेषा भूताना श्रैष्ठ्यादि परिगच्छतीति । शब्रासा.

स वा एष सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति । दशाक्षरा विराट् । विराडु कृत्स्नमन्नम् । कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै । तस्मिन्नग्निं पराध्यं चिनोति । परमो वा एष यज्ञक्रतूनां यत्सर्वमेधः । परमेणैवैनं परमतां गमयति ॥

स वा एष सर्वमेध इति । स वा एष इति वक्ष्यमाणसमुदायानुवादः । परस्मिन्नर्धे भागे भवः पराध्यः । एकशतविधः अग्नि. । शब्रासा.

अथातो दक्षिणानाम् । मध्यं प्रति राष्ट्रस्य । यदन्यद्ब्राह्मणस्य वित्तात्सभूमि सपुरुषम् । प्राची दिग्घोतुः । दक्षिणा ब्रह्मणः । प्रतीच्यध्वर्योः । उदीच्युद्गातुः । तदेव होतृका अन्वाभक्ताः ॥

सपुरुषमिति । दासाः पुरुषाः । तेषां दानसभवात् । शब्रासा.

तेन हैतेन विश्वकर्मा भौवन ईजे । तेनेष्ट्वाऽत्यतिष्ठत्सर्वाणि भूतानि । इदं सर्वमभवत् । अतितिष्ठति सर्वाणि भूतानि । इदं सर्वं भवति । य एवं विद्वान्त्सर्वमेधेन यजते । यो वैतदेवं वेद ॥

तेन हैतेन । विश्वकर्मा नाम्ना, राजा भुवनस्यापत्यम् । हिरण्यगर्भो वा विश्वकर्मा । भुवनेषु भूतेषु सर्वावेशी । स प्रागवस्थायामेतेन सर्वमेधेन ईजे ।

शब्रासा.

तं ह कश्यपो याजयांचकार । तदपि भूमिः श्लोकं जगौ । न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्मन्भौवन मन्द आसिथ । उपमङ्क्ष्यति स्या सलिलस्य मध्ये मृषैष ते संगरः कश्यपायेति ॥

त ह कश्यप ऋषिर्याजितवान् । अस्मै च विश्वकर्मा भूमिं दातुमियेष । तत्र च काले भूमिरपि इम श्लोकं गीतवती । न मा मर्त्यो मनुष्यः कश्चिदपि सकला दातुमर्हति । हे विश्वकर्मन्, भौवन, त्व तु मन्दः मन्दमतिर्जनः आसिथ बभूविथ जात इत्यर्थः । कथ स मन्द इत्यत आह—उपमङ्क्ष्यति स्या । उपशब्दो निःशब्दस्यार्थे । स्या सा त्वया दित्सिता अहं सलिलस्य मध्ये निमग्ना भवितुमिच्छामि । ततश्च ते एष सगरः प्रतिज्ञा मृषा अशक्य इत्यर्थः । यश्चाशक्यं प्रतिजानीते स कथं न मन्दः इत्यभिप्रायः । शब्रासा.

सर्वेषा वेदाना साङ्गाना यज्ञपर्यवसायित्वम्

तद्याः प्राच्यो नद्यो वहन्ति । याश्च दक्षिणाच्यः । याश्च प्रतीच्यः । याश्चोदीच्यः । ताः सर्वाः पृथङ्नामधेयीरित्याचक्षते । तासां समुद्रमभिपद्यमानानां छिद्यते नामधेयम् । समुद्र इत्याचक्षते । एवमिमे सर्वे वेदा निर्मिताः । सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्याताः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्याः । तेषां यज्ञमभिपद्यमानानां छिद्यते नामधेयम् । यज्ञ इत्येवाऽऽचक्षते ॥

(१) शब्रा १३।७।१।१–२.
(२) शब्रा १३।७।१।१३–१५.

(१) गोब्रा १।२।१०.

आत्मनिष्क्रयणो यज्ञ. आनन्त्यफल.

प्रजापतिरकामयताऽऽनन्त्यमश्नुयेति । सोऽग्नीनाधाय पूर्णाहुत्या यजेत । सोऽन्तमेवापश्यत्। सोऽग्निहोत्रेणेष्ट्वाऽन्तमेवापश्यत् । स दर्शपूर्णमासाभ्यामिष्ट्वाऽन्तमेवापश्यत्। स आग्रयणेनेष्ट्वाऽन्तमेवापश्यत्। स चातुर्मास्यैरिष्ट्वाऽन्तमेवापश्यत् । स पशुबन्धेनेष्ट्वाऽन्तमेवापश्यत्। सोऽग्निष्टोमेनेष्ट्वाऽन्तमेवापश्यत्। स राजसूयेनेष्ट्वा राजेति नामाधत्त । सोऽन्तमेवापश्यत्। स वाजपेयेनेष्ट्वा सम्राडिति नामाधत्त । सोऽन्तमेवापश्यत्। सोऽश्वमेधेनेष्ट्वा स्वराडिति नामाधत्त । सोऽन्तमेवापश्यत्। स पुरुषमेधेनेष्ट्वा विराडिति नामाधत्त। सोऽन्तमेवापश्यत् ।। स सर्वमेधेनेष्ट्वा सर्वराडिति नामाधत्त। सोऽन्तमेवापश्यत्। सोऽहीनैर्दक्षिणावद्भिरिष्ट्वाऽन्तमेवापश्यत् । सोऽहीनैरदक्षिणावद्भिरिष्ट्वाऽन्तमेवापश्यत् । सत्रेणोभयतोऽतिरात्रेणान्ततो यजेत। वाचं ह वै होत्रे प्रायच्छत्। प्राणमध्वर्यवे। चक्षुरुद्गात्रे। मनो ब्रह्मणे। अङ्गानि होत्रकेभ्यः। आत्मानं सदस्येभ्यः। एवमानन्त्यमात्मानं दत्वाऽऽनन्त्यमश्नूयेति। तद्या दक्षिणा अनयत्। ताभिरात्मानं निष्क्रीणीय तस्मादेतेन ज्योतिष्टोमेनाग्निष्टोमेनाऽऽत्मनिष्क्रयणेन सहस्रदक्षिणेन पृष्ठशमनीयेन त्वरेत । यो ह्यनिष्ट्वा पृष्ठशमनीयेन प्रैत्यात्मानं सोऽनिष्क्रीणीय प्रैतीति ब्राह्मणम् ॥

आध्यात्मिकमग्निहोत्रम्

अथात आध्यात्मिकमान्तरमग्निहोत्रमित्याचक्षते। एता ह वै देवताः पुरुष एव प्रतिष्ठिताः। अग्निर्वाचि । वायुः प्राणे । आदित्यश्चक्षुषि । चन्द्रमा मनसि। दिशः श्रोत्रे । आपो रेतसि। एतासु ह वै सर्वासु हुतं भवति। य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ १ ॥

स तृप्तो वाचं तर्पयति। वाक्तृप्ताऽग्निं तर्पयति। अग्निस्तृप्तः पृथिवीं तर्पयति। पृथिवी तृप्ता यत्किंच पृथिव्याऽपिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति। य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ २ ॥

स तृप्तः प्राणं तर्पयति। प्राणस्तृप्तो वायुं तर्पयति। वायुस्तृप्त आकाशं तर्पयति। आकाशस्तृप्तो यत्किंचाकाशेनापिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति। य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ३ ॥

स तृप्तश्चक्षुस्तर्पयति। चक्षुस्तृप्तमादित्यं तर्पयति। आदित्यस्तृप्तो दिवं तर्पयति। द्यौस्तृप्ता यत्किंच दिवाऽपिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति। य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ४ ॥

स तृप्तो मनस्तर्पयति । मनस्तृप्तं चन्द्रमसं तर्पयति । चन्द्रमास्तृप्तो नक्षत्राणि तर्पयति । नक्षत्राणि तृप्तानि मासांस्तर्पयन्ति। मासास्तृप्ता अर्धमासांस्तर्पयन्ति । अर्धमासास्तृप्ता अहोरात्रे तर्पयन्ति । अहोरात्रे तृप्ते ऋतूंस्तर्पयतः। ऋतवस्तृप्ताः संवत्सरं तर्पयन्ति । संवत्सरस्तृप्तो यत्किंच संवत्सरेणापिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति। य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ५ ॥

स तृप्तः श्रोत्रं तर्पयति। श्रोत्रं तृप्तं दिशस्तर्पयति। दिशस्तृप्ता अवान्तरदिशस्तर्पयन्ति । अवान्तरदिशस्तृप्ता यत्किंचावान्तरदिग्भिरपिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति। य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ६ ॥

स तृप्तो रेतस्तर्पयति । रेतस्तृप्तमपस्तर्पयति। आपस्तृप्ता नदीस्तर्पयन्ति। नद्यस्तृप्ताः समुद्रं तर्पयन्ति । समुद्रस्तृप्तो यत्किंच समुद्रेणापिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति । य एवं

(१) गोब्रा. १।५।८. (२) शाब्रा. १०।१-८.

विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥ ७ ॥

स तृप्तस्तदेतद्वैराजं दशविधमग्निहोत्रं भवति । तस्य प्राण एवाऽऽहवनीयः । अपानो गार्हपत्यः । व्यानोऽन्वाहार्यपचनः । मनो धूमः । मन्युरर्चिः । चिता । अङ्गाराः श्रद्धा । पयो वाक् । समित् सत्यम् । आहुतिः प्रज्ञात्मा । स रसः । तदेतद्वैराजं दशविधमग्निहोत्रं हुतं भवति । रोहाभ्यां रोहाभ्यामभ्यारूळ्हमभि स्वर्गं लोकं गमयति । य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च । अथ य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि हुतं तादृक्तत्स्यात् तादृक्तत्स्यात् ॥ ८ ॥

---

## अतिथियज्ञः

(१) यो विद्याद्ब्रह्म प्रत्यक्षं परूंषि यस्य संभारा ऋचो यस्यानूक्यम् ॥

सामानि यस्य लोमानि यजुर्हृदयमुच्यते परिस्तरणमिद्धविः ॥

यद्वा अतिथिपतिरतिथीन्प्रतिपश्यति देवयजनं प्रेक्षते ॥

यदभिवदति दीक्षामुपैति यदुदकं याचत्यपः प्र णयति ॥

या एव यज्ञ आपः प्रणीयन्ते ता एव ताः ॥

यत्तर्पणमाहरन्ति य एवाग्नीषोमीयः पशुर्बध्यते स एव सः ॥

यदावसथान्कल्पयन्ति सदोहविर्धानान्येव तत्कल्पयन्ति ॥

यदुपस्तृणन्ति बर्हिरेव तत् ॥

यदुपरिशयनमाहरन्ति स्वर्गमेव तेन लोकमव रुन्द्धे ॥

यत्कशिपूपबर्हणमाहरन्ति परिधय एव ते ॥

यदाञ्जनाभ्यञ्जनमाहरन्त्याज्यमेव तत् ॥

यत्पुरा परिवेषात्खादमाहरन्ति पुरोडाशावेव तौ ॥

यदशनकृतं ह्वयन्ति हविष्कृतमेव तद्ध्वयन्ति ॥

ये व्रीहयो यवा निरुप्यन्तेंऽशव एव ते ॥

यान्युलूखलमुसलानि ग्रावाण एव ते ॥

शूर्पं पवित्रं तुषा ऋजीषाभिषवणीरापः ॥

स्रुग्दर्विर्नेक्षणमायवनं द्रोणकलशाः कुम्भ्यो वायव्यानि पात्राणीयमेव कृष्णाजिनम् ॥

(१) यजमानब्राह्मणं वा एतदतिथिपतिः कुरुते यदाहार्याणि प्रेक्षत इदं भूया३ इदा३मिति ॥

यदाह भूय उद्धरेति प्राणमेव तेन वर्षीयांसं कुरुते ॥

उप हरति हवींष्या सादयति ॥

तेषामासन्नानामतिथिरात्मन् जुहोति ॥

स्रुचा हस्तेन प्राणे यूपे स्रुक्कारेण वषट्कारेण ॥

एते वै प्रियाश्चाप्रियाश्चर्त्विजः स्वर्गं लोकं गमयन्ति यदतिथयः ॥

(२) स य एवं विद्वान्न द्विषन्नश्नीयान्न द्विषतोऽन्नमश्नीयान्न मीमांसितस्य न मीमांसमानस्य ॥

सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति ॥

सर्वो वा एषोऽजग्धपाप्मा यस्यान्नं नाश्नन्ति ॥

सर्वदा वा एष युक्तग्रावार्द्रपवित्रो वितताध्वर आहृतयज्ञक्रतुर्य उपहरति ॥

प्राजापत्यो वा एतस्य यज्ञो विततो य उपहरति ॥

प्रजापतेर्वा एष विक्रमाननुविक्रमते य उपहरति ॥

योऽतिथीनां स आहवनीयो यो वेश्मनि स गार्हपत्यो यस्मिन्पचन्ति स दक्षिणाग्निः ॥

इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥

पयश्च वा एष रसं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥

ऊर्जां च वा एष स्फातिं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥

प्रजां च वा एष पशूंश्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥

कीर्तिं च वा एष यशश्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥

(१) असं. ९।६।१-१७.

(१) असं. ९।७।१-१३. (२) असं. ९।८।१-९.

श्रियं च वा एष संविदं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥
एष वा अतिथिर्यच्छ्रोत्रियस्तस्मात्पूर्वो नाश्नीयात् ॥
अशितावत्यतिथावश्नीयाद्यज्ञस्य सात्मत्वाय यज्ञस्याविच्छेदाय तद्व्रतम् ॥
एतद्वा उ स्वादीयो यदधिगवं क्षीरं वा मांसं वा तदेव नाश्नीयात् ॥
स य एवं विद्वान्क्षीरमुपसिच्योपहरति ॥
यावदग्निष्टोमेनेष्ट्वा सुसमृद्धेनावरुन्द्धे तावदेनेनाव रुन्द्धे ॥
स य एवं विद्वान्त्सर्पिरुपसिच्योपहरति ॥
यावदतिरात्रेणेष्ट्वा सुसमृद्धेनावरुन्द्धे तावदेनेनाव रुन्द्धे ॥
स य एवं विद्वान्मधूपसिच्योपहरति ॥
यावत्सत्त्रसद्येनेष्ट्वा सुसमृद्धेनावरुन्द्धे तावदेनेनाव रुन्द्धे ॥
स य एवं विद्वान्मांसमुपसिच्योपहरति ॥
यावद्द्वादशाहेनेष्ट्वा सुसमृद्धेनावरुन्द्धे तावदेनेनाव रुन्द्धे ॥
स य एवं विद्वानुदकमुपसिच्योपहरति ॥
प्रजानां प्रजननाय गच्छति प्रतिष्ठां प्रियः प्रजानां भवति य एवं विद्वानुदकमुपसिच्योपहरति ॥
तस्मा उषा हिङ्कृणोति सविता प्र स्तौति ॥
बृहस्पतिरूर्जयोद्गायति त्वष्टा पुष्ट्या प्रति हरति विश्वे देवा निधनम् ॥
निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥
तस्मा उद्यन्त्सूर्यो हिङ्कृणोति संगवः प्र स्तौति ॥
मध्यन्दिन उद्गायत्यपराह्णः प्रति हरत्यस्तंयन्निधनम् ॥
निधनं भूत्याः प्रजायाः पशूनां भवति य एव वेद ॥
तस्मा अभ्रो भवन्हिङ्कृणोति स्तनयन्प्र स्तौति ॥
विद्योतमानः प्रति हरति वर्षन्नुद्गायत्युद्गृह्णन्निधनम् ॥
निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥
अतिथीन्प्रति पश्यति हिङ्कृणोत्यभि वदति प्र स्तौत्युदकं याचत्युद्गायति ॥
उप हरति प्रति हरत्युच्छिष्टं निधनम् ॥
निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥
यत्क्षत्तारं ह्वयत्या श्रावयत्येव तत् ॥
यत्प्रतिशृणोति प्रत्याश्रावयत्येव तत् ॥
यत्परिवेष्टारः पात्रहस्ताः पूर्वे चापरे च प्रपद्यन्ते चमसाध्वर्यव एव ते ॥
तेषां न कश्चनाहोता ॥
यद्वा अतिथिपतिरतिथीन्परिविष्य गृहानुपोदैत्यवभृथमेव तदुपावैति ॥
यत्सभागयति दक्षिणाः सभागयति यदनुतिष्ठत उदवस्यत्येव तत् ॥
स उपहूतः पृथिव्यां भक्षयत्युपहूतस्तस्मिन्यत्पृथिव्यां विश्वरूपम् ॥
स उपहूतोऽन्तरिक्षे भक्षयत्युपहूतस्तस्मिन्यदन्तरिक्षे विश्वरूपम् ॥
स उपहूतो दिवि भक्षयत्युपहूतस्तस्मिन्यद्दिवि विश्वरूपम् ॥
स उपहूतो देवेषु भक्षयत्युपहूतस्तस्मिन्यद्देवेषु विश्वरूपम् ॥
स उपहूतो लोकेषु भक्षयत्युपहूतस्तस्मिन्यल्लोकेषु विश्वरूपम् ॥
स उपहूत उपहूतः ॥
आप्नोतीमं लोकमाप्नोत्यमुम् ॥
ज्योतिष्मतो लोकाञ्जयति य एवं वेद ॥

---

## दानम्

उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः ।

---

(१) असं. ९।९।१-१०.
(२) असं. ९।१०।१-१०.
(१) असं. ९।११।१-१४.
(२) ऋसं. १।१२५।४; तैसं. १।८।२२।४; कासं. ११।१२ (३९); मैसं. ४।११।२ (५३).

पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः ॥

पूर्वस्यामृचि आनीतेन धनेन सोमयाग कुर्वित्युक्तम्। तमेव सोमयाग फलप्रदर्शनेन स्तौति—सिन्धवः स्यन्दनशीलाः प्रस्तुतपयोधराः । 'सिन्धुः स्यन्दनात्' (नि. ९।२६) इति यास्कः । मयोभुवः सुखभावयित्र्यः । मय इति सुखनाम, 'मयः स्यूमकम्' (नि. ३।६।७) इति तन्नामसु पाठात् । धेनवः प्रीणयित्र्यो गावः ईजान सोमयागमनुतिष्ठन्त तथा यक्ष्यमाण यक्ष्ये इति प्रणतिं कुर्वन्तं च । न केवलमीजानं अपि तु यक्ष्ये इति अध्यवसितवन्तमपि उप उपेत्य क्षरन्ति स्रवन्ति प्रीणयन्तीत्यर्थः । न च पूर्वस्यामृचि सोम पिबेत्युक्तत्वात् सर्वेषां सोमयागानां अग्निष्टोमात्मकज्योतिष्टोमस्य प्रकृतस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति स्वर्ग एव फलत्वेन श्रुतः न गवादिकमिति वाच्यम् । स्वर्गवत् गवादिकामनयाऽपि सोमयागस्य कर्तुं शक्यत्वात् । न केवल सोमयागमनुतिष्ठतामेव महत्फलं, अपि तु सुकृतसाधनानि कर्मान्तराणि अधितिष्ठतामपि महत् फलमस्त्येवेति दर्शयति — पृणन्तं पितॄन् प्रीणयन्त पपुरिं प्रीणनशील इष्टदातार प्राणिनः सर्वदा प्रीणयन्तं च पुरुष श्रवस्यवः अन्नमिच्छन्त्यः अन्नसमृद्धिहेतवः घृतस्य धाराः । यद्वा, घृतकुल्याः विश्वतः सर्वतः उप उपेत्य यन्ति प्राप्नुवन्ति प्रीणयन्तीत्यर्थः ।    ऋसा.

* [1]नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति ।
तस्मा आपो घृतमर्षन्ति सिन्धवस्तस्मा इयं दक्षिणा पिन्वते सदा ॥
दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः ।
दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्र तिरन्त आयुः ॥
मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः ।

[1]अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभि सं यन्तु शोकाः ॥
न वा उ देवाः क्षुधमिद्वधं ददुरुताशितमुप गच्छन्ति मृत्यवः ।
उतो रयिः पृणतो नोप दस्यत्युतापृणन्मर्डितारं न विन्दते ॥

अत्र धनस्य अन्नस्य च दान स्तूयते । भिक्षुः प्रथमं व्यतिरेकमुखेनान्नदानं प्रशसति—देवाः वै देवाः खलु सर्वेषा क्षुध न ददुः न प्रायच्छन्, किन्तु वध इत् वधमेव दत्तवन्तः । एतादृशीं वधरूपां क्षुध अन्नदानेन यः शमयति स दाता खलु । उ इति पूरणः । योऽदत्त्वा भुङ्क्ते तमाशितं भुञ्जानं पुरुषमपि मृत्यवः मरणानि उप गच्छन्ति समीपे यान्ति । क्षुधार्तानां भोक्तृणा च मरण समानम् । किं दानेन धननाशरूपेण, अत आह — उतो । उतशब्दोऽप्यर्थे । पृणतः प्रयच्छतः पुरुषस्य रयिः धन नोप दस्यति नोपक्षीयते । दानप्रसङ्गेन अदातारं दूषयति—अपृणन् अप्रयच्छन् पुरुषस्तु मर्डितारं आत्मनः सुखयितार न विन्दते न कुत्रापि लभते । इह बन्धवोऽप्रदानान्न सुखयन्ति देवा अपि, हविष्प्रदानाभावात् ।

ऋसा.

[2]य आध्राय चकमानाय पित्वोऽन्नवान्त्सन्रफिताय़ोपजग्मुषे ।
स्थिरं मनः कृणुते सेवते पुरोतो चित्स मर्डितारं न विन्दते ॥

यः पुरुषः स्वयमन्नवान्सन्नपि आध्राय, आधार्यतेऽसौ इत्याध्रो दुर्बलः, तस्मै पित्वः पितून् अन्नानि चकमानाय कामयमानाय, रफिताय । रफतिर्हिंसार्थः । दारिद्र्येण हिंसिताय, उपजग्मुषे गृह प्रत्यागताय अतिथये मनः आत्मीयमन्तःकरण अदाने स्थिर कृणुते कुरुते। मनःस्थैर्यकरणेन त क्लेशयतीत्यर्थः । न केवल क्लेशकरण, अपि तु पुरा तस्य पुरस्तादेव सेवते भोगान् । सोऽपि मर्डितारं आत्मनः सुखयितारं न विन्दते न कुत्रापि लभते ।    ऋसा.

---

* एतेषा व्याख्यानं जीवगतिप्रकरणे ३५२-३५३ पृष्ठयोर्द्रष्टव्यम् ।

(१) ऋसं. १।१२५।५-७.

(१) ऋसं. १०।११७।१.

(२) ऋसं. १०।११७।२.

स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय ।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥

अन्वयमुखेन प्रशंसति — स इत् स एव भोजः दाता खलु, यो गृहवे प्रतिग्रहीत्रे, अन्नकामाय अन्नं याचमानाय, चरते गृहमागतवते, कृशाय दारिद्र्येणैतादृशाय अतिथयेऽन्नं ददाति प्रयच्छति । यामहूतौ, यामा गन्तारो देवाः, ते आहूयन्तेऽत्रेति यामहूतिर्यज्ञः, तस्मिन् अस्मै दात्रे फलं अरं अलं पर्याप्तं भवति । कामप्रदानं भवतीत्यर्थः । उत अपि च अपरीषु अन्यासु शात्रवीषु सेनासु सखायं कृणुते । तद्वदाचरतीत्यर्थः । तस्य सर्वे सखाय एव, न शत्रव इत्यर्थः । ऋसा.

[2] न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः ।
अपास्मात्प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत् ॥

व्यतिरेकेण निन्दामाह—सः पुरुषः सखा न भवति, यः पुरुषः सचाभुवे सर्वदा सहभवनशीलाय, सचमानाय सेवमानाय उपसर्जनीभूताय सख्ये सखिजनाय पित्वः पितूनन्नानि न ददाति न प्रयच्छति । स सुहृन्न भवतीत्यर्थः । अस्मात् अदातुः सख्युः सः अप प्रेयात् अपगच्छेत् । यद्येनं परित्यज्य गच्छेत्तर्हि तदोकः निवासः सदनं न अस्ति न भवति । सदनं हि बन्धुभिः परिवृतम् । स गतः पुरुषः पृणन्तं अन्नादिकं प्रयच्छन्तं अन्यं अरणं चित् अर्यं स्वामिनमेव इच्छेत् कामयेत । ऋसा.

[3] पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनु पश्येत पन्थाम् ।
ओ हि वर्तन्ते रथ्येव चक्रान्यमन्यमुप तिष्ठन्त रायः ॥

धनवन्तं पुरुषं दाने प्रेरयति—तव्यान् तवीयान् धनैरतिशयेन प्रवृद्धः पुरुषो नाधमानाय याचमानायातिथये पृणीयादित् धनानि दद्यादेव । यदि दद्यात्, द्राघीयांसं दीर्घतमं पन्थां पन्थानं सुकृतमार्गं अनु पश्येत अनुपश्येत् । तत्र कारणमाह—रायः धनानि ओ हि आ उ आ वर्तन्ते एव खलु, एकत्र न तिष्ठन्तीत्यर्थः । तत्र दृष्टान्तः — रथ्येव यथा रथ्यानि रथसंबन्धीनि चक्रा चक्राणि उपर्यधोभावेनाऽऽवर्तन्ते तद्वत् । आवृत्तिमेव दर्शयति —अन्यमन्यं पुरुषं धनानि उप तिष्ठन्त उपतिष्ठन्ते, समवेतानि भवन्ति । तस्माद्धनानि देयानीति भावः । ऋसा.

[1] मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥

अदातारं दूषयति— अप्रचेताः अप्रकृष्टज्ञानः दाने चेतो मनो यस्य न भवति स मोघं व्यर्थमेव अन्नं विन्दते लभते । इदं सत्यं यथार्थमेवेति ब्रवीमि ऋषिरहं वदामि । न केवलं व्यर्थं, किंतु तस्य पुरुषस्य सः वध इत् वध एव अन्नं परामृशतः । अथवा, स निरर्थको वध एव । यः पुरुषः अर्यमणम् । उपलक्षणमिदम् । सर्वान्देवानर्यमादीन्न पुष्यति हविष्प्रदानेन न पोषयति । नो नापि सखायं समानख्यानमभ्यागतमतिथिं मित्रवर्गं च न पोषयति । अत एव केवलादी केवलं असाक्षिकं अन्नं भुञ्जानः सः केवलाघो भवति केवलपापवान्भवति । अघमेव केवलं तस्य शिष्यते, नैहिकं नामुष्मिकमिति । तस्माद्यथाकथंचिद्दातव्यमित्यभिप्रायः । ऋसा.

[2] कृषन्नित्फाल आशितं कृणोति यन्नध्वानमप वृङ्क्ते चरित्रैः ।
वदन्ब्रह्माऽवदतो वनीयान् पृणन्नापिरपृणन्तमभि ष्यात् ॥

कृषन् कृषिं कुर्वन् फालः आशितं कर्षकं भोक्तारं कृणोति करोति । तथा अध्वानं मार्गं यन् गच्छन् पुरुषः चरित्रैः आत्मीयैर्गमनैः अप वृङ्क्ते स्वामिनो धनमावर्जयति । वदन् शास्त्रार्थं ब्रुवाणः ब्रह्मा ब्राह्मणः

(१) ऋसं. १०।११७।३.
(२) ऋसं. १०।११७।४.
(३) ऋसं. १०।११७।५.

(१) ऋसं. १०।११७।६; तैब्रा. २।८।८।३.
(२) ऋसं. १०।११७।७.

अवदतः शास्त्रार्थमब्रुवाणाज्जनात् वनीयान् संभक्तृतमः प्रियकरो भवति। ते यथा स्वकर्मणि प्रवर्तमानाः परेषामुपकारकाः, तथा पृणन् दाता पुरुषः अपृणन्त अदातारं जन अभि अभिलक्ष्य आपिः स्यात् बन्धुर्भवेत्।

ऋसा.

**एकपाद्भूयो द्विपदो वि चक्रमे द्विपात्त्रिपादमभ्येति पश्चात्।**
**चतुष्पादेति द्विपदामभिस्वरे संपश्यन्पङ्क्तीरुपतिष्ठमानः ॥**

अत्र पादशब्दो भागवचनः। एकपात् एकभागधनः पुरुषः द्विपदो द्विगुणधनस्य मार्गं भूयः भूयसा कालेन वि चक्रमे विविध गच्छति। तथा द्विपात् पुरुषः त्रिपाद त्रिभागधनं पुरुषं पश्चाद्भ्येति अभि गच्छति। चतुष्पात् चतुर्भागधनस्तु द्विपदाम्। बहुवचनादेकपादादय उपलक्ष्यन्ते। एकपादधनादीना पङ्क्तीः अभिस्वरे अभिगमने संपश्यन् सम्यगीक्षमाणः सन् उपतिष्ठमानः एति ( सं )गच्छमानो भवति। अन्योन्यापेक्षया सर्वे उत्तमाधमाः। तस्मात्त्व अहमेव धनवानिति न मन्येः। किंत्वतिथिभ्यो धनानि ददस्वेत्यर्थः। ऋसा.

**समौ चिद्धस्तौ न समं विविष्टः संमातरा चिन्न समं दुहाते।**
**यमयोश्चिन्न समा वीर्याणि ज्ञाती चित्सन्तौ न समं पृणीतः ॥**

अतिथिभ्यो धनमप्रयच्छन्नपि ( च्छतोऽपि ? ) मम भ्राता दास्यतीति चेत्तत्र हेतुमाह—समौ चित् हस्तौ समावपि समं समानं न विविष्टः कार्ये न व्याप्नुतः। तथा समातरा वत्सस्य मातरौ धेनू समे अपि समं समानं पयो न दुहाते। यमयोश्चित् सहजातयोः पुत्रयोरपि समा समानि वीर्याणि न सन्ति। तस्मात् ज्ञाती चित् एकस्मिन्कुले सन्तौ जातावपि सम न पृणीतः न प्रयच्छतः। तस्माद्यस्य धनमस्ति स एव दद्यादित्यर्थः।

ऋसा.

**भूमिष्ट्वा प्रति गृह्णात्वन्तरिक्षमिदं महत्।**
**माऽहं प्राणेन माऽऽत्मना मा प्रजया प्रतिगृह्य वि राधिषि ॥**

हे देयद्रव्य त्वा त्वा भूमिः भूदेवता प्रतिगृह्णातु। तथा महत् अधिकं विस्तीर्णमिद अन्तरिक्षं च त्वा त्वां प्रति गृह्णातु। अतोऽहं प्रतिगृह्य प्रतिग्रहं कृत्वा तज्जनितदोषात् प्राणेन मुखनासिकाभ्यां सचरता जीवावस्थितिलिङ्गेन मा वि राधिषि राद्धो वर्जितो मा भूवम्। तथा आत्मना जीवेन तद्विशिष्टशरीरेण वा मा वि राधिषि। तथा प्रजया पुत्रपौत्रादिलक्षणया मा वि राधिषि।

असा.

**अहमस्मि प्रथमजा ऋतस्य। पूर्वं देवेभ्यो अमृतस्य नाभिः।**
**यो मा ददाति स इदेव माऽऽवाः। अहमन्नमन्नमदन्तमद्मि ॥**

बह्वृचा आरण्यकाण्डे त्रिविधमन्नमामनन्ति—'त्रेधा विहित वा इदमन्नमशन पान खादः' ( ऐआ. २।३।४ ) इति। तस्याशनादेस्त्रिविधस्यान्नस्याभिमानिनी या देवता तदीयानि वचनान्यस्मिन् सूक्ते प्रतिपाद्यन्ते। अहमन्नस्वामी देवः ऋतस्य यज्ञस्य प्रथमजाः प्रथमं जनयिताऽस्मि। यज्ञस्य हविर्जन्यत्वाद्धविषोऽन्नरूपत्वात्। तादृशोऽहमन्नस्वामी पूर्वं पुरा देवेभ्यो देवार्थममृतस्य नाभिर्बन्धकोऽस्मि। नह्यति बध्नात्यमृतमिति नाभिः। देवा ह्यमृतमुपजीवन्ति। अमृत चान्नविशेषः, तस्मादहमेवामृतस्य सपादकः। यः श्रद्धालुः पुमान् मा मामन्नरूप ददाति ब्राह्मणादिभ्यः प्रयच्छति, स इदेव स दाता स्वयमेव मा मामन्नदेवं आवाः आवृणोति स्वीकरोतीत्यर्थः। द्वौ हि लोके पुरुषौ दाता चादाता च। तत्र आद्यः कालान्तरे भोक्तु मा संगृह्णाति। यावदन्नमिदानीं दीयते तावत्येव कालान्तरे शतधा सहस्रधा वर्धते। तस्माद्दातैव मा सगृह्णाति। यस्त्वन्तिमो मामदत्त्वा स्वयमेव अत्ति अहमेवान्नमद्मीत्यभिमन्यते, तं अन्नमदत्ताभिमानिनं

(१) ऋसं. १०।११७।८; असं. १३।३।२५ एकपाद्भूयो द्विपदो ( एकपाद्द्विपदो भूयो ) चतुष्पादेति ( चतुष्पाच्चक्रे ) क्तीरुप ( क्तिमुप ).

(२) ऋसं. १०।११७।९.

(१) असं. ३।२९।८. (२) तैब्रा. २।८।८।१-४.

अन्नदेवोऽहमद्मि त विनाशयामि । अदातुः कालान्तरेऽन्नाभावात् । तैब्रासा.

**पूर्वमग्नेरपि दहत्यन्नम् । यत्तौ ह्याऽऽसाते अहमुत्तरेषु ।**

**व्यात्तमस्य पशवः सुजम्भम् । पश्यन्ति धीराः प्रचरन्ति पाकाः ॥**

यदिदमन्न अग्नेरपि पूर्वमदातृभिर्भुज्यते, तदिदमन्न तं भोक्तार दहति । अथ भुक्तमन्न उदराग्निर्दिनमात्रेण दहति पाचयति । अदाता तु भोक्ता भुज्यमानेनान्नेन तदानीमेव दह्यते, नरकहेतोः प्रत्यवायस्य तदैवोत्पन्नत्वात् । अत एवाऽऽहुः 'अदाता विषमश्नुते' इति । यत्तौ ह्य प्रयत्नवन्तावेवाऽऽसाते दाता चादाता चेत्युभौ तिष्ठतः । दाता हि दानार्थं प्रयत्न करोति । इतरस्तु भोजनार्थम् । तयोर्मध्ये ये पुरुषा दातुः पक्षे वर्तन्ते, त एवोत्तराः श्रेष्ठाः । तेषूत्तरेषु दातृषु कालान्तरेष्वहमक्षीणो वसानि । ये पशवो मूढा अदातारः तान् प्रत्यस्यान्नदेवस्य मुख व्यात्त विवृत्त सुजम्भं तीक्ष्णदन्तोपेत वर्तते खादयाम्यदातॄनिति सर्वदा उद्युङ्क्ते इत्यर्थः । एतमन्नदेवस्याभिप्राय दातारो धीरा बुद्धिमन्तः पश्यन्ति जानन्ति । अत एवाददतः पाका बाला मूढाः प्रचरन्ति प्रकर्षेण भक्षयन्त्येव न तु किंचिदपि ददति । तैब्रासा.

**जहाम्यन्यं न जहाम्यन्यम् । अहमन्नं वशमिच्चरामि ।**

**समानमर्थं पर्येमि भुञ्जत् । को मामन्नं मनुष्यो दयेत ॥**

अन्नदेवोऽह अन्नमदातार जहामि परित्यजामि । अन्यं तु दातार न जहामि । अहमिन्न अन्नदेवरूपोऽहं वशमित् स्ववशमेव यथा भवति तथा चरामि । अदातुः परित्यागो दातृस्वीकारश्चेत्येतत्स्ववशत्वम् । यः पुमान् भोगदानयोः समानः सन् धनमर्थयते, तं समानमर्थयितारं भुञ्जत् पालयन्नह पर्येमि परितः प्राप्नोमि । यस्तु भोगमात्रलम्पटः, तं न पालयामि नापि त पर्येमीत्यभिप्रायः । एवमदातृपरित्यागेन दातृपक्षपातेन च वर्तमान मां को मनुष्यो दयेत रक्षेन्निवारयेत्, न कोऽपि मां निवारयितुं शक्त इत्यर्थः ।

तैब्रासा.

**पराके अन्नं निहितं लोक एतत् । विश्वैर्देवैः पितृभिर्गुप्तमन्नम् ।**

**यदद्यते लुप्यते यत्परोप्यते । शततमी सा तनूर्मे बभूव ॥**

पूर्वस्मिन्मन्त्रे वशमिच्चरामि, मा को दयेतेति यत्स्वातन्त्र्यमुक्त, तदुपपादयितुं स्वमाहात्म्यमत्र वर्ण्यते--द्विविधो ह्यन्नस्य व्यवहारः पारलौकिक ऐहिकश्चेति । तत्र पराके परलोके दूरस्थे पित्रादिलोके एतदन्न निहितम् । दाता हि देवलोके पितृलोके वा ममेद भूयादित्यभिप्रेत्यैव ब्राह्मणेभ्यो ददाति । अतो दत्तमन्न दूरस्थे लोके निहित भवति । तच्चान्न तत्तल्लोके विश्वैः सर्वैर्देवैः पितृभिश्च स्वार्थं गुप्त रक्षित भवति । यदग्नौ हुत यच्च ब्राह्मणेभ्यो दत्तं तदेवोपजीव्य देवाः पितरश्च वर्तन्ते । एवं पारलौकिकोऽन्नव्यवहारः उक्तः । ऐहिकोऽपि व्यवहार उच्यते---यदन्नमद्यते प्राणिभिर्भक्ष्यते, यच्च विदग्ध सद्भाण्डेऽपि भवति पर्युषितत्वेन वा पूतीभवति, तादृश लुप्यते नष्ट भवति । यच्च परोप्यते स्वकीयैश्वर्यप्रकटनाय बहिः परित्यज्यते, सा सर्वोऽप्यैहिकामुष्मिकान्नरूपा मे अन्नस्वामिनो देवस्य शततमीः शतसंख्यापूरणी तनूः । स च सर्वोऽपि लेश एवेत्यर्थः । ईदृश मदीय माहात्म्यम् । तैब्रासा.

**महान्तौ चरू सकृद्दुग्धेन पप्रौ । दिवं च पृश्नि पृथिवीं च साकम् ।**

**तत्संपिबन्तो न मिनन्ति वेधसः । नैतद्भूयो भवति नो कनीयः ॥**

पुनरपि माहात्म्यमेव प्रपञ्च्यते । तत्राय दृष्टान्तः--यथा लोके बहुक्षीरप्रदाया गोः सकृद्दुग्धेन महान्तौ चरू प्रौढौ कुम्भौ पूरयति, एवमत्रापि पृश्नि स्वल्पमपि दत्तमन्नं दिव च पृथिवीं च साकं लोकद्वयमपि सह पूरयति । अग्नौ ब्राह्मणेषु वा दत्तमन्न मन्त्रपूत सत् सहस्रधा फलति । अत एवान्यत्राऽऽम्नायते---'यावदेका देवता कामयते यावदेका तावदाहुतिः प्रथते' (तैब्रा. ३।२।६।४) इति । तदन्न संपिबन्तः सम्यग्भक्षयन्तो वेधसो बुद्धिमन्तो न मिनन्ति न हिंसन्ति स्वात्मानमन्नं वा न विनाशयन्ति । दानपूर्वकं भक्षणं सम्यग्भक्षणं, तत्कुर्वन्तः पुरुषा अन्नं न हिंसन्ति, तत्तस्यान्नस्य च वर्धमानत्वात् ।

स्वात्मानमपि न हिंसन्ति प्रवृद्धस्यान्नस्य च चिरभोक्तृत्वात्। अपि चैतद्भोजनार्थमन्नं न भूयो नापि कनीयः। भूयस्त्वे स्यादजीर्तिः कनीयस्त्वे नास्ति क्षुन्निवृत्तिः। एतदेवाभिप्रेत्य स्मर्यते — 'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः' ( भ. गी. ६।१६ ) इति। एवं दानपुरःसर युक्तेन प्रमाणेन भुञ्जानान् पुरुषाँल्लोकद्वये पालयतीत्यर्थः। तैब्रासा.

**अन्नं प्राणमन्नमपानमाहुः। अन्नं मृत्युं तमु जीवातुमाहुः।**
**अन्नं ब्रह्माणो जरसं वदन्ति। अन्नमाहुः प्रजननं प्रजानाम्॥**

सर्वव्यवहारकारणत्वादस्यान्नस्य माहात्म्यमविवादम्। तत्कथमिति तदुच्यते — योऽय प्राणवायुरूर्ध्वं सचरति यश्चापानवायुरधः संचरति, तावुभावन्नजन्यबलादेव सचरतः। अतस्तयोरन्नात्मकत्वमाहुः। रसवैषम्येण व्याधिद्वारा मारकत्वादन्नं मृत्युमाहुः। तमेवान्नदेव जीवातु जीवनौषधमाहुः। तच्च लोके प्रसिद्धम्। ब्रह्माणः आयुर्वेदशास्त्राभिज्ञा ब्राह्मणा अन्नमेव जरस वदन्ति जराहेतुमाहुः। केनचिदाहारविशेषेण सहसाऽतिपलितत्वप्राप्तिरित्यायुर्वेदप्रसिद्धिः। अन्नमेव इन्द्रियवृद्धिद्वारा प्रजाना प्रजननमुत्पादकमाहुः।

तैब्रासा.

**मोघमन्नं विन्दते अप्रचेताः। सत्यं ब्रवीमि वध इत्स तस्य।**
**नार्यमणं पुष्यति नो सखायम्। केवलाघो भवति केवलादी॥**

योऽयमदाता, सोऽयमप्रचेताः प्रकृष्टज्ञानरहितो मोघं व्यर्थमेवान्नं विन्दते लभते। तदेतत्सत्य ब्रवीमि न केवल वैयर्थ्यं, किंतु सोऽयमदत्तोऽन्नपदार्थः तस्य दानरहितस्य पुरुषस्य वध इत् वध एव वधवद्बाधकमेवेत्यर्थः। तत्र वैयर्थ्यं तावत् स्पष्टीक्रियते—योऽयमदाता, सोऽय अन्नेनार्यमादिकं देव न पुष्यति, अग्नावाहुत्यभावात्। सखायमतिथ्यादिरूप मनुष्यं न पुष्यति, दानाभावात्। अतः परलोकेऽनुपयोगेन वैयर्थ्यम्। वधहेतुत्वं स्पष्टीक्रियते— केवलादी केवलं भुङ्क्ते न तु ददाति, सोऽय केवलाघो भवति पापमेव संपादयति न तु किंचिदपि पुण्यम्। सोऽयं वध एव, नरकहेतुत्वात्।

तैब्रासा.

**अहं मेघः स्तनयन् वर्षन्नस्मि। मामदन्त्यहमद्म्यन्यान्।**
**अहꣳ सदमृतो भवामि। मदादित्या अधि सर्वे तपन्ति॥**

योऽयं मेघः स्तनयन् गर्जन् वर्षश्च वर्तते, सोऽय मेघोऽप्यहमन्नदेवोऽस्मि, अग्नौ हुतस्यान्नस्य मेघरूपेण परिणतत्वात्। अत एव स्मर्यते— 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः' इति। दातारो ये सन्ति, ते मामदन्ति सुखेन भक्षयन्ति। अन्यांस्तु दानरहितानहमेवाद्मि विनाशयामि। अहमेव दातॄणां पथ्यं सत् अमृतो भवाम्यमरणहेतुर्भवामि, देवत्वं प्रापयामीत्यर्थः। सर्वेऽप्यादित्या मदन्ननिमित्तत्वादधिकत्वेन तपन्ति। अन्नाभावे ते स्वयमेव न जीवेयुः, कुतस्तपेयुरित्यर्थः। तैब्रासा.

## उपकारः

[1]साग्रं वर्षशतं जीव पिब खाद च मोद च।
दुःखितांश्च द्विजांश्चैव प्रजां च पशु पालय॥
यावदादित्यस्तपति यावद्भ्राजति चन्द्रमाः।
यावद्वायुः प्लवायति तावज्जीव तया सह॥
येन केन प्रकारेण को वीनाममनु जीवति।
परेषामुपकारार्थं यज्जीवति स जीवति॥
एतां वैश्वानरीं सर्वदेव नमोऽस्तु ते॥
न चोरभयं न च सर्पभयं न च व्याघ्रभयं न च मृत्युभयम्।
यस्यापमृत्युर्न च मृत्युः स सर्वं लभते स सर्वं जयते॥

## सांमनस्यम्

[2]संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ।
इळस्पदे समिध्यसे स नो वसून्या भर॥

(१) ऋसं. ( खिल ) ४।७।७-१०.
(२) ऋसं. १०।१९१।१, असं. ६।६३।४; तैसं. २।६।११।४, ४।४।४।४, कासं. २।१५ (९२), मैस.

हे वृषन् कामाना वर्षितः अग्ने, अर्यः ईश्वरस्त्वम्। सः त्वं विश्वानि सर्वाणि भूतजातानि ससम्। 'प्रसमुपोदः पादपूरणे' (पा. सू. ८।१।६) इति समो द्विर्वचनम्। इच्छब्दोऽवधारणे। आ समन्तात् स युवसे मिश्रयसि। देवेषु मध्ये त्वमेव सर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि, नान्य इत्यर्थः। किंच इळः इडायाः पृथिव्याः पदे स्थाने उत्तरवेदिलक्षणे। 'एतद्वा इळायास्पद, यदुत्तरवेदीनाभिः' (ऐब्रा. ५।२।२३) इति ब्राह्मणम्। तत्र त्व समिध्यसे ऋत्विग्भिः सदीप्यसे। सः तादृशस्त्व नः अस्माक वसूनि धनानि आ भर आहर। 　　ऋसा.

[1]सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते ॥

हे स्तोतारः, यूय स गच्छध्व सगताः सभूता भवत। तथा स वदध्व सह वदत। परस्परं विरोध परित्यज्यैकविधमेव वाक्यं ब्रूतेति यावत्। वः युष्माकं मनांसि स जानताम्। समानमेकरूपमेवार्थमवगच्छन्तु। यथा पूर्वे पुरातनाः देवाः सजानानाः ऐकमत्य प्राप्ता हविर्भाग उपासते यथास्व स्वीकुर्वन्ति, तथा यूयमपि वैमत्य परित्यज्य धनं स्वीकुरुतेति शेषः। 　　ऋसा.

[2]समानो मन्त्रः समितिः समानी समानं मनः
सह चित्तमेषाम्।
समानं मन्त्रमभि मन्त्रये वः समानेन वो
हविषा जुहोमि ॥

पूर्वोऽर्धर्चः परोक्षकृतः। उत्तरः प्रत्यक्षकृतः। एषा एकस्मिन्कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणा वा मन्त्रः स्तुतिः शस्त्राद्यात्मिका, गुप्तभाषण वा समानः एकविधोऽस्तु। तथा समितिः प्राप्तिरपि समानी एकरूपा अस्तु। तथा मनः मननसाधनमन्तःकरणं चैषा समान एकविधमप्यस्तु। चित्त विचारज ज्ञानं तथा सह सहित परस्परस्यैकार्थेनैकीभूतमस्तु। अह च वः युष्माकं समानं एकविध मन्त्रं अभि मन्त्रये ऐकविध्याय संस्करोमि। तथा वः युष्माक स्वभूतेन समानेन साधारणेन हविषा चरुपुरोडाशादिना अह जुहोमि। वषट्कारेण हविः प्रक्षेपयामीत्यर्थः। 　　ऋसा.

समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति ॥

हे ऋत्विग्यजमानाः, वः युष्माक आकूतिः सकल्पोऽध्यवसायः समानी एकविधोऽस्तु। तथा वः युष्माक हृदयानि समाना समानान्येकविधानि सन्तु। तथा वः युष्माक मनः अन्तःकरणम्। प्रत्येकापेक्षयैकवचनम्। तदपि समानमस्तु। यथा वः युष्माक सुसह शोभन साहित्य असति भवति, तथा समानमस्त्वित्यन्वयः। 　　ऋसा.

[2]संज्ञानमुशना वदत् संज्ञानं वरुणो वदत्।
संज्ञानमिन्द्रश्चाग्निश्च संज्ञानं सविता वदत् ॥
[3]संज्ञानं नः स्वेभ्यः संज्ञानमरणेभ्यः।
संज्ञानमश्विना युवमिहास्मासु नि यच्छताम् ॥

नः अस्माक स्वैः स्वकीयैः पुरुषैः सह सज्ञानं ऐकमत्यमस्तु। अरणैः गमनैः व्यवहारविशेषैः सज्ञानं ऐकमत्यमस्तु। हे अश्विनौ युवामिह लोके अस्मासु सर्वेष्वपि सज्ञानं ऐकमत्यं नियच्छतं नियतं कुरुतम्।

---

२।१३।७ (४०), ४।११।१ (१३), ४।१२।५ (१२४), ४।१४।१६ (२२८), शुसं. १५।३०.

(१) ऋसं. १०।१९१।२; असं. ६।६४।१ सं गच्छध्वं सं वदध्वं (संजानीध्वं सं पृच्यध्वं); मैसं २।२।६ (२८) सं वदध्वं (सं जानीध्वं), तैब्रा. २।४।४।४ पासते (पासत).

(२) ऋसं. १०।१९१।३; असं. ६।६४।२ मनः (व्रतं) उत्तरार्धे (समानेन वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम्) मैसं. २।२।६ (२७) मनः (व्रतं) समानं मन्त्रमभि मन्त्रये व (समानं क्रतुमभिमन्त्रयध्वं); तैब्रा. २।४।४।५ उत्तरार्धे (समानं केतो अभि संरभध्वम्। सज्ञानेन वो हविषा यजामः).

(१) ऋसं. १०।१९१।४; असं ६।६४।३; कासं १०।१२ (३८) समानी व (समाना व), मैसं. २।२।६ (२६) समानी व आकूतिः (समाना वा आकूतानि), तैब्रा. २।४।४।५.

(२) ऋसं (खिल) ५।१।१.

(३) ऋसं. (खिल) ५।१।२, असं. ७।५२।१ स्वेभ्यः (स्वेभिः) रणेभ्यः (रणेभिः) यच्छताम् (यच्छतम्); कासं. १०।१२ (३३) नि यच्छताम्- (नियच्छतम्); मैसं. २।२।६ (२२) मिहास्मासु नि यच्छताम् (मिहास्मभ्यं वियच्छतम्); तैब्रा. २।४।४।६ स्वेभ्यः (स्वैः) रणेभ्य. (रणैः) शेषं कासंवत्.

बृहस्पतिर्देवो मे मदीयसंघस्य संज्ञानं ऐकमत्यं करोतु। सविता च संज्ञानमैकमत्य करोतु। हे अश्विनौ युवां मह्यं मदर्थं इह मदीये जने सज्ञानं नियच्छतम्।

तैब्रासा. २।४।४।६

[1]यत्कक्षीवान्त्संवननं पुत्रो अङ्गिरसामवेत्।
तेन नोऽद्य विश्वे देवाः सं प्रियां समवीवनन्॥
[2]सं वो मनांसि जानतां समाकूतिं मनामसि।
असौ यो विमना जनस्तं समावर्तयामसि॥
तैच्छंयोरा वृणीमहे गातुं यज्ञाय गातुं यज्ञपतये
दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः।
ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं
चतुष्पदे॥

श प्राप्ताना रोगादीनामुपशमनकारणम्। योः आगामिनां रोगादीनां वियोगकारणम्। तत् कर्म आरुणकेतुकाख्यं आवृणीमहे आभिमुख्येन प्रार्थयामहे। यज्ञाय तस्मिन्नारुणकेतुकेऽनुष्ठीयमानस्योत्तरक्रतोः गातुं गतिं आवृणीमहे प्रार्थयामहे। यज्ञपतये यजमानस्य च गातु गतिं फलप्राप्तिं आवृणीमहे। नः अस्माक दैवी स्वस्तिः देवैः सपादितः क्षेमोऽस्तु। मानुषेभ्यः पुत्रादिभ्यश्च स्वस्तिः क्षेमोऽस्तु। इत ऊर्ध्वं सर्वदा भेषजं सर्वानिष्टनिवारणं जिगातु प्राप्नोतु। नः अस्मदीयाय द्विपदे मनुष्याय च शं सुखमस्तु, चतुष्पदे पशवेऽपि श सुखमस्तु।

तैआसा. १।९।७

[4]सं वो मनांसि सं व्रता समाकूतीर्नमामसि।
अमी ये विव्रता स्थन तान्वः सं नमयामसि॥

हे विमनस्का जनाः वः युष्माकं मनासि परस्परविरुद्धानि सं नमामसि। सं इति एकीभावे। एकविषयप्रह्वाणि अविसवादीनि कुर्मः। तथा व्रता व्रतानि। कर्मनामैतत्। वचनादानादिकर्माणि स नमयामः। एवं आकूतीः सकल्पान् स नमयामः। ये अमी यूय पूर्वं विव्रताः विरुद्धकर्माणः स्तन भवथ, तान् विमनस्कान् वः युष्मान् सं नमयामसि सनमयामः।

असा.

[1]अहं गृभ्णामि मनसा मनांसि मम चित्तमनु
चित्तेभिरेत।
मम वशेषु हृदयानि वः कृणोमि मम यातमनु-
वर्त्मान एत॥

हे विमनस्काः युष्मदीयानि विप्रतिपन्नानि मनासि मनसा मदीयेन अह गृह्णामि स्वाधीनीकरोमि। तथा यूयमपि मम चित्त अनुचित्तेभिः अनुसारिभिर्युष्मदीयैश्चित्तैः एत आगच्छत। मम वशेषु वशे इच्छामात्रे। व्यत्ययेन बहुवचनम्। यद्वा, वशेषु वशीकृतेषु स्वाधीनेष्वर्थेषु। वः युष्मदीयानि हृदयानि कृणोतु भवन्तः कुर्वन्तु। प्रत्येकविवक्षया एकवचनम्। एवं मम यात गमन यूयमपि अनुवर्त्मानः अनुसृतमार्गाः सन्तः ऐत आगच्छत।

असा.

[2]सं जानामहै मनसा सं चिकित्वा मा युष्महि
मनसा दैव्येन।
मा घोषा उत्स्थुर्बहुले विनिर्हते मेषुः पप्तदिन्द्र-
स्याहन्यागते॥

मनसा अन्यदीयेन स जानामहै समानज्ञाना भवाम। यद्वा, मनः कर्म। परकीयं मनः सयोजयामः। यथा अस्मद्विषयेऽनुकूलं भवति तथा कुर्म इत्यर्थः। चिकित्वा ज्ञात्वा। सं, उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। संगतकार्यकारिणो भवाम। यद्वा, पूर्वं मनसा सगतिरुक्ता। इदानीं निश्चयात्मकज्ञानेन संगतिः प्रार्थ्यते। चिकित्वा चिकित्वना, ज्ञानेनेत्यर्थः। सं जानामहै इत्यनुषङ्गः। स्वेषां परेषा च मनसा ज्ञानेन च सगता भवामेत्यर्थः। किंच दैव्येन देवसंबन्धिना देवताविषयेण, तादृशेन मनसा मा युष्महि मा वियुक्ता भूम। प्रतिकूलजनितविक्षेपराहित्येन स्वकीयं मनः सर्वदा देवताविषय भवत्वित्यर्थः। अपि च बहुले अधिके विनिह्नुते कौटिल्ये

(१) ऋसं. (खिल) ५।१।३.

(२) ऋसं (खिल) ५।१।४.

(३) ऋसं (खिल) ५।१।५, तैसं. २।६।१०।२–३; तैब्रा. ३।५।११।१; शब्रा. १।९।१।२६–२८, तैआ. १।९।७, ३।१.

(४) असं. ३।८।५, ६।९४।१; कासं. १०।१२ (३९) समाकूतीर्नमामसि (समु चित्तान्याकरम्) विव्रता (विव्रताः); मैस २।२।६ (२५) तीर्नमामसि (तीरनंसत) व्रता स्थन (व्रता. स्थ).

(१) असं. ३।८।६, ६।९४।२.

(२) असं. ७।५४।२.

निमित्ते घोषाः वैमनस्यनिबन्धनाः शब्दाः मा उत्स्थुः उत्थिता मा भूवन् । यद्वा बहुलशब्देन तमो विवक्ष्यते। विनिह्नुते विशेषेण स्तैन्यादिकौटिल्यनिमित्ते बहुले तमसि, रात्रावित्यर्थः । घोषाः वैमनस्यनिबन्धनाः शब्दा उत्थिता मा भूवन् । तथा अहनि अह्नि वासरे आगते च इन्द्रस्य इषुः । ऐन्द्या वाचः शत्रुनिवारकत्वादिषुत्वेन रूपण, 'वागस्यैन्द्री सपत्नक्षयणी' (तैस. १।६।२।२) इति तैत्तिरीयश्रुतेः । यद्वा, इन्द्रस्य इषुः अशनिः अशनिरूपा मर्मभेदिनी परकीया वाक् मा पतत् अस्मासु मा पततु । अहोरात्रोपलक्षितेषु सर्वेषु दिवसेष्वपि वैमनस्यनिबन्धनाः परेषां वाचः अस्मासु मा पतन्तु, किंतु अनुकूला एव भवन्त्वित्यर्थः । असा.

[1]संज्ञानं नो दिवा पशोः संज्ञानं नक्तमर्वतः ।
संज्ञानं नः स्वेभ्यः संज्ञानमरणेभ्यः संज्ञानमश्विना युवमिहास्मासु नियच्छतम् ॥

[2]समिन्द्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चन्द्रैरभिद्युभिः ।
सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाऽश्वावत्या रभेमहि ॥

हे इन्द्र राया धनेन वय स रभेमहि सगच्छेमहि । तथा इषा अन्नेन सरभेमहि । तथा वाजेभिः बलैः स रभेमहि । कीदृशैर्वाजैः । पुरुश्चन्द्रैः पुरूणां बहूनामाह्लादकैः अभिद्युभिः अभितो दीप्यमानैः । किंच देव्या द्योतमानया प्रमत्या त्वदीयया प्रकृष्टबुद्ध्या सं रभेमहि । कीदृश्या । वीरशुष्मया, वीरं विशेषेण शत्रूणां क्षेपणसमर्थ शुष्म बलं यस्याः सा तथोक्ता । गोअग्रया, स्तोतृभ्यो दानार्थं अग्रे प्रमुखत एव गावो यस्याः सा तथोक्ता । अश्वावत्या अश्वैरुपेतया ।

ऋसा. १।५३।५

[3]इन्द्रवायू सुसंदृशा सुहवेह हवामहे ।
यथा नः सर्व इज्जनः संगमे सुमना असत् ॥

इह यज्ञे वयं इन्द्रवायू हवामहे आह्वयामः । कीदृशी । सुसदृशा सुसदृशौ सुतरां सम्यक्पश्यतस्तौ । सुहवा सुहवौ शोभनाह्वानौ । तथा हवामहे यथा नः अस्माक सर्व इत् सर्व एव जनः पुत्रपौत्रादिः ईदृशः असत् भवेत् । अस्तेर्लेटि अडागमः । कीदृशः । अनमीवः व्याधिरहितः । सगमे धनप्राप्तौ बहूनां समागमे वा सुमनाः शोभनचित्तः । उदारो वक्ता चेत्यर्थः ।

शुम. ३३।८६

* [1]संज्ञानं मे बृहस्पतिः । संज्ञानꣳ सविता करत् ।
संज्ञानमश्विना युवम् । इह मह्यं नियच्छतम् ॥

## अधर्मस्वरूपम्

[2]न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान्कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥

हे वरुण सः स्वो दक्षः पुरुषस्य स्वभूत तद्बल पापप्रवृत्तौ कारण न भवति । किं तर्हि, ध्रुतिः स्थिरा उत्पत्तिसमये एव निर्मिता दैवगतिः कारणम् । सा च ध्रुतिर्वक्ष्यमाणरूपा । सुरा प्रमादकारिणी, मन्युः क्रोधश्च गुर्वादिविषयः सन्ननर्थहेतुः । विभीदकः द्यूतसाधनोऽक्षः । स च द्यूतेषु पुरुष प्रेरयन्ननर्थहेतुर्भवति । अचित्तिः अज्ञानं अविवेककारणम् । अतः ईदृशी दैवक्लृप्तिरेव पुरुषस्य पापप्रवृत्तौ कारणम् । अपि च कनीयसः अल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तौ उपारे उपागते समीपे नियन्तृत्वेन स्थितः ज्यायान् अधिकः ईश्वरः अस्ति । स एव त पापे प्रवर्तयति । तथा चाम्नातम्—'एष ह्येवासाधु कर्म कारयति त यमधो निनीषते' (कौउ. ३।८) इति । एव च सति स्वप्नश्चन स्वप्नोऽपि अनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति ।

(१) कासं. १०।१२ (३३), मैसं. २।२।६ (२२).
(२) ऋसं. १।५३।५; असं. २०।२१।५, कासं. १०।१२ (३४); मैसं. २।२।६ (२३) वाजेभिः (वाजैः) श्वावत्या (श्वत्या).
(३) असं ३।२०।६ (इन्द्रवायू उभाविह सुहवेह हवामहे। यथा न. सर्व इज्जनः संगत्यां सुमना असद्दानकामश्च नो भुवत्); कासं. १०।१२(३५); मैसं. १।११।४ (२१), २।२।६ (२४) सर्व (सर्वा); शुसं. ३३।८६ नः सर्व इज्जनः (नोऽनमीवः).

* व्याख्यानं 'संज्ञानमुशना' इत्यस्मिन्मन्त्रे ४८० पृष्ठे द्रष्टव्यम् ।

(१) तैब्रा. २।४।४।६. (२) ऋसं. ७।८६।६.

इदिति पूरकः। स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते, किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापान्युत्पद्यन्ते इति। अतो ममापराधो दैवागत इति, हे वरुण त्वया क्षन्तव्य इति भावः।

ऋसा.

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥

कवयो मेधाविनः ऋषयः सप्त मर्यादाः, कामजेभ्यः क्रोधजेभ्यश्चोद्भूताः। पान, अक्षाः, स्त्रियः, मृगया, दण्डः, पारुष्य, अन्यदूषणं इति सप्त मर्यादाः। यद्वा, 'स्तेय गुरुतल्पारोहण ब्रह्महत्या सुरापान दुष्कृतकर्मणः पुनःपुनः सेवां पातकेऽनृतोद्यम्' (नि. ६।२७) इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः अवस्थिताः ततक्षुः सुष्ठु लङ्घनीयाश्चक्रुः, त्यक्तवन्त इत्यर्थः। तासा मर्यादानां एकामित् एकामेव अहुरः पापवान्पुरुषः अभि गात् अभिगच्छति। यस्त्वेव करोति स पापवान् भवतीत्यर्थः। किंच आयोः तस्य मनुष्यस्य स्कम्भः स्कम्भयिता निरोधकोऽग्निः उपमस्य समीपभूतस्य आयोः नीळे स्थाने पथा आदित्यरूपस्य स्वस्य रश्मीना विसर्गे विसर्जनस्थाने अन्तरिक्षमध्ये वर्तमानेषु धरुणेषु उदकेषु तस्थौ विद्युदात्मना तिष्ठति। अनेन लोकत्रयवर्तित्वमिति।

ऋसा.

*[2]असच्च सच्च परमे व्योमन्दक्षस्य जन्मन्नदितेरुपस्थे।
अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः ॥

[3]प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥

बृहतः महतः विभीतकस्य फलत्वेन सबन्धिनः प्रवातेजाः प्रवणे देशे जाताः इरिणे आस्फारे वर्वृतानाः प्रवर्तमानाः प्रावेपाः प्रवेपिणः कम्पनशीलाः अक्षाः मा मां मादयन्ति हर्षयन्ति। किंच जागृविः जयपराजययोर्हर्षशोकाभ्या कितवाना जागरणस्य कर्ता विभीदकः विभीतकविकारोऽक्षो मह्य मा अच्छान् अचच्छदत् अत्यर्थं मादयति। तत्र दृष्टान्तः—सोमस्येव यथा सोमस्य मौजवतस्य, मुजवति पर्वते जातः मौजवतः, तस्य। तत्र ह्युत्तमः सोमो जायते। भक्षः पानं यजमानान् देवांश्च मादयति तद्वदित्यर्थः। तथा च यास्कः—'प्रवेपिणो मा महतो विभीतकस्य फलानि मादयन्ति। प्रवातेजाः प्रवणेजा इरिणे वर्तमाना इरिण निर्ऋणमृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षो मौजवतो मुजवति जातो मुजवान् पर्वतो मुञ्जवान् मुञ्जो विमुच्यत इषीकयेषीकेषतेर्गतिकर्मण इयमपीतरेषीकैतस्मादेव विभीतको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्' (नि. ९।८) इति।

ऋसा.

[1]न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत्।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् ॥

एषा अस्मदीया जाया मा मा कितव न मिमेथ न च चुक्रोध न जिहीळे न च लज्जितवती। सखिभ्यः अस्मदीयेभ्यः कितवेभ्यः शिवा सुखकरी आसीत् अभूत्। उत अपि च मह्य शिवा आसीत्। इत्थं अनुव्रता अनुकूला जाया एकपरस्य, एकः परः प्रधान यस्य, तस्य अक्षस्य हेतोः कारणात् अह अप अरोध परित्यक्तवानस्मीत्यर्थः।

ऋसा.

द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम्।
अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम् ॥

श्वश्रूः जायाया माता गृहगत कितव द्वेष्टि निन्दतीत्यर्थः। किंच जाया भार्या अप रुणद्धि निरुणद्धि।

---

* व्याख्यानं सृष्टिप्रकरणे २७४ पृष्ठे द्रष्टव्यम्।

(१) ऋसं. १०।५।६; असं. ५।१।६; नि. ६।२७.

(२) ऋसं. १०।५।७.

(३) ऋसं. १०।३४।१; नि. ९।८.

(१) ऋसं. १०।३४।२-१४.

अपि च नाथितः याचमानः कितवः धनं मर्डितार धनदानेन सुखयितार न विन्दते न लभते । इत्थ बुद्ध्या विमृशन् अह जरतः वृद्धस्य वस्न्यस्य, वस्न मूल्य, तदर्हस्य अश्वस्येव कितवस्य भोग न विन्दामि न लभे । ऋसा.

**अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्यक्षः ।**
**पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम् ॥**

यस्य कितवस्य वेदने धने वाजी बलवान् अक्षः देवः अगृधत् अभिकाङ्क्षां करोति, तस्य अस्य कितवस्य जाया भार्या अन्ये प्रतिकितवाः परि मृशन्ति वस्त्रकेशाद्याकर्षणेन सस्पृशन्ति । किंच पिता जननी च भ्रातरः सहोदराश्च एनं कितव आहुः वदन्ति । न वय अस्मदीयमेन जानीमः । रज्ज्वा बद्धमेतं कितवं हे कितवाः यूय नयत यथेष्टदेशं प्रापयतेति ।

ऋसा.

**यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः ।**
**न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥**

यत् यदा अह आदीध्ये ध्यायामि तदानीं एभिः अक्षैः न दविषाणि न दूषये न परितपामि । यद्वा, न दविषाणि न देविष्यामीत्यर्थः । परायद्भ्यः स्वयमेव परागच्छद्भ्यः सखिभ्यः सखिभूतेभ्यः कितवेभ्यः अव हीये अवहितो भवामि । नाहं प्रथममक्षान् विसृजामीति । किंच बभ्रवः बभ्रुवर्णा अक्षाः न्युप्ताः कितवैरवक्षिप्ताः सन्तः वाचमक्रत शब्द कुर्वन्ति । तदा सकल्प परित्यज्य अक्षव्यसनेनाभिभूयमानोऽहं एषा अक्षाणा निष्कृत स्थानं जारिणीव, यथा कामव्यसनेनाभिभूयमाना स्वैरिणी संकेतस्थानं याति तद्वत् एमीत् गच्छाम्येव । ऋसा.

**सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा शूशुजानः ।**
**अक्षासो अस्य वि तिरन्ति कामं प्रतिदीव्ने दधत आ कृतानि ॥**

तन्वा शरीरेण शूशुजानः शोशुचानः दीप्यमानः कितवः कोऽत्रास्ति धनिकः तं जेष्यामीति पृच्छमानः पृच्छन् सभां कितवसबन्धिनीं एति गच्छति । तत्र प्रतिदीव्ने प्रतिदेवित्रे कितवाय कृतानि देवनोपयुक्तानि कर्माणि आ दधतः जयार्थमाभिमुख्येन मर्यादया वा दधतः अस्य कितवस्य काम इच्छां अक्षासः अक्षाः वि तिरन्ति वर्धयन्ति । ऋसा.

**अक्षास इदङ्कुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः ।**
**कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा ॥**

अक्षास इत् अक्षा एव अङ्कुशिनः अङ्कुशवन्तः नितोदिनः नितोदितवन्तश्च निकृत्वानः पराजये निकर्तनशीलाः छेत्तारो वा तपनाः पराजये कितवस्य सतापकाः तापयिष्णवः सर्वस्वहारकत्वेन कुटुम्बस्य सतापनशीलाश्च भवन्ति । किंच जयतः कितवस्य कुमारदेष्णाः धनदानेन धान्यतां लम्भयन्तः कुमाराणां दातारो भवन्ति । अपि च मध्वा मधुना संपृक्ताः प्रतिकितवेन बर्हणा परिवृद्धेन सर्वस्वहरणेन कितवस्य पुनर्हणः पुनर्हन्तारो भवन्ति ।

ऋसा.

**त्रिपञ्चाशः क्रीळति व्रात एषां देवइव सविता सत्यधर्मा ।**
**उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत्कृणोति ॥**

एषा अक्षाणां त्रिपञ्चाशः त्र्यधिकपञ्चाशत्सख्याकः व्रातः सघः क्रीळति आस्फारे विहरति । अक्षिकाः प्रायेण तावद्भिरक्षैर्दीव्यन्ति हि । तत्र दृष्टान्तः — सत्यधर्मा सविता सर्वस्य जगतः प्रेरकः सूर्यो देवइव । यथा सविता देवो जगति विहरति तद्वदक्षाणा संघः आस्फारे विहरतीत्यर्थः । किंच उग्रस्य चित् क्रूरस्यापि मन्यवे क्रोधाय एते अक्षाः न नमन्ते न प्रह्वीभवन्ति न वशे वर्तन्ते, त नमयन्तीत्यर्थः । राजा चित् जगत ईश्वरोऽपि एभ्यः नमः इत् नमस्कारमेव देवनवेलाया कृणोति नावशां करोतीत्यर्थः । ऋसा.

**नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते ।**

**दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥**

अपि च एते अक्षाः नीचा नीचीनस्थले वर्तन्ते। तथापि उपरि पराजयात् भीताना द्यूतकराणां कितवानां हृदयस्योपरि स्फुरन्ति। अहस्तासः हस्तरहिता अप्यक्षाः हस्तवन्तं द्यूतकर कितवं सहन्ते पराजयकरणेनाभिभवन्ति। दिव्याः दिवि भवाः अपक्वताः अङ्गाराः अङ्गारसदृशा अक्षाः इरिणे इन्धनरहिते आस्फारे न्युप्ताः शीताः शीतस्पर्शाः सन्तः अपि हृदयं कितवानामन्तःकरणं निर्दहन्ति पराजयजनितसतापेन भस्मीकुर्वन्ति। ऋसा.

**जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क स्वित्।**
**ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥**

क स्वित् क्वापि चरतः निर्वेदाद्गच्छतः कितवस्य जाया भार्या हीना परित्यक्ता सती तप्यते वियोगजसतापेन संतप्ता भवति। माता जनन्यपि पुत्रस्य क्वापि चरतः कितवस्य संबन्धाद्धीना तप्यते पुत्रशोकेन सतप्ता भवति। ऋणावा अक्षपराजयादृणवान् कितवः सर्वतो बिभ्यद्धन स्तेयजनितमिच्छमानः कामयमानः अन्येषां ब्राह्मणादीना अस्तं गृह, 'अस्त परस्त्यम्' इति गृहनामसु पाठात्। नक्त रात्रौ उप एति चौर्यार्थमुपगच्छति। ऋसा.

**स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम्।**
**पूर्वाह्णे अश्वान् युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद ॥**

कितवं कितवः। विभक्तिव्यत्ययः। अन्येषा स्वव्यतिरिक्ताना पुरुषाणां जायां जायाभूतां स्त्रियं नारीं सुखेन वर्तमानां सुकृत सुष्ठु कृत योनिं गृहं च दृष्ट्वाय मज्जाया दुःखिता गृह चासस्कृतमिति ज्ञात्वा ततापं तप्यते। पुनः पूर्वाह्णे प्रातःकाले बभ्रून् बभ्रुवर्णान् अश्वान् व्यापकानक्षान् युयुजे युनक्ति। पुनश्च वृषलः वृषलकर्मा सः कितवः रात्रौ अग्नेरन्ते समीपे पपाद शीतार्तः सन् शेते। ऋसा.

**यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव।**
**तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥**

हे अक्षाः वः युष्माकं महतो गणस्य सघस्य यः अक्षः सेनानीः नेता बभूव भवति व्रातस्य च। गणव्रातयोरल्पो भेदः। राजा ईश्वरः प्रथमः मुख्यो बभूव, तस्मै अक्षाय कृणोमि अहमञ्जलिं करोमि। अतः परं धना धनानि अक्षार्थमह न रुणध्मि न संपादयामीत्यर्थः। एतदेव दर्शयति—अह दश दशसख्याका अङ्गुलीः प्राचीः प्राङ्मुखीः करोमि। तत् एतत् अह ऋतं सत्यमेव वदामि नानृत ब्रवीमीत्यर्थः। ऋसा.

**अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः।**
**तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥**

हे कितव बहु मन्यमानः मद्वचने विश्वास कुर्वस्त्वं अक्षैर्मा दीव्यः द्यूत मा कुरु। कृषिमित् कृषिमेव कृषस्व कुरु। वित्ते कृष्या संपादिते धने रमस्व रतिं कुरु। तत्र कृषौ गावः भवन्ति। तत्र जाया भवति। तत् एव धर्मरहस्य श्रुतिस्मृतिकर्ता सविता सर्वस्य प्रेरकः अयं दृष्टिगोचरः अर्यः ईश्वरः वि चष्टे विविधमाख्यातवान्। ऋसा.

**मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु।**
**नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥**

हे अक्षाः यूयं मित्रं कृणुध्व अस्मासु मैत्रीं कुरुत। खलु इति पूरणः। नः अस्मान् मृळत सुखयत च। नः अस्मान् धृष्णु धृष्णुना। तृतीयार्थे प्रथमा। घोरेण असह्येन मा अभि चरत मा गच्छत। किंच वः युष्माकं मन्युः क्रोधः अरातिः अस्माकं शत्रुः नि विशता अस्मच्छत्रुषु तिष्ठतु। अन्यः अस्माकं शत्रुः कश्चित् बभ्रूणां बभ्रुवर्णाना युष्माकं प्रसितौ प्रबन्धने नु क्षिप्रं अस्तु भवतु। ऋसा.

[1]यन्मे गर्भे वसतः पापमुग्रं यज्जायमानस्य च किंचिदन्यत् ।
जातस्य च यच्चापि च वर्धतो मे तत्पावमानीभिरहं पुनामि ॥
मातापित्रोर्यन्न कृतं वचो मे यत्स्थावरं जङ्गममाबभूव ।
विश्वस्य यत्प्रहृषितं वचो मे तत्पावमानीभिरहं पुनामि ॥
क्रयविक्रयाद्योनिदोषाद्भक्षाद्भोज्यात्प्रतिग्रहात् ।
असंभोजनाच्चापि नृशंसं तत्पावमानीभिरहं पुनामि ॥
गोघ्नात्तस्करत्वात्स्त्रीवधाद्यच्च किल्बिषम् ।
पापकं च चरणेभ्यस्तत्पावमानीभिरहं पुनामि ॥
ब्रह्मवधात्सुरापानात्सुवर्णस्तेयाद्वृषलीमिथुनसंगमात् ।
गुरोर्दाराभिगमनाच्च तत्पावमानीभिरहं पुनामि ॥
बालघ्नान्मातृपितृवधाद्भूमितस्करात्सर्ववर्णगमनमिथुनसंगमात् ।
पापेभ्यश्च प्रतिग्रहात्सद्यः प्रहरन्ति सर्वदुष्कृतं तत्पावमानीभिरहं पुनामि ॥
अमन्त्रमन्नं यत्किञ्चिद्धूयते च हुताशने ।
संवत्सरकृतं पापं तत्पावमानीभिरहं पुनामि ॥
दुर्यष्टं दुरधीतं पापं यच्चाज्ञानतो कृतम् ।
अयाजिताश्चासंयाज्यास्तत्पावमानीभिरहं पुनामि ॥

[2]हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति । न हि ब्रह्मचर्यं चरन्ति । न कृषिम् । न वणिज्याम् ॥

ये पुरुषा व्रात्या व्रात्यतां विहिताकरणप्रतिषिद्धनिषेवनरूपां प्राप्य प्रवसन्ति, एते हीनाः निकृष्टाः सन्तो हीयन्ते निकृष्टतमा भवन्ति । तत्कस्य हेतोः—न खल्वेते ब्रह्मचर्यं ब्राह्मणोचितं कर्म आचरन्ति, ततो हीनाः सपन्नाः । यस्माच्च कृषिं, वणिज्या वणिजः क्रियां क्रयविक्रयादिरूपां च न कुर्वन्ति ततो वैश्यजातेरपि हीनाः । तस्मादेते निकृष्टतमा भवन्तीत्यर्थः । ताभा.

[3]गरगिरो वा एते ये ब्रह्माद्यं जन्यमन्नमदन्ति । अदुरुक्तवाक्यं दुरुक्तमाहुः । अदण्ड्यं दण्डेन घ्नन्तश्चरन्ति । अदीक्षिता दीक्षितवाचं वदन्ति ॥

एते वक्ष्यमाणा गरगिरो वै गरलस्य विषस्य भक्षयितारः, ये व्रात्याः ब्रह्माद्य ब्राह्मणैर्भोज्य, जन्यं जनपदसबन्धि अन्नमदन्ति ब्राह्मणार्थं परिकल्पितमन्न बलात्कारेण भुञ्जते इत्यर्थः । ये च अदुरुक्तवाक्य शोभनार्थप्रतिपादकं वाक्य दुरुक्त दुष्टमाहुः । तथा अदण्ड्य दण्डानर्हं जनं दण्डेन घ्नन्तो हिंसन्तश्चरन्ति । तथा स्वयमदीक्षिताः अकृतदीक्षाः दीक्षितैः प्रयोज्यां वाच वदन्ति । एवं ये बहुविधान् विपरीताचारानाचरन्ति, एते विषभक्षकाः, नरकहेतोर्भूयसः पापसचयस्य निषिध्यमानत्वादित्यर्थः । ताभा.

[3]अभिपूर्वेण वा एते पाप्मना गृहीताः । ये नृशंसा निन्दिताः सन्तो व्रात्यां प्रवसन्ति ॥

अभिपूर्वेण क्रमेण खल्वेते पाप्मना पापेन गृहीताः, ये नृशसा निन्दिता अभिशसनेन गर्हिताः सन्तो व्रात्या प्रवसन्ति । ताभा.

[3]हीना वा एते हीयन्ते ये कनिष्ठाः सन्तो व्रात्यां प्रवसन्ति ॥

वयसाऽतिहीनाः खलु इमे हीयन्ते पुनरहीना हीना भवन्ति । ताभा.

[4]ते देवा आप्त्येष्वमृजत । आप्त्या अमृजत सूर्याभ्युदिते । सूर्याभ्युदितः सूर्याभिनिम्रुक्ते । सूर्याभिनिम्रुक्तः कुनखिनि । कुनखी श्यावदति । श्यावदन्नग्रदिधिषौ । अग्रदिधिषुः परिवित्ते । परिवित्तो वीरहणि । वीरहा ब्रह्महणि । तद्ब्रह्महणं नात्यच्यवत ॥

आप्त्या एकतादयः । उदयास्तमयकालयोः सुप्तौ पुरुषौ अभ्युदिताऽभिनिम्रुक्तौ । तथा चोक्तम् —'सुप्ते

(१) ऋसं. ( खिल ) ३।१०।१–८.
(२) ताब्रा. १७।१।२.

(१) ताब्रा. १७।१।९.
(२) ताब्रा. १७।२।२.
(३) ताब्रा. १७।३।२.
(४) तैब्रा. ३।२।८।११–१२.

यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिम्रुक्ताऽभ्युदितौ तौ यथाक्रमम् ॥ ' इति । नखवक्रत्व दन्तमालिन्यं चात्र रोगविशेषकृतम् । ज्येष्ठायामनूढायां कनिष्ठामूढ्वाऽवस्थितोऽग्रदिधिषुः । ऊढवति कनिष्ठे सति विवाहरहितो ज्येष्ठः परिवित्तः । वीरस्य क्षत्रियस्य हन्ता वीरहा । ब्राह्मणस्य हन्ता ब्रह्महा । एतेष्वाप्यानामेकतादीना देवाना पापलेपमार्जनायैव सृष्टत्वात्तेषु तन्मार्जनमुचितम् । सूर्याभ्युदितादीना ब्रह्महान्तानां पापप्रवणत्वान्निम्नगामिनो जलस्येव लेपस्यापि तेषु प्रवाहो युक्तः । ब्रह्महत्यायाः पापाधिक्यतारतम्यविश्रान्तिभूमित्वाल्लेपो ब्रह्महणं नातिक्रामति । तैसा. १।१।८।१ (पृ. ११३)

**[1]यद्देवा देवहेडनम् । देवासश्चकृमा वयम् ।**
**आदित्यास्तस्मान्मा मुञ्चत । ऋतस्यर्तेन मामुत ॥**

देवासः देवनशीला आदित्याः अदितेः पुत्राः हे देवाः, देवहेडनं देवानां क्रोधकारण यत्कर्म वयं चकृम, तस्मादपराधान्मां यूय मुञ्चत । उत अपि च ऋतस्य यज्ञस्य सबन्धिना ऋतेन सत्येन अनेन होमेन मा मा मुञ्चत । तैब्रासा.

**[2]देवा जीवनकाम्या यत् । वाचाऽनृतमूदिम ।**
**अग्निर्मा तस्मादेनसः ।**
**गार्हपत्यः प्रमुञ्चतु । दुरिता यानि चकृम ।**
**करोतु मामनेनसम् ॥**

हे देवाः, वयं जीवनकाम्या जीवनमात्मन इच्छन्तो यदनृत वाचा ऊदिम राजसेवादौ तत्प्रियार्थमनृतमुक्तवन्तः, तस्मादनृतजन्यादेनसः पापात् गार्हपत्योऽग्निर्मा प्रमुञ्चतु । यानि चान्यानि दुरितानि चकृम वय सपुत्रपौत्राः, तत्र मा अनेनसं पापरहितं करोतु । एतच्चोपलक्षणम् । पुत्रादीनपि पापरहितान् करोतु । तैब्रासा.

**[1]ऋतेन द्यावापृथिवी । ऋतेन त्वꣳ सरस्वति ।**
**ऋतान्मा मुञ्चताꣳहसः । यदन्यकृतमारिम ॥**

हे द्यावापृथिव्यौ, ऋतेन यज्ञेन विगुणेन यत्पापं प्राप्त, तथा हे सरस्वति, ऋतेन यत्पापं प्राप्त, ऋताप्प्राप्तात्तस्मादंहसः त्वं द्यावापृथिव्यौ च इत्येवा यूयं मा मुञ्चत मुक्त कुरुत । यच्चान्यकृतं अन्येन यज्ञव्यतिरिक्तेन निमित्तेन कृत पाप आरिम वय प्राप्तवन्तः, तस्माच्च मां मुञ्चत । तैब्रासा.

**[2]सजातशꣳसादुत वा जामिशꣳसात् । ज्यायसः**
**शꣳसादुत वा कनीयसः ।**
**अनाज्ञातं देवकृतं यदेनः । तस्मात्त्वमस्माञ्जात-**
**वेदो मुमुग्धि ॥**

सजाताः समानजन्मानो ज्ञातयः समवयस्काः सखायो वा, तैर्मयि कृतः शसः प्रशंसा स्तुतिः, उत वा अथ वा जामयो जाया भार्यास्ताभिर्मयि कृतः शसः स्तुतिः, ज्यायान् ज्येष्ठभ्राता, तस्य शसः तेन मयि कृता स्तुतिः, उत वा अथ वा कनीयान् कनिष्ठभ्राता, तस्य शसः तेन मयि कृता स्तुतिः, तस्मात्स्तुतिसघान्मत्तेन मया अनाज्ञात स्वचित्तेनाऽपरामृष्ट देवकृत देवविषये संपादितं यदेनः पाप हे जातवेदः, त्व अस्मात् पापात् मुमुग्धि मा ( अस्मान् ? ) मुक्तं कुरु । तैब्रासा.

**[3]यद्वाचा यन्मनसा । बाहुभ्यामूरुभ्यामष्ठीवद्भ्याम् ।**
**शिश्नैर्यदनृतं चकृमा वयम् । अग्निर्मा तस्मादे-**
**नसः ॥**

---

(१) असं. ६।११४।१ उत्तरार्धे ( आदित्यास्तस्मान्नो यूयमृतस्यर्तेन मुञ्चत ); मैसं. ४।१४।१७ (२४१) (यद्देवा देवहेडनं यद्वाचाऽनृतमोदिम । आदित्यास्तस्मान्मुञ्चतर्तस्य त्वेनमामुत. ॥ ); तैब्रा २।४।४।८ उत्तरार्धे ( आदित्यास्तस्मान्मा यूयम् । ऋतस्यर्तेन मुञ्चत ), ३।७।१२।१; कब्रा. १ ( पृ. १२५ ), तैआ. २।३।१ मामुत (मामित).

(२) मैसं. ४।१४।१७ ( २४२ ) मूदिम ( मोदिम ) उत्तरार्धे ( तस्मान्न इह मुञ्चत विश्वे देवाः सजोषसः ); तैब्रा. ३।७।१२।१; कब्रा. २ ( पृ. १२५ ), तैआ. २।३।१ उत्तरार्धं मैसंवत्.

(१) मैसं. ४।१४।१७ ( २४३ ) उत्तरार्धे ( कृतान्नः पाह्यंहसो यत्किंचानृतमोदिम); कब्रा. ३ (पृ. १२५), तैआ. २।३।१ उत्तरार्धे ( कृतान्नः पाह्येनसो यत्किंचानृतमूदिम ).

(२) मैसं. ४।१४।१७ (२४५) दुत वा जा ( दुत जा) अनाज्ञातं ( अनाधृष्टं ), तैब्रा. ३।७।१२।२, कब्रा. ५ ( पृ १२५ ), तैआ. २।३।१ मैसंवत्.

(३) तैब्रा ३।७।१२।२; तैआ. २।३।१ अग्निर्मा तस्मादेनसः ( अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ).

अष्ठीवद्भ्यां जानुभ्यां, शिश्नैः शिश्नचापलप्रकारैः, वागादिभिः सर्वैर्यदनृत लोकवेदविरुद्धं व्यापारं वयं चकृम। अग्निरित्यादिक द्वितीयमन्त्रोक्तस्य वाक्यशेषस्य प्रतीकम्। स वाक्यशेषोऽत्राध्याहृत्य योजनीयः।

तैब्रासा.

**यद्धस्ताभ्यां चकर किल्बिपाणि। अक्षाणां वग्नुमुपजिघ्नमानः।**
**दूरेपश्या च राष्ट्रभृच्च। तान्यप्सरसावनुदत्तामृणानि॥**

यत् यानि किल्बिपाणि परद्रव्यापहरणादीनि हस्ताभ्यां वय चकृम। अक्षाणा चक्षुरादीन्द्रियाणां वग्नु वर्जनीय गन्तव्य रूपादिविषयमित्यर्थः। तं विषयं उपजिघ्नमानः उपहत कुर्वन् यत्पापं कृतवानस्मि, तानि पापात्मकानि ऋणानि दूरेपश्या च राष्ट्रभृच्चेत्येतन्नामधारिण्यावप्सरसौ अनुदत्तां आनुकूल्येन प्रत्यर्पयताम्। पापरूपमृणं यथा अस्माकं न भवति तथा कुरुतामित्यर्थः। तैब्रासा.

**अदीव्यन्नृणं यदहं चकार। यद्वाऽदास्यन्त्संजगारा जनेभ्यः। अग्निर्मा तस्मादेनसः॥**

अदीव्यन् समीचीनव्यवहारमकुर्वन्नहं यादृश चकार कपटेन परकीय यद्वस्तु गृहीतवानस्मि। यद्वा, यच्चान्यद्वस्तु अदास्यन् अप्रत्यर्पयिष्यन् जनेभ्यः सकाशादादाय सम्यग्भक्षितवानस्मि। अग्निरित्यादि पूर्ववत्।

तैब्रासा.

**यन्मयि माता गर्भे सति। एनश्चकार यत्पिता।**
**अग्निर्मा तस्मादेनसः॥**

मयि गर्भरूपेणोदरं प्रविष्टे सति माता यदेनश्चकार परपुरुषसेवादिक कृतवती। पिता यदेनः प्रतिषिद्धदिने मैथुनादि चकार। अग्निरित्यादि पूर्ववत्। तैब्रासा.

**यदा पिपेष मातरं पितरम्। पुत्रः प्रमुदितो धयन्।**
**अहिꣳसितौ पितरौ मया तत्। तदग्ने अनृणो भवामि॥**

यदा बालः पुत्रः शिशुरह प्रमुदितः प्रकर्षेण हृष्टो धयन् स्तन पिबन् मातरं पिपेप पीडितवानस्मि, तथा पितर च हस्तपादोपघातेन पीडितवानस्मि, तत् तदानीं पितरौ मातापितरावुभौ मया अहिंसितौ अनुपद्रुतौ भवताम्। तत्तन्मातापित्रोर्विपये हे अग्ने, अहमनृणो भवामि प्रत्युपकारराहित्यरूप यत्पापं, तेन मुक्तो भूयासम्। तैब्रासा.

**यदन्तरिक्षं पृथिवीमुत द्याम्। यन्मातरं पितरं वा जिहिꣳसिम।**
**अग्निर्मा तस्मादेनसः॥**

अन्तरिक्षादिक लोकत्रयं जिहिंसिम वयं हिंसितवन्त इति यच्च तथा मातरं पितर च जिहिंसिमेति यत्। लोकत्रयवर्तिनां मातापित्रोश्चानिष्टाचरणमेव हिंसा। अग्निरित्यादि पूर्ववत्। तैब्रासा.

**यदाशसा निशसा यत्पराशसा। यदेनश्चकृमा नूतनं यत्पुराणम्।**
**अग्निर्मा तस्मादेनसः॥**

---

(१) असं. ६।११८।१ ( यद्धस्ताभ्यां चकृम किल्बिषाण्यक्षाणा गत्नुमुपलिप्समानाः। उग्रंपश्ये उग्रजितौ तदद्याप्सरसावनु दत्तामृणं नः॥ ), मैसं ४।१४।१७ ( २५० ) वग्नुमुपजिघ्नमानः ( वग्नुमवजिघ्रमापः ) उत्तरार्धे ( उग्रंपश्याच्च राष्ट्रभृच्च तान्यप्सरसामनुदत्तानृणानि ); तैब्रा. ३।७।१२।३; कब्रा. १० ( पृ. १२६ ); तैआ. २।४।१ दूरेपश्या ( उग्रंपश्या ).

(२) तैब्रा. ३।७।१२।३.

(३) तैब्रा. ३।७।१२।३; तैआ. २।३।१.

(१) ऋसं. १९।११ ( पितरम्० ) उत्तरार्धे ( एतत्तदग्ने अनृणो भवाम्यहतौ पितरौ मया ); तैब्रा. ३।७।१२।४; शब्रा. १२।७।३।२१; तैआ. २।३।१.

(२) असं. ६।१२०।१ उत्तरार्धे ( अयं तस्माद्गार्हपत्यो नो अग्निरुदिन्नयाति सुकृतस्य लोकम् ), तैसं. १।८।५।३, कासं. ९।६ (२८) मातरं पितरं ( पितरं मातरं ) उत्तरार्धे ( अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ), मैसं १।१०।३ (१२) उत्तरार्धे ( अग्निर्नस्तस्मादेनसो गार्हपत्या उन्निनेतु दुष्कृताज्जातवेदाः), ४।१४।१७ (२४६) उत्तरार्धे ( अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरितानि यानि कानि च चकृम); तैब्रा. ३।७।१२।४, कब्रा. ६ ( पृ. १२५–२६ ), तैआ २।३।१, २।६।२ उत्तरार्धे ( अग्निर्मा तस्मादेनसो गार्हपत्य उन्नो नेषद्दुरिता यानि चकृम ).

(३) तैब्रा. ३।७।१२।४; तैआ. २।३।१.

आशसा आभिमुख्येन कृतया हिंसया यत्पापं, निशसा नितरां कृतया हिंसया यत्पाप, पराशसा परावृत्तेन कृतया हिंसया यत्पापं, अन्यदपि नूतन इदानींतनं यदेनश्चकृम। पुराण चिरकालव्यवहित यदेनश्चकृम। अग्निरित्यादि पूर्ववत्। तैब्रासा.

**अतिक्रामामि दुरितं यदेनः। जहामि रिप्रं परमे सधस्थे।**
**यत्र यन्ति सुकृतो नापि दुष्कृतः। तमारोहामि सुकृतां नु लोकम्॥**

दुरित दुर्गतिकारणं यदेनः, तादृश अग्नेः प्रसादादतिक्रामामि। किंच परमे उत्कृष्टे सधस्थे सहस्थाने विद्वत्सभादौ कृत रिप्र पाप जहामि अग्नेः प्रसादात्परित्यजामि। ततश्च यत्र यस्मिंल्लोके सुकृतः पुण्यकृतो यन्ति, न कदाचिदपि दुष्कृतो यन्ति, तं सुकृता पुण्यकृता लोक नु क्षिप्रं आरोहामि। तैब्रासा.

[2]**त्रिते देवा अमृजतैतदेनः। त्रित एतन्मनुष्येषु मामृजे।**
**ततो मा यदि किंचिदानशे। अग्निर्मा तस्मादेनसः।**
**गार्हपत्यः प्रमुञ्चतु। दुरिता यानि चकृम। करोतु मामनेनसम्॥**

एकतद्वितत्रिताख्याना पुरुषाणामुत्पत्तिः पौरोडाशिककाण्डे उक्ता। योऽयं त्रितस्तत्रोक्तः तस्मिन् देवा एतदेनः पापममृजत। अत एव ब्राह्मणमाम्नायते—'ते देवा आप्त्येष्वमृजत' (तैब्रा. ३।२।८।११) इति। अद्भ्यो जाताः एकतद्वितत्रिताः आप्त्याः देवलेपितपापापराधाः। सोऽयं त्रितः एतत्पाप मनुष्येषु मामृजे मृष्टवान् लेपितवानित्यर्थः। एतदपि तत्रैवाऽऽम्नातम्—'आप्त्या अमृजत सूर्याभ्युदिते। सूर्याभ्युदितः सूर्याभिनिम्रुक्ते' इत्यादि। तत्र सूर्याभ्युदितादिमनुष्येष्ववस्थितात्पापात्सकाशात् किंचित्पापं यदि मा आनशे प्राप्नुयात्। अग्निरित्यादि पूर्ववत्। तैब्रासा.

[1]**दिवि जाता अप्सु जाताः। या जाता ओषधीभ्यः।**
**अथो या अग्निजा आपः। ता नः शुन्धन्तु शुन्धनीः॥**

या आपो दिवि जाताः द्युलोके प्रादुर्भूता नित्या वर्तन्ते, याश्च अप्सु कर्मसु जाताः कर्मजन्या आपः कूपादिष्वाविर्भूताः, याश्चौषधीभ्यो रसात्मिका आविर्भूता आपः, अथो अपि च याश्चापः अग्निजाः विद्युतो जाताः वर्ष्याः, ताः सर्वा अपि शुन्धनीः सर्वस्य लोकस्य शोधयित्र्यः नः अस्मान् शुन्धन्तु शोधयन्तु। तैब्रासा.

[2]**यदापो नक्तं दुरितं चराम। यद्वा दिवा नूतनं यत्पुराणम्।**
**हिरण्यवर्णास्तत उत्पुनीत नः॥**

नक्त रात्रौ यद्दुरित चराम, यद्वा दिवा यच्च दुरितमहनि चराम, यत्पाप नूतन इदानींतनं, यत्पुराणं चिरकालव्यवहित, हे आपो हिरण्यवर्णाः सुवर्णवत्तेजस्विन्यः, यूय ततः सर्वस्मात्पापात् नः अस्मानुत्पुनीत उत्कर्षेण शुद्धान् कुरुत। तैब्रासा.

## विद्यामहिमा

[3]**बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः।**
**यदेषां श्रेष्ठं यदरिप्रमासीत्प्रेणा तदेषां निहितं गुहाविः॥**

बृहस्पतिरनेन सूक्तेन विदितवेदार्थान् बालान् दृष्ट्वा स्मयमानः स्वात्मानं संबोध्याह—हे बृहस्पते अन्तरात्मन् प्रथमं उत्पत्त्यनन्तरमितरवागुच्चारणात्प्रागेव नामधेयं नाम दधानाः पदार्थेषु निदधानाः बालाः यत्प्रैरत प्रेरितवन्तः, तद्वाचोऽग्र भवति। यत्तत तातेत्यादिक वाक्य पूर्वमभिधाय पश्चादन्या वाचो वदिष्यन्ति खलु तस्माद्वाचोऽग्रम्। अस्या दशायामवस्थितान् बालान् पश्य। तथा इदानीं एषां श्रेष्ठ प्रशस्यतम यत् यच्च अरिप्रं

(१) तैब्रा. ३।७।१२।५; तैआ. २।३।१.
(२) असं. ६।११३।१ मामृजे (ममृजे) उत्तरार्धे (ततो यदि त्वा ग्राहिरानशे ता ते देवा ब्रह्मणा नाशयन्तु); तैब्रा. ३।७।१२।५; तैआ. २।३।१.

(१) तैब्रा ३।७।१२।६; तैआ. २।३।१,
(२) तैब्रा. ३।७।१२।६, तैआ. २।३।१.
(३) ऋसं. १०।७१।१, ऐआ. १।३।३।४.

पापरहित वेदार्थज्ञान आसीत्, एषा तज्ज्ञान गुहा गुहायां निहितं गोप्यं तत् प्रेणा । मकारलोपश्छान्दसः । प्रेम्णा आविर्भवति । वेदाभ्यासकाले सरस्वती स्वार्थमेभ्यः प्रकाशयतीत्यर्थः । एव विस्मये 'बृहस्पते प्रथम वाचो अग्र' (ऐआ. १।३।६) इत्यादिकमारण्यकमनुसधेयम् । ऋसा.

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

तितउना, परिपूर्यतेऽनेनेति । यद्वा, तता विस्तृता भृष्ट्यवा अत्रेति तितउः । उक्तनिर्वचनेन सूर्पेण सक्तुमिव, यथा कश्चित्सक्तु दुर्धायं पुनाति तद्वत् प्रकृतितः प्रत्ययतश्च शब्दानुत्पुनन्तः धीराः धीमन्तो विद्वासः यत्र यस्मिन्काले विद्वत्सघे वा मनसा प्रज्ञायुक्तेन वाचमक्रत अकृषत कुर्वन्ति । अत्र तत्र काले सखायः समानख्यानाः शास्त्रादिविषयज्ञानास्ते सख्यानि तेषु भवानि ज्ञानानि जानते जानन्ति । यद्वा, सखायो वाचा बद्धसख्यास्ते तस्यास्तस्या वाचः सख्यानि जानन्ति । वाक्ययुक्तानभ्युदयॉल्लभन्ते इत्यर्थः । तस्मादेषां वाचि भद्रा कल्याणी निहिता लक्ष्मीर्भवति । अधिः सप्तम्यर्थद्योतकः । अर्थज्ञान वाचि पश्याम इत्यर्थः । 'तितउ परिपवन भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा सक्तुमिव तितउना' (नि. ४।१०) इत्यादि निरुक्तमनुसधेयम् । ऋसा.

यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥

विदितार्थाः धीराः पदवीयं, पदेन यातव्यः पन्थाः पदवीयः, तं वाचः मार्गं यज्ञेन आयन् प्राप्तवन्तः । ऋषिषु अतीन्द्रियार्थदर्शिषु प्रविष्टां तां वाच अविन्दन् अलभन्त । अनन्तर तां वाच आभृत्य आहृत्य पुरुत्रा बहुषु देशेषु व्यदधुः व्यकार्षुः, सर्वान् मनुष्यानध्यापयामासुरित्यर्थः । एतादृशी वाचं रेभाः शब्दायमानाः पक्षिणः पक्षिरूपाणि गायत्र्यादीनि सप्त छन्दांसि अभि सं नवन्ते अभितः सगच्छन्ते । ऋसा.

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः ॥

त्वशब्दः एकवाची । एकः । उतशब्दोऽप्यर्थे । पश्यन् अपि मनसा पर्यालोचयन्नपि वाचं न ददर्श दर्शनफलाभावान्न पश्यति । त्वः एकः शृण्वन् अपि एना वाच न शृणोति श्रवणफलाभावात् । इत्यनेनार्धेनाविद्वानभिहितः । तृतीयपादेन विदितवेदार्थमाह—त्वस्मै एकस्मै अपि तन्व आत्मीय शरीर वि सस्रे स्वय वाग्विविध गमयति । आत्मान विवृणुते प्रकाशयतीत्यर्थः । तत्र दृष्टान्तः—जायेव यथा उशती सभोग कामयमाना सुवासाः शोभनवसना जाया पत्ये भर्त्रे ऋतुकाले सभोगार्थं स्वयमात्मान विवृणुते । तद्वदेना पश्यति शृणोति च इति विदितवेदार्थस्य प्रशंसा । 'अप्येकः पश्यन्न पश्यति वाचं' इत्यादि निरुक्तमत्र द्रष्टव्यम् ।

ऋसा.

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥

त्वं उत एकमपि सख्ये विदुषां संसदि । या सत्कथा सा सखिकर्मत्वात्सख्यमित्युच्यते । सा च वाचा क्रियते । अतो वाक्सम्बन्धाद्वाक्सख्ये स्थिरपीत, मधु यस्य हृदये स्थितं भवति । यद्वा, स्थिरपीत स्थिरप्राप्तिं आहुः । यद्वा, तस्मिन् ज्ञातार्थमाहुः । लोके यथा ज्ञातार्थं पुरुष पीतार्थमिति वदन्ति । किंच एनं विज्ञातार्थं पुरुषं वाजिनेषु, वाक् इना ईश्वरा येषा ते वाजिनाः अर्थाः वाचः आयत्ताः खलु । वाग्यज्ञेष्वर्थेषु नापि हिन्वन्ति । अपिशब्दोऽन्वर्थे । केचिदपि नानुगच्छन्ति । अयमेवातिशयन विद्वानित्यर्थः । यद्वा, वाजिनेषु सारभूतेषु

(१) ऋसं १०।७१।२; नि. ४।१०.
(२) ऋसं. १०।७१।३.

(१) ऋसं १०।७१।४; नि. १।१९.
(२) ऋसं. १०।७१।५; नि. १।२०.

निरूपणीयेष्वर्थेष्वेनं न हिन्वन्ति न बहिः कुर्वन्ति। एनं पुरस्कृत्यैव सर्वे वेदार्थं विचारयन्तीत्यर्थः। इति अर्थज्ञः प्रशस्तः। अनन्तरमुत्तरार्धेन केवलपाठको निन्द्यते। एषः अविज्ञातार्थः पुरुषः अधेन्वा धेनुत्वविवर्जितया कामानामदोग्ध्र्या देवमनुष्यस्थानेषु वाक्प्रतिरूपया मायया चरति। किं कुर्वन्। अफलामपुष्पाम्। वाचोऽर्थः पुष्पफलम्। अर्थवर्जिताम्। यद्वा, वाचोऽर्थौ याज्ञदैवते। यज्ञे भव ज्ञान याज्ञं, देवतासु भव ज्ञान दैवत, तद्वर्जितां कर्मादिविषयज्ञानवर्जिता वाच शुश्रुवान् केवल पाठमात्रेणैव श्रुतवान् स चरति। यथा वन्ध्या पीना गौः किं द्रोणमात्र क्षीर दोग्धीति मायामुत्पादयन्ती चरति, यथा वन्ध्यो वृक्षोऽकाले पल्लवादियुक्तः सन् पुष्यति फलतीति भ्रान्तिमुत्पादयस्तिष्ठति, तथा पाठ प्रब्रुवाणश्चरतीत्यर्थः। 'अग्येकं वाक्सख्ये स्थिरपीतम्' (नि. १।२०) इत्यादि निरुक्तमत्रानुसधेयम्। ऋसा.

यस्तित्याज सचिविद सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्॥

सचिविदं, सचिशब्दः सखिवाची, सखिविदम्। योऽध्येता स वेदस्य सखा संप्रदायोच्छेदनिवारकत्वेन वेद प्रत्युपकारित्वात्। तादृशमुपकारिणमध्येतार वेत्तीति सचिवित्, तमभिज्ञ सखायं अध्येतॄणा पुरुषाणा स्वार्थबोधनेनोपकारित्वात्सखिभूत वेदं यः पुमान् तित्याज तत्याज परार्थविनियोगेन परित्यजति, तस्य पुरुषस्य वाचि सर्वस्यां लौकिक्यां शास्त्रीयायां वाच्यपि भागः भजनीयः कश्चिदर्थः न अस्ति। ई अयं पुरुषः यत् वेदव्यतिरिक्तं शृणोति तत् अलकं अलीकं व्यर्थमेव शृणोति। हि यस्मात्कारणात् सुकृतस्य पन्थां पन्थानं न प्रवेद श्रद्धाराहित्यादनुष्ठानमार्ग न जानाति। तस्मात्तदीयश्रवणमपि निष्फलमित्यर्थः। द्वितीयचतुर्थपादयोरभिप्रायः आरण्यके दर्शितः 'न तस्यानूक्ते भागोऽस्ति' (ऐआ. ३।२।४) इत्यादिना। तथा 'त योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाऽभ्युक्ता' (तैआ. २।१५।५) इत्यध्वर्युभिश्च। ऋसा.

(१) ऋसं. १०।७१।६, ऐआ. ३।२।४।३; तैआ. १।३।१ सचिविदं (सखिविदं).

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।
आदघ्नास उपकक्षास उ त्वे ह्रदाइव स्नात्वा उ त्वे ददृश्रे॥

अक्षण्वन्तः अक्षिमन्तः। अनेन दृश्यते सर्वमित्यक्षि। यद्वा, तैजसत्वादन्येभ्योऽङ्गेभ्यो व्यक्ततरम्। तथा च श्रूयते—'तस्मादेते व्यक्ततरे इव' इति। तादृशाक्षियुक्ताः। कर्णवन्तः। कर्णौ निकृत्तद्वारः। गर्भावस्थायामेव केनापि निर्मितबिल इत्यर्थः। यद्वा, शरीरस्य शिरसो वोर्ध्वं गते उच्चैः स्थितं। कर्णविलक्षणाकाशवन्तः। तथा चाम्नायते—'ऋच्छन्ती इव खे उदगन्ताम्' इति। तादृशाः सखायः। समान ख्यान ज्ञानं येषामिति सखायः। तेषु वाक्येषु बाह्येष्विन्द्रियेषु समानज्ञाना इत्यर्थः। ते मनोजवेषु। मनसा गम्यन्ते ज्ञायन्ते इति मनोजवा. प्रज्ञाद्याः तेषु असमाः अतुल्याः बभूवुः भवन्ति। तेषु मध्ये केचित् आदघ्नासः आस्यदघ्ना आस्यप्रमाणोदका ह्रदा इवेति मध्यमप्रज्ञानाह। अथ त्वे एके उपकक्षासः कक्षसमीपप्रमाणोदका ह्रदा इव। अल्पोदका इत्यर्थः। अनेनाल्पप्रज्ञानाह। तथा त्वे एके स्नात्वाः स्नानार्हाः अक्षोभ्योदकाः ह्रदा इव ददृश्रे दृश्यन्ते। अनेन महाप्रज्ञानाह। उः पूरणः। 'अक्षिमन्तः कर्णवन्तः सखायोऽक्षि चष्टेः' (नि. १।९) इत्यादिक निरुक्तमत्र द्रष्टव्यम्। ऋसा.

ह्रदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे॥

सखायः समानख्यानाः ब्राह्मणाः ह्रदा बुद्धिमतां हृदयेन तष्टेषु निश्चितेषु परिकल्पितेषु मनसो जवेषु गन्तव्येषु वेदार्थेषु गुणदोषनिरूपणाः यत् यदा सयजन्ते सगच्छन्ते। अत्र अस्मिन् ब्राह्मणसघे त्व अविज्ञातार्थमेकं

(१) ऋसं. १०।७१।७; नि. १।९।१
(२) ऋसं. १०।७१।८; नि. १३।१३.

पुरुष वेद्याभिः वेदितव्याभिः विद्याभिः प्रवृत्तिभिर्वा वि जहुः विशेषेण परित्यजन्ति । अह इति विनिश्चये । ओह-ब्रह्माणः, ऊह्यमानं ब्रह्म विद्याश्रुतिमतिबुद्धिलक्षण येषा ते तथोक्ताः, तादृशास्त एके विद्वांसः वि चरन्ति यथाकाम वेदार्थेषु विनिश्चयार्थं प्रवर्तन्ते । उः प्रसिद्धौ । 'हृदा तष्टेषु मनसां प्रजवेषु' ( नि. १३।१३ ) इत्यादिकं निरुक्त द्रष्टव्यम् । ऋसा.

इमे ये नार्वाङ्न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः ।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥

अनया वेदार्थानभिज्ञा निन्द्यन्ते । इमे ये अविद्वांसः अर्वाक् अर्वाचीनमधोभाविन्यस्मिँल्लोके ब्राह्मणैः सह न चरन्ति, ये परः परस्तादेवैः सह न चरन्ति, ते ब्राह्मणासः ब्राह्मणाः वेदार्थतत्पराः न भवन्ति । तथा सुतेकरासः । सोम सुतमभिषुत कुर्वन्तीति सुतेकरा ऋत्विजः । तेऽपि न भवन्ति । अप्रजज्ञयः अविद्वांसः त एते मनुष्याः वाचं लौकिकीं अभिपद्य प्राप्य तया पापया पापकारिण्या वाचा युक्तास्ते सिरीः सीरिणो भूत्वा तन्त्र कृषिलक्षण तन्वते विस्तारयन्ति कुर्वन्तीत्यर्थः । सर्वथा वेदार्थो ज्ञेय इत्यभिप्रायः । ऋसा.

सर्वे नन्दन्ति यशसाऽऽगतेन सभासाहेन सख्या सखायः ।
किल्बिपस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥

सखायः समानख्यानाः समानज्ञानाः सर्वे सभ्या मनुष्याः सभासहेन सभा सोढुं शक्नुवता सख्या ऋत्विजां सखिभूतेन यज्ञं प्रत्यागतेन यशसा यशस्विना सोमेन हेतुना नन्दन्ति हृष्टा भवन्ति । स हि स एव सोमः एषा जनानां किल्बिषस्पृत् । यः स्वस्मादन्यः पुरुषः श्रेष्ठतामश्नुते, स किल्बिष भवति बाध्यत्वेन । यथा पापं सदाचारैर्बाधितव्यं भवति तद्वत् । पापरूपस्य शत्रोर्बाधकः । यद्वा, यज्ञे साध्वनुप्रवचनाकरणेन यत्किल्बिषमेषां जायते तद्यो बाधते स किल्बिषस्पृत् । तथा त्व पितुषणिः । पितुरित्यन्ननाम दक्षिणा वा । तमनेन सोमेन सनोति यजमानः सभजते इति तादृशः । तेषामन्नदक्षिणादातेत्यर्थः । किंच हितः पात्रेषु निहितः सोमः वाजिनाय, इन्द्रिय वीर्यं वाजिन, तेषा वीर्याय तत्कर्तुं अर अल पर्याप्तः समर्थो भवति । 'सर्वे नन्दन्ति यशसाऽऽगतेनेत्यन्वाह यशो वै सोमो राजा' इत्यादिक 'इन्द्रिय वै वीर्यं वाजिनमाजरस ह्यस्मै वाजिन नापच्छिद्यते' (ऐब्रा० ३।१३) इत्यन्तं ब्राह्मणमत्रानुसंधेयम् । ऋसा.

ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥

अनया होत्राद्यृत्विक्कर्मणा विनियोगमाचष्टे—त्वः एको होता ऋचा पोप यथाविधि कर्मणि प्रयोग पुपुष्वान् । एको धातुरनुवादार्थः । बह्वीर्ऋचः पुष्यन् शसन् आस्ते । त्वः एक उद्गाता शक्वरीषु । शक्वर्यः ऋचः। आभिर्ऋग्भिर्वृत्र हन्तुमिन्द्रः समर्थोऽभूदिति शक्वर्यः । तासु गायत्र साम गायति । त्वः एकः ब्रह्मा च जातविद्यां जाते जाते कर्तव्ये प्रायश्चित्तादौ वेदयित्री वाच वदति । ब्रह्मा हि सर्वं वेदितुं योग्यो भवति खलु । त्वः एकोऽध्वर्युश्च यज्ञस्य मात्रां, यज्ञो यया मीयतेऽभिपवग्रहणादिकया क्रियया तां मात्रा यज्ञशरीर वि मिमीते अत्यर्थं निर्मिमीते । 'ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी' ( नि. १।८ ) इत्यादिनिरुक्तानुसारेणार्थोऽभ्यधायि । एव बृहस्पतिर्विदितवेदार्थ तुष्टाव । ऋसा.

ऋचां प्राची महती दिगुच्यते । दक्षिणामाहुर्यजुषामपाराम् ।
अथर्वणामङ्गिरसां प्रतीची । साम्नामुदीची महती दिगुच्यते ॥

ऋगभिमानिदेवतानां प्राची दिक् प्रियेत्यभिज्ञैरुच्यते । अत एव सा दिक् महती । यजुरभिमानिदेवताना दक्षिणा दिक् प्रिया । सा च पाररहिता अतिविस्तीर्णा ।

(१) ऋसं. १०।७१।९.
(२) ऋसं १०।७१।१०; ऐब्रा. ३।२।७.

(१) ऋसं. १०।७१।११; नि. १।८.
(२) तैब्रा. ३।१२।९।१-२.

अथर्वाङ्गिरोनामकद्विविधमन्त्राभिमानिदेवतानां प्रतीची दिक् प्रिया। सामाभिमानिदेवतानामुदीची दिक् प्रिया। सा च महती गुणैरप्यधिका। एताश्चतुर्वेदाभिमानिदेवताः आदित्यस्य प्राच्यादिदिक्ष्ववस्थाय सेवन्ते। एतच्छन्दोगाः 'असौ वा आदित्यो देवो मधु' (छाउ. ३।१।१) इत्यस्यां मधुविद्यायां बहुप्रपञ्चेन आमनन्ति। तैब्रासा.

**ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः।**
**सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः॥**

दिवि वर्तमान आदित्यो देवः पूर्वाह्णे काले ऋग्देवताभिः सह गच्छति। अह्नो मध्यमे भागे यजुर्वेददेवतायाः समीपेऽवतिष्ठते। अस्तमयकाले सामवेददेवतया पूज्यते। तदेव त्रिभिर्वेदैरभियुक्तः सूर्यः सर्वदा गच्छति। तैब्रासा.

**ऋग्भ्यो जाता सर्वशो मूर्तिमाहुः। सर्वा गतिर्याजुषी हैव शश्वत्।**
**सर्वं तेजः सामरूप्यं ह शश्वत्। सर्वं हेदं ब्रह्मणा हैव सृष्टम्॥**

या या मूर्तिरस्ति आदित्यस्य वा देवतान्तरस्य वा, ता सर्वामप्यभिज्ञाः ऋग्भिः समुत्पन्नामाहुः। या या गतिर्देवानां विद्यते, सा शश्वत् सर्वदैव याजुषी हैव यजुषैव संपादिता। यच्चत्तेजो देवेषु विद्यते, तत्सर्वं शश्वत् सर्वदा सामरूप्यं ह साम्नैव निरूपणीयम्। तदेव सर्वमपीदं देवव्यवहारजातं ब्रह्मणा हैव देवेनैव सृष्टम्।

तैब्रासा.

**ऋग्भ्यो जातं वैश्यं वर्णमाहुः। यजुर्वेदं क्षत्रियस्याहुर्योनिम्।**
**सामवेदो ब्राह्मणानां प्रसूतिः। पूर्वे पूर्वेभ्यो वच एतदूचुः॥**

यथा देवव्यवहारस्य सर्वस्य हि वेदत्रयमेव कारणं, एव मनुष्यव्यवहारस्यापि इत्येतत् वचः पूर्वे सृष्ट्याद्यावुत्पन्ना महर्षयः पूर्वेभ्यः तदानींतनेभ्यः स्वशिष्येभ्यः ऊचुः। तैब्रासा.

**अथ[1] सर्वाणि भूतानि पर्यैक्षत्। स त्रय्यामेव विद्यायां सर्वाणि भूतान्यपश्यत्। अत्र हि सर्वेषां छन्दसामात्मा। सर्वेषां स्तोमानाम्। सर्वेषां प्राणानाम्। सर्वेषां देवानाम्। एतद्वा अस्त्येतद्ध्यमृतम्। यद्ध्यमृतं तद्ध्यस्ति। एतद्‌ तद्यन्मर्त्यम्॥**

यत्पूर्वं प्रजापतिना 'कथ न्वहमिमानि भूतानि पुनरात्मन्नावपेय, पुनरात्मन्दधीय, कथ न्वहमेवैषा सर्वेषां भूतानामात्मा स्यामिति' (शब्रा. १०।४।२।३) इति ईक्षित, तदभिधानव्याजेन त्रय्याः सर्वभूतात्मकता प्रतिपाद्यते—अथ सर्वाणि भूतानि पर्यैक्षदित्यादिना। पर्यैक्षत् अन्विषेष, व्याप्तुमिति शेषः। त्रयी विद्या वेदत्रय, तत्र सर्वभूतानि दृष्टवान्। त्रय्याः सर्वाश्रयत्वमाह—अत्र हि सर्वेषां छन्दसामिति। गायत्र्यादिसकलच्छन्दसां स्वरूपमस्ति। स्तोमास्त्रिवृदादयः। मन्त्राणा सकलदेवप्रतिपादकत्वाद्देवस्वरूपमप्यस्ति। किंबहुना, मर्त्यामृतभेदेन यद्द्विविध, तत्सर्वं त्रय्येवेत्याह—एतद्वा अस्तीत्यादिना। एतत्त्रयीरूप वस्तु अस्ति सर्वदा विद्यते। एतदेव खल्वमृतं नाशरहितम्। त्रय्यास्तावदमृतत्व नित्यत्वात्स्वतःसिद्धम्। यस्मादमृतं तस्मादस्ति। यतः सदा विद्यते तस्मादमृतानां देवानामाश्रयं, तेन अमृतात्मकत्वम्। यच्च मर्त्यं मरणधर्मकं मनुष्यादिं, तदप्येतत्त्रयीरूपमेव। अतो मर्त्यामृतात्मकं सर्वं जगदत्रान्तर्भूतमित्यर्थः। शब्रासा.

(१) शब्रा १०।४।२।२१.



## श्रेयः

भद्रक्रतवः, देवाना सुमति राति सख्यं च, आयु, मयः, भेषजं, रक्षणं, स्वस्ति, भद्रश्रवणदर्शने, स्थिराङ्ग-शरीराणि, शतायु

[1]आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥

नः अस्मान् क्रतवः अग्निष्टोमादयो महायज्ञाः विश्वतः सर्वस्मादपि दिग्भागात् आ यन्तु आगच्छन्तु । कीदृशाः क्रतवः । भद्राः समीचीनफलसाधनत्वेन कल्याणाः भजनीया वा, अदब्धासः असुरैरहिंसिताः अपरीतासः शत्रुभिरपरिगताः अप्रतिरुद्धा इत्यर्थः । उद्भिदः शत्रूणामुद्भेत्तारः । ईदृशाः क्रतवः अस्मास्तथा आगच्छन्तु । अप्रायुवः अप्रगच्छन्तः स्वकीय रक्षितव्यमपरित्यजन्तः अत एव दिवेदिवे प्रतिदिवस रक्षितारः रक्षां कुर्वन्तः, एवंगुणविशिष्टाः सर्वे देवाः नः अस्माक सदमित् सदैव वृधे वर्धनाय यथा असन् भवेयुस्तथा आगच्छन्तु इति सबन्धः । ऋसा.

[2]देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् ।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥

भद्रा सुखयित्री भजनीया वा देवानां सुमतिः शोभना मतिः अनुग्रहात्मिका बुद्धिः अस्माकमस्त्विति शेषः । कीदृशानाम् । ऋजूयता ऋजुं आर्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छताम् । तथा देवानां रातिः दान नः अस्मानाभिमुख्येन नितरा वर्ततां, तदभिमतफलप्रदानमप्यस्माक भवत्वित्यर्थः । वयं च तेषा देवानां सख्य सखित्वं सख्युः कर्म वा उप सेदिम प्राप्नुवाम । तादृशाः देवाः नः अस्माक आयुः जीवसे जीवितुं प्र तिरन्तु वर्धयन्तु । प्रपूर्वस्तिरतिर्वर्धनार्थः । तथा च यास्को व्याचख्यौ—'देवानां सख्यमुपसीदेम वय देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय' ( नि. १२।३९ ) इति । ऋसा.

[1]तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।
अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥

तान् विश्वान् देवान् पूर्वया पूर्वकालीनया नित्यया निविदा वेदात्मिकया वाचा । निविदिति वाङ्नाम । यद्वा, निविदा 'विश्वे देवाः सोमस्य मत्सन्' [ ऋस. ( खिल ) ५।५।७ ] इत्यादिकया वैश्वदेव्या निविदा वय हूमहे आह्वयामः । देवानिति यत्सामान्येनोक्त, तदेव विव्रियते— भग भजनीयं द्वादशानामादित्यानामन्यतम मित्र प्रमीतेस्त्रायक अहरभिमानिनं देवम् । 'मैत्र वा अहः' ( तैब्रा. १।७।१०।१ ) इति श्रुतेः । अदितिं अखण्डनीयामदीना वा देवमातर दक्ष सर्वस्य जगतो निर्माणे समर्थ प्रजापतिम् । यद्वा, प्राणरूपेण सर्वेषु प्राणिषु व्याप्य वर्तमानं हिरण्यगर्भम् । 'प्राणो वै दक्षः' ( तैस. २।५।२।४ ) इति श्रुतेः । अस्रिध शोषणरहित सर्वदा एकरूपेण वर्तमान मरुद्गणम् । अर्यमण, अरीन् मन्देहादीनसुरान् यच्छति नियच्छतीति अर्यमा सूर्यः । 'असौ वा आदित्योऽर्यमा' ( तैसं. २।३।४।१ ) इति श्रुतेः । तम् । वरुण, वृणोति पापकृतः स्वकीयैः पाशैरावृणोतीति रात्र्यभिमानिदेवो वरुणः । श्रूयते च— 'वारुणी रात्रिः' ( तैब्रा. १।७।१०।१ ) इति । सोम, द्वेधा आत्मानं विभज्य पृथिव्या लतारूपेण दिवि च चन्द्रात्मना देवतारूपेण वर्तमानम् । अश्विना अश्ववन्तौ । यद्वा, सर्व व्याप्नुवन्तौ । तथा च यास्कः— 'अश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्योऽश्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः' ( नि. १२।१ ) इति । एवभूतान् सर्वान् देवान् अस्मद्रक्षणार्थमाह्वयामः इति पूर्वत्र संबन्धः । अस्माभिराहूता सुभगा शोभनधनोपेता

---

(१) ऋसं. १।८९।१, कासं. २६।११ (३३); शुसं. २५।१४; शाब्रा. २०।४; ऐब्रा. १।५।३।९.

(२) ऋसं १।८९।२; मैसं. ४।१४।२ (२७) न आयुः ( ना आयुः ); शुसं. २५।१५; नि. १२।३९.

(१) ऋसं. १।८९।३; शुसं. २५।१६.

सरस्वती नः अस्मभ्यं मयः सुखं करत् करोतु ।

ऋसा.

**[१]तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।**
**तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥**

वातः वायुः तत् भेषज औषधं नः अस्मान् वातु प्रापयतु । यद्भेषज मयोभु मयसः सुखस्य भावयितृ । माता सर्वेषां जननी पृथिवी भूमिरपि तत् भेषज अस्मान् प्रापयतु । पिता वृष्टिप्रदानेन सर्वेषा रक्षिता द्यौः द्युलोकोऽपि तत् भेषजमस्मान् प्रापयतु । सोमसुतः सोमाभिषवं कृतवन्तः मयोभुवः मयसः यागफल-भूतस्य सुखस्य भावयितारः ग्रावाणः अभिषवसाधनाः पाषाणाश्च तत् भेषज अस्मान् प्रापयन्तु । हे धिष्ण्या । धिषणा बुद्धिः, तदर्हावश्विनौ युव युवा तत् भेषज शृणुतं आकर्णयतम् । यद्भेषजं अस्माभिर्वाय्वादिषु प्रार्थ्यते, तद्भेषज देवानां भिषजौ युवामस्माकमनुकूलं यथा भवति तथा जानीतमित्यर्थः ।

ऋसा.

**[२]तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम् ।**
**पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥**

पूर्वार्धेन इन्द्रः स्तूयते अपरार्धेन पूषा । ईशानं ऐश्वर्यवन्तं अत एव जगतः जङ्गमस्य प्राणिजातस्य तस्थुषः स्थावरस्य च पतिं स्वामिनं धियजिन्व धीभिः कर्मभिः प्रीणयितव्यं एवभूतं त इन्द्रं अवसे रक्षणाय वयं हूमहे आह्वयामः । पूषा नः अस्माकं वेदसां धनानां वृधे वर्धनाय रक्षिता यथा असत् येन प्रकारेण भवति तेनैव प्रकारेण अदब्धः केनाप्यहिंसितः पूषा स्वस्तये अस्माकमविनाशाय पायुः रक्षिता भवतु ।

ऋसा.

(१) ऋस. १।८९।४; शुसं २५।१७; तैब्रा. २।७।१६।३ तन्नो..... भेषजं ( तन्मेऽनुमतिरनुमन्यता ) धिष्ण्या युवम् ( सौभगा युवम् ).

(२) ऋसं १।८९।५; शुसं. २५।१८.

**[१]स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्व-वेदाः ।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृह-स्पतिर्दधातु ॥**

वृद्धश्रवाः, वृद्धं प्रभूत श्रवः श्रवणं स्तोत्र हविर्लक्षणं-मन्न वा यस्य, तादृशः इन्द्रः नः अस्माकम् । 'स्वस्तीत्यविनाशनाम' ( नि. ३।२१ )। स्वस्ति अविनाशं दधातु विदधातु करोतु । विश्ववेदाः, विश्वानि वेत्तीति विश्ववेदाः । यद्वा, विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य, तादृशः पूषा पोषको देवः नः अस्माक स्वस्ति विदधातु । अरिष्टनेमिः । नेमिरिति आयुधनाम । अरिष्टः अहिंसितः नेमिर्यस्य । यद्वा, रथचक्रस्य धारा नेमिः । यत्सबन्धिनो रथस्य नेमिर्न हिंस्यते सोऽरिष्टनेमिः । एवंभूतः तार्क्ष्यः तृक्षस्य पुत्रो गरुत्मान् नः अस्माकं स्वस्ति अविनाशं विदधातु । तथा बृहस्पतिः बृहतां देवानां पालयिता नः अस्माकं स्वस्ति अविनाशं विदधातु ।

ऋसा.

**[२]पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।**
**अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो [३]देवा अवसा गमन्निह ॥**

पृषदश्वाः, पृषद्भिः श्वेतबिन्दुभिर्युक्ता अश्वा येषां ते तथोक्ताः । पृश्निमातरः, पृश्निर्नानावर्णा गौर्माता येषाम् । शुभयावानः, शुभ शोभन यान्ति गच्छन्तीति शुभयावानः, शोभनगतय इत्यर्थः । विदथेषु यज्ञेषु जग्मयः गन्तारः अग्निजिह्वाः अग्नेर्जिह्वाया वर्तमानाः । सर्वे हि देवाः हविःस्वीकरणायाग्नेर्जिह्वायां वर्तन्ते । तात्स्थ्यात् ताच्छब्द्यम् । मनवः सर्वस्य मन्तारः । सूरचक्षसः, सूर्यप्रकाश इव चक्षः प्रकाशो येषां ते, एवंभूताः मरुतः मरुत्सञ्ज्ञकाः । विश्वे देवाः सर्वे देवाः

(१) ऋस. १।८९।६, सासं. २।२१।१ ( १८७५ ); कास. ३५।१ (२), मैसं. ४।९।२७ ( २५४ ), शुसं. २५।१९, तैआ. १।१।१, १।२१।३, १।३१।२.

(२) ऋसं. १।८९।७, कासं. ३५।१ (३) विश्वे नो ( विश्वे मा ), शुसं. २५।२०.

नः अस्मान् इह अस्मिन्काले अवसा रक्षणेन सह आ गमन् आगच्छन्तु । ऋसा.

[1] भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

हे देवाः दानादिगुणयुक्ताः सर्वे देवाः कर्णेभिः अस्मदीयैः श्रोत्रैः भद्र भजनीय कल्याण वचन शृणुयाम युष्मत्प्रसादाच्छ्रोतु समर्थाः स्याम । अस्माक बाधिर्य कदाचिदपि मा भूत् । हे यजत्राः यागेषु चरुपुरोडाशादिभिर्यष्टव्या देवाः अक्षभिः अक्षिभिः आत्मीयैः चक्षुर्भिः भद्र शोभन पश्येम द्रष्टु समर्थाः स्याम । अस्माक दृष्टिप्रतिघातोऽपि मा भूत् । स्थिरैः दृढैः अङ्गैः हस्तपादादिभिरवयवैः तनूभिः शरीरैश्च युक्ताः वयं तुष्टुवासः युष्मान् स्तुवन्तः यत् आयुः षोडशाधिकशतप्रमाण विंशत्यधिकशतप्रमाण वा देवहितं देवेन प्रजापतिना स्थापितं, तत् व्यशेम प्राप्नुयाम ।

ऋसा.

[2] शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥

हे देवाः अन्ति अन्तिके मनुष्याणां समीपे आयुष्ट्वेन भवद्भिः कल्पिताः शरदः सवत्सराः शत इत् नु शत खलु । यस्मात् सृष्टिकाले मनुष्याणां शत संवत्सरा आयुरिति युष्माभिः परिकल्पितं, तस्मात् नः अस्मान् आयुर्गन्तोः क्लृप्तस्यायुषो गमनात्पूर्वं मध्या मध्ये मा रीरिषत मा हिंसिष्ट । कीदृशान् । नः अस्माक तनूना शरीराणा जरस जरां यत्र यस्यामवस्थायां चक्र कृतवन्तो यूयं, यत्र च पुत्रासः पुत्राः पितरः अस्माक रक्षितारः भवन्ति । ईदृग्दशापन्नानित्यर्थः ।

ऋसा.

शान्तिः सुखं स्वस्ति स्थिति प्रतिष्ठा च

[1] शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥

नः अस्माकं अस्मभ्यं वा इन्द्राग्नी अवोभिः रक्षणैः शं शान्त्यै भवताम् । रातहव्या रातहव्यौ यजमानैर्दत्तहविष्कौ इन्द्रावरुणा इन्द्रावरुणावपि नः अस्मभ्यं शं शान्त्यै भवताम् । इन्द्रासोमा इन्द्रासोमावपि नः शं शान्त्यै सुविताय कल्याणाय च भवताम् । शं शान्त्यै सुखाय च । पुनरुक्तिरादरार्था । अथवा, शं शमनहेतुक सुखं योः विषययोगनिमित्त सुखमित्यपुनरुक्तिः । इन्द्रापूषणा इन्द्रापूषणावपि वाजसातौ युद्धे अन्नलाभे निमित्ते वा नः श शान्त्यै भवतामित्यर्थः । ऋसा.

[2] शं नो भगः शमु नः शंसो अस्तु शं नः पुरंधिः शमु सन्तु रायः ।
शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥

नः अस्माक शं शान्त्यै भगः देवः अस्तु भवतु । नः अस्माकं शमु शान्त्यै एव शसः नराशसोऽस्तु भवतु । नः अस्माक शं शान्त्यै पुरंधिः बहुधीरप्यस्तु । रायः धनान्यपि शमु शान्त्यै एव सन्तु । नः अस्माकं सुयमस्य शोभनयमयुक्तस्य सत्यस्य शसः वचनमपि श अस्तु । नः अस्माकं शं शान्त्यै पुरुजातः बहुप्रादुर्भावः अर्यमा देवोऽपि अस्तु । ऋसा.

[3] शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।

(१) ऋसं १।८९।८; सासं २।२१।१ (१८७४) शेम (शेमहि); कासं. ३५।१ (१)माक्षभि (माक्षिभि) सस्तनू (सस्तुनू); मैसं. ४।१४।२ (२८); शुसं. २५।२१ सासंवत्; ऐआ. १।३ (आदिशान्तिपाठे); तैआ. १।१।१,१।२१।३,१।३२।२.

(२) ऋसं. १।८९।९; कासं. ३५।१ (४); मैसं. ४।१४।२ (२९); शुसं. २५।२२; शब्रा. २।३।३।६; गोब्रा. १।७।१७.

(१) ऋसं. ७।३५।१; असं. १९।१०।१; शुसं. ३६।११ उत्तरार्धे (शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं यो.).

(२) ऋसं. ७।३५।२; असं. १९।१०।२.

(३) ऋसं. ७।३५।३; असं. १९।१०।३.

शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥

नः अस्माक शं शान्त्यै धाता देवः अस्तु । नः अस्माकं शमु शान्त्यै एव धर्ता पुण्यपापाना विधारयिता वरुणो देवोऽप्यस्तु । नः अस्माक श शान्त्यै उरूची विवर्तगमना पृथिव्यपि स्वधाभिः अन्नैः सह अस्तु । बृहती महत्यौ रोदसी द्यावापृथिव्यावपि श भवताम् । अद्रिः पर्वतोऽपि नः अस्माक श शान्त्यै भवतु । श शान्त्यै नः अस्माक देवाना सुहवानि सुष्टुतयः सन्तु भवन्तु । ऋसा.

[1]शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः ॥

ज्योतिरनीकः ज्योतिर्मुखः अग्निः नः अस्माक श शान्त्यै अस्तु भवतु । मित्रावरुणा मित्रावरुणावपि नः अस्माकं श शान्त्यै भवताम् । अश्विना अश्विनावपि श भवताम् । सुकृतां पुण्यकर्मणा पुरुषाणां सुकृतानि पुण्यकर्माण्यपि नः अस्माकं श शान्त्यै सन्तु भवन्तु । इषिरः गमनशीलोऽपि वातः वायुरपि नः अस्माक श शान्त्यै अभि वातु । ऋसा.

[2]शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥

नः अस्माक शं शान्त्यै द्यावापृथिवी द्यावापृथिव्यौ पूर्वहूतौ प्रथमाह्वाने भवताम् । अन्तरिक्षमपि नः अस्माकं दृशये दर्शनाय श अस्तु । नः अस्माक श शान्त्यै ओषधीः ओषधयोऽपि भवन्तु । वनिनः वृक्षाश्च शं भवन्तु । जिष्णुः जयशीलः रजसः लोकस्य पतिः इन्द्रोऽपि नः अस्माक श शान्त्यै अस्तु । ऋसा.

[3]शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥

देवः द्योतनादिगुणयुक्तः इन्द्रः वसुभिः देवैः सार्धं नः अस्माकं श शान्त्यै भवतु । सुशंसः शोभनस्तुतिः वरुणः देवः आदित्येभिः आदित्यैर्देवैः सार्धं श शान्त्यै अस्तु भवतु । जलाषः रुद्रः दुःखद्रावको देवः रुद्रेभिः रुद्रैः सार्धं श शान्त्यै नः अस्माक भवतु । इह यज्ञे त्वष्टा देवः ग्नाभिः देवपत्नीभिः सार्धं नः श शान्त्यै भवतु । इह यज्ञे नः स्तोत्र शृणोतु च । ऋसा.

[1]शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः ।
शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः शम्वस्तु वेदिः ॥

नः अस्माक श शान्त्यै सोमः भवतु । ब्रह्म स्तोत्रमपि नः अस्माकं श शान्त्यै भवतु । ग्रावाणः अभिषवसाधनभूताः पाषाणा अपि नः अस्माकं श शान्त्यै भवन्तु । यज्ञाः च नः शमु शान्त्यै एव सन्तु । स्वरूणां यूपाना मितयः उन्मानान्यपि नः अस्माक श शान्त्यै भवन्तु । प्रस्वः ओषधयोऽपि नः अस्माकं श शान्त्यै भवन्तु । वेदिः अपि नः शमु शान्त्यै एव अस्तु । ऋसा.

[2]शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु ।
शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥

नः अस्माक श शान्त्यै सूर्यः उरुचक्षाः विस्तीर्णतेजाः सन् उदेतु उदय प्राप्नोतु । चतस्रः प्रदिशः महादिशोऽपि नः अस्माकं श शान्त्यै भवन्तु । नः अस्माकं श शान्त्यै पर्वताः ध्रुवयः ध्रुवाः भवन्तु । नः अस्माकं श शान्त्यै सिन्धवः नद्योऽपि भवन्तु । आपः च नः शमु शान्त्यै एव सन्तु । ऋसा.

(१) ऋसं. ७।३५।४, असं. १९।१०।४.
(२) ऋसं. ७।३५।५; असं. १९।१०।५.
(३) ऋसं. ७।३५।६; असं. १९।१०।६.

(१) ऋसं. ७।३५।७; असं. १९।१०।७.
(२) ऋसं. ७।३५।८; असं. १९।१०।८ शं नश्चतस्रः प्रदिशो भवन्तु ( शं नो भवन्तु प्रदिशश्चतस्रः ).

[1]शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥

अदितिः देवी व्रतेभिः व्रतैः कर्मभिः सार्धं नः अस्माकं शं शान्त्यै भवतु । स्वर्काः शोभनस्तुतयः मरुतः अपि नः अस्माकं शं शान्त्यै सन्तु । विष्णुः व्यापकः नः अस्माकं शं शान्त्यै अस्तु । पूषा देवोऽपि नः अस्माकं शमु शान्त्यै एव अस्तु । भवित्रं भुवनं अन्तरिक्षमुदकं वा नः अस्माकं शं शान्त्यै अस्तु । वायुः अपि नः शमु शान्त्यै एव अस्तु ।

ऋसा.

[2]शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भुः ॥

देवः क्रीडनादिगुणयुक्तः सविता त्रायमाणः रक्षन् नः अस्माकं शं शान्त्यै भवतु । विभातीः व्युच्छन्त्यः उषसः अपि नः अस्माकं शं शान्त्यै भवन्तु । नः अस्माकं प्रजाभ्यः पर्जन्यः अपि शं भवतु । शम्भुः सुखस्य भावयिता क्षेत्रस्य पतिः नः अस्माकं शं शान्त्यै अस्तु । ऋसा.

[3]शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥

विश्वेदेवाः बहुस्तोत्रकाः देवाः नः अस्माकं शं शान्त्यै भवन्तु । सरस्वती च धीभिः स्तुतिभिः कर्मभिर्वा सह नोऽस्माकं शं शान्त्यै अस्तु । अभिषाचः यज्ञमभितः सेवमानाश्च नः शं शान्त्यै भवन्तु । रातिषाचः दानं सेवमाना अपि शमु शान्त्यै एव भवन्तु । दिव्याः दिवि भवाश्च नः अस्माकं शं शान्त्यै भवन्तु । पार्थिवाः पृथिव्या सम्भूताश्च नः शं भवन्तु । अप्याः अप्स्वन्तरिक्षे भवाश्च, 'आकाशमापः' इत्यन्तरिक्षनामसु पाठात् । नः अस्माकं शं शान्त्यै भवन्तु ।

ऋसा.

[1]शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।
शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥

सत्यस्य पतयः पालकाः सत्यशीला देवाः नः अस्माकं शं शान्त्यै भवन्तु । अर्वन्तः अश्वाश्च नः अस्माकं शं शान्त्यै भवन्तु । गावः अपि नः शं शान्त्यै भवन्तु । सुकृतः सुकर्माणः सुहस्ताः शोभनहस्ताः ऋभवः अपि नः अस्माकं शं शान्त्यै सन्तु । हवेषु स्तोत्रेषु सत्सु पितरः अपि नः अस्माकं शं शान्त्यै भवन्तु ।

ऋसा.

[2]शं नो अज एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः ।
शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥

अज एकपात् अज एकपान्नामधेयः देवः नः अस्माकं शं शान्त्यै अस्तु । अहिर्बुध्न्यः च नः अस्माकं शं शान्त्यै अस्तु । समुद्रः अपि नः शं शान्त्यै अस्तु । पेरुः उपद्रवेभ्यः पारयिता अपां नपात् अपानपान्नामधेयोऽपि देवः नः अस्माकं शं शान्त्यै अस्तु । देवगोपा देवा गोपायितारो यस्याः सा पृश्निः मरुतां माता नः अस्माकं शं शान्त्यै भवतु । ऋसा.

[3]आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः ।
शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥

नवीयः नवतरं अस्माभिः क्रियमाणं इदं ब्रह्म स्तोत्रं

(१) ऋसं. ७।३५।९; असं. १९।१०।९.
(२) ऋसं. ७।३५।१०; असं. १९।१०।१०.
(३) ऋसं. ७।३५।११; असं. १९।११।२; मैसं. ४।१४।११ (१४६); तैब्रा. २।८।६।३.

(१) ऋसं. ७।३५।१२; असं. १९।११।१.
(२) ऋसं. ७।३५।१३; असं. १९।११।३ शं नोऽहिर्बुध्न्यः (शमहिर्बुध्न्यः).
(३) ऋसं. ७।३५।१४; असं. १९।११।४ जुषन्तेदं (जुषन्तामिदं).

आदित्याः दिव्याः, 'अदितिर्द्यौः' (ऋसं. १।८९।१०) इति श्रुतेः। रुद्राः आन्तरिक्षाः वसवः पार्थिवाश्च जुषन्त जुषन्तां सेवन्ताम्। अन्ये दिव्याः दिवि भवाः पार्थिवासः पार्थिवाः गोजाताः गोः पृश्नेर्जाताः। 'नाको गौः' इति साधारणनामसु पाठात्। उत अपि च ये यज्ञियासः यज्ञार्हाः, ते सर्वेऽपि नः अस्माकं हव शृण्वन्तु। ऋसा.

**[1]ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः।**
**ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः॥**

यज्ञियानां यजनीयानां देवाना अपि यज्ञियाः यजनीयाः मनोः प्रजापतेश्च यजत्राः यजनीयाः अमृताः मरणरहिताः ऋतज्ञाः सत्यज्ञाः ये देवाः सन्ति, ते सर्वे उरुगाय बहुकीर्तिं पुत्र अद्य नः अस्मभ्यं रासन्तां प्रयच्छन्तु। सिद्ध एवोत्तमः पादः।

ऋसा.

**[2]तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम्।**
**अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय॥**

अत्र लिङ्गसिद्धा देवताः। हे मित्रावरुणा मित्रावरुणौ तत् इद सूक्त शस्तं स्तुतं अस्तु भवतु। हे अग्ने तत् सूक्त शस्तमस्तु। अस्मभ्यं शं सुखाय योः दुःखानाममिश्रणायेदं शस्तमस्तु। वयं च अशीमहि प्राप्नुयाम गाधं स्थितिम्। उत अपि च प्रतिष्ठां स्थितेरवच्छित्तिं चाशीमहि। नमः नमस्करोमि दिवे द्योतमानाय सूर्याय बृहते महते सादनाय आश्रयाय विश्वस्य। ऋसा.

सर्वलक्षणोपेता लक्ष्मीः, सर्वप्रकारदुर्लक्ष्मीनिवारणं च

**[3]हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्।**
**चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममा वह॥**

हे जातवेदः, जातानि वेद जातप्रज्ञो वा। जाते जाते विद्यते इति वा। हे अग्ने त्व हिरण्यवर्णां हिरण्यस्य सुवर्णस्य वर्णः कान्तिः तद्वद्वर्णो यस्याः ताम्। हरिणीं हरितवर्णां हरिणीरूपधरां वा, 'श्रीर्धृत्वा हरिणीरूपमरण्ये सञ्चचार ह' इति देवीपुराणाच्च। सुवर्णरजतस्रजां, सुवर्णस्य पुष्पाणि सुवर्णानि एव रजतस्य रजतानि तेषां स्रक् माला यस्याः ताम्। स्रक्साहचर्यात् पुष्पाणीत्यवगम्यते। यद्वा, सुवर्णरजतविकृतशृङ्खलाम्। सुष्ठु वर्णो यस्य तत्सुवर्णं, यद्रजत तत्पुष्पस्रजाम्। तद्विकृतशृङ्खला वा। चन्द्रा चन्द्रवत्प्रकाशमानां तद्रूपेणावस्थिता वा। हिरण्मयीं हिरण्यस्वरूपा हिरण्यविग्रहा वा। लक्ष्मीं लक्षणवतीम्। 'लक्ष्मीर्लाभाद्वा लक्षणाद्वा' (नि. ४।१०) इत्यादिनिरुक्तात्। एवंरूपां श्रिय मे मह्यं मदर्थं आ वह आह्वय। अग्नेर्देवहोतृत्वादाह्वानं तदधीनमिति भावः। 'अग्निर्वै देवाना होता' (ऐब्रा.६।७।१२) इति श्रुतेः। विद्याभा.

**तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्।**
**यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्॥**

हे जातवेदः अग्ने त्व अनपगामिनीं अपगमनरहितां अनपायिनीमित्यर्थः। ता वक्ष्यमाणलक्षणां लक्ष्मीं मे मह्यं आ वह आह्वय। यस्या श्रीदेव्यामावाहिताया सत्यां हिरण्य सुवर्णं गा धेनुं अश्व वाजिन पुरुषान् पुत्रपौत्रमित्रदासभूतानहं विन्देय प्राप्नुयाम्। विद्याभा.

**अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्।**
**श्रियं देवीमुप ह्वये श्रीर्मा देवी जुषताम्॥**

अश्वपूर्वा अश्वाः पूर्वे पुरोगाः यस्याः ताम्। अथवा, अश्वपूर्णां अश्वैः पूर्णां परिपूर्णामिति केचित्। रथमध्या रथा मध्ये यस्याः ताम्। हस्तिनादप्रबोधिनीं हस्तिनां गजानां नादेन बृंहितेन गजपुष्करतूर्यनादेन वा प्रबोधिनीं प्रकर्षेण ज्ञापयित्रीम्। देवीं देवनशीला द्योतनशीलां वा। श्रिय श्रयणीयां सेनारूपां वा। उप ह्वये समीपं प्रत्याह्वये। एतादृशी देवी श्रीर्मा मा जुषतां सेवताम्। विद्याभा.

**कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्।**
**पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियम्॥**

---

(१) ऋसं. ७।३५।१५; असं. १९।११।५ यज्ञिया यज्ञियानां (ऋत्विजो यज्ञियासो).
(२) ऋसं. ५।४७।७; असं. १९।११।६.
(३) ऋस. (खिल) २।६।१-१५.

का वाङ्मनसयोरगोचरा दुर्निरूपस्वरूपामित्यर्थः । ब्रह्मरूपां वा । 'को ह वै नाम प्रजापतिः' इति श्रुत्यन्तरात् । 'क इति ब्रह्मणो नाम' इति पुराणाच्च । सोस्मिता आ ईषत् उद्गत स्मितं हास्य तद्युक्ताम् । उपान्त्यलोपश्छान्दसः । हिरण्यप्राकारां हिरण्यस्य सुवर्णस्य प्राकारः आवरण यस्याः ताम् । हिरण्यप्रकृष्टः आकारः आकृतिर्यस्यास्तामिति वा । आर्द्रां क्लिन्ना, क्षीरोदधेरुत्पन्नत्वात् । रुद्ररूपा वा । रुद्रशब्दोऽत्र अमूर्धन्यस्वरादिः, 'आर्द्रया रुद्रः' (तैब्रा. २।१।३) इत्यादौ तथा दर्शनात् । ज्वलन्ती प्रकाशमानाम् । तृप्ता प्रीतामपि च तर्पयन्तीं, भक्तान् मनोरथैरिति शेषः । पद्मेस्थितां कमले निषण्णामासीनाम् । पद्मवर्णां कमलवर्णाम् । तामिति प्रसिद्धा श्रिय इह उप ह्वये समीप प्रत्याह्वये । विद्याभा.

**चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।**
**तां पद्मिनीमीं शरणमहं प्र पद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे ॥**

अत्र प्र पद्ये इत्यस्यानन्तरं अहशब्दप्रक्षेपः प्रामादिकः । चन्द्रा चन्द्रवत्प्रकाशमानाम् । प्रभासा प्रकृष्टा भाः कान्तिर्यस्यास्ताम् । यशसा कीर्त्या ज्वलन्ती प्रकाशमानाम् । लोके स्वर्लोके देवजुष्टां देवैरिन्द्राद्यैर्जुष्टा सेविता प्रीता वा । उदारा वदान्या प्रगल्भा वा । पद्मिनी पद्मलतारूपा पद्माकारां वा । ईमिति निपातोऽनर्थकः । 'मिताक्षरेष्वनर्थकाः कमीमिदु' (नि. १।९) इति यास्कवचनात् । ईकारवाच्या वा । ता श्रिय लोके इह लोके शरणं रक्षित्रीं प्रपद्ये प्रपन्नोऽस्मि, अहमिति शेषः । अतो हे श्रीः मम अलक्ष्मीः अश्रीः नश्यतां नाश प्राप्नोतु । एतादृशीं त्वां वृणे शरणत्वेन स्वीकुर्वे । विद्याभा.

**आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।**
**तस्य फलानि तपसा नुदन्तु मायान्तरा याश्च बाह्या अलक्ष्मीः ॥**

आदित्यवर्णे आदित्यस्य सूर्यस्य वर्ण इव वर्णो यस्याः तस्याः संबोधनम् । हे श्रीः तव तपसः नियमाद्धेतोः वनस्पतिः, 'अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः' (मस्मृ. १।४७) इति मानवस्मरणात् । बिल्वः बिल्वनामको वृक्षो द्रुमोऽधिजातः प्रादुर्भूतः, त्वत्करादिति शेषः । 'कात्यायन्याः शमी जाता बिल्वो लक्ष्म्याः करेऽभवत्' इति वामनपुराणात् । अथ अनन्तरं तस्य बिल्वस्य फलानि पक्वशलाटुकानि तपसा त्वत्तपसा, त्वदनुग्रहेणेत्यर्थः । अन्तरा अन्तरिन्द्रियसबन्धिनी माया अज्ञान तत्कार्याणि च बाह्या बहिरिन्द्रियसबन्धिन्यो याः ताः अलक्ष्मीरश्रियो नुदन्तु अपनुदन्तु निवारयन्त्वित्यर्थः । विद्याभा.

**उपैतु मां देवसखः कीर्तिश्च मणिना सह ।**
**प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥**

हे श्रीः देवसखः देवो महादेवः तस्य सखा कुबेरः । कीर्तिः कीर्त्यभिमानिनी दक्षकन्या देवता, कुबेरकोशशाला वा । सा च मणिना चिन्तामणिना मणिभद्रेण कोशाध्यक्षेण वा सह सार्धं उपैतु उपगच्छतु । अहमस्मिन् राष्ट्रे जनपदे प्रादुर्भूतोऽस्मि उत्पन्नोऽस्मि । स आगत्य कीर्तिं यशः कोशं वा ऋद्धिं सर्ववस्तुसमृद्धिं मे मह्य ददातु यच्छतु । विद्याभा.

**क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।**
**अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥**

क्षुत्पिपासामला अशनतृष्णामलिनात्मिकां ज्येष्ठां वृद्धां, श्रियः प्रागुत्पन्नामित्यर्थः । अलक्ष्मीं अश्रियं अहं नाशयामि नाश प्रापयामि । हे श्रीः त्वं अभूतिं असपत्तिं तथा सर्वामसमृद्धिं च अनभिवृद्धिमपि मे मम गृहात् निर्णुद निवारय । विद्याभा.

**गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**
**ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम् ॥**

गन्धद्वारां गन्धो घ्राणग्राह्यो गुणो द्वारं लक्षण यस्यास्ताम् । दुराधर्षां केनापि धर्षयितुमशक्याम् । नित्यपुष्टां नित्य सदा सस्यादिभिः पुष्टा समृद्धाम् । करीषिणी करीषः शुष्कगोमयादिः तद्वतीम् । गवाश्वादिबहुपशुसमृद्धामिति यावत् । सर्वभूतानां सर्वप्राणिना ईश्वरीं अधिष्ठात्रीं, आधारभूता वा । तां भूरूपा श्रिय इह लोके उप ह्वये उपाह्वये समीपं प्रत्याह्वये ।

विद्याभा.

मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥

हे श्रीः मनसः काम मनोरथ आकूतिं संकल्प च । वाचः वागिन्द्रियस्य सत्य याथार्थ्यम् । पशूना गवादीना रूप क्षीरादि । अन्नस्य अदनीयस्य यवव्रीह्यादेः रूप भक्ष्यादिचतुर्विध च अशीमहि लभेमहि । श्रीः सपत् यशः कीर्तिश्च मयि श्रयतां आश्रयताम् । विद्याभा.

कर्दमेन प्रजा भूता मयि सं भव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥

कर्दमेन कर्दमाख्येन पुत्रेण, प्रजा प्रकृष्ट जा अपत्यं यस्याः सा, सुपुत्रेत्यर्थः । 'जामपत्यम्' ( नि. ३।६ ) इति यास्कवचनात् । भूता अभवत् । अतः हे कर्दम श्रीपुत्र त्व मयि मदीयगृहे सं भव सवस । पद्ममालिनी कमलमालाधारिणीं मातरं तव जननीं श्रिय मे मम कुले वशे वासय निवासय । विद्याभा.

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥

आपः अब्भिमानिन्यो देवताः । स्निग्धानि स्नेहंयुक्तानि कार्याणि सृजन्तु उत्पादयन्तु । अपां स्नेहगुणवत्त्वादिति भावः । हे चिक्लीत चिक्लीताख्य श्रीपुत्र मे मम गृहे गेहे वस निवस । च अपि च देवीं मातर श्रिय मे मम कुले वशे नि वासय संवासय ।

विद्याभा.

आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममा वह ॥

आर्द्रां आर्द्राङ्गां पुष्करिणीं अभिषेकोद्युक्तदिग्गजशुण्डाग्राम् । पुष्करशब्दो गजशुण्डाग्रवाचकः । पद्ममालिनीं पद्मवतीं पद्मलतारूपा वा । पुष्टिं पुष्ट्यभिमानिनीं पुष्टिरूपा वा, 'पुष्टिरूपेण सस्थिता' इति मार्कण्डेयवचनात् । पिङ्गलां पिङ्गलवर्णाम् । पद्ममालिनीमित्यादि सिद्धमन्यत् । विद्याभा.

आर्द्रां यःकरिणीं यष्टिं सुवर्णां हेममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममा वह ॥
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥

आर्द्रां आर्द्राङ्गाम् । यःकरिणीं यष्टिकरां वेत्रहस्तामित्यर्थः । दण्डकारिणीं वा दण्डकरां वा । यष्टिं दण्डरूपाम् । सुवर्णां शोभनवर्णाम् । हेममालिनीं हेमविकृतमणिशृङ्खलादिमालावतीम् । सूर्यां सूर्यवत्प्रकाशमाना तद्रूपां वा । सिद्धमन्यत् ।

तामिति । इयं द्वितीयया व्याख्याता । प्रभूतं भूयिष्ठम् । गावः गाः । दास्यः परिचारिकाः । इयान् विशेषः । विद्याभा.

मेधा, मधुमती वाणी, श्रुतं, व्रतं, सत्यमतिः, श्रद्धा, यश इत्यादयः

[1]मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः ।
मेधामिन्द्रश्चाग्निश्च मेधां धाता ददातु मे ॥
मेधां मे वरुणो राजा मेधां देवी सरस्वती ।
मेधां मे अश्विनौ देवावा धत्तां पुष्करस्रजा ॥
या मेधाऽप्सरस्सु गन्धर्वेषु च यन्मनः ।
दैवी या मानुषी मेधा सा मामा विशतादिह ॥
यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे ।
निशामितं नि शामये मयि श्रुतम् ।
सह व्रतेन भूयासं ब्रह्मणा सं गमेमहि ॥
शरीरं मे विचर्षण वाङ्मे मधुमद्दुहे ।
अवृधमहमसौ सूर्यो ब्रह्मण आणीः स्थ ।
श्रुतं मे मा प्र हासीः ॥
मेधां देवीं मनसा रेजमानां गन्धर्वजुष्टां प्रति नो जुषस्व ।
मह्यं मेधां वद मह्यं श्रियं वद मेधावी भूयासमजिराचरिष्णुः ॥
[2]सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ॥
[3]मेधाव्यहं सुमनाः सुप्रतीकः श्रद्धामनाः सत्यमतिः सुशेवः ।
महायशा धारयिष्णुः प्रवक्ता भूयासमस्येश्वरया प्रयोगे ॥

(१) ऋसं. ( खिल ) ४।८।१-६
(२) ऋसं. १।१८।६; ऋसं. ( खिल ) ४।८।७, शुसं. ३२।१३ सिषम्+ ( स्वाहा ), नाउ. १४.
(३) ऋसं. ( खिल ) ४।८।८.

**याँ मेधां देवगणाः पितरश्चोपासते ।**
**तया मामद्य मेधयाऽग्ने मेधाविनं कुरु ॥**

देवाना बलरूपतनव श्रुतं दैवं मनश्च

[2]**ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः ।**
**वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥**

यच्छब्दोऽत्र प्रसिद्धार्थवाची । ये लोकवेदप्रसिद्धाः त्रिसप्ताः, त्रयो वा सप्त वा भावाः । तदयमर्थः-पृथिव्यादयस्त्रयो लोकाः । तेषा अधिष्ठातारः अग्निवाय्वादित्याः, सत्त्वरजस्तमोगुणाः ब्रह्मविष्णुमहेश्वराः इत्येवमाद्यास्त्रिसंख्याक्रान्ता ये सन्ति, ते सर्वे अत्र त्रिशब्देन विवक्षिताः। तथा सप्त ऋषयः, सप्त ग्रहाः, सप्त मरुद्गणाः, सप्त लोकाः, सप्त छन्दासि इत्याद्या ये सप्तसख्याक्रान्ताः सन्ति, ते सर्वे अत्र सप्तशब्देन अभिमताः । त्रिसख्याक्रान्ताः सप्तसख्याक्रान्ता वा इति यावत् । यद्वा, त्रिः सप्त त्रिसप्ताः त्रिरावृत्तसप्तसख्यायुक्ता इत्यर्थः । ते चैव द्रष्टव्याः — प्रसिद्धसूर्याधिष्ठितप्राचीदिग्व्यतिरिक्ता आरोगादिभिः सप्तभिः सूर्यैरधिष्ठिताः सप्त दिशः । ते च आरोगादयस्तैत्तिरीयैराम्नायन्ते—'आरोगो भ्राजः पटरः पतङ्गः । स्वर्णरो ज्योतिषीमान्विभासः' (तैआ. १।७।१ ) इति । होतृप्रभृतयो वषट्कर्तारः सप्त ऋत्विजः । 'मित्रश्च वरुणश्च । धाता चार्यमा च । अंशश्च भगश्च । इन्द्रश्च विवस्वांश्चेत्येते' ( तैआ. १।१३।३ ) इति श्रुत्यन्तरप्रसिद्धा विवस्वद्व्यतिरिक्ताः सप्त आदित्या इति । तथा च मन्त्रवर्णः—'सप्त दिशो नानासूर्याः । सप्त होतार ऋत्विजः । देवा आदित्या ये सप्त' ( ऋस. ९।११४।३, तैआ. १।७।४ ) इति । यद्वा, सप्त सिन्धवः सप्त लोकाः सप्त दिशः इत्येवं त्रिसप्ताः । श्रूयते हि—'यः सप्त सिन्धूनदधात्पृथिव्याम् । यः सप्त लोका नकृणोद्दिशश्च' ( तैब्रा. २।८।३।८ ) इति । सप्त ग्रहाः सप्त ऋषयः सप्त मरुद्गणा इति वा त्रिसप्ताः । अथवा, त्रिगुणिता सप्तसंख्या येष्विति बहुव्रीहिः । एकविंशतिसंख्याका इत्यर्थः । ते च—'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' ( तैस. ७।३।१०।५ ) इति प्रसिद्धाः परिगृह्यन्ते । यद्वा, शरीरारम्भकाणि पञ्च महाभूतानि पञ्च प्राणाः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि अन्तःकरणं चेति । एव एकविंशतिसख्याकाः प्रत्येतव्याः । एवमुक्तलक्षणास्त्रिसप्तसख्या ये देवाः परियन्ति प्रतिदिन प्रतिवत्सर प्रतिकल्प प्रतिशरीर यथोचितं पर्यावर्तन्ते । किं कुर्वाणाः । विश्वा विश्वानि सर्वाणि रूपाणि प्रतिनियताकारान् जगदनुग्रहार्थं बिभ्रतः धारयन्तः । यद्वा, रूप्यन्ते इति रूपाणि चेतनाचेतनात्मकानि वस्तूनि बिभ्रतः अभिमतफलप्रदानेन पोषयन्तः । वाचस्पतिः वाचः वेदात्मिकायाः पतिः पालकः स्वामी । निसर्गसिद्धत्वेन नित्यानामपि वेदानां प्रथमतस्तन्मुखादभिव्यक्तेः तस्य स्वामित्वव्यपदेशः । पदद्वयमपि परस्परसापेक्षतया एकार्थतावृत्तित्वान्निरूढत्वाच्च ब्रह्मणः सज्ञा । तेषां प्रागुदीरिताना त्रिसप्तानां देवाना बला बलानि तत्तदसाधारणसामर्थ्यानि श्रुतधारणादीनि मे मम मेधादिफलार्थिनः तन्वः तन्वाः शरीरस्य । अद्य इदानी मेधाजननादिकर्मकाले दधातु विदधातु करोतु । असा.

[1]**पुनरेहि वाचस्पते देवेन मनसा सह ।**
**वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम् ॥**

हे वाचस्पते वाचः वेदरूपायाः पालयितर्देव हे ब्रह्मन्, देवेन द्योतनात्मकेन, मनसा अन्तःकरणेन, अनुग्रहबुद्ध्येत्यर्थः । सकलेन्द्रियानुग्राहकत्वात्सत्त्वगुणपरिणामरूपत्वेन स्वच्छत्वाच्च मनसो द्योतनात्मकत्वम् । तादृशेन मनसा सह सगतः सन् पुनरेहि । क्रियाभ्यावृत्त्युपलक्षणार्थोऽयं पुनःशब्दः । अभिमतफलप्रदानार्थं पुनःपुनर्मत्समीपमागच्छेत्यर्थः । अत्र वाचस्पतेरागमनं फलप्रदानार्थम् । अपि च हे वसोष्पते वासकस्य ग्रामपश्वादिरूपस्य धनस्य स्वामिन् । यद्वा, वसोः वासकस्य प्राणस्य पते स्वामिन् प्रजापते नि रमय अभिमतग्रामादिलक्षणफलप्रदानेन नितरामस्मान् क्रीडय । यतस्त्व वसुपतिः, अतस्तव ग्रामादिविविधफलप्रदानशक्तिरस्ति । तस्मादसद-

(१) ऋसं. ( खिल ) ४।८।९, शुसं. ३२।१६ कुरु+ ( स्वाहा )

(२) असं. १।१।१; मैसं. ४।१२।१ ( २७ ) तन्वो अद्य ( तन्वोऽद्य ).

(१) असं. १।१।२; मैसं. ४।१२।१ (२६) (उपप्रेहि वाचस्पते देवेन मनसा सह । वसुपते विरमय मय्येव तन्वं मम ॥ ); नि. १०।१८.

पेक्षितानां विविधफलाना साकल्येन प्रदानान्निरन्तरं सुखयेत्यर्थः । अस्मादेव लिङ्गात् ग्रामसंपदादिषु कर्मसु विनियोग उपपन्नः ।

इदानीं ग्रामादिविविधसंपत्त्या सर्वोत्कृष्टतामात्मनः प्रार्थयते — मय्येवास्तु त्वया दत्तं ग्रामादिकं अनन्यसाधारण्येन मय्येव वर्तताम् । अन्ययोगव्यवच्छेदार्थोऽयमेवकारः । यत एवकारस्ततोऽन्यत्रावधारण इति न्यायेन अस्मच्छब्दात्परतो वर्तमानेन एवकारेण ग्रामादीनां नियम्यमानत्वात् । मेधाजननस्य प्राधान्यं दर्शयितुं विप्रपरिव्राजकन्यायेन पार्थक्येन निर्दिशति—मयि श्रुतमिति । श्रुत उपाध्यायादिभ्यितोऽधीतं वेदशास्त्रादिकमपि मय्येव, अस्तु इत्यनुषङ्गः । सम्यगधीतस्यापि वेदादेः प्रायेण विस्मरणसंभवात् अधीतस्य धारणार्थं मह्य मेधां प्रयच्छ इत्यर्थः । असा.

**इहैवाभि वि तनूभे आर्त्नी इव ज्यया ।**
**वाचस्पतिर्नि यच्छतु मय्येवास्तु मयि श्रुतम् ॥**

हे वाचस्पते इहैव अस्मिन्नेव साधके जने उभे श्रुतधारणलक्षणां मेधां विविधभोगहेतुभूतां ग्रामादिसंपदं च । अनयोः ऐहिकामुष्मिकफलसाधनेन व्यवस्थितत्वात् कोटिद्वयेन निर्देशः । ते उभे अपि फले अभि वि तनु अभितो विस्तीर्णे कुरु । सर्वजनेभ्योऽपि मय्येव प्रभूते कुर्वित्यर्थः । तत्र दृष्टान्तः — ज्यया मौर्व्या धनुषि आरोपितया आर्त्नी इव अटन्याविव, ते यथा अभिवितन्येते तथेत्यर्थः । अनेन स्वरसतः अप्राप्तयोरपि बलात्प्रापणमुक्तमिति द्रष्टव्यम् । यद्वा, इहैव अभि वि तनु, अभिमत फलमिति शेषः । उभे आर्त्नी इवेति उभशब्दस्य उत्तरत्र सबन्धः । इदानीं प्राप्तस्य फलस्य स्थैर्यं प्रार्थयते—वाचस्पतिः विधाता नि यच्छतु स्वात्मने दत्तं निखिल फलं नियमयतु, यथा मां न जहाति तथा स्थिरीकरोतु इत्यर्थः । अभिमतस्य फलस्य अयोगव्यवच्छेदमुक्त्वा अन्ययोगव्यवच्छेदमाह — मय्येवास्तु मयि श्रुतमिति । व्याख्यातमेतत् । असा.

**उपहूतो वाचस्पतिरुपास्मान्वाचस्पतिर्ह्वयताम् ।**
**सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि ॥**

(१) असं. १।१।३
(२) असं. १।१।४.

वाचस्पतिः वाचः पालयिता देवः उपहूतः समीपमाहूतः, सत्स्वप्यन्येषु देवेषु असावेव मम अभिलषितफलप्रदातेत्यस्माभिः प्रार्थित इत्यर्थः । यतो मयोपहूतः ततो हेतोर्वाचस्पतिः स देवः अस्मान् मेधाजननादिफलकामान् उप ह्वयता तत्तत्फल प्रदातु स्वसमीपं आह्वयतु । यद्वा, तत्तत्फलप्राप्तिमभ्यनुजानातु । तेन उपहूताः सन्तो वयं श्रुतेन विधितोऽधीतेन वेदशास्त्रादिना स गमेमहि सगच्छेमहि । वाचस्पतिप्रसादप्राप्तया मेधया कृत्स्नं वेदशास्त्र प्राप्नवामेति भावः । अधीतस्य वेदशास्त्रस्य स्वस्मिन् सर्वदाऽवस्थानं प्रार्थयते — मा श्रुतेनेति । श्रुतेन उक्तलक्षणेन मा वि राधिषि विराद्धो वियुक्तो मा भूव, सर्वदा वेदशास्त्रादिसहितो भूयासमित्यर्थः । असा.

अभयं, ग्रामार्थं ऊर्जं, राजक्रोधनिवारणं, अमित्रराहित्यं प्रार्थ्यमानम्

**अभयं द्यावापृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु ।**
**अभयं नोऽस्तूर्वन्तरिक्षं सप्तऋषीणां च हविषाऽभयं नो अस्तु ॥**

हे द्यावापृथिवी द्यावापृथिव्यौ युवयोः प्रसादात् इह अस्मिन्देशे नः अस्माकं अभय भयराहित्यं अस्तु, चोरव्याघ्रादिजनितस्य भयस्य निवृत्तिर्भूयादित्यर्थः । तथा सोमश्चन्द्रः सविता सूर्यश्च नः अस्माक अभयं कृणोतु करोतु । तथा द्यावापृथिव्योर्मध्ये वर्तमान उरु विस्तीर्णं अन्तरिक्ष नः अस्माकमभय अस्तु, तत्रत्यान्निमित्तात् भय मा भूदित्यर्थः । सप्तऋषीणा 'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यपः ' ( आश्व. प. १ ) इत्येवं प्रसिद्धा ये सप्त ऋषयः सन्ति, तेषां सबन्धिना हविषा अस्माभिर्दीयमानेन नः अस्माकमभय अस्तु । असा.

**अस्मै ग्रामाय प्रदिशश्चतस्र ऊर्जं सुभूतं स्वस्ति सविता नः कृणोतु ।**
**अशत्र्विन्द्रो अभयं नः कृणोत्वन्यत्र राज्ञामभि यातु मन्युः ॥**

(१) असं. ६।४०।१.
(२) असं. ६।४०।२.

अस्मै ग्रामाय अस्य ग्रामस्य अस्मदावासभूतस्य प्रदिशश्चतस्रः प्रकृष्टाः प्राच्याद्याश्चतस्रो दिशः । प्रागादिसर्वदिक्षु ऊर्जं अन्नं सुभूतं सुष्ठु उत्पन्नं, स्वस्ति । अविनाशिनामैतत् । अविनाशोपलक्षित क्षेम एतत्सर्वं नः अस्माक सविता सर्वस्य प्रेरको देवः सूर्यः कृणोतु करोतु । तथा अशत्रुः अनुपजातविरोधी इन्द्रो देवः नः अस्माक अभयं शत्रुनिमित्तभयराहित्य कृणोतु करोतु । तत्प्रसादात् राज्ञा मन्युः क्रोधः अस्मत्तः अन्यत्र अभि यातु अभिगच्छतु । अस्रा.

**अनमित्रं नो अधरादनमित्रं न उत्तरात् ।**
**इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥**

हे इन्द्र नः अस्माक अधरात् । अधरशब्दो दक्षिणदिग्वाची । दक्षिणस्याः दिशः अनमित्रं अमित्राः शत्रवः तद्राहित्य कुरु । तथा उत्तरात् उत्तरस्याः दिशः सकाशात् नः अस्माक अनमित्र शत्रुराहित्य कुरु । हे इन्द्र नः अस्माक पश्चात् पश्चिमदिग्भागात् अनमित्र अमित्रराहित्यं कुरु । पुरः पुरस्तात् पूर्वस्याः दिशः अनमित्रं अमित्रराहित्यं कृधि कुरु । अस्रा.

अनेनस्त्वम्

**यद्विद्वांसो यदविद्वांस एनांसि चकृमा वयम् ।**
**यूयं नस्तस्मान्मुञ्चत विश्वे देवाः सजोषसः ॥**

यत् पापनिमित्तं विद्वांसः जानन्तः यच्च पापनिमित्तमविद्वासः अजानानाः ज्ञानादज्ञानाद्वा वय एनांसि पापानि चकृम कृतवन्तः, हे विश्वे देवाः सजोषसः सह प्रीयमाणाः यूयं तस्मात् प्रागुक्तात्पापात् नः अस्मान् मुञ्चत । अस्रा.

(१) असं. ६।४०।३; कासं. ३७।१० (३०) पूर्वार्धे (अनमित्रं नो अधरागनमित्रमुदक् कृधि), शुसं. (काण्व) ३।२।६ (अनमित्रं मे अधरागनमित्रमुदक्कृधि । इन्द्रानमित्रं पश्चान्मेऽनमित्रं पुरस्कृधि ॥)

(२) असं. ६।११५।१; कासं. ३८।५ (५७) (यदि दिवा यदि नक्तमेनाँसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान् मुञ्चत्वँहसः ॥); मैसं. ३।११।१० (१०७) (यदि दिवा यदि नक्तमेनाऽसि चकृमा वयम् । सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्व९हसः ॥); शुसं. २०।१५ कासंवत्; तैब्रा. २।६।६।१ कासंवत्; शब्रा. १२।९।२।२ कासंवत्.

**यदि जाग्रद्यदि स्वपन्नेन एनस्योऽकरम् ।**
**भूतं मा तस्माद्भव्यं च द्रुपदादिव मुञ्चताम् ॥**

एनः पाप प्रिय अस्य एनसि साधुरिति वा एनस्यः अज्ञानादीदृशोऽहं जाग्रत् जागरावस्थापन्नः सन् । यदिशब्दो यत् इत्यर्थे । यत् एनः पापं अकर कृतवानस्मि । तथा स्वपन् स्वप्नावस्था प्राप्तः सन् यदि यत् पाप कृतवानस्मि । तस्मादुभयविधात्पापात् भूत लब्धसत्ताक प्राणिजातम् । भविष्यत्सत्ताक प्राणिजातं भव्यम् । यद्वा, इमौ लोकौ भूतभव्यशब्दवाच्यौ । तथा च तैत्तिरीयक— 'भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ होमौ जुहोति । अयं वै लोको भूतम् । असौ भविष्यत्' (तैब्रा. ३।८।१८।५) इति । ते उभे भूतभव्ये मा मा द्रुपदादिव । पादबन्धनार्थो द्रुमो द्रुपदः । तस्मादिव मुञ्चतां वियोजयताम् । अस्रा.

**द्रुपदादिव मुमुचानः स्विन्नः स्नात्वा मलादिव ।**
**पूतं पवित्रेणेवाज्यं विश्वे शुम्भन्तु मैनसः ॥**

द्रुपदादिव काष्ठमयात् पादबन्धनादिव पापात् मुमुचामः विमुच्यमानः । तथा स्विन्नः स्वेदयुक्तः पुरुषः स्नात्वा अप्सु निमज्य मलादिव, यथा देहाश्रिताद्बाह्यमलात् वियुज्यते एव पापाद्वियुज्यमानः, भवानीति शेषः । तथा पवित्रेण पवनसाधनेन पूत शोधित आज्यमिव तत् यथा निष्कल्मष भवति एव मा मा विश्वे सर्वे देवाः एनसः पापात् शुम्भन्तु शुद्धं कुर्वन्तु । अस्रा.

(१) असं. ६।११५।२, कासं ३८।५ (५८) (यदि जाग्रद्यदि स्वप्न एनाँसि चकृमा वयम् । सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः ॥); मैसं ३।११।१० (१०६) (यदि स्वपन्यदि जाग्रदेनाऽसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्व९हसः ॥), शुसं. २०।१६ कासंवत्; तैब्रा २।४।४।९ जाग्रद्यदि स्वपन्नेन (दिवा यदि नक्तमेन) करम् (करत्) मुञ्चताम् (मुञ्चतु), २।६।६।१-२ कासंवत्; शब्रा १२।९।२।२ कासंवत्.

(२) असं ६।११५।३, कासं. ३८।५ (६३) दिव मु (दिवेन्मु) स्नात्वा (स्नात्वी) ज्यं विश्वे शुम्भन्तु (ज्यमापः शुन्धन्तु); मैसं. ३।११।१० (१११) पूर्वार्धे कासंवत्, शुम्भन्तु (मुञ्चन्तु); शुसं. २०।२० स्नात्वा (स्नातो) ज्यं विश्वे शुम्भन्तु (ज्यमापः शुन्धन्तु); तैब्रा. २।४।४।९ मैसंवत्, २।६।६।३ कासंवत्; शब्रा. १२।९।२।७ शुसंवत्.

आनृण्यम्

**[१]अपमित्यमप्रतीत्तं यदस्मि यमस्य येन बलिना चरामि ।**
**इदं तदग्ने अनृणो भवामि त्वं पाशान्विचृतं वेत्थ सर्वान् ॥**

अपमित्य अपमातव्यं अपाकर्तव्य धान्यादिक ऋण उत्तमर्णाद्गृहीत अप्रतीत्त पुनस्तस्मै न प्रत्यर्पित ईदृश यदृणमेव अहं अस्मि भवामि। ऋणबाहुल्यख्यापनार्थ तादात्म्यव्यपदेशः । यस्मादेवं तस्मात् बलिना बलवता येन ऋणेन शासितुः यमस्य वशे चरामि, हे अग्ने त्वत्प्रसादादिद इदानीं तत् तेन ऋणेन अनृणः ऋणरहितो भवामि। त्व खलु तान् सर्वान् ऋणोद्भवान् पारलौकिकान्पाशान् बन्धनरज्जुविशेषान् विचृतं विचर्तितु मोचयितु वेत्थ जानासि, शक्तो भवसीत्यर्थः। असा.

**[२]इहैव सन्तः प्रति दद्म एनज्जीवा जीवेभ्यो नि हराम एनत् ।**
**अपमित्य धान्यं यज्जघसाहमिदं तदग्ने अनृणो भवामि ॥**

इहैव इह लोके एव सन्तः विद्यमाना एनत् ऋणं प्रति दध्मः उत्तमर्णाय प्रत्यर्पयामः। एतदेव विवृणोति—जीवाः इह लोके जीवन्त एव जीवेभ्यः जीवद्भ्यः उत्तमर्णेभ्यो देहत्यागात्पुरैव एनदृणं नि हरामः नितरा नियमेन वा अपाकुर्मः। धान्य व्रीहियवादिक उत्तमर्णसकाशात् अपमित्य प्रस्थाढकादिसंख्यया परिवृत्य गृहीत्वा यदह जघस भक्षितवानस्मि । हे अग्ने इदं इदानीं तत् तस्मात् परकीयधान्यभक्षणात् त्वत्प्रसादेन अनृणः ऋणरहितः ऋणनिमित्तनरकपातरहितः भवामि। असा.

**[१]अनृणा अस्मिन्ननृणाः परस्मिन् तृतीये लोके अनृणाः स्याम ।**
**ये देवयानाः पितृयाणाश्च लोकाः सर्वान्पथो अनृणा आ क्षियेम ॥**

हे अग्ने त्वत्प्रसादात् अस्मिन् भूलोके अनृणाः। ऋण अत्र लौकिक वैदिकं च परिगृह्यते। लौकिक तावदुत्तमर्णाद्गृहीत हिरण्यधान्यादिकं प्रसिद्धम्। वैदिकं तु 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तैसं. ६।३।१०।५) इति । तेन सर्वेण ऋणेन रहिताः स्याम भवेम । परस्मिन् लोके स्वर्गादौ एतद्देहपरित्यागेन दिव्यशरीरपरिग्रहेण सुकृतफलभोगस्थानेऽपि अनृणाः स्याम । ऋणादाननिमित्तो भोगप्रतिबन्धस्तत्रापि मा भूदित्यर्थः। तृतीये लोके स्वर्गादप्युत्कृष्टे नाकपृष्ठादौ वयं अनृणा भवेम । अन्येऽपि ये लोकाः देवयानाः, देवा एव येषु यान्ति गच्छन्ति ते तथोक्ताः। ये च लोकाः पितृयाणाः पितॄणा असाधारणभोगभूमयः, तान् सर्वान् लोकान् तत्प्राप्त्युपायभूतान् पथः मार्गांश्च । यद्वा, लोक्यन्ते इति लोकाः पन्थानः, देवानेव यैर्यान्ति ते देवयानाः, पितॄनेव यैर्यान्ति ते पितृयाणाः। ये एवमुभये विभिन्ना मार्गाः, तान् सर्वाननृणाः ऋणप्रतिबन्धरहिताः सन्तः आ क्षियेम अभिगच्छेम ।

असा.

संमनसः प्रजाः

**[२]प्रजापतिर्जनयति प्रजा इमा धाता दधातु सुमनस्यमानः ।**
**संजानानाः संमनसः सयोनयो मयि पुष्टं पुष्टपतिर्दधातु ॥**

(१) असं. ६।११७।१; तैसं. ३।३।८।१-२ (यत्कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि । इहैव सन्निरवदये तदेतत्तदग्ने अनृणो भवामि ॥ ); मैसं. ४।१४।१७ (२४९) (यत्कुसीदमप्रतीतं मयेह येन यमस्य निधिना चरावः। एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति हस्तानृणानि ॥ ); तैब्रा. ३।७।९।८ (यान्यपामित्यान्यप्रतीतान्यस्मि । यमस्य बलिना चरामि । ) पू.; गोब्रा. २।४।८; तैआ २।३।१ (यत्कुसीदमप्रतीत्तं मयेह येन यमस्य निधिना चरामि । एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि ॥ ).

(२) असं. ६।११७।२; तैब्रा. ३।७।९।८ दद्म एनजीवा (तद्यातयामः जीवा) पू.

(१) असं. ६।११७।३; तैब्रा. ३।७।९।८ यानाः. क्षियेम (याना उत पितृयाणाः। सर्वान्पथो अनृणा आक्षीयेम'); तैआ. २।१५।१ तैब्रावत्.

(२) असं. ७।२०।१.

प्रजापतिः प्रजाना स्रष्टा पालयिता स देवः इमाः प्रजाः पुत्रादिका जनयतु उत्पादयतु । धाता पोषको देवः सुमनस्यमानः सुमना इव आचरन् सौमनस्य प्राप्तो दधातु पोषयतु । प्रजा इत्यनुषङ्गः । किंच ताः प्रजाः सजानानाः समानज्ञानाः कार्यविषये परस्परमैकमत्य प्राप्ता इत्यर्थः । समनसः सगतमनस्काः अन्योन्याविसवादिकार्यचिन्तापरा इत्यर्थः । सयोनयः समानैकारणाः । यथा प्रजाः उक्तविशेषणविशिष्टा भवन्ति तथा पुष्टपतिः पोषस्य पतिः एतन्नामा देवः मयि पुष्टं पोष प्रजाविषयं दधातु विदधातु । असा.

दौष्वप्न्यदौर्जीवित्वदुर्वाचां निवारणम्

[1]दौष्वप्न्यं दौर्जीवित्यं रक्षो अभ्वमराय्यः ।
दुर्णाम्नीः सर्वा दुर्वाचस्ता अस्मन्नाशयामसि ॥

दुष्टः स्वप्नः दुःस्वप्नः, तत्र भव अरिष्टं दर्शन दौष्वप्न्यम् । दौर्जीवत्य, दुष्टा जीवता जीवभावो यस्य दुर्जीवतः, तस्य भावो दौर्जीवत्यम् । रक्षः राक्षसजातिः । अभ्वम् । महन्नामैतत् । यच्च अभिचारक्रियाजनित अन्यत् महद्भयकारणमस्तीत्यर्थः । यद्वा, अभ्वं महत् रक्षो ब्रह्मराक्षसादिः इति रक्षोविशेषणत्वेन योज्यम् । अत एव 'द्यावा रक्षत पृथिवी नो अभ्वात्' ( ऋसं. १।१८५। २ ) इति अभ्वस्य भयहेतुता श्रुता । अराय्यः असमृद्धिहेतवः पापलक्ष्म्यः तथा दुर्णाम्नीः छेदिका भेदिका इत्येव दुष्टनाम्नोपेताः याः पिशाच्यः दुर्वाचः नाशयामि छेदयामि भक्षयामि इत्येव दुष्टाः शब्दाः याभिः सतत प्रयुज्यन्ते तास्तथोक्ताः । इत्थ या इमाः कृत्या अनुक्रान्ताः, ताः सर्वा अस्मिन् अभिचर्यमाणपुरुषविषये नाशयामसि नाशयामः । असा. ४।१७।५

संज्ञानम्

[2]संज्ञानं नः स्वेभिः संज्ञानमरणेभिः ।
संज्ञानमश्विना युवमिहास्मासु नि यच्छतम् ॥

स्वेभिः स्वकीयैः पुरुषैः नः अस्माक संज्ञान सगतं ज्ञान ऐकमत्यं, भवत्विति शेषः । तथा अरणेभिः अरणैः अरमणैः अनुकूलमवदद्भिः प्रतिकूलैः पुरुषैः । यद्वा, अरातिभिः सह सज्ञान समानज्ञान भवतु । हे अश्विना अश्विनौ युव युवा इह अस्मिन् विषये इह इदानी वा अस्मासु सज्ञान समानज्ञान स्वीयैः परैश्च सह ऐकमत्यं नि यच्छत नियमयतं स्थापयतमित्यर्थः । असा.

सत्यं, बृहत्, ऋतं उग्रं, दीक्षा, तपः, ब्रह्म, यज्ञः, अन्नं, द्रविण, मधु, वर्चः, राष्ट्रस्य बलमोजश्च, पयः, वृद्धिः, शत्रुनाशः, चारुवाणी, 'त्विषि', धनं, निधिः, हिरण्य, शिवं, पिशाचरक्षसा हानिः, दीर्घायुः, भूति , क्षेमयुक्ता पृथिवी

[1]सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥
[2]असंबाधं बध्यतो मानवानां यस्या उद्वतः प्रवतः समं बहु ।
नानावीर्या ओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः ॥
[3]यस्यां समुद्र उत सिन्धुरापो यस्यामन्नं कृष्टयः संबभूवुः ।
यस्यामिदं जिन्वति प्राणदेजत्सा नो भूमिः पूर्वपेये दधातु ॥
[4]यस्याश्चतस्रः प्रदिशः पृथिव्या यस्यामन्नं कृष्टयः संबभूवुः ।

(१) असं ४।१७।५, ७।२४।१.८

(२) ऋसं ( खिल ) ५।१।२ स्वेभि· ( स्वेभ्यः ) रणेभि. ( रणेभ्यः ) यच्छतम् ( यच्छताम् ); असं. ७।५४।१; कासं. १०।१२ ( ३३ ) स्वेभिः ( स्वेभ्यः ) रणेभिः ( रणेभ्यः ), मैसं. २।२।६ ह्यास्मासु ( ह्यास्मभ्यं ) शेषं कासंवत्; तैब्रा. २।४।४।६ पूर्वार्धे ( संज्ञानं नः स्वै. । संज्ञानमरणैः । ).

(१) असं. १२।१।१; मैसं. ४।१४।११ (१५६) यज्ञः ( यज्ञा· ) भव्यस्य ( भुवनस्य ).

(२) असं. १२।१।२, मैसं. ४।१४।११ ( १५७ ) पूर्वार्धे ( असंबाधा या मध्यतो मानवेभ्यो यस्या उद्वतः प्रवत· समं महत् । ) नानावीर्या ( नानारूपा ).

(३) असं. १२।१।३.

(४) असं. १२।१।४; मैसं. ४।१४।११ भूमिर्गोष्वप्यन्ने ( भूमि. पूर्वपेयं ) उक्त.

या बिभर्ति बहुधा प्राणदेजत्सा नो भूमिर्गोष्व-प्यन्ने दधातु ॥
यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन्।
गवामश्वानां वयसश्च विष्ठा भगं वर्चः पृथिवी नो दधातु ॥
[2]विश्वंभरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी।
वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभा द्रविणे नो दधातु ॥
यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथिवी-मप्रमादम्।
[3]सा नो मधु प्रियं दुहामथो उक्षतु वर्चसा ॥
[4]यार्णवेऽधि सलिलमग्र आसीद्यां मायाभिरन्व-चरन्मनीषिणः।
यस्या हृदयं परमे व्योमन्त्सत्येनावृतममृतं पृथिव्याः।
सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे ॥
यस्यामापः परिचराः समानीरहोरात्रे अप्रमादं क्षरन्ति।
सा नो भूमिर्भूरिधारा पयो दुहामथो उक्षतु वर्चसा ॥
यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे।
इन्द्रो यां चक्र आत्मनेऽनमित्रां शचीपतिः।
सा नो भूमिर्वि सृजतां माता पुत्राय मे पयः ॥
गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम्।
अजीतोऽहतो अक्षतोऽध्यष्ठां पृथिवीमहम् ॥
यत्ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्जस्तन्वः संबभूवुः।
तासु नो धेह्यभि नः पवस्व माता भूमिः पुत्रो अहं पृथिव्याः।
पर्जन्यः पिता स उ नः पिपर्तु ॥
यस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः।
यस्यां मीयन्ते स्वरवः पृथिव्यामूर्ध्वाः शुक्रा आहुत्याः पुरस्तात्।
सा नो भूमिर्वर्धयद्वर्धमाना ॥
यो नो द्वेषत्पृथिवि यः पृतन्याद्योऽभिदासान्म-नसा यो वधेन।
तं नो भूमे रन्धय पूर्वकृत्वरि ॥
त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः।
तवेमे पृथिवि पञ्च मानवा येभ्यो ज्योतिरमृतं मर्त्येभ्य उद्यन्त्सूर्यो रश्मिभिरातनोति ॥
ता नः प्रजाः सं दुह्रतां समग्रा वाचो मधु पृथिवि धेहि मह्यम् ॥
विश्वस्वं मातरमोषधीनां ध्रुवां भूमिं पृथिवीं धर्मणा धृताम्।
शिवां स्योनामनु चरेम विश्वहा ॥
महत्सधस्थं महती बभूविथ महान्वेग एजथु-र्वेपथुष्टे।
महांस्त्वेन्द्रो रक्षत्यप्रमादम्।
सा नो भूमे प्र रोचय हिरण्यस्येव संदृशि मा नो द्विक्षत कश्चन ॥
अग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु।
अग्निरन्तः पुरुषेषु गोष्वश्वेष्वग्नयः ॥
अग्निर्दिव आ तपत्यग्नेर्देवस्योर्वन्तरिक्षम्।
अग्निं मर्तास इन्धते हव्यवाहं घृतप्रियम् ॥
अग्निवासाः पृथिव्यसितज्ञूस्त्विषीमन्तं संशितं मा कृणोतु ॥
भूम्यां देवेभ्यो ददति यज्ञं हव्यमरंकृतम्।
भूम्यां मनुष्या जीवन्ति स्वधयाऽन्नेन मर्त्याः।

(१) असं १२।१।५; मैसं. ४।१४।११ (१५९) पू.
(२) असं १२।१।६, मैसं. ४।१४।११ (१६१) पूर्वार्धे ( विश्वम्भरा वसुधानी पुरुक्षुद्धिरण्यवर्णा जगत. प्रतिष्ठा ) द्रविणे ( द्रविणं )
(३) असं. १२।१।७; मैसं. ४।१४।११ (१५८) प्रियं ( घृतं ).
(४) असं. १२।१।८–३०.

सा नो भूमिः प्राणमायुर्दधातु जरदष्टिं मा पृथिवी कृणोतु ॥
यस्ते गन्धः पृथिवि संबभूव यं बिभ्रत्योषधयो यमापः ।
यं गन्धर्वा अप्सरसश्च भेजिरे तेन मा सुरभिं कृणु मा नो द्विक्षत कश्चन ॥
यस्ते गन्धः पुष्करमाविवेश यं संजभ्रुः सूर्याया विवाहे ।
अमर्त्याः पृथिवि गन्धमग्रे तेन मा सुरभिं कृणु मा नो द्विक्षत कश्चन ॥
यस्ते गन्धः पुरुषेषु स्त्रीषु पुंसु भगो रुचिः ।
यो अश्वेषु वीरेषु यो मृगेषूत हस्तिषु ।
कन्यायां वर्चो यद्भूमे तेनास्माँ अपि सं सृज मा नो द्विक्षत कश्चन ॥
शिला भूमिरश्मा पांसुः सा भूमिः संधृता धृता ।
तस्यै हिरण्यवक्षसे पृथिव्या अकरं नमः ॥
यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति विश्वहा ।
पृथिवीं विश्वधायसं धृतामच्छावदामसि ॥
उदीराणा उतासीनास्तिष्ठन्तः प्रक्रामन्तः ।
पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्महि भूम्याम् ॥
विमृग्वरीं पृथिवीमा वदामि क्षमां भूमिं ब्रह्मणा वावृधानाम् ।
ऊर्जं पुष्टं बिभ्रतीमन्नभागं घृतं त्वाऽभि नि षीदेम भूमे ॥
शुद्धा न आपस्तन्वे क्षरन्तु यो नः सेदुरप्रिये तं नि दध्मः ।
पवित्रेण पृथिवि मोत्पुनामि ॥
यास्ते प्राचीः प्रदिशो या उदीचीर्यास्ते भूमे अधराद्याश्च पश्चात् ।
स्योनास्ता मह्यं चरते भवन्तु मा नि पप्तं भुवने शिश्रियाणः ॥

(१) असं. १२।१।३१; मैसं. ४।१४।११ (१६०) यास्ते......पश्चात् ( याश्च भूम्यधराग्याश्च पश्चा॰ ) स्योनास्ता ( शिवास्ता ).

मा नः पश्चान्मा पुरस्तान्नुदिष्ठा मोत्तरादधरादुत ।
स्वस्ति भूमे नो भव मा विदन्परिपन्थिनो वरीयो यावया वधम् ॥
यावत्तेऽभि विपश्यामि भूमे सूर्येण मेदिना ।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम् ॥
यच्छयानः पर्यावर्ते दक्षिणं सव्यमभि भूमे पार्श्वम् ।
उत्तानास्त्वा प्रतीचीं यत्पृष्टीभिरधिशेमहे ।
मा हिंसीस्तत्र नो भूमे सर्वस्य प्रतिशीवरि ॥
यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु ।
मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम् ॥
ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरो वसन्तः ।
ऋतवस्ते विहिता हायनीरहोरात्रे पृथिवि नो दुहाताम् ॥
याऽप सर्पं विजमाना विमृग्वरी यस्यामासन्नग्नयो ये अप्स्वन्तः ।
परा दस्यून्ददती देवपीयूनिन्द्रं वृणाना पृथिवी न वृत्रम् ।
शक्राय दध्रे वृषभाय वृष्णे ॥
यस्यां सदोहविर्धाने यूपो यस्यां निमीयते ।
ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः ।
युज्यन्ते यस्यामृत्विजः सोममिन्द्राय पातवे ॥
यस्यां पूर्वे भूतकृत ऋषयो गा उदानृचुः ।
सप्त सत्रेण वेधसो यज्ञेन तपसा सह ॥
सा नो भूमिरा दिशतु यद्धनं कामयामहे ।
भगो अनुप्रयुङ्क्तामिन्द्र एतु पुरोगवः ॥
यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलबाः ।
युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः ॥
सा नो भूमिः प्र णुदतां सपत्नानसपत्नं मा पृथिवी कृणोतु ॥
यस्यामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः ।
भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे ॥

(१) असं. १२।१।३२-५४.

यस्याः पुरो देवकृताः क्षेत्रे यस्या विकुर्वते ।
प्रजापतिः पृथिवीं विश्वगर्भामाशामाशां रण्यां नः कृणोतु ॥
निधिं बिभ्रती बहुधा गुहा वसु मणिं हिरण्यं पृथिवी ददातु मे ।
वसूनि नो वसुदा रासमाना देवी दधातु सुमनस्यमाना ॥
जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम् ।
सहस्रं धारा द्रविणस्य मे दुहां ध्रुवेव धेनुरनपस्फुरन्ती ॥
यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा हेमन्तजब्धो भृमलो गुहा शये ।
क्रिमिर्जिन्वत्पृथिवि यद्यदेजति प्रावृषि तन्नः सर्पन्मोप सृपद्यच्छिवं तेन नो मृड ॥
ये ते पन्थानो बहवो जनायना रथस्य वर्त्मानसश्च यातवे ।
यैः संचरन्त्युभये भद्रपापास्तं पन्थानं जयेमानमित्रमतस्करं यच्छिवं तेन नो मृड ॥
मल्वं बिभ्रती गुरुभृद्भद्रपापस्य निधनं तितिक्षुः ।
वराहेण पृथिवी संविदाना सूकराय वि जिहीते मृगाय ॥
ये त आरण्याः पशवो मृगा वने हिताः सिंहा व्याघ्राः पुरुषादश्चरन्ति ।
उलं वृकं पृथिवि दुच्छुनामित ऋक्षीकां रक्षो अप बाधयास्मत् ॥
ये गन्धर्वा अप्सरसो ये चारायाः किमीदिनः ।
पिशाचान्त्सर्वा रक्षांसि तानस्मद्भूमे यावय ॥
यां द्विपादः पक्षिणः संपतन्ति हंसाः सुपर्णाः शकुना वयांसि ।
यस्यां वातो मातरिश्वेयते रजांसि कृण्वंश्च्यावयंश्च वृक्षान् ।
वातस्य प्रवामुपवामनु वात्यर्चिः ॥
यस्यां कृष्णमरुणं च संहिते अहोरात्रे विहिते भूम्यामधि ।
वर्षेण भूमिः पृथिवी वृतावृता सा नो दधातु भद्रया प्रिये धामनिधामनि ॥
द्यौश्च म इदं पृथिवी चान्तरिक्षं च मे व्यचः ।
अग्निः सूर्य आपो मेधां विश्वे देवाश्च सं ददुः ॥
अहमस्मि सहमान उत्तरो नाम भूम्याम् ।
अभीषाडस्मि विश्वाषाडाशामाशां विषासहिः ॥
[1]अदो यद्देवि प्रथमाना पुरस्ताद्देवैरुक्ता व्यसर्पो महित्वम् ।
आ त्वा सुभूतमविशत्तदानीमकल्पयथाः प्रदिशश्चतस्रः ॥
[2]ये ग्रामा यदरण्यं याः सभा अधि भूम्याम् ।
ये संग्रामाः समितयस्तेषु चारु वदेम ते ॥
अश्व इव रजो दुधुवे वि तान् जनान्य आक्षियन्पृथिवीं यादजायत ।
मन्द्राग्रेत्वरी भुवनस्य गोपा वनस्पतीनां गृभिरोषधीनाम् ॥
यद्वदामि मधुमत्तद्वदामि यदीक्षे तद्वनन्ति मा ।
त्विषीमानस्मि जूतिमानवान्यान्हन्मि दोधतः ॥
शन्तिवा सुरभिः स्योना किलालोध्नी पयस्वती ।
भूमिरधि ब्रवीतु मे पृथिवी पयसा सह ॥
यामन्वैच्छद्धविषा विश्वकर्माऽन्तरर्णवे रजसि प्रविष्टाम् ।
भुजिष्यं पात्रं निहितं गुहा यदाविर्भोगे अभवन्मातृमद्भ्यः ॥
त्वमस्यावपनी जनानामदितिः कामदुघा पप्रथाना ।
यत्त ऊनं तत्त आ पूरयाति प्रजापतिः प्रथमजा ऋतस्य ॥
उपस्थास्ते अनमीवा अयक्ष्मा अस्मभ्यं सन्तु पृथिवि प्रसूताः ।

(१) असं. १२।१।५५; कासं. ७।१२ ( ५३ ) ( इयत्यग्र आसीरदो देवि प्रथमाना पृथग्यत् । देवैर्नुत्ता व्यसर्पो महित्वा अद्रंहथाः शर्कराभिस्त्रिविष्टपि । अजयो लोकान् प्रदिशश्चतस्रः ।। ); मैसं. ४।९।१ ( ११ ) अदो यद्देवि ( अतो देवि ).

(२) असं. १२।१।५६-६३.

दीर्घं न आयुः प्रतिबुध्यमाना वयं तुभ्यं बलिहृतः स्याम ॥
भूमे मातर्नि धेहि मा भद्रया सुप्रतिष्ठितम् ।
संविदाना दिवा कवे श्रियां मा धेहि भूत्याम् ॥

मधुमती वाक्, भद्रश्रुतं, सौपर्णं चक्षु अजस्रं ज्योति

'मधुमती स्थ मधुमतीं वाचमुदेयम् ॥
उपहूतो मे गोपा उपहूतो गोपीथः ॥
सुश्रुतौ कर्णौ भद्रश्रुतौ कर्णौ भद्रं श्लोकं श्रूयासम् ॥
सुश्रुतिश्च मोपश्रुतिश्च मा हासिष्टां सौपर्णं चक्षुरजस्रं ज्योतिः ॥

सार्वभौमशान्ति', शर्म, अभयं, शिव च

शान्ता द्यौः शान्ता पृथिवी शान्तमिदमुर्वन्तरिक्षम् ।
शान्ता उदन्वतीरापः शान्ता नः सन्त्वोषधीः ॥

अस्मिन्सूक्ते सर्वतः शान्तिः प्रतिपाद्यते । 'या तेनोच्यते सा देवता' इति न्यायात् शान्तिरेव देवता । शान्तिर्नाम अनिष्टपरिहारेण सुखकारिरूपता । अतोऽत्र शान्तिकारिणः पदार्थविशेषानाह—शान्ता द्यौः इत्यादिना । द्यौः द्युलोकः शान्ताऽस्तु । दोषाणां शमयित्री स्वनिबन्धनोपद्रवशमनेनास्य सुखकारिण्यस्त्वित्यर्थः । एवमुत्तरत्रापि । पृथिवी प्रथिता भूमिः शान्ताऽस्तु । इदं परिदृश्यमान उरु विस्तीर्णं अन्तरिक्ष अन्तरा क्षान्त मध्यमलोकः । उदन्वतीः उदन्वान् उदकवानुदधिः । ता आपः शान्ताः सन्तु । ओषधीः, ओषः पाको धीयते आस्विति ओषध्यः, ता नः शान्ताः सन्तु । अभा.

शान्तानि पूर्वरूपाणि शान्तं नो अस्तु कृताकृतम् ।
शान्तं भूतं च भव्यं च सर्वमेव शमस्तु नः ॥

पूर्वरूपाणि कार्यापेक्षया पूर्वरूपाणि कारणावस्थापन्नानि वस्तूनि, कृताकृतं कृतं कार्यजातं अकृत अनिष्पन्नं नित्यं मे मदर्थं शान्तानि । यद्वा, मदीयानि पूर्वरूपाणि पूर्वाणि रूपाणि दुष्कृतफलभूतानि प्राक्तनानि जन्मानि शान्तानि सन्तु । पूर्वेषु जन्मसु तत्तत्कर्मणो भोगादेव तत्कृतानिष्टाभावः, अतः किमित्येषां शान्तित्वशासनमिति । नैष दोषः । प्राक्तनजन्मापादकस्य कर्मणोऽभावेऽपि तत्तज्जन्मकृतदुष्कृतकर्मणः उत्तरत्र तिर्यगादिजन्मप्रापकत्वे तत्परिहाराय तच्छान्तिराशास्या । तथा मे मदीय कृताकृतम् । इह कृतशब्देन सम्यगनुष्ठित कर्म न विवक्ष्यते किंतु विरुद्धमाचरितं, अकृत अननुष्ठित स्वाश्रमविहित कर्म नित्यनैमित्तिकरूप, तदुभय शान्तमस्तु । विरुद्धाचरणविहितानाचरणयोः पतनहेतुत्व स्मर्यते — 'विहितस्यानुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणा नरः पतनमृच्छति ॥' (यास्मृ. ३।२१९) इति । भूतं उत्पन्न भव्य भविष्यत् । परस्परसमुच्चयार्थौ चकारौ । तदुभय शान्तम् । किं बहुना, सर्व कालत्रयावच्छिन्न उक्त अनुक्त च सर्व नः अस्माकं श दोषशमयितृ सुखमेव भवतु । अभा.

इयं या परमेष्ठिनी वाग्देवी ब्रह्मसंशिता ।
ययैव ससृजे घोरं तयैव शान्तिरस्तु नः ॥

परमे स्थाने तिष्ठतीति परमेष्ठिनी परमेष्ठिनो ब्रह्मणः पत्नी वा । ब्रह्मसशिता ब्रह्मभिर्मन्त्रैः सम्यगुत्तेजिता सकलवैदिकवाक्यप्रतिपादितस्वरूपा इय विद्वद्भिः स्वात्मभतेन सम्यगनुभूयमाना या वाग्देवी वर्तते, ययैव वाग्देव्या घोरं परेषां अरुन्तुद वचः शापादिरूप ससृजे सृष्टं उच्चरित, तयैव वाचा नः अस्मदर्थं शान्तिरस्तु वाचा सृष्टस्य घोरकर्मणः शान्तिर्भवतु । यत् वाचा अनर्थजातमुत्पन्नं तदेव स्वकृतमनर्थ परिहरत्वित्यर्थः । एव उत्तरयोर्मन्त्रयोरपि योज्यम् । अभा.

इदं यत्परमेष्ठिनं मनो वां ब्रह्मसंशितम् ।
येनैव ससृजे घोरं तेनैव शान्तिरस्तु नः ॥

परमेष्ठिन, परमे उत्कृष्टे स्थाने तिष्ठतीति परमेष्ठी । तेन सृष्ट 'तदसदेव सन्मनोऽकुरुत स्यामिति' (तैब्रा. २।२।९।१) इति सृष्ट्यादौ मनःसृष्टिरुक्ता । ब्रह्मसशितं ब्रह्मणा सृज्यविषये तीक्ष्णीकृत इद सर्वजगन्मूलकारण यन्मनो विद्यते येनैव मनसा घोरं कर्म ससृजे, तेनैव मनसा नः अस्मदर्थ मनःसृष्टस्य घोरकर्मणः शान्तिरस्तु । अभा.

(१) असं. १६।२।२-५.
(२) अस १९।९।१-५.

**इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि मे हृदि ब्रह्मणा संशितानि।**
**यैरेव ससृजे घोरं तैरेव शान्तिरस्तु नः ॥**

मनः षष्ठ येषा तानि । पूर्वमन्त्रे मनसः पृथगुक्तावपि चक्षुरादिसर्वेन्द्रियाणां स्वस्वविषयज्ञाने मनःसाहाय्यस्य अवश्यमपेक्षणीयत्वात् अत्रापि मनस उपादानम्। मनःसहितानि इमानि यानि पञ्चज्ञानेन्द्रियाणि मे हृदि हृदयप्रदेशे वर्न्तते । हृदयं हि आत्मनिवासस्थानम्। सुषुप्तिकाले स्वस्वकारणरहितानि सर्वेन्द्रियाणि आत्मनि लीयन्ते इति हृदीत्युक्तम् । इन्द्रियाणि विशिनष्टि—ब्रह्मणा चेतनेन आत्मना नियन्त्रा संशितानि स्वस्वविषयेषु व्यापारितानि । विषयप्रवणत्वमेव संशितत्वम्। यैरेव इन्द्रियैः घोर पापावह कर्म ससृजे सृष्ट, तैरेव इन्द्रियैः सृष्टस्य घोरकर्मणो नः अस्मदर्थ शान्तिः शमनमस्तु । असा.

[1]**शं नो मित्रः शं वरुणः शं विष्णुः शं प्रजापतिः ।**
**शं न इन्द्रो बृहस्पतिः शं नो भवत्वर्यमा ॥**

मित्रः सूर्यः अहरभिमानी । वरुणः रात्र्यभिमानी । विष्णु· व्यापको देवः। प्रजापतिः, प्रकर्षेण जायमाना देवतिर्यङ्मनुष्यादयः प्रजाः तासां पतिः पालकः । इन्द्रः परमैश्वर्यसपन्नः । बृहस्पतिः बृहतां देवानां पतिः हितकारित्वेन पालकः । अर्यमा । मित्रादयः अर्यमान्ताः सर्वे देवाः नः अस्माकं श शान्त्यै भवन्तु । वाक्यभेदात् शमितिपदस्य प्रतिवाक्य प्रयोगः । असा.

[2]**शं नो मित्रः शं वरुणः शं विवस्वांछमन्तकः ।**
**उत्पाताः पार्थिवान्तरिक्षाः शं नो दिविचरा ग्रहाः॥**

मित्रवरुणौ व्याख्यातौ । विवस्वान् विवासयति अपगमयति तम इति विवस्वान् । यद्वा, धनस्य नाम विव इति, तदस्यास्तीति मतुप् । अन्तकः सर्वेषां प्राणिनां अन्त अवसान करोतीत्यन्तकः । पार्थिवाः पृथिव्या भवाः, आन्तरिक्षाः अन्तरिक्षे मध्यमलोके भवा उत्पाताः, श भवन्त्विति शेषः । दिविचराः दिवि द्युलोके चराः सचरन्तो ग्रहाः कालचक्रवशात्परिभ्राम्यन्तः अङ्गारकाद्याः । मित्रादयः सर्वेऽपि नः अस्माक श दोषशमकाः सुखकरा भवन्तु । असा.

**शं नो भूमिर्वेप्यमाना शमुल्का निर्हतं च यत् ।**
**शं गावो लोहितक्षीराः शं भूमिरव तीर्यतीः ॥**

पार्थिवान् आन्तरिक्षांश्च उत्पातानाह—वेप्यमाना कम्पमाना । यद्वा, प्राणिसहारककालेन वेप्यमाना कम्प्यमाना सा भूमिः नः अस्माक श शान्त्यै कम्पदोषपरिहाराय भवतु । तथा उल्कानिहतं उल्काभिः आयतज्वालारूपेण पतन्तीभिर्बाधित द्ग्ध यद्विद्यते तच्च शमस्तु। लोहितक्षीराः लोहितमेव क्षीर यासा ता. लोहितदोग्ध्यो गावश्च श दोषनिर्हारिका भवन्तु । अवदीर्यती अवदीर्यमाणा द्विधा भवन्ती भूमिश्च श भवतु, भूमिः कम्पनविदरणदोषजनित अनर्थ शमयतु । अन्तरिक्षं उल्काभिहननजनित दुरित गावो लोहितदोहनजं शमयन्त्विति । असा.

**नक्षत्रमुल्काभिहतं शमस्तु नः शं नोऽभिचाराः शमु सन्तु कृत्याः ।**
**शं नो निखाता वल्गाः शमुल्का देशोपसर्गाः शमु नो भवन्तु ॥**

उल्काभिहत समन्तादाकाशात् पतन्तीभिरायतज्वालाभिः उपप्लुत नक्षत्रम् । अभिचाराः मारणार्थं शत्रुभिः क्रियमाणानि कर्माणि । उशब्दः अप्यर्थे । कृत्याः अभिचारकर्मभिरुत्पादिताः पिशाच्यः । अभिचारकर्माणि जडत्वात्स्वयमेव शत्रुसमीपमागत्य न निघ्नन्ति, किंतु हिंसिकाः पिशाचीरुत्पादयन्ति । तेऽभिचाराः ताः पिशाच्यश्च श उपद्रवशमनाय भवन्तु । तथा निखाताः भूमावप्रकाश निगूहिता वलगाः । वलगाः पीडार्थं भूमेरधो बाहुप्रदेशे निखन्यमाना अस्थिकेशादिवेष्टिता विषवृक्षादिनिर्मिताः पुत्तल्यो वलगा इत्युच्यन्ते । तथा च तैत्तिरीयके—‘रक्षोहणो वलगहनः’ (तैस. १।२।२।१) इत्यत्र समाम्नायते । ‘असुरा वै निर्यन्तो देवानां प्राणेषु वलगान्न्यखनन्, तान्बाहुमात्रेऽन्वविन्दन्, तस्माद्बाहु-

(१) ऋसं ११९०।९ (श नो मित्र शं वरुणः शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥); असं. १९।९।६; शुसं. ३६।९ ऋसंवत्; तैउ ११.

(२) असं. १९।९।७-१४.

मात्राः खायन्ते ' (तैस. ६।२।११।१) इति । तेऽपि वल्गा नः अस्माकं श भवन्तु । उल्काः आकाशान्निष्पतन्त्यः आयतज्वालाः । उल्कादर्शनं अनर्थकारि । उल्काः स्वदर्शनजनित दुरित शमयन्तु । देशोपसर्गाः देशे जनपदे उपसर्गा ईतिबाधाः । उशब्दः चार्थे । तेऽपि श शान्ता भवन्तु । असा.

**शं नो ग्रहाश्चान्द्रमसाः शमादित्यश्च राहुणा ।**
**शं नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः ॥**

चान्द्रमसाः चन्द्रमसः सबन्धिनश्चन्द्रमण्डलस्य भेदकाः सघर्षका ये अङ्गारकाद्या ग्रहाः सन्ति, ते नः श भवन्तु । राहुणा ग्रहेण ग्रस्त आदित्यश्च शं शान्त्यै भवतु । आदित्यस्य अतितेजस्वित्वेन इतरग्रहैरुपप्लवाभावात् राहुणेति विशेषितम् । तथा मृत्युः मारको धूमकेतुः उत्पातः । धूमकेतोरनिष्टकारित्वं कौशिकेन सूत्रितम्—' अथ यत्रैतद्धूमकेतुः सप्त ऋषीनुपधूपयति तदयोगक्षेमाशङ्कमित्युक्तम् ' ( कौ. १३।३५ ) इति । स धूमकेतुः श दोषनिर्घाताय भवतु । तिग्मतेजसः तीक्ष्णतेजसो रुद्राः रोदका एतत्संज्ञका देवाश्च स्वतेजःसतापकमुपद्रवं परिहरन्तु । असा.

**शं रुद्राः शं वसवः शमादित्याः शमग्नयः ।**
**शं नो महर्षयो देवाः शं देवाः शं बृहस्पतिः ॥**

रुद्राः एकादश । वसवः अष्टौ । आदित्याः द्वादश । अग्नयः वैतानिकास्त्रयः सभ्यावसथ्याभ्यां सह पञ्च वा । एकः स्मार्तो वाऽग्निः । महर्षयः सप्त । देवाः द्योतमानाः तेजोरूपाः । महर्षिविशेषणमेतत् । देवाः इन्द्रादयः । बृहस्पतिः तेषां पुरोधाः । एते रुद्रादयः नः शं शान्त्यै भवन्तु । असा.

**ब्रह्म प्रजापतिर्धाता लोका वेदाः सप्तऋषयोऽग्नयः ।**
**तैर्मे कृतं स्वस्त्ययनमिन्द्रो मे शर्म यच्छतु ब्रह्मा मे शर्म यच्छतु ।**
**विश्वे मे देवाः शर्म यच्छन्तु सर्वे मे देवाः शर्म यच्छन्तु ॥**

ब्रह्म देशकालानवच्छिन्न सच्चिदानन्दलक्षण पर ब्रह्म । प्रजापतिः प्रजानां पालकः सर्वनियन्ता सर्वान्तर्यामी । धाता सर्वस्य धाता चतुर्मुखो ब्रह्मा । वेदाः साङ्गाश्चत्वारः । लोकाः सप्तसख्याकाः । सप्तर्षयः प्रसिद्धाः । अग्नयो व्याख्याताः । तैः सर्वैः मे मम स्वस्त्ययनम् । स्वस्तीति अविनाशिनाम । तस्य अयन प्राप्तिः कृत स्वस्त्ययन क्षेमप्रापणं कृतम् । इन्द्रो मे शर्म सुखं यच्छतु प्रयच्छतु । एवं ब्रह्मा मे इत्याद्यास्त्रयः पर्याया व्याख्येयाः । असा.

**यानि कानि चिच्छान्तानि लोके सप्तऋषयो विदुः ।**
**सर्वाणि शं भवन्तु मे शं मे अस्त्वभयं मे अस्तु ॥**

उक्तानुक्तानि शान्तिकारणानि सगृह्य आह — सप्तर्षयः अतीन्द्रियार्थद्रष्टारो लोके सर्वेषु लोकेषु यानि कानिचित् वस्तूनि शान्तानि शान्तिकारणानि विदुः जानन्ति, तानि सर्वाणि मे श भवन्तु । एतत्सूक्तप्रतिपाद्यस्यार्थस्य सग्रहेण वचनं शं मे अस्तु अभय मे अस्त्विति । 'शान्ता द्यौः' इत्यादिना द्युलोकादयः शान्ता भवन्त्विति यदुक्त तस्यायमर्थः — मे श अस्तु सर्वतः सुखमस्तु । अभयं भयराहित्यं चास्त्विति । असा.

**पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वे मे देवाः शान्तिः सर्वे मे देवाः शान्तिः शान्तिः शान्तिः शान्तिभिः ।**

**ताभिः शान्तिभिः सर्वशान्तिभिः शमयामोऽहं यदिह घोरं यदिह क्रूरं यदिह पापं तच्छान्तं तच्छिवं सर्वमेव शमस्तु नः ॥**

पृथिव्यादयः शान्तिरूपा भवन्तु । शान्तिभिरुक्ताभिः पृथिव्यादिशान्तिभिः शान्तिर्निरुपपदा सर्वसाधारणभूता शान्तिरपि शान्तिर्भवत्वित्याशास्यते । शान्तेरपि शान्तित्वं तैत्तिरीयके सामाम्नायते —' शान्तिरेव शान्तिर्मे अस्तु शान्तिः ' ( तैआ. ४।४२।५ ) इति । ताभिः शान्तिभिः सर्वशान्तिभिः अह वयं शमयामः अपगमयामः । किं तदिति, तदाह—इह अस्मिन्कर्मणि यत् घोर भयकरं विपरीतानुष्ठानेन विपरीतफलप्रापकं यदस्ति । एतस्यैव विवरण—यदिह क्रूरं यदिह पापमिति । अथवा, त्रिर्वचनेन दोषशमयितृत्वं निश्चित भवतीति यदिह घोरमित्यादि त्रिर्वचनम् । एवं तच्छान्तं

तच्छिव इति शान्तिशिवशशब्दैस्त्रिर्वचनम् । यथा कर्मान्तरेषु 'अदीक्षिष्टाय ब्राह्मणः' (तैस. ६।१।४।३) इत्यादिषु आवेदनरूपेषु त्रिरुपांशुवचन त्रिरुच्चैर्वचन, एवमत्रापि । सर्वथा घोरं कर्म शमयामः । तच्च सर्वथा शान्त भवत्वित्यर्थः । असा.

सर्वेन्द्रियशरीरस्वास्थ्यम्

[1]वाङ्म आसन्नसोः प्राणश्चक्षुरक्ष्णोः श्रोत्रं कर्णयोः ।
अपलिताः केशा अशोणा दन्ता बहु बाह्वोर्बलम् ॥
ऊर्वोरोजो जङ्घयोर्जवः पादयोः ।
प्रतिष्ठा अरिष्टानि मे सर्वात्माऽनिभृष्टः ॥

मे मदीया येय वाक् सेयं आसन् आस्ये मुखे सुस्थिता भवतु । नसोः नासिकाछिद्रयोः प्राणः सुस्थितो भवतु । तथा अक्षिगोलकयोश्चक्षुरिन्द्रिय, कर्णगोलकयोः श्रोत्रेन्द्रिय, बाह्वोर्नानाविधव्यापारसामर्थ्यं, ऊर्वोर्गमनसामर्थ्यम् । तथा विश्वान्यङ्गानि अरिष्टानि सर्वेऽप्यवयवा हिंसारहिता भवन्तु । तनूः अवयवीभूतं शरीरमपि हिंसारहितमस्तु । मे तनुवा मदीयेन शरीरेण सह ते तुभ्य नमः साष्टाङ्गदण्डप्रणामोऽस्तु । अतो मा मां त्वं मा हिंसीः । तैसा. ५।५।९।२–३

शतवर्षपर्यन्त दर्शनजीवनबोधवृद्धिपुष्टिप्रजननानि

[2]पश्येम शरदः शतम् ॥
जीवेम शरदः शतम् ॥
बुध्येम शरदः शतम् ॥
रोहेम शरदः शतम् ॥
पूषेम शरदः शतम् ॥
भवेम शरदः शतम् ॥
भूयेम शरदः शतम् ॥
भूयसीः शरदः शतम् ॥

हे सूर्य त्वा शरदः शत शतसंख्याकान् संवत्सरान् पश्येम । अत एव शतं शरदो जीवेम । बुध्येम बुध्येमहि कार्यजातम् । रोहेम उत्तरोत्तर प्ररूढाः प्रवृद्धा भवेम । पूषेम शतसवत्सरपरिमितकालपर्यन्त पुष्टिं लभेमहि । भवेम, भवन संभवनं, पुत्रादिप्रवाहेण सभूताः स्याम । भूयेम भूयास्म इति भवनमाशास्यते । भूयसीः, न केवल शतसख्याकाः शरदः भूयसीः अधिकाः शरदः अनेककालपर्यन्तम् । असा.

(१) असं. १९।६०।१–२; तैसं ५।५।९।२–३ (वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षु. कर्णयोः श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूस्तनुवा मे सह नमस्ते अस्तु मा मा हिंसीः ).

(२) असं. १९।६७।१–८.



आयु, प्राणः, प्रजा, पशव, कीर्तिः, द्रविणं ब्रह्मवर्चसं च

[1]स्तुता मया वरदा वेदमाता प्र चोदयन्तां पावमानी द्विजानाम् ।
आयुः प्राणं प्रजां पशुं कीर्तिं द्रविणं ब्रह्मवर्चसम् ।
मह्यं दत्त्वा व्रजत ब्रह्मलोकम् ॥

स्वानुष्ठितकर्मणो निरभिसधिना सर्वार्थ फलाशासन स्वस्याविकल भवतीत्यभिप्रायेण मन्त्रद्रष्टा ऋषिः स्वानुष्ठितवेदाध्ययनेन गायत्रीजपेन वा द्विजानामायुरादिफलं आशास्य तन्मध्यवर्तिनः स्वस्यापि फल सिद्धवदनुवदति । मया वेदाध्यायकेन सावित्रीं जपता वा स्तुता अभिष्टुता स्वभ्यस्ता वरदा इष्टकामप्रदात्री पावमानी । पवमानः पापात्परिशोधकः सूत्रात्मा, 'वायुरेव पवमानो दिशो हरित आविष्टः' (ऐआ. २।१।१) इति ऐतरेयकश्रुतेः । तत्प्रतिपादिका पावमानी वेदमाता वेदस्य ऋगादिरूपस्य माता सर्ववेदसारत्वेन मातृवत्प्रधानभूता सावित्री वेद एव वा माता, मातृवद्धितकारित्वात् । 'वेद एव द्विजातीनां निःश्रेयसकरः परः' इति स्मृतेः । द्विजानां द्विजन्मना ब्राह्मणानां त्रैवर्णिकाना वा आयुरादिफलानि प्र चोदयन्ताम् । पूजाया बहुवचनम् । प्रेरयतु प्रयच्छतु । ब्रह्मवर्चस ब्रह्मणां वर्चः ब्राह्मं तेजः अथ मह्यं स्तोत्रे सर्वेषा फलप्रार्थकाय दत्त्वा आयुरादिक फलं वितीर्य ब्रह्मलोक ब्रह्मणो लोकः सत्यलोकः ब्रह्मैव वा लोकः लोक्यमान विद्वद्भिरनुभूयमानं परतत्त्वं व्रजत इति प्रत्यक्षवादः । शब्दावगम्यब्रह्माकार परित्यज्य वाङ्मन सातीतार्थब्रह्मरूपा भवेति मन्त्रदर्शिना ऋषिणा साक्षात्कृतपरत्वेन उच्यते । असा.

(१) असं. १९।७१।१.

आयु॰, प्राणा॰, व्युष्टि, रयि॰, घोषः, पोषश्च

**[१]कस्त्वा युनक्ति । स त्वा युनक्तु । विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्ध्यै मह्य॑ संनत्या अमुष्मै कामाय । आयुषे त्वा । प्राणाय त्वा । अपानाय त्वा । व्यानाय त्वा । व्युष्ट्यै त्वा । रय्यै त्वा । राधसे त्वा । घोषाय त्वा । पोषाय त्वा । आराद्घोषाय त्वा । प्रच्युत्यै त्वा ॥**

हे मध्यमपरिधे कः प्रजापतिः त्वां युनक्ति वह्निसमीपे योजयति । हे दक्षिणपरिधे स प्रजापतिः त्वा युनक्तु । हे उत्तरपरिधे विष्णुः त्वा युनक्तु । किमर्थम् । अस्य यज्ञस्य समृद्ध्यर्थम् । तथा मह्य सनत्यै मा प्रति सर्वेषां प्राणिनां सनमनाय, अमुष्मै प्रजादिरूपाय कामाय, आयुषे आयुर्वृद्धये त्वामहं युनज्मि । एव सर्वत्राध्याहारः । प्राणापानव्यानाः प्रसिद्धाः । व्युष्टिः प्रभातम् । रयिर्धनम् । राधोऽन्नम् । घोषः कीर्तिः । पोषः पश्वादिपुष्टिः । आराद्घोषो दूरशब्दवांचित्वम् । प्रच्युतिः सर्वदुःखनिवृत्तिः ।

तैसा.

राष्ट्रे ब्रह्मवर्चसी ब्राह्मणः, शूरो राजन्यः, धेनु॰, अनड्वान्, अश्व, पुरंधिः, सभेयो युवा, सुवृष्टिश्च

**[२]ओं ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायताम् । आऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायताम् । दोग्ध्री धेनुः । वोढाऽनड्वान् । आशुः सप्तिः । पुरन्धिर्योषा । जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायताम् । निकामेनिकामे नः पर्जन्यो वर्षतु । फलिन्यो न ओषधयः पच्यन्ताम् । योगक्षेमो नः कल्पताम् ॥**

ब्रह्मन् ब्राह्मणजातौ ब्रह्मवर्चसी श्रुताध्ययनसंपन्नो ब्राह्मणः आजायता सर्वत उत्पद्यताम् । एतदेकं वाक्यमेको मन्त्रः । एवमुत्तरत्रापि । इषव्यो बाणाद्यायुधेषु कुशलः । धेनुरित्यादिष्वाजायतामित्यनुवर्तते । सप्तिः अश्वः आशुः शीघ्रगामी । पुरुषैरभिध्यायते इति पुरन्धिः, रूपवतीत्यर्थः । अस्य यजमानस्य जिष्णुत्वादिगुणविशिष्टः पुत्र आजायताम् । नः अस्माकं यदायदाऽपेक्षा तदातदा पर्जन्यो वर्षतु । ओषधयश्च बहुफलयुक्ताः पच्यन्ताम् । अलब्धस्य लाभो योगः । लब्धस्य परिपालनं क्षेमः । योगसहितः क्षेमो योगक्षेमः । स अस्माकं सपद्यताम् ।

तैसा.

**[१]जज्ञि बीजम् । वर्ष्टा पर्जन्यः । पक्ता सस्यम् । सुपिप्पला ओषधयः । स्वधिचरणेयम् । सूपसदनोऽग्निः । स्वध्यक्षमन्तरिक्षम् । सुपावः पवमानः । सूपस्थाना द्यौः । शिवमसौ तपन् । यथापूर्वमहोरात्रे । पञ्चदशिनोऽर्धमासाः । त्रिंशिनो मासाः । क्लृप्ता ऋतवः । शान्तः संवत्सरः ॥**

यदेतत् व्रीह्यादिबीजं तज्जज्ञि जननस्वभावमस्तु । अस्त्विति सर्वत्राध्याहारः । पर्जन्यो वर्ष्टा वृष्टिकारोऽस्तु । सस्यं पक्ता पाकशीलम् । ओषधयश्च सुपिप्पलाः शोभनफलाः । इयं पृथिवी स्वधिचरणा सुखेनाधिष्ठाय चरितुं शक्या । अग्निः सूपसदनः सुखेनोपसत्तुं परिचरितुं शक्यः । अन्तरिक्षं स्वध्यक्षं सुखेनाध्यक्षितव्यं धूमकेत्वाद्युत्पातरहितमित्यर्थः । पवमानो वायुः सुपावः अनुपद्रवकारिसंचारयुक्तः । द्यौः सूपस्थाना सुखेनावस्थातुं शक्या, दैविकोपद्रवरहितेत्यर्थः । असावादित्यः शिवमुपद्रवराहित्यं यथा भवति तथा तपन् वर्तताम् । अहोरात्रे यथापूर्वं कल्पादेवारभ्य येन क्रमेण प्रवृत्ते तथैवाद्यापि प्रवर्तेताम् । अर्धमासा न्यूनाधिकराहित्येन पञ्चदशदिनयुक्ताः । तथा मासास्त्रिंशद्दिनयुक्ताः । ऋतवः

(१) **तैसं.** ७।५।१३।१, **कासं.** ( अश्वमेध॰ ) ५।९ अपानाय त्वा व्यानाय ( व्यानाय त्वाऽपानाय ) घोषाय त्वा पोषाय ( पोषाय त्वा घोषाय ).

(२) **तैसं** ७।५।१८।१, **कासं.** ( अश्वमेधः ) ५।१४ पुरन्धिर्योषा जिष्णू रथेष्ठाः ( जिष्णू रथेष्ठाः पुरन्धिर्योषा ) फलिन्यो न (फलवतीर्न); **मैस** ३।१२।६ (८) (आ ब्रह्मन् ब्राह्मणस्तेजस्वी ब्रह्मवर्चसी जायताम् । आ राष्ट्रे राजन्यः शूर इषव्यो महारथो जायताम् । दोग्ध्री धेनु॰ । वोढाऽनड्वान् । आशु सप्ति॰ । सभेयो युवा । पुरन्धिर्योषा । जिष्णू रथेष्ठा आस्य यजमानस्य वीरो जायताम् । निकामे निकामे नः पर्जन्यो वर्षतु । फलवतीर्ना ओषधय॰ पच्यन्ताम् । योगक्षेमो नः कल्पताम् । ); **शुसं.** २२।२२ आऽस्मिन्राष्ट्रे ...... महारथो ( आ राष्ट्रे राजन्य॰ शूर इषव्योऽतिव्याधी महारथो ) फलिन्यो ( फलवत्यो ); **तैब्रा.** ३।८।१३।१–३; **शब्रा.** १३।१।९।१ शुसंवत्.

(१) **तैसं.** ७।५।२०।१, **तैब्रा.** ३।८।१८।५.

क्लृप्तास्तत्तल्लक्षणोपेताः । संवत्सरः शान्तः प्रजापीडा-रहितः । तैसा.

सार्वभौमशान्तिः

पृथिवी शान्तिः । सौषधीभिः शान्तिः । अन्तरिक्षं शान्तिः । तद्वायुना शान्तिः । द्यौः शान्तिः । सा वृष्ट्या शान्तिः । आपः शान्तिः । ओषधयः शान्तिः । वनस्पतयः शान्तिः । विश्वे देवाः शान्तिः । ब्रह्म शान्तिः । ब्राह्मणाः शान्तिः । शान्तिः सर्वशान्तिः । त्वयाहꣳ शान्त्या सर्वशान्त्या मह्यं द्विपदे च चतुष्पदे च शान्तिं करोमि । शान्तिर्बभूव । शान्तिरसि । शान्तिर्नो अस्तु । अभयं नो अस्तु ॥

[2]द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥

द्यौः द्युलोकरूपा या शान्तिः, अन्तरिक्षरूपा च या शान्तिः, पृथिवी भूलोकरूपा या शान्तिः, आपो जलरूपा या शान्तिः, ओषधयः ओषधिरूपा या शान्तिः, वनस्पतयः वृक्षरूपा या शान्तिः, विश्वे देवाः सर्वदेवरूपा या शान्तिः, ब्रह्म त्रयीलक्षण पर वा तद्रूपा या शान्तिः, सर्वं सर्वजगद्रूपा या शान्तिः, शान्तिरेव शान्तिः या स्वरूपतः शान्तिः, सा शान्तिः मा मा प्रति एधि अस्तु । पुरुषव्यत्ययः । महावीरप्रसादात्सर्वं शान्तिरूप मा प्रत्यस्त्वित्यर्थः । यद्वा, द्यौरित्यादिषु विभक्तिव्यत्ययः । सप्तम्यर्थे प्रथमा । दिवि अन्तरिक्षे पृथिव्या अप्सु ओषधिषु वनस्पतिषु विश्वेदेवेषु ब्रह्मणि सर्वस्मिंश्च या शान्तिः सा मां प्रत्यस्त्वित्यर्थः । शुम.

सार्वभौममित्रदृष्टिः दीर्घजीवनं च

[3]दृते दृंह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे ।
मित्रस्य चक्षुषा समीक्षामहे ॥

(१) मैसं ४।९।२७ ( २४५ ).
(२) शुसं. ३६।१७.
(३) शुसं. ३६।१८.

दृते विदीर्णे जराजर्जरितेऽपि शरीरे हे महावीर, मा मां त्व दृह दृढीकुरु । यद्वा, दृते विदीर्णे कर्मणि मां दृह अच्छिद्र कर्म कुरु । यद्वा, ससुषिरत्वात् सेक्तृत्वाच्च दृतिशब्देन महावीरः । हे दृते महावीर, मा दृंह दृढीकुरु । कथं दार्ढ्यं तदाह –सर्वाणि भूतानि प्राणिनो मा मां मित्रस्य चक्षुषा समीक्षन्तां सम्यक् पश्यन्तु, मित्रदृष्ट्या सर्वे मां पश्यन्तु नारिदृष्ट्या । सर्वेषां प्रियो भूयासमित्यर्थः । किंच अहमपि सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे पश्यामि, सर्वे मे प्रियाः सन्तु । मित्रचक्षुः शान्त भवति । मित्रः कचन न हन्ति, मित्रं च कश्चन न हन्ति, एव परस्पराद्रोहेण सर्वानहिंसन्तो मित्रस्य चक्षुषा वय समीक्षामहे पश्यामः । शुम.

[1]दृते दृंह मा । ज्योक् ते संदृशि जीव्यासं ज्योक् ते संदृशि जीव्यासम् ॥

हे दृते वीर मां दृह । आदरार्थं पुनर्वचनम् । हे महावीर ते तव सदृशि सदर्शने अहं ज्योक् चिर जीव्यासं जीवेयम् । पुनरुक्तिरादरार्था । ते सदृशि ज्योक् जीव्यासम् । शुम.

[2]तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतम् । जीवेम शरदः शतम् । शृणुयाम शरदः शतम् । प्र ब्रवाम शरदः शतम् । अदीनाः स्याम शरदः शतम् । भूयश्च शरदः शतात् ॥

एतैर्मन्त्रैर्यो महावीरोऽस्माभिः स्तुतः तत् चक्षुः जगता नेत्रभूतमादित्यरूप पुरस्तात् पूर्वस्यां दिशि

(१) शुसं. ३६।१९
(२) ऋसं. ७।६६।१६ ( तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ ) एतावदेव, असं. १९।६७।१-२ ( पश्येम शरदः शतम् । जीवेम शरदः शतम् ) एतावदेव, मैस ४।९।२० (२२२-२२३ ) शृणुयाम शरद शतम् । प्र ब्रवाम शरदः शतम् । ( प्रब्रुवाम शरदः शतम् । शृणुयाम शरदः शतम् । ) ( अदीना .... शतात्० ); शुसं ३६।२४, तैआ. ४।४२।५ ( तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतम् । जीवेम शरदः शतम् । नन्दाम शरदः शतम् । मोदाम शरदः शतम् । भवाम शरदः शतम् । शृणवाम शरदः शतम् । प्रब्रवाम शरदः शतम् । अजीताः स्याम शरदः शतम् । ज्योक्च सूर्यं दृशे । ).

उच्चरत् उच्चरति उदेति। कीदृशं तत्। देवहित देवैर्हित स्थापितम्। यद्वा, देवाना हित प्रिय शुक्र शुक्ल पापासस्पृष्ट शोचिष्मद्वा। तस्य प्रसादात् शतं शरदः वर्षाणि वय पश्येम, शतवर्षपर्यन्त वयमव्याहतचक्षुरिन्द्रिया भवेम। शत शरदः जीवेम अपराधीनजीवना भवेम। शत शरदः शृणुयाम स्पष्टश्रोत्रेन्द्रिया भवेम। शतं शरदः प्रब्रवाम अस्खलितवागिन्द्रिया भवेम। शत शरदः अदीनाः स्याम, न कस्याप्यग्रे दैन्य कुर्याम। शतात् शरदः शतवर्षोपर्यपि भूयश्च बहुकाल पश्येम इत्यादि योज्यम्। शुम.

आकूति, सत्यं, रूपं, रसः, यशः, श्रीश्च

[1]मनसः काममाकूतिं वाचः सत्यमशीय।
पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा॥

अह मनसः कामं अभिलाष, आकुञ्चन आकूतिः प्रयत्नः तं चाशीय प्राप्नुयाम्। वाचः सत्य चाशीय मद्वाक् सत्यं वदतु। मयि एतत्सर्व श्रयता तिष्ठतु। पशूनां रूप पशुसबन्धिनी शोभा अन्नस्य रसः स्वादुत्व यशः कीर्तिः श्रीर्लक्ष्मीश्च। शुम.

मनस वाचश्च प्रसादः

[2]यो म आत्मा या मे प्रजा ये मे पशवः। तैरहं मनो वाच प्रसीदामि॥

मे मम उद्गातुः संबन्धी यः आत्मा शरीरस्थितो जीवोऽस्ति, या च मदीया प्रजा पुत्रभृत्यादिरूपा, ये च मदीयाः पशवः गोमहिष्यादयः, तैः सर्वैः सहितः अह मनोवाचौ समाधाय प्रसीदामि प्रसन्नो भूत्वोपविशामि। ताशा.

अन्नम्

[3]अन्नं करिष्यामि। अन्नं भविष्यति (प्रविष्यामि?) अन्नं जनयिष्यामि॥

अनेन स्तोत्रेण अहमुद्गाता बहुप्राण्युपकाराय प्रभूतमन्न करिष्यामि। तच्चान्न भविष्यति (प्रविष्यामि?) भूतिः समृद्धिः समृद्ध करिष्यामि। तदन्न जनयिष्यामि जनने व्रीह्यादिरूपेण पुनःपुनः प्ररोहणे हेतुत्वेन करिष्यामि। ताशा.

[1]अन्नमकरमन्नमभूदन्नमजीजनम्॥

स्तोत्रसामर्थ्यात् (र्थ्ये?) अन्नसमृद्धेर्निश्चितत्वाद्भूतार्थप्रयोगः। ताशा.

वर्चे, पय., तपासि, शिव मनः, विज्ञान, सत्यं, चारुतमा वाणी च

[2]सं वर्चसा पयसा सं तपोभिरगन्महि मनसा सं शिवेन।
सं विज्ञानेन मनसश्च सत्यैर्यथा वोऽहं चारुतमं वदानि॥
इन्द्रो वो दृशे भूयासम्। सूर्यश्चक्षुषे। वातः प्राणाय। सोमो गन्धाय। ब्रह्म क्षत्राय॥

हे ईक्षकाः प्रस्तोत्रादय उपगातारश्च वर्चसा ब्रह्मवर्चसेन समगन्महि वय सगता अभूम। तथा पयसा दक्षिणारूपाणा गवां हि क्षीरेण समगन्महि। तथा कर्मानुष्ठानरूपैस्तपोभिः समगन्महि। तथा शिवेन मङ्गलेन आस्तिक्ययुक्तेन (मनसा) समगन्महि। तथा मनसा(सः) सबन्धिभिः सत्यैर्यथार्थभूतैः सकल्पैश्च। किंच यथा वः युष्माक चारुतम अतिशयेन रमणीयं वदानि तथा वचसो विवृत्या युज्ये। वः युष्माक दृशे दर्शनाय। इन्द्रः इति लुप्तोपमम्। (इन्द्र?) इन्द्र इवाह दर्शनीयो भूयासम्। सूर्य इव चक्षुषे तेजसे। वातः वायुरिव प्राणाय प्राणनाय जीवनाय। सोमो गन्धाय सोम इव गन्धाय। सोमो रसात्मको गन्धाय भवति, शुष्काणा गन्धानुपलब्धेः। ब्रह्म इव ब्राह्मण इव पुरोहितः क्षत्राय बलाय क्षत्रियाय वा, भूयासमिति सर्वशेषः। ताशा.

आयुः प्रजा श्रीश्च

[3]एषा वा आशीः। जीवेयं, प्रजा मे स्यात्, श्रियं गच्छेयमिति॥

(१) ऋसं. (खिल) २।६।१० मशीय (मशीमहि) रसो....स्वाहा (मयि श्रीः श्रयतां यशः); शुसं. ३९।४; तैब्रा. २।४।६।६ (मनसश्चित्तमाकूतिम्। वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य यशः श्री. श्रयता मयि॥).
(२) ताब्रा. १।३।४.
(३) ताब्रा. १।३।६.

(१) ताब्रा. १।३।७. (२) ताब्रा. १।३।९.
(३) शब्रा. १।८।१।३६.

एषा वा आशीः। एषैव, नातोऽधिकाऽस्तीत्यभिप्रायः। शब्रासा.

अमृतं दीर्घमायुश्च

**तस्यैतस्य परस्तात्कामप्रो लोकः। अमृतं वै कामप्रम्। अमृतमेवास्य तत्परस्तात्। तद्यत्तदमृतमेतत्तद्यदेतदर्चिर्दीप्यते ॥**

सप्तविधाद्येकशतपर्यन्ताग्निचयनस्य सूर्यलोकः फलमिति दर्शयति — तस्यैतस्येति। एतस्य सवितुर्मण्डलस्य परस्तात् उपरिभागे सर्वकामपूरकः अमृतः मरणधर्मरहितः लोकोऽस्ति। अमृतलोकं विशिनष्टि — यदेतदर्चिर्दीप्यत इति। यदेतदर्चिस्तेजो दीप्यते सोऽमृतलोक इत्यर्थः। शब्रासा.

**तदेतद्वसु चित्रं राधः। तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजति। अप्योषधिभ्योऽपि वनस्पतिभ्यः। भूय इव ह त्वेकाभ्यः प्रयच्छति। कनीय इवैकाभ्यः। तद्याभ्यो भूयः प्रयच्छति ता ज्योक्तमां जीवन्ति। याभ्यः कनीयः कनीयस्ताः ॥**

अर्चिषोऽमृतफलत्वं सवितृसबन्धित्वं च प्रदर्शयति —तदेतद्वसु चित्रं राध इति। वसु वासयोग्य, चित्र नानाप्रकार भूयोऽल्पभेदेन। तदेतदर्चीरूप राधः दीर्घायूरूपं फल एष सविता अर्चिष्मान् विभक्ताभ्यः स्थावरजङ्गमभेदेन, तत्रापि मनुष्यपशुपक्ष्यादिरूपेण ओषधिवनस्पत्यादिरूपेण च विभक्ताभ्यः प्रजाभ्यो विभज्य विभज्य प्रयच्छति। अप्योषधिभ्योऽपि वनस्पतिभ्य इति। ओषध्यादिभ्योऽपि प्रयच्छति। अनेन सर्वस्य विभज्य दान कैमुतिकन्यायसिद्धमित्युक्त भवति। तत्र दाने विशेष दर्शयति — भूय इव ह त्वेकाभ्यः प्रयच्छतीति। ह तु इति पदद्वयम्। इवशब्द एवार्थे। कतिपयाभ्यः प्रजाभ्यो भूयः आयूरूपमेव राधः प्रयच्छति। एकाभ्यः कनीयो राधः। तत्र यासा भूयो दान ताः ज्योक्तमा चिर जीवन्ति। आयुषो भूयस्त्वात्तद्भोगाय चिरकालजीवनम्। यासा कनीयः फल ताः अल्पकाल जीवन्ति। शब्रासा.

**तदेतदृचाऽभ्युक्तम्। विभक्तारं हवामहे वसोश्चित्रस्य राधसः। सवितारं नृचक्षसमिति ॥ तदेतत्सर्वमायुर्दीर्घम्। अनन्तं हि तत्। यदिदमाहुर्दीर्घं त आयुरस्तु। सर्वमायुरिहीति। एषं ते लोकः। एतत्तेऽस्त्विति हैवैतत् ॥**

सवितैव सर्वप्रजाभ्यो नानारूप कामं ददातीत्यर्थ दाशतय्या मन्त्रसंवादेन द्रढयति — तदेतदृचाऽभ्युक्तमिति। अयमर्थः— वसोर्वासयोग्यस्य चित्रस्य नानाविधस्य राधसः आयुर्लक्षणफलस्य विभक्तार विभज्य प्रदातार, नृचक्षस नृणा द्रष्टार तत्कर्मसाक्षिणम्। यद्वा, नृभिर्दृश्यमानं सवितारं हवामहे ( ऋस. १।२२।७, शुसं. ३०।४ )। सर्वायुष्ट्वमिदानीमाह — तदेतत्सर्वमायुरिति। सर्वपदस्यार्थमाह — दीर्घमनन्त हि तदिति। तदेतद्राधो लोकलक्षण ततः सर्वायूरूपं दीर्घायूरूपमित्यर्थः। उक्तमर्थ लोकप्रसिद्ध्या द्रढयति—यदिदमाहुरिति। लोके पूर्ववयोभिरभिवादिता ज्यायासः पुरुषाः एतामाशिष कुर्वन्ति — दीर्घं त आयुरस्त्विति, सर्वमायुरिहीति च। इहि गच्छ। इति यदिद लोके आयुस्तस्यार्थं श्रुतिः स्वय दर्शयति—एष ते लोक इति। 'सर्वमायुरिहीति' 'दीर्घं त आयुरस्त्विति' अनयोरयमर्थः— तव एष लोकः सावित्रादिरूपोऽस्तु। ते तव एतत्सावित्र तेजः अस्तु भवत्विति। शब्रासा.

**पश्यन्ती वाग्वदति। तदेतदेकशतविधेन वैवाऽऽप्तव्यं शतायुतया वा। य एवैकशतविधं विधत्ते। यो वा शतं वर्षाणि जीवति। स हैवैतदमृतमाप्नोति। तस्माद्ये चैतद्विदुः। ये च न। लोक्या शतायुतेत्येवाऽऽहुः। तस्मादु ह न पुराऽऽयुषः स्वकामी प्रेयात्। अलोक्यं ह। एत उ वाव लोका यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरः ॥**

एतदर्थजातं पश्यन्ती विचारयन्ती वाक् दीर्घं त आयुरस्त्वित्यादिका वदतीति। तस्यामृतत्वफलसाधनं दर्शयति — तदेतदेकशतविधेनेति। एकशतविधेन अग्निना तत् अमृतत्वरूप राधः आप्तव्यं, शतायुतया शतवर्षजीवनेन वा आप्तव्यमिति साधनप्रश्नः। उभाभ्यामपि तत्फलं लभ्यते इत्युत्तरमाह—य एवैकशतविध विधत्त इति। शतवर्षजीवनमपि पुण्यलोकहेतुरित्यत्र लोकप्रसिद्धिं दर्शयति—तस्माद्ये चैतद्विदुरिति।

(१) शब्रा. १०।२।६।४-७.

उक्तार्थज्ञास्तदनभिज्ञाश्च शतायुता शतवर्षजीवन लोक्या लोकहिता पुण्यलोकहेतुरित्याहुः । यस्माच्छतायुर्जीवनं लोकहित, तस्मादस्मादायुषः पुरा पूर्वं स्वकामी स्वहित-मिच्छन् स्वेच्छया न प्रेयात् न म्रियेत । तन्मरणमलोक्य अमृतत्वरूपलोकसाधनं न भवति । शतादर्वाचीनेषु वर्षेषु मरण पुण्यलोकसाधक न भवतीत्येतमर्थं विशद-यति—एत इति । अहोरात्रार्धमासमासर्तुसंवत्सराः यद्यपि लोकाः, तथापि अलोक्याः अमृतत्वप्रापका न भवन्ति । शब्रासा.

अन्न पान श्रीर्ज्योतिरमृतं च

**[1]त्रीणि वा इमानि पञ्चविधानि । संवत्सरोऽग्निः पुरुषः । तेषां पञ्च विधाः । अन्नं पानं श्रीर्ज्योति-रमृतम् । यदेव संवत्सरेऽन्नं तदन्नम् । या आप-स्तत्पानम् । रात्रिरेव श्रीः । श्रियां हैतद्रात्र्यां सर्वाणि भूतानि संवसन्ति । अहर्ज्योतिः । आदि-त्योऽमृतम् । इत्यधिदेवतम् ॥**

यदुक्त 'एकशतविध विधत्ते' इत्यत्र अधिदैवाधि-यज्ञाध्यात्मत्रयविषये संवत्सरचित्याग्निपुरुषा इति, तत्र तेषां संवत्सराग्निपुरुषाणां पञ्चविधत्वमिदानीमाह — त्रीणि वेति । अन्नपानादीनि पञ्च विधाः । तत्र अधिदेवत संव-त्सरेऽन्नादीनामर्थमाह—यदेवेति । यत् अन्न संवत्सरे समुत्पद्यते तदेव अन्नशब्दवाच्यम् । या वृष्टा आपस्ता एव पानशब्दवाच्याः । रात्र्याः श्रीत्वं प्रतिपादयति—श्रियां हैतदिति । श्रयन्ति निवसन्ति अस्मिन्काले इति रात्रिः श्रीशब्दवाच्या । अह्नि प्रकाशसद्भावात्तदेव अहः ज्योतिः । आदित्योऽमृतम् । इत्यधिदेवतं पञ्चविधार्थाः । शब्रासा.

**अथाधियज्ञम् । यदेवाग्नावन्नमुपधीयते तदन्नम् । या आपस्तत्पानम् । परिश्रित एव श्रीः । तद्धि रात्रीणां रूपम् । यजुष्मत्यो ज्योतिः । तद्ध्यह्नां रूपम् । अग्निरमृतम् । तद्ध्यादित्यस्य रूपम् । इत्यु एवाधियज्ञम् ॥**

अथाधियज्ञमिति । चित्याग्नौ अन्नादीनामर्थ उच्यते —यदेव प्राक्सर्वौषधमुपधीयते तदेवान्नम् । प्रोक्षणार्था आपः पानम् । परिश्रितः श्रीशब्दवाच्याः । यजुष्मत्यः इष्टकाः ज्योतिःशब्दवाच्याः । परिश्रितां रात्रिरूपत्वं, यजुष्मतीनामिष्टकानामहोरूपत्वमित्यधस्तात् (शब्रा. १०।५।४।१०) प्रतिपादितम् । चित्याग्नेरुपरि निधीयमानो-ऽग्निराहवनीय एवामृतशब्दवाच्यः । अग्नेः कथममृत-त्वमिति तत्राह—तद्ध्यादित्यस्य रूपमिति । आदित्य-स्यामृतत्व प्रागुक्त 'अमृतमेतद्यदेतदर्चिर्दीप्यते' (शब्रा. १०।२।५।४) इति । शब्रासा.

**अथाध्यात्मम् । यदेव पुरुषेऽन्नं तदन्नम् । या आपस्तत्पानम् । अस्थीन्येव श्रीः । तद्धि परिश्रितां रूपम् । मज्जानो ज्योतिः । तद्धि यजुष्मतीनां रूपम् । प्राणोऽमृतम् । तद्ध्यग्ने रूपम् । प्राणोऽग्निः प्राणोऽमृतमित्यु वा आहुः ॥**

अथाध्यात्ममिति । पुरुषेऽन्नादीनामर्थ उच्यते—यदन्न-मद्यते तदेवान्नम् । याः पीयन्ते तत्पानम् । अस्थीन्येव श्रीशब्दवाच्यानि, परिश्रयणहेतुत्वात् । मज्जैव ज्योतिः-शब्दवाच्या । अस्थिमज्जरूपयोः परिश्रिद्यजुष्मतीरूपत्व-मुपपादितमधस्तात् (शब्रा. १०।५।४।१२) । शरीरगतः प्राण एवात्र अमृतशब्दवाच्यः प्राणः । कथ प्राणस्या-मृतत्वमिति, तत्र वेदवादिप्रसिद्ध्योपपादयति—तद्ध्यग्ने रूप प्राणोऽग्निरिति । शब्रासा.

**अन्नाद्वा अशनाया निवर्तते । पानात्पिपासा । श्रियै पाप्मा । ज्योतिषस्तमः । अमृतान्मृत्युः । नि ह वा अस्मादेतानि सर्वाणि वर्तन्ते । अप पुनर्मृत्युं जयति । सर्वमायुरेति । य एवं वेद । तदेतदमृत-मित्येवामुत्रोपासीत । आयुरितीह । प्राण इति हैक उपासते प्राणोऽग्निः प्राणोऽमृतमिति वदन्तः । न तथा विद्यात् । अध्रुवं वै तद्यत्प्राणः । तं ते विष्याम्यायुषो न मध्यादिति ह्यपि यजुषाऽभ्युक्तम् । तस्मादेतदमृतमित्येवामुत्रोपासीत । आयुरितीह । तथो ह स सर्वमायुरेति ॥**

अन्नादिपञ्चकेन निवर्त्यपञ्चक दर्शयति—अन्नाद्वा अश-नायेति । अन्नात् अशनाया बुभुक्षा निवर्तते । पानात्पा-नेच्छा । श्रियाः पाप्मा दारिद्र्यम् । ज्योतिषः प्रकाशात्तम-स्तिमिरम् । अमृतान्मृत्युर्मरण निवर्तते । अन्नादिपञ्चकं विदुषां फलमाह—नि ह वा इति । य एवमन्नादि-पञ्चकमधिदैवादित्रयं वेद, अस्माद्वेदितुः सकाशादेतानि

(१) शब्रा. १०।२।६।१६–१९.

अशनायादीनि पञ्चानिष्टानि निवर्तन्ते । किंच अमृतरूपान्तिमविधापरिज्ञानेन मृत्यु जयति । सर्व अत्यन्तमायुः अश्नुते । यदुक्त अमृतरूपपञ्चमविधापरिज्ञानेन मृत्युं जयति, सर्वमायुः प्राप्नोतीति, तद्विशदयति—तदेतदमृतमिति । अमुत्र आदित्ये अमृतमित्येवोपासन कुर्यात् । इह ( अग्नौ ) आयुरित्येवोपासनं कुर्यात् । अतोऽग्नेरायुष्ट्वेनोपासनात्सर्वायुःप्राप्तिः फलम् । एके केवलाध्यात्मविषयेऽन्तिमविधाया निरूपणसमये प्राणोऽग्निः, प्राणोऽमृतमिति समाम्नातत्वादमृतशब्दस्य प्राणोऽर्थ इति मत्वा तस्यैवोपासन चित्याग्नौ मन्यन्ते, तन्मतमनूद्य निराचष्टे—प्राण इति हैक इति । यस्मात्प्राणः अध्रुवः अनित्यः, तस्मात्प्राणोऽमृतशब्दवाच्यो न भवति । प्राणस्यानित्यत्वं यजुर्मन्त्रेण सवादयति—'त ते विष्याम्यायुषो न मध्यात्' ( शुस. १२।६५ ) इति । अयमर्थः—हे यष्टः, ते तव आयुषो जीवनस्य मध्यात्त प्राणं न विष्यामि न विनाशयामि । न विष्यामीति विनाशनिरासोक्त्या विनाशोऽस्तीति सभाव्यते इति यजुषोऽर्थः । तस्मादुक्त एवार्थ इति निगमयति—तस्मादेतदमृतमित्येवामुत्रेति । शब्रासा.

सेन्द्रियशरीरस्वास्थ्यं, महत्, भर्ग:, भगश्च

**[1]सं प्राणो वाचा । समहं वाचा । सं चक्षुर्मनसा । समहं मनसा । सं श्रोत्रमात्मना । समहमात्मना । मयि महान् । मयि भर्गः । मयि भगः । मयि भुजः । मयि स्तोभः । मयि स्तोमः । मयि श्लोकः । मयि घोषः । मयि यशः । मयि श्रीः । मयि कीर्तिः । मयि भुक्तिरिति ॥**

योऽयं प्राणवायुः, सोऽयं वाचा सगच्छताम् । तथा अहमपि वाचा संगच्छताम् ( सगच्छे ) सगतो भूयासम् । तथा चक्षुरिन्द्रिय मनसा सयुज्यताम् । अहमपि मनसा सयुक्तो भूयासम् । तथा श्रोत्रेन्द्रियं प्रेरकेण परमात्मना सयुज्यताम् । अहमपि तेनात्मना संयुक्तो भूयासम् । तादृशे मयि होतरि महान् प्रौढो विद्यादिगुणः सपद्यताम् । भर्गः वैरिभर्जनसमर्थ तेजः । भगः द्रव्यसपत्तिलक्षण भाग्यम् । भुजः तद्भोगः । स्तोभस्तोमौ सामगतौ, तदुभयजन्यं फलमप्यस्तु । यशो विद्याजन्या प्रसिद्धिः । श्रीर्गजाश्वादिसंपत्तिः । कीर्तिर्दानजन्या प्रसिद्धिः । भुक्तिर्भोगः । भुजभुक्त्योर्भोग्यभेदेन भेदो द्रष्टव्यः । ऐआसा.

**[1]भूर्भुवः स्वस्त्रयो वेदोऽसि । ब्रह्म प्रजां मे धुक्ष्व । आयुः प्राणं मे धुक्ष्व । पशून्विशं मे धुक्ष्व । श्रियं यशो मे धुक्ष्व । लोकं ब्रह्मवर्चसमभयं यज्ञसमृद्धिं मे धुक्ष्व ॥**

ये भूरादयस्त्रयो लोकाः, यश्च वेदः, हे उक्थ, तत्सर्वं त्वमसि । मह्य ब्रह्म वेदं, प्रजां च पुत्रादिकां धुक्ष्व सपादय । विशं धनसंपादिनीं प्रजाम् । लोकं स्वर्गाख्यम् । स्पष्टमन्यत् ।

ऐआसा.

सार्वभौमशान्ति-

**[2]पृथिवी शान्तिः । अन्तरिक्षꣳ शान्तिः । द्यौः शान्तिः । दिशः शान्तिः । अवान्तरदिशाः शान्तिः । अग्निः शान्तिः । वायुः शान्तिः । आदित्यः शान्तिः । चन्द्रमाः शान्तिः । नक्षत्राणि शान्तिः । आपः शान्तिः । ओषधयः शान्तिः । वनस्पतयः शान्तिः । गौः शान्तिः । अजा शान्तिः । अश्वः शान्तिः । पुरुषः शान्तिः । ब्रह्म शान्तिः । ब्राह्मणः शान्तिः । शान्तिरेव शान्तिः । शान्तिर्मे अस्तु शान्तिः ॥**

पृथिव्यादयः सर्वदेवताः अस्मदनिष्टशमनहेतुत्वात् शान्तिदेवतारूपाः । ब्रह्म वेदः । पृथिव्यादीनामुपचरितं शान्तिदेवतारूपत्वम् । या तु शान्त्यभिमानिनी देवता सा शान्तिरेव, मुख्यमेव तस्याः शान्तित्वम् । अतः सा शान्तिदेवता मे शान्तिरस्तु सर्वानिष्टशमनहेतुरस्तु । तैआसा.

**[3]तयाऽहꣳ शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि । शान्तिर्मे अस्तु शान्तिः ॥**

अहं यजमानः सर्वशान्त्या सर्वानिष्टशमनहेतुतया पूर्वोक्तगुणविशिष्टया शान्त्या शान्तिदेवतया मह्य मच्छरीरार्थं, द्विपदे मदीयाय मनुष्यार्थं, चतुष्पदे मदीयाय

(१) ऐआ. ५।१।५.

(१) ऐआ. ५।३।२.
(२) तैआ ४।४२।५.
(३) तैआ. ४।४२।५.

पश्वर्थं च शान्तिं सर्वानिष्टशमनं करोमि । अतः शान्तिदेवता मे मदर्थं शान्तिः सर्वानिष्टशमनहेतुरस्तु ।
तैआसा.

श्रीः, ह्रीः, धृतिः, तपः, मेधा, प्रतिष्ठा, श्रद्धा, सत्यं, धर्मः, आयुश्च

**ऐह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु । मा माᳵ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः ॥**

श्रीप्रभृतयो धर्मान्ता या देवताः सन्ति, एतानि देवशरीराणि इह कर्मसमाप्तौ उत्तिष्ठन्तं मां अनु आ समन्तादुत्तिष्ठन्तु । यानि श्रीप्रभृतीनां स्वरूपाणि, एतानि मा मां मा हासिषुः मा परित्यजन्तु । पुनरपि मा मा हासिषुः । द्विरुक्तिरादरार्था ।
तैआसा.

**उदायुषा स्वायुषोदोषधीनाᳵ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताᳵ अनु ॥**

अहं अमृतान् देवाननुलक्ष्य आयुरादिविशेषणविशिष्टेन सोमेन सह उदस्था उत्तिष्ठामि । चिरजीवनमायुः, तत्रापि रोगाद्युपद्रवरहितं स्वायुः । तदुभयप्रदत्वाद्रसस्य तद्रूपत्वम् । ओषधीनां पर्जन्यस्य च रसः सारम् । चतुर्भिर्विशेषणैः पृथक्क्रियापदमस्त्वेतु चत्वार उच्छब्दाः ।
तैआसा.

**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतम् । जीवेम शरदः शतम् । नन्दाम शरदः शतम् । मोदाम शरदः शतम् । भवाम शरदः शतम् । शृणवाम शरदः शतम् । प्रब्रवाम शरदः शतम् । अजीताः स्याम शरदः शतम् । ज्योक्च सूर्यं दृशे ॥**

पुरस्तात् पूर्वस्यां दिशि उच्चरत् उदयं गच्छत् शुक्रं ज्योतिःस्वरूपं देवहितं सर्वेभ्यो देवेभ्यो हितकारि चक्षुः दृष्टेरनुग्राहकं तदादित्यमण्डलं शरदः शतं शतसंख्याकान् संवत्सरान् सर्वदा पश्येम । तत्प्रसादाज्जीवनादिव्यापारांश्च प्राप्नवाम । नन्दाम द्रव्यैः समृद्धा भूयास्म । मोदाम तद्भोगेन हृष्यास्म । भवाम स्वस्थाने निवसाम । शृणवाम वेदशास्त्ररहस्यं गुरुमुखादवगच्छाम । प्रब्रवाम शिष्येभ्यः प्रकर्षेण कथयाम । अजीताः शत्रुणा केनाप्यजिताः । किंच ज्योक् दीर्घं कालं सूर्यं दृशे द्रष्टुं समर्था भूयास्म ।
तैआसा.

शुद्धिः वेदं ब्रह्म च

**यं उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात् ।**
**स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु ॥**

यः सूर्यः महतः प्रौढात् अर्णवात्पूर्वसमुद्रात्, तत्रापि विशेषतः सरिरस्य जलस्य मध्याद्विभ्राजमानः विशेषेण दीप्यमान उदगात् उदयं गच्छति, स सूर्यो मनसा मां पुनातु शोधयतु । कीदृशः सूर्यः । वृषभः कामानां वर्षयिता, लोहिताक्षो रक्तवर्णाक्षियुक्तः, विपश्चित् सर्वज्ञः ।
तैआसा.

**ब्रह्मणः श्रोतन्यसि । ब्रह्मण आणी स्थः । ब्रह्मण आवपनमसि । धारितेयं पृथिवी ब्रह्मणा मही । धारितमेनेन महदन्तरिक्षम् । दिवं दाधार पृथिवीᳵ सदेवाम् । यदहं वेद तदहं धारयाणि । मा मद्वेदोऽधि विस्रसत् ॥**

अत्र वेदः संबोध्यते । हे श्रुते, त्वं ब्रह्मणः परमात्मवस्तुनः श्रोतनी (श्रोतनी) श्र(व)णहेतुभूता असि, ब्रह्मतत्त्वं बोधयसीत्यर्थः । हे मदीये श्रोत्रे, युवां ब्रह्मणो वेदस्य आणी स्थः नेतृणी भवथः, वेदं शृणुथ इत्यर्थः । हे मनः, ब्रह्मणो वेदस्य आवपनं धारणस्थानमसि । इयं मही महती पृथिवी ब्रह्मणा वेदप्रति-

(१) तैआ. ४।४२।५.

(२) असं. ३।३१।१०–११ (उदायुषा समायुषोदोषधीना रसेन । आ पर्जन्यस्य वृष्ट्योदस्थामामृता वयम् ॥); वैसं. १।२।८।१; काऌसं. २।६ (३२) (उदायुषा स्वायुषोद्रसेनौषधीनाम् । उत्पर्जन्यस्य वृष्ट्योदस्थाममृतौं अनु ॥); मैसं. १।२।६ (१७) शुष्मेणोदस्थाममृतॉं (धाम्नोदस्थामभृतं); शुसं. ४।२८ (उदायुषा स्वायुषोदस्थाममृतौं अनु); शब्रा. ३।३।३।१४ शुसंवत्; तैआ. ४।४२।५.

(३) तैआ. ४।४२।५. अन्यस्थलादिनिर्देशः अस्मिन्नेव प्रकरणे ५१५ पृष्ठे द्रष्टव्यः ।

(१) तैआ. ४।४२।५.

(२) तैआ. ४।४२।५.

पाद्येन परमात्मना धारिता। महत् प्रौढमन्तरिक्ष एनेन परमात्मना धारितम्। पृथिवीं विस्तीर्णा सदेवा देवसहिता दिव दाधार परमात्मा धृतवान्। यत् परमात्मतत्त्वं तत्प्रतिपादक वेदवाक्यं वा अहं यजमानो वेद जानामि, तदुभयमह सर्वदा मनसि धारयाणि। स वेदो मत् मत्तः सकाशात् अधि आधिक्येन मा विस्रसत् विस्रस्तो मा भूत्। तैआसा.

[1]मेधामनीषे माऽऽविशतां समीची भूतस्य भव्यस्यावरुद्ध्यै।
सर्वमायुरयाणि सर्वमायुरयाणि॥

मेधा धारणशक्तिः, मनीषा ग्रहणशक्तिः, ते उभे समीची अनुकूले सत्यौ मा यजमान आविशतां सर्वतः प्रविशताम्। किमर्थम्। भूतस्य पूर्वमधीतस्य, भव्यस्य अध्येष्यमाणस्य च अवरुद्ध्यै स्वीकारार्थम्। एतत्सिद्ध्यर्थमेव सर्वमायुरयाणि प्राप्नवानि। द्विरुक्तिरादरार्था। तैआसा.

[2]आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः।

(१) तैआ. ४।४२।५
(२) तैब्रा. ३।७।११।४–५, तैआ. ४।५।६, ४।४२।५.

यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम॥

हे हरिवः अश्वयुक्तेन्द्र, आभिर्गीर्भिः अस्मदीयस्तुतिभिः वर्धमानस्त्व अतः अस्मत्कर्मणः ऊन अङ्ग नः अस्मदर्थं आप्यायय अभिवर्धय। यदा यस्मिन्काले स्तोतृभ्यः स्तोत्रनुग्रहार्थं महि गोत्रा महतो मेघान् रुजासि भग्नान् करोषि। अध तदा वय ते तव अनुग्रहात् भूयिष्ठभाजः स्याम प्रभूतधनाना लब्धारो भूयास्म। तैआसा.

[1]ब्रह्म प्रावादिष्म। तन्नो मा हासीत्॥
ॐ शान्तिः शान्तिः शान्तिः॥

एवमुक्तेन प्रकारेण ब्रह्म परमात्मप्रतिपादकमन्त्रजात प्रावादिष्म प्रकर्षेण वय कथितवन्तः। तद्ब्रह्मतत्त्व, तस्य प्रतिपादक वाक्य च नः अस्मान् मा हासीत् कदाचिदपि मा परित्यजतु। हे प्रणवप्रतिपाद्य परमात्मन्, आध्यात्मिकाना ज्वरशिरोव्यथादिकृताना विघ्नाना शान्तिरस्तु। आधिभौतिकानां चोरव्याघ्रादिकृताना विघ्नाना शान्तिरस्तु। आधिदैविकाना यक्षराक्षसादिकृतानां विघ्नानां शान्तिरस्तु। तैआसा.

(१) तैआ. ४।४२।५.

## प्रणवः

[1]ओं३ खं ब्रह्म॥

ओमिति नामनिर्देशः। आकाशस्वरूपं ब्रह्म ध्यायेदात्मत्वेन। शुउ.

[2]* प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति। स तपोऽतप्यत। स तपस्तप्त्वेमाँल्लोकानसृजत। पृथिवीमन्तरिक्षं दिवम्। ताँल्लोकानभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्त। अग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवः। तानि ज्योतींष्यभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त। ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्। तान् वेदानभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त। भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात्स्वरिति सामवेदात्॥

तानि शुक्राण्यभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त अकार उकारो मकार इति। तानेकधा समभरत् तदेतदोमिति। तस्मादोमोमिति प्रणौति। ओमिति वै स्वर्गो लोकः। ओमित्यसौ योऽसौ तपति॥

[1]अथ यत्रैनं ब्रूयुर्ब्रह्मन् प्रणेष्यामो ब्रह्मन् प्रचरिष्यामो ब्रह्मन् प्रस्थास्यामो ब्रह्मन् स्तोष्याम इति। ओमित्येतावता प्रसूयात्। एतद्ध वा एकमक्षरं त्रयीं विद्यां प्रति। प्रति तथा हास्य त्रय्या विद्यया प्रसूतं भवति॥

* व्याख्यानं सृष्टिप्रकरणे २८२–२८३ पृष्ठयोर्द्रष्टव्यम्।
(१) शुसं. ४०।१७. (२) ऐब्रा २५।७।१–२.

(१) शाब्रा. ६।१२.

* उ. का. ६६

[1]तद्यथा वंशेन वा मर्त्येन वा गर्तं संक्रामेदेवं तत्प्रणवेन संक्रामति। ब्रह्म वै प्रणवः। ब्रह्मणैव तद्ब्रह्मोपसंतनोति ॥

[2]अथैतदामहीयवं प्राजापत्यं सवनमुखे क्रियते। तदेतत्स्वय प्रशस्तं यत् प्राजापत्यम्। तस्मिन्नु प्रशस्त एव सत्येषा भूयसी प्रशंसा क्रियते यदेतदोमित्यादत्ते। असौ वा आदित्य एतदक्षरम्। तदेतत्त्रयस्य वेदस्यापीळितमक्षरम्। स यदोमित्यादत्तेऽमुमेवैतदादित्यं मुख आधत्ते। स यथा मधुना लाजान् प्रयुयादेवमेवैतेनाक्षरेण सामन् रसं दधाति। तदाप्याययति। तेनाप्यापीनेन रसवता स्तुत भवति ॥

[3]तदेतत् सत्यमक्षरं यदोमिति ॥

[4]स वा ओ३मित्येव प्रतिगृणीयात्। तद्धि सत्यम्। तद्देवा विदुः ॥

तत्स्वरूप विधत्ते—स वा ओमित्येवेति। तद्धि सत्यमिति। तत् ओमित्येनदक्षरं सत्य अविनश्वर ब्रह्मेति प्रसिद्धम्। तत् ब्रह्म देवाः विदुः जानन्ति। तस्मात् ब्रह्मरूपत्वेन प्रशस्तत्वात् ओमिति तत्प्रतिगृणीयादित्यर्थः।

शब्रासा.

[5]ब्रह्म ह वै ब्रह्माणं पुष्करे ससृजे। स खलु ब्रह्मा सृष्टश्चिन्तामापेदे केनाहमेकेनाक्षरेण सर्वांश्च कामान् सर्वांश्च लोकान् सर्वांश्च देवान् सर्वांश्च वेदान् सर्वांश्च यज्ञान् सर्वांश्च शब्दान् सर्वांश्च व्युष्टीः सर्वाणि च भूतानि स्थावरजङ्गमान्यनुभवेयमिति। स ब्रह्मचर्यमचरत्। स ओमित्येतदक्षरमपश्यत् द्विवर्णं चतुर्मात्रं सर्वव्यापि सर्वविभ्वयातयाम ब्रह्म ब्राह्मीं व्याहृतिं ब्रह्मदैवतम्। तया सर्वांश्च कामान् सर्वांश्च लोकान् सर्वांश्च देवान् सर्वांश्च वेदान् सर्वांश्च यज्ञान् सर्वांश्च शब्दान् सर्वांश्च व्युष्टीः सर्वाणि च भूतानि स्थावरजङ्गमान्यन्वभवत्। तस्य प्रथमेन वर्णेनापस्नेहश्चान्वभवत्। तस्य द्वितीयेन वर्णेन तेजो ज्योतींष्यन्वभवत् ॥ १६ ॥

तस्य प्रथमया स्वरमात्रया पृथिवीमग्निमोषधिवनस्पतीन् ऋग्वेदं भूरिति व्याहृतिं गायत्रं छन्दस्त्रिवृतं स्तोमं प्राचीं दिशं वसन्तमृतुं वाचमध्यात्मं जिह्वां रसमितीन्द्रियाण्यन्वभवत् ॥ १७ ॥

तस्य द्वितीयया स्वरमात्रयाऽन्तरिक्षं वायुं यजुर्वेदं भुव इति व्याहृतिं त्रैष्टुभं छन्दः पञ्चदशं स्तोमं प्रतीचीं दिशं ग्रीष्ममृतुं प्राणमध्यात्मं नासिके गन्धघ्राणमितीन्द्रियाण्यन्वभवत् ॥ १८ ॥

तस्य तृतीयया स्वरमात्रया दिवमादित्यं सामवेदं स्वरिति व्याहृतिं जागतं छन्दः सप्तदशं स्तोममुदीचीं दिश वर्षाऋतुं ज्योतिरध्यात्मं चक्षुषी दर्शनमितीन्द्रियाण्यन्वभवत् ॥ १९ ॥

तस्य वकारमात्रयाऽपश्चन्द्रमसमथर्ववेदं नक्षत्राण्योमिति स्वमात्मानं जनदित्यङ्गिरसामानुष्टुभं छन्दः एकविंशं स्तोमं दक्षिणां दिशं शरदमृतुं मनोऽध्यात्मं ज्ञानं ज्ञेयमितीन्द्रियाण्यन्वभवत् ॥२०॥

तस्य मकारश्रुत्येतिहासपुराणं वाकोवाक्यगाथानाराशंसीरुपनिषदोऽनुशासनानामिति वृधत् करद्गुहन्महत्तच्छमोमिति व्याहृतीः स्वरशम्यनानातन्त्रीः स्वरनृत्यगीतवादित्राण्यन्वभवत्। चैत्ररथं दैवतं वैद्युतं ज्योतिर्बार्हतं छन्दस्तृणवत् त्रयस्त्रिंशौ स्तोमौ ध्रुवामूर्ध्वां दिशं हेमन्तशिशिरावृतू श्रोत्रमध्यात्मं शब्दश्रवणमिन्द्रियाण्यन्वभवत् ॥ २१ ॥

सैषैकाक्षरा ऋक् ब्रह्मणस्तपसोऽग्रे प्रादुर्बभूव। ब्रह्म वेदस्याथर्वणं शुक्रमत एव मन्त्राः प्रादुर्बभूवुः। स तु खलु मन्त्राणामतपसाऽशुश्रूषाऽनध्यायाध्ययनेन यदूनं च विरिष्टं च यातयामं च करोति तदथर्वणां तेजसा प्रत्याप्याययेत्। मन्त्राश्च मामभिमुखीभवेयुर्गर्भा इव मातरम्। अभिजिघांसुः पुरस्तादोंकारं प्रयुङ्क्ते। एतयैव तदृचा प्रत्याप्याययेत्। एषैव यज्ञस्य पुरस्ताद्युज्यत एषा पश्चात्। सर्वत एतया यज्ञस्तायते। तदप्येतदृचोक्तम्। या पुरस्ताद्युज्यत ऋचोऽक्षरे परमे व्योमन्निति। तदेतदक्षरं ब्राह्मणो यं काममिच्छेत् त्रिरात्रोपोषितः

(१) शाब्रा. ११।४ (२) जैब्रा. १।३२२.
(३) जैब्रा. १।३२३. (४) शाब्रा. ४।३।२।१२, १३.
(५) गोब्रा. १।१।१६-३०

प्राङ्मुखो वाग्यतो बर्हिष्युपविश्य सहस्रकृत्वः आवर्तयेत्। सिद्धयन्त्यस्यार्थाः सर्वकर्माणि चेति ब्राह्मणम् ॥ २२ ॥

वसोर्धाराणामैन्द्रनगरम् । तदसुराः पर्यवारयन्त । ते देवा भीता आसन् क इमानसुरानपहनिष्यतीति । त ओंकारं ब्रह्मणः पुत्रं ज्येष्ठ ददृशुः । ते तमब्रुवन् भवता मुखेनेमानसुरान् जयेमेति । स होवाच किं मे प्रतीवाहो भविष्यतीति । वरं वृणीष्वेति । वृणा इति । स वरमवृणीत । न मामनीरयित्वा ब्राह्मणा. ब्रह्म वदेयुः । यदि वदेयुरब्रह्म तत् स्यादिति । तथेति । ते देवा देवयजनस्योत्तरार्धेऽसुरैः संयता आसन् । तानोंकारेणाग्नीध्रीयाद्देवा असुरान् पराभावयन्त । तद्यत्पराभावयन्त तस्मादोंकारः पूर्व उच्यते । यो ह वा एतमोंकारं न वेदावशः स्यादिति । अथ य एवं वेद ब्रह्म वशः स्यादिति । तस्मादोंकार ऋच्यृग्भवति, यजुषि यजुः, साम्नि साम, सूत्रे सूत्र, ब्राह्मणे ब्राह्मणं, श्लोके श्लोकः, प्रणवे प्रणव इति ब्राह्मणम् ॥ २३ ॥

ओंकारं पृच्छामः । को धातुः किं प्रातिपदिकं किं नामाऽऽख्यातं किं लिङ्गं किं वचनं का विभक्ति. कः प्रत्ययः क. स्वर उपसर्गो निपातः किं वै व्याकरणं को विकारः को विकारी कतिमात्रः कतिवर्णः कत्यक्षरः कतिपदः कः संयोगः किं स्थानानुप्रदानकरण शिक्षकाः किमुच्चारयन्ति किं छन्दः को वर्ण इति पूर्वे प्रश्नाः । अथोत्तरे मन्त्रः कल्पो ब्राह्मणमृग्यजु. साम कस्मात् ब्रह्मवादिनं ओंकारमादितः कुर्वन्ति किं देवतं किं ज्योतिष किं निरुक्तं किं स्थानं का प्रकृतिः किमध्यात्ममिति षट्त्रिंशत् प्रश्नाः । पूर्वोत्तराणां त्रयो वर्गा द्वादशकाः । एतैरोंकारं व्याख्यास्यामः ॥ २४ ॥

इन्द्रः प्रजापतिमपृच्छत् भगवन्नभिष्टूय पृच्छामीति । पृच्छ वत्सेत्यब्रवीत् । किमयमोंकारः कस्य पुत्रः किञ्चैतच्छन्दः किञ्चैतद्वर्णः किञ्चैतत् ब्रह्म ब्रह्म संपद्यते तस्माद्वै तद्भद्रमोंकारं पूर्वमालेभे । स्वरितोदात्त एकाक्षर ओंकार ऋग्वेदे । त्रैस्वर्योदात्त एकाक्षर ओंकारो यजुर्वेदे । दीर्घप्लुतोदात्त एकाक्षर ओंकार. सामवेदे । ह्रस्वोदात्त एकाक्षर ओंकारोऽथर्ववेदे । उदात्तोदात्तद्विपद अ उ इत्यर्धचतस्रो मात्रा मकारे व्यञ्जनमित्याहुः । या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेत् ब्राह्मं पदम् । या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत् वैष्णव पदम् । या सा तृतीया मात्रैशानदेवत्या कपिलवर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं पदम् । या सार्धचतुर्थी मात्रा सर्वदेवत्या व्यक्तीभूता खं विचरति शुद्धस्फटिकसंनिभा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत्पदमनामकम्। ओंकारस्य चोत्पत्तिर्विप्रो यो न जानाति तत्पुनरुपनयनम् । तस्माद्ब्राह्मणवचनमादर्तव्यम् । यथा लातव्यो गोत्रो ब्रह्मणः पुत्रो गायत्रं छन्दः शुक्लो वर्णः पुंसो वत्सो रुद्रो देवता ओंकारो वेदानाम् ॥२५॥

को धातुरिति । आप्धातुरवतिमप्येके । रूपसामान्यादर्थसामान्यं नेदीयः । तस्मादापेरोंकारः सर्वमाप्नोतीत्यर्थः । कृदन्तमर्थवत्प्रातिपदिकमदर्शनं प्रत्ययस्य नाम संपद्यते । निपातेषु चैनं वैयाकरणा उदात्तं समामनन्ति । तदव्ययीभूतमन्वर्थवाची शब्दो न व्येति कदाचनेति ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ को विकारी च्यवते प्रसारणमाप्नोति आकारपकारौ विकार्यौ, आदित ओंकारो विक्रियते, द्वितीयो मकारः । एवं द्विवर्ण एकाक्षर ओमित्योंकारो निर्वृत ॥ २६ ॥

कतिमात्र इत्यादेस्तिस्रो मात्राः । अभ्यादाने हि प्लवते मकारश्चतुर्थीम् । किं स्थानमित्युभावोष्ठौ स्थानम् । नादानुप्रदानकरणौ च द्वयस्थानम् । सन्ध्यक्षरमवर्णलेशः कण्ठ्यो यथोक्तशेषः । पूर्वो विवृतकरणस्थितश्च द्वितीयः स्पृष्टकरणस्थितश्च । न संयोगो विद्यते । आख्यातोपसर्गानुदात्तस्वरितलिङ्गविभक्तिवचनानि च । संस्थानाध्मायिन आचार्याः पूर्वे बभूवुः । श्रवणादेव प्रतिपद्यन्ते । न कारणं

पृच्छन्ति । अथापरपक्षीयाणां कविः पञ्चालचण्डः परिपृच्छको बभूवांबु पृथगुद्गीथदोपान् भवन्तो ब्रुवन्त्विति । तद्वाप्युपलक्षयेद्वर्णाक्षरपदाङ्कशो विभक्त्यामृषिनिषेवितामिति वाचं स्तुवन्ति । तस्मात् कारणं ब्रूमो वर्णानामयमिदं भविष्यतीति षडङ्गविदस्तत्तथाऽधीमहे । किं छन्द इति । गायत्रं हि छन्दः । गायत्री वै देवानामेकाक्षरा श्वेतवर्णा च व्याख्याता । द्वौ द्वादशकौ वर्गावेतद्वै व्याकरणम् । धात्वर्थवचनं शैक्ष्यं छन्दोवचनं च । अथोत्तरौ द्वौ द्वादशकौ वर्गौ वेदरहस्यिकी व्याख्याता । मन्त्रः कल्पो ब्राह्मणमृग्यजुःसामाथर्वण्येपा व्याहृतिः । चतुर्णां वेदानामानुपूर्वेणोंभूर्भुवस्वरिति व्याहृतयः ॥ २७ ॥

असमीक्ष्यप्रवह्लितानि श्रूयन्ते । द्वापरादावृषीणामेकदेशो दोषपतिरिह चिन्तामापेदे । त्रिभिः सोमः पातव्यः समाप्तमिव भवति । तस्मादृग्यजुःसामान्यपक्रान्ततेजांस्यासन् । तत्र महर्षयः परिदेवयाञ्चक्रिरे महच्छोकभयं प्राप्तास्मो न चैतत् सर्वैः समभिहितम् । ते वयं भगवन्तमेवोपधावाम सर्वेषामेव शर्म भवानीति । ते तथेत्युक्त्वा तूष्णीमतिष्ठन् । नानुपसन्नेभ्य इत्युपोपसीदामीति नीचैर्बभूवुः । स एभ्य उपनीय प्रोवाच मामिकामेव व्याहृतिमादित आदितः कुणुध्वमित्येवं मामका अधीयन्ते । नर्ते भृग्वङ्गिरोविद्भ्यः सोमः पातव्यः । ऋत्विजः पराभवन्ति । यजमानो रजसाऽपध्वस्यति । श्रुतिश्चापध्वस्ता तिष्ठतीत्येवमेवोत्तरोत्तराद्योगात्तोकं तोकं प्रशाध्वंमित्येवं प्रतापो न पराभविष्यतीति । तथाह तथाह भगवन्निति प्रतिपेदिरे । आप्यायंयंस्ते तथा वीतशोकभया बभूवुः । तस्मात् ब्रह्मवादिन ओंकारमादितः कुर्वन्ति ॥ २८ ॥

किं देवतमिति । ऋचामग्निर्देवतम् । तदेव ज्योतिर्गायत्रम् । छन्दः पृथिवी स्थानम् । 'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥' इत्येवमादिं कृत्वा ऋग्वेदमधीयते । यजुषां वायुर्देवतम् । तदेव ज्योतिः । त्रैष्टुभं छन्दः । अन्तरिक्षं स्थानम् । 'इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु । श्रेष्ठतमाय कर्मणे ॥' इत्येवमादिं कृत्वा यजुर्वेदमधीयते । साम्नामादित्यो देवतम् । तदेव ज्योतिः । जागतं छन्दः । द्यौः स्थानम् । 'अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥' इत्येवमादिं कृत्वा सामवेदमधीयते । अथर्वणां चन्द्रमा देवतम् । तदेव ज्योतिः । सर्वाणि छन्दांसि । आपः स्थानम् । 'शं नो देवीरभिष्टये' इत्येवमादिं कृत्वा अथर्ववेदमधीयते । अद्भ्यः स्थावरजङ्गमो भूतग्रामः संभवति । तस्मात् [१] सर्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयम् । अन्तरैते त्रयो वेदा भृगूनङ्गिरसः श्रिताः ॥' इति । अबिति प्रकृतिरपाम् । ओंकारेण चैतस्माद् व्यासः पुरोवाच भृग्वङ्गिरोविदा संस्कृतोऽन्यान् वेदानधीयीत नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत । अथ सामवेदे खिलश्रुतिः ब्रह्मचर्येण चैतस्मादथर्वाङ्गिरसो ह यो वेद स वेद सर्वमिति ब्राह्मणम् ॥ २९ ॥

अध्यात्ममात्मभैषज्यमात्मकैवल्यमोंकार आत्मानं निरुध्य संगममात्रीं भूतार्थचिन्तां चिन्तयेदतिक्रम्य वेदेभ्यः सर्वपरमाध्यात्मफल प्राप्नोतीत्यर्थः । सवितर्कं ज्ञानमयमित्येतैः प्रश्नैः प्रतिवचनैश्च यथार्थं पदमनुविचिन्त्य प्रकरणज्ञो हि प्रबलो विपयी स्यात्सर्वस्मिन्वाकोवाक्य इति ब्राह्मणम् ॥ ३० ॥

प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्य ओं प्रपद्ये ॥

प्रजापतेः सबन्धि ब्रह्मकोश सर्वमन्त्राधारभूत ब्रह्म वेदस्वरूप प्रपद्ये । ओकारेण परमात्मा उच्यते, तमपि प्रपद्ये । तैआसा.

(१) तैआ. ४।४२।२.

